# SARASVATI BHAVANA GRANTHAMALA

VOL. 87

*Part II*

**GENERAL EDITOR :—**
Kshetresachandra Chattopadhyaya
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.




# BṚHAT-ŚABDENDUŚEKHARA

*by*

NĀGEŚA BHAṬṬA

*Volume II*

VARANASI
1960

सरस्वतीभवन-ग्रन्थमाला

(८७)

नागेशभट्टविरचितः

# बृहच्छब्देन्दुशेखरः

(द्वितीयो भागः)

सम्पादकः

डॉ० श्रीसीतारामशास्त्री, एम०ए०, पीएच्०-डी०,

व्याकरणाचार्यः, साहित्याचार्यः, गुजशास्त्रशास्त्री, साहित्यरत्नम्,

वाराणसेयश्रीराजस्थानसंस्कृतमहाविद्यालयाध्यक्षः ।

वाराणस्याम्

१८८२ तमे शकाब्दे

॥ श्रीः ॥

# बृहच्छब्देन्दुशेखरस्य द्वितीयभागप्रकरणसूची

## पूर्वार्द्धे


| प्रकरणम् | | पत्रसंख्या |
|---|---|---|
| कारके प्रथमाप्रकरणम् | ... | ७८७–७९८ |
| कारके द्वितीयाप्रकरणम् | ... | ७९८–८६८ |
| कारके तृतीयाप्रकरणम् | ... | ८६८–८८१ |
| कारके चतुर्थीप्रकरणम् | ... | ८८२–८९८ |
| कारके पञ्चमीप्रकरणम् | ... | ८९९–९१५ |
| कारके षष्ठीप्रकरणम् | ... | ९१५–९३४ |
| कारके सप्तमीप्रकरणम् | ... | ९३४–९४७ |
| समासेऽव्ययीभावप्रकरणम् | ... | ९४९–९९० |
| समासे तत्पुरुषप्रकरणम् | ... | ९९१–१०८३ |
| समासे बहुव्रीहिप्रकरणम् | ... | १०८४–११३८ |
| समासे द्वन्द्वप्रकरणम् | ... | ११३८–११६५ |
| समासे एकशेषप्रकरणम् | ... | ११६६–११७३ |
| समासे सर्वसमासशेषप्रकरणम् | ... | ११७४–११७८ |
| समासे समासान्तप्रकरणम् | ... | ११७९–११८४ |
| समासेऽलुक्समासप्रकरणम् | ... | ११८५–११९४ |
| समासे समासाश्रयप्रकरणम् | ... | ११९५–१२२२ |
| साधारणतद्धितप्रत्ययप्रकरणम् | ... | १२२३–१२२७ |
| तद्धितेषु अपत्याधिकारप्रकरणम् | ... | १२२७–१२९३ |
| तद्धितेषु रक्ताद्यर्थप्रकरणम् | ... | १२९४–१३१४ |

| प्रकरणम् | | पत्रसंख्या |
|---|---|---|
| तद्धितेषु चातुरर्थिकप्रकरणम् | ... | १३१५–१३२३ |
| तद्धितेषु शैषिकप्रकरणम् | ... | १३२४–१३६७ |
| तद्धितेषु विकाराद्यर्थप्रकरणम् | ... | १३६८–१३७५ |
| तद्धितेषु ठगधिकारप्रकरणम् | ... | १३७६–१३८५ |
| तद्धितेषु प्राग्घितीयप्रकरणम् | ... | १३८६–१३९२ |
| तद्धितेषु छयद्विधिप्रकरणम् | ... | १३९३–१३९९ |
| तद्धितेषु आर्हीयप्रकरणम् | ... | १४००–१४१९ |
| तद्धितेषु ठञधिकारप्रकरणम् | ... | १४२०–१४२८ |
| तद्धितेषु भावकर्मप्रकरणम् | ... | १४२९–१४४२ |
| तद्धितेषु पाञ्चमिकप्रकरणम् | ... | १४४३–१४७२ |
| तद्धितेषु मत्वर्थीयप्रकरणम् | ... | १४७३–१४८९ |
| तद्धितेषु प्राग्दिशीयप्रकरणम् | ... | १४९०–१४९४ |
| तद्धितेषु प्रागिवीयप्रकरणम् | ... | १४९५–१५२२ |
| तद्धितेषु स्वार्थिकप्रकरणम् | ... | १५२२–१५४९ |
| द्विरुक्तप्रक्रिया | ... | १५५०–१५७४ |



# अथ कारकप्रकरणम् ॥

[ अथ प्रथमा ]

'स्वौजसमौड्'त्यादिना तावत्स्वादयो विहिताः, तेषामर्थविशेषव्यवस्थां दर्शयितुमाह—प्रातिपदिकार्थेति । इदमपि सूत्रं क्रियायोगे एव प्रवर्त्तते । अस्तिक्रियायाः सर्वत्र सत्त्वात् । आख्यातार्थकर्त्रादिनाऽभेदाऽन्वयेऽपि तद्द्वारकः क्रियायोगो बोध्यः । अत एवाऽस्याः कारकविभक्तित्वेनाऽनभिहितपादे तत्र-तत्र भाष्यकृतो व्यवहार इत्याहुः ।

ननु कृष्णाऽऽदिशब्देषु लिङ्गस्याऽपि प्रातिपदिकाऽर्थत्वाल्लिङ्गग्रहणमनर्थकमत आह—नियतेति । 'यस्मिन्प्रातिपदिके उच्चारिते यस्याऽर्थस्य यदा नियमेनोपस्थितिः, स तदा तदर्थ' इत्यर्थः । तेन शक्य-लक्ष्य-गौणानां सर्वेषामेव सङ्ग्रहः । येषां तु अन्वयाऽनुपपत्तिप्रतिसन्धानपूर्विका लक्षणा पदे एव, तेषां न कालाऽन्तर्भाव इति बोध्यम् । प्रत्ययोत्पत्तेः सर्वत्र शक्याऽर्थ एव सत्त्वात् । अयं भावः—'तटाऽऽदिशब्दानां तत्तत्प्रत्ययसमभिव्याहारेण सकललिङ्गबोधकतया, न किमपि लिङ्गं ततो नियतोपस्थितिकमिति न तद्बोध्यलिङ्गस्याऽत्र प्रातिपदिकाऽर्थशब्देन ग्रहणमिति 'लिङ्ग'त्युक्तमि'ति ।

मात्रशब्दस्येति । मात्रशब्दोऽवधारणाऽर्थकः । 'मात्रं कात्स्र्न्येऽवधारणे' इत्यमरः । 'प्रातिपदिकार्थादीन्येवे'त्यस्वपदविग्रहः । मयूरव्यंसकाऽऽदित्वात्समासः । अत एव लिङ्गाऽऽदिग्रहणं चरिताऽर्थम् ।

कृष्ण इति । अस्य तु भगवद्वाचकस्य नित्यपुंलिङ्गबोधकत्वम् । गुणवाच्यप्येवम् । नील[2]रूपवत्परस्त्वनियतलिङ्गः । '[3]प्रत्ययस्थादि'तिसूत्रस्था-

---

१ 'इदमपि सूत्रं प्रायः' ख. पाठः ।

२ 'नील' इति ग. नास्ति । क. तु पश्चाद्योजितम् । मनोरमास्थोऽयं पाठः ।

३ 'प्रत्ययस्थादिति' इत्यारभ्य 'वा मतुप्' इत्यन्तः ख. पाठः, क. कुण्डलितः, शब्दरत्नस्थत्वात् ।

ऽसुब्वत' इति भाष्यप्रयोगेण क्वचिल्लाघवाऽनादरस्याऽपि सूचनात् कर्मधारयान्मत्वर्थीयोऽपि क्वचिद्भवतीति 'नीलरूपवदि'ति नाऽनुपपन्नम्। प्राशस्त्ये वा मतुप्।

ननु 'वीरः पुरुषं' इत्यादौ विशेष्यविशेषणभावस्याऽभेदस्याऽधिकस्य भानात्प्रथमा न स्यात्। 'पूर्वाऽपरे'त्यादिसमासविधानन्तु 'वीरं पुरुषमानये'त्यादौ चरिताऽर्थमिति चेन्न। संसर्गस्य वाक्याऽर्थत्वेन बहिरङ्गत्वात्स्वाऽर्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधाऽनुपपत्तेः। यत्तु- 'अभेदसम्बन्धोऽत्राधिक' इति। तन्न। तस्य सम्बन्धत्वाऽभावात्। अत एव 'राहोः शिर' इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनं भाष्ये कृतम्।

न चैवं 'घटं पश्यती'त्यादावपि प्रथमाऽऽपत्तिः, कर्मत्वादेः क्रियासापेक्षत्वेन बहिरङ्गत्वादिति वाच्यम्। 'कर्मणि द्वितीये'त्यादिवैयर्थ्याऽऽपत्तेः।

परिच्छेद्यपरिच्छेदकभावेनेति। अयं च संसर्गः। न चाऽत्र

---

१ 'इत्यादावप्यभेदसंसर्गस्याधिकस्य भानात्' ख. पाठः।

२ 'अभेदस्य' इति ग. नास्ति।

३ 'तस्य वाक्यार्थत्वेन' इति ग. पाठः। 'संसर्गस्य' इति क. शोधितः।

४ 'यत्तु' इत्यारभ्य 'भाष्ये कृतम्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

५ 'बहिरङ्गत्वादिति वाच्यम्। पदाऽन्तरसम्बन्धनिमित्तककार्यप्राप्तियोग्ये पदसंस्कारपक्षाऽनाश्रयणात्। अत एव द्वितीयादिप्रकरणं चरिताऽर्थम्। किञ्च प्रकरणात् विभक्तिबोध्यकर्मत्वाद्याधिक्यस्यैव 'मात्र'पदेन वारणान्न दोषः।
न चाऽभेदोऽपि 'राहोः शिर इत्यादौ षष्ठ्यर्थत्वेन क्लृप्त इति वाच्यम्। औपाधिकभेदमादायैव षष्ठ्युपपादनस्याऽऽद्यन्तवत्सूत्रभाष्यादावुक्तत्वादित्याहुः' इति ख. पाठः।

६ 'कर्मणि द्वितीयेत्यादिवैयर्थ्यापत्तेः' इति क. ग. पाठः। ख. तु भिन्नः पाठः। स च ( अत्रैव पत्रे ५ संख्यक ) टिप्पण्यां द्रष्टव्यः।

प्रातिपदिकाऽर्थे एव प्रथमाऽस्तु, तेन च सम्बन्धेन नामाऽर्थयोरेवाऽन्वयोऽस्त्विति वाच्यम्। नामाऽर्थयोर्विशेष्यविशेषणभावसंसर्गेणैवाऽन्वयव्युत्पत्तेः। न चाऽस्या 'राजपुरुष' इत्यादौ व्यभिचारः। एकाऽर्थीभावाऽभ्युपगमात्। व्युत्पत्तयस्तु भिन्नोपस्थितिविषया इत्यदोषः। व्यपेक्षावादेऽपि पूर्वपदे सम्बन्ध्यादिलक्षणाऽभ्युपगमाच्च। अषष्ठ्यर्थबहुव्रीहौ च न व्यभिचारः। व्यपेक्षावादेऽपि 'प्राप्तोदक' इत्यादौ प्राप्तपदादौ विशेषण-विशेष्यभाववैपरीत्यस्य क्लृप्तेन प्रत्ययाऽर्थप्राधान्यव्युत्पत्तित्यागेन प्रकारीभूतकर्त्रा उदक( पदाऽर्थ )स्याऽभेदेनैवाऽन्वयात्। न च 'प्राप्तावुदकस्य कर्तृतासम्बन्धेनाऽन्वयः, क्तस्य तु कर्मणि लक्षणे'ति पक्षे स इति वाच्यम्।

उक्तरीत्या विनैव लक्षणामन्यत्रक्लृप्तत्यागाया व्युत्पत्तेस्त्यागमात्रेण उपपत्तावस्य पक्षस्याऽयुक्तत्वाच्च। एतद्भियैकाऽर्थीभावस्वीकारस्याऽनौचित्याच्च। न च निपाताऽर्थे व्यभिचारः। तेषां द्योतकत्वात्। अत एव 'अनुभूयते' इत्यादौ सकर्मकत्वम्। तदतिरिक्तत्वेन विशेषणाद्वा न दोषः।

न च प्रकृति-प्रत्ययाऽर्थयोरभेदाऽन्वयो न क्वाऽपि दृष्ट इति वाच्यम्। 'आमिक्षां देवतायुक्तां वदत्येवैष तद्धित' इति मीमांसकमते देवताऽर्थकतद्धिताऽऽदौ दृष्टत्वात्।

१ 'नामार्थयोरभेदसंसर्गेणैव' ख. पाठः।

२ 'न चाऽस्याः' इत्यारभ्य 'तद्धितादौ दृष्टत्वात्' इत्यन्तः ख. पाठो मनोरमा-शब्दरत्नस्थत्वात् क. कुण्डलितः।

३ 'प्राप्तपदे' ख. पाठः।

४ 'व्युत्पत्तित्यागेन स्वीकृत्य प्रकारीभूत' इति ख. पाठः।

५ 'अयुक्तत्वात्' ख. पाठः।

६ 'अनौचित्यात्' ख. पाठः।

७ 'तदतिरिक्तत्वेन विशेषणाद्वा न दोषः' इति क. पाठः। शब्दरत्ने च दृश्यते। ख. तु नास्ति।

न चैवं 'द्रोणो व्रीहिमानये'त्यस्याऽपि साधुताऽऽपत्तिरिति वाच्यम्। प्रातिपदिकाऽर्थादिसाहचर्येण नाम्नोः सम्बन्धे समानविभक्तिकनामाऽन्तराऽर्थाऽन्वये एव परिमाणे प्रथमायाः साधुत्वबोधनात्। अत एव 'अभिहिते प्रथमे'त्येतल्लक्षणं करिष्यते', 'तिङ्समानाधिकरणे प्रथमे'त्येतल्लक्षणं करिष्यते' इति वार्त्तिकोक्तिः सङ्गच्छते। तन्मते हि 'सिंहो माणवक' इतिवत् 'द्रोणो व्रीहिरि'ति लक्षणया साधु। न च तदा 'द्रोणो व्रीहिमि'त्यस्य प्रसङ्गोऽस्ति। न च सूत्रमते परिच्छेद्य-परिच्छेदकभावेनाऽन्वयः, वार्त्तिकमते त्वभेदेनेति वैलक्षण्यमिति वाच्यम्। शाब्दबोधप्रयुक्तवैलक्षण्यस्याऽनादरेण तत्प्रवृत्तेः। 'सर्पिः कुडवमि'त्यादौ 'इसुसोरि'ति षत्वविकल्पोऽपि न। वार्त्तिकमते समानाधिकरणतयाऽसमर्थत्वेन तदप्राप्त्या, सूत्रमतेऽपि व्यवस्थितविभाषया तद्वारणात्।

वचनं सङ्ख्येति। तथैव प्राचां व्यवहारात्।

इहोक्ताऽर्थत्वादिति। उक्ताऽर्थानामप्रयोगात्। प्रातिपदिकप्रतिपादितसङ्ख्याविशिष्टे सङ्ख्याऽन्तराऽभावाच्च। केवलप्रकृतिप्रयोगाऽभावाद्विभक्तौ त्वनियमाऽऽपत्तिरिति भावः। निरर्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वाच्च द्व्यादिभ्यः सर्वप्रथमाऽऽपत्तिरिति सिद्धान्ताशयः।

लिङ्गविशिष्टपरिभाषया 'इन्द्राणी'त्यादौ प्रथमासिद्धिः।

परिमाणशब्देन च सङ्ख्या-कालाऽतिरिक्तं परिच्छेदकमात्रं गृह्यते, व्याख्यानात्। तेन 'पलं घृतमि'त्यादावुन्मानेऽपि प्रथमासिद्धिरित्याहुः।

न च प्रातिपदिकेन स्वाऽर्थस्योक्तत्वादुक्तार्थानामप्रयोग इति प्रथमाऽनापत्तिरिति वाच्यम्। प्रथमाविधायकसामर्थ्येन प्रातिपदिकोक्तत्वस्याऽव्यावर्त्तकत्वात्। अत एव पञ्चकप्रातिपदिकार्थपक्षे द्वितीयादीनां सुलभता। ननु पञ्चकपक्षेऽपि विभक्तिरहितप्रातिपदिकेन कर्मत्वाऽऽद्यर्थो वक्तुमशक्य इति चेत्। स्वाऽर्थः प्रथमां विना वक्तुमशक्य इति समानम्।

अत्र वदन्ति—'अत्र सूत्रे प्रातिपदिकाऽर्थशब्देन प्रवृत्तिनिमित्तं, तदाश्रयश्चेत्येतावन्मात्रं गृह्यते। अत एव लिङ्गग्रहणं चरिताऽर्थम्। अन्यथा

त्रिकादिपक्षे तस्याऽपि प्रातिपदिकाऽर्थतया तद्वैयर्थ्यं स्पष्टमेव। इदमेवाऽभिप्रेत्य वृत्तौ 'प्रातिपदिकाऽर्थः सत्ते'त्युक्तम्। तत्र सत्ताग्रहणं प्रवृत्तिनिमित्तोपलक्षणम्। आश्रयस्तु तदाक्षिप्तत्वान्न पृथग्गणितः। एवं च 'प्रातिपदिकाऽर्थ'इत्यस्य अलिङ्गा, लिङ्गप्रवृत्तिनिमित्तकाश्च पुमादयः शब्दा उदाहरणम्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणात्स्त्रीशब्दोऽप्यस्यैवोदाहरणम्। [1]अत एव 'प्रातिपदिकार्थे किमुदाहरणमि'ति प्रश्ने, स्त्री पुमान् नपुंसकमि'ति सिद्धान्तभाष्ये उदाहृतम्। अन्ये सर्वे 'लिङ्गाधिक्ये' इत्यस्य। कुमारीशब्दादयोऽप्यस्यैव। न हि तत्र लिङ्गं प्रवृत्तिनिमित्तम्, किन्तु 'विशेष्ये विशेषणमि'त्येव। यं धर्मं प्रकारीकृत्य वृत्तिग्रहस्तस्यैव प्रवृत्तिनिमित्तत्वात्। 'पदे एव लक्षणे'ति न लाक्षणिकेषु दोषः।

यत्तु–'ननु द्रोणाऽऽदीनां परिमाण एव वृत्तेः प्रातिपदिकाऽर्थत्वादेव सिद्धौ, परिमाणग्रहणं व्यर्थम्। न च नियतोपस्थितकस्यैव प्रातिपदिकाऽर्थत्वाद्यदा व्रीह्यादौ मेये द्रोणादीनां वृत्तिस्तदा तस्याऽनेकत्वेन, परिमाणमात्रवाचकत्वे तदबोधेन च, व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाऽभावेनाऽप्रातिपदिकाऽर्थत्वादसिद्धौ, कर्मव्युत्पत्त्या प्रमेयाऽर्थकं परिमाणग्रहणमि'ति कैयटाद्युक्तं युक्तम्। एवमपि 'सिंहो माणवक' इत्यसिद्ध्यापत्तेः। तत्र सदृशस्य नियतोपस्थितिकत्वाऽङ्गीकारे तु प्रकृतेऽपि तुल्यम्। यदि तत्र शक्याऽर्थमादाय पदसंस्कारोत्तरमेव लक्षणेत्युच्यते, तदाऽपि प्रकृते सममिति चेन्न। परिमाणत्वेन परिमाणं प्रत्ययाऽर्थः। तत्र प्रकृत्यर्थोऽभेदेन विशेषणम्। तच्च व्रीह्यादौ भेदेन विशेषणम्। एतदर्थमेव परिमाणग्रहणम्' इति॥ तन्न। एवमपि 'द्रोणो व्रीहिमानये'तिप्रयोगाऽऽपत्तेः। न च वार्त्तिकाऽनुरोधात्समानविभक्तिकनामाऽन्तराऽर्थाऽन्वये एव साधुत्वमिति वाच्यम्। एवं हि तदनुरोधादभेदाऽन्वये एव साधुत्वमित्यर्थस्याऽप्यङ्गीकर्त्तुमुचितत्वात्।

---

1 'अत एव' इत्यारभ्य 'उदाहृतम्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

कर्मत्वाऽभावसमानाधिकरणाऽर्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणाऽर्थान्तरस्य। अत एव 'गां दोग्धि पय' इत्यादावपादानत्वादिशक्तिबोधेऽपि द्वितीया भवति। एवञ्च 'कर्मणि सत्येव द्वितीया, न तु तदसत्त्वे' इत्येवं नियमाऽऽकारस्तथा प्रातिपदिकाऽर्थाऽभावसमानाधिकरणाऽर्थान्तरस्यैव व्यावृत्तिः स्यान्न तु तत्सत्त्वे एव कर्मत्वादेरिति मात्रग्रहणस्याऽऽवश्यकत्वात्। 'सम्बोधने चे'ति ज्ञापकेनाऽमुमर्थं साधयित्वा तद्भाष्ये प्रत्याख्यातमित्यन्यत्।

न चैवं सङ्ख्याधिक्येऽपि प्रथमा न स्यात्। 'द्व्येकयोरि'त्यादिभिरस्यैकवाक्यतया तदाधिक्ये प्रवृत्तेः। एकादिशब्दे त्वेतत्सूत्राऽनुवृत्ताऽनभिहिते इत्यस्याऽत्र सूत्रे फलाऽभावात्तदेकवाक्यताऽऽपन्नसङ्ख्यावाक्याऽन्वयित्वेन तदप्राप्तौ, वचनग्रहणबलेन तत्साधितम्।

न[1] च 'अभिहिते प्रथमे'ति वार्त्तिकस्वारस्येनाऽभिहितकारकस्य प्रथमाऽर्थत्वं लभ्यते, तत्तव न सिद्ध्येत्, त्वदुक्तप्रातिपदिकाऽर्थत्वाऽभावादिति वाच्यम्। 'तत्तत्प्रातिपदिकाऽर्थगतकारकशक्तावन्येनाऽभिहितायां स्वार्थे प्रातिपदिकात्प्रथमे'त्यर्थेनाऽदोषात्।

'द्विकं प्रातिपदिकाऽर्थ' इत्यस्य 'क्व चित्तावदेव प्रातिपदिकाऽर्थग्रहणेन गृह्यते' इत्येवाऽर्थः। 'तावदेव प्रातिपदिकाऽर्थ' इति पक्षस्तु न सूत्रभाष्याऽऽदिसंमतः। 'स्वमोर्नपुंसकात्' 'नपुंसकस्य झलच' इत्यादिसूत्रकृदुक्तेः। 'तस्माच्छस' इत्यत्र 'पुंसो'त्यस्य 'पुंशब्दस्य प्रकृतित्वे' इत्यर्थः। अत एव 'स्त्रियामि'तिसूत्रे 'स्त्रीत्वे द्योत्ये' इत्येवाऽर्थो भाष्ये सिद्धान्तितः। 'मात्र'-ग्रहणाच्च[2] सूत्रकारस्य प्रत्ययनियमपक्ष एवाऽभिमत इति गम्यते। मात्रग्रहणाऽकरणलाघवेन तु 'कर्मणि द्वितीयैवे'त्यर्थनियम उक्तो भाष्याऽऽदौ।

---

१ 'न च' इत्यारभ्य 'अदोषात्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

२ इतोऽग्रे—'मात्रग्रहणं च प्रत्ययनियमे कर्माऽऽद्याधिक्ये वारणायेत्युक्तम्' इति ख. पाठः। क. ग. नास्ति।

एवं च 'सम्बोधने चे'ति, लिङ्गाऽऽदिग्रहणं च प्रत्याख्यातमेव।

'वचन'ग्रहणमप्यनभिहिते इति सूत्रे–'एको द्वावित्यादौ विभक्तिर्न स्यादि'त्याशङ्क्य, 'समयाद्भविष्यति, 'अर्थतो व्यवस्थे'ति वदता भगवता प्रत्याख्यातप्रायमेव। 'अर्थत' इत्यादेरनुवादकविभक्तेर्न्याय्यत्वमित्यर्थ इति तत्रैव कैय्यटः।

'प्रातिपदिक'ग्रहणमपि सूत्रोपक्रमे–'सङ्ख्याविष्येकवाक्यतयाऽव्ययेभ्योऽप्राप्तौ, तेभ्यो विधानाऽर्थमि'ति वदता, 'तद्धितश्चाऽसर्वविभक्तिः' 'बहुष्व'त्यादिसूत्रेष्वव्ययेभ्यः प्रकाराऽन्तरेण विभक्तिं साधयता च प्रत्याख्यातप्रायमेव। स्वादीनां प्रातिपदिकादेव विधानेन 'अर्थे प्रथमे'त्युक्तावपि 'कस्याऽर्थ' इत्याकाङ्क्षायां 'यस्मात्स्वादिविधिस्तदर्थे' इत्यस्य लाभ इति तदाशय इति मात्सर्यमुत्सार्य सुधीभिर्विभावनीयमिति[2]।

[3]यत्तु 'प्रातिपदिकाऽर्थः सत्ते'त्यस्य 'योऽर्थः 'सन्नि'त्येव केवलं भासते, न जात्यादिधर्मविशिष्टः[4] स'इत्यर्थः। न चोच्चैरादीनामप्याधारतात्वविशिष्टा आधारताशक्तिर्वाच्येति तदप्रसिद्धिरिति वाच्यम्। 'न लिङ्गसङ्ख्याकारकयोगी'ति तदर्थात्। यथा उच्चैर्नीचैरिति। अलिङ्गसंख्यावेतौ, केवल लिङ्गाऽऽदिनिरपेक्षं स्वाऽर्थं जात्याद्याहतुः। यतोऽव्ययाऽर्थः केवलमस्तीति शक्यते वक्तुम्, न पुनरमुकलिङ्गाऽऽदिरिति। 'कृष्ण' इत्यादौ तु लिङ्गग्रहणात्सिद्धिरिति। तन्न। उ[5]च्चैर्नीचैरित्यादितः 'सन्नि'ति प्रतीतेः सर्वतन्त्रविरुद्धत्वात्। अस्त्यादिसामानाधिकरण्यस्याऽप्यसत्त्वार्थकेष्वव्ययेषु दुर्लभत्वम्। सुलभत्वे कर्त्तृत्वेनाऽन्वयात्, 'न लिङ्गसङ्ख्याकारकयोगी'ति त्वदुक्तिविरोधः।

---

१ 'प्रत्याख्यातमेव' ख. पाठः।

२ 'मित्याहुः' ख. पाठः।

३ 'यत्तु' इत्यारभ्य 'त्वदुक्तिविरोधः' इत्यन्तः ख. पाठो क. कुण्डलितः मनोरमाशब्दरत्नस्थत्वात्।

४ 'विशिष्ट इति' इति ख. पाठः। ५ 'उच्चैरित्यादितः' क. ग. पाठः।

यत्तु 'सिंहो माणवक' इत्यादौ सिंहसदृशे लक्षणायां गौणमुख्यन्यायात् प्रातिपदिकत्वं न स्यादि'ति। तन्न। विशिष्टरूपोपादाने एव तन्न्यायप्रवृत्तेः। पदकार्येष्वेव तत्प्रवृत्तेश्च। पदे एव[2] लक्षणासत्त्वाच्चेत्यास्तां तावत्।

सम्बोधने च। 'मात्र'ग्रहणात्सम्बोधनाऽऽधिक्ये न प्राप्नोतीत्यारम्भः।[3] [4]सम्बोधनमभिमुखीकृत्याऽज्ञाताऽर्थविषयकज्ञानानुकूलव्यापारानुकूलो व्यापारः। सम्बोध्यत्वं च तद्व्यापारजन्यज्ञानाऽनुकूलव्यापाराश्रयत्वम्। तत्त्वेन बुद्धश्च स्वनिष्ठज्ञानविषयज्ञेयमाकाङ्क्ष इति ज्ञेयेऽर्थ तस्याऽन्वयः। स एव च ज्ञाप्योऽर्थः[5]। सम्बोध्यताऽवच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना सम्बोध्यत्वाऽसम्भवादनुवाद्ये एवैषा विभक्तिः। अत एव 'राजा भव युद्ध्यस्व' 'राजन् युद्ध्यस्वे'त्यनयोर्व्यवस्थयैव प्रयोगः। एदन्ताऽर्थस्य च क्रियायामन्वयः।

'देवदत्त! त्वं सुन्दर' इत्यादौ च 'असी'त्यादिक्रियाऽध्याहारः। अत एव 'धिङ् मूर्ख'त्यादौ प्रथमा। अनध्याहारे तु द्वितीयैव। [6]एवञ्च 'सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, विशेषणं वा। तद्विभक्त्यन्ताऽर्थश्च क्रियां प्रति विशेषणमि'ति सिद्धान्तः। अत एव एकवाक्यत्वयुक्तो 'व्रजानि देवदत्ते'-त्यादौ निघातः सिद्ध्यति। [7]तदुक्तं हरिणा—

---

१ 'इत्यादौ वाक्यसंस्कारपक्षे सिंहसदृशे' ख. पाठः।

२ 'पदे एव लक्षणासत्त्वाच्च' इति ख. नास्ति।

३ इतोग्रे—'सम्बोधनं ज्ञापनम्। अत एवाऽनुवाद्ये एव सम्बोधनविभक्तिः। अस्याश्च क्रियायामन्वयः। अनुवाद्यस्य विधेयाऽऽकांक्षितत्वेन विधेयस्य क्रियारूपत्वेन तस्यैवोचितत्वात्'-इति ख. पाठः।

४ 'सम्बोधनम्' इत्यारभ्य 'एवान्वयः' इत्यन्तः क. ग. पाठः।

५ 'क्रियायामेवाऽन्वयः' इति ख. पाठः।

६ 'अत एव सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रियां प्रति विशेषणमिति सिद्धान्तः' इति ख. पाठः।

७ 'तदुक्तम्' इत्यारभ्य 'सिद्ध्यति' इत्यन्तः क. ग. पाठः। ख. नास्ति।

'सम्बोधनपदं यच्च तत्क्रियाया विशेषणम् ।
'व्रजानि देवदत्ते'ति निघातोऽत्र तथा सति ॥' इति ।

अत्र पुञ्जराजः—'आख्यातं सविशेषणं वाक्यमि'ति वाक्यलक्षणं समर्थसूत्रे भाष्ये उक्तम् । तत्राऽस्य क्रियाविशेषणत्वाऽभावेऽहंपदार्था-ऽऽदिकर्त्राद्यन्वयेऽस्य वाक्यत्वं न स्यादिति 'समानवाक्ये' इति प्रकृत्य विहितो न निघातो स्यादिती'ति ।

परे तु—'एवं हि 'नद्यास्तिष्ठति कूले' 'शालीनान्ते ओदनं ददामी'-त्यादाविष्टनिघाताद्यनापत्तिः, षष्ठ्यन्तानां क्रियाविशेषणत्वाऽभावेन तद्घटितस्य वाक्यत्वाऽनापत्तेः । तस्मात् 'सविशेषणमि'त्यस्य 'साक्षादन्य-द्वारा वा यद्विशेषणं, तत्सहितमि'त्यर्थः । एवं चैतत्प्रकृते न क्रियाऽन्वय-नियमसाधकम् । तयोर्निघातादि इष्टमिति च 'समर्थ'सूत्रे भाष्ये स्पष्टम् ।

एतेन 'यतः पदात्परस्य पदस्य निघातादयः क्रियन्ते, तयोः परस्परा-ऽन्वयनियम' इत्यपास्तम् ।

( [2]इदं च भाष्ये लौकिकवाक्यलक्षणम् ।

'साकाङ्क्षाऽवयवं भेदे, पराऽनाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं, गुणवदेकार्थं वाक्यमिष्यते' ॥

—इति ह्युक्तमीमांसकाऽभिमतलक्षणेन समानाऽर्थत्वात् । 'भेदे = विभागे, साकाङ्क्षाऽवयं = वाक्याऽनुपात्ताऽनाकाङ्क्षं, गुणवत् = विशेषण-पदयुक्तमि'ति तदर्थः । भाष्येऽपि 'सविशेषण'पदेन तदंशे साकाङ्क्षत्वं दर्शितम् । 'आख्यातमि'त्यनेन क्रियाप्रधानत्वम् । 'पचति भवती'त्येतत्-साधारणमिदम् । 'आख्यातमि'त्यत्रैकत्वविवक्षायामपि, सविशेषणाख्यात-स्याऽत्राऽप्येकत्वेनाऽदोषात् । एतच्च स्वशास्त्रमात्रविषयं लक्षणमुक्तं भाष्ये—'एकतिङ् वाक्यमि'ति । एतल्लक्षणाऽभिप्रायेणैव 'तिङ्ङतिङः'

---

१ 'हेपदार्थादि' इति कचित्पाठः ।

२ क. कुण्डलितः पाठोऽयं, ख. ग. नास्ति ।

इति सूत्रे भाष्ये उक्तम्—'अतिङ्वचनमनर्थकं, 'समानवाक्ये' इति वर्त्तते, न च समानवाक्ये तिङन्ते स्त इती'ति। आद्यलक्षणरीत्या तु 'पचति भवती'त्यत्र स्त एव ते )।

एवञ्च सम्बोधनाऽन्तस्य क्रियायामेवाऽन्वये साधुत्वे दृढतरं मानं चिन्त्यम्। अनुभवस्तथा प्राचां चेत्। अस्तु। एवञ्च 'देवदत्तसम्बोधन-विषयमत्कर्त्तृकं व्रजनमि'ति, 'देवदत्तसम्बोध्यकं व्रजनमि'ति वा बोधः। उभयत्राऽपि बोध[2]विषयत्वं मत्पदार्थे, व्रजने वेति यथानुभवं बोध्यम्। ( —इति सिद्धान्तः? । अत[1] एवैकवाक्यत्वप्रयुक्तो 'व्रजानि देवदत्ते'त्यादौ निघातः सिध्यति )। अधिकमस्मत्कृतसुबर्थवादे द्रष्टव्यम्।

॥ इति प्रथमा ॥

[ अथ द्वितीया ]

कारके। इत्यधिकृत्येति। 'करोति कर्त्तृकर्माऽऽदिव्यपदेशानि'ति-व्युत्पत्त्या 'कारक'शब्दः क्रियापरः। तेन क्रियायामित्यर्थः। तदुक्तं भाष्ये-'यावद् ब्रूयात् क्रियायामिति, तावत्कारके इति' इति। 'क्रियायां यद्विषय-स्तत्कर्मादिसंज्ञमि'त्यर्थः। विषयत्वं च जनकत्वेनेति बोध्यम्। अत एवैषां क्रियायामेवाऽन्वयः। 'क्रियाजनकमि'ति ज्ञाते 'का सा क्रिये'त्याकाङ्क्षोदयेन, क्रियाया जनकाऽऽकाङ्क्षया च तत्रैवाऽन्वयस्योचितत्वात्। जनकत्वं चैषां तत्क्रियोपयोगिक्रियाऽऽश्रयत्वेनेति भाष्याऽऽरूढः पन्थाः।

अन्ये तु 'अन्वेती'त्यध्याहारः। क्रियाऽन्वयित्वं च कारकत्वमित्याहुः। तेषां 'कारकाणां भावनाऽन्वय' इति वाक्यं 'घटत्ववान् घटत्ववानि'तिवत् स्यादिति बोध्यम्। 'कारकाद्दत्तश्रुतयोरि'त्यादौ च 'कारक'शब्दः

---

१ अयं क. कुण्डलितः पाठः। ख. ग. नास्ति।

२ इतोऽग्रे—'संयोग-समवायाऽतिरिक्तसम्बन्धेन सम्बन्धी हि 'वैषयिकाऽऽधार' इत्यत्र 'विषय'पदेनोच्यते इत्यग्रे उपपादयिष्यामः' इति क. कुण्डलितः ख. पाठः।

स्वर्यते । तेनैतदधिकारोक्तं कर्त्रादिषट्कं गृह्यते इति 'नटस्य श्रुतं नटश्रुतमि'त्यादौ नाऽतिप्रसङ्गः । यद्वा 'कारके' इति सप्तमी निर्धारणे । आवृत्त्या प्रथमया विपरिणम्यते च । तदुक्तं भाष्ये–'किमिदं कारके इति ? । संज्ञानिर्देश इति'। तत्र 'ध्रुवमपाये' इत्यादौ 'ध्रुवमपाये' इति योगं विभज्य, 'कारके' इत्यनुवर्त्त्य, कारकसंज्ञाऽपि विधीयते । 'क्रियाजनकानां मध्येऽपाये ध्रुवं—कारकसंज्ञं स्यात् , ततस्तदपादानसंज्ञं स्यादि'ति ।

नन्वेकसंज्ञाऽधिकारात्पर्यायाऽऽपत्तिः । न चाऽनुवृत्तिं विनैव 'कारके' इति सूत्रेण संज्ञाविधानेनैव पर्याये सिद्धे, पुनरनुवृत्तिः समावेशाऽर्था भविष्यति । न च संज्ञिनामनुपादानात्कथं तेन संज्ञाविधानम्॥ क्रियाजनकानामाक्षेपेण तत्सम्भवादिति वाच्यम् । आक्षेपाऽपेक्षयाऽनुवृत्तेरेव लघीयस्त्वात् । क्रियाजनकमात्रस्य त्वदुक्त्या कारकसंज्ञत्वेन 'नटस्य श्रुतं नटश्रुतमि'त्यादिवारणाय 'कारकाद्दत्ते'त्यादौ स्वरितपाठाऽऽश्रयणेऽधिकगौरवाच्चेति चेन्न । 'अपादानमि'त्यत्र 'कारकमि'त्यनुवर्त्त्य 'कारकं सत् अपादानमि'त्यर्थे कारकसंज्ञाया अनुवाद्यत्वलाभात्समावेशसिद्धेः । तेन 'ग्रामेवास'इत्यादावधिकरणत्वात्सप्तमी, कारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्च सिद्धः। 'भीत्राऽर्थानामि'त्यादावप्यावृत्त्या उक्तरीत्यैव समावेशो बोध्यः ।

यद्यपि कर्त्तरि ण्वुल्विधानात्कारकत्वं कर्त्तृत्वपर्यायः । एवं च कर्मत्वाऽऽदिविवक्षायां कर्त्तृत्वाऽभावात् 'कारकं कर्मेति' विरुद्धं, तथापि संज्ञाविधानसामर्थ्यात्कारकपदं स्वातन्त्र्यमात्रलक्षकम् ।

'स्वतन्त्रः कर्त्ते'त्यत्र तु कारकत्वादेव स्वातन्त्र्ये लब्धे, पुनस्तदुक्तिस्तात्कालिकी प्रधानीभूतधात्वर्थनिरूपितस्वातन्त्र्येण विवक्षा यस्य, तस्य ग्रहणाऽर्था । कारकत्वं यदा-कदाचिद्विद्यमानस्वनिष्ठतत्क्रियोपयोगिक्रिया-

---

१ अयं पाठः क. कुण्डलितः ख. ग. नास्ति ।

२ अयं क. कुण्डलितः पाठः ख. ग. नास्ति ।

३ 'क्रियाजनकमात्रस्य' इत्यारभ्य 'संज्ञत्वेन' इत्यन्तः क. ग. पाठः ।

निरूपितस्वातन्त्र्यमादायेति स्पष्टं भाष्यकैयटयोः। अन्वर्थसंज्ञाविज्ञानाच्च क्रियाया अजनकस्य न। तेन न 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यादौ ब्राह्मणपदार्थस्य पृच्छिक्रकर्मणो निमित्तस्य कर्मत्वाऽऽपत्तिः-'अकथितञ्चे'-त्यनेन। क्रियाजनकत्वन्तु न ब्राह्मणस्य, पुत्रेणाऽन्यथासिद्धत्वात्। 'अकथितञ्चे'तिसूत्रन्तु प्राप्ताऽपादानत्वाद्यविवक्षायां, सर्वथा तदप्राप्तौ च प्रवर्त्तत इति तत्रैव निरूपयिष्यामः।

(अन्यथा सुन्दरादिविशिष्टपुत्रस्य क्रियाव्याप्यत्वेन 'सुन्दरं पुत्रमि'-त्यादौ सुन्दरादीनां कर्मत्ववत् 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यादौ ब्राह्मणस्याऽपि कर्मत्वाऽऽपत्तिः। सिद्धान्ते तु न दोषः। अरुणाऽधिकरण-न्यायेन सुन्दरादीनां क्रियाऽन्वयवद्ब्राह्मणस्य क्रियाऽन्वयित्वाऽभावात्।

यद्वा पुत्रशब्देन जन्यताया अपि बाधनाद्ब्राह्मणस्य विश्लेषाऽऽश्रयत्वेन अपादानत्वाऽऽपत्तिः। तदविवक्षायान्तु 'अकथितञ्चे'त्यनेन पथिरूपकर्म-योगेन पुत्रस्येव, पुत्ररूपकर्मयोगेन ब्राह्मणस्याऽपि कर्मताऽऽपत्तिरिति।

अत्र वदन्ति—क्रियाव्याप्यत्वं क्रियाजन्यफलाश्रयत्वम्, न तद्ब्राह्मण-स्येति 'क्रियाव्याप्यत्वमि'त्याद्यः पक्षो न युक्तः। नाऽप्यकथितञ्चेत्यादि युक्तम्। तत्सूत्रे दुह्यादिपरिगणनाद्दुह्याद्यर्थनिरूपिताऽपादानत्वाद्यविवक्षाया-मेव तत्प्रवृत्तेः। न हि त्वद्रीत्या पृच्छ्यर्थनिरूपितमपादानत्वं, किन्तु जननादिक्रियानिरूपितम्। पृच्छिकर्मणो निमित्तस्य कर्मत्वाऽऽपत्तिरकथित-ञ्चेत्यनेन। जाताऽऽदिपदाऽध्याहारं विनाऽपि पुत्रशब्दाऽर्थ-जन्यताबोधित-विश्लेषाऽऽश्रयत्वेन पुत्रपदार्थाऽन्वयेऽप्यपादानत्वं स्यादिति फलं बोध्यम्)।

---

१ 'क्रियाजनकत्वन्तु' इत्यारभ्य 'फलं बोध्यम्' इत्यन्तः क. पाठः। ख. नास्ति।

२ क. कुण्डलितः पाठोऽयं, ख. ग. नास्ति।

३ 'पृच्छि' इति इत्यारभ्य 'जातादि' इत्यन्तः क. नास्ति।

४ 'अपादानत्वं स्यात्। सिद्धान्ते तु तत्र पुत्रशब्दाऽर्थविश्लेषनिरूपितजन-कत्वेऽपि, तस्य क्रियात्वाऽभावेन क्रियाजनकत्वाभावाच्च 'ब्राह्मणात्पुत्रमि'ति कदा चिदपि प्रयोगः' इति ख. पाठः। क. कुण्डलितः।

[1]सम्प्रदानस्याऽपि स्वज्ञानद्वारा क्रियाजनकत्वं सर्वत्राऽस्तीति दिक्।

कर्त्तुरीप्सित। 'ईप्सित'शब्दोऽत्र क्रियापरो, नाऽभिप्रेतपरो रूढः, व्याख्यानात्। स्पष्टं चेदं 'वारणार्थानामि'ति सूत्रे भाष्यकैयटादौ।

'कर्त्तरि'ति 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी। आप्नोतेः सन्नन्तात् 'मतिबुद्धी'ति वर्त्तमाने कर्मणि क्तः। 'मतिरिच्छे'ति हि तत्राऽऽकरः।

एवं च 'कर्त्रा आप्तुमिष्यमाणं कर्मे'त्यर्थः। आप्तिश्चाऽत्र सम्बन्धः। स च कर्मत्वाऽऽदीनां क्रियोपाधिकत्वात् प्रधानीभूतधात्वर्थव्यापाराऽऽश्रय-रूप'कर्तृ'पदाऽर्थ-विशेषणीभूत-व्यापारद्वारक एव। उपस्थितपरित्यागेन अनुपस्थितकल्पनायां मानाऽभावात्। एवं च 'कर्त्रा स्वनिष्ठव्यापारजन्य-फलेन सम्बन्द्धुमिष्यमाणमि'त्यर्थः। एवं च 'ईप्सित'पदेन कर्त्तृव्यापार-प्रयोज्यफल-सम्बन्धी उच्यते। फलसम्बन्धश्च आश्रयता। यथा—'तण्डुलं पचती'ति। फलस्याऽपि व्यपदेशिवद्भावेन फलाऽऽश्रयत्वात्कर्मत्वं बोध्यम्। अत एव तत्समानाधिकरणे 'शोभनं पचती'त्यादौ कर्मत्वसिद्धिः।

क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितम्। तेन 'कटं कृतवान्, करिष्यती'त्यादिसिद्धिः।

कर्त्तुः किमिति। तदभावेऽपि 'केनाऽऽप्तुमि'त्याकाङ्क्षायां कारका-ऽधिकाराद्व्यापारलाभ इति प्रश्नः।

माषेष्विति। अयं भावः—यथा धात्वर्थ-प्रधानव्यापार-जन्यफला-श्रयस्य कर्मत्वम्, तथा धात्वर्थताऽवच्छेदकफलभूतबन्धनजन्यैतत्कालिकैतन्माषभक्षणाऽऽश्रय[2]माषाणामपि तत्त्वं दुर्वारमिति। अधिकरणसंज्ञा तु 'कटे आस्ते' इत्यादौ चरितार्था। कर्त्तुरि'त्युक्तौ तु कारकपदै-तत्पद-लभ्यधात्वर्थयोः प्रत्यासत्त्यैकधात्वर्थत्वलाभात्कर्त्तृव्यापारवाचकोपात्तधात्वर्थताऽवच्छेद-कफलाऽऽश्रयत्वं लब्धमिति न दोषः। अत एव कर्मकारकस्य फलेऽन्वयः।

---

१ 'लक्ष्यते' ख. पाठः।

२ 'भक्षणाऽभावाऽऽश्रय' इति ख. पाठः।

तमप्ग्रहणं किमिति। अवयवद्वारा समुदायप्रश्नः । 'कर्त्तुरुद्देश्यं कर्मे'त्येवाऽस्त्विति भावः । पयसौदनमिति । यदा कृतभोजनोऽपि पयोलाभेन ओदनभोजने प्रवर्त्तते, तदेदं प्रत्युदाहरणम् । तत्क्रियायाः पयउद्देश्यकत्वात् । 'ईप्सिततम'शब्दस्य तु क्रियाशब्दत्वात्, पयसस्तदा फलाऽऽश्रयत्वेनाऽविवक्षणान्न दोष इति भावः । 'तम'मात्रस्य प्रयोजनं त्वग्रे वक्ष्यते, एतद्ग्रन्थव्याख्याऽन्तरदूषणं चेति दिक् ।

कर्मेत्यनुवृत्ताविति । 'अधिशीङ्स्थाऽऽसां कर्मे'ति सूत्रात् ।

आधारेति । कर्त्तृकर्मद्वारा क्रियाऽऽश्रये हि तच्छक्तम् । तदाह—गेहं प्रविशतीति ।

अनुक्ते कर्मणीति । 'कर्म'पदेनैतच्छास्त्रविहितकर्मसंज्ञकमात्रं गृह्यते, अविशेषात् । तत्र 'कर्त्तुरीप्सिततममि'तिसूत्रबोधितकर्मविहितद्वितीयाया आश्रयोऽर्थः । फलस्य धातुनैव लाभात् । तत्र प्रकृत्यर्थोऽभेदेन विशेषणम् । विशेष्यश्चाऽऽधेयतासम्बन्धेन प्रकृतधात्वर्थफलम्, फलद्वारा क्रियैव वा ।

एवं च 'हरिं भजती'त्यादौ 'हर्यभिन्नाऽऽश्रय-वृत्तिप्रीति-जनको व्यापार' इति बोधः । प्रीतिजनको व्यापारो हि 'भज्'धात्वर्थः ।

'हरिः सेव्यते' इत्यत्राऽपि भावनैव विशेष्ये'ति केचित् ।

अपरे तु 'पक्वस्तण्डुल' इत्यादौ कर्मकृतसमभिव्याहारे फलव्यापारयोर्व्यत्यासेन बोधस्याऽऽवश्यकतया, कर्माऽऽख्यातेऽपि फलविशेष्यक एव बोधः । अत एव प्रत्ययाऽर्थे साक्षात्सम्बन्धेन प्रकृत्यर्थविशेष्याऽन्वयित्वस्योत्सर्गतः क्लृप्तस्य न त्यागः । अन्वयित्वं विशेष्यतया, विशेषणतया वा ।

अत एव कर्त्तृलकारे न फलविशेष्यको बोधः । क्लृप्तप्रागुक्तनियमभङ्गाऽऽपत्तेः । अत एव 'इष्यते पुत्र' इत्यर्थे 'पुत्रीयती'ति न प्रयोगः ।

१ 'फलस्य धातुनैव लाभात्' इति क. ग. पाठः । ख. नास्ति

२ 'आधारता' ख. पाठः ।

३ 'तन्दुलः' क. पाठः ।

भिन्नाऽर्थत्वात् । किन्तु 'पुत्रमिच्छती'त्यत्राऽर्थे एव । क्यजन्तात्कर्मणि प्रत्ययस्तु दुर्लभः, अकर्मकत्वादि'त्यर्थक'सुप आत्मन'इतिसूत्रस्थभाष्याऽऽदिग्रन्थाः सङ्गच्छन्ते । अन्यथा 'एकाऽऽश्रयकपुत्रकर्मकेच्छानुकूलव्यापार'[1] इति बोधस्योभयत्राऽपि तुल्यत्वेन 'भिन्नाऽर्थत्वादि'त्यसङ्गतिः स्पष्टैव । मम तु कर्मलकारे 'एकाऽऽश्रयकव्यापारजन्या पुत्रकर्मकेच्छे'ति बोधः, कर्त्तलकारे उक्त इति, भिन्नाऽर्थत्वं स्पष्टमेव ।

तदुक्तं कैयटेन-'यदा क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितं, तदा वाक्यमेव प्रयुज्यते —( 'इष्टः[2] पुत्रः' ) 'इष्यते पुत्र' इति, न तु क्यजन्तः, तस्याऽकर्मकत्वात्कर्मणि प्रत्ययाऽनुत्पादादि'ति ।

न[3] चैवं कालाऽन्वयोऽपि फले स्यादिति वाच्यम् । व्यापारेणैव तस्य साऽऽकाङ्क्षत्वाद्विशेषणीभूते तत्रैव तदन्वयेन तदंशे उत्सर्गत्यागादित्याहुः ।

भावलकारे[5] तु व्यापार एव विशेष्यः । तथैवाऽनुभवात्[6] । तिङ् तु धात्वर्थाऽनुवादक एव । कालमात्रद्योतकत्वं त्वस्त्येवेत्यादि वक्ष्यते ।

ननु न्यायनयवत् 'हरिकर्मक-भजना-ऽनुकूलव्यापारवान्देवदत्त'इत्येव

---

१ 'एकाश्रयकः पुत्रकर्मकेच्छाऽनुकूल' ख. पाठः ।

२ 'इष्टः पुत्रः' इति क. ग. नास्ति ।

३ 'पुत्र इष्ट इत्यादि' इति तु कैयटे पाठः ।

४ 'न चैवं कालाऽन्वयोऽपि फले स्यादिति वाच्यम् । इष्टाऽऽपत्तेः । न चैवं व्यापाराऽपगमेऽपि विक्लित्तिसत्त्वेन 'पच्यते' इति स्यात्, 'अपाची'ति न स्यादिति वाच्यम् । स्ववाचकव्यापारेणैव तस्य साकाङ्क्षत्वात्' इति ख. पाठः ।

५ 'भावलकारे तु व्यापार एव विशेष्यः । क्त्वाऽन्तादौ सामानाधिकरण्यसम्बन्धेन व्यापारयोरेव परस्परमन्वयदर्शनेनौत्सर्गिकस्य व्यापारनिष्ठफलविशेष्यत्वस्य त्यागे मानाऽभावात्' इति ख. पाठः, क. कुण्डलितः ।

६ 'तथैव' इत्यारभ्य 'वक्ष्यते' इत्यन्तः क. ग. पाठः, ख. नाऽस्ति ।

बोधोऽस्त्विति चेन्न । 'क्रियाप्रधानमाख्यातमि'ति सिद्धान्तविरोधात्। 'तिङर्थाऽपेक्षया धात्वर्थः प्रधानमि[1]ति तदर्थः ।

यद्यपि 'नामान्याख्यातजानी'तिशाकटायनोक्तेः, 'सर्वं नाम धातुज-मित्याहे'त्युणादिसूत्रस्थभाष्याच्चाऽऽख्यातशब्देन धातुरप्युच्यते, तथाऽपि 'आख्यातमाख्यातेने'त्यादौ तिङन्तार्थकस्याऽपि दर्शनात्[2], 'पदजातानी' त्यनेन सामानाधिकरण्याच्चेह तिङन्तग्रहणम् । अत एव 'भाव-काल-कारक-सङ्ख्याश्चत्वार एतेऽर्था आख्यातस्य, तत्र भावः प्रधानमि'ति 'भावप्रधानमाख्यातमि'ति निरुक्तस्य भाष्यं सङ्गच्छते । अत एव महाभाष्येऽपि-'पचतिरूपं''पचतोरूपं' पचन्तिरूपमि'त्याद्यसिद्धिमाशङ्क्य, 'क्रियाप्रधानमाख्यातं, द्रव्यप्रधानं नाम, यतः क्रियां पृष्टस्तिङाऽऽचष्टे-'किं देवदत्तः करोती'ति,'पचती'ति। द्रव्यं पृष्टः कृताऽऽचष्टे-'कतरो देवदत्तः'? । 'यः पाचक' इति 'प्रशंसायां रूपबि'ति सूत्रे उक्तम् ।

'आख्यातवति प्रश्नवाक्ये प्रकरणादितः क्रियाप्रश्नाऽवगतावाख्यातेनैव उत्तरोपादानात्कालसङ्ख्यासाधनाद्यवगमेऽपि, तस्य क्रियाप्रधानत्वा-ऽवगतिरि'ति च कैयटेनोक्तम् ।

'[3]नामपदेन च सुबन्तमेव; उक्तयुक्तेरि'ति निरूपितं मञ्जूषायाम् । किञ्च निरुक्ते 'क्रियाप्रधानमाख्यातं, सत्त्वप्रधानानि नामानी'त्युक्त्वा, 'यत्रोभे भावप्रधाने भवत' इत्युक्तम् । 'यत्रोभे = नामाख्याते भवतो वाक्ये, तत्र ते भावप्रधाने = अख्यातार्थप्रधाने = क्रियाप्रधाने भवत' इति तदर्थ इति तद्भाष्ये उक्तम् । एवञ्च प्रथमान्तविशेष्यकबोधं वदतामेतन्निरुक्त-विरोधो वज्रलेपायितः । अत एव 'नमन्त्याख्यातार्थं प्रति विशेषणी भवन्ती'ति 'नाम'पदव्युत्पत्तिस्तद्भाष्ये दर्शिता। अतएव 'पचति व्रजती'ति-

---

१ 'प्रधानमिति विवेकः' ख. पाठः ।

२ 'दर्शनादिह तिङन्तग्रहणम्' ख. पाठः ।

३ 'नामपदेन' इत्यारभ्य 'दर्शिता' इत्यन्तः क. ग. पाठः ।

नैकं वाक्यम्। किञ्च तव मते 'अपचत् ओदनं देवदत्तं पश्ये'त्यादि-प्रयोगाऽऽपत्तिरिति स्पष्टं शतृविधायकसूत्रभाष्यकैयटयोः।

यद्यप्यन्तरङ्गा प्रथमा, तथापि प्रधानाऽनुरोधिनी द्वितीया बलवतीति बोध्यम्। अपि च 'पश्य मृगो धावती'त्यादौ दर्शने मृगस्यैव कर्मत्वात् ततो द्वितीयायामप्रथमासामानाधिकरण्येन शत्राद्यापत्तौ, तथाप्रयोगविलय एव स्यात्। 'अपाक्षीद्देवदत्तोऽवेही'त्यादिप्रयोगाऽनापत्तेश्च।

किञ्च 'पाको भवती'त्यर्थे 'पचति भवती'त्यस्याऽनापत्तिः। एकवाक्यतया ईदृशप्रयोगाणां साधुत्वस्य भाष्यवार्त्तिकादिसंमतत्वात्। 'आख्यात'पदेन तिङन्तस्यैव ग्रहणा'द्देवदत्तेन पक्वतण्डुल' इत्यादौ कारका-ऽपेक्षया न क्रिया प्रधानम्। अत एवोक्तं—'सत्त्वप्रधानानि नामानी'ति।

तत्र[3] विभक्त्यर्थस्य लिङ्गसङ्ख्याऽनन्वयित्वेनाऽसत्त्वभूतस्य प्राधान्ये-ऽपि न क्षतिः, क्रियाकाङ्क्षोत्थापकताऽवच्छेदकवैजात्यरूपस्य सत्त्वस्य तत्राऽपि सत्त्वात्। तदनुत्थापकतावच्छेदकवैजात्यरूपस्यैव क्रियात्वस्य आख्यातलक्षणे निवेशेन, ईदृशस्यैव सत्त्वस्येह निवेशात्। अत एव हिरुगादौ नाऽऽख्यातलक्षणाऽतिव्याप्तिः, नाऽपि नामलक्षणाऽव्याप्तिः।

'नाम'पदेन चाऽत्र विशेष्यतया स्वार्थबोधकसत्त्ववाचकप्रत्ययान्त-प्रकृतिकसुबन्तं गृह्यते। अत एव 'पचतिकल्पमि'त्यादौ न दोषः।

---

१ 'यद्यपि' इत्यारभ्य 'बोध्यम्' इत्यन्तः क. ग. पाठः, ख. नास्ति।

२ एतदुत्तरं—'नाम्नि सत्त्वप्राधान्यं च स्वघटकधात्वर्थाऽपेक्षयैव। अत एव विभक्त्यर्थस्याऽसत्त्वभूतस्य प्राधान्येऽपि न क्षतिः' इति ख. पाठः।

३ 'तत्र' इत्यारभ्य 'नापि नामलक्षणाऽव्याप्तिः' इत्यन्तः क. ग. पाठः। ख. नास्ति। तस्य-तत्र = नामसु। तत्रापि = विभक्त्यर्थेऽपि। ईदृशस्यैव = तद्विरुद्धस्यैव तादृशवैजात्यरूपस्येत्यर्थः।

४ 'विशेष्यतया सत्त्ववाचकप्रत्ययान्तम्' ख. पाठः।

न च 'एधामि'त्यस्य क्रियाप्रधानत्वाऽनापत्तिः, तिङन्तत्वाऽभावादिति वाच्यम्। 'आख्यात'पदेन कृदादेशरहित-लान्तस्यैव ग्रहणात्।

यत्तु 'तद्वहती'तिसूत्रे भाष्ये—'तस्येदमित्येव सिद्धे, इदं ऽयर्थमि'-त्याशङ्क्य, 'रथं वहती'त्यतो 'रथस्य वोढे'तिशब्दस्य भेदान्न तेन विधि-रि'त्युक्ते, 'शब्दभेदेऽप्यर्थसामान्यात्सिद्धम्', य एवाऽर्थो 'रथं वहती'ति, स एव 'रथस्य वोढेती'त्युक्तम्। तत्र 'शब्दभेदादि'त्यस्याऽयमर्थः-'वह-ती'ति क्रियाप्रधानं, 'वोढे'ति कर्त्तृप्रधानमिति। 'अर्थसामान्यादि'त्यस्या-ऽयं भावः-'वहतीत्यर्थे विधानेऽपि विशेषणविशेष्यभावव्यत्यासेन वहन-कर्त्तैवाऽत्र प्रत्ययाऽर्थः। वर्त्तमानकालश्चाऽविवक्षित[1] एव। 'ये एवे'त्यादेः 'वृत्त्यर्थोपदर्शके विग्रहवाक्ये' इत्यादिः। ईदृशे विषये तिङन्तादपि कर्त्तृविशेष्यको बोध इति तदाशयः। तदुक्तं हरिणा—

'आख्यातं तद्धितार्थऽस्य यत्किञ्चिदुपदर्शकम्।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः'॥ इति।

तत्र = आख्याते इत्यर्थः। एतत्तुल्यन्यायात्कृदन्ताऽर्थप्रतिपादके आख्यातेऽपि बोध्यम्। किं बहुना, वृत्तिविग्रहवाक्ये सर्वत्र विशेषण-विशेष्यभावव्यत्यासेन तयोः समानार्थत्वनिर्वाह इति-एतद्भाष्यतात्पर्यम्।

एतदपि वृत्त्यर्थोपदर्शनाऽर्थे वाक्ये एव। स्वतन्त्रे प्रयोगे तु यथास्थित एवाऽर्थ इति दिक्[2]। क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययार्थाऽपेक्षयैव प्रत्यासत्त्या बोध्यते। अत एव 'पश्य मृगो धावती'त्यादौ धावनक्रियायाः कर्मतया दृशिविशेषणत्वेऽपि, 'पचति भवती'त्यादौ कर्त्तृतया पाकक्रियाया भवतिक्रियाविशेषणत्वेऽपि च[3] न दोषः। तदुक्तं भूवादिसूत्रे ([4]भाष्ये-) 'पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती'ति।

---

१ 'अविवक्षित इति न तद्विरोधः' ख. पाठः।

२ 'य एव' इत्यारभ्य 'इति दिक्' इत्यन्तः क. ग. पाठः।

३ चकारः क. ग. नास्ति। ४ 'भाष्ये' इति क. ख. ग. नास्ति।

¹तत्र शब्दजन्योपस्थितेरेव शाब्दबोधकारणत्वे कर्मत्वं संसर्ग एव, अर्थाऽध्याहारवादे तु प्रकार एवेति बोध्यम्। एवं 'पचती'त्यादौ धातूपात्त-फलस्य व्यापारेऽन्वयेऽपि कर्मत्वस्य संसर्गत्वं, प्रकारत्वं वा मतभेदेन द्रष्टव्यम्। ²वस्तुतः पदोपस्थाप्यमपि कर्मत्वं षष्ठ्यर्थवत्संसर्ग एवेति निरूपयिष्यामः षष्ठीप्रकरणे। न चैवं 'पश्य मृगो धावति' 'पचति भवती'त्यत्र विशेष्य-विशेषणसमर्पकात् क्रमेण कर्माऽऽदिवाचिका द्वितीयाऽस्त्विति वाच्यम्। धातु-तिङन्तयोरप्रातिपदिकत्वात्। न च कर्त्तत्वादिना क्रियाया धात्वन्तराऽर्थक्रियायामन्वये तस्या असत्त्वं न स्यात्। कर्तृ-कर्मेतरकारकत्वेनाऽनन्वयितामात्रेण तथात्वाऽभ्युपगमात्। स्पष्टं चेदं 'सार्वधातुके यगि'ति सूत्रे कैयटे। ³सुबर्थकारकत्वेनाऽनन्वयित्वमेवाऽसत्त्वमि'ति परे।

(⁴क्रियाऽनाधारकारकत्वेनाऽनन्वयाद्वा। अत एव 'ज्योतिष्टोमेन यजेते'त्यादौ करणत्वेनाऽन्वयेऽपि न दोषः)।

न⁵नु 'रोदितीव पठती'त्यादौ क्रिययोरुपमानोपमेयभावसत्त्वात्सत्त्व-रूपता। 'तेन तुल्यमि'ति सूत्रे 'यदा क्रिया उपमानत्वेन विवक्ष्यते, तदा साऽवश्याऽपेक्षसाधारणधर्माऽऽधारत्वात् क्रियारूपतां हित्वा, सत्त्वरूपतां प्रतिपद्यते' इति कैयटोक्तेः। एवं च 'क्रियाप्रधानमाख्यातमि'ति-लक्षणाऽव्याप्तिः।

न चाऽत्राऽऽख्यातार्थकर्त्रोरेवोपमानोपमेयभावोऽस्तु। तयोः क्रियां प्रति

---

१ 'तत्र' इत्यारभ्य 'अप्रातिपदिकत्वात्' इत्यन्तः ख. पाठः, मनोरमाशब्दरत्न-स्थत्वात् क. कुण्डलितः।

२ 'वस्तुत' इत्यारभ्य 'षष्ठीप्रकरणे' इत्यन्तः क. ग. पाठः, ख. नास्ति।

३ 'सुबर्थ' इत्यारभ्य 'परे' इत्यन्तः क. कुण्डलितः पाठः।

४ 'क्रिया' इत्यारभ्य 'न दोषः' इत्यन्तः ख. पाठः, क. ग. नास्ति।

५ 'ननु सर्वमतेऽपि रोदितीव' ख. पाठः।

विशेषणत्वेन तस्याऽसम्भवादिति चेन्न।[1] 'कथं च तृतीयासमर्थं नाम क्रिया स्यादि'ति भाष्येण क्रियाया उपमानत्वाऽभावस्य स्पष्टमुक्तत्वेनाऽक्षतेः। स चाऽनभिधानात्। 'तृतीयासमर्थमि'त्यस्योपमानमित्यर्थः।[2] तिङन्तसमभिव्याहृतेवशब्दस्य सादृश्याऽर्थत्वाऽभावः।[3] सन्सूत्रे भाष्ये चोक्तं— 'न वै तिङन्तेनोपमानमस्ति'। 'तिङन्तेने'ति। असत्त्वभूतक्रिययेत्यर्थः[4]।

इदमेवाऽभिप्रेत्य कैयटेन 'उपमानोपमेयत्वस्य 'इदं तदि'तिपरामर्शविषयवस्तुगोचरत्वमि'त्युक्तम्। तत्र 'उपमेयत्वस्ये'त्यंशश्चिन्त्यः, 'ब्राह्मणवदधीते' इत्यादावध्ययनक्रियायां तत्त्वप्रतीतेः। अत एव भगवता 'उपमानमि'त्येवोक्तम्। किन्तु तत्र सम्भावनाऽर्थ इवशब्दो 'नृत्यतीव गच्छति', 'रोदितीव गायती'त्यादौ। स्पष्टं चेदं कैयटे।

---

१ 'तस्याऽसम्भवादिति चेन्न। 'सत्त्वरूपतां प्रतिपद्यते इति मत्वा, भाष्यकृतैतदुक्तमि'ति कैयटोक्तेस्तत्रत्यभाष्यपूर्वपक्षोपपादकत्वेनोक्तस्य सत्त्वपदार्थत्वे तात्पर्याऽभावात्। तत्र हि 'क्रिया चेदि'ति तृतीयासमर्थविशेषण'मिति पक्षे,–'कथं च तृतीयासमर्थं नाम क्रिया स्या'दिति पूर्वपक्षः। तदाशयो ह्ययं कैयटेनोक्तः। अत एव तद्भाष्यं—'तृतीयासमर्थत्वं नाम-तृतीयार्थोऽन्वितत्वम्। न च तदन्वयिनि क्रियात्वं, संख्याया अपि विभक्त्यर्थत्वेन तदन्वययोग्य एव विभक्त्यर्थोऽन्वयात्। संख्याऽन्वययोग्यत्वे च क्रियात्वहानि'रित्याशयेनाऽन्यैर्योजितम्। किञ्च तिङन्तसमभिव्याहृतेवशब्दस्य सादृश्यार्थत्वाऽभावात्' इति ख. पाठः।

२ 'कथम्' इत्यारभ्य 'इत्यर्थः' इत्यन्तः क. ग. पाठः, ख. नास्ति।

३ 'सादृश्यार्थत्वाऽभावात्। तदुक्तं सन्सूत्रे भाष्ये' इति ख. पाठः।

४ इतोऽग्रे—'अयं भावः–तिङुपस्थाप्यक्रियाया न भेदे प्रतियोगित्वेनाऽन्वयः। 'न पचति, गच्छती'त्यादितस्तथा बोधाऽभावात्। अत एव तिङन्तसमभिव्याहृतनञोऽसम्भवार्थकत्वमेव। एवं च सादृश्यघटकभेदे प्रतियोगित्वेन तस्या अन्वयाऽसम्भवान्नोपमानत्वमिति'—इति ख. पाठः।

एतेन[1] 'तेन तुल्य'मितिसूत्रस्थं 'कथं च तृतीयासमर्थं नाम क्रिया स्या'दिति भाष्यप्रतीकमुपादाय यत्कैयटेनोक्तं—'तदा साऽवश्याऽपेक्ष्यसाधारणधर्माऽऽधारत्वादि'त्यादि, तच्चिन्त्यम्।

न च 'यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते, यमभिचरति श्येनेने'त्यर्थवादवाक्ये भिन्ननिष्ठयोः क्रिययोरेकधातूपात्तयोरप्युपमादर्शनादिदमसङ्गतमिति वाच्यम्। 'यथा'शब्दस्य भेदकधर्मवद्वाचकतायाः 'प्रकारवचने थालि'तिसूत्रस्थाऽऽकरसंमततया, 'भेदकैयद्धर्म[2]श्येनकर्तृकमादानं, भेदकतद्धर्मवदेतत्कर्तृकरिप्वादानमि'तिबोधोत्तरं तद्धर्मका[3]ऽऽदानक्रियां निमित्तीकृत्य पश्चात् 'श्येनसदृशोऽयमि'तिबुद्ध्या, कर्त्रोरेवोपमानोपमेयभाव इत्यदोषात्। 'यथा देवदत्तो ग्रामं गच्छति, तथैवाऽऽयाती'त्यादौ त्वाद्यबोधेनैव पर्यवसानमित्यूह्यम्।

तुल्याऽऽदिपदार्थे तु क्रियाऽन्वयो न सम्भवत्येव। निपाताऽतिरिक्तनामाऽर्थे तिङन्ताऽर्थक्रियाया विशेषणत्वेनाऽन्वयस्याऽव्युत्पन्नत्वात्। अन्यथा 'तण्डुलः पचती'त्यपि स्यात्, क्रियाया नामाऽर्थे स्वनिरूपितकर्मत्वेनाऽन्वयसम्भवादिति दिक्।

न चैवं 'पचतिकल्पं देवदत्त' इत्यादौ देवदत्तस्य भेदेन सम्बन्धेन भावनायामन्वयाऽनुपपत्तिः, नामाऽर्थत्वात्, समानविभक्तिकत्वात्, विरुद्धविभक्तिराहित्याच्चेति वाच्यम्। देवदत्ताऽऽदेस्तिङन्ताऽर्थाऽऽश्रयेऽभेदेनैवाऽन्वयादक्षतेः। तिङर्थश्चाऽऽश्रय एवेति 'गत्यर्थलोटा लृण्न चेदि'ति सूत्रे भाष्ये स्पष्टम्।

---

१ 'एतेन' इत्यारभ्य 'तच्चिन्त्यम्' इत्यन्तः क. ग. पाठः, ख. नास्ति।

२ 'यत्प्रकारवच्छ्येनकर्तृकाऽऽदानं तत्प्रकारकैतत्कर्तृकरिप्वादानमिति' इति ख. पाठः।

३ 'तत्प्रकारकाऽऽदान' इति ख. पाठः।

[1]अत्र केचित्—'सूत्रे इच्छाविषयत्वरूपस्य ईप्सित[2]त्वघटकस्य निमित्त-कोटावुपादानेऽपि न तस्य शाब्दबोधे भानम्, शीङादिवत्संज्ञाप्रवृत्तावुपयोगेऽपि [3]शाब्दबोधे तस्य भानाऽननुभवेन, [4]द्वितीयावाच्यकोटावप्रवेशादि'[5]त्याहुः ।

अन्ये तु 'तदुपलक्षितमुद्देश्यत्वं भासते एव, एतत्सूत्रबोध्यकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात् । अत एव 'कर्मणा यमभिप्रैती'ति सूत्रे 'कर्मणेत्यस्याऽभावे गोरप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्या एव पर्यायेण संज्ञा स्यादि'त्युक्तं सङ्गच्छते । चतुर्थ्यास्तूद्देश्यत्वं वाच्यमिति सर्वसंमतम् । अस्ति च 'ग्रामं गच्छती'त्यादौ ग्रामादेरुद्देश्यत्वप्रतीतिः सर्वोऽनुभवसिद्धा । अत एव सूत्रे सनुपादानम् ।

एतेन'धातूपस्थाप्यफलशालि कर्मे'त्येवाऽस्तु, किमीप्सिताऽनीप्सितयोः पृथक्कथनेने'ति परास्तम् । किञ्चैवं सति 'वारणार्थानामि'ति सूत्रम् अस्याऽपवादः स्यात् । एवं च 'अग्नेर्माणवकं वारयती'त्यत्र कर्मत्वं न स्यात् । न चाऽग्नौ तच्चरितार्थम् । तस्याऽपि तदुपस्थाप्यसंयोगरूपफलाऽऽश्रयत्वात् । वारयतेश्च संयोगाद्यनुकूलव्यापाराऽभावाऽनुकूलव्यापारोऽर्थः । एष एव 'प्रवृत्तिविघात'पदेनोच्यते । तत्राऽपि ईप्सितशब्दः क्रिया-

१ 'अत्रेदं बोध्यम्' ख. पाठः ।

२ 'रूपेप्सितत्वस्य' ख. पाठः ।

३ 'शाब्दबोधे तस्य भानाऽननुभवेन' इति क. ग. पाठः । ख. नास्ति ।

४ 'द्वितीयावाच्यकोटावप्रवेशात् । वाक्याऽर्थबोधोत्तरकालं नियमतो जायमानमानस-बोधाल्लाभेनाऽन्यलभ्यत्वात् । नन्वेवं 'धातूपस्थाप्यफलशालि कर्मे'त्येवाऽस्तु, किमीप्सिताऽनीप्सितयोः पृथक्कथनेनेति चेन्न । एवं सति 'वारणार्थानामि'ति सूत्रमस्याऽपवादः स्यात्' इति ख. पाठः ।

५ 'इत्याहुः' इत्यारभ्य 'एतेन' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

शब्द एव।[1] न च संयोगो न तत्कर्त्तृव्यापारजन्यः। कर्त्तृपदस्य तत्रा-ऽभावात्। यथान्यासे ईप्सितमात्रे सावकाशस्याऽस्य परत्वादीप्सिततमे-ऽनेन बाध इति न दोषः। एतदर्थमेव यथान्यासे तमोपादानम्।[2]

तथा हि—तमप् प्रवृत्तिनिमित्तगतप्रकर्षे विधीयते। प्रवृत्तिनिमित्तं चा-ऽत्र विषयत्वम्, इच्छा, व्याप्तिर्वा। तद्गतप्रकर्षश्च प्रकृतधात्वर्थप्रधानी-भूतव्यापारप्रयोज्य-प्रकृतधात्वर्थफल-सम्बन्धित्वरूपो, व्याख्यानात्। 'फलस्य, व्यापारस्य च प्रकृतधात्वर्थत्वन्तु प्रत्यासत्तिलभ्यमि'त्युक्तम्।

एवञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापार-प्रयोज्यप्रकृतधात्वर्थफला-श्रयत्वम् ईप्सिततमत्वम्। तच्च नाऽग्न्यादौ। प्रयोज्यता च जन्य-तज्जन्य-साधारणी। अत एव 'गां दोग्धी'त्यादौ पयसः कर्मत्वसिद्धिः। विभागा-ऽनुकूलव्यापाराऽनुकूलव्यापारो हि दुहेरर्थः।

ननु 'वारणार्थानामि'ति सूत्रकैयटोक्तरीत्या 'ईप्सिते'ति कर्मणा कर्त्रा-क्षेपेण सिद्धे, कर्मसंज्ञायां पुनः कर्त्तृग्रहणात्प्रधानीभूतव्यापाराऽऽश्रय-स्यैव कर्त्तृपदेन ग्रहणम्। 'कर्त्तृग्रहणं स्वतन्त्रोपलक्षणमि'त्यस्य तत्सञ्ज्ञ-कत्वं न विवक्षितमित्यर्थः। तेन 'सार्थाद्धीयते' इत्यत्र कर्त्तुरपादानत्वेऽपि, कर्मसञ्ज्ञाप्रयुक्तकर्मलकारसिद्धिः। प्रधानीभूतव्यापाराऽऽश्रयत्वं त्वस्त्येव। एतच्च सम्प्रदानसञ्ज्ञासूत्रे कैयटे स्पष्टम्।

एतेनाऽत्रापि कर्त्तृग्रहणं यथाकथञ्चिद्व्यापाराश्रयोपलक्षणम्। अत एव 'गां दोग्धि पय' इत्यादिसिद्धिः। एवञ्च संयोगाऽनुकूलव्यापाराऽऽश्रयताया

---

१ 'क्रियाशब्द एव गृह्यते' ख. पाठः।

२ 'कर्त्तृपदस्य' इत्यारभ्य 'तमोपादानम्' इत्यन्तः क. ग. पाठः, ख. नास्ति।

३ इत उत्तरं–'कर्त्तृपदस्य तत्र स्वतन्त्रोपलक्षणत्वात्। स्वातन्त्र्यं च संयोगानु-कूलव्यापारं प्रति माणवकस्याऽस्तीति तद्व्यापारजन्यफलाश्रयत्वस्याऽप्राव-प्यक्षतेः। अत एव 'गां दोग्धि पय' इत्यादौ गोव्यापारजन्यफलाश्रयत्वेन पयसः कर्मत्वम्। विभागाऽनुकूलव्यापाराऽनुकूलव्यापारस्य दुह्यर्थत्वात्। 'ईप्सित-

माणवके सत्त्वेन, तज्जन्यफलाश्रयत्वमग्नावक्षतमेव। 'अथवा वारणार्थानां कर्मण ईप्सित' इति वार्त्तिकन्यासेऽग्नेरपादानत्वसिद्धिः। 'कर्मनिष्ठधात्वर्थजन्यफलाश्रय' इति हि तदर्थ' इति परास्तम्।

किञ्च 'तम'ग्रहणेनाऽग्नेः कर्मत्ववारणाय 'प्रधानीभूतप्रकृतधात्वर्थव्यापारे'त्यादिलाभे, तादृशाऽर्थोपलक्षणे फलाऽभावः। तादृशेऽर्थे हि 'गां पयो दोग्धी'त्यादिसंग्रहाय फलांऽशे व्यापारप्रयोज्यत्वनिवेशस्याऽऽवश्यकत्वात्। एवञ्च व्याख्यानसहकृतेन कर्त्तृग्रहणेन, तमग्रहणेनेव तादृशाऽर्थलाभे, तमो व्यर्थ एवेति चेन्न। लघुना तमग्रहणेन तत्प्रत्याख्यानस्यैव न्याय्यत्वात्। फलांशे प्रकृतधात्वर्थत्वस्य, व्यापारांशे इव, प्रत्यासत्त्यैव लाभेन 'माषेष्वश्वमि'त्यादौ न दोषः।

यत्तु 'सनर्थोद्देश्यतायां मुख्यत्वं तमाऽर्थ' इति। तन्न। 'माषेभ्यो गां वारयति। भवेद्यस्य माषा, न गावः, तस्य माषा ईप्सिताः स्युः, यस्य तु खलु गावो, न माषाः, कथं तस्य माषा ईप्सिताः ?। तस्यापि माषा ईप्सिता एव, यदेते मा नशन्निति-एतेभ्यो गा वारयती'ति भाष्येण माषेष्वेव मुख्योद्देश्यतालाभेन, तदव्यावृत्तेः। एतदेव ध्वनयता भगवता 'कर्त्तुरि'त्यस्य फलविचारो न कृत इति दिक्।

स्पष्टं चेदं 'वारणार्थानामि'ति सूत्रे, प्रकृतसूत्रे च भाष्ये। एवं च 'पयसौदनं भुङ्क्ते' इत्यत्र पयसः करणत्वस्यैव विवक्षणेन, प्रकृतधात्वर्थ-

---

तम' मि'त्युक्ते तु ईप्सितमात्रे तस्य सावकाशत्वात् परत्वेन ईप्सिततमेऽनेन तद्बाधः। तथा हि—तमप् प्रवृत्तिनिमित्तगतप्रकर्षं विधीयते। प्रवृत्तिनिमित्तं चाऽत्रेच्छा। तस्यां प्रकर्षश्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलसम्बन्धविषयकत्वरूपः। व्याख्यानात्। एवं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाऽऽश्रयत्वम् ईप्सिततमत्वम्। अत एव 'गां दोग्धि पय' इत्यादौ पयसः कर्मत्वसिद्धिः। 'मासमास्ती'त्यादाववच्छेदकतारूपव्याप्त्याश्रयत्वस्य कर्मत्वसिद्धिश्च। फलत्वं च कर्त्तृप्रत्ययसमभिव्याहारे धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताऽऽश्रयत्वम्' इति ख. पाठः।

'अन्यथा' इति क. ग. पाठः।

फलाऽऽश्रयत्वस्याऽविवक्षणेन च न कर्मत्वं पञ्चकप्रातिपदिकाऽर्थपक्षे।

उभयविवक्षायान्तु परत्वात्कर्मत्वमेव। तदा चोभयोर्वाचिका द्वितीयैव। इदन्तु न 'तम'व्यावर्त्त्यम्, पयोऽग्न्युभयव्यावर्त्तकप्रकर्षस्य दुर्वचत्वात्।[1]

यो[2] तु भाष्येऽन्वयव्यतिरेकाभ्यां पयस ईप्सिततमत्वं दर्शयित्वा, तत्र कर्मत्वाऽऽशङ्का कृता, सा तु[3] ईप्सितशब्दस्याऽभिप्रेतरूढस्य[4] ग्रहण-मभिप्रेत्य। अत एव कैयटेनोक्तम्—'अन्वयव्यतिरेकाभ्यां दधिपयसो-रीप्सितत्वं, न त्वोदनस्येति दर्शयती'ति। अग्रे च 'क्रियाशब्द ईप्सित-तममिती'त्याशयेन[5] 'तस्याऽप्योदन एव ईप्सिततमो, न तु गुणेष्व स्याऽनुरोध' इत्युत्तरम्[6]। क्रियाजन्यफलाश्रयत्वविवक्षा ओदने एव, न तु करणत्वेन गुणभूते दध्यादाविति तदर्थ इति[7] भाष्यप्रदीपोद्द्योते स्पष्टम्।

तस्मात् 'तम'ग्रहणफलम् 'अग्नेर्माणवकं वारयती'ति। 'पयसौदनमि'ति त्वीप्सितशब्दस्य क्रियाशब्दत्वफलमित्युचितम्[8]। प्रकर्ष[9]प्रतियोग्यनुपादाने-

---

१ 'व्यावर्त्तकेप्सिततमत्वस्य' ख. पाठः।

२ 'यत्तु' ख. पाठः। ३ 'तत्तु' ख. पाठः।

४ 'अभिप्रेतपरस्य रूढस्य' ख. पाठः।

५ 'इतीत्युत्तरं तस्याऽप्योदन एव' ख. पाठः।

६ 'इति। क्रियाजन्य' ख. पाठः।

७ 'इत्यादि' ख. पाठः।

८ 'इत्युचितम्। न चैवं प्रकर्षप्रतियोग्युपादाने'अग्नेर्माणवकं वारयती'त्यत्रैव स्यान्न तु 'घटं पश्यती'त्यादाविति वाच्यं, 'कलाटकुक्कुट्यौ पश्यती'त्यादि-निर्देशैस्तदनुपादानेऽपि संज्ञाज्ञापनेनाऽदोषादित्यन्यत्र विस्तरः।

ननु 'तथायुक्तमि'त्यनेन सामर्थ्येनैव द्वेष्यादिसंग्रहे सिद्धे, किमनी-प्सितग्रहणेनेति चेत्। इष्टापत्तेरित्याहुः'—इति ख. पाठः।

९ 'प्रकर्ष' इत्यारभ्य 'इत्यन्यत्र विस्तरः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

ऽपि 'घटं पश्यती'त्यादौ तु न दोषः। 'ललाटकुकुट्यौ पश्यती'त्यादिनिर्देशादित्यन्यत्र विस्तरः।

'आश्रयो द्वितीयाऽर्थ' इत्युक्तम। यद्यपि कर्मणि, कर्त्तरि, अधिकरणे च विहितानां द्वितीयाऽऽदीनामाश्रयोऽर्थ इति तुल्यं, तथाऽपि तन्निरूपकं फलं, व्यापारः, स्वाऽऽश्रयद्वारा तदुभयं चेति, फलीभूते शाब्दबोधे वैलक्षण्यम्। वैलक्षण्याऽन्तरमपि वक्ष्यते।

न चाऽऽधारतैव वाच्याऽस्तु। न[1] चैवमाधारतात्वस्य शक्यतावच्छेदकत्वे गौरवम्। तस्याऽखण्डोपाधिरूपत्वेन गुरुत्वाऽभावादिति वाच्यम्। लोके कर्म-करणादिपदानां धर्मिपरतया दृष्टत्वेन, बहुव्रीह्यनुरोधेन च धर्मिणि शक्तेरुचितत्वात्कर्मैवाऽर्थो, न तु कर्मत्वादि। किञ्च 'कर्मणी'त्यादिसूत्रस्वरसभङ्गापत्तेः। आश्रयतात्वरूपशक्यताऽवच्छेदकताऽवच्छेदकैक्याच्च,-आधारतानां निरूपकभेदेन, आश्रयभेदेन, सम्बन्धभेदेनाऽनन्तत्वेऽपि, न शक्यताऽवच्छेदकाऽऽनन्त्यम्।

यत्तु 'घटं जानाती'त्यादौ विषयत्वं[2] द्वितीयाऽर्थ' इति। तन्न। कर्माऽऽदिभिन्नाऽर्थस्य शेषपदेन ग्रहणेन षष्ठ्यापत्तेः। 'कर्मणि द्वितीये'त्यादौ 'कर्म'पदेन तु कृत्रिमाऽकृत्रिमन्यायेन स्वशास्त्रसङ्केतितस्यैव ग्रहणम्[3]। न[4] हि विषयता तथा।

---

१ 'न चैवम्' इत्यारभ्य 'किञ्च' इत्यन्तः क. ग. पाठः, ख. नास्ति।

२ 'विषयत्वमर्थः' ख. पाठः।

३ इतोग्रे—'विषयतायां कर्मव्यवहाराऽभावाच्च। [1]लोके करणाऽऽदिपदानां धर्मिपरतया दृष्टत्वेन, बहुव्रीह्यनुरोधेन च धर्मिण्येव शक्तेरुचितत्वात्कर्मैवाऽर्थो, न तु कर्मत्वादि' इति ख. पाठः।

४ 'न हि विषतया तथा' इति क. ग. पाठः, ख. नास्ति।

---

1 'लोके' इत्यारभ्य 'न तु कर्मत्वादि' इत्यन्तः क. ग. पाठः पूर्वमेवागतः।

तथा तिङ्क्ष्वपि धर्म्येवाऽर्थः। अत एव 'कर्त्तरि कृत्' 'लः कर्मणि च' 'तयोरेव कृत्ये'ति सूत्राणामवैरूप्यम्। 'पाचको देवदत्तः', 'पक्व ओदन' इत्यादौ सामानाधिकरण्यानुरोधेन कृतां धर्मिवाचकताया आवश्यकत्वाच्च।

'हरिमि'त्यादौ प्रत्ययाऽर्थकर्मणः 'स्वघटकाऽऽधारतानिरूपकत्व' सम्बन्धेन क्रियाऽन्वयः। यदि तु आकृत्यधिकरणन्यायेन शक्तिविशेष एव शक्यः, जात्या व्यक्त्याक्षेपवत्तादृशशक्तिरूपधर्मेण तद्व्यक्त्याक्षेपः, तदाऽस्तु कृत्स्वपि धर्ममात्रम्। तदेतदुक्तमभियुक्तैः—

'आश्रयोऽवधिरुद्देश्यः, सम्बन्धः, शक्तिरेव वा' इति।

सर्वथा नैयायिकाद्युक्तमर्धजरतीयं हेयमेवेति दिक्।

नन्वेवमपि 'पक्वमोदनं भुङ्क्ते' इत्यत्र द्वितीया न श्रूयेत, अनभिहिताऽधिकारात्, उक्ताऽर्थानामप्रयोगाच्चेति चेन्न। पचिनिरूपितकर्मत्वशक्तेरभिहितत्वेऽपि, प्रधानभुजिक्रियानिरूपिताऽनभिहितकर्मत्वमादाय द्वितीयोत्पत्तेः। 'अहं भुक्त्वा व्रजामी'त्यर्थे 'मया भुक्त्वा व्रजामी'ति तु न प्रयोगः।

'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाऽऽश्रया तत्र प्रधानमनुरुध्यते॥
प्रधानविषया शक्तिः प्रत्ययेनाऽभिधीयते।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते॥' इति हर्युक्तेः।

अनयैव रीत्या 'पक्त्वा शाकसूपौदना भुज्यन्ते' इत्यत्र भुजिनाऽभिहिते कर्मणि प्रथमैव। पचेरप्राधान्यात्तत्र विद्यमानाया अपि पचिनिरूपित-

---

१ 'यदि तु प्राप्ताऽप्राप्तविवेकन्यायेन, आकृत्यधिकरणन्यायेन वा शक्तिविशेष एव शक्यः, तस्य च निरूपकतासम्बन्धेन धात्वर्थेऽन्वयः। यद्वा जात्या व्यक्त्याक्षेपवत्' इति ख. पाठः।

२ 'एवमहं भुक्त्वा व्रजामि' ख. पाठः।

३ तुर्नास्ति ख. पुस्तके।

४ 'हर्युक्तेश्च' ख. पाठः।

शक्तेः प्रधानभुजिनिरूपिताऽभिहितशक्तिसमानाधिकरणत्वेनाऽभिहित-वदेव प्रतीत्या स्वकार्याऽनारम्भकत्वात्।

हरदत्तस्तु 'तत्पदोपात्ते गुणक्रियानिरूपिता शक्तिर्नाऽस्त्येव, यतो युगपदुभयत्र शाब्दान्वयाऽसम्भवेन एकत्र प्रधाने एव शाब्दोऽन्वयः, इतरेण तु सन्निधानादार्थ' इति। हरिणाऽप्युक्तम्—

'पक्त्वा भुज्यत इत्यादौ केषांचिन्न व्यपेक्षते।
ओदनं पचतिः, सोऽसावनुमानात्प्रतीयते ॥' इति।

तन्न। 'ग्रामाय गन्तुमिच्छती'तिमन्विधायकसूत्रस्थभाष्यप्रयोगविरोधा-ऽऽपत्तेः[1]। तस्मादार्थाऽन्वयेऽपि शक्तिरस्त्येव। अत एव तत्र भाष्ये उक्तं 'गमेर्ग्रामः कर्म, इषेस्तूभयमि'ति वदन्ति।

इदं च 'स्वादुमि णमुलि'तिसूत्रे, 'सप्तमीपञ्चम्यौ कारकमध्ये' इति-सूत्रे च भाष्यकैयटयोः स्पष्टम्। अत एव 'प्रासादे आस्ते' इत्यादौ सद्यादि-क्रियानिरूपिताऽधिकरणत्वस्योक्तत्वेऽपि, आसिनिरूपितस्याऽनभिहितत्वा-त्सप्तमी[2] सिद्धा। 'ग्रामं[3] गन्तुमिष्यते' इति तु न, इषिक्रियानिरूपित-ग्रामनिष्ठकर्मत्वशक्तेरभिधानेन गमिक्रियानिरूपिततन्निष्ठशक्तेरप्यभिहितव-त्प्रकाशात्। तदुक्तं हरिणा—

'इषेश्च गतिसंस्पर्शात् ग्रामे यो लो विधीयते।
तत्रेषिणैव निर्भोगः क्रियते गतिकर्मणः ॥' इति।

१ 'विरोधापत्तेश्च' ख. पाठः।

२ 'सप्तमी सिद्धा। तदयमत्र निष्कर्षः—यत्र क्रिययोरकर्मकत्वं, तत्रोपात्तकर्मणः प्रधानाख्यातान्तवाच्यक्रिययैव शाब्दोऽन्वयो, न तु क्त्वान्ताद्यर्थेन। अत एव 'ग्रामं गन्तुमिष्यते' इति न'—इति ख. पाठः।

३ 'ग्रामं गन्तुम्' इत्यारभ्य 'प्रकाशात्' इत्यन्तः क. ग. पाठः ख. नास्ति।

तथा 'स्थित्वाऽभिनिविश्यते सन्मार्ग' इत्यादौ स्थितिक्रियाऽधिकरणत्वेऽपि न सप्तमी। तदुक्तम्—

'तथाऽभिनिविशौ कर्म तिङन्तेनाऽभिधीयते।
क्त्वाऽन्तेऽधिकरणत्वेऽपि न तत्रेच्छन्ति सप्तमीम्' ॥ इति।

अयं च तिङन्ताऽर्थक्रियानिरूपितशक्तेरेव स्वभावो यत् स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाशः। अत एव पस्पशायां–'क्षुधं प्रतिहन्तुं शक्यमि'त्यपि भवती'ति कैयटः। 'शक्यमि'त्यादेरप्यस्तीत्यादिनिरूपितगुणत्वेन न्यायाऽप्रवृत्तेः, 'प्रतिहन्तुमि'त्यनेनाऽपि कर्माऽन्वयसम्भवादिति प्राचीनग्रन्थपरिशीलनशालिनो विभावयन्तु।

एतेन 'पक्त्वा भुज्यते' इत्यादौ कर्मणः पचि-भुजिभ्यां न युगपत् शाब्दोऽन्वयः। किन्त्वन्यतरेण शाब्दोऽपरेणाऽऽर्थः। तत्र प्रथमाद्वितीये व्यवस्थिते एव। तद्यथा–'पक्त्वा भुज्यते ओदनः'। किं पक्त्वा?। अर्थात् 'ओदनम्'। यदा तु 'ओदनं पक्त्वा भुज्यते' इति प्रयुज्यते, तदा 'भुज्यते' इत्यत्राऽर्थात् 'ओदन' इति गम्यते। एवं विवक्षाभेदेन 'पूजयितुं शक्यते हरिः' 'हरिं चे'त्युभयं साध्वि'ति परास्तम्। अत एवं 'स्वादुमी'ति सूत्रे भाष्ये 'तुमुन्–क्त्वा–णमुलादयः स्वाऽन्वयिना समभिव्याहृतेनाऽनुप्रयुज्यमानेन समानाधिकरणे तद्वाच्यकारके वक्तव्याः'। तेन 'पक्त्वौदनो भुज्यते' इत्यादावोदने द्वितीया न। अन्यथा पचिक्रियाकर्मत्वस्याऽनभिधानात्सा स्यादेवे'त्युक्तम्। तत्पक्षे चैषां प्रयोगाणामभावात्प्रत्याख्याने-

१ इतोऽग्रे—'अहं भुक्त्वा व्रजामी'त्यर्थे 'मया भुक्त्वा व्रजामी'त्यापत्तेश्च। सामानाधिकरण्येनाऽन्वयेऽपि पार्थक्येन कर्त्राकाङ्क्षाऽभावस्य दुरुपपादत्वात्। वाक्याऽर्थबोधात्प्राक् पदार्थोपस्थितिकाले क्रिययोः परस्पराऽऽकाङ्क्षाया नियततया, तदाकाङ्क्षाया दुर्वारत्वात्'—इति ख. पाठः।

२ 'अत एव' इत्यारभ्य 'सारमित्याहुः' (८१७ पृ०) इत्यन्तः क. ग. पाठः।

ऽपि हर्युक्तरीत्याऽभाव एवोचितः। वार्त्तिके 'समान'शब्द एकपर्यायः। तद्वाच्यकारकाऽभिन्नं यत्र क्त्वान्तादिकारकं, तत्रेत्यर्थः। तेन 'पक्त्वौदनं, ग्रामो गम्यते देवदत्तेने'ति सिद्धम्। एवञ्च कैयटोक्तं 'क्षुधं प्रतिहन्तुमि'-त्यप्यसाध्वेव। तत्पक्षेऽसिद्धेः। तस्मात्तुमुनाद्यन्वयिक्रियानिरूपित-शक्तेरेवाऽयं स्वभावो, यत् स्वसमानाधिकरणगुणभूततुमादिप्रकृत्यर्थ-निरूपितशक्तेरभिहितवत्प्रकाश इति सारमित्याहुः।

अधिकं भाष्यप्रदीपोद्द्योते, 'स्वादुमी'ति सूत्रे द्रष्टव्यम्।

**अभिहिते त्विति**। 'उक्तार्थानामप्रयोग' इति न्यायेन द्वितीयाया अप्राप्तेरिति भावः। ननु दृढतरत्वबोधनार्थं 'समासस्ये'ति सूत्रे भाष्यो-क्तेन 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेनोक्ताऽर्थप्रयोगोऽपि स्यात्। 'अधि-परी' इति सूत्रेऽपि भाष्ये स्फुटमेतत्। अत एव 'द्वौ घटौ', 'व्यतिलुनीते' इत्यादि सङ्गच्छते। बहुचा कल्पबादीनां बाधान्न समावेशः। 'सत्यपि सम्भवे बाधनं भवती'ति न्यायात्। अत एव यासुट्-श्नमादिविषये सीयुट्शबादिकं नेति चेन्न। लक्ष्याऽनुरोधेनाऽत्र 'द्विर्बद्धमि'ति-न्यायाऽनाश्रयणात्। अत एव 'समासेनोक्तत्वादिवादेः प्रयोगो ने'ति सङ्गच्छते।

**प्रथमैवेति**। सा हि नामाऽर्थस्य नाम्नोक्तत्वेऽपि भवत्येव। ननु कर्मत्वस्योक्तत्वेऽपि विभक्त्यर्थसङ्ख्याया अनुक्तत्वाद् द्वितीया स्यादेव। यथा एकाऽऽदिशब्देभ्यः सङ्ख्याया उक्तत्वेऽपि, कर्मत्वाऽऽदिबोधनाय सा क्रियते। 'द्व्येकयो'रित्येकवाक्यतया हि 'कर्मणि, एकत्वे च द्वितीयैक-वचनम् अम्'–इत्यादिः 'कर्मणि द्वितीये'त्यादीनां वाक्याऽर्थः। सङ्ख्या-कारकयोश्च भिन्नैव शक्तिर्लाघवात्। तयोश्चैकपदार्थयोरप्येवकारादाविव परस्परं विशेष्यविशेषणभावः। विशिष्टशक्तौ तु शक्यताऽवच्छेदकस्य

---

१ 'तुमुनादि' ख. पाठः।

२ 'द्व्येकयोः' इत्यारभ्य 'कर्मादेरेव तत्त्वम्' इत्यन्तः ख. पाठो मनोरमा-शब्दरत्नस्थत्वात् क. कुण्डलितः।

गुरुत्वाऽऽपत्तिः । विशेष्यविशेषणभावे विनिगमनाविरहेण शक्त्यानन्त्यापत्तिश्च । सङ्ख्याश्रयाऽऽकाङ्क्षायां च प्रत्यासत्त्या कर्माऽऽदेरेव तत्त्वमिति चेन्न । प्रथमैकवचनाऽऽदिभिरपि तस्या बोधयितुं शक्यत्वात् ।

पञ्चकप्रातिपदिकाऽर्थपक्षे, सङ्ख्याऽतिरिक्तचतुष्कप्रातिपदिकार्थपक्षे च[1] अनभिहित इति सूत्रम् । तदा हि यथा प्रातिपदिकेनोक्ते कर्मत्वादौ(यथा) भवति[2] (द्वितीया[3]ऽऽदि) तथा तिङादिभिरुक्तेऽपि स्यादितीदमावश्यकम् ।

का[4]रकस्य विभक्त्यर्थत्वं यत्र पक्षे तत्र त्वनावश्यकम् । 'उक्तार्थानामि'तिन्यायेनैव सिद्धेः ।

यत्तु 'द्व्येकयोः' 'कर्मणि द्वितीया' 'स्वौजसमौडि'त्यादेरेकवाक्यतयाऽन्वये 'कर्मणि यदेकत्वं, तत्र द्वितीयैकवचनमि'त्यर्थः । यद्वा सङ्ख्यायाः सर्वत्र विशेषणतयैव भानात् 'एकत्वे यत्कर्मे'त्यर्थः । 'वृक्षे शाखे'ति वदेकत्वे इति सप्तमी आधेयस्यैवाऽऽधारत्वविवक्षया । एवं च 'एकत्वविशिष्टे कर्मणी'त्यर्थ' इति । तन्न । 'द्वयोरि'ति, 'स्वौजसि' ति सूत्रविधेयस्वादिभिः साक्षात्सम्बन्धे उक्तरीत्या सम्भवति, परम्पराऽन्वये मानाऽभावात्, 'गुणानां च परार्थत्वादसम्बन्ध' इति न्यायात् ।

एतेन 'त्रिकं प्रातिपदिकाऽर्थ' इति पक्षेऽपि 'कर्मणि यदेकत्वं, तत्र द्वितीयैकवचनममि'त्यर्थे, कृदादिभिः कर्माद्युक्तावपि, प्रधानैकत्वादिबोधनाऽर्थं प्राप्तद्वितीयादेर्वारणाय-'अनभिहिते' इत्यप्रधानकर्मादिविशेषणाऽर्थ-

---

१ 'पञ्चकप्रातिपदिकार्थपक्षे तु—अनभिहिते इति सूत्रम्' ख. पाठः ।

२ 'भवति द्वितीयादि, तथा तिङादिभिरुक्तेऽपि स्यात्, अतस्तद्वारणाय तदावश्यकम् । अनयैव रीत्या 'सङ्ख्याऽतिरिक्तं चतुष्कं प्रातिपदिकाऽर्थः, सङ्ख्यामात्रं विभक्त्यर्थः' इति पक्षेऽप्यावश्यकं तत्' ख. पाठः ।

३ ख. पाठोऽयं क. ग. नास्ति ।

४ 'कारकस्य' इत्यारभ्य 'कर्तृत्वसत्त्वात्' ( ८२० पृ० ) इत्यन्तः ख. पाठः क. ग. नास्ति । मनोरमाशब्दरत्नयोस्त्वयं पाठ उपलभ्यते ।

मावश्यकम् । 'उक्तार्थानामि'तिन्यायश्च प्रधानाऽर्थविषय एवेत्यगास्तम् ।

केचित्तु 'कटं करोती'त्यादौ मात्रग्रहणेन, सम्बोधनग्रहणेन च विभक्त्यर्थाऽऽधिक्ये प्रथमाया अप्रवृत्तेः सावकाशा द्वितीयादयोऽनवकाशया प्रथमया 'कृतः कट' इत्यादौ बाधिष्यन्ते । कृतशब्दघटकक्तप्रत्ययेनाऽभिधानादाधिक्यस्याऽभावात् । 'वृक्ष' इत्यादावपि 'तिङ्समानाधिकरणे प्रथमे'त्यादिभाष्यप्रामाण्येन प्रथमाया अपि क्रियाऽन्वयिकर्त्राद्यन्वये एव साधुतयाऽस्तीत्यध्याहारस्याऽऽवश्यकत्वेन, तदर्थं प्रति कर्तृत्वेन तृतीयाप्राप्तेः । रक्ताऽऽदिनिवृत्तिपरे 'नीलमि'ति वाक्येऽपि प्रथमोत्पत्त्यर्थं तदावश्यकत्वेन कर्तृत्वसत्त्वात् ।

( ध्वनितश्चाऽयमर्थो 'विप्रतिषेधाद्वे'ति प्रतीकमुपादाय 'अवकाशमभ्युपगम्योच्यते' इति वदता कैयटेन । एवं चाऽनभिहिते इति सूत्रं व्यर्थमेवेत्याहुः ।

यत्तु 'रक्ताऽऽदिनिवृत्तिपरे 'नीलमि'त्यादौ प्रथमाया अवकाशमभ्युपगम्य, परत्वात्प्रथमे'त्युक्तम् । तन्न । ततोऽपि परत्वेन 'भवतो लाभोऽश्वः क' इत्यादौ कृद्योगलक्षणषष्ठीप्रसङ्गात् । 'कर्त्तव्यः कट' इत्यादौ दोषाच्च । यथा चाऽत्र 'कृत्यानामि'ति निषेधो न, तथा तत्रैव वक्ष्यते )[1] ।

प्राप्तानन्द इति । 'आनन्दकर्तृकप्राप्तिकर्मीभूत' इत्यर्थः । इदं च वृत्त्यनुरोधेन[2] । परे[3] त्वेवं सति विशेषणविशेष्यभावव्यत्यासः कल्प्यः स्यात् । बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिश्च ।

---

१ 'ध्वनितश्चाऽयमर्थः' इत्यारभ्य 'तत्रैव वक्ष्यते' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः ।

२ 'इदं च वृत्त्यनुरोधेन । परन्तु यथा द्वितीयाऽऽदिभिः कारकाणां तत्तत्कर्मत्वादिशक्तिमत्त्वेन बोधो, न तथा समासेन, तद्धितेन वा बोधः, किन्तु कर्मकरणाऽऽदिपदैरिव फलाऽऽश्रयत्वाऽऽदिनैव । 'शत्य' इत्यादौ तु' इति ख. पाठः ।

३ 'परे तु' इत्यारभ्य 'किञ्च' इत्यन्तः क. ग. पाठः, ख. नास्ति ।

तस्मात्प्राप्तिकर्तृदकर्मेत्येव बोधः । विशेष्ये तन्निरूपकत्वबाधेन तु विशेषणे पर्यवसानं, 'स्वर्गी ध्वस्त' इतिवत् । एवञ्चाऽत्र कर्मादेः शब्दात् क्रियानिरूपितत्वाऽप्रतीत्या कर्मसञ्ज्ञाऽविषयत्वेन द्वितीयादिप्रयोजकत्वाऽभावः । 'शत्य' इत्यादावप्येवम् । किञ्च 'शत्य'इत्यत्र तु न कारकाऽन्वययोग्यताऽवच्छेदकसाध्यत्वेन क्रियादेर्भानमपि, अतो न तत्रेतरकारकाणामप्यन्वयः । एवं च तत्र द्वितीयाऽऽदिप्राप्तिरेव न । अत एव 'कर्तृकर्मणोरि'ति सूत्रे 'कृती'त्यस्य 'तद्धिताऽऽधिक्ये मा भूदि'ति प्रयोजनं भाष्यादावुक्तम् । अन्यथा 'देवदत्तेन शत्योऽश्व' इत्यादिव्यावृत्त्या तच्चारितार्थ्ये, तावत्पर्यन्तमर्थो न सिद्धयेत् । उपपादयिष्यते चेदं तत्रैव ।

अत एव प्रकृतसूत्रे भाष्ये 'कर्मणि द्वितीये'त्याद्यनन्तरसूत्रेषु तद्धितसमासपरिगणनफलमनुक्त्वा, सर्वाऽन्त्यषष्ठ्याविषये 'औपगवः' 'चित्रगु'[2]रित्येतत्फलमुक्तम् । सम्बन्धस्य तु येनैव रूपेण 'चित्राणां गवामयम्'[3] 'उपगोरपत्यमि'त्यादौ षष्ठ्या भानं, तेनैव रूपेण तद्धिताऽऽदिभिरपि समुदायशक्त्येति न दोषः[4] ।

तत्र[5] हि प्रवृत्तिनिमित्त-तदाश्रयरूपप्रातिपदिकार्थप्रतीतेः सम्बन्धभानं विनाऽभावादव्यभिचारितया तस्याऽपि प्रातिपदिकाऽर्थपदेन ग्रहणात्तत्राऽभिहितत्वेन षष्ठ्यभावे प्रथमासिद्धिः । न च प्रातिपदिकार्थत्वे शेषत्वाऽभावादेव षष्ठ्यभावे सिद्धे, किमनभिहिताऽधिकारेणेति

---

१ 'धात्वर्थस्याऽपि भानमतो न' ख. पाठः ।

२ 'चित्रगुरित्यत्र तत्फलमुक्तम्' ख. पाठः ।

३ 'चित्राणां गवामयम्, उपगोरपत्यमित्यादौ' इति क. ग. पाठः । ख.नास्ति ।

४ इतोऽग्रे—'न चाऽत्र षष्ठी न प्राप्नोति, प्रातिपदिकार्थत्वेन तद्भिन्नत्वरूपशेषत्वाऽभावादिति वाच्यम् । अभिहितत्वमूलकतयैव तत्र प्रातिपदिकार्थभिन्नत्वलाभात्' इति क. कुण्डलितः पाठः ।

५ 'तत्र हि' इत्यारभ्य 'ध्यर्थमित्यन्यत्' ( ८२३ पृ. ) इत्यन्तः क. ग. पाठः ।

वाच्यम् । तदभावे तद्विग्रहवाक्येऽस्य षष्ठीवाच्यत्वेन दृष्टत्वेन, तस्य चांऽत्र भानात्षष्ठीप्राप्तिवारणाय तदावश्यकत्वात्, 'शत्यः' 'घट' इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टार्थानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात्। अनेन षष्ठ्यां वारितायान्तु तस्यापि प्रातिपदिकार्थपदेन ग्रहणम्। एतदेवाऽभिप्रेत्य 'अनेकमन्यपदार्थे' इतिसूत्रे 'चित्रगुरि'त्यत्राऽशेषत्वात्षष्ठ्यप्राप्तिमुक्त्वा, एवमपि षष्ठ्यर्थस्य नियमेन भानात् षष्ठी प्राप्नोती'त्याशङ्क्य, 'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमे'त्युत्तरितम्।

तत्र 'अभिहित' इत्यनेन षष्ठ्यप्राप्तिनिमित्तकथनम्। 'अन्तर्भूत' इत्यनेन तस्य प्रातिपदिकाऽर्थपदेन ग्रहणयोग्यतोक्ता। 'औपगव' इत्यत्र समुदायोत्पन्नषष्ठ्याऽप्युपगुविशेषणकसम्बन्धप्रतीतौ न बाधकमिति भाष्याऽनुसारी पन्था इत्याहुः।

परिगणनादेव 'कटं भीष्मं कुर्वि'त्यादौ विशेष्योत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात्सा। यद्वा 'यो येनाऽभेदान्वयी, स तद्गतशक्तिमानि'तिनियमेन, तस्यापि कर्मत्वशक्तिमत्तया, विशेषणगतशक्तेरनुक्त्या तद्बोधनाय सा। किञ्च भीष्मादियुक्तकटस्य कर्मत्वं प्रतिपाद्यम्। तत्र कटशब्देन तादृशकटस्याऽनभिधानाद्भीष्मादिपदप्रयोग आवश्यकः। तत्र भिन्नविभक्तित्वे तथाप्रतीतेरभावाद्विशिष्टकर्मत्वस्य विशेषणकर्मत्वाऽभावे निरूपयितुमशक्यत्वेन तेषामपि तत्त्वात्तेभ्योऽपि द्वितीया। 'कटोऽपि कर्म, भीष्मादयोऽपी'तिपक्षे प्रत्ययानां प्रकृत्यर्थोऽन्वितस्वार्थबोधकत्वव्युत्पत्त्या कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि, भीष्मत्वादिविशिष्टनिष्ठस्य तस्याऽनुक्तत्वेन न दोषः। अत एवाऽत्र पक्षे सर्वेषां कारकत्वाऽविशेषेण विनिगमनाविरहाद्भावनायामन्वयः। पार्ष्ठिकस्तु परस्परावच्छेदबोध' इति केचित्। वस्तुतोऽत्रापि पक्षे बोधः परस्परं विशेष्यविशेषणभावेनैव।

'कारकाणां भावनाऽन्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वाराऽन्वयविषया' इतिमतं मञ्जूषायां समासवादे उपपादितम्। कृत्तिङौ तु न प्रकृत्यर्थस्य कर्मतामाहतुः। किन्तु स्वप्रकृत्यर्थं प्रति यस्य यस्य कर्मता तस्य सर्वस्या-

ऽपीति, 'कृतः कटः सुन्दर' इत्यादौ न काऽपि द्वितीयादिप्रसक्तिः । एवञ्च परिगणनं व्यर्थमित्यन्यत् । 'प्रायेणे'त्यस्य फलमाह—क्वचिदिति ।

अत एव 'अमुं नारद इत्यबोधि स' इत्यादौ प्रथमा सङ्गच्छते । इतिना कर्मत्वस्योक्तत्वात् । तेन च विभक्त्येव समभिव्याहृतपदाऽर्थमात्रनिष्ठं कर्मत्वमुच्यते इति 'अमुमि'त्यत्र द्वितीया भवत्येव । विभक्त्यर्थमात्रवृत्त्यव्ययेन वचनग्रहणसामर्थ्यादव्ययीभाव इति, नाऽत्र इतिनाऽव्ययाभावसमासः । अस्य च समभिव्याहृतपदे तज्जन्यबोधप्रकारमात्रपरताद्योतकत्वस्याऽपि सत्त्वेन तन्मात्राऽवृत्तित्वात् । अत एव 'इतिः प्रकरणे, हेतौ, प्रकाशाऽऽदिसमाप्तिषु । निदर्शने, प्रकारे च स्यादि'ति कोशे उक्तम् ।

'अव्ययमि'ति विभक्तसूत्रेणाऽपि न समासः, तस्येष्टसिद्ध्यर्थत्वात् । अत एव 'तस्मिन्निती'त्यादिनिर्देशाः सङ्गच्छन्ते ।

१ 'प्रायेणे'त्यस्य फलमाह—क्वचिदिति । न च 'कटं भीष्मं कुर्वि'त्यादौ विशेष्योक्तद्वितीयया गताऽर्थत्वाद्विशेषणात्सा न स्यादिति वाच्यम् । समानाऽधिकरणाऽधिकारे समासविधायकैः, समानाऽधिकरणेन षष्ठीसमासनिषेधाच्च 'अभेदाऽन्वयस्थले विशेषणाद्विशेष्यविभक्तिसजातीया विभक्तिः साधुरि'ति ज्ञापनात् । किञ्च भीष्माऽऽदियुक्तकटस्य कर्मत्वं प्रतिपाद्यम् । तत्र कटशब्देन तादृशकटस्याऽनभिधानाद्भीष्माऽऽदिपदप्रयोग आवश्यकः । तत्र भिन्नविभक्तित्वे तथा प्रतीतेरभावात्तेभ्योऽपि द्वितीयैव । 'कटोऽपि कर्म, भीष्मादयोऽपी'तिपक्षे 'प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वमि'ति व्युत्पत्त्या, कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि, भीष्मत्वाऽऽदिविशिष्टनिष्ठस्य तस्याऽनुक्तत्वेन न दोषः । अत एवाऽत्र पक्षे सर्वेषां कारकत्वाऽविशेषेण विनिगमनाविरहाद्भावनायामेवाऽन्वयः । पार्ष्ठिकस्तु परस्पराऽवच्छेदबोधः । कृत्प्रत्ययस्तु न प्रकृत्यर्थस्य कर्मतामाह, किन्तु 'स्वप्रकृत्यर्थं प्रति यस्य यस्य कर्मता, तस्य सर्वस्याऽपी'ति 'कृतः कटः सुन्दर' इत्यादौ न काऽपि द्वितीयाऽऽदिप्रसक्तिः । अत एव 'अमुं नारद इत्यबोधि स' इत्यादौ' इति ख. पाठः ।

एवं च 'पुरोवर्त्तिविशेष्यक-नारदत्वप्रकारक-बोध' इति वाक्याऽर्थः।

केचित्तु 'नारद इती'ति श्रीकृष्णीयज्ञानाऽऽकाराऽनुकरणम्। एवञ्च 'नारद इत्येतच्छब्दाऽभिलप्यमानाऽऽकारो बोधः' इति बोधः। एवं च प्रथमाऽन्तस्याऽप्रातिपदिकत्वात्कथं तत्र द्वितीयाप्राप्तिः। इतेः कर्मताद्योतकत्वे च न मानम्। किञ्च 'साम्प्रतमि'त्यस्य 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरादिदानीमित्यर्थकतया, 'विषवृक्षोऽपी'त्यत्र वर्त्तमानकालबोधकस्य 'युज्यते' इत्यस्याऽध्याहाराददोषः। मूलोक्ताऽर्थकत्वे तु न मानम्। 'असाम्प्रतमि'ति चाऽसमर्थसमासः। यद्वा[1] नञ्समभिव्याहृतेन 'न युज्यते'[2] इत्यध्याह्रियते। वस्तुतोऽत्र तुमुनः साधुत्वाय 'इष्यते' इत्यध्याहार आवश्यकः। अन्यथा क्रियाऽर्थक्रियोपपदत्वाऽभावात्तुमुन् दुर्लभः स्यात्। शकादियोगाऽभावाच्च। 'विषवृक्षोऽपि संवर्ध्य छेत्तुमिष्यते इति यत्, तदसाम्प्रतम्=अन्याय्यमि'ति तदर्थः। एवञ्चाऽध्याहृततिङाऽभिधानान्न द्वितीयाप्रसक्तिः। तादृशेच्छाया अन्याय्यत्वे, तद्विषयस्य सुतरामन्याय्यत्वं फलति। भवदुक्तार्थे हि 'स्वयंदत्तवरस्य स्वतः क्षयोऽयोग्य' इत्युपक्रम्य सम्प्रत्ययुक्तताप्रतिपादनेऽपि, कालान्तरे युक्तताप्रतीत्या तदसङ्गतिः स्पष्टैवेति 'प्रायेणे'ति चिन्त्यमेव। अत एव भाष्ये 'परिगणनमि'त्येवोक्तम्। फलाऽभावाच्चोक्तरीत्या[3] प्रत्याख्यातमित्यन्यत्।

अत एव 'अधिहरि'इत्यादौ समासः। तद्वचनसामर्थ्येन ह्यस्य परिगणनत्वमेव कल्पयितुं युक्तम्। ऋषितात्पर्यस्य ऋषिवचसैव निर्णेतुमुचितत्वात्। अत एव 'अभ्रे आँ अप' इत्यादौ सप्तमी सङ्गच्छते। परिगणनप्रत्याख्याने[4]

---

१ 'यद्वा' इत्यारभ्य 'स्पष्टैव' इत्यन्तः क. पाठः। ख. ग. नास्ति।

२ 'नञ्समभिव्याहृतेन च 'युज्यते' इत्यध्याह्रियते' इति ख. पाठः।

३ 'फलाऽभावाच्चोक्तरीत्या प्रत्याख्यातमित्यन्यत्' इति क. ग. पाठः।

४ 'परिगणनप्रत्याख्याने तु' इत्यारभ्य 'न दोषः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

तु 'अन्ययं विभक्ती'त्यनेन क चिदुक्ते विभक्तिज्ञापनान्न दोष इत्याहुः ।

तथायुक्तम् । तथायुक्तत्वञ्च—समभिव्याहृतधात्वर्थप्रधानव्यापार-प्रयोज्यफलाऽऽश्रयत्वरूपम् । ननु विषाऽऽदेरपि पूर्वसूत्रेण सिद्धत्वात्किमर्थमिदमिति चेन्न । पराऽधीनतया विषं भुञ्जाने विषस्योद्देश्यत्वाऽभावादप्राप्तेः । एवं च 'अनीप्सितमि'त्यस्याऽनुद्देश्यमित्यर्थः । तच्च द्वेष्यम्, उदासीनं च, उभयमपि[1] ।

तृणमिति । यथा स्पृश्यमानस्य गङ्गादेरीप्सितस्य क्रियया योगः, तज्जन्यसंयोगाऽऽदिफलाऽऽधारत्वात्, तथैवाऽनीप्सितस्य तृणादेरपीति भावः ।

अनीप्सितमिति किम् ? । द्वेष्यसंग्रहाऽर्थत्वात् । किञ्च तदेप्सितमात्रस्याऽप्यनेन संज्ञायां 'वारणार्थानामि'त्यनवकाशं स्यादिति बोध्यम् ।

तथायुक्तमिति किम् ? । 'विषेणौदनं भुङ्क्ते' इत्यादौ करणत्वमात्रविवक्षायां विषस्य मा भूदिति । तद्धि न धात्वर्थफलेऽन्वयि, किन्तु[2] व्यापारे एवेति बोध्यम् । 'प्रयागात्काशीं गच्छति देवदत्त' इत्यत्र प्रयागस्योदासीनत्वेन कर्मत्वाऽऽपत्तिश्च । तद्विशेषणे तु नाऽस्य प्रकृतधात्वर्थफलाऽऽश्रयत्वमिति न दोषः ।

( न च[3] 'कर्तुरीप्सिततममि'त्यस्याऽनुवृत्त्या निर्वाहः । 'अनीप्सितमि'त्यस्य वाच्याऽर्थविरोधेन तदनुवृत्त्यसम्भवात् । केचित्तु[4]—विभागस्येप्सिततमत्वाऽभावात् 'कर्तुरीप्सिततममि'त्यस्याऽप्रवृत्तावपि 'तथायुक्तमि' ति प्राप्नोत्येव । क्रियाजन्यफलशालित्वमेव तथायुक्तत्वं, न तु तस्य फलस्य प्रकृतधात्वर्थत्वाऽऽग्रहः । किञ्च फलस्य धात्वर्थत्वपर्यन्तमाग्रहेऽपि न क्षतिः, अपादानप्रकरणेऽवध्यन्वयिनो विभागस्य धात्वर्थताया वक्ष्यमाणत्वात् ।

---

१ 'उभयमपि बोध्यम्' ख. पाठः ।

२ 'किन्तु तृतीयोपात्तव्यापारे एवेति बोध्यम्' ख. पाठः ।

३ 'न च' इत्यारभ्य 'तदनुवृत्त्यसम्भवात्' इत्यन्तः ख. पाठः क. कुण्डलितः ।

४ 'के चित्तु' इत्यारभ्य 'दिक्' इत्यन्तः ख. पाठः, क. कुण्डलितः ।

परन्तु 'विषं भुङ्क्ते' इत्यादौ साऽवकाशाया अस्या अनवकाशाऽपादानसंज्ञा बाधिका । 'कर्त्तुरीप्सिततममि'तिसूत्रविहितकर्मसंज्ञा तु अपादानत्वस्य परत्वाद्बाधिका । अत एव 'ग्रामं त्यजती'त्यादौ द्वितीयासिद्धिः । एतेन 'अनवकाशया साऽवकाशाया बाधादि'ति 'साधकतम'-सूत्रस्थ मनोरमाग्रन्थो व्याख्यात । इत्याहुरिति दिक् ।

अपादानादिविशेषैराववक्षितमिति । अवधित्वाऽऽदिरूपेणाऽविवक्षितमित्यर्थः । 'अकथित'शब्दोऽत्राऽकीर्त्तितपर्याया, नाऽप्रधानपर इति भावः ।

तदुक्तं भाष्ये—'केनाऽकथितम् ? । अपादानादिभिर्विशेषकथाभिरि'ति । तेनाऽपादानत्वाऽऽदिविवक्षायां पञ्चम्याद्येव । अन्यथा तद्विवक्षायामपि परत्वादनेन कर्मत्वमेव स्यादिति बोध्यम् ।

केन रूपेण तर्हि विवक्षेति चेत् ? । सम्बन्धत्वेनेति गृहाण । एवं च 'षष्ठ्यर्थे एतत्कर्मसंज्ञाविहितद्वितीये'ति फलितम् । ध्वनितं चेदं पूर्वविधिविषयप्रसक्तिपूर्वक-तदविषये, सर्वथा पूर्वविधेरप्रसक्तिकृत-तदविषये वा एतत्प्रवृत्तिबोधका'ऽपूर्वविधावि'ति भाष्येण ।

कारकमिति । क्रियाजनकमित्यर्थः[1] । तेन कारकत्वप्रयुक्तकार्यसिद्धिः।

नन्वेवं 'नटस्य शृणोती'त्यादावतिप्रसङ्गः स्यात्, सर्वथा तत्र तदप्राप्तेः । गीतद्वारा[2] च तस्य 'आख्यातोपयोगे' इति शास्त्रक्लृप्तं क्रियाजनकत्वम् । द्वारेण च द्वारिणो नाऽन्यथासिद्धिः । न च तस्य कर्मयुक्त्वाऽभावः । तदंशस्याऽपि परिगणनलभ्यत्वात् । यत्तु 'नटान्निस्सरन्तं शब्दं गृह्णाती'-त्यर्थात्प्राप्ताऽपादानत्वाऽविवक्षायामेतत्प्रयोग' इति । तन्न । 'आख्यातोपयोगे' इतिसूत्रे उपयोगग्रहणेन अनुपयोगे आख्यातुरीदृशलक्षणयाऽपादानत्वस्याऽनिष्टत्वात् । अतः परिगणनमाह—दुह्याच्चिति । परिगणनत्वं चाऽस्य 'आख्यातोपयोगे' इति सूत्रे भाष्ये स्पष्टम् ।

---

१ 'क्रियाऽन्वयी'त्यर्थः' ख. पाठः ।

२ 'गीतद्वारा च' इत्यारभ्य 'परिगणनलभ्यत्वात्' इत्यन्तः क. ग. पाठः ।

कर्मयुगिति। तेन 'गां दोग्धि पयः स्थाल्यामि'त्यादौ स्थाल्यादेरधिकरणत्वाऽविवक्षायामपि नाऽनेन कर्मत्वम्। कर्मयुक्त्वपदाऽर्थश्चाऽनुपदमेव वक्ष्यते। न च 'तथायुक्त'मि'त्यनुवर्त्त्याऽत्राऽपि धातूपात्तफलशालित्वं निमित्तमिति वाच्यम्। एवं हि पूर्वसूत्रविहितकर्मत्वाऽविवक्षायामेव पर्यवसन्नत्वेन, भाष्येऽपादानाऽऽदिग्रहणवैयर्थ्याऽऽपत्तेः। 'नटस्य शृणोती'त्यादावतिव्याप्तिशङ्कापरस्य, परिगणनेन तत्परिहारपरस्य च 'आख्यातोपयोगे' इतिसूत्रस्थभाष्यस्य विरोधाच्च।

'ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन'

—इति सूत्रशेषभाष्यन्तु न तदनुवृत्तितात्पर्यकमिति भाष्यप्रदीपोद्द्योते निरूपितम्।

अत्र 'अपादानादी'त्यादिशब्देनाऽपादानसम्प्रदानाऽधिकरणकर्माण्येव गृह्यन्ते। इदमेवाऽभिसन्धाय—

'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्त्तितमाचरितं कविना'॥

'नीवह्योर्हरतेश्चाऽपि गत्यर्थानां तथैव च।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः'।

–इति भाष्ये उक्तम्।

उपयोगो—मुख्यं कर्म, तन्निमित्तम्( = तद्गतप्रकृतधात्वर्थनिमित्तम्)। गुणेन—कारकेण कर्मणा, यत्सचते = (तद्गतधात्वर्थनिमित्ततया) सम्बध्यते' इत्यर्थः। अपूर्वविधौ = 'पूर्वोक्तानामपादानादीनां चेद्विषयो नाऽस्ती'त्यर्थः। यद्यपि करणमपि पूर्वं, तथाऽपि कर्मयुक्त्वाऽभावात्तद्-

१ इतोऽग्रे—'इदं च पूर्वसूत्रात् युक्तग्रहणाऽनुवृत्त्या लभ्यते। तस्य 'केने'त्याकाङ्क्षायां कर्मण एवाऽन्वयो, व्याख्यानात्। अत एव 'उपयोगनिमित्तमि'ति भाष्ये उक्तम्' इति ख. पाठः।

२ अयं ख. पाठः क. ग. नास्ति।        ३ अयं ख. पाठः क. ग. नास्ति।

ग्रहणम् । 'गां पयो दोग्धि हस्तेने'त्यादौ हस्तस्य गोनिष्ठविभागाऽनुकूलव्यापारनिमित्तत्वेऽपि, पयोनिष्ठविभागनिमित्तत्वे मानाऽभावात् ।

'शासिगुणेन चे'ति चेन जयत्यादीनां ग्रहणम् । 'नीवह्योर्हरतेश्चे'तिचेन कृषेः । 'एषां, 'गत्यर्थानामि'त्युपलक्षितोत्तरसूत्रोपात्तानां च द्विकर्मकेषु ग्रहणं बोध्यमि'त्यन्वयः ।

केचित्तु पूर्वत्वम्-अन्यत्वोपलक्षणम् । तेन कर्त्तुरप्यपादानादीत्यत्र ग्रहणं बोध्यम् । न च कर्त्तृग्रहणे फलाऽभावः । निवृत्तप्रेषणदुहादिभ्यो णिचि दुहसमानाऽर्थत्वेन, गत्यादिनियमात् 'कर्त्तुरीप्सिततममि'त्याद्यप्राप्तौ, प्रयोज्यकर्त्तुः कर्त्तृत्वे, तदविवक्षायां, फलस्य सत्त्वात् । न च प्रयोज्यस्य कर्त्तृत्वाऽविवक्षायां कर्त्तुः प्रयोजकत्वाऽभावाण्णिजनापत्तिरिति वाच्यम् । अन्तरङ्गत्वात्पूर्वं णिचि, ततस्तस्याऽविवक्षणात् ।

( न चाऽकृतव्यूहपरिभाषया तदप्राप्तिः । तस्या अनित्यत्वात् ) ।

किञ्च सङ्केतविशेषसम्बन्धेन कर्त्तृपदवत्स्वतन्त्रव्यापाराऽऽश्रयो हि 'कर्त्तृ'पदाऽर्थः । तत्र गत्यादिसूत्राऽऽरम्भसामर्थ्येन 'कर्त्तृपदवदि'त्यन्तत्यागमात्रं बोध्यते । सम्बन्धत्वेन विवक्षायामपि वास्तवव्यापाराऽऽश्रयत्वसत्त्वान्न दोषः । अत एव 'ग्रामं गमयती'त्यादिसिद्धिरित्याहुः ।

तत्रोपलक्षणत्वे प्रमाणं चिन्त्यम् । किञ्च गत्यादिसूत्रस्य नियमाऽर्थत्वे, परत्वेनाऽस्याऽपि तेन बाध इति बोध्यम् । न चैवमपि भाष्ये भिक्षिग्रहणस्याऽपि कृतत्वेन मूले न्यूनतेति वाच्यम् । याच्यर्थत्वेनैव सिद्धेः । न च याचिविनयाऽर्थ एव गृह्यत इति वाच्यम् । मानाऽभावात् । अर्थग्रहणं चाऽत्राऽनुपदमेव मूलकृद्वक्ष्यतीति दिक् ।

गां दोग्धीति । दुहरन्तःस्थितद्रवद्रव्यविभागाऽनुकूलव्यापाराऽनुकूलव्यापारोऽर्थः । तत्र विभागाऽनुकूलव्यापार-तदनुकूलव्यापार-

१ अयं ख. पाठः क. ग. नास्ति ।

२ 'द्रवद्रव्य' इति क्वचित् पाठः ।

द्वयोर्द्देश्य-फलाऽऽश्रयत्वात्पयसः प्राधान्यम् । उद्देश्यत्वाच्च । तद्वैपरीत्याच्च गोर्गौणत्वं स्पष्टमेव । तत्र 'गौः पयस्त्यजति, गवा पयस्त्याजयतो'त्यर्थः ।

ननु गोरपि कर्त्तृव्यापारजन्यफलाऽऽश्रयत्वेन 'तथायुक्तमि'ति, 'कर्त्तु-रि'ति वा सिद्ध्यति । अत एवाऽणौ कर्त्तुर्णौ कर्मत्वस्य न्यायसिद्धतया, गत्यादिसूत्रं नियमाऽर्थमिति 'हेतुमति चे'ति सूत्रे भाष्यकृतः । अत एवा-ऽऽकडारसूत्रे 'अपादानमुत्तराणि कारकाणि-गां दोग्धि' । 'अत्र परत्वा-त्कर्त्तुरीप्सिततमं कर्मे'ति कर्मसंज्ञे'ति भाष्यं सङ्गच्छते । 'ग्रामादायातो'-त्यादौ संज्ञाऽन्तराऽप्रवृत्तावपादानसंज्ञाया अवकाशः । कर्मसंज्ञायास्तु 'ग्रामं गच्छती'त्यादौ । न च 'प्रकृतधातूपात्तफलाऽऽश्रयत्व'रूपकर्मत्वस्य, 'प्रकृतधातूपात्तगत्यनाविष्टत्वे सति, तज्जन्यविभागाऽऽश्रयत्व'रूपस्या-ऽपादानत्वस्य, तत्समनियताऽखण्डोपाधिविशेषरूपस्य वा, युगपद्विवक्षायाः कर्त्तुमशक्यत्वेन, उभयोरप्राप्तौ, कथं 'परत्वादि'त्युक्तिरिति वाच्यम् ।

'पञ्चकप्रातिपदिकाऽर्थपक्षे गोशब्देनैवोभयं प्रतिपाद्यमि'ति विवक्षायाः सत्त्वेनाऽदोषात् । 'अवधिभूता या गौस्तन्निष्ठो यः पयोविभागाऽनुकूलो व्यापारस्तद्विषयिणी प्रेरणे'त्यर्थात् । ईदृशे च विषये 'आ कडारादि'ति सूत्र-तद्भाष्य-बलादुभयोर्द्वितीयैव बोधिकेति-बोध्यम् । एवं च 'अकथितं चे'ति सूत्रं व्यर्थमिति चेन्न । पयोऽर्थिन उपायतया गोरपीप्सितत्वेनाऽनीप्सितत्वा-ऽभावात् 'तथायुक्तमि'त्यस्याऽप्रवृत्तेः । ईप्सिततमत्वाऽभावाच्च 'कर्त्तुरी-प्सिततममि'त्यस्याऽप्यप्रवृत्तेः । यदि तु प्रागुक्तमीप्सिततमत्वं गोरप्यस्त्येव, तर्हि कर्मत्वाऽविवक्षापूर्वकशेषत्वविवक्षायामपि षष्ठीबाधनाऽर्थमिदम् ।

यदा तु द्रवद्द्रव्यनिष्ठविभागाऽनुकूलव्यापार एव दुहेरर्थः, तदा गोरपादानत्वाऽविवक्षायामप्यनेन द्वितीया । अपादानत्वविवक्षायान्तु पञ्चम्येव । गोः पयस्यन्वये षष्ठीत्याहुः ।

बलिं याचत इति । 'याच्'धातोः स्वत्वनिवृत्ति-स्वस्वत्वोत्पत्त्युभय-

---

१ 'द्रवद्द्रव्य' इत्यपि क्वचित्पाठः ।

जनकव्यापाराऽनुकूलव्यापारोऽर्थः। तत्र तदुभयजनकव्यापारो बलिनिष्ठो दित्सोत्पत्तिरेव। तदनुकूलव्यापारो 'दीयतामि'त्याद्यभिलापव्यङ्ग्यो दिदापयिषारूपो याचकनिष्ठः। 'पौरवेण गां दिदापयिषते' इति कैयटेनाऽस्य विवरणात्। (अत्र 'कर्त्तु'रिति प्राप्तकर्मत्वाऽविवक्षायामनेन कर्मत्वम्)। न चाऽत्राऽपादानत्वप्रसक्तिः। 'बलेर्गां जिघृक्षते' इत्यर्थस्य ततोऽप्रत्ययात्। 'बलेर्गां याचते' इतिप्रयोगस्य कदाऽप्यभावात्।

तदुक्तं भाष्ये-'न याचनादपायो भवति, याचितोऽसौ यदि ददाति, तदाऽपायेन युज्यते' इति। एवं च विभागस्य याच्यर्थत्वाऽभावेन, न तद्योगेऽपादानत्वमिति तदाशयः। कैयटोऽपि 'याचिभिक्षिप्रच्छिविषये कर्मसंज्ञैव, नाऽन्ये'त्याह। यदा तु 'स्वत्वनिवृत्ति-स्वस्वत्वोत्पत्त्युभयाऽनुकूलो व्यापारोऽस्याऽर्थः, स्वत्वे च बलेर्निरूपकतासम्बन्धेनाऽन्वयः, तदाऽप्यनेन कर्मत्वम्। पूर्वविषयस्य कस्याऽप्यप्राप्तेरिति दिक्।[1]

अविनीतमिति। अत्र याचेः[2] स्वीकाराऽनुकूलव्यापाराऽनुकूलव्यापारोऽर्थः। स्वीकारश्च-'इदमवश्यं करिष्यामी'तिशब्दप्रयोगादिजनको[3] ज्ञानविशेषः।

तण्डुलानिति। उत्पत्त्यनुकूलव्यापाराऽनुकूलो[4] विक्लित्त्यनुकूलव्यापारो धात्वर्थः। 'तण्डुलान्विक्लेदयन्नोदनं निवर्त्तयती'ति कैयटादिभिर्विवरणात्, अत्रौदननिर्वर्त्तनं प्रति विक्लेदनस्य करणत्वाऽवगमात्। अत्रौदनः प्रधानम्, उद्देश्यत्वात्। इदमेवाऽभिप्रेत्य 'द्व्यर्थः पचिरि'ति 'कर्त्तुरि'ति-

---

१ अयं ख. पाठः क. कुण्डलितः।

२ 'याचतेः' इति ख पाठः।

३ 'करिष्यामीत्येतद्बोधकशब्दप्रयोगादि' ख. पाठः।

४ 'विक्लित्युत्पत्त्युभयानुकूलव्यापारो धात्वर्थः। अत एव तण्डुलानोदनं पचती'ति ख. पाठः।

सूत्रे भाष्यम् । यदा द्व्यर्थत्वे एव विक्लित्तेः करणत्वविवक्षा, तदा 'तण्डुलानामोदनं पचती'ति विकारयोगे च षष्ठी । तण्डुलविकारमोदनं विक्लित्त्या निष्पादयतीत्यर्थः । इदमपि तत्रैव भाष्ये ।

एवं 'काष्ठं भस्म करोती'त्यादावुत्पत्त्यनुकूलव्यापारानुकूलविकृत्यनुकूलव्यापारोऽर्थः[1] । तत्र विकृत्याश्रयत्वेन काष्ठस्य, उत्पत्त्याश्रयत्वेन भस्मनः कर्मतेति बोध्यम् । अत्र च नैतत्सूत्रविषयता, दुहादिष्वगणनात् ।

**गर्गानिति** । स्वसम्प्रदानकदानाऽनुकूलव्यापाराऽनुकूलो व्यापारः शासनरूपो दण्डेरर्थः । शासनं–नियन्त्रणम् । अत्र शतं प्रधानम्, उद्देश्यत्वात् । अत एव 'गर्गाः शतं दण्ड्यन्ताम् । अर्थिनश्च राजानो हिरण्येन भवन्ती'ति भाष्यम् । वाक्यशेषाच्च केवलनिग्रहाऽर्थो न दण्डिः । गुणाऽनुरोधेन प्रधानाऽऽवृत्तेरयुक्तत्वाच्चाऽत्र समुदाये वाक्यपरिसमाप्तिः ।

'अर्थिन' इत्यत्र अर्थनम् अर्थः=प्रार्थना, सा यस्याऽस्तीति अर्थी । 'हिरण्येने'ति करणे तृतीया । यद्वा[2] प्रकृत्यादित्वात् द्वितीयां बाधित्वा तृतीया । 'हिरण्यविषयकप्रार्थनावन्त' इत्यर्थः । एकदेशाऽन्वयः, तदन्वये समासश्च भाष्यप्रामाण्यात् । एवमेव 'धान्येन धनी'त्यपि बोध्यम् । प्रथमार्थेऽत्र तृतीया ।

'ग्रहे'स्तु तादृशव्यापारमात्रमर्थ इति, न 'दण्डि'समानाऽर्थः सः । अत एव ब्रू शासादिग्रहणं चरिताऽर्थम् ।

([3]तेन 'जग्राह द्युतरुं शक्रमि'त्यसङ्गतः प्रयोगः । पराक्रमाऽतिशयद्योतनाऽर्थं 'जहार द्युतरुमि'त्येवोचितम् ) ।

---

१ 'विकृत्युत्पत्त्युभयानुकूलव्यापारोऽर्थः । तत्र' ख. पाठः ।

२ 'यद्वा' इत्यारभ्य 'अत्र तृतीया' इत्यन्तः क. ग. पाठः ।

३ 'एतेन जग्राह द्युतरुं शक्रमि'तिप्राचीनोक्तमपास्तम् । पराक्रमाऽतिशयद्योतनार्थं 'जहार द्युतरुमि'तिपाठस्योचितत्वाच्चेत्याहुः' इति क. कुण्डलितः ख. पाठः ।

व्रजमिति । संयोगोत्तरकालिकविभागाऽसमानाधिकरणसंयोगाऽनुकूलव्यापारो यस्तदनुकूलव्यापारो रुधेरर्थः । तथा यत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापाराऽनुकूलव्यापारश्चाऽर्थः । 'व्रजो गां स्थापयति, व्रजेन गां स्थापयती'त्यर्थस्य 'व्रजे गौस्तिष्ठति, तत्र तां स्थापयती'त्यर्थस्य च ततः सम्प्रत्ययादिति भाष्यकैयटयोः स्पष्टम् । उद्देश्यत्वाद्गोः प्राधान्यम् ।

पन्थानमिति । जिज्ञासाविषयाऽर्थज्ञापनाऽनुकूलव्यापारः पृच्छेरर्थः । स च व्यापारः 'केन पथा गन्तव्यमि'त्यभिलापाऽऽदिरूपः । अत्र ज्ञापनाऽऽश्रयत्वेन माणवकस्य कर्मत्वम् । ज्ञानविषयत्वेन च पथस्तत्त्वं बोध्यम् । उद्देश्यत्वात्पथः प्राधान्यम् । यदा जिज्ञासाविषयाऽर्थऽज्ञानाऽनुकूलो व्यापारोऽर्थः, सम्बन्धसामान्येन च व्यापारे माणवकस्याऽन्वयः, तदाऽप्यनेन कर्मत्वम् । पूर्वविषयस्य कस्याऽप्यप्राप्तेः ।

यत्तु 'अत्र माणवकान्मार्गोपदेशं गृह्णाती'त्यर्थेऽपादानत्वं प्राप्तमि'ति । तन्न । 'न प्रश्नादेवाऽपायो भवति । पृष्टाऽसौ यद्याचष्टे, ततोऽपायेन युज्यते' इति भाष्योक्तेः । त्वदुक्ताऽर्थस्य ततोऽसम्प्रत्ययाच्च ।

एतेन 'माणवकाय पृच्छती'तिसम्प्रदानत्वमि'त्यपास्तम् । कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वाऽभावात्, तदप्राप्तेः, पूर्वोक्तभाष्यकैयटविरोधाच्च ।

---

१ 'व्रजमवरुणद्धीति । अनुयोगितासम्बन्धावच्छिन्नोत्तरदेशसंयोग-तदुत्तरकालिकदेशाऽन्तरगतिप्रतिबन्धे-तदुभयावच्छिन्नव्यापारो रुधेरर्थः । उद्देश्यत्वाद् गोः प्राधान्यम् । अनुयोगितासम्बन्धावच्छिन्नः स व्रजनिष्ठः । 'प्रतियोगितासम्बन्धावच्छिन्नोत्तरदेशसंयोगाद्यर्थत्वेऽधिकरणत्वं संयोगोत्तरकालिकविभागाऽसमानाधिकरणस्वसंयोगानुकूलव्यापारो यस्तदनुकूलव्यापारो रुधेरर्थः, व्रजाधिकरणकचिरस्थित्यनुकूलव्यापाराऽनुकूलव्यापारश्चे'ति भाष्यस्वरसः' इति क. कुण्डलितः पाठः । ख. ग. नास्ति ।

२ 'उद्देश्यत्वाद् गोः प्राधान्यम्' इति क. पुस्तके पश्चाद्योजितः पाठः । ख. ग. तु नास्ति ।

वृक्षमिति । विभागाऽनुकूलव्यापाराऽनुकूलव्यापारश्चिनोतेरर्थः । 'वृक्षात्फलान्यादत्ते' इत्यर्थे त्वपादानत्वम् । विभागपूर्वकाऽऽदाने चिनोतिर्वर्त्तते। धर्मं ब्रूते इत्यादि । प्रतिपत्त्यनुकूलव्यापाराऽनुकूलशब्दप्रयोगरूपो व्यापारो ब्रूव्यर्थः । प्रवृत्तिपर्यवसायिप्रतिपत्तिजनकव्यापारजनकव्यापारः शासेः । स च व्यापारः 'सन्ध्यां विधेही'त्यादिविध्यादिघटितोपदेशरूपः । अत एव शासेर्ब्रूवा समानार्थत्वम् । यदा ज्ञानाऽनुकूल उक्तव्यापारो धात्वर्थः, विषयतैव च फलताऽवच्छेदकः सम्बन्धस्तदा वचनादिकर्मणा धर्मेण माणवकस्याऽभिप्रेयमाणत्वात्तस्य सम्प्रदानत्वम् ।

शतं जयतीति। 'जि अभिभवे' । 'जि जये'-अस्य तु न ग्रहणम् । तस्याऽकर्मकत्वात् । 'स्वसम्प्रदानकदानाऽनुकूल-तिरस्काराऽपरपर्याय-पराभवाऽऽख्यो व्यापारो 'जि'धातोरर्थः । विभागपूर्वकस्वत्वोत्पत्त्यनुकूलोक्तव्यापारमात्राऽर्थकत्वेऽपादानत्वम् ।

मथ्नातीति । अन्तर्गतसारभागोत्थानाऽनुकूलव्यापारफलकव्यापारविशेषो मन्थेरर्थः । उत्थानम् = ऊर्ध्वदेशसंयोगः। उत्थानाऽनुकूलव्यापारमात्रविवक्षायां कर्मद्वारा क्रियाऽऽश्रयत्वविवक्षणेऽधिकरणत्वम् । अत्र क्षीरनिधिर्गौणं कर्म । अत एव 'अमृतमम्बुनिधिर्ममन्थे' इत्युपपद्यते ।

मुष्णातीति । पराऽज्ञानपूर्वकग्रहणाऽनुकूलव्यापारो मुषेरर्थः । परः= द्रव्यस्वाम्यादिः । अत्र विभागाऽन्तर्भावाद्देवदत्तस्याऽपादानत्वं बोध्यम् ।[1]

नयतीति । संयोगाऽनुकूलव्यापाराऽनुकूलव्यापारो नेरर्थः[2][3] । अजा-

१ 'अन्तर्भावे' ख. ग. पाठः ।

२ 'उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारो नेरर्थः' ख. पाठः ।

३ इत उत्तरं—'संयोगस्य फलतावच्छेदकः सम्बन्धोऽत्र प्रतियोगिता । तदनुकूलो व्यापारो ग्रामनिष्ठो बहुतृणवत्त्वाऽऽदिरूपः । एवं च व्यापारद्वयेनाऽऽख्यमानत्वात्, अजानिष्ठग्रामसंयोगस्योद्देश्यत्वाच्च, अजा प्रजानम्' इति ख. पाठः ।

निष्ठग्रामसंयोगस्योद्देश्यत्वाच्चाऽजा प्रधानम्। 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षे'त्यत्र तच्छब्देन प्राधान्यात्पयसः परामर्श' इति मीमांसकग्रन्थास्तु पयःस्थाने दध्यागमनेनाऽऽर्थं प्राधान्यमादाय नेयाः।

स एव स्कन्धग्रहणाऽऽदिपूर्वो वहेरर्थः। गत्यनुकूलव्यापारविशेषः कृषेः। बलाद्ग्रहणपूर्वकं देशाऽन्तरप्रापणं हरतेः।

कृषिरत्र न्यादिसाहचर्यात्प्रापणाऽर्थ एव, न विलेखनाऽर्थ इत्याहुः।

ननु भाष्ये दुहि-याचि-रुधि-प्रच्छि-भिक्षि-चि-ब्रू-शास्-नी-वहि-हरतीनामेव ग्रहणस्योक्तत्वेनाऽन्येषां ग्रहणं निर्मूलमिति चेन्न। 'चेनाऽन्येषां ग्रहणमि'त्यर्थस्य कैयटेनोक्तत्वात्। अन्ये च 'जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः' इति माधवेनोक्ताः। अत एव 'गर्गाः शतं दण्ड्यन्तामि'ति वृद्धिसूत्रस्थः, 'आकृष्टव्या ग्रामं शाखे'ति 'कृत्यानामि'ति सूत्रस्थश्च भाष्यप्रयोगः सङ्गच्छते। एतेन 'पचेर्योगे तण्डुलादीनां सम्बन्धत्वेन विवक्षायां कर्मत्वे मानाऽभावेनाऽत्र तस्याऽप्रामाणिकः पाठ' इति परास्तम्।

हरदत्तेन तु 'पचेर्दुहादिष्वपाठ' इत्युक्तम्।

यत्तु 'कर्मवत्कर्मणे'तिसूत्रस्थ 'दुहिपच्योर्बहुलं सकर्मकयोरि'ति वार्त्तिकोदाहरणे 'उदुम्बरः फलं पच्यते' इत्यत्र कैयटेनोक्तं 'पचिरत्र विषये द्विकर्मकः। वृक्षस्य पाकमन्तरेण फलपाकाऽसम्भवात्। वृक्षोऽकथितं कर्म। तस्यैव च यदा कर्त्तृत्वविवक्षा तदाऽयं कर्मवद्भाव' इति। 'वृक्षस्य पाकमिति'। वृक्ष-

---

१ इतोऽग्रे—'अत एव 'तण्डुलानामोदनं पचति' 'तण्डुलानोदनं पचती'तिप्रयोगद्वयोपपत्तये प्रागुक्तरीत्या'द्व्यर्थः पचिरि'त्यनेन द्वितीयप्रयोगमुपपाद्य, आद्यप्रयोगोपपत्तये विक्लित्तेर्निर्वर्त्तने करणत्वमाश्रित्य विकारयोगे षष्ठ्याश्रिता भाष्ये। अन्यथा क्रियाऽन्वयेऽपि 'मातुः स्मरती'तिवच्छेषत्वविवक्षायां तदुपपादनसम्भवेन, विक्लित्तेः करणत्वाऽऽश्रयणपूर्वकं विकारयोगषष्ठीपर्यन्तधावने बीजाऽनापत्तेः। यत्त्वत्र सूत्रे हरदत्तेन-'पचेर्दुहादिष्वपाठ' इत्युक्तं, तदेतेन परास्तम्'—इति ख. पाठः।

निष्ठपाकाऽनुकूलव्यापारं त्रिनेत्यर्थः। एवं च पचेर्विक्लित्त्यनुकूलव्यापारानुकूलव्यापाराऽर्थः। तत्र विक्लित्त्यनुकूलव्यापाराऽऽश्रयत्वाद्वृक्षः कर्म। तदाकारादिः कर्त्ता। विक्लित्त्यनुकूलव्यापाराऽर्थकत्वे विक्लित्त्याश्रयफलरूपकर्मद्वारा व्यापाराऽऽश्रयत्वेनाऽधिकरणत्वम्। तत्त्वेनाऽविवक्षायां च अकथितकर्मत्वमिति तदाशय' इति। तन्न। तद्भाष्यतोऽस्य 'अकथितं चे'तिसूत्रविषयत्वाऽलाभात्। व्यापारद्वयाऽर्थत्वेन 'कर्त्तुरीप्सिततममि'तिकर्मणो वृक्षस्य,—एकव्यापारपरित्यागेन कर्त्तृत्वविवक्षयाऽपि भाष्यस्य सूपपादत्वात्[1], सर्वत्र कर्मकर्त्तृव्यापारपरित्यागेन कर्त्तृत्वविवक्षयैव दर्शनादिति, तन्नाऽत्र साधकत्वेनोपन्यसितुं युक्तम्[2]। कैयटेऽप्यकथितपदप्रयोगस्य फलं चिन्त्यम्। तत्सूत्रविषयत्वे मानं च चिन्त्यम्। 'दुहियाची' त्यस्य परिगणनोक्तिपरेण 'आख्यातोपयोगे' इति सूत्रभाष्येण विरोधश्च।

'वृक्षरूपं कर्म अकथितं = कर्मत्वेनाऽविवक्षितम्। अत एव तस्य यदा कर्त्तृत्वेन विवक्षा तदा कर्मवत्त्वमिति यथाकथञ्चिद्योज्य' इत्यन्ये[3]।

ननु माधवेन—

'तारेर्महेस्तथा मोचेस्त्याजेर्दीपेश्च सङ्ग्रहः।
कारिकायां 'च'शब्देन सुधाकरमुखैः कृतः'॥

—इत्यनेनाऽन्येऽपि सङ्गृहीतास्ते किमिति नोक्ता इति चेन्न। उत्तरसूत्रोपलक्षणभूतगत्यर्थानां 'तथैव चे'त्यंशस्थचेन तत्समुच्चयस्य सुधाकराऽऽदिभिर्व्याख्यातत्वात्। तत्राऽणौ कर्त्तुर्णौ कर्मताऽभ्युपगमेन तेषाम् 'अकथितं चे'तिसूत्राऽनुदाहरणत्वात्, 'गतिबुद्धी'तिसूत्रे एषामुपसङ्ख्यानं कार्यमिति तदाशयः।

---

१ 'भाष्यस्य सूपपादत्वादिति। तन्नाऽत्र' ख. पाठः।

२ इतोऽग्रे—'कैयटेऽकथितपदमप्रधानपरं, स्वरूपकथनमात्रं, न त्वेतत्सूत्रोदाहरणत्वबोधकमिति बोध्यम्' इति ख. पाठः।

३ 'कैयटेऽप्यकथित' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. ग. पाठः।

वस्तुतो ग्राहेर्बोधनाऽर्थस्य 'गतिबुद्धी'त्येव सिद्धम् । अत एव—

'तमादौ कुलविद्यानामर्थमर्थविदां वरः ।
पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता' ।।

—इति कालिदासश्लोके पूर्वार्द्धे ग्रहेर्बुद्ध्यर्थतया 'गतिबुद्धी'ति सूत्रेण अणौ कर्त्तुर्णौ कर्मत्वात् 'तमि'ति योजयित्वा, उत्तरार्द्धे 'तेने'ति विभक्तिविपरिणामेनाऽन्वयमाहुः । 'अजिग्रहत्तं जनको धनुस्तयेनाऽर्दिदद्दैत्यपुरं पिनाकी'ति भट्टिश्लोके च जयमङ्गलाकृता 'अजिग्रहत् = अनेन धनुषा भगवता त्रिपुरदाहः कृत' इति बोधितवानि'ति व्याख्यातम् । [1]अन्यस्य तु द्विकर्मकत्वं नेष्टम् । [2]भाष्याऽनुक्तेः ।

[3]किञ्च ग्राहेर्द्विकर्मकत्वे 'जायाप्रतिग्राहितगन्धमाल्यामि'ति न सिद्ध्येत् । तत्र हि 'ण्यन्ते कर्त्तुश्च कर्मण' इति प्रयोज्ये धेनुरूपे कर्मणि क्तः स्यात् । तथा च 'जायया गन्धमाल्ये प्रतिग्राहिता या' इति विग्रहे व्यधिकरणत्वादन्यपदार्थाऽभावाच्च [4]बहुव्रीहिर्न स्यात् ।

[5]सिद्धान्ते तु 'जायाप्रतिग्राहिते गन्धमाल्ये यस्या' इतिविग्रहः । 'जायाप्रतिग्राहिते' इति तृतीयातत्पुरुषः । कर्त्तुः शेषत्वविवक्षयाऽन्यपदार्थस्य षष्ठ्यन्तार्थत्वं, 'यये'तितृतीयाऽन्ताऽर्थत्वं वा । 'प्रतिग्राहितगन्धमाल्यामि'त्येतावति बहुव्रीहौ, जायापदेन कः समास इति चिन्त्यम् । न च तृतीया-

---

१ 'अन्यस्य तु द्विकर्मकत्वं नेष्टम् । न प्राप्नोति च यथान्यासेन । किञ्च ग्राहेर्द्विकर्मकत्वे' ख. पाठः ।

२ 'भाष्याऽनुक्तेः' इति क. ग. पाठः । ख. नास्ति ।

३ 'किञ्च' इत्यारभ्य 'इत्यन्यत्र विस्तरः' ( ८३७ पृष्ठे ) इत्यन्तः ख. पाठो मनोरमाशब्दरत्नधृतत्वात् क. कुण्डलितः ।

४ 'बहुव्रीहिर्न स्यात् । सिद्धान्ते तु 'प्रतिग्राहिते गन्धमाल्ये यये'ति विग्रहः । ततो 'जाया'पदेन तृतीयातत्पुरुषः' इति ख. पाठः ।

५ 'सिद्धान्ते तु' इत्यारभ्य 'सामर्थ्यमित्यगतिः' इत्यन्तः पाठः ख. नास्ति ।

तत्पुरुषः, विधायकाऽभावात्। तृतीयान्तेन 'प्रतिग्राहिते'त्यस्य सामर्थ्येऽपि, समुदायेनाऽसामर्थ्याच्च । 'एकदेशद्वारकं समुदायेन सामर्थ्यमि'त्यगतिः ।

ननु धेनुरूपप्रयोज्यकर्मणः कर्मत्वाऽविवक्षायां गन्धमाल्यरूपकर्मण्येव क्तप्रत्यये इष्टसिद्धिरिति चेन्न । णिजुत्पत्त्यर्थं प्रयोजकजायाया हेतुसंज्ञाऽवश्यकत्वेन, हेतोश्च कर्तृप्रयोजकत्वरूपत्वेन, प्रयोज्याया धेनोः कर्तृत्वसम्पादनाऽर्थं जायानिष्ठप्रेरणविषयीभूतव्यापाराऽऽश्रयत्वविवक्षाया आवश्यकत्वेन, ईदृशाऽर्थस्यैव चैतत्कर्मसंज्ञानिमित्तकोटौ प्रवेशेन, ईदृशे विषये कर्मत्वाऽविवक्षाया उपपादयितुमशक्यत्वात् । न च निवृत्तप्रेषणप्रतिग्रहधातोर्णिचि गन्धमाल्यकर्मण्येव क्तप्रत्यये इष्टसिद्धिः, जायापदेन पञ्चमीसमासः, षष्ठीसमासो वेति वाच्यम् । प्रकृत्यैव तदर्थलाभे णिजुपादानस्याऽपुष्टताऽऽपत्तेः । न च गवादिपदानां विग्रहे स्वार्थमात्रपराणां, समासेऽन्यपदार्थपरत्वमिव, विग्रहे प्रतिग्राहितशब्दस्य धेनुपरत्वेऽपि, वृत्तौ गन्धमाल्यपरत्वं भविष्यतीति वाच्यम् । अन्यपदार्थाऽऽद्यन्तर्भावेणैकार्थीभावस्य सूत्रव्युत्पत्त्यादिबलेनाऽङ्गीकारेऽपि, अन्याऽन्तर्भावेण तत्स्वीकारे मानाऽभावादित्यन्यत्र विस्तरः ।

तारेरपि गत्यर्थत्वात्सिद्धम् । 'तृ'धातोर्जलरूपोत्तरदेशसंयोगाऽनुकूलव्यापाराऽर्थकत्वात् । दीपयतेश्चाऽकर्मकत्वादेव सिद्धिः । अन्तर्भावितण्यर्थे 'दीपयति शास्त्राऽर्थं शिष्यानि'त्यादौ तु बुद्ध्यर्थत्वादेव सिद्धिः ।

क्वचित्तु 'दापेरि'ति पाठः । तत्र 'दण्ड्यो,दाप्यश्च तद्धनमि'ति स्मृतिप्रयोगात्, 'त्याजितैः फलमुत्खातैरि'त्यादिमहाकविप्रयोगात्, सुधाकराऽऽद्युक्तेश्च, 'तथैव चे'ति भाष्ये चकाराच्च, दापि-त्याजि-मोचीनां गत्यादिसूत्रे उपसङ्ख्यानमेव बोध्यम् ।

'गवा पयस्त्याजयती'ति कैयट[1]प्रयोगात्, 'पौरवेण गां दिदापयिषते'इति कैयटप्रयोगाच्च, उपसङ्ख्याने भाष्यस्य गमकस्याऽभावाच्च, नोपसङ्ख्यानम् ।

---

1 'कैयटादि' ख. पाठः ।

'त्याजितैरि'त्यादिप्रयोगाश्चाऽयुक्ता एवे'ति कैयटानुसारिणां पन्थाः।

कैयटप्रयोगे 'गवे'ति करणे तृतीये'ति तु न युक्तं, 'गौः पयस्त्यजती'ति, 'देवदत्तो गवा पयस्त्याजयती'ति सन्दर्भोऽसङ्गतेः।

यत्तु 'त्याजेर्दुहिसमानाऽर्थत्वमि'ति[1]। तन्न। अन्तःस्थितवस्तुत्याजनाऽर्थेन[2] समानाऽर्थत्वाऽभावात्। अत एव नी-हृग्रहणं चरितार्थम्। 'दण्ड्यो दाप्यश्चे'ति तु च्छान्दसं बोध्यम्।

अर्थनिबन्धनेति। 'शकारमसि[3] चोदित' इति 'परस्मैपदानामि'ति-सूत्रस्थभाष्यप्रयोगादिति भावः। चुदिर्हि पृच्छिपर्यायः। एवं च 'दुहि-याचि-रुधि-प्रच्छि-भिक्षि चिञामि'ति भाष्ये याचिपर्यायभिक्षिग्रहणं स्पष्टाऽर्थम्। याचिग्रहणं त्वनुनयाऽर्थकस्याऽपि ग्रहणायाऽऽवश्यकमिति भावः।

[4]परे तु भाष्ये—

'दुहियाचिरुधिप्रछिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना'॥

–इति कारिकायाम् 'अपूर्वविधावि'त्यस्य कर्मसञ्ज्ञाऽपेक्षया पूर्वसञ्ज्ञा-विधिविषयाऽभावे इत्यर्थः। एषां धातूनां स्वार्थफलाश्रयाकाङ्क्षानिवर्त्तकत्वेनो-पयुज्यते यः स उपयोगः = कर्मरूपः, तन्निमित्तम्। एवं ब्रुविशास्योः फला-ऽऽश्रयाऽऽकाङ्क्षानिवर्त्तकेन **गुणेन** = कर्मकारकेणेत्यर्थः। तत्र 'उपयोग-

---

१ 'दुहिसमानार्थत्वं, दापेर्याचिसमानार्थत्वमिति' इति ख. पाठः।

२ 'वस्तुत्याजनाद्यर्थाभ्याम्' ख. पाठः।

३ 'शकारमसि' इत्यारभ्य 'इति भावः' इत्यन्तोऽयं पाठः क. कुण्डलितः।

४ 'परे तु' इत्यत आरभ्य कारकप्रकरणसमाप्तिपर्यन्तं (३८८ पत्रात् ४४६ पत्र-पर्यन्तं) ५९ पत्राणि क. पुस्तके न सन्ति। इयं च त्रुटिः 'घ.' पुस्तकेन ग.समानपाठवता कथं चिदपसार्यते।

'परे तु' इत्यारभ्य 'भाष्यप्रदीपोद्द्योते' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

**निमित्तमि'त्यनेन धात्वर्थव्यापारात्प्राक् तत्सम्बद्धत्वमुक्तम्। एतद्ध्वननायैव** 'निमित्त'पदोपादानम्। '**गुणेन सचते**' इत्यनेन च धात्वर्थव्यापारोत्तरं तत्सम्बन्ध उक्तः। यत्तु 'एतद्विषयपेक्षया—पूर्वविषयाऽभावे इत्यर्थ' इति। तन्न। अनेन,पूर्वेण वा कर्मत्वे विशेषाऽभावात्। न च पूर्वविषयाऽविवक्षायाः षष्ठ्यपवादद्वितीयाऽर्थतया सम्बन्धत्वेन बोधाऽर्थमिदमिति वाच्यम्। सर्व-सूत्रबोधितकर्मसञ्ज्ञकेऽर्थे विहितप्रत्ययानां कर्मत्वशक्त्यैव कर्मबोधक-त्वात्। किञ्च 'कर्त्तुरि'त्यपि षष्ठ्यपवाद एव, तदभावे तद्विषये षष्ठ्या एव प्राप्तेः। तस्मात्षष्ठ्यपवादत्वमात्रेण न सम्बन्धत्वेन बोधकता।

किञ्चैवं सति 'अकथितं चे'त्येव सर्वत्र सञ्ज्ञासिद्धौ 'कर्त्तुरि'त्यादि-सूत्रद्वयं न कर्त्तव्यमि'तिशङ्कापरसूत्राऽन्त्यस्थभाष्यस्य, 'तदभावे 'अग्ने-र्माणवकं वारयती'त्यादावीप्सिततमस्याऽपादानत्वम्, ईप्सितमात्रस्याऽनेन कर्मत्वं स्यादित्यनिष्टवारणार्थं तत्कार्यमि'ति समाधानपरस्य '**ईप्सितमेव** तु यत्स्यात्तस्य भविष्यत्य**कथितेने**'ति भाष्यस्य चाऽसङ्गत्यापत्तेः। अस्य सम्बन्धत्वप्रकारकबोधार्थतया, तयोः कर्मत्वप्रकारकबोधार्थतया, शङ्काया एवाऽनुत्थानात्। अनेन हि भाष्येण सूत्रत्रयबोध्यकर्मत्वस्यैकशक्तिरूपता प्रतीयते। इयांस्तु विशेषः—आद्यसूत्रद्वयविषये फलाऽऽश्रयता-क्रियाजनकतोभयसमानाधिकरणा सा। एतद्विषये तु क्रियाजनकतामात्र-समानाधिकरणा सेति। अत एव 'दुहि'—'गां दोग्धि पयः। नैतदस्त्युदा-हरणम्, कथिताऽत्र पूर्वाऽपादानसञ्ज्ञे'त्येवोक्तं भाष्ये, न तु कर्मसंज्ञे-त्यप्युक्तम्। नांऽपि 'कर्त्तुरि'ति सिद्धाऽत्र कर्मसञ्ज्ञे'त्युक्तम्।

किञ्चैवं पयसोऽपि कर्मत्वाऽविवक्षायामनेन कर्मत्वाऽऽपत्तौ तत्रापि कदाचिल्लादयः स्युः। 'अप्रधाने दुहादीनामि'त्यत्राऽकथितं चेतिसूत्रविहित-कर्मसञ्ज्ञकस्यैवाऽप्रधानत्वेन व्यवहारात्। न च कर्मयुक्त्वाऽभावः। गोरूपकर्मणा तस्यापि योगात्। '**कर्मयुगि**'त्यस्य 'कर्मनिष्ठधात्वर्थस्य **निमित्तमि**'त्यर्थेऽपि दोष एव। गवि विभागाऽनुकूलव्यापारस्य पयसि सत्येव प्रवृत्त्या, तस्यापि तन्निमित्तत्वात्।

न च कर्मनिमित्तत्वमेव कर्मयुक्तत्वम् । 'बलिं याचते वसुधाम्' 'पुत्रं धर्मं ब्रूते' इत्यादौ बलि-पुत्रादेर्वसुधा-धर्मादिनिमित्तत्वाऽभावेन दोषाऽऽपत्तेः । न चोद्देश्यत्वात्तस्याऽप्रधानत्वाऽभावः । शाब्दा-ऽऽर्थप्राधान्ययोरन्यतरस्य ग्रहणे विनिगमकाऽभावात् । शब्दशास्त्रे शाब्दप्राधान्यस्यैव ग्रहीतुमुचितत्वाच्च । हविराद्यर्थं गोपयस एवाऽपेक्षायां तस्यामप्युद्देश्यत्वसत्त्वाच्च । 'माणवकं धर्मं ब्रूते' इत्यादावुभयोरप्युद्देश्यत्वसत्त्वाच्च । एतेन 'पयोरूपकर्मणः प्रधानकर्मयुक्तत्वाऽभावान्न दोष' इत्यपास्तम् । उभयोरपि 'कर्त्तुरि'ति कर्मत्वेनोद्देश्यत्वेन चाऽत्र दोषस्य दुर्वारत्वात् । व्यापारद्वयप्रयोज्यफलाश्रयत्वादिरूपप्राधान्याऽऽदि तु ण्यन्तप्रयोज्यकर्मण्यतिव्याप्तं, ण्यर्थकर्मण्यव्याप्तं च । 'गुणकर्मणि लादिविधिः सपरे ध्रुवचेष्टितयुक्तिषु चाऽप्यगुणे'इतिभाष्येण सूत्रद्वयविषये एकरूपप्राधान्यग्रहणस्य बोधनाच्च ।

यत्तु कैयटेनोक्तं 'दोहेनाऽऽप्यमानत्वेऽपि गोरीप्साप्रकर्षाऽभावात्, तमप उपादानात्प्रकर्षस्य विवक्षितत्वादप्राप्ता कर्मसंज्ञाऽनेन विधीयते' इति । तथा सत्यपि चाऽन्तरङ्गत्वे गवादीनामीप्सितत्वाऽभावः अन्यार्थत्वात्क्रियाप्रवृत्तेः । पयसस्त्वविवक्षायां गोरेवेप्सिततमत्वम् । यथोक्तम्—'अपादानमुत्तराणि—'गां दोग्धी'ति । तन्न । 'कर्त्तुरि'तिसूत्रे प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाऽऽश्रयत्वरूपस्यैवेप्साप्रकर्षस्य 'वारणार्थानामि'तिसूत्रभाष्यतो लाभात् । 'गां दोग्धि', परत्वात्कर्त्तुरिति कर्मत्वमि'त्याकडारसूत्रभाष्यविरोधाच्च । विभागस्य सम्बन्धिद्वयरूपापेक्षत्वेन 'पयसोऽविवक्षे'त्यस्य वक्तुमप्यशक्यत्वात् । प्रसिद्धेरप्रयोग इति त्वन्यत् । तस्माद्दुह्यादीनामेकैकव्यापाराऽर्थत्वे एवैतदुदाहरणत्वम् । अत एव कैयटेन प्रघट्टकाऽन्तरे 'गां दोग्धी'त्यस्य गौः पयस्त्यजति, गवा पयस्त्याजयतीत्यर्थात् प्रयोजकव्यापारेण आप्यमानत्वाद्गोः सिद्धं कर्मत्वमि'त्याशङ्क्य, नैतदस्ति, यथा ण्यन्तेषु धातुषु क्रियाऽऽविष्टः प्रयुज्यते इति प्रतीतिः, नैवमिह, निष्क्रियस्याऽपि गवादेर्दोहनादिषु विनियोगादि'ति समाहितम् । 'गोव्यापारो नैव व्यापारो, नापि धात्वर्थ' इति तदाशयः । तथा 'सन्नपि अपायो यदा न

विवक्ष्यते, निमित्तभावमात्रविवक्षैव च तु गोस्तदाऽनेन कर्मते'तिचोक्तम् ।

'निमित्तभावमात्रे'त्यस्य क्रियाजनकत्वमात्रेत्यर्थः । 'रुध'—'व्रजमवरुणद्धि गाम्' । 'ननु च व्रजे गां प्रवेशयतो'त्यर्थः, सिद्धं व्रजस्य कर्मत्वम् । अथ'व्रजे गां स्थापयतो'त्यर्थः, तर्हि कथिताऽत्राधिकरणसंज्ञा । एवं तर्हि यदाऽवरोधनक्रियां प्रति निमित्तत्वमात्रं विवक्षितं, न कर्मत्वं, नाऽप्यधिकरणत्वं, तदेदमुदाहरणमि'त्यादि हरदत्तोऽप्याह ।

'दुहि-याचि-रुधि-प्रछि-भिक्षि-चिञामुपयोगनिमित्तमपूर्वविधौ' इत्यत्र 'अपूर्वविधावि'त्यस्य पूर्वविधिविषयविवक्षाऽभावे इत्यर्थः, तद्विधिविषयाऽभावे इत्यर्थश्च । तत्र द्वेधा परिगणनं—'दुहि-याचि-रुधि-प्रछि-भिक्षि-चि-ब्रू-शासामेव कारकमि'ति, 'एषामुपयोगनिमित्तमेवेति चे'ति । व्याख्यातमेतत् ।

'उपयोगनिमित्तमि'त्यनेन 'पाणिना गां दोग्धि पय' इत्यादौ पाण्यादेर्नाऽनेन कर्मत्वम् । यत्तु वृत्तिकृता तस्योपयोगनिमित्तत्वमङ्गीकृत्य 'अपूर्वविधावि'त्यनेन तद्वारणं कृतं 'विहिताऽत्र करणसञ्ज्ञे'त्यादिना । तन्न । गवादेरपादानत्वाद्यविवक्षायामिव, पाण्यादेः करणत्वाद्यविवक्षायां कर्मत्वादेर्दुर्वारत्वात् । 'अपूर्वविधावेवे'त्यपि परिगणनाऽन्तरम् । तेनाऽपादानत्वविवक्षायां पञ्चम्येव 'गोः पयो दोग्धी'ति । अत एव नाऽत्राऽप्रधानवाची अकथितशब्दः । तथा सत्यपादानत्वविवक्षायामपि परत्वात्कर्मत्वापत्तिरिति बोध्यम् । तत्र दुहि-रुधि-चि-ब्रू-शासीनां पूर्वविधिविषयाऽविवक्षयोदाहरणत्वम् । याचि-प्रछि-भिक्षीणान्तु तद्विषयाऽभावादित्युपपादितम्—उक्ता अष्टावेव दुहादयः । अर्थपरत्वे चैषां न मानम् । पृच्छिपर्यायचुदेर्व्यापारद्वयार्थत्वे 'कर्त्तुरि'तिसूत्रेणैव द्विकर्मकत्वसिद्धेः । 'दुहादीनामपि द्व्यर्थत्वे 'कर्त्तुरि'त्येव द्विकर्मकत्वमि'त्याकडारसूत्रे भाष्ये स्पष्टम् । अत एवाऽत्र भिक्षिग्रहणं चरितार्थम् ।

किञ्च द्व्यर्थतया धातूनां द्विकर्मकत्वं 'कर्त्तुरि'ति सूत्रे 'द्व्यर्थः पचिरि'त्यादिना भाष्ये स्पष्टम् । तथाहि—इह तावत् 'तण्डुलानोदनं पचति, द्व्यर्थः

पचिः, तण्डुलान्पचन्नोदनं निर्वर्त्तयनी'ति भाष्योक्त्या विक्लेदनं, निर्वर्त्तनं च पचेरर्थः। तयोः सामानाधिकरण्येन, अभेदेन वाऽन्वयः। कैयटरीत्या तु ओदनसंनिधाने तण्डुलानां, पयः संनिधाने गोरिवेप्साप्रकर्षाऽभावात्कर्मत्वाऽनापत्तिः। एवं चाऽन्येषामपि जि-दण्ड्यादीनां, नी-हृ-कृष्-वहां च द्व्यर्थानां 'कर्त्तुरि'त्येव द्विकर्मकत्वमित्यर्थादुक्तम्। तत्र ये व्यापारद्वयाऽर्थतया द्विकर्मकास्तेषां 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामि'ति-भाष्योक्तेः प्रधानकर्मणि लादयः। प्रधानकर्मत्वं च 'कर्त्तृप्रत्ययसमभिव्याहारे कर्त्तृनिष्ठधात्वर्थप्रधानव्यापारमात्रविशेषणफलाश्रयत्वम्। ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वात्। तच्च 'तण्डुलानोदनं पचति' 'काष्ठं भस्म करोती'त्यादौ निवर्त्त्यमानौदन-भस्मनोरेव। तन्निष्ठफलविशेषणकव्यापारस्यैवोक्तभाष्येण शाब्दप्राधान्यप्रतीतेः। एवं विक्लित्त्यनुकूलव्यापारानुकूलव्यापारोऽपि पचेरर्थः। यथा 'उदुम्बरं फलं पचति काल' इत्यादौ।

तत्रोदुम्बरस्य कर्मत्वेऽविवक्षिते विक्लित्त्यनुकूलव्यापारस्य, वृक्षनिष्ठस्य स्वविक्लित्तिरूपस्य प्रधानधात्वर्थत्वमाश्रित्य कर्त्तृत्वविवक्षायां, कर्मस्थक्रियया तुल्यक्रियत्वेऽपि सकर्मकत्वादप्राप्तकर्मवद्भावविध्यर्थं 'दुहिपच्योः सकर्मकयोः कर्त्ता कर्मवदि'त्यारब्धम्। तत्र 'सकर्मकयोरि'त्युक्त्याऽकर्मकत्वमात्रवैकल्यप्रयुक्ता तदप्राप्तिरिति सूचितम्।

तत्र कैयटोऽपि-'पचिरत्र विषये द्विकर्मकः। वृक्षस्य पाकमन्तरेण फलपाकाऽसम्भवात्, वृक्षोऽकथितं कर्म। तस्यैव यदा कर्त्तृत्वविवक्षा, तदा कर्मवद्भाव' इति। 'वृक्षस्य पाकमिति'। फलविक्लित्त्यनुकूलव्यापारं स्वविक्लित्तिरूपमन्तरेत्यर्थः। अर्थाऽन्तरे कर्मस्थक्रियया तुल्यक्रियत्वं दुरुपपादं, कर्मणः कर्त्तृत्वं च। 'अकथितमि'त्यस्य कर्मत्वेनाऽविवक्षितमित्यर्थः। एतेन 'तद्बलाद् दुहादिषु पचेः पाठ' इत्यपास्तम्। एवमेव 'शकारमसि चोदित' इत्याद्युपपत्तिः। दुहादिषु गवादीनामेव प्रधानकर्मत्वं, पयोनिष्ठविभागाऽनुकूलो यो गोनिष्ठो व्यापारस्तदनुकूलव्यापारस्य शब्दतः प्राधान्यात्। 'गर्गाः शतं दण्ड्यन्तामि'त्यादौ गर्गाणामेव तत्त्वमिति

तत्रैवं कर्मणि लादयः । उद्देश्यत्वरूपमार्थं प्राधान्यन्तु शतस्येत्यनुद्देश्यत्वेनाऽप्रधानगर्गानुरोधान्न शताऽऽवृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः ।

एकैकव्यापाराऽर्थकदुहादियोगे तु 'अप्रधाने दुहादीना'मित्युक्तेरप्रधानकर्मणि लादयः । अन्यथा 'प्रधानकर्मणो'तिवाक्येनोक्तप्रधानत्वाऽऽक्रान्ते पय आदावेव स्यात् । अप्रधानत्वञ्चोक्तप्रधानकर्मभिन्नत्वम् । तच्च तत्राऽर्थ गवादीनामेव, फलाश्रयत्वाऽभावात् ।

'प्रधानकर्मण्याख्येये' इत्यादि तु भाष्ये 'दुहादिषु सर्वत्र पूर्वविधिविषयत्वसत्त्वात्तेषामनुदाहरणत्वमकथितञ्चेत्यत्रे'ति वादिनं प्रति पूर्वाचार्यैः 'गुणकर्मणि लादिविधिः सपरे' इति कैश्चित्, अपरेण 'अप्रधाने दुहादीनामि'त्युक्तेः, सर्वेषां पूर्वविधिविषयाऽविवक्षायामुदाहरणत्वमिति दर्शयितुमुक्तम् । व्याख्यातं चैवमेवैतत्कैयटेन ।

न च द्व्यर्थदुहादिष्वपि पूर्वोक्तरीत्या प्रधानाऽप्रधानकर्मणोः सत्त्वेन कथमस्य सर्वोदाहरणत्वतात्पर्यकतेति वाच्यम् । तद्रीत्या हि तेषु 'पय आद्येवाऽप्रधानं कर्म, न च तत्रेष्यते' इति दुहादिविषयेऽकथितञ्चेत्येतद्भाष्यस्यैवाऽप्रधानपदेन ग्रहणमित्याशयेन तत्तात्पर्यकतासिद्धेः । उद्देश्यत्वाऽनुद्देश्यत्वाऽऽदिरूपे प्राधान्याऽप्राधान्ये वर्तामेतद्भाष्यस्योक्तार्थतात्पर्यकत्वाऽनुपपत्तिरेवेति बोध्यम् । तत्र पूर्वमते 'सपरेऽत्र विधौ गुणकर्मणी'त्युक्तेरप्रधाने दुहादीनामित्यादिग्रहणेन गत्यर्थादिग्रहणभ्रमवारणाय 'ण्यन्ते कर्तुश्च कर्मण' इति 'प्रधानकर्मणी'त्येतदर्थभूतम् 'अपर आहे'त्यादिकारिकायामुक्तम् । पूर्वाचार्येण 'गुणकर्मणी'त्युक्तेर्बुद्धिप्रत्यवसानार्थशब्दकर्मण्यन्तेषु द्विकर्मकेषु पर्यायेण कर्मद्वये लादयः । तत्राऽप्रधानं कर्म प्रयोज्यव्यापारजन्यफलाश्रयः । तद्व्यापारस्य शब्दतोऽप्रधानत्वात् ।

गत्यर्थाऽकर्मकण्यन्तेपु प्रधानकर्मण्येव । पूर्वाचार्येणाऽपि 'ध्रुवचेष्टितयुक्तिषु चाऽप्यगुणे' इत्युक्तेः ।

'अजा ग्रामं नीयते' इत्यादावजादेः प्राधान्यमप्युक्तमेव । उत्तरदेशसंयोगाऽनुकूलाऽजानिष्ठव्यापाराऽनुकूलव्यापारो हि नयत्याद्यर्थः । नव्यमते

त्वत्राऽऽज्ञायाः प्रधानकर्मत्वं दुरुपपादम्, व्यापारद्वयजफलाश्रयत्वाऽभावात्। न चाऽऽज्ञानिष्ठग्रामसंयोगस्योद्देश्यत्वात्तत्त्वम्। क्षेत्रसंस्काराऽर्थं ग्रामं प्रत्यजानयने ग्रामनिष्ठाऽजासंयोगस्यैवोद्देश्यत्वेन तस्याऽनियामकत्वात्। नाऽप्येतत् 'गां पयो दोग्धो'त्यत्र पयसि। असम्भवात्। 'पयोनिष्ठो यो विभागाऽनुकूलो व्यापारस्तदनुकूलो व्यापारो दुहेरर्थ' इति तु न युक्तम्। 'गौः पयस्त्यजति, गवा पयस्त्याजयतीत्यर्थ' इति कैयटविरोधात्। ततः 'सूत्रद्वयाऽविषयाणां द्विकर्मकत्वाऽभावात् 'प्रधानकर्मण्याख्येये' इत्येतत् व्यर्थमि'त्याशङ्कायां 'द्विकर्मका अन्येऽपी'त्युक्तं—

'नीवह्योर्हरतेश्चाऽपि, गत्यर्थानां तथैव च।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः'॥ इति।

तत्राऽऽद्यपादेन व्यापारद्वयाऽर्थकद्विकर्मकसंग्रहः। न्यादीनां व्यापारद्वयाऽर्थकत्वात्। 'गत्यर्थानामि'ति 'गतिबुद्धो'तिसूत्रविषयोपलक्षणम्। नैतावता न्यादीनामेतत्सूत्राऽविषयत्वे इदं मानम्। एवञ्चाऽष्टाऽधिकानां दुहादिषु गणनमर्वाचीनानां निर्मूलमेव। 'आख्यातोपयोगे'इतिसूत्रे भाष्ये 'दुहियाची'त्यस्य परिगणनत्वोक्तेः। द्विकर्मकेषु गवादीनां कर्मत्वाऽविवक्षायां क्रियाऽन्वये षष्ठी न, अनभिधानात्। 'गोः पयो दोग्धी'त्यतो 'गोसम्बन्धि पय' इत्येव बोधात्। षष्ठ्यन्तस्य स्वाऽन्वययोग्यनामसमभिव्याहारे तत्रैवाऽन्वयस्यौत्सर्गिकता व्युत्पत्तेश्च। अत एव 'तण्डुलानामोदनं पचती'त्यादौ 'द्व्यर्थश्चैव पचिः, विकारयोगे षष्ठी, तण्डुलविकारमोदनं पाकेन निर्वर्त्तयती'ति भाष्ये उक्तमित्याहुः। निरूपितं चेदं भाष्यप्रदीपोद्द्योते।

देशः काल इति। व्याख्यानात्, तथैव भाष्योदाहरणाच्च 'देश'शब्देन कुरुपञ्चालाऽऽदिरेव गृह्यते। अत एव 'अधिशीङ्स्थासामि'त्यादेश्चारितार्थ्यम्।

---

१ 'अपी'ति ख. ग. पाठः।

२ इतोऽग्रे—'अत्र वार्त्तिके 'अकर्मक'शब्देनाऽत्यन्ताऽविद्यमानकर्मक एवेति नाऽऽग्रहः। सङ्कोचे मानाऽभावात्। एवं च पचादीनामविवक्षितकर्मत्वे 'मासं पचती'ति प्रयोगो भवत्येव'—इति ख. पाठः। ग. घ. नास्ति।

गन्तव्योऽध्वेति । गन्तव्यत्वेन प्रसिद्धो, नियतपरिमाणः, क्रोशादिरित्यर्थः । गन्तव्य इति किम् ? । 'अध्वानं स्वपिती'ति स्वपितेः स्वापमात्राऽर्थकत्वे मा भूत् । गोदोहमिति । 'काल'शब्देन च लोके कालत्वेन प्रसिद्धमासाऽऽदेरेव ग्रहणमिति भावः । तेन[1] 'घटमास्ते'इत्यादि न । जन्यमात्रस्य कालत्वात्प्राप्तिः । वस्तुतो न जन्यमात्रस्य, क्रियाया वा कालत्वं, किन्तु कालोपाधित्वनेवेति मञ्जूषायां निरूपितम् ।

कर्मसंज्ञक इति । अत एव 'आस्यते मास' इति कर्मणि लादयोऽपि । अ[2]कर्मकपदे निषेध्यसमर्पककर्मपदेन कालादिरूपकर्मणामग्रहणेनाऽकर्मकत्वाद्भावेऽपि लादय इति बोध्यम । एतेनैभ्यो द्वितीयेति पठन्तः परास्ताः ।

यत्तु द्वितीये 'कालाऽध्वनोरि'ति सूत्रे 'आस्यते[3] मास' इत्यादौ कर्मणि लादिसिद्ध्यर्थं प्रवृत्तस्य 'कालाऽध्वानौ कर्मवदि'ति वार्त्तिकस्य प्रत्याख्यानाय भाष्ये उक्तं–'प्राकृतमेवेदं कर्मे'ति । तस्याऽयं भावः–'आस्यादय आसनाऽऽदिपूर्वके व्यापने वर्त्तन्ते । आसनादीनां च करणत्वेनाऽन्वयः । व्याप्तिर्मासादिनिष्ठा फलम् । 'मासमासनेन व्याप्नोती'त्यर्थः । तथा च 'कर्त्तुरीप्सिततममि'त्येव कर्मसंज्ञा सिद्धेति । प्र=आदौ, कृतं-प्रकृतम्=उत्सर्गसूत्रम् , तेन बोधितमित्यर्थः ।

इयं च कल्पना सकर्मकधातुविषयाऽपि । अत एवाऽनया रीत्या सकर्मकाऽकर्मकसाधारण'कालाध्वनोरि'त्येतद्विषयो 'न तर्हीदानीमिदं वाच्यमि'ति प्रश्नो,'यत्राऽक्रिययाऽत्यन्तसंयोगस्तदर्थमि'त्युत्तरं च सङ्गच्छते ।

---

१ 'तेन' इत्यारभ्य 'निरूपितम्' इत्यन्तः ख. पाठः । ग. घ. नास्ति ।

२ 'अकर्मकपदे' इत्यारभ्य 'बोध्यम्' इत्यन्तो ग. घ. पाठः ख. नास्ति ।

३ 'आस्यते मास' इत्यादौ प्रकृतवार्त्तिकेन मासस्य कर्मतया, कर्मणि ले, 'कालाध्वनोरि'ति प्राप्तद्वितीयाव्यावृत्त्यर्थं कर्मणि लादिसिद्ध्यर्थं प्रवृत्तस्य' इति ख. पाठः ।

अन्यथा सकर्मकधात्वर्थमप्यस्यावश्यकत्वेन 'अक्रियये'त्यसङ्गतं स्यात्। न चाऽक्रियार्थमस्याऽऽवश्यकत्वे कर्माणि लेऽप्यनेन द्वितीया दुर्वारेति वाच्यम्। अत्यन्तसंयोगस्य व्याप्तिरूपस्य धातुनाऽभिधानात्तदप्राप्तेः। 'तिङ्कृत्तद्धिते'त्यादिपरिगणने तिङ्पदं तिङन्तपरमित्यदोषः। न चाऽत्र कर्मणि लकारे 'मासः पच्यते ओदनं देवदत्तेने'त्यपि स्यादिति वाच्यम्। उभयविधकर्मसमभिव्याहारेऽन्तरङ्गे, मुख्ये च द्रव्यकर्मण्येव लादिप्रवृत्तिस्वीकारान्न दोषः। स्पष्टं चेदं 'कालाध्वनोरि'त्यत्र कैयटे।

'इदमोऽन्वादेश'इतिसूत्रस्थे 'रात्रिरप्यधीते'तिप्रयोगे द्रव्यकर्मणोऽविवक्षितत्वं बोध्यम्।

न चैवमकर्मकशेत्यादियोगे तेषां व्यापनाऽऽदिवृत्तौ कटाऽऽदेरपि कर्मत्वं स्यात्। 'अधिशीङि'तिसूत्रन्तु शक्याऽर्थे चरिताऽर्थमिति वाच्यम्। विवक्षाया नियतत्वेन एतद्वार्त्तिकापात्तकालाऽऽद्यतिरिक्तानां व्याप्त्याश्रयत्वेनाऽविवक्षणात्।

'कालभावाऽध्वदेशानामन्तर्भूतक्रियाऽन्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते'॥

—इति हरिश्लोके त्वकर्मकपदमवयुत्याऽनुवादः। अत एव 'न च केचिदपि कालभावाऽध्वभिरकर्मका' इति गत्यादिसूत्रस्थभाष्यं सङ्गच्छते।

नन्वेवं सति प्रकृतवार्त्तिकं व्यर्थम्। न च 'प्राकृतमेवे'त्यस्याऽकर्मक-

---

१ 'अन्यथा' इत्यारभ्य 'मित्यदोषः' इत्यन्तो ग. घ. पाठः।

२ 'मासः पच्यते ओदनं तण्डुलान् देवत्तेन' इति ख. पाठः।

३ शीङादिधातूनां हि लक्षणया व्यापने वृत्तिर्बोध्या।

४ शक्यार्थे = शयनादिरूपे शीङादीनां शक्येऽर्थे इत्यर्थः।

५ 'व्याप्त्याश्रयत्वेन विवक्षणात्' इति ग. घ. पाठः।

६ 'एवञ्च प्रकृत वार्त्तिकं व्यर्थम्' इति ख. पाठः।

धातुभिरित्यौपदेशिकमित्येवाऽर्थोऽस्त्विति वाच्यम् । 'अन्तर्भूतक्रियाऽन्तरैरि'ति हरिविरोधात् । किञ्च 'आदित्यं पश्यती'ति दृष्टान्तेन, 'कटं करोती'त्यादिदृष्टान्तेन च भाष्ये समर्थनात्, 'कर्त्तुरीप्सिततममि'तिसूत्रविषयतालाभादिति चेन्न ।

इष्टाऽऽपत्तेः । मुख्याऽर्थे तु तादृशप्रयोगस्याऽनभिधानमेव । अन्यथा मुख्याऽर्थे 'आस्यते मास' इत्यादौ द्वितीयावारणायैतद्वार्त्तिकस्याऽप्यावश्यकत्वेन तत्प्रत्याख्यानस्याऽप्यसङ्गतेः ।

वस्तुतो[3] नैवं वार्त्तिकमस्ति । 'अकथितं चे'ति सूत्रे 'अकर्मकप्रकृतिकण्यन्तानां द्विकर्मकत्वं कथमि'ति शङ्कावारणाय 'कालभावाऽध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामि'ति भाष्ये उक्तम् । तस्य च न विधायकत्वम् । 'हि'शब्दघटितत्वात् । उक्तरीत्यैव कालादीनां तद्योगे कर्मत्वमित्येव तत्तात्पर्यमिति भाष्यप्रदीपोद्द्योते निरूपितम् ।

किञ्चाऽस्य वचनत्वेऽधिकरणत्वाऽविवक्षायां चरितार्थेनाऽनेनाऽधिकरणत्वविवक्षायामपि परत्वात्प्रवृत्तेन जातया कर्मसञ्ज्ञयाऽधिकरणसंज्ञाबाधापत्त्या 'समायां समायां विजायते' इति विग्रहकथनपरस्य 'समां समां विजायते'इतिसूत्रभाष्यस्य असङ्गत्यापत्तिरिति दिक् ।

गतिबुद्धि । शब्दकर्मकाणामिति । 'शब्दः कर्म कारकं येषामि'त्यर्थो न तु 'शब्दक्रियकाणामि'ति । तथा हि सति 'गतिबुद्धिप्रत्यव-

१ 'अकर्मकधातुभिर्योगे' इत्येतद्विहितमौपदेशिकं कर्मैव प्राकृतं कर्म भाष्ये विवक्षितमित्यर्थः ।

२ इतोऽग्रे—'एतद्वार्त्तिकोदाहरणेषु द्वितीयाऽर्थः सम्बन्ध एव । 'अकथितं चे'ति सूत्रे उपसङ्ख्यातत्वेन तथैव युक्तत्वात् । एवं चाऽधिकरणत्वविवक्षायां सप्तम्येव । अत एव 'समां समां विजायते' इति सूत्रे 'समायां समायां विजायते' इति विग्रहकथनपरं भाष्यं सङ्गच्छत इति दिक्' इति ख. पाठः ।

३ 'वस्तुतः' इत्यारभ्य 'इति दिक्' इत्यन्तो ग. घ. पाठः ।

सानशब्दार्थाऽकर्मकाणामि'त्येवाऽवक्ष्यत् । तेन ह्वाययति-क्रन्दयत्योर्न ।

अणाविति । णिच्यनुत्पन्ने इत्यर्थः । इदं सूत्रं नियमाऽर्थमिति 'हेतुमति चे'ति सूत्रे भाष्यकृतः । 'णिजर्थेनाऽऽप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेवे'ति । तेन पाचयत्यादियोगे न ।

नव्यास्तु 'विध्यर्थमिदम् । णिजर्थकर्मत्वं बाधित्वा, प्रकृतेरपि धातुत्वेन तदुपात्तव्यापाराऽऽश्रयतया कर्तृत्वं परत्वादन्तरङ्गत्वादुपजीव्यत्वाच्च प्राप्तमिति तद्बाधायेदम । हेतुमति णिज्विधानेन, कर्तृप्रयोजकस्य हेतुत्वेन, कर्तुरीप्सिततमस्य कर्मत्वेन चोपजीव्यत्वं तस्याः । न च शाब्दबोधे शाब्दप्राधान्यस्यैव मुख्यतयाऽन्तरङ्गोपजीव्यकर्तृसंज्ञाऽपेक्षयाऽपि प्रधानाऽनुरोधित्वेन बलवत्त्वात्कर्मसंज्ञैवोचितेति वाच्यम् । उद्देश्यत्वलक्षणाऽऽर्थप्राधान्यस्य प्रयोज्यव्यापारेऽपि सत्त्वेनाऽन्तरङ्गत्वोपजीव्यत्वयोश्चाऽऽधिक्येन, विध्यर्थत्वस्यैवोचितत्वादि'त्याहुः ।

तत्र कर्तृग्रहणस्य 'धात्वर्थप्रधानीभूतव्यापाराश्रय'रूपस्वतन्त्रोपलक्षणत्वेनोपजीव्यत्वं चिन्त्यम् ।

तस्मादन्याऽनधीनत्वलक्षणाऽऽर्थप्राधान्यस्य प्रयोजकव्यापारेऽपिसत्त्वेन लोके प्रधानराजकार्याऽपेक्षया मन्त्र्यादीनामन्तरङ्गस्याऽप्यात्मकार्यस्य अकरणदर्शनादन्तरङ्गादपि प्रधानकार्यस्य बलवत्त्वेन, तदनुरोधिकर्मत्वमेव बलवदिति भाष्याऽऽशयः । पाचयत्यादियोगे तु नियमात्

---

१ 'बलवत्त्वात्कर्मसञ्ज्ञैवोचिता । एतेन 'परत्वात्कर्तृसञ्ज्ञोचितेत्यपास्तमि'ति वाच्यम्' इति ख. पाठः ।

२ इतोऽग्रे-'किञ्च दुहेर्निवृत्तेकप्रेषणाण्णिचि दुहसमानार्थत्वेन, प्रयोज्यकर्तुः सम्बन्धित्वेन विवक्षायाम् 'अकथितं चे'त्यस्य नियमत्वपक्षे परत्वादनेन बाधः । विधित्वे तु नोपपद्यते । एतत्फलिताऽर्थकथनमेव तत्राऽपूर्वविधाविति' इति ख. पाठः ।

३ 'बलवत्त्वेन च' इति ख. पाठः ।

कर्मत्वाऽप्राप्तौ, पच्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताऽनाश्रयत्वरूपं प्राधान्यमादाय कर्त्तृत्वात्तृतीया सिद्ध्यतीति बोध्यम्।

**शत्रूनिति**। णिच्प्रकृत्यर्थनिरूपितकर्त्तृत्वमेवाऽत्र द्वितीयाऽर्थः। 'शत्रुनिष्ठस्वर्गकर्मकगमनाऽनुकूलव्यापारो यन्निष्ठः स श्रीहरिर्गतिरि'त्यादिक्रमेण बोधः।

ननु शत्रूणां कर्मत्वे कर्त्तुरीप्सिततमत्वाऽभावात्स्वर्गस्य कर्मताऽनुपपत्तिः। न च 'तथायुक्तमि'त्यनेन सिद्धिः। तस्याऽनीप्सितत्वाऽभावात्। किञ्च तत्रापि 'कर्त्तुरि'त्यनुवृत्त्या 'कर्त्तुः क्रियया तथा युक्तमि'त्यर्थस्य सत्त्वादिति चेन्न। प्रयोजककर्त्तृव्यापारप्रयोज्यसंयोगरूपफलाऽऽश्रयत्वेनाऽक्षतेः। किञ्च णिजुत्पत्तेः पूर्वमेव स्वर्गादीनां कर्मत्वस्य प्रवृत्तेः। न हि तस्यामवस्थायामस्य न कर्त्तृत्वम्। तत्रत्यकर्त्तृग्रहणस्य प्रकृतधातूपात्तप्रधानीभूतव्यापाराऽऽश्रयमात्रलक्षकत्वाच्च। ननु तत्रैव सङ्केतितस्य तत्रैव कथं लक्षणेति चेत्। सञ्ज्ञाऽन्तराऽनुपहिते सङ्केतितस्य, तदुपहितसाधारणे लक्षणेत्यवेहि। 'तत्प्रयोजको हेतुरि'तिसूत्रेऽप्येवमेव। अत एव णिच्सिद्धिरित्युक्तम्।

**गमयति देवदत्तेनेति**। 'यज्ञदत्तनिष्ठगमनाऽनुकूलदेवदत्तनिष्ठव्यापाराऽनुकूलो विष्णुमित्रनिष्ठो व्यापार' इति बोधः। अत्र देवदत्तस्य न कर्मत्वम्।

**नीवह्योर्नेति**। यद्यप्यनयोः प्रापणमर्थः, गतिस्तु प्रापणविशेषणतया प्रविष्टा, तथाऽप्यत एव प्रतिषेधाद्यथाकथञ्चिद्गत्याद्यर्थानामपि ग्रहणमाहुः। अत एवाऽणीति चरिताऽर्थम्। अन्यथा णिच्प्रकृतिभूतस्य ण्यन्तकर्त्तरि कर्मत्वेन गत्यर्थत्वाऽभावादप्राप्तौ किं तेन?[1]। केचित्तु 'अणी'ति,-निवृत्तप्रेषणप्रकृतिकण्यन्ताण्णिचि आद्यण्यन्तकर्त्तरि कर्मत्ववारणाय। अत्र सूत्रे च यथाकथञ्चिद्गत्याद्यर्थानां नैव ग्रहणम्। अर्थग्रहणात् 'नीवह्योरि'ति प्रतिषेधोऽपि न्यायसिद्धाऽर्थकथनमेव। अत एव 'नवेति विभाषे'ति सूत्रे

---

१ 'ण्यन्तस्याऽऽख्यिक्रियार्थत्वेन गत्यर्थत्वाऽभावात्' इति ख. पाठः।

उभयत्र विभाषागणनाऽवसरे 'हृक्रोरन्यतरस्यामिति उभयत्रविभाषे'त्युक्त्वा, प्राप्तेऽभ्यवहरतिमुदाहृत्याऽप्राप्ते, 'हरति भारं देवदत्तः' 'हारयति भारं देवदत्त'मित्युदाहृतम्[1]। ध्वनितं चेदं 'प्राप्तिं मत्वा निषेध उक्त' इत्यनेन मनोरमायामित्याहुः।

नियन्तृकर्तृकस्येति। नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः। अनिषेध इति। 'प्रयोज्यः कर्मेति वक्तव्य'मित्यर्थः। नियन्ता—पशुप्रेरकः, न सारथिरेव। तेन 'वाहयति बलीवर्दान् यवानि'ति सिद्ध्यति।

[2]अदिखाद्योरिति। प्रत्यवसानाऽर्थत्वात्प्राप्तिः। प्रत्यवसानं-भक्षणम्। नन्वेवं—

'न पीयतां नाम चकोरजिह्वया कथं चिदेतन्मुखचन्द्रचन्द्रिका।
इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी'॥

—इत्यत्र चक्षुषोः कर्मत्वाऽनुपपत्तिः, पूर्वार्द्धानुरोधेनाऽऽचामतेः[3] पानाऽर्थत्वादिति चेन्न। सादरं ज्ञापयसीत्यर्थेनाऽदोषात्। अत एव 'निगरणचलनार्थेभ्यश्चे'ति न परस्मैपदम्।

आदयतीति। अकर्त्रभिप्राये क्रियाफले 'शेषादि'ति परस्मैपदम्। अन्यत्र 'णिचश्चे'त्यात्मनेपदमेव। तदपवादस्य 'निगरणचलनार्थे'त्यस्य "'अदेः प्रतिषेध' इति निषिद्धत्वात्।

---

१ 'हारयति भारं देवदत्तम्' इति ख. नास्ति।

२ 'आदिखाद्योरिति' इति ख. पाठः।

३ 'आचामतेः पानाऽर्थत्वादिति चेन्न। पानस्याऽपि भक्षणविशेषत्वात्। बुद्ध्यंशे 'दृशेश्चे'त्यस्य विशेषाऽग्रहणज्ञापकत्वेऽप्यन्यांऽशे तदग्रहणे मानाऽभावाच्च। नचैवं निगरणार्थत्वात्परस्मैपदापत्तिः। 'आचामये'ति लोडन्तच्छेदात्। किं नाऽऽचामयेरिति चाऽर्थः। 'से' इति तु सलक्ष्मीके दमयन्तीति सम्बोधनम्' इति ख. पाठः।

भक्षेरिति। ननु भक्षेश्चुरादिण्यन्तत्वेनाऽण्यन्तावस्थाऽसम्भव इति चेन्न। 'स णावि'त्यत्र हेतुमण्णिजेव गृह्यते, हक्रोस्तस्यैव सम्भवात्।

एवं चाऽणावित्यत्र प्रतियोगिकोटावपि प्रत्यासत्तिन्यायेन तस्यैव ग्रहणमित्यदोषः। इदमपि निषेधवचनं तत्र ज्ञापकं बोध्यम्।

भक्षयति बलीवर्दानिति। 'परकीयसस्यभक्षणे परो हिंसितो भवती'ति तत्स्वामिनोऽत्र हिंसा द्रष्टव्या। हिंसाऽङ्गे भक्षणे च भक्षयतेर्वृत्तिर्बोध्या। क्षेत्रस्थानां सस्यानां, भक्ष्यमाणानां वा हिंसा द्रष्टव्या। तदवस्थायां तेषां चेतनत्वात्।

जल्पयतीति। अत्र 'यज्ञदत्तमि'ति शेषः। लाडनपूर्वकशब्दोच्चारणे जल्पत्यादयो वर्त्तन्ते। तेन 'जल्पति पुत्रं देवदत्त' इत्यादौ पुत्रस्य कर्मत्वम्। स्पष्टं चेदं भाष्यकैयटयोः। यदा तु 'पुत्रो धर्मं जल्पति, तं देवदत्तो जल्पयति = बोधयतीत्यर्थः, यदा वोच्चारणे जल्पतिर्वर्त्तते, तदा बुद्ध्यर्थत्वात्, अकर्मकत्वाच्च सिद्धिरिति बोध्यम्।[1]

स्मारयतीति। आध्यानाऽर्थकस्यैव स्मरतेर्घटाऽऽदित्वमिति भावः। घटादेर्योगे तु 'णेरणावि'त्यत्र 'स्मरयत्येनं वनगुल्म' इति भाष्यप्रयोगात् कर्मत्वं भवत्येवेति तात्पर्यम्।

शब्दाययतीति। 'शब्दं करोती'त्यर्थे 'शब्दवैरे'त्यादिक्यङन्ताद्धेतुमति चेति णिच्। अकर्मकत्वात्प्राप्तिरिति। स्पष्टं चेदं कैयटे। अत्र वदन्ति—'ह्वेञ्स्पर्धायां, शब्दे चे'त्यभियुक्तैराचार्यैः 'शब्द'शब्देन ह्वेञ्धात्वर्थनिर्देशात्तदर्थक'शब्द'शब्दात्क्यङि ह्वयतेरिवाऽस्त्येव पुत्राऽऽदिकर्मयोग इति 'शब्दक्रियाणामि'त्यर्थे 'ह्वाययति—शब्दाययति-क्रन्दयतीनां प्रतिषेधो वक्तव्य' इत्यर्थकभाष्यसामञ्जस्येऽन्यादृशशब्दायतेः सेत्त्वे[2], तत्राऽकर्म-

---

१ 'जल्पतिर्वर्त्तते, यदा च शब्दोच्चारणमात्रे वर्त्तते, तदा बुद्ध्यर्थत्वाच्छब्दकर्मकत्वाच्च सिद्धिरिति बोध्यम्' ख. पाठः।

२ 'सत्त्वे' इति ख. नास्ति।

कत्वप्रयुक्तप्राप्तेर्निषेधे च मानाऽभावेन चिन्त्योऽयं कैयट' इति।

येषामिति। अयं भावः—'अणि कर्त्ता स णावि'त्येकं सूत्रं कृत्वा, ततो 'गतिबुद्धिप्रत्यवसानाऽर्थशब्दकर्मकाणामि'ति, 'सकर्मकाणां चेद्गत्याद्यर्थानामेवे'ति नियमाऽर्थं व्याख्येयम्। भाष्योक्ते नियमाऽर्थत्वे तु नियमस्य सजातीयाऽपेक्षत्वात्सकर्मकविषय एव नियमो व्याख्येयः। एवं सिद्धेऽकर्मकग्रहणं सामर्थ्याद्देशकालाऽतिरिक्तकर्माऽभाववतोऽकर्मकग्रहणेन ग्रहणाऽर्थम्। एतच्च सामान्याऽपेक्षं ज्ञापकं-'शास्त्रेऽकर्मकपदेनेदृशानामेव ग्रहणमि'ति। तेन 'मासमस्यते' इत्यादौ भावे लो भवति। तदाह—देशकालादिभिन्नमिति। असम्भवश्च स्वतोऽविवक्षया वेत्यन्यत्। यत्त्वत्राऽत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणमिति। तन्न। भाष्यात्तथाऽलाभात्।

तत्र हि-'अकर्मकग्रहणे कालकर्मणामुपसङ्ख्यानं कर्त्तव्यम्' 'मासमासयति देवदत्तमि'त्याद्यर्थमि'त्युक्ते, 'न वक्तव्यं, न च केचित्कालभावाऽध्वभिरकर्मकास्त एवं विज्ञास्यामः, क्वचिद्येऽकर्मका' इतीत्युक्तम्।

तस्याऽयमर्थः—किमकर्मकपदेन कर्मवदर्थं लक्षयित्वा 'न विद्यते कर्मवानर्थो येषां धातूनामि'त्यर्थः, उताऽर्थेऽन्यपदार्थे बहुव्रीहिं कृत्वा लक्षणया धातुपरत्वम्। कर्मरहिताऽर्थप्रतिपादकानामित्यर्थः। नाऽऽद्य इत्याह—न चेत्यादि। तथा चोदाहरणाऽसम्भवः। अन्त्ये त्वविवक्षितकर्मतयोदाहरणं सम्भवति। उक्तरीत्या नियमेनोपपत्तावत्राऽकर्मकग्रहणवैयर्थ्या-

१ 'शब्दकर्मोऽकर्मकाणामि'ति इति क्वचित्पाठः।

२ 'यद्वा नियमस्य सजातीयापेक्षत्वात्' ख. पाठः।

३ 'इत्युक्तम्' इति ख. नास्ति।

४ 'कर्मवान् = कर्मसंज्ञाप्रयोजकोऽर्थो येषां धातूनामित्यर्थः' इति उद्द्योते श्रीनागेशभट्टाः प्राहुः।

५ 'प्रतिपादकानामि'ति उद्योतपाठोऽयम्।

६ 'इत्याह' इत्यस्य भाष्यकार इति शेषः। 'न चेत्यादि' इति भाष्यप्रतीकः।

ऽऽपत्त्या तत्सामर्थ्यं मनसि निधायाऽऽह—एवमिति। 'क्व चिदि'त्यस्य द्रव्यविषये इत्यर्थः। तत्सामर्थ्यादत्र शास्त्रेऽकर्मकपदस्य[1] द्रव्यकर्माऽभाववदर्थबोधकधातुपरत्वमिति। तादृशार्थकत्वं[2] च धातोः सर्वथा द्रव्यकर्माऽभावात्, तदविलक्षणाद्वेत्युभयविधमपि गृह्यते, विनिगमनाविरहात्।

यदपि कैयटेन 'न च के चित्कालभावाध्वभिरकर्मकाः' इति भाष्यमुपादाय 'कालादीनामविवक्षायां तैरकर्मकत्वसम्भवाऽस्त्येवे'ति पूर्वपक्षं कृत्वा, अत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणम्, अन्यथा पचादीनामविवक्षितकर्मत्वे लादयः स्युरिति,—'अत्राहुरि'त्यादिना समाहितम्।

तदसङ्गतमेव। क्तादीनामविवक्षितकर्मकेभ्यः 'कृतपूर्वी'त्यादौ भाष्यकृता, स्वयं चोक्तेः। तस्मान्मदुक्तरीत्यैव भाष्यं व्याख्येयम्। अत एव लुनातेर्निवृत्तप्रेषणाण्णिचि 'लावयति केदारं देवदत्त' इत्यादौ केदारस्य कर्मत्वसिद्धिः। किञ्च भाष्यसंमततावदर्थकल्पनेनाऽकर्मकग्रहणस्योपक्षीणत्वादधिकाऽर्थकल्पने मानाऽभावः। किञ्चाऽत्रत्याऽकर्मकपदसामर्थ्येन शास्त्रीयाऽकर्मकपदमात्रे तादृशाऽर्थग्रहणेऽकर्मकाऽधिकारे श्रुदृश्यादीनामात्मनेपदविधानाऽसङ्गतिः। 'सूत्रद्वये एव तथाऽर्थकल्पनं, नाऽन्यत्रे'त्यत्र वैषम्ये तु न मानम्। व्याख्यानमपि भाष्यसंमतमेव निर्णायकं, न तु यत्किञ्चित्[3]। एवं च 'न त्वित्या'दि चिन्त्यमेवेति दिक्।

हृक्रोः। तत्राऽभ्यवपूर्वस्य हरतेर्भक्षणाऽर्थत्वाद्विकाराद्यर्थककरोतेश्चाऽकर्मकत्वात् 'गतिबुद्धी'त्यनेन प्राप्ते, अर्थाऽन्तरे चाऽप्राप्ते, उभयत्र विभाषेयम्।

अभिवादिदृ। 'वद सन्देशवचने' चुरादिरभिपूर्वः' इति कश्चित्[4]।

---

१ 'अकर्मकपदस्य च' ख. पाठः।

२ 'तादृशार्थकत्वं च' इत्यारभ्य 'विनिगमनाविरहात्' इत्यन्तो ग. घ. पाठः ख. नास्ति।

३ 'यस्य कस्यचित्' ख. पाठः।

४ 'इति कश्चित्तन्न' इत्यारभ्य 'वार्त्तिकाऽर्थः' इत्यन्तो ग. घ. पाठः।

तन्न । 'अभिवदति गुरुं देवदत्तः' 'अभिवादयति गुरुं देवदत्तमि'ति-भाष्यविरोधात् । 'अभिवादेर्ण्यन्तस्य, दृशिप्रकृतिकण्यन्तस्य चे'ति-वार्त्तिकाऽर्थः । आद्यस्याऽप्राप्ते, द्वितीयस्य ज्ञानाऽर्थत्वात्प्राप्ते विधिरयम् ।

अधिशीङ् । 'आधार' इत्यनुवर्त्तते । वैकुण्ठमिति । आश्रयोऽत्र[1] द्वितीयाऽर्थः । तस्य कर्त्तृघटितपरम्परया क्रियायामन्वयः ।

अभिनि । 'अभिनी'ति द्वन्द्वः । 'अभिनिपूर्वो विश्' इति मध्यमपद-लोपी समासः । नेरल्पाच्तरस्याऽपि परनिपातकरणम् ईदृशसमुदाय-विवक्षाऽर्थम् । अत एव 'सत्त्वे निविशतेऽपैती'ति भाष्यप्रयोगः सङ्गच्छते। तदाह—इत्येतत्सङ्घातेति । यद्वा[2] 'अभिनिविशते' इत्येतद्घटकाऽभि-निविशितिसमुदायाऽनुकरणम् । तदाधारत्वं च तदर्थाऽऽधारत्वेन बोध्यम् ।

अभिनिवेशः—आग्रहः । सन्मार्गविषयकाऽऽग्रहवानित्यर्थः । वैषयि-कश्चाऽयमाधारः । 'एष्वर्थेष्वभिनिविष्टानामि'ति समर्थसूत्रस्थभाष्य-प्रयोगादस्य क चिदप्रवृत्तिः । तदाह—क चिन्नेति ।

उपान्‍ु । 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्ये'ति परिभाषया 'वस निवासे' इत्यस्यैव ग्रहणं, न 'वस आच्छादने' इत्यस्येत्यभिप्रेत्याऽऽह—वसतेरिति । अभुक्त्यर्थस्येति । इदमप्यन्यतरस्याङ्ग्रहणाऽनुवृत्त्या व्यवस्थितविभाषाऽऽश्रयणात्सिद्धम् । अत एव क्वचिदभुक्त्यर्थयोगेऽपि 'उपोष्य रजनीमेकाम्', 'हरिदिनमुपोषित' इत्यादौ भवत्येवेत्याहुः ।

'कालाऽध्वनोरि'त्यनेनाऽत्र द्वितीये'त्यन्ये ।

भाष्ये तु 'ग्रामे उपवसती'त्यत्र 'वसन्नि'त्यध्याहृत्य, 'ग्रामे वसन् त्रिरात्रमुपवसती'त्यर्थं स्वीकृत्येदं प्रत्याख्यातम् ।

उपपदविभक्तिमाह—उभसर्वतसोरिति । 'उभसर्वयोस्तसावि'ति-

---

१ 'आश्रयोऽत्र' इत्यारभ्य 'अन्वयः' इत्यन्तः ख. पाठः । ग. घ. नास्ति ।

२ 'यद्वा' इत्यारभ्य 'बोध्यम्' इत्यन्तो ग. घ. पाठः ।

विग्रहः। उभशब्दस्य शब्दपरत्वाद्वृत्तिविषयेऽपि नाऽयच् वार्त्तिके[1]।

उभांऽशे 'उभ'शब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थः। एतेन 'नित्यमि'तिविभक्त्याऽयचः स्वार्थिकत्वेनाऽन्तरङ्गत्वाद्वृत्तिविषये पूर्वमेवोत्पत्तौ, तत उभयशब्दात्तसेर्विहितत्वेऽपि, नोभशब्दाद्विधानमिति 'उभसर्वतसोरि'त्ययुक्तमि'त्यपास्तम्।

यत्तु मनोरमायाम्—'अत्र प्राञ्चः—'उभशब्देनोभयशब्दो लक्ष्यते। अन्यथा तसोऽसम्भवादित्याहुः। वस्तुतस्तु वृत्तिविषयेऽयच्प्रवृत्तावपि, उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु' इत्युक्तम्। तस्याऽयं भावः-प्राचीनैर्हि 'उभौ साऽभ्यासस्ये'ति निर्देशेन 'वृत्तिघटकीभूते[2] परत एवाऽयजि'ति व्याख्यातम्। एवं च तेषां लक्षणाऽऽश्रयणं व्यर्थमिति। यथा चाऽस्य वृत्तिविषयेऽन्तरङ्गत्वात्पूर्वं प्रवृत्तिस्तथोभशब्दे निरूपितम्।

प्रकृतिद्वित्वेन 'तसोरि'तिद्वित्वनिर्देशः। धिगिति। धिक्शब्दयोगे द्वितीया कार्येत्यर्थः। 'प्रकृतिवदनुकरणमि'त्यतिदेशेनाऽव्ययत्वात्सप्तम्या लुक्। वार्त्तिके[3] 'धिगि'त्यविभक्तिकमि'ति [4]ग्रन्थानामप्ययमेवाऽऽशयः। 'अश्रूयमाणविभक्तिकमि'त्यर्थात्। 'अनुत्पन्नविभक्तिकमि'त्यर्थस्तु न, 'धिगुपर्यादिष्वि'त्यत्राऽपदान्ततया जश्त्वाऽप्रसङ्गात्। गान्तस्तु नाऽयम्, 'कस्य च दः' इतिसूत्रे 'धकिदि'त्युदाहरणात्।

त्रिष्विति। 'उपर्यध्यधसः सामीप्ये' इति सूत्रनिर्दिष्टेष्वि'त्यर्थः। आम्रेडितान्तेष्विति। कृतद्विर्वचनेष्वित्यर्थः। उभयतः कृष्णमिति। सम्बन्धोऽत्र द्वितीयाऽर्थः। उपपदविभक्तीनां षष्ठ्यपवादत्वात्कृष्णसम्बन्धिपार्श्वद्वयाभ्या-

---

१ 'वार्त्तिके' इति लघुशब्दरत्नधृतः पाठः।

२ 'वृत्तिघटकीभूते पदे' ख. पाठः।

३ 'वार्त्तिके' इत्यारभ्य 'उदाहरणात्' इत्यन्तः ख. पाठः, ग. घ. नास्ति।

४ ग्रन्थानामित्यस्य—मनोरमादीनामित्यर्थः।

मागता इत्यर्थे 'पञ्चम्यास्तसिल्'। [1]आद्यादित्वात्सार्वविभक्तिकस्तसि-रित्यपि बोध्यम्। धिक् कृष्णेति। धिगर्थो निन्दा। कृष्णाभक्तसम्बन्धि-निन्देत्यर्थः। 'धिङ् मूर्खे'त्यत्र तु सम्बोधनस्य बोधनीयाऽर्थाऽन्वयात्[2] धिग्योगाऽभावेन प्रथमैव। एवं च 'मूर्खसम्बोध्यकं निषिद्धाऽऽचरणाऽऽदि निन्द्यमि'त्यर्थः। [3]यत्तु 'कारकविभक्तेर्बलीयस्त्वात्प्रथमा, सम्बोधनपदस्य कर्त्तृकारकवाचित्वादि'ति। तन्न। सम्बोधनस्य कर्त्तृकारकत्वाऽभावात्। 'देव प्रसीदे'त्यादौ वस्तुतो देवस्यैव कर्त्तृत्वेऽपि, न कर्त्तृकारकविभक्तित्वं लभ्यते। तथा हि–सम्बोधनप्रथमान्ताऽर्थस्य त्वमि'त्यर्थेन सहाऽभेदेऽपि, शब्दतः क्रियाऽऽश्रयत्वस्योपपादयितुमशक्यतया कर्त्तृत्वं दुर्लभम्। वास्तव-क्रियाऽऽश्रयत्वमादाय कर्त्तृत्वे तु बहूपप्लवप्रसङ्गः। 'धिग्देवदत्त, विष्णु-मित्रः प्रविशती'त्यादौ कर्त्तृकारकस्योक्तिसम्भवाऽभावाच्चेति दिक्।

उपर्युपरि लोकमिति। उपर्यादीनां समीपोर्ध्वदेशाऽऽदिवृत्तित्वमर्थः। [4]'उपर्युपरि बुद्धीनामि'त्यत्राऽपि बुद्धीनाम् इना = श्रेष्ठा, तामि'ति द्विती-यान्तमेव बोध्यम्। यद्वा–'उपरिबुद्धीनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः। एवं चाऽऽम्रेडितान्तत्वाऽभावान्न द्वितीया। यद्वा लक्षणप्रतिपदोक्तपरि-भाषया 'उपर्यध्यधस' इति सूत्रविहितद्वित्ववतामेव ग्रहणं, न वीप्साद्वित्व-वताम्। अत एव 'सर्वेषामघभम्लानमुपर्युपरि वर्त्तते' इत्यादौ न द्वितीया। अत्र ह्युपर्युपरीत्यस्याऽतिशयोऽर्थो, न सामीप्यम्।

'अन्यत्राऽपी'त्यस्याऽर्थमाह–अभित इति। 'पर्यभिभ्यां चे'ति तसिल्। यत्तु 'आभिमुख्यवृत्त्यखण्डमेवाऽभित इति गृह्यते, प्रतिपदोक्तत्वात्।

---

१ 'आद्यादित्वात्' इत्यारभ्य 'बोध्यम्' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

२ 'आक्षिप्तक्रियाऽन्वयात्' ख. पाठः।

३ 'यत्तु' इत्यारभ्य 'दिक्' इत्यन्तः ख.पाठः। ग. घ. नास्ति। मनोरमास्थत्वात्।

४ 'उपर्युपरि' इत्यारभ्य 'न सामीप्यम्' इत्यन्तः ख. पाठः। ग. घ. नास्ति। मनोरमास्थत्वात्।

न तसिलन्तमि'ति । तन्न । 'परितः'शब्दसाहचर्येण तसिलन्तस्याऽपि ग्रहात् । तत्र मानाऽभावाच्च । 'परित इति सर्वत इत्यर्थे, अभित इत्युभयतः इत्यर्थे' इति 'पर्यभिभ्यां चे'त्यत्र भाष्ये । ( तदेकदेशरूपे सर्वस्मिन्, उभयस्मिंश्च द्वितीयाऽर्थस्याऽन्वयः ) । 'हा पितः क्वाऽसी'त्यत्र 'हा' इत्यस्य 'मामि'ति शेषः । 'अहं शोच्य' इत्यर्थः । ईदृशपितृवियोगात् । 'पितरि'ति तु 'क्वाऽसी'त्यनेनैवाऽन्वितम्, सम्बोधनविभक्त्यन्तत्वात् । यद्वा–'पितः क्वाऽसि, त्वां हा = त्वं शोच्य इत्यर्थः' इत्याहुः ।

बुभुक्षितमिति । एष 'प्रति'शब्दः क्रियाविशेषकत्वादुपसर्गो, न कर्मप्रवचनीय इति, न तेन गताऽर्थता ।

अन्तरान्तेण । 'अन्तरेणे'त्यटाबन्तसाहचर्यादन्तरेत्यटाबन्तमेव, 'अन्तरे'त्यतृतीयान्तसाहचर्यादन्तरेणेत्यतृतीयान्तमेव । तेन 'किमनयोरन्तरेणं ज्ञातेने'ति सिद्धम् । अन्तरेण । विशेषेणेत्यर्थः । साहचर्यं च सादृश्यम् । तद्यथा 'अस्य गोर्द्वितीयेनाऽर्थ' इति गौरेवाऽऽनीयते, नाऽश्वो, न गर्दभ' इति दृष्टाऽन्तपरभाष्येण सदृशानामेव प्रयागे सहायतेत्यर्थस्य प्रतिपादनात् । एवं चाऽन्तराशब्दोऽन्तरेणशब्दश्चाऽव्ययमेव गृह्यते इति बोध्यम् ।

यस्य चाऽन्यसाहित्येनाऽवधित्वं, तस्य तन्मात्रवाचकशब्देन नाऽवधित्वविवक्षा । अत एव षष्ठ्यन्ते किन्तयोरेवाऽवधित्वमुताऽन्यसहितयोरिति न निर्णयः । प्रत्युताऽन्यसाहित्येनैव तत्त्वसम्भावना । 'तदर्थे विशे-

---

१ ख. पाठोऽयम् । ग. घ. नास्ति ।

२ 'क्वासीत्यनेनैवान्वितमित्याहुः' ख. पाठः ।

३ 'सम्बोधन' इत्यारभ्य 'इत्यर्थः' इत्यन्तो ग. घ. पाठः । ख. नास्ति ।

४ 'बुभुक्षितमिति' इत्यारभ्य 'गतार्थता' इत्यन्तः ख. पाठोऽयं, ग.घ. नास्ति । मनोरमास्थत्वात् ।

५ 'यस्य च' इत्यारभ्य 'तत्त्वसम्भावना' इत्यन्तो ग. घ. पाठः । ख. नास्ति ।

षणतयाऽन्वय्यथबोधकाद् द्वितीये'त्यर्थः। षष्ठ्यपवादत्वात्।

अन्तरा त्वामिति। 'अन्तरा'शब्दो मध्याऽर्थः। अवधित्वरूपः सम्बन्धो द्वितीयाऽर्थः। स च मध्यत्वेनाऽन्वेति। तव मम च मध्ये इत्यर्थः। यदा त्वन्तराविद्यमानपदाऽर्थसम्बन्धमात्रं विवक्ष्यते, तदा षष्ठ्येव। यथा 'तव मम चाऽन्तरा कमण्डलुरि'ति। त्वन्मत्सम्बन्धी कमण्डलुर्मध्ये इति तदर्थः। स्पष्टं चेदं 'हलोऽनन्तरा' इति सूत्रे कैयटे। अत एवाऽऽधेय-वाचकहर्यादिशब्दान्न द्वितीया। क्रिञ्चोपपदविभक्तेरिति तत्र प्रथमैव।[1]

अन्ये[2] त्ववधित्वस्य तत्त्वेन सम्बन्धत्वे द्वितीया। सम्बन्धत्वेन तत्त्वे तु षष्ठीत्याहुः। न च 'युक्त'ग्रहणं व्यर्थमिति वाच्यम्। 'पृथग्विनानाना-भिरि'तिवत्तृतीयान्तपाठे लाघवाऽभावादिति दिक्।

अधिकृत्येति। 'विभाषा[3] कृञि'त्यन्तमिति बोध्यम्। महासंज्ञाकरणं त्वन्वर्थत्वाय। 'कर्म'शब्देन क्रियानिरूपितः सम्बन्ध उच्यते। स प्रोच्यते =व्यवच्छिद्यते, विशेषे व्यवस्थाप्यतेऽनेनेति करणेऽनीयरित्याहुः।

'कर्म =क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः। बाहुलकात्कर्त्तर्यनीयः। स च भूते। तेन सम्प्रति क्रियां न द्योतयन्तीति लभ्यते' इत्यन्ये। तदुक्तम्

'क्रियाया द्योतको नाऽयं, सम्बन्धस्य न वाचकः।
नाऽपि क्रियापदाऽऽक्षेपी, सम्बन्धस्य तु भेदकः'॥ इति।

'जपमन्वि'त्यादावनुनाऽनुभूयते सुखमित्यादाविव न क्रियागत-विशेषो द्योत्यते, अप्रतीतेः। 'क्रियागतविशेषस्ये'त्यर्थक्'क्रियाया' इत्युप-लक्षणम्, समभिव्याहृतपदाऽर्थसम्बन्धिनो न कस्याऽपि द्योतक इति बोध्यम्। नाऽपि षष्ठीवत्सम्बन्धबोधकः, द्वितीययैव तस्योक्तत्वात्। नाऽपि 'प्रादेशं विलिखती'त्यत्र 'विमाय लिखतो'ति विमानक्रियेव क्रियाऽन्तरमा-

---

१ 'क्रिञ्चाऽन्तरङ्गत्वात्तत्र प्रथमैव' ख. पाठः।

२ 'अन्ये तु' इत्यारभ्य 'इत्याहुः' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

३ 'रीश्वरात्प्रागिति बोध्यम्' ख. पाठः।

क्षिप्यते, कारकविभक्तिप्रसङ्गात् । किन्तु 'जपमन्वि'त्यादौ द्वितीयया सम्बन्धत्वेन, तेन तेन वा रूपेणोपस्थितसम्बन्धानामत्र लक्ष्यलक्षणभाव[1] एवेति विशेषेऽवस्थापनं क्रियते ।

क चित्सम्बन्धाऽभेदकेऽपि वचनसामर्थ्यात्संज्ञा । यथा क्रियागतविशेषद्योतक-सोः 'सुः पूजायामि'ति । यथा वा निरर्थकाऽधिपर्योः । निपातसंज्ञया समावेशप्रकारः 'प्राग्रीश्वरादि'ति सूत्रे निरूपितः ।

द्योत्य इति । 'अनुने'ति कर्त्तृपदमध्याहार्यम् । सूत्रे 'लक्षणे' इति भावप्रधानम् । 'लक्षणत्वसम्बन्धद्योतकोऽनुरि'त्यर्थः । अपवाद इति । एकशेषस्य द्वन्द्वाऽपवादकत्ववदिति भावः । 'क्रियानिरूपितसम्बन्धपरिच्छेदकत्वेऽपि, तस्य सम्बन्धस्य क्रियाऽन्वयात्क्रियायोगसत्त्वेन तयोः प्राप्तिरि'त्येपि[2] के चित् । तेन 'जपमनुसिञ्चती'त्यादौ षत्वं न । प्रकृतेऽनो- 'र्गतिर्गतावि'ति निघातो न ।

जपमन्विति । द्वितीयाऽर्थः सम्बन्धो, हेतुश्च । स च सम्बन्धो लक्ष्य-लक्षणभाव इत्यनुना द्योत्यते । लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वम् । जपज्ञानेन हि वृष्टिर्ज्ञाप्यते । यद्यपि वृष्टिर्ज्ञातैव, तथापि कालविशेषविशिष्टतयाऽज्ञातैव । अत एव 'कदा वृष्टो देव' इति प्रश्ने इदमुत्तरं सङ्गच्छते । एवं च ज्ञानजन्यज्ञानविषयत्वं फलितम् । एवं च 'जपा-ऽभिन्न-हेतु-ज्ञानजन्य-ज्ञान-विषयो वर्षणमि'ति बोधः । तत्फलितमाह—हेतुभूतजपेति । ([3]के चित्तु 'जपस्य हेतुभूतज्ञापके स्वाऽव्यहितोत्तरकालवृत्तित्वसम्बन्धेनाऽन्वय' इत्याहुः ) ।

ननु कर्मप्रवचनीयसंज्ञाया अवकाशो हेतुत्वाऽविवक्षायाम् । हेतुतृतीयाया अवकाशो 'धनेन कुलमि'ति । प्रकृते च हेतुत्वविवक्षायां

---

१ 'लक्ष्य' इति ग. घ. नास्ति ।

२ 'इत्यपरे' ख. पाठः ।

३ अयं ख. पाठो ग. घ. नास्ति ।

परत्वात्तृतीया प्राप्नोतीत्यत आह—पराऽपीति। पुनः संज्ञेति। 'लक्षणेत्थम्भूते'त्येव सिद्धे पुनःसंज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादित्यर्थः। एतेन 'संज्ञया विजातीयत्वाद्विभक्तिबाधः कर्तुमशक्य' इति परास्तम्। स्पष्टं चेदं भाष्ये। एतद्भाष्यप्रामाण्यादेव चैतद्विहितद्वितीयाया हेतुत्वमप्यर्थ इत्यवसीयते। उक्तं च हरिणा—

'हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते।
आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणा॥' इति।

हेतुत्व-हेतुमत्त्वाभ्यां विवक्षितयोः योगः = सम्बन्धः, तस्य परिच्छेदेऽनुना कृते इत्यर्थः।

तृतीयाऽर्थे। 'तृतीया'शब्देन तन्निमित्तः शब्दो लक्ष्यते। स चाऽनन्तरस्येतिन्यायात् 'सहयुक्ते' इति सूत्रोपात्तः 'सह'शब्द एव। एवं च 'तदर्थे साहित्ये द्योत्ये' इत्यर्थः। एतेन 'पुत्रेण सहे'त्यादौ 'सह'शब्देनैव साहित्योपस्थितेः सत्त्वेन, तस्य तृतीयावाच्यत्वाऽभावात् 'तृतीयार्थे' इति सूत्रम्, 'नद्या सहे'त्यर्थः, साहित्यरूपः सम्बन्धोऽनुना द्योत्यते' इति ग्रन्थाश्चाऽयुक्ता' इति परास्तम्। तत्र तृतीयायाः प्रतियोगिन्येव दर्शनात्षष्ठ्यपवादकत्वाच्च द्वितीयाऽपि तत्रैव। नदीमिति। 'द्वितीयाऽर्थः साहित्यरूपः सम्बन्ध' इत्यनुना द्योत्यते। तदाह—नद्येति। क्त इति। 'कर्त्तरी'ति भावः।

अनुहरिमिति। 'अपकर्षाऽऽख्यहीनत्वसम्बन्धो द्वितीयाऽर्थ' इत्यनुना द्योत्यते। 'हरिप्रतियोगिकाऽपकर्षरूपसम्बन्धवन्त'[1] इति बोधः। तदाह—हरेरिति। एतेन 'उपहरिमि'ति व्याख्यातम्।

उपोऽधि। चेन 'हीने' इत्यपकृष्यते। सप्तमीति। 'यस्मादधिकमि'त्यनेनेति भावः। 'उपखार्यां द्रोण' इत्युदाहरणम्। 'खार्यपेक्षाऽधिकत्ववान्द्रोण' इत्यर्थः। तेनोभयमस्तीति फलति।

---

१ 'अपकर्षवन्तः' ग. घ. पाठः।

लक्षणेत्थम्भू। इत्थम्भूतः = कञ्चित्प्रकारं प्राप्तः, स आख्यायते = निरूप्यतेऽनेनेति इत्थम्भूताख्यानं = प्रकारविशेषनिरूपकम्। अत्र 'लक्षणेत्थम्भूताख्यान'साहचर्येण भागेऽप्यर्शआद्यच्। तेन भागप्रतियोगी 'भाग'शब्देनोच्यते। (सर्वत्र भावप्रधानो निर्देशः)। वीप्साया द्विर्वचनविशिष्टवृक्षबोध्यत्वादाह—विषयभूतेष्विति। वृक्षं प्रतीति। लक्ष्यलक्षणभावः सम्बन्धो द्वितीयाऽर्थः। वृक्षप्रकाशेन विद्युद्विद्योतदेशज्ञानाद्वृक्षस्य लक्षणत्वम्। एवं च 'वृक्षज्ञानजन्यज्ञानविषयो विद्युद्विद्योत' इतिबोधः।

भक्तो विष्णुमिति। विषयत्वाऽऽख्यसम्बन्धो द्वितीयाऽर्थः। (तस्य च भक्तपदार्थैकदेशभक्तावन्वयः)। 'विष्णुविषयकभक्त्याश्रय' इति बोधः। लक्ष्मीर्हरिमिति। हरिलक्ष्म्योः स्वस्वामिभावः सम्बन्धः। स्वत्ववानंशो भागः। 'हरिस्वामिकोऽशो लक्ष्मीरि'ति बोधः।

वृक्षं वृक्षमिति। अत्र वीप्सा द्विर्वचनद्योत्या। 'वीप्सा'पदेन व्याप्यत्वं बुद्धिस्थयावत्प्रकृत्यर्थनिष्ठमुच्यते। 'व्याप्यत्वविशिष्टवृक्षाऽऽदीनां च स्ववृत्तिव्याप्तिनिरूपकत्वेन सेचनाद्यन्वय' इत्यत्र प्रत्यादयस्तात्पर्यग्राहकाः। कर्मप्रवचनीयतया सम्बन्धाऽवच्छेदकत्वस्य युक्तत्वात्।

यद्यपि 'वृक्षं वृक्षं सिञ्चती'त्यादौ प्रतिं विनाऽपि मानाऽन्तरगृहीततात्पर्यवशात्तेनैव सम्बन्धेनाऽन्वयस्तथाऽपि तत्सत्त्वे सोऽपि तन्निर्णायक इत्येतावतैव सम्बन्धपरिच्छेदकत्वम्। तत्र वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाऽविवक्षायामनेन द्वितीया। अत एव 'प्रत्यर्थं शब्दनिवेश' इत्यादौ अर्थस्य निवेशनक्रियानिरूपिताऽधिकरणत्वेऽपि, 'अर्थमर्थं

---

१ 'किञ्चित्प्रकारम्' ग. घ. पाठः।

२ 'प्रकारविशेषविषयः' ख. पाठः।

३ अयं ख. पाठः ग. घ. नास्ति।

४ अयं ख. पाठः ग. घ. नास्ति।

५ 'हरिप्रतियोगिकस्वत्ववती लक्ष्मीरितिबोधः' इति ख. पाठः।

प्रती'ति विग्रहो भाष्ये दर्शितः। वृत्तिविषये तु प्रतिरेव वीप्साया अपि द्योतकः। एतेन 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति-वचनादत्र कर्मण्येव द्वितीया। पर्यायस्तु क्रियाविशेषका एवे'ति हरदत्ताद्युक्तमपास्तम्। क्रियाविशेषकत्वेऽन्वर्थतया कर्मप्रवचनीयसंज्ञाया एवाऽनापत्तेः। 'अव्ययं विभक्ती'ति सूत्रे तेन सम्बन्धपरिच्छेदकत्वस्यै-वोक्तत्वाच्च। अत एव भाष्ये 'किमर्थं पुनरिदमुच्यते ?। न चोपसर्गादि-संज्ञाबाधाऽर्थम्, क्रियायोगाऽभावादि'त्युक्त्वा, 'द्वितीयाऽर्थमि'ति सिद्धा-न्तितम्। 'वृक्षं वृक्षं प्रति सिञ्चती'त्याद्युदाहरणे क्वचित्क्रियाऽन्वये कर्मत्वादेव सिद्धेति प्रश्नः। 'अधिकरणादौ तत्त्वेनाऽविवक्षायां द्वितीयार्थम्, अकर्मकाऽर्थं चाऽऽवश्यकमि'त्युत्तरमिति वदन्ति। 'पञ्चम्यपाङ्परिभि-रि'ति तु न। वर्जनाऽर्थाऽपसाहचर्यात्।

हरदत्तरीत्याऽऽह—अत्रोपसर्गत्वाऽभावादिति। यदत्र ममेति। यच्छब्दो बुद्धिस्थत्वेन भागबोधकः। 'मत्सम्बन्धियद्भागकर्तृका, सम्भा-व्यमाना एतदधिकरणिका सत्ता, तत्कर्मकं प्रेरणाविषयो दानमि'त्यर्थः। अत्र कर्मप्रवचनीयत्वाऽभावादुपसर्गत्वेन षत्वम्।

कुतोऽधीति। 'कुत' इत्यपादाने पञ्चमी। 'कर्मप्रवचनीययुक्ते द्वितीये'ति तु न। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वाऽऽदिरूपवक्ष्य-माणकर्मप्रवचनीययुक्तत्वाऽभावादित्याहुः। गतिसंज्ञाबाधादिति। नन्व-नयोरनर्थकत्वेन प्रजयत्यादिवत्क्रियाविशेषकत्वाऽभावात्क्रियायोगाऽभा-वेन कथं गतिसंज्ञाप्राप्तिरिति चेन्न। विशेषद्योतकत्वाऽभावेऽपि धात्वर्थ-मात्रद्योतकत्वेन क्रियायोगसत्त्वात्। विशेषद्योतकत्वाऽभावेन परम् अनर्थ-कत्वव्यवहारः।

सुसिक्तमिति। सेकक्रियागतपूज्यत्वद्योतकः सुः। 'पूज्यसेचनकर्मे'-

---

१ 'भाष्यादौ' ख. पाठः।

त्यर्थः। सुषिक्तं किमिति। क्रियापूज्यत्वकृते तत्तत्क्रियाकर्त्तुः पूज्यत्वे गम्ये एवैषा संज्ञा, न चाऽत्र तथेति भावः। कथं तर्हि 'सुष्टुतिरि'ति। प्राशस्त्यमात्रं विवक्षितम्, न पूजा। 'प्रशंसाऽनुमते पूजाभृशकृच्छ्रसुखेषु सुरि'ति कोशादित्याहुः। अतिक्रमणम्–उचितादधिकाऽनुष्ठानम्। चात् 'पूजायामि'त्यनुकृष्यते। अतिदेवार्नित। 'अधिकाऽनुष्ठातृत्वं सम्बन्धः, देवकर्त्तृकपूजाविषयत्वं वे'त्यतिना द्योत्यते। न चाऽत्र पूजाऽर्थत्वे 'कुगतिप्रादय' इति सूत्रेण नित्यसमासाऽऽपत्तिः, 'स्वती पूजायामि'ति तत्र वार्त्तिकपाठादिति वाच्यम्। अनभिधानेन समासाऽभावादित्यादि समासे वक्ष्यते।

अपिः पदार्थे। पदस्य = अप्रयुज्यमानस्य पदाऽन्तरस्य, अर्थः = शक्यः, स पदार्थो, न तु पदस्याऽर्थ इत्यर्थः। अव्यभिचारात्। तद्द्योतकतायामुदाहरति–सर्पिषोऽपीति। अत्र हि 'बिन्दुरि'त्यादेः पदस्याऽप्रयुज्यमानस्य यः शक्योऽर्थः सोऽपिना द्योत्यते। 'तद्वाचकपदाऽध्याहारो बोध्यते'इतियावत्। सम्भावनायां लिङिति। 'उपसंवादाऽऽशङ्कयोश्चे'तिसूत्रभाष्येपठितेन 'उपसंवादाऽऽशङ्कयोर्लिङि'ति वार्त्तिकेन लिङ्। तत्र हि–आशङ्का उत्प्रेक्षा। सम्भावनाऽप्युत्कटकोटिकाऽऽशङ्कैव। स्पष्टं चेदम् 'उपसंवादाऽऽशङ्कयोश्चे'ति सूत्रे भाष्ये। ध्वनितं च 'तदस्य तदस्मिन्स्यादि'ति सूत्रे आकरे।

---

१ 'क्रियापूज्यत्वकृततत्तत्क्रियाकर्त्तुः' इति ख. ग. घ. पाठः। स च लघुशेखरानुसारेणौचित्याच्चाऽत्राऽस्माभिः शोधितः।

२ 'विषयत्वं वा सम्बन्ध इत्यतिना द्योत्यते' ख. पाठः।

३ 'सोऽपिना द्योत्यते। समभिव्याहृत'स्यात्'पदलक्षणाविषयी क्रियते इति बोध्यम्। सम्भावनायां लिङिति। 'सम्भावनेऽलमिति चेत्सिद्धाऽप्रयोगे' इत्यनेन। तत्र हि 'सम्भावने'इति योगो विभज्यते। उत्तरसूत्रन्तु 'सिद्धाऽप्रयोग एवे'ति नियमाऽर्थम्। यथान्यासे तु प्रौढेरभावादत्र न स्यादिति बोध्यम्' इति ख. पाठः।

४ 'तद्वाचक' इत्यारभ्य 'सूत्रे भाष्ये' इत्यन्तो ग. घ. पाठः।

'प्रार्थनायां लिङि'त्यन्ये। तन्न। एवं हि 'सर्पिषोऽपि स्या'दित्यतः सर्पिर्दौर्लभ्यप्रतीत्यनापपत्तेः। प्रार्थ्यमानस्याऽसिद्धतया बाहुल्यस्यैव प्रतीत्यापत्तेश्च। वक्ष्यमाणरीत्या दौर्लभ्यविशिष्टसत्तायां प्रार्थ्यमानत्वाऽन्वयात्। न च प्रार्थ्यमानत्वेनैव तस्य दौर्लभ्यलाभः, कर्त्तृदौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धेन चाऽन्वयो माऽस्त्विति वाच्यम्। 'यदत्र कर्मप्रवचनीययुक्तं, नाऽदः प्रयुज्यते, बिन्दुरिती'ति भाष्यविरोधात्। कर्मप्रवचनीययोगश्च तद्द्योत्यसम्बन्धेनाऽन्वय एव, नाऽन्यः, निरूपयितुमशक्यत्वात्। सम्बन्धोऽप्यन्यो निरूपयितुमशक्य एवेत्यास्ताम्[1]।

'अपि'शब्दाऽर्थमाह—तस्या एवेति। सम्भावनाया एवेत्यर्थः। विषयभूते इति। धात्वर्थे इत्यर्थः। कर्त्रिति। 'कर्त्तुर्दौर्लभ्यमि'ति षष्ठीतत्पुरुषः। क्रियाया दौर्लभ्यं च कारकदौर्लभ्यप्रयुक्तमेव। तत्र प्रकृते धातोरकर्मकत्वात्, कारकान्तरस्य चाऽनुपादानात्कर्त्तृदौर्लभ्यप्रयुक्तत्वमेव। अत एव 'सर्पिषोप्याचामेते'त्यादौ कर्मदौर्लभ्यप्रयुक्तदौर्लभ्यभानेऽपि न क्षतिः। कर्त्तृपदस्य प्रकृताऽभिप्रायकत्वात्। तत्र कर्त्ता-बिन्दुः पदाऽर्थः। दौर्लभ्यप्रयुक्तदौर्लभ्यन्तु क्रियायां तस्यैव सम्बन्धः। यद्यपि कर्त्तुराधेयतासम्बन्धेनाऽन्वयः सर्वत्र क्लृप्तस्तथाऽपि प्रकृते ईदृशसम्बन्धेनाऽप्यन्वय इत्यत्राऽपिरेव तात्पर्यग्राहकः।

सम्बध्यत इति। 'स्यात्'पदवाच्यक्रियया सह 'अपि'शब्दद्योत्यबिन्दोस्तद्द्योत्यसम्बन्धेनाऽन्वयादिति भावः[2]। तदेवाऽऽह—अपिशब्दबलेन गम्यमानस्येति। 'स्यात्'पदलक्ष्यस्येत्यर्थः[3]। इयमेवेति।

---

१ 'आस्तां तावत्' इति ख. पाठः।

२ 'स्यात्पदवाच्यक्रियायाम् 'अपि'द्योत्यबिन्दोः कर्त्तृतया, द्योत्योक्तसम्बन्धेन चाऽन्वयादिति भाव' इति लघुशब्देन्दुशेखरे पाठः।

३ 'अपिशब्दद्योत्यबिन्दोः' इत्यारभ्य 'बिन्दुलक्षकतैवेत्यर्थः' इत्यन्तः पाठो ग. घ. नास्ति।

बिन्दुलक्षकतैवेत्यर्थः । अत एव वृत्तिकृतोक्तं–'मात्रा,बिन्दुः,स्तोकमित्यस्याऽर्थे 'अपि'शब्दो वर्त्तते' इति । एवं च 'सर्पिषोऽपि स्यादि'त्यस्य 'सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती, तदभिन्नैककर्तृका, सम्भावनाविषया सत्ते'ति वाक्याऽर्थः । एवं च विशिष्टसत्तायाः सम्भाव्यमानत्वे, दौर्लभ्यस्याऽपि सम्भावनाविषयत्वं बोध्यम् । अनुभवसिद्धं च तत् ।

नन्वेवं कर्मप्रवचनीयद्योत्याऽर्थे सर्पिषोऽन्वयेन, तस्य कर्मप्रवचनीययुक्तत्वात् द्वितीया स्यादत आह—द्वितीया तु नेहेति । नं त्वपिनेति । बिन्दुना योगेऽपि अपिद्योत्यसम्बन्धेनाऽनन्वय इत्यर्थः । अयं भावः—'कर्मप्रवचनीययुक्ते' इत्यस्य हि 'कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगिनि द्वितीये'त्यर्थः । महासंज्ञाबलेन तथैव लाभात् । प्रकृते त्वपिद्योत्यदौर्लभ्यरूपसम्बन्धस्य बिन्दुः प्रतियोगी, न सर्पिरिति । तथा च भाष्यं—'यद्वा यदत्र कर्मप्रवचनीययुक्तं, नाऽदः प्रयुज्यते । किं तत् ? । बिन्दुरि'ति । यस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमित्यर्थः । ध्वनितं चैतत्कैयटे ।

'ननु यदा स्पष्टप्रतिपत्तयेऽपिना द्योतितस्याऽपि बिन्दोः प्रयोगस्तदा द्वितीया प्राप्नोति । वागादिशब्दे स्त्रीत्वस्य प्रकृतिवाच्यत्वेऽपि, द्योतकटाबादिप्रयोगवत्, तस्य तद्द्योतकत्ववच्च, बिन्दुशब्दप्रयोगेऽप्यपेः प्रयोगस्य, तद्द्योतकतायाश्च सम्भवादिति चेन्न । अन्तरङ्गत्वात्प्रथमोत्पत्ते-रि'ति केचित् । तन्न । एवं हि सर्वत्रोपपदविभक्तिविषयेऽन्तरङ्गत्वात् प्रथमाऽऽपत्तौ, तत्तच्छास्त्रवैयर्थ्याऽऽपत्तेः । तस्मात् 'उपपदविभक्तेरि'तिन्यायात्प्रथमेति बोध्यम् । कारकविभक्तित्वं च—क्रियाजनकाऽर्थकत्वमेव । कर्त्रादिषट्काऽन्यतमाऽर्थत्वं वा । अन्याऽभिहितकर्त्राद्यन्यतमोऽर्थत्वं प्रथमाया अप्यस्त्येव । 'अभिहिते प्रथमे'ति स्वारस्येनाऽस्या अपि तदर्थ-

१ 'विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे दौर्लभ्यस्याऽपि सम्भावनाविषयत्वमनुभवसिद्धम्' इति लघुशब्देन्दुशेखरे पाठः ।

२ 'अन्याऽभिहितकर्त्तृत्ववदर्थकत्वमस्या अप्यस्त्येव' ख. पाठः ।

फत्वात् । द्वितीया तु कर्मप्रवचनीयद्योत्यसम्बन्धार्थिकैव स्यादिति न कारकविभक्तिः । 'उपपदविभक्तेरि'त्यादि वाचनिकमेवेति बोध्यम् ।

नन्वेवं कर्मप्रवचनीयसंज्ञा निष्फलेत्यत आह–अनुपसर्गत्वान्न ष इति । [1]

[2]अपि स्तुयादिति । अपेः क्रियाविषयं शक्यत्वादिना सम्भावनं द्योत्यम् । तदाह—सम्भावनमिति । अस्ति हि प्रकृतेऽवाङ्मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाऽऽविष्करणम् । अत्युक्तिः–असम्भाव्याऽर्थसम्भावनम् । सम्भावनपदस्येदृशाऽर्थकत्वे च व्याख्यानमेव शरणम् । एवं च 'विष्णुकर्मिका एतत्कर्तृका शक्यत्वेन सम्भाव्यमाना स्तुतिरि'ति बोधः । विष्णुविषयायाः शक्यत्वसम्भावने चाऽन्यविषया निश्चयेन शक्या कर्त्तुमिति फलति । एतेन 'अपि वेदान्तपारगमि'त्यादावपियोगे स्वार्थे न तात्पर्यमितिधर्मशास्त्रग्रन्था व्याख्याताः । ईदृशेषु सम्भावनाविषयतयौचित्यं, सम्भावितौचित्यस्य चाऽनुष्ठानमयुक्तमिति स्वाऽर्थे तात्पर्याऽभावो बोध्यः । मूले 'शक्त्युत्कर्षमि'त्युपलक्षणम्—औचित्योत्कर्षाऽऽदेरपि । कामचारः—इच्छया प्रवृत्तिः । स्तुहि, मा वा, यथेष्टं कुर्विति यावत् । 'प्रैषाऽतिसर्गे'ति लिङ् । अपि स्तुयाद्वृषलमिति । सम्भावनायां लिङ् । क्रियागतं गर्ह्यत्वमपिद्योत्यम् । वृषलपदसमभिव्याहारात्स्तुतेर्गर्ह्यत्वे, तत्कर्त्तुरपि गर्ह्यत्वं फलति । तदेव 'धिग्देवदत्तमि'त्यादिनाऽनूद्यते इति बोध्यम् । अपि सिञ्च, अपि स्तुहीति—'अपि'द्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं संज्ञायां चोभयत्राऽपि षत्वाऽभावः ।

कालाऽध्वनो । अन्तं = विरामम्, अतिक्रान्तः । अत्यन्तसंयोगो-निरन्तरसम्बन्धः । व्याप्तिरिति यावत् । स च 'गुणक्रियाद्रव्यैरि'ति वृत्तिकृत् ।

---

१ 'अनुपसर्गत्वान्न ष इति । इदमुपलक्षणम् । 'उदकस्याऽप्याचामेदि'त्यादौ 'गतिर्गतावि'तिनिघाताऽभावोऽपि प्रयोजनम् । क्रियागतस्य बिन्दुकर्तृकत्वरूपविशेषस्य द्योतनादुपसर्गत्वप्राप्तिरिति बोध्यम्' इति ख. पाठः ।

२ 'अपि स्तुयादिति । 'सम्भावनेऽलमि'ति लिङ्' इति ख. पाठः ।

'गुण'शब्देनाऽत्र क्रियाद्रव्याऽतिरिक्तं पदार्थमात्रम्। तेन 'मासं भोजनाऽभाव' इत्यादेः सङ्ग्रहः। 'गुणक्रियाद्रव्यैः, कालाऽध्वनोरत्यन्तसंयोगेऽर्थे, प्रत्यासत्त्या कालाऽध्ववृत्तिभ्यामेव द्वितीये'ति सूत्राऽर्थः।

'कालाध्वनोरि'ति न स्वरूपग्रहणं, व्याख्यानात्। तद्वाच्याभ्यामत्यन्तसंयोगस्य कस्मिन्नपि पदार्थेऽसम्भवाच्च। मासमधीत इति। बुद्धिस्थयावदवयवसम्बन्धरूपाऽभिव्याप्तिर्द्वितीयाऽर्थः। 'एकादश्यां न भुञ्जीते'त्यादावधिकरणत्वविवक्षणान्न द्वितीया। अधिकरणस्य भुजिक्रियायामन्वयेन, तेनाऽत्यन्तसंयोगाऽभावेनाऽप्राप्तेश्च। भोजनाऽभावेन ह्यत्यन्तसंयोगो, न तु भोजनेनेति स्पष्टमेव।

नन्वेतद्विषये लक्षणया 'कर्त्तुरीप्सिततममि'त्यनेन कर्मत्वात् द्वितीयासिद्धावस्य वैयर्थ्यमाशङ्क्य, 'यत्राऽक्रिययाऽत्यन्तसंयोगस्तदर्थमि'ति भाष्ये उक्तत्वेन, कथं क्रियायोगेऽस्य प्रवृत्तिरिति चेन्न। सम्बन्धसामान्यविवक्षायां षष्ठीबाधनाऽर्थतया क्रियायोगाऽर्थमप्यस्याऽऽवश्यकत्वेन, 'क्रियाकारकभावेनाऽन्वयं विना यत्राऽत्यन्तसंयोगस्तदर्थमि'ति तद्भाष्यव्याख्याया उचितत्वात्।

---

१ 'गुणक्रियाद्रव्यैः, अभावेन च' इति लघुशेखरे पाठः।

२ 'बुद्धिस्थ' इति ख. नास्ति।

३ 'न द्वितीया। कालाऽध्वनोरि'त्यस्य च 'अन्तराऽन्तरेणे'त्यादिसाहचर्यात् सम्बन्धत्वप्रकारिकबोधविवक्षायामेव प्रवृत्तेः' इति ख. पाठः, ग.घ. नास्ति।

४ 'नन्वेतद्विषये व्याप्त्यादिपूर्वकतत्तद्धात्वर्थे लक्षणया' ख. पाठः।

५ 'सम्बन्धसामान्याऽविवक्षायाम्' ग. पाठः।

६ 'आवश्यकत्वे' ग. पाठः।

७ 'तद्भाष्यव्याख्याया उचितत्वात्। न चैवं व्याप्त्यादिपूर्वके धातोर्लक्षणया कर्मत्वे भावे न स्यात्। 'अकर्मके'त्यत्र निषेध्यसमर्पक'कर्म'पदेन—'गतिबुद्धी'तिसूत्रस्थाऽकर्मकग्रहणसामर्थ्यान्मासादीनामग्रहणेन अकर्मकताया अपि

मासस्येति । 'कृत्वोऽर्थ' इति षष्ठी । तस्य वृत्त्यादिरीत्या समास-निवृत्तिमात्रफलकत्वेऽप्यन्यत्र प्रवृत्तौ बाधकाऽभावात् । वस्तुतो'ऽन्तरङ्ग-त्वाच्छेपे षष्ठी'त्येव न्याय्यम् । विशेषविहितत्वं त्वचारितार्थ्ये सत्येव प्रयोजकमिति हलन्तनपुंसके प्रपञ्चितम ॥

इति द्वितीया ।

[ अथ तृतीया ]

स्वतन्त्रः ।[१]कारकाऽधिकारात् 'क्रियाजनकः स्वतन्त्रः कर्त्ते'ति वाक्या-ऽर्थः । तत्र 'क स्वतन्त्र' इत्याकाङ्क्षायामुपस्थितक्रियायामेवेत्याशयेनाऽऽह-क्रियायां स्वातन्त्र्येणेति । क्रियानिरूपितस्वातन्त्र्यं च कर्तृप्रत्ययसमभि-व्याहारे स्ववाचकधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताऽनाश्रयधात्वर्था-ऽऽश्रयत्वम् । णिचस्[२]तु वाचकत्वमेव । अतस्तत्र ण्यन्तधातु-तत्प्रकृतिकधात्वे-तदुभयत्राच्यव्यापारयोः स्व-स्वाऽर्थं प्रति प्राधान्यात् 'देवदत्तेन यज्ञदत्तः पाचयती'त्यादौ प्रयोज्यव्यापाराऽऽश्रयस्याऽपि कर्त्तृत्वसिद्धिः । द्योतकत्वे तु नैतत्सिद्ध्येत् । अन्तर्भावितण्यर्थे तु प्रयोज्यस्य कर्मत्वमेव, न कर्त्तृत्व-मिति बोध्यम् । 'कर्त्तृप्रत्ययसमभिव्याहारे' इत्यनेन 'पक्वस्तण्डुलो देवदत्तेने'त्यत्र फलस्य विशेष्यत्वेऽपि देवदत्तस्य कर्त्तृत्वसिद्धिः ।

सत्त्वात् । स्पष्टं चेदमत्रैव भाष्ये । कर्मणः शेषत्वेन विवक्षायामकर्मकत्वा-द्भावे लेऽनेन द्वितीयायाः[1] सिद्धेश्च । नन्वेवं परत्वाद्भावे एव स्यान्न कर्मणीति चेन्न । कार्यकालपक्षे एतत्कर्मसंज्ञाया 'लः कर्मणी'त्यत्रोपस्थितिसामर्थ्यात् कर्मण्यपि प्रवृत्तेः'—इति ख. पाठः ।

१ इतोऽग्रे—'स्ववाचकधात्वर्थे'त्यत्र धात्वर्थश्च,-तात्पर्यग्राहकाऽनपेक्षधातुशक्य एव ग्राह्यः । तेन णिचो द्योतकत्वेऽपि 'देवदत्तेन यज्ञदत्तः पाचयती'त्यादौ पचूधात्वर्थप्रयोज्यव्यापाराऽऽश्रयस्याऽपि कर्त्तृत्वसिद्धिः'—इति ख. पाठः ।

२ 'णिचस्तु' इत्यारभ्य 'बोध्यम्' इत्यन्तो ग. घ. पाठः ।

1 'द्वितीयायाम्' इति क्वचित्पाठः।

एतद्विहिततृतीयायाश्चाऽऽश्रयमात्रमर्थः। धात्वर्थस्य धातुनैव लाभात्। तादृशव्यापाराश्रयतासमानाधिकरणकर्त्तृताशक्तिमानर्थ इति तत्त्वमिति दिक्।[1]

प्रकृष्टेति। यद्व्यापारादनन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टम्। 'अनन्तर'-शब्दयोगे 'दूरान्तिकार्थैरि'ति सूत्रेण पञ्चमी। अत्रेदं बोध्यम्—कारकत्वं, कर्त्तृत्वादि च विशेषणविशेष्यभावव्यवस्थितमेव, न तु गोत्वादिवद्वस्तु-विशेषनियतम्। अत एव पचेरधिश्रयणाऽऽदिपरत्वे-देवदत्तः कर्त्ता। ज्वलनतात्पर्यकत्वे-एधाः कर्त्तारः। विक्लित्त्यनुकूलाऽवयवविभागाऽऽदिपरत्वे, रोटिकाऽऽदौ तदनुकूलाऽवयवमेलनाऽऽदिपरत्वे, तण्डुलादयः कर्त्तारः—'तण्डुलः पच्यते स्वयमेव' इत्यादिरीत्योह्यम्। तण्डुलग्रहणा-ऽऽपाकसमाप्ति-धारण-रूपव्यापारपरत्वे[2] स्थाल्याः कर्त्तृत्वम्। सम्प्रदानाऽपादानयोस्तु न कर्त्तृत्वविवक्षा। शब्दशक्तिस्वाभाव्यात्तद्व्यापारे धातोरवृत्तेरिति दिक्।

यत्तु[3]—'ज्ञानस्वरूपस्याऽऽत्मनः स्वरूप-ज्ञान-विषयत्वरूपे स्वप्रकाशत्वे कर्त्तृ-कर्म-विरोधः। अभेदे आधाराऽऽधेयभावस्य, विषयविषयिभावस्य च अभावादि'त्युत्तरमीमांसाग्रन्थे 'कर्त्तृकर्म'शब्दः प्रयुक्तः, सोऽयुक्तः। शब्द-विशेषोपाधिकस्य कर्त्तृत्वादेः प्रत्यक्षाऽऽदावुक्तिसम्भवाऽभावात्। यदि कर्त्तृकर्मशब्दयोराश्रय-विषयोपलक्षकत्वं[4], यदि वा 'स्वप्रकाशत्वे' इत्यस्य स्वप्रकाशपदव्यवहार्यत्वे इत्यर्थः, 'स्वं प्रकाशयती'ति 'स्वप्रकाश'शब्द-व्युत्पत्तिः, तदा सम्यगेव।

'बाणेन हत' इत्यादौ करणतृतीयाया आश्रयोऽर्थः। तस्य 'स्वनिष्ठ-

---

१ 'तादृश' इत्यारभ्य 'तत्त्वम्' इत्यन्तो ग. घ. पाठः।

२ 'पाकसमाप्तिधारण' ग. घ. पाठः।

३ 'यत्तु' इत्यारभ्य' 'सम्यगेव' इत्यन्तः ख. पाठो मनोरमास्थत्वात् ग.घ. नास्ति।

४ 'विषयलक्षकत्वम्' ख. पाठः।

व्यापारजन्यत्व'सम्बन्धेन क्रियाऽन्वयः। [1]यद्वा करणत्वशक्तिमानेव तृतीयाऽर्थः। तच्छक्तिमत्त्वं च व्यापारवत्त्वेनेति न दोषः। कारकाणां च कृत्प्रकृत्यर्थक्रियायामप्यन्वयः। अत एव 'कर्त्तृकरणे कृते'त्यादीनां चारितार्थ्यम्। एतेन 'काष्ठैः पाक' इति स्यादि'ति मीमांसकोक्तिः परास्ता। इष्टाऽऽपत्तेः। यत्तु 'भवतिक्रियायां प्राथमिकाऽन्वयेन तत्तद्विभक्तौ, पश्चात्कृदन्तेन पार्ष्ठिकाऽन्वयाऽङ्गीकारात् 'कर्त्तृकरणे' इत्यादेश्चारितार्थ्यमि'ति। तन्न। 'काष्ठैः पाक' इत्यस्याऽपि दुर्वारत्वात्। 'हरिणा त्रात' इत्यादौ दोषाच्च। भवतिक्रियायां कर्त्तृत्वेनाऽन्वये कर्त्तुरुक्तत्वात्तृतीयाऽनापत्तिः। करणत्वेनाऽन्वये [2]पार्ष्ठिकस्याऽपि हरिकर्त्तृकत्राणकर्मणो बोधाऽनापत्तिः। कर्त्तृतृतीयान्तेन समासविधायकाऽसङ्गत्यापत्तिश्चे[3]'ति यत्किञ्चिदेतत्।

तमप्ग्रहणं किमिति। संसिध्यर्थक'साध'धातुनिष्पन्न'साधक'शब्देनैव 'यद्व्यापाराऽनन्तरमव्यवधानेन [4]फलोत्पादस्तत्करणमि'त्यर्थलाभः सिद्ध इति प्रश्नः। गङ्गायामिति। अत्राऽस्तीत्यध्याहारः। अयं भावः—'आधारोऽधिकरणमि'त्यस्य हि 'आध्रियन्तेऽस्मिन्नित्याधार' इतिव्युत्पत्त्या 'क्रियाऽऽश्रययोः कर्त्तृकर्मणोर्धारणक्रियां प्रति 'सर्वाऽवयव[5]व्याप्त्या य आधारः सोऽधिकरणमि'त्यर्थः स्यात्। एवं चेदं सूत्रं 'तिलेषु [6]तैलमि'त्यादावेव प्रवर्त्तेत। न हि गङ्गा तथा, तीरधर्मस्य घोषधारणाऽऽश्रयत्वस्य प्रवाहे

१ 'यद्वा' इत्यारभ्य 'न दोषः' इत्यन्तो ग. घ. पाठः ख. नास्ति।

२ 'पार्ष्ठिकस्यापि' इत्यारभ्य 'बोधाऽनापत्तिः' इत्यन्तः ख. नास्ति। ग. घ. पाठः।

३ 'पत्तिरिति' ख. पाठः।

४ 'फलोत्पादकत्वमित्यर्थ' ख. पाठः।

५ 'सर्वावयवव्याप्त्या' इति ग. घ. पाठः।

६ 'कटे आस्ते' इत्यादावेव प्रवर्त्तेत। कटो ह्यासनक्रियाकर्त्तुर्धारणक्रियां प्रति भवत्याश्रयः। न हि गङ्गा तथा' इति ख. पाठः।

बाधात्। तस्मात्स्वरितत्वप्रतिज्ञया गौणोऽऽधारस्याऽपि ग्रहणं वाच्यम्। अयं पक्षः 'स्वरितेनाऽधिकार' इति सूत्रे भाष्ये। तत्र 'स्वरितेनाऽधिकं कार्यमि'त्यर्थेनाऽधिकरणसंज्ञाया गौणे प्रवृत्त्या 'गङ्गायां घोष' इत्यादिसिद्धिरुक्ता। 'गङ्गाशब्दो नद्यामेव वर्त्तते। नद्यास्तु सामीप्याद्गौणमाधारत्वमि'ति कैयटः। [2]एवं 'गङ्गायां गाव' इत्यप्युदाहरणम्। तत्र सर्वाऽवयवव्याप्त्यभावेन मुख्याऽऽधारत्वाऽभावात्तदपि सप्तमीशक्यमेव।

एवं च तमपोऽभावे व्यवधानेन फलोत्पादकस्याऽपि करणत्वोपचारेण तृतीयाऽन्तप्रयोगाऽऽपत्तिः। सिद्धान्ते तु न। तमप्ग्रहणेन करणत्वोपचारेण तदन्तप्रयोगस्याऽसाधुत्वबोधनादिति बोध्यम्[3]। [4]इदं यदाऽत्यन्तसामीप्यं गङ्गया घोषस्य तदा बोध्यम्। तादृशसामीप्ये एव आधारताप्रतीतेः, न तु व्यवहितसामीप्ये इति 'संहितायामि'ति सूत्रे भाष्ये स्पष्टम्।* यदा तु व्यवहितो गङ्गातो घोषस्तदा गङ्गाशब्दस्तीरे लाक्षणिक इति बोध्यम्। यत्तु 'यदा तीरे लक्षणा, तदा नेदं प्रयोजनं, तीरे घोषधारणाऽधिकरणत्वस्य सत्त्वात्। अत्र पक्षे तमप्ग्रहणं चिन्त्यप्रयोजनमि'ति।

---

१ 'गौणाधारस्यापि ग्रहणं वाच्यम्। एवं च तीरधर्मस्य तस्य प्रवाहे उपचारात्सिद्धिरिति। अयं पक्षः स्वरितेनाऽधिकार इति सूत्रे भाष्ये' इति ख. पाठः।

२ 'एवम्' इत्यारभ्य 'शक्यमेव' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

३ 'इति बोध्यम्। यदा तु गङ्गाशब्दस्तीरे लाक्षणिकस्तदा नेदं प्रयोजनम्। तीरे घोषधारणाऽधिकरणत्वस्य सत्त्वात्। अत्र पक्षे तमप्ग्रहणं चिन्त्यप्रयोजनमि'ति केचित्। केचित्तु-एतत्सूत्रभाष्यात्सर्वत्र प्रत्ययस्यैव लक्षणा, न तु प्रकृतेस्तथा साधुत्वम्। 'द्रोणो व्रीहिरि'त्यादावप्यारोपितद्रोणत्ववान्प्रत्ययाऽर्थः। प्रकृतिस्तु तत्र साधुत्वाऽर्थैव। आरोपबीजं च परिच्छेद्यता। यत्र तु प्रकृतेरपि लक्षणा, तात्पर्यग्राहकं शास्त्रम्, यथा 'पुंयोगा'दित्यादि, तत्र भवत्येव लक्षणया प्रकृतेः साधुत्वमित्याहुः'—इति ख. पाठः।

४ 'इदम्' इत्यारभ्य 'लाभात्' इत्यन्तो ग. घ. पाठः।

तन्न। तदाऽपि सर्वाऽवयवव्याप्त्यभावेन मुख्याऽऽधारत्वाऽभावात्। 'अधिकरणं किमाचार्यो न्याय्यं मन्यते.?। यत्र कृत्स्न आधाराऽऽत्मा व्याप्तो, यथा 'तिलेषु तैलं' 'दध्नि सर्पिरि'ति भाष्येण तथैव लाभात्।

केचित्तु कारकाऽधिकारात्करणल्युडन्त'करण'मिति महासंज्ञया च साधकत्वे लब्धे, 'साधक'ग्रहणमेव साधकतमाऽर्थं भविष्यतीति प्रश्नः। ('कारकप्रकरणे च–) शब्दवैयर्थ्याऽऽपादनपूर्वकसामर्थ्यगम्यः प्रकर्षो नाऽऽश्रीयते इति ज्ञापनाऽर्थमि'त्युत्तरम्। सम्भवति हि 'अधिकरणमि'-त्यधिकरणल्युडन्तमहासंज्ञयैवाऽऽश्रयस्य लाभे, आधारग्रहणं मुख्याऽऽधारलाभाऽर्थमिति। स्पष्टं चेदमत्र सूत्रे भाष्ये इत्याहुः। गौणमुख्यन्यायोपन्यासस्त्वसङ्गत एव। विशिष्टरूपोपादाने एव तत्प्रवृत्तेः। पदकार्यविषयत्वाच्च।

[2]रामेणेति। रामकर्त्तृक-बाणकरणक-प्राणवियोगाश्रयो बालीति बोधः। अनभिहिते किम्?। हरिः करोति। जीवन्त्यनेनेति जीवनः। करणे ल्युट्।

प्रकृत्यादिभ्य इति। आदिशब्दः प्रकारे। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्तः', 'घटत्वेनाऽभावः' 'पटत्वेन विषयते'त्यादि सिद्धम्।[3] [4]इदं च यथायोगं सर्वविभक्त्यपवादः।

प्रकृत्या चारुरिति। स्वभावसम्बन्धिचारुत्ववानित्यर्थः। यद्यपि

१ 'कारकप्रकरणे च' इत्ययमंशोऽग्रे (८८३ पृ०) ग्रन्थकर्त्रा स्वयमेव वक्ष्यते इति अत्राऽपि पूरितोऽस्माभिः।

२ 'रामेणेति। रामनिष्ठव्यापारजन्यो यो बाणाश्रयकव्यापाराऽव्यवहितोत्पत्तिकः प्राणवियोगस्तदाश्रयो बालीति बोधः'—इति ख. पाठः।

३ इतोऽग्रे—'इदं च षष्ठ्यपवादः। तेनैतद्विहिततृतीयायाः सम्बन्धोऽर्थः' इति ख. पाठः। ग. घ. नास्ति।

४ 'इदं च सर्वविभक्त्यपवादः' इति ग. घ. पाठः। ख. नास्ति।

'स्वभावेनाऽयं कृतश्चारुर्नाऽलङ्काराऽऽदिने'ति तदर्थः। घटत्वाऽऽदिपदानां च[1] तदवच्छिन्नप्रतियोगिताल्लाक्षणिकत्वम्, 'ज्ञात' इत्यस्य चाऽध्याहारः। एवं च करणत्वेनैव सिद्धम्, तथाऽपि तदविवक्षायां षष्ठीप्राप्तिं मत्वेदमारब्धं वार्त्तिककृता। भाष्यकृता तु षष्ठ्या अनभिधानमाश्रित्य प्रत्याख्यातमेव[2]।

प्रायेणेति। प्रायेण = आचारबाहुल्येनाऽयं याज्ञिक इति ज्ञात इत्यर्थः[3]।

गोत्रेणेति। गोत्रसम्बन्धिगार्ग्यत्ववानित्यर्थः। सामान्यविशेषभावः सम्बन्धः। 'गोत्रेणाऽहं गार्ग्य इति ज्ञाये'इत्यर्थो वा। समेनेति। पथेत्यर्थः। अत्र (हि[4]) द्वितीया प्राप्ता। करणत्वस्याऽपि सम्भवोऽत्र।

द्विद्रोणेनेति। पात्रादित्वात्स्त्रीत्वाऽभावः। द्रोणद्वयपरिच्छेद्यं, द्रोणद्वयपरिमिताऽभिन्नं वेत्यर्थः[5]। यदि द्विद्रोणपरिमितव्रीह्यादिमूल्ये 'द्विद्रोण'-शब्दो लाक्षणिकस्तदा करणत्वम्। तन्मूल्येन हि द्विद्रोणा एव क्रीयन्ते इति नाऽर्थभेदः। एवं 'पञ्चकेन पशून् क्रीणाती'त्यत्र पञ्चसङ्ख्यापरिच्छेद्य-सङ्ख्याऽभिन्नपशूनित्यर्थः।

दिवः कर्म च। चादिति। तेन समावेश इति भावः। पर्यायस्य[6] साधकतम-करणशब्दयोरनुवृत्त्या, एकसंज्ञाऽधिकारेण च सिद्धेः। तेन 'मनसादेव' इत्यत्र 'मनसा दीव्यती'ति विग्रहे कर्मण्यण्, करणे तृतीये चेत्युभयं सिद्धयति। 'मनसः संज्ञायामि'त्यलुगिति हरदत्तः।

---

१ चकारो ग. घ. नास्ति।

२ एवकारः ख. नास्ति।

३ इतोऽग्रे—'प्रायेण'शब्दो निपातो 'नूनमि'त्यर्थे वर्त्तते इत्याहुः'—इति ख. पाठः। ग. घ. नास्ति।

४ 'हिः' ग. घ. नास्ति।

५ इतोऽग्रे—'इह षष्ठी, द्वितीया प्राप्ता च' इति ख. पाठः।

६ 'पर्यायस्य साधकतमशब्दाऽनुवृत्त्या 'परिक्रयणे' इति सूत्रादन्यतरस्यांग्रहणा-ऽपकर्षेणैव सिद्धेः' ख. पाठः।

नन्वयं प्रयोगोऽसङ्गतः, कृद्योगलक्षणषष्ठीप्राप्तेः। न च कर्त्तृसाहचर्यात्तत्र मुख्यं[1]व्यवहारेण धात्वर्थाऽऽश्रयस्यैव कर्मणो ग्रहणम्। अत एव 'स्तोकं पाक' इत्यादौ षष्ठी नेति वाच्यम्। धात्वर्थे भेदेनाऽन्वयि कर्मग्रहणेनैव तदुपपत्तावत्राऽप्रवृत्तौ मानाऽभावात्। ध्वनितं चेदमाकडारसूत्रे कैयटे इति चेत्। एवं तर्हि 'अक्षैर्देवयते यज्ञदत्तेने'त्यत्र सकर्मकत्वादणि कर्त्तुर्णौ कर्मत्वं न[2], करणत्वाच्च तृतीयेति समावेशफलम्। न च वैकल्पिकत्वेऽप्यस्याऽत्यन्ताऽविद्यमानकर्मकत्वाऽभावात्कर्मत्वाऽभावः सिद्ध इति वाच्यम्। तत्राऽत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणे मानाऽभावस्य पूर्वं निरूपितत्वात्। किञ्च 'अणावकर्मकादि'ति परस्मैपदाऽभावः फलम्। किञ्च 'दीव्यतेऽक्षैर्देवदत्तेने'ति भावे लकाराऽभावोऽपि फलम्।

अक्षैरक्षान्वेति। ननु 'देवना अक्षा' 'दीव्यन्तेऽक्षा' इत्यादौ[3] करणल्युट्-कर्मलटोः साधनेन संज्ञयोश्चरिताऽर्थत्वात्परत्वात्तृतीयैव स्यान्न द्वितीयेति चेन्न। कार्यकालपक्षे'कर्मणि द्वितीये'त्यत्र यदस्योपस्थानं, तस्याऽनवकाशत्वात् द्वितीयाया अप्युपपत्तेः। यथोद्देशेऽपि 'कर्मणि द्वितीये'त्यादीनामात्मसंस्कारायाऽत्र संनिधाने, एकेन सर्वसंस्कारस्य कर्त्तुमशक्यत्वाल्लक्षणोपप्लवे 'कर्मणि द्वितीये'त्येतद्विषयकोपप्लवसामर्थ्येन द्वितीया सूपपादा[4]। प्रकारद्वयमपीदं 'क्ङिति चे'त्यत्र भाष्यकैयटयोः स्पष्टमिति[5] आकडारसूत्रे कैयटः।

परे त्वक्षान्दीव्यतीति प्रयोगे दृढतरं मानं चिन्त्यम्। कार्यकालपक्षेऽपि परत्वात्तृतीयया बाधे तदनुपस्थितेरेव न्याय्यत्वात्। एवं पक्षाऽन्तरेऽपि।

---

१ 'मुख्यऽव्यवहारेण' इति ग. घ. पाठः। ख. नास्ति।

२ 'कर्मत्वं नेति फलं बोध्यम्। करणत्वाच्च' इति ख. पाठः।

३ इतोऽग्रे—'कर्मणि लकारे तु कर्मशक्तेरभिहितत्वेन, करणस्याऽप्यभिहितत्वात् 'दीव्यन्तेऽक्षा' इत्येवेत्याहुः'—इति ख. पाठः।

४ 'सूपपादेत्याहुः' ख. पाठः।

५ 'इत्याकडारसूत्रे' इत्यारभ्य 'इत्याहुः' इत्यन्तो ग. घ. पाठः ख. नास्ति।

यद्वा तत्र फलाऽऽश्रयत्वविवक्षया 'कर्त्तुरि'ति कर्मत्वम् । अक्षपदस्य वा अक्षजेये धने लक्षणा । न च तदा करणत्वमिति न दोष इत्याहुः ।

ननु 'दीव्यन्तेऽक्षा' इत्यत्र कर्मणोऽभिधानेऽपि, करणस्याऽनभिधानात्तृतीया दुर्वारा । एवं 'देवना अक्षा' इत्यत्र ल्युटा करणस्याऽभिधानेऽपि कर्मणोऽनभिधानात् द्वितीया, षष्ठी वा स्यादिति चेन्न । 'दिव्'धात्वर्थनिरूपितसाधकतमत्वशक्तेरेवाऽत्रोभयरूपत्वेनाऽन्यतरत्राऽपि प्रत्यये उभयस्याऽप्युक्तत्वादित्याहुः ।

अपवर्गे । अपवर्गः फलप्राप्तिरिति । तस्यां च सत्यां प्रयोजनाऽभावादेव न क्रियाप्रवृत्तिरिति, 'फलप्राप्ति'शब्देन फलप्राप्तिपूर्वकस्तत्त्याग उच्यते । तत्र त्यागो विभक्त्यर्थः । 'अहोऽधिकरणकत्यागप्रतियोग्यध्ययनकर्मे'ति बोधः । तादृशत्यागस्य च फलप्राप्तिर्व्यङ्ग्या । यत्तु 'क्ता ऽऽदिना त्याग उक्तः' इति । तन्न । अतीतत्वप्रतीतावपि, निवृत्तिरूपत्यागाऽप्रतीतेः ।

नायात इति । अनेन[2] फलाऽप्राप्तिरेव स्फुटमुच्यते ।

सहयुक्ते । गुणक्रियाद्रव्यैर्गुणप्रधानभावेन द्वयोः सम्बन्धे, साहित्यवाचि'सह'शब्दप्रयोगो भवति । तत्राऽप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाऽभावः । अस्ति हि 'शिष्येण सहोपाध्यायः स्थूलः', 'शिष्येण सहाऽऽगतः', 'शिष्येण सहोपाध्यायस्य गौरि'त्यादौ स्थूलाऽऽदिभिरुपाध्यायस्य शाब्दः सम्बन्धः । शिष्यस्य तु सहाऽर्थबलादार्थः । तथा हि–'शिष्यसाहित्यवानागत' इति बोधः । तत्र[3] साहित्यं शिष्यसम्बन्ध्यन्वयित्वरूपं, तत्समनियतं वा । तस्य च शिष्यस्याऽऽगमनसम्बन्धे एव सम्भव इति, तद्बलादेव पश्चात्तस्याऽपि मानसस्तदन्वयबोधः[3] । तथा[4] क्रियासम्ब-

---

१ 'साधकतमस्यैवाऽत्र' ख. पाठः ।

२ 'अनेन हि फलाऽप्राप्तिः सूचितैव स्फुटमुच्यते' ख. पाठः ।

३ 'तत्र हि' ख. पाठः । ३ 'तदन्वयः' ग. घ. पाठः ।

४ 'तथा' इत्यारभ्य 'नाऽसङ्गतिः' इत्यन्तो ग. घ. पाठः ।

न्धोऽपि कारकविभक्तौ प्रयोजक इत्याशयेन 'शिष्येण सहाऽऽगत' इत्यादौ कर्तृतृतीययैव सिद्धमि'ति भाष्यस्य नाऽसङ्गतिः। शाब्दत्वं च विवक्षानिबन्धनम्। एवं चैषु शाब्दत्वरूपविशेषणाऽभावकृतो विशिष्टाऽभावः। 'सहैव पुत्रैर्दशभिर्भारं वहति गर्दभी'त्यादौ विद्यमानतावाचि'सह'शब्दयोगे क्रियाद्यन्वयित्वरूपविशेष्याऽभावकृतोऽपि विशिष्टाऽभावः। दशसङ्ख्याकपुत्राणां विद्यमानत्वेऽपीत्यर्थः।

यत्तु 'विद्यमानत्वविशिष्टधर्मी अत्र सहशब्दाऽर्थ' इति। तन्न। 'पुत्रैरि'ति तृतीयाया उपपदविभक्तित्वेन, षष्ठ्यपवादकत्वात्सम्बन्धमात्रार्थकतया सहाऽर्थेनाऽनन्वयाऽऽपत्तेः। विद्यमानैः पुत्रैर्युक्ते'त्यर्थे तु कर्तृकरणाऽन्यतरतृतीययैव सिद्धमिति बोध्यम्।

प्रकृते च सर्वोऽपि सहशब्दो गृह्यते, विनिगमनाविरहात्।

यत्तु 'अस्ति अखण्डं प्रधानत्वं, यद्वशात् 'अयमस्मिन्नगरे प्रधानं = मुख्य' इत्यादयो व्यवहाराः। तदभावरूपं चाऽप्रधानत्वं तृतीयावाच्यम्। अत एवाऽप्रधानग्रहणं चरिताऽर्थम्। न च प्रधाने तृतीयाव्यावृत्त्यर्थम्। सहयोगस्य विशेषणतया, सहान्वर्थाऽन्वयित्वरूपस्यैव 'अन्तरान्तरेणे'त्यादाविव ग्रहणेनाऽदोषादि'ति। तन्न। 'राज्ञा सह सेना गच्छती'त्यादावनापत्तेः। 'सहयुक्तऽप्रधानवचनमनर्थकं, कारकविभक्तेर्बलीयस्त्वात्प्रथमा भविष्यती'त्यप्रधानग्रहणप्रत्याख्यानपरभाष्यविरोधाच्च।

ननु विशेषणतया सहाऽर्थाऽन्वयित्वमेव सहयोग इति, प्रधाने प्राप्तेरेवाऽभावेन, किमर्थं भगवतः परिभाषाऽनुसरणमिति चेन्न। एतत्परिभाषाप्रवृत्त्यैव तदर्थस्य लाभात्। अन्यथा षष्ठ्या इव प्रथमाया अप्य-

१ 'विवक्षामात्रनिबन्धनम्' ख. पाठः।

२ इतोऽग्रे–'राहोः शिर' इतिवदुपपत्तिरत्राऽपी'ति कश्चित्' इति ख. पाठः।

३ 'अस्ति तावत्सखण्डमखण्डं वा' ख. पाठः।

४ 'तदभावरूपं चाऽप्रधानत्वं, तच्च तृतीयावाच्यम्' ख. पाठः।

पवादत्वमुपपदविभक्तीनां स्यात्। 'अनन्तरस्ये'तिन्यायेन तदपवादत्वमेव वा स्यात्। एतेन 'अन्तरङ्गत्वात्प्रथमे'त्यपास्तम्।

अनया च वाचनिके सर्वतो बलवत्त्वे कारकविभक्तेर्बोधितेऽर्थोच्छेषषष्ठ्यपवादत्वमुपपदविभक्तीनामवतिष्ठते। यथा च प्रथमाया अपि कारकविभक्तित्वं, तथा दर्शितम्। न चैवमपि 'शिष्येण सहोपाध्यायस्य धनमि'त्यादावुपाध्यायात्षष्ठी न स्यात्। उपपदविभक्तीनां येन नाऽप्राप्तिन्यायेनोपपदार्थे येन सम्बन्धेनाऽन्वयस्तन्निमित्तकषष्ठीबाधकत्वेऽपि, बहिर्भूतसम्बन्धनिमित्तकषष्ठीबाधकत्वे मानाऽभावात्। (सर्वत्रोपपदविभक्तिविषये एवमेव निर्णयः)।

क्वचित्तु सहाऽर्थप्रतियोगिन आर्थं प्राधान्यमपि प्रतीयते। अत एव समकक्षयोर्मध्येऽन्यतरस्य 'अपरेण सहाऽऽगन्तव्यमि'त्युक्ते दुःखं दृश्यते।

पुत्रेण सहेति। 'सह'शब्दाऽर्थः साहित्यम्। (पुत्रसाहित्यवान्पिता आगत इति बोधः)। तच्च स्वसमभिव्याहृतक्रियासमानकालिकतत्क्रियावत्त्वादिसमनियतोऽखण्डोपाधिः। क्वचित्समानदेशक्रियावत्त्वसमनियतोऽपि। अत एव माषवापोत्तरं तस्मिन्नेव क्षेत्रे तिलवापे, 'तिलैः सह माषान्वपती'ति भवति। स्पष्टं चेदमत्रैव भाष्ये। 'पृथग्विनानानाभिरि'तिवत् 'सहेने'ति वक्तव्ये 'युक्त'ग्रहणं शब्दविशेषाऽनादरेणाऽर्थयोगे भवत्वित्येतदर्थम्। तदुक्तं-सहाऽर्थेनेति। अत एव क्वचिच्छब्दयोगं विनाऽपि भवति। तदाह-विनापीति। न्यायसिद्धेऽर्थे लिङ्गमप्याह-वृद्ध इति।

येनाङ्ग। नन्वङ्गशब्दस्याऽवयवे प्रसिद्धत्वात् 'येन गुणेन = काणत्वाऽऽदिनाऽवयवस्य विकारो लक्ष्यते, ततस्तृतीये'ति सूत्रार्थे 'अक्षि काण-

---

१ 'अनन्तरस्येति' इत्यारभ्य 'वा स्यात्' इत्यन्तो ग. घ. पाठः।

२ 'उपपदार्थान्वयनिमित्तकषष्ठीबाधकत्वेपि' ख. पाठः।

३ ख. पाठोऽयम्। ग. घ. नास्ति।

४ ख. पाठोऽयम्। ग. घ. नास्ति।

मस्ये'त्यादावेव प्रथमां बाधित्वा गुणवचनात्काणशब्दाऽऽदेरेव स्यात्, 'अक्ष्णा काण' इत्यादौ त्वक्षिशब्दात्षष्ठ्येव स्यादिति चेन्न । अर्श आद्यजन्ताऽङ्गशब्दाऽऽश्रयणेन तस्याऽवयविपरत्वात् । अत एवाऽङ्गग्रहणं चरितार्थम् । अन्यथा 'येन गुणेन गुणिनो विकारो लक्ष्यते' इत्येतावतैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । 'येने'ति सर्वनाम्ना च प्रकृत्यर्थभूतोऽवयव एव गृह्यते, व्याख्यानात् । स चाऽर्थाद्विकृत एव । न ह्यविकृतेनाऽङ्गेनाऽवयविनो विकारो लक्षयितुं शक्यते । तदाह—येनाऽङ्गेत्यादिना ।

अक्ष्णा काण इति । यद्यप्यक्ष्येव काणं, तथाऽप्यवयवधर्मस्य समुदाये आरोपाच्छरीरेऽपि व्यवहारो निरूढ इति ध्येयम् । ( चेक्षुर्नाशवान्सचक्षुष्कः 'काण'पदाऽर्थः । अक्षिपदार्थो गोलकम् । विकारप्रयुक्तत्वरूपः सम्बन्धस्तृतीयाऽर्थः । एवं च 'गोलकविकारप्रयुक्तचक्षुर्नाशविशिष्टचक्षुर्वान् सचक्षुष्क' इति बोधः ) । आतिशायनिकप्रकरणस्थभाष्यात्तु 'सर्वथा दृष्टिहीनः काण' इति लभ्यते ।

ननु काणशब्दस्याऽक्षिगतविकारमात्रप्रवृत्तिनिमित्तकत्वेनाऽक्षिशब्दप्रयोगो व्यर्थ इति चेन्न । सामान्योपक्रमे वाक्ये'अक्ष्णे'त्युक्ते भवत्याकाङ्क्षा, 'पश्यति, काणो वे'ति ? । तत्र पश्यत्यादिनिवृत्तये काणशब्दप्रयोगे दोषाऽभावात् । यथा 'द्वावानयकौ' 'द्वौ विप्रावि'ति । ईदृशरीत्येदृशानां साधुत्वे चेदमेव मानम् । षष्ठ्यपवादोऽयम् । तदाह—अक्षिसम्बन्धीति । अङ्गविकारः किमिति । 'अङ्ग'ग्रहणं प्रति प्रश्नः । अक्षि काणमिति । असत्यङ्गग्रहणे प्रथमां बाधित्वाऽत्रैव स्यात् । दृष्टिहीनमत्र काणपदार्थ इति दिक् ।

१ 'अन्यथा' इत्यारभ्य 'स्पष्टमेव' इत्यन्तो ग. घ. पाठः ।

२ ख. पाठोऽयं, ग. घ. नास्ति ।

३ 'द्वावान्वयकौ' ग. पाठः । 'द्वावाढकौ' 'द्वावानायकौ' इति वा पाठः स्यात् ।

४ 'अङ्गग्रहणप्रयोजनप्रश्नः' लघुशेखरे पाठः ।

५ 'दृष्टिहीनमत्र काणपदार्थः' इति ग. घ. पाठः । ख. नास्ति ।

**इत्थम्भूत।** इदमस्थमुप्रत्ययाऽन्त 'इत्थम्'शब्दः प्रकृत्यर्थं विहाय प्रकारमात्रे लाक्षणिकः। प्राप्त्यर्थकभूधातोः कर्त्तरि क्तः। कर्मविभक्त्यन्तेन इत्थम्शब्देन भूतशब्दस्य समासः। लक्षणशब्दः करणसाधनः। तस्य कर्मषष्ठ्यन्तेनेत्थम्भूतशब्देन समासः। तदाह—कञ्चिदित्यादि। एवं च 'सहैव पुत्रैरि'त्यादौ विद्यमानतावाचि'सह'शब्दयोगे 'इत्थम्भूतलक्षणे'इति-तृतीये'ति केषाञ्चिदुक्तिर्भ्रान्त्येति भावः। **लक्षणे इति।** 'तत्र वर्त्तमानादि'ति शेषः। **जटाभिरिति।** ज्ञाप्यत्वरूपः सम्बन्धस्तृतीयाऽर्थः। तदाह—जटाज्ञाप्येति। यत्तु 'जटाभिस्तापसो ज्ञात' इत्यर्थोज्ज्ञानक्रियायां जटाऽऽदीनां करणत्वादेव तृतीयासिद्धेरिदं व्यर्थमि'ति। तन्न। करणत्वाऽविवक्षायां षष्ठीबाधनाऽर्थमावश्यकत्वात्। एतेन 'हेतुतृतीययेदं सिद्धमि'-त्यपास्तम्। लक्ष्यलक्षणभावस्यैव विवक्षितत्वाच्चेति दिक्।

**संज्ञो।** 'जनी प्रादुर्भावे' इत्यस्य तु न ग्रहणं, तस्याऽकर्मकत्वात्। तदाह—जानातेरिति। कर्मशक्त्याश्रयो[1]ऽत्र तृतीयाऽर्थः। **संजानीत इति।** 'सम्प्रतिभ्यामनाध्याने' इति तङ्। कृद्योगे तु परत्वात्षष्ठी,—'पितुः संज्ञाता' इति। यत्तु[2] 'आध्याने परत्वादधीगर्थेति षष्ठी, 'मातुः संजानाती'ति हरदत्तः। तन्न। तत्र शेषाऽधिकारात्।

**हेतौ।** कारणमिह हेतुर्न तु शास्त्रीय एव, तस्य 'तत्प्रयोजको हेतुश्चे'ति चकारेण कर्त्तृसंज्ञाविधानात्कर्त्तृकरणयोरित्येव सिद्धेः।

ननु लौकिकहेतोरपि करणत्वादेव तृतीयासिद्धिरत आह—**द्रव्यादीति।** आदिना गुणक्रिययोः सङ्ग्रहः। **साधारणमिति।** तस्याऽपि जनके वर्त्तते इत्यर्थः। करणत्वन्तु क्रियाजनकवृत्तीति भावः[3]।

---

१　'आश्रयोऽत्र तृतीयार्थः' इति ख. पाठः।

२　'यत्तु' इत्यारभ्य 'शेषाऽधिकारात्' इत्यन्तः ख. पाठः। ग. घ. नास्ति। मनोरमास्थत्वात्।

३　इतोऽग्रे—'नन्वेवं क्रियाजनके करणेऽप्यनेनैव सिद्धौ, तत्र तृतीयाविधानं व्यर्थमत आह—निर्व्यापारेति।' इति ख. पाठः।

वैषम्यान्तरमाह—निर्व्यापारेति। करणत्वन्तु व्यापारवन्मात्रवृत्तीति भावः। एवं च शाब्दबोधवैलक्षण्याय करणे तृतीयाविधानमिति तत्त्वम्। 'बाणकरणकः प्राणवियोग' इति करणे बोधः। 'पुण्याऽभिन्नहेतुकं दर्शनमि'ति चाऽत्र।

स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह—करणत्वं त्विति। [3]दण्डेनेति। हेतुहेतुमद्भावस्तृतीयाऽर्थः। अत्र व्यापारसत्त्वेऽपि क्रियाजनकत्वाऽभावान्न करणत्वम्। पुण्येनेति। अत्र क्रियाजनकत्वेऽपि निर्व्यापारत्वात् न करणत्वम्। एवं सव्यापारं, व्यवधानेन फलोत्पादकं, क्रियाजनकमपि हेतुरेवेति बोध्यम्। फलमपीहेति। इह = एतत्सूत्रोदाहरणे, क्वचित्फलमपि हेतुत्वेन विवक्ष्यते इत्यर्थः। तस्याऽपि स्वज्ञानद्वारा निमित्तत्वादिति भावः। एतच्च 'प्रत्ययः' 'तदर्थं विकृतेः' 'धातोरेकाच' इत्यादिसूत्रेषु कैयटे स्पष्टम्। अध्ययनेनेति। '[4]अध्ययनहेतुको वास' इति बोधः। हेतुत्वं च स्वज्ञानद्वारा बोध्यम्। तादर्थ्यविवक्षायां तु चतुर्थ्यपि—'अध्ययनाय वसति'। चतुर्थ्यर्थ उपकारकत्वम्। तत्र प्रकृत्यर्थस्य निरूपकतयाऽन्वयः। '[6]अध्ययनोपकारको वास' इति बोधः। फलवाचकाद्विवक्षाभेदेन

१ 'बाणव्यापारसाध्यः प्राणवियोगः' ख. पाठः।

२ 'हेतुजन्यदर्शनम्' ख. पाठः।

३ 'दण्डेनेति। हेतुस्तृतीयाऽर्थः। प्रकृतिप्रत्ययार्थयोरभेदः सम्बन्धः। प्रत्ययाऽर्थस्य च जन्यतासम्बन्धेन तत्राऽन्वयः'—इति ख. पाठः।

४ 'अध्ययनाऽभिन्नहेतुको वासः' ख. पाठः।

५ इतोऽग्रे—'अपरे त्विह सूत्रे फलमपि हेतुशब्देन गृह्यते इत्यर्थः। तृतीयाऽर्थश्च फलत्वेन फलम्। तत्र प्रकृत्यर्थस्याऽभेदेनाऽन्वयः। तस्य च वासे जनकतया। एवं च 'अध्ययनाऽभिन्नफलजनको वास' इति बोधः' इत्याहुः'—इति ख. पाठः।

६ 'अध्ययननिरूपितोपकारतावान् वासः' ख. पाठः।

विभक्तिद्वयमित्येतावता प्राचामेतद्विषये चतुर्थी-तृतीययोर्विकल्पव्यवहार इति बोध्यम् ।

नन्वलं श्रमेणेत्यादौ क्रियां विनाऽपि करणे तृतीयादर्शनेन 'करणं क्रियाजनकत्वात्क्रियामात्राऽन्वयी'त्यनुपपन्नमत आह—**गम्यमानाऽपीति**। न तु [1]श्रूयमाणैवेत्याग्रह इति भावः। अलमिति। 'अलं'शब्दो निषेधाऽर्थकः। तदाह—**साध्यं नाऽस्तीति**। ननु 'साध्यमि'त्यर्थो[2]ऽध्याहारेऽपि तस्य [3]नामार्थत्वेन [4]द्रव्यत्वं, न [5]क्रियात्वमत आह—**इहेति**'। 'साध्यमि'त्यत्र प्रकृतिभागस्याऽर्थं प्रतीत्यर्थः। 'मा चापलायेति गणान्व्यनैषीत्' इत्यत्र तु 'यतध्वमि'ति शेषः।

**अशिष्टव्यवहार इति**। 'अशिष्टानां = सङ्कीर्णाऽऽचाराणां, यो व्यवहारः = क्रिया, तद्बोधकप्रयोगे, प्रत्यासत्तिन्यायेन यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाऽऽचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीये'त्यर्थः। इदं च 'दाणश्च सा चेच्चतुर्थ्यर्थे' इति सूत्रे भाष्ये स्पष्टम्। तेनैव चाऽयमर्थो ज्ञाप्यते। 'चतुर्थ्यर्थे विहिततृतीयायुक्ताद्दाण आत्मनेपदमि'ति तदर्थः। 'सा चेदि'त्यनेन तस्याः काचित्कत्वं ज्ञाप्यते। तेन 'अशिष्टव्यवहारे' इत्ययमपि भाष्योक्तांऽशः सिद्ध इत्याहुः।

**दास्येति**। 'दास्युद्देश्यकं दानमि'त्यर्थः। उद्देश्यस्तृतीयाऽर्थः।

इति तृतीया।

---

१ 'न तूच्चार्यमाणैवेत्याग्रहः' ख. पाठः।

२ 'मित्यस्याऽध्याहारेऽपि' ख. पाठः।

३ 'नामत्वेन' ख. पाठः।

४ 'द्रव्यवाचित्वं' ख. पाठः।

५ 'न क्रियावाचित्वं' ख. पाठः।

[ अथ चतुर्थी ]

कर्मणा यम्। दानस्येति। दाधात्वर्थस्येत्यर्थः। इदमुपलक्षणं, क्रियामात्रस्येत्याहुः। अत एव 'क्रियाग्रहणं कर्त्तव्यमि'त्यस्य, 'गत्यर्थकर्मणी'त्यस्य च प्रत्याख्यानपरं भाष्यं सङ्गच्छते। प्रत्याख्यानप्रकारश्च 'गत्यर्थे'तिसूत्रे उपपादयिष्यते। यत्तु 'अन्वर्थसंज्ञाबलेनाऽऽह—दानस्येति। तेन 'अजां नयती'त्यादौ नाऽतिप्रसङ्गः। दानं[1] चाऽत्र मुख्यम्। तेन 'रजकस्य वस्त्रं ददाती'त्यादौ नाऽतिप्रसङ्गः। तत्र हि ददातिर्भाक्त' इति। तद्भाष्यविरोधादुपेक्ष्यम्। अत एव 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाती'तिवृद्धिसूत्रस्थभाष्यप्रयोगः सङ्गच्छते। 'रजकस्य ददाती'ति तु शेषत्वविवक्षायां बोध्यम्। 'अजां नयती'त्यादि त्वग्रे परिहरिष्यते।

कर्मणेति। 'सम्बन्द्धुमि'ति शेषः। अभिप्रैति। इच्छतीत्यर्थः। कर्मणा[2] सम्बन्धश्च स्वत्वादिरूपः। एवं च दाधातुकर्मसम्बन्धितयेच्छाविषयोऽर्थः[3] संप्रदानमिति फलितम्। अयमेव च 'उद्देश्य' इत्युच्यते, 'शेषी'ति च। एवं च 'कर्मकारकाऽन्वितक्रियोद्देश्यः सम्प्रदानमि'ति फलितम्।

विप्रायेति। 'दा'धात्वर्थश्च स्वत्व-स्वत्वनिवृत्त्युभयाऽनुकूलो व्यापारः। तदेकदेशे स्वत्वे चतुर्थ्यर्थस्योद्देश्यस्य निरूपकतयाऽन्वयः। एवं च [4]विप्रोद्देश्यकगोनिष्ठस्वत्व-स्वस्वत्वनिवृत्त्युभयाऽनुकूलो व्यापार' इति बोधः। ( उद्देश्यश्चतुर्थ्यर्थः[5] )। उद्देश्यत्वं चाऽखण्डोपाधिः।

ननु 'कर्म'ग्रहणं किमर्थम्। 'यमभिप्रैती'त्येतावताऽप्युद्देश्यत्वलाभात्।

१ 'दानं चाऽत्र परस्वत्वाऽऽपत्तिपर्यन्तो व्यापारः' इति ख. पाठः।

२ 'कर्मणा सम्बन्धश्च कर्मनिष्ठफलनिरूपकत्वम्' इति ख. पाठः।

३ 'दाधातुकर्मनिष्ठफलनिरूपकतयेच्छाविषयो दानसंप्रदानमिति फलितम्' इति ख. पाठः।

४ 'विप्राऽभिन्नेच्छाविषयनिरूपितगोनिष्ठस्वत्व-स्वस्वत्वनिवृत्ति' इति ख. पाठः।

५ ख. पाठोऽयम्। ग. घ. नास्ति।

'क्रियाग्रहणं कर्त्तव्यमि'ति वार्त्तिकं च न कार्यमित्यपरं लाघवमिति चेन्न। गोरप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्या एव सञ्ज्ञा मा भूदित्येतदर्थं तत्सत्त्वात्। न च कर्मसंज्ञाऽनवकाशा। सामर्थ्यात्पर्यायाऽऽपत्तेः। 'कारकप्रकरणे च सामर्थ्यगम्यः प्रकर्षो नाऽऽश्रीयते, नाऽन्तरङ्गबहिरङ्गभावोऽपी'ति भाष्य-कैयटयोः स्पष्टम्। एवं च कर्मणश्चतुर्थीनिमित्तत्वप्रदर्शनेन कर्मश्रुत्यपेक्षया चतुर्थीश्रुतेर्बलवत्त्वमपि सूचितम्। अत एव प्रयोजकलक्षणे 'प्रासनवन्मैत्रा-वरुणाय दण्डप्रदानमि'त्यधिकरणे 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छ-ती'ति दण्डप्रदानं न प्रतिपत्तिः, किन्तु द्वितीयाऽपेक्षया बलीयस्या चतुर्थी-श्रुत्या मैत्रावरुणसंस्कारकमिति मीमांसकाः। 'कर्मणा यमभिप्रैती'त्युक्त्या हि 'यमि'ति निर्दिष्टस्य प्रधानत्वलक्षणं शेषित्वं, 'कर्मणे'ति निर्दिष्टस्य चाऽप्रधानत्वलक्षणं शेषत्वं प्रतीयते। 'कर्मणा करणभूतेन यमभिप्रैती'ति तदर्थात्[1] गौर्हि विप्रविषयेच्छां प्रति करणम्। 'गां दास्यामी'ति हि विप्र-मिच्छति। 'अजां ग्रामं नयती'त्यादौ ग्रामस्य सम्प्रदानत्वं तु न। अजाया इव परत्वात् 'कर्त्तुरि'ति कर्मसंज्ञया बाधात्। न हि मीमांसकोक्तं बलवत्त्वं परत्वादिबाधकम्।

'यं स'ग्रहणं किमर्थम्?। तदभावे ह्यभिप्रयत एव स्यात्। श्रुतपदार्थ-सम्बन्धेनैव निराकाङ्क्षत्वेऽध्याहारे मानाऽभावात्। कर्त्तृसंज्ञा त्वकर्मक-धातुविषये साऽवकाशा। ततश्चोपाध्यायाय शिष्येण गौर्दीयते इत्यर्थे

---

१ इत उत्तरं—'ग्रामस्याऽजानयनोद्देश्यत्वाऽभावाच्च। 'अजा ग्रामसम्बद्धा भवत्वि'-तीच्छया हि नयनं, न तु 'ग्रामोऽजासंबद्धो भवत्वि'तीच्छया। यद्धि कर्म यदर्थं, तेन कर्मणाऽभिप्रेयमाणस्यैव सम्प्रदानत्वात्। यदि तु 'ग्रामोऽजा-सम्बद्धो भवतु'इतीच्छया नयनं, नयतेश्च संयोगाऽनुकूलव्यापारमात्रमर्थः[1], फलताऽवच्छेदकसम्बन्धोऽजामात्रनिष्ठस्तदा भवत्येव 'अजां ग्रामाय नयती'त्याहुः' इति ख. पाठः।

---

1 'मात्रं तदर्थः' इति पाठान्तरम्।

'शिष्यायोपाध्यायस्य गौर्दीयते' इति स्यात्। न च शिष्यस्य कर्तृत्वाऽभावे कथं गोः कर्मत्वम्। कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वादित्याहुः।

दानीय इति। बाहुलकात्सम्प्रदानेऽनीयः। 'कर्मणा यमभिप्रैती'त्युक्तेरकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह-क्रियया यमिति। 'कर्मरहितक्रियोद्देश्योऽपि सम्प्रदानमि'त्यर्थः। अकर्मकेषु सावकाशाया अस्याः सकर्मकेषु धात्वर्थव्यधिकरणफलाऽऽश्रये कर्मसंज्ञया बाधादकर्मका एवाऽस्योदाहरणम्। तदाह-पत्ये शेते इति। 'पत्युद्देश्यकं शयनमि'ति बोधः। न चैवं दानादीनां तदर्थत्वात्तादर्थ्ये चतुर्थ्यैव सिद्धे किमनया सम्प्रदानसंज्ञयेति वाच्यम्। 'दाशगोघ्नौ सम्प्रदाने' इत्यर्थमावश्यकत्वात्।

यत्तु 'चतुर्थ्या समासे कारकपूर्वपदकार्योऽर्थमावश्यकमिति तदर्थमि'ति केचित्। तन्न। तादर्थ्यचतुर्थ्यैव सिद्धे 'चतुर्थी सम्प्रदाने' इति सूत्रं 'रुच्यर्थानामि'त्यादिविषये चतुर्थ्यर्थमि'तिभाष्यस्य निर्दलताऽऽपत्तेः।

किञ्च 'चतुर्थी तदर्थे'ति सूत्रेण प्रकृतिविकृतिभाव एव समासेन सर्वत्र तादर्थ्यचतुर्थीपक्षे प्रकृतिविकृतिभावाऽभावे समासाऽभावकल्पनमवश्यं स्वीकार्यमिति दिक्।

पशुनेति। फलाऽऽश्रयस्तृतीयाऽर्थः। उद्देश्यो द्वितीयाऽर्थः। तदाह-पशुमित्यादि। एतच्च दानाऽर्थकयजधातुमात्रविषयम्। पूजाऽर्थत्वे तु पशोः करणत्वं न्यायसिद्धमित्याहुः। कैयटस्तु 'छान्दसमेतत्। छन्दसि च सर्वविधीनां वैकल्पिकत्वात् 'पशुं रुद्राय यजते'इत्यपि भवत्येवे'त्याह।

रुच्यर्थानाम्। अन्यकर्तृक इति। अभिलषतिकर्त्रपेक्षया अन्यत् = अभिलषति कर्म, तत्कर्तृक इत्यर्थः। यत्किञ्चिद्विषयकप्रीत्यनुकूल-

१ 'इति वाच्यम्। 'विप्रोद्देश्यकं दानमि'त्यर्थबोधनाऽर्थमावश्यकत्वात्। चतुर्थ्या समासे कारकपूर्वपदकार्योऽर्थमावश्यकत्वाच्चेति हेलाराजाऽऽशयः'— इति ख. पाठः।

२ 'दाशगोघ्नौ' इत्यारभ्य' 'दिक्' इत्यन्तो ग. घ. पाठः।

व्यापाराऽऽश्रयो ह्यभिलषतिकर्त्ता । 'हरिर्भक्तिमभिलष्यती'ति सम्प्रत्ययात् । यत्किञ्चिदाश्रितप्रीत्यनुकूलः, प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्त्तेति भावः । एवं चाऽभिलषते रुच्यर्थत्वाऽभावान्न तद्योगे सम्प्रदानत्वम् । तद्ध्वनयन्नाह—हरिनिष्ठेति । कर्त्रीति । तदनुकूलव्यापाराऽऽश्रय इत्यर्थः ।

'प्रीञ् तर्पणे' इतिक्र्यादेश्चुरादेर्वा, 'प्रीङ् गताविति'दैवादिकस्य सकर्मकत्वे तस्माद्वा 'प्रीयमाण' इत्यत्र कर्मणि लटः शानच् । 'ज्ञीप्स्यमान' इति साहचर्याच्च ।

हरये रोचते इत्यस्य हरिं प्रीणयतीत्यर्थः । कर्मसंज्ञायां प्राप्तायामिदम् । न च 'प्री'धातोरपि रुच्यर्थत्वेन 'प्रीयमाण' इति कर्मणि शानच् अनुपपन्न इति वाच्यम् । अनेनैव निर्देशेन 'प्री'धातूपात्तप्रीत्याश्रयस्य न सम्प्रदानत्वमिति ज्ञापनादक्षतेः । अत एव 'हरिं प्रीणयती'त्यादिप्रयोगाः सङ्गच्छन्ते । तदुक्तं हरिणा—

'हेतुत्वे, कर्मसंज्ञायां, शेषत्वे वाऽपि कारकम् ।
रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते' ॥ (इति) ।

इति दिक् । हेतुत्व–षष्ठीप्राप्त्योर्विषयं त्वग्रे वक्ष्यामः ।

पथीति । कर्मादाविवाऽधिकरणे मा भूदित्यर्थः । अत एव 'आदित्यो रोचते' इति दीप्त्यर्थे संज्ञा नेत्याहुः ।

श्लाघह्नु । 'ज्ञीप्स्यमान'पदेन यद्विषयकज्ञानाऽनुकूलव्यापाराऽनुकूलव्यापारः स गृह्यते'[1] इत्येके । प्रथमोपस्थितत्वाण्णिच्प्रकृत्यर्थकर्मैव[2] ग्राह्यम् । तस्याऽपि ज्ञापनविषयेच्छाविषयत्वाच्छानजुपपत्तिरिति[3] तद्भावः । ज्ञापनं च श्लाघाऽऽदिधात्वर्थः । कर्मत्वं चतुर्थ्यर्थः । श्लाघतेः स्तुतिपूर्विका बोधना अर्थः । स्तुतिश्च गुणवत्त्वप्रतिपादनम् । 'स्मरादि'ति हेतौ पञ्चमी । एवं च स्तुत्या कृष्णमन्यं बोधयतीत्यर्थः ।

---

१ 'संगृह्यते' इति ख. पाठः ।

२ 'प्रथमोपस्थितत्वात्प्रकृत्यर्थं' ख. पाठः । ३ 'ज्ञानविषयेच्छा' ख. पाठः ।

ह्नुत इति। सपत्नीभ्यः कृष्णं ह्नुवाना, तया ह्नुत्या कृष्णमन्यं 'बोधयतीत्यर्थः। 'कृष्णं ह्नुवाने' त्यन्तम् आर्थिकाऽर्थकथनम्। अत्राऽपि ह्नुतिपूर्विका बोधना ह्नुतेरर्थः। एवं 'तिष्ठते' 'शपते' इत्यनयोरपि स्थित्या, शपथेन च कृष्णमन्यं बोधयतीत्यर्थः। प्रकाशनस्थेयाऽऽख्ययोः 'शप उपालम्भने' इति तद्भिन्नत्याहुः। अन्ये तु 'ज्ञीप्स्यमान'पदेन ण्यर्थकर्मण एव ग्रहणम्। प्रधानभूतण्यर्थकर्मण एव ग्रहीतुमुचितत्वात्। अत एव 'कृष्णायाऽऽत्मानं, परं वा श्लाघ्यं कथयती'त्यर्थः।[1]

अत्र वाक्ये 'कर्मणा यमभिप्रैती'ति सम्प्रदानत्वम्। तदविवक्षापूर्वकशेषत्वविवक्षायां षष्ठ्यां प्राप्तायामिदं वचनम्। कृष्णमन्यं वा ह्नुवाना तां ह्नुतिं कृष्णं बोधयतीत्यर्थः। 'तिष्ठते' 'शपते' इत्यादेश्च 'स्थित्या, शपथेन च स्वाऽभिप्रायं कृष्णं बोधयती'त्यर्थः। स्तुतिमात्राऽर्थत्वे 'कृष्णं श्लाघते' इत्येवेत्याहुः[3]। ध्वनितं चेदं मतद्वयं 'शप उपालम्भने' इति वार्त्तिके कैयटेन 'ज्ञीप्समाने विवदन्ते,-'य आख्यायते स सम्प्रदानमि'ति। आख्यायते बोध्यत इत्यर्थ इत्यन्ये। 'यस्मा आख्यायते स इति के चित्' इति ग्रन्थेन। 'प्रकृत्यर्थकर्मण एव ग्रहणमि'त्याद्याऽऽशयः। 'ण्यर्थकर्मण एव 'ज्ञीप्समान'पदेन ग्रहणमि'त्यन्त्याऽऽशयः[4]। अन्त्ये 'ज्ञाप्यमान' इत्येव

१ 'इति तद्भ्। कृष्णं स्तौतीत्यर्थ इति मनोरमायाम्। स्तौतेर्बोधनपर्यन्तं लक्षणा'—इति ख. पाठः।

२ इतोऽग्रे-'ह्नुते' इत्युपादाय यस्य कस्य चित् ह्नुतिमित्यर्थे' इति प्राञ्चः। श्लाघतेः स्तुतिविषया बोधनाऽर्थः। विवरणवाक्यमात्मनः श्लाघ्यत्वं बोधयतीत्येतत्फलिताऽर्थकथनं बोध्यम्। ह्नुतेश्च ह्नुतिविषया सेति बोध्यम्' इति ख. पाठः।

३ 'इत्याहुः' इति ग. घ. पाठः ख. नास्ति।

४ इतोऽग्रे—'तत्राऽऽद्यं मतं युक्तम्। अन्त्ये हि 'ज्ञाप्यमान' इत्येव सिद्धे सन उपादानवैयर्थ्याऽऽपत्तिः। 'ण्यन्ते कर्त्तुश्च कर्मण' इत्युक्तया ज्ञाप्यमानपदे तस्यैव ग्रहणसिद्धेः'-इति ख. पाठः।

सिद्धेः; सन्स्त्रारस्येनोभयोरपि 'ज्ञीप्स्यमान'पदेन ग्रहणमिति बहवः। 'ज्ञीप्स्यमान' इति ज्ञापनवचनात् ज्ञपेः सन्नन्तात्कर्मणि शानच्।

पथीति। कर्मण एव यथा स्यात्, अधिकरणाऽऽदेर्मा भूदिति भावः। न च 'ज्ञीप्स्यमान'पदाऽभावे सूत्रस्य शेषत्वविवक्षायां संज्ञाऽन्तराऽप्राप्तिविषये चारितार्थ्येन, परत्वात्तत्तत्संज्ञाभिर्बाधसिद्धेः कथमेतदिति वाच्यम्। 'देवदत्तं रोचते' इत्यस्याऽप्यापत्तेरित्याशयात्।

धारेरु। 'धृङ् अवस्थाने' इति ण्यन्तस्य ग्रहणं-'धारेरि'ति। षष्ठ्यां प्राप्तायां वचनम्। धारयतेः प्रयोग इति। तदर्थाऽन्वयिन इत्यर्थः।

भक्ताय धारयतीति। ध्रियमाणं = स्वरूपेणाऽवतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते इत्यर्थः। न चोत्तमर्णभक्ताऽऽदेरपि तदवस्थापनरूपाऽधमर्णव्यापारप्रयोजकत्वात् 'तत्प्रयोजको हेतुश्चे'ति परत्वात् हेतु-कर्त्तसंज्ञाऽऽपत्तिरिति वाच्यम्। कारकाऽधिकाराद्धात्वर्थप्रयोजकव्यापारजनकस्यैव तत्संज्ञाप्रवृत्त्याऽत्राऽप्रवृत्तेः। न हि स व्यापारोऽत्र धात्वर्थ इति दिक्।

ननु सजातीयद्रव्याऽन्तरदानमङ्गीकृत्याऽशुभाऽदृष्टजनकपरदत्तपरकीयद्रव्याऽऽदानमृणम्। एवं च तत्र मोक्षस्य तद्रूपत्वाऽभावेन कथं भक्तस्योत्तमर्णत्वमिति चेन्न। अवश्यदेयत्वेन तत्राऽपि ऋणव्यवहारात्। 'धृञ् धारणे' इति ण्यन्तस्य तु न ग्रहणम्, व्याख्यानात्।

प्रकर्षविवक्षायां त्विति। फलाश्रयत्वेन विवक्षायामित्यर्थः। परत्वादिति। इदं सूत्रं शेषत्वविवक्षायां चरिताऽर्थमिति भावः। उदाहरणे चतुर्थ्यर्थः सम्बन्धः। स्पृहिरिच्छाऽर्थः। 'पुष्पसम्बन्धीच्छे'त्यर्थः। अत एव 'स्पृहणीयशोभमि'त्यादौ कर्मण्यनीयर्। फलाऽऽश्रयत्वेन विवक्षणात्। 'कुमार्य इव कान्तस्य त्रस्यन्ति, स्पृहयन्ति चे'ति तु विभक्ति-

---

१ 'कथमेतदिति वाच्यम्। अधिकरणत्वाऽविवक्षायां तदभावाऽर्थमावश्यकत्वात्। सन्नन्तमुच्चारणं हि ज्ञीप्स्यमानत्वाऽभावबोधनाय। 'स्मरादि'ति हेतुव्यावृत्त्यर्थं चारितार्थ्यादेति दिक्। एवमग्रेऽपि बोध्यम्'—इति ख. पाठः।

विपरिणामेन 'कान्ताय स्पृहयन्ती'ति वा, 'भोगाये'त्यध्याहृत्य वा व्याख्येयम्, कर्मणः शेषत्वविवक्षया वा नेयमित्याहुः[1]।

यत्तु हेलाराजेन 'कर्मसंज्ञायाः, शेषषष्ठ्याश्च बाधिके'त्युक्तम्। तन्न। शेषत्वविवक्षायां चारितार्थ्येन, कर्मसंज्ञाबाधकत्वाऽयोगात्। अपरे तु ईप्सितपदेन फलाऽऽश्रयत्वेनैवोपस्थितेः कर्मसंज्ञापवाद एवाऽयम्। किञ्च कारकाऽधिकारात्कारकत्वेन विवक्षायामेवैतत्प्रवृत्तिरुचिता। कारकत्व-विवक्षा च क्रियाजनकत्वविवक्षैव। क्रियासम्बन्धित्वमात्रविवक्षैव च षष्ठी-विषयः[3]। 'पुष्पाणि स्पृहयती'त्यादौ त्वध्याहृतदर्शनाऽऽदिक्रियानिरूपितं कर्मत्वं [4]बोध्यम्। शेषत्वविवक्षायां षष्ठ्यां 'कान्तस्य स्पृहयन्ती'ति यथाश्रुत-मेव साधु। 'स्पृहणीयं पुष्पमि'त्यादौ तु बाहुलकात्सम्प्रदाने एवा-ऽनीयरित्याहुः[5]।

क्रुधद्रुह। एषामर्थ इवाऽर्थो येषामित्यर्थः। तत्र क्रुधद्रुहावकर्मकौ। तद्योगे शेषषष्ठ्यपवादोऽयम्। वाक्चक्षुरादिविकाराऽनुमेयप्ररूढकोपरूप-

---

१ 'कर्मणः' इत्यारभ्य 'नेयम्' इत्यन्तो ग. घ. पाठः।

२ इतोऽग्रे—'ईप्सित'ग्रहणन्त्वधिकरणत्वाद्यविवक्षायां ग्रामादौ व्यावृत्त्यर्थं बोध्यम्'—इति ख. पाठः।

३ इतोऽग्रे—'यत्र तु 'धारेरि'त्यादौ, 'अकथितं चे'त्यादौ च तत्त्वाऽसम्भवस्तत्र यथाकथञ्चित्कारकत्वं द्रष्टव्यम्' इति ख. पाठः।

४ इतोऽग्रे—'अत एव हरदत्तेन 'शेषत्वविवक्षायां षष्ठ्येवे'त्युक्तम्। एवं च 'कान्तस्य स्पृहयन्ती'ति यथाश्रुतमेव साधु' इति ख. पाठः।

५ इतोऽग्रे–'यत्तु 'ईप्सितमात्रे इयम्। संज्ञाप्रकर्षविवक्षायान्तु परत्वात्कर्मत्वम्। एवं चेप्सितमात्रे, ईप्सिततमे वा शेषत्वेन विवक्षिते षष्ठ्येवे'ति। तन्न। शेषत्वविवक्षितत्वाऽतिरिक्ते ईप्सितमात्रत्वस्य दुर्वचत्वात्। प्रकृत-धात्वर्थप्रधानीभूतव्यापारजन्यफलाऽऽश्रयत्वस्यैवाऽत्र सत्त्वेन वास्तवति-वैलक्षण्यात्'—इति ख. पाठः।

क्रोधजन्यस्य अपकारविषयेच्छारूपद्रोहजन्यस्य फलस्य देवदत्ताऽऽदौ सत्त्वेऽपि धात्ववाच्यत्वात् । अन्त्यौ उत्कर्षविरोधिधर्माऽऽरोपाऽनुकूलव्यापार-गुणवद्विषयदोषाऽऽरोपाऽनुकूलव्यापाराऽर्थौ । एतद्विषये कर्मसंज्ञायां प्राप्तायां वचनमित्याहुः ।

भार्यामीर्ष्यतीति । नाऽत्र भार्यां प्रति कोपः, किन्तु परैर्दृश्यमानां तां न क्षमते इत्येवेति भावः । कोपप्रभवा एवेति । प्रत्युदाहरणे न कोपजन्येर्ष्या, किन्त्वन्यपुरुषदर्शनजन्येति भावः । क्रुपयोगे तु नेदं प्रवर्त्तते । 'न ह्यकुपितः क्रुध्यती'ति भाष्येण प्ररूढकोपस्यैव क्रुध्यर्थताबोधनेन क्रुपेस्तदर्थत्वाऽभावात् । 'कुप्यति कस्मै चिदि'त्यत्र तु 'क्रियया यमभिप्रैती'ति सम्प्रदानत्वम् । न[1] चैवं क्रुधिद्रुहोर्ग्रहणं व्यर्थम् । उद्देश्यत्वाऽभावादित्याहुः । 'चित्तदोषाऽर्थानामि'ति तु नोक्तम्[2] । द्विषादावतिप्रसङ्गात् ।

क्रोधाऽऽदयश्चेतनविषया एव, द्वेषस्त्वचेतनविषयोऽपि, 'औषधं द्वेष्टी'तिप्रयोगात् ।

क्रुधद्रुहोः । 'उपसृष्ट'पदं सोपसर्गरूपाऽर्थे वैयाकरणनिकायप्रसिद्धम्[3] । तदाह—सोपसर्गयोरिति । पूर्वसूत्राऽपवादोऽयम् ।

यदीय इति । यदीयशुभाऽशुभसम्बन्धीत्यर्थः । तत्सम्बन्धिशुभाऽशुभप्रश्न एव [4]'तत्प्रश्न' इति व्यवह्रियते इति भावः । राधीक्ष्योः प्रश्नविषयपर्यालोचनमर्थः[5] । कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ । अत एव श्यन् । 'राधोऽकर्मकादेवे'ति गणसूत्रात् । धात्वर्थैकदेशे

---

१ 'न चैवं क्रुधिद्रुहोर्ग्रहणं व्यर्थम् । उद्देश्यत्वाऽविवक्षायां चारितार्थ्यादित्याहुः' इति ख. पाठः ।

२ इतोऽग्रे 'चित्तवृत्तिविशेषाऽनुकूलव्यापारस्तदर्थः' इति ख. पाठः ।

३ 'वैयाकरणनिकाये' इति लघुशेखरे पाठः ।

४ 'विप्रश्न' इति पाठोऽत्र स्यात् ।

५ 'प्रश्नविषयाऽर्थपर्यालोचनमर्थः' इति लघुशेखरपाठः ।

प्रश्नविषये कृष्णस्याऽन्वयः । न च प्रश्नविषयरूपफलाऽऽश्रयतया कर्मत्वे प्राप्ते इत्येव वक्तुं युक्तम् । तस्य साक्षात्परम्परया वा प्रधानीभूतप्रकृत-धात्वर्थव्यापाराऽजन्यत्वेन तदप्राप्तेः । तदेतत्फलितमाह—पृष्टो गर्ग इत्यादि । 'यं प्रती'त्यनुवृत्त्यैव सिद्धे 'यस्ये'ति चिन्त्यप्रयोजनमिति हरदत्तादयः ।

'प्रत्याङ्भ्यामि'तिद्विवचननिर्देशेन प्रत्येकमुपसर्गसम्बन्ध इत्याशयवा-मुदाहरति—गां प्रतिशृणोतीति । प्रतिपूर्वः, आङ्पूर्वश्च श्रुधातुः प्रवर्त्तना-पूर्वकाऽभ्युपगमे वर्त्तते । तत्र विप्रस्य कर्त्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम् । चतुर्थ्यर्थ आश्रयत्वम् । प्रवर्त्तनायाश्च जन्यतासम्बन्धेना-ऽभ्युपगमेऽन्वयः । तत्फलिताऽर्थमाह—विप्रेण मह्यमिति ।

अनुप्रति । अनुप्रतिभ्यां-'गृणाः', तस्येति विग्रहः । यद्वा 'अनुप्रती'ति भिन्नं पदं पञ्चम्यन्तम् । 'प्रकृतिवदनुकरणमि'त्यतिदेशेनाऽव्ययत्वात्सुब्लुक् । 'गृण' इतिश्नान्ताऽनुकरणात्षष्ठी । पूर्वसाहचर्यादिहाऽपि प्रत्येकमुपसर्ग-सम्बन्ध इत्याशयेनोदाहरति—अनुगृणातीति । शंसितुः शंसनविषय-हर्षाऽनुकूलव्यापारलक्षणं प्रोत्साहनम् अनुप्रतिगृणात्योरर्थः । तत्र पूर्वो व्यापारः शंसनमेव गृह्यते । उपस्थितत्वात् । शंसितुश्च प्रोत्साहने कर्म-तयाऽन्वयः । होतुश्च शंसितर्यभेदाऽन्वयः । एवं च कर्मसामानाधिकर-ण्यात्कर्मत्वे प्राप्ते इदं वचनम् । तदेतत्फलितमाह—होता प्रथममिति । प्रोत्साहयतीति । 'ओथामे'त्यादिशब्दैरि'ति शेषः ।

परिक्रयणे सम् । क्रयो धनाऽर्पणेनाऽऽत्यन्तिकस्वीकरणम् । तस्य समीपं परिराचष्टे । तच्च नियतकालम् । ततो न्यूनत्वादित्याशयेनाऽऽह—

---

१ इतोऽग्रे—'षष्ठ्यां प्राप्तायामिदं वचनम्'—इति ख. पाठः ।

२ 'प्रधानीभूतप्रकृतधात्वर्थव्यापाराऽजन्यत्वेन, 'मासमास्ते' इत्यादिवत् तज्ज्ञानप्रयोज्यज्ञानविषयत्वाऽभावेन च तदप्राप्तेः' इति ख. पाठः ।

३ श्नाप्रत्ययान्तात्प्रथमैकवचने 'गृणाः' इति रूपम् ।

नियतेति। भृतिर्वेतनम्। शतायेति। करणपदार्थस्यैव सम्प्रदानत्वेन मानमत्र। शतव्यापारश्चाऽत्र दानरूप एवेति बोध्यम्।

तादर्थ्ये इति। तस्मै = कार्यायेदं तदर्थं = कारणम्। तस्य भावः तादर्थ्यम् = उपकारकत्वरूपः सम्बन्धः, तत्र चतुर्थी। सा चेयमुपपद-विभक्तित्वाद्विशेषणादेव। 'मुक्तये' इत्यत्र 'मुक्त्युपकारकं हरिभजनमि'ति बोधः। 'ब्राह्मणाय दधी'त्यत्र ब्राह्मणोपकारकं दधीत्यर्थः। ब्राह्मणोपकारकत्वं च तद्भोजनोपकारकत्वेन बोध्यम्। 'स्वर्गाय पुण्यमि'त्यादावप्यनेनैव चतुर्थी बोध्या। अत्र पुण्याऽऽदिशब्देभ्यो हेतुतृतीया न। हेतुहेतुमद्भावस्य चतुर्थ्यैव बोधनात्। यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी, 'गुरोरिदं गुर्वर्थमि'तीति, अत्र भाष्ये स्पष्टम्।

क्लृपीति। क्लृपेः सप्तमीयम्। 'क्लृपी'ति चाऽर्थग्रहणं, व्याख्यानात्। सम्पत्तिश्चाऽभूततद्भावरूपोत्पत्तिः। तदयमर्थः—'क्लृप्यर्थकधातुयोगे उत्पद्य-मानेऽर्थे वर्त्तमानाच्छब्दाच्चतुर्थी'ति। इदं च प्रकृतिविकृतिभावे एव। प्रकृतिविकृत्योर्भेदविवक्षायामनेन विकृतिवाचकाच्चतुर्थी। अभेदविवक्षा-

---

१ 'करणतृतीयासमानार्थेयम्' ख. पाठः।

२ इतोऽग्रे—'प्रकृत्यर्थस्य प्रत्ययाऽर्थे साक्षात्परम्परया वाऽन्वयः। 'मुक्तये' इत्यत्र स्वनिरूपितत्वरूपसाक्षात्सम्बन्धेन, 'ब्राह्मणाय दधी'त्यादौ स्वकर्तृक-भोजननिरूपितत्वरूपपरम्परयेति बोध्यम्' इति ख. पाठः।

३ 'चतुर्थ्यैव बोधनात्। हेतुतृतीयाया अपि षष्ठ्यपवादतया विशेषणादेव विधेश्चेत्याहुः'—इति ख. पाठः।

४ 'तदा षष्ठीति, अत्र भाष्ये स्पष्टम्' ख. पाठः।

५ 'इदं च प्रकृतिविकृतभावे एव। उपपदविभक्तित्वात्। सम्बन्धोऽत्र चतुर्थ्यर्थः'—इति ख. पाठः।

६ 'अभेदविवक्षायान्तु कर्तृत्वात्प्रथमैव परत्वात्, 'भक्तिर्ज्ञानं कल्पते' इत्याहुः। न चैवं भेदविवक्षायां तादर्थ्ये चतुर्थ्यैव सिद्धम्। क्लृप्यर्थे सम्बन्धसामा-

यान्तु कर्त्तृत्वात्प्रथमैव, परत्वात्–'भक्तिर्ज्ञानं कल्पते' इत्यादि।'भक्तिकर्त्तृको ज्ञानाऽभिन्नः परिणामः' इत्युदाहरणेऽर्थः । 'भक्त्यभिन्नज्ञानमुत्पद्यते' इत्यर्थः प्रथमायामित्यादि विस्तरा मञ्जूषायां द्रष्टव्यः ।

वातायेति । ज्ञापकत्वरूपसम्बन्धश्चतुर्थ्यर्थः । प्राणिनां शुभाऽशुभसूचको भूतविकार उत्पातः । तेन ज्ञापितेऽर्थे वर्त्तमानाच्चतुर्थीत्यर्थः ।

हितयोगे चेति । सम्बन्धोऽत्र चतुर्थ्यर्थः। 'तस्मै हितमि'ति निर्देशाज्ज्ञापकात्सिद्धमेतदिति पञ्चमे कैयटः। यत्तु हरदत्तः-'चतुर्थी चाशिषी'तिसूत्रविहिताऽऽशीरर्थचतुर्थ्या निर्वाहात्सिद्धमेतदिति न तत् ज्ञापकमिति । तन्न। आशीरर्थस्य वृत्तौ दुरुपपादत्वात्। आशीरर्थयोगे ह्याशीर्विषयस्य विधेयत्वं, तदाश्रयस्योद्देश्यत्वं च प्रतीयते। न हि वृत्तावुद्देश्यविधेयभावेनाऽन्वयो व्युत्पत्तिसिद्धः। एतेन 'चतुर्थी तदर्थे'ति हितसुखयोगे समासविधानं तद्योगे चतुर्थीज्ञापकमि'ति ग्रन्था व्याख्याताः। चात्सुखयोगेऽपि बोध्यमिति दिक् ।

---

न्येनाऽन्वये साधुत्वाऽर्थं तस्याऽवश्यकत्वादित्याहुः । कश्चित्त्वभेदविवक्षायामप्यनेन चतुर्थीत्याह । तच्चिन्त्यम् । यदा तु 'जनिकर्त्तु'रित्यपादानत्वविवक्षा, तदा पञ्चमी —'भक्तेर्ज्ञानं कल्पते' । ज्ञानस्याऽभिहितकर्त्तृत्वात्ततः प्रथमैव । उत्पत्तिश्च तदा क्लृपेरर्थः ।अत्रेदं तत्त्वम्–'कल्पते' इत्यादेः परिणमत इत्यर्थः । परिणामश्च रूपाऽन्तरप्राप्तिः । तदेकदेशे रूपाऽन्तरे ज्ञानाऽऽदेर्विकारस्याऽभेदेनाऽन्वयात् द्वितीयायां प्राप्तायामनेन चतुर्थी विधीयते। एवं चाऽत्र चरिताऽर्था चतुर्थी प्रकृतिविकृत्योरभेदविवक्षायां भवत्यर्थककल्पियोगे परत्वात्प्रथमया बाध्यते 'यवागूर्मूत्रं भवती'त्यत्र । अत एव तत्र तयोरभेदाऽन्वयः सुलभः । 'ज्ञानाऽऽत्मना परिणमते' इत्यादावात्मशब्दस्तद्वृत्तिधर्मपरः । ज्ञानत्वेन परिणमते इत्यर्थः । एवं च तस्य विकृतिवाचकत्वाऽभावान्न चतुर्थी । किन्तु प्रकृत्यादित्वात्तृतीया । ज्ञानत्वविशिष्टरूपाऽन्तरप्राप्तिर्भक्तिकर्तृकेत्यर्थः'—इति ख. पाठः ।

क्रियार्थोपपदस्य । क्रिया-अर्थः-फलं यस्य तत् क्रियाऽर्थम् । तेन स्ववाचकं लक्ष्यते । तेन क्रियाफलकाऽर्थवाचकमुपपदं यस्येत्यर्थः । क्रियाफलकाऽर्थश्च प्रत्यासत्त्या, 'तुमुन्ण्वुलौ क्रियायामि'तिसूत्रमहिम्ना च क्रियारूप एव गृह्यते । 'स्थानि'शब्दश्चाऽप्रयुज्यमानत्वरूपेऽर्थे वैयाकरणनिकायप्रसिद्धः । क्रियाऽर्थक्रियोपपदत्वं च तुमुनादेरेव सम्भवतीत्यर्थात्तयोरेवाऽन्यपदार्थत्वम्[1]। तदाह–क्रिया[2] क्रियाऽर्थेति । तुमुन इति । ण्वुलादेरुपलक्षणम्[3] । 'फलेभ्यो याती'त्यस्य 'फलान्याहारक' इत्यपि विवरणसम्भवात्[4] ।

---

१ 'तुमुन्ण्वुलोरेव सम्भवतीति, अर्थात्तयोरेवाऽन्यपदार्थत्वम् । तदाह'—इति ख. पाठः ।

२ 'क्रियार्था क्रिये'ति तु सम्प्रति मुद्रितसिद्धान्तकौमुद्यां पाठः ।

३ 'ण्वुलोऽप्युपलक्षणम्' ख. पाठः ।

४ इतोऽग्रे–'कर्मणीति । तथा च तुमुन्प्रकृत्यर्थफलाश्रयश्चतुर्थ्यर्थः । द्वितीयाऽपवादश्चाऽयमिति भावः । ननु पदजन्यपदार्थोपस्थितेः शाब्दबोधाऽङ्गत्वात् 'फलेभ्यो याती'त्यादौ चतुर्थ्यर्थाऽन्वययोग्यस्याऽऽहरणस्य तथोपस्थितेरभावात्कथं बोधः । न च 'आहर्तुमि'ति पदाध्याहारेण बोधः । अध्याहारश्चाऽनुमानमित्यप्रयोगोऽस्त्येव, 'प्रयोग'शब्दस्योच्चारणाऽर्थत्वादिति वाच्यम् । 'स्पृहेरीप्सित' इत्यादेरिव 'युष्मद्युपपदे' इत्यस्याऽप्युच्चारितपदेऽध्याहृतपदे च प्रवृत्त्युपपत्तौ, 'स्थानिन्यपो'त्यस्य वैयर्थ्याऽऽपत्तेः । तस्मात् स्थानिपदमज्ञायमानाऽर्थकम् । एवं च पदाऽनध्याहारेऽप्यर्थमात्राऽध्याहारे मध्यमपुरुषार्थं तत्सार्थक्यम् । अन्यथा पदनिमित्तकतया तत्र न स्यादिति चेन्न । स्थानिग्रहणसामर्थ्यादेव पदजन्योपस्थित्यभावेऽपि शाब्दबोधविषयत्वाऽङ्गीकारात् । स्पष्टं चेदम् 'अइउण्'सूत्रे कौस्तुभे ।

'स्पृहेरीप्सित' इत्यादौ तु पदाऽध्याहार एव । अर्थाऽध्याहारपदाऽध्याहारयोश्च लक्ष्याऽनुरोधेन व्यवस्था । एवं च 'फलेभ्यो याती'त्यादौ 'फलकर्मकाऽऽहरणफलकं यानमि'ति बोधः । ननु तादर्थ्यचतुर्थ्यैवेदं सिद्धम् ।

कर्मणीति। द्वितीयाऽपवादोऽयमिति भावः। 'फलेभ्यो याती'त्यादौ फलकर्मकाऽऽहरणफलकं यानमिति बोधः। अत्र 'प्रविश पिण्डीमि'त्यादौ वाक्यार्थे वाक्यैकदेशप्रयोगस्थले यथा तस्यैव पदस्य सम्पूर्णवाक्याऽर्थ-शक्तता, तथाऽस्य समुदायस्य आहरणघटितोक्ताऽर्थे शक्तिः। एवं शक्ति-मर्यादया बोधे एवेयं चतुर्थी साधुः, 'स्थानिन' इत्युक्तेः, न तु तत्प्रयोगे इत्याकाङ्क्षावादे मञ्जूषायां विस्तरः। अन्ये त्वर्थाध्याहारेण बोधं वदन्ति।

नमस्कुर्मो नृसिंहायेति। न च 'नमःस्वस्तो'त्यनेनैवाऽत्र सिद्धिः। 'उपपदविभक्तेरि'तिवक्ष्यमाणन्यायेन द्वितीयाऽऽपत्तेः। केचित्तु कर्मत्वा-ऽविवक्षायां प्राप्तषष्ठीं बाधित्वा, नमःशब्दद्योत्याऽर्थाऽन्वये 'नमःस्वस्ती'-त्यनेनैवाऽत्र चतुर्थी। न च षष्ठ्यपि कारकविभक्तिः। क्रियाजनकत्वेन बोधकविभक्तेरेव तत्त्वात्।

निपातनमःशब्दस्याऽपि सूत्रे ग्रहणं, विनिगमनाविरहादित्याहुः।

'क्रियार्थोपपदस्ये'ति किम्?। प्रविश पिण्डीम्। अत्राऽप्रयुज्यमान-भक्षणक्रियाकर्मणि पिण्ड्यां चतुर्थ्यापत्तेः।

तुमर्थात्। 'तुम्'शब्देन तुमर्थो लक्ष्यते। सोऽर्थो यस्येत्यर्थः। तुमुनो भाव एव विधानेन, तदर्थकस्य भावार्थकत्वाऽव्यभिचारात् 'भाववचनात्' इत्येतत्सूत्रविशेषपरिग्रहाऽर्थमित्याह—इति सूत्रेणेति। 'भावे ये प्रत्यया वक्ष्यन्ते, ते क्रियाऽर्थायां क्रियायामुपपदे भविष्यति स्युरि'ति तदर्थः। न च तादर्थ्ये चतुर्थ्यदं सिद्धम्। भाववचनघञादिनैव तादर्थ्यस्योक्तत्वेन

---

'ब्राह्मणाय दधी'त्यादौ स्वकर्तृकभोजननिष्ठजन्यतानिरूपकत्वसम्बन्धेन प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयवदत्राऽपि स्वकर्मकाऽऽहरणनिष्ठजन्यतानिरूपकत्व-सम्बन्धेनाऽन्वयस्य वक्तुं शक्यत्वादिति चेन्न। कर्मत्वप्रकारके, आहरण-विशेष्यके च बोधे धातुत्वाऽर्थमेतस्याऽऽवश्यकत्वात्। ध्वनितं चेदं पदमञ्जर्याम्'—इति ख. पाठः। ग. घ. नास्ति।

तदप्राप्तेः। तेषां तुमुनपवादतया तत्समानाऽर्थत्वात्। एवं[1] प्रातिपदिकाऽर्थ-मात्रे प्रथमायां प्राप्तायामिदं वचनम्। 'द्विषां विघाताय विधातुमिच्छत' इत्यत्र 'विघाताये'ति तादर्थ्ये चतुर्थी। विघाताऽर्थं यद्विधानं, तदर्थमिच्छत इत्यर्थः। 'एतेन 'विधातुमि'ति तुमुनैव तादर्थ्यस्योक्तत्वेन कथं चतुर्थी'त्य-पास्तम्। उत्तरक्रिययोस्तस्य द्योतनेऽपि, पूर्वक्रिययोस्तदद्योतनादित्याहुः।

यागायेति। '[2]यागफलकं यानमि'ति बोधः।

उपपदविभक्तेरिति। वाचनिकमेवेदं भाष्ये पठितम्। अत[3] एव 'यस्य च भावेने'ति सप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन 'तत्र च दीयते कार्यमि'ति सूत्रे कैयटेनोक्तम्। अन्यथोभयोरपि प्रधान-क्रियाऽन्वयित्वेन, प्रधानक्रियाऽन्वयनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदतां तदसङ्गतिः स्पष्टैव। कारकविभक्तिपदार्थश्च 'अपिः पदार्थे'-ति सूत्रे निरूपितः।

नमस्करोति देवानिति। उत्कृष्टनिष्ठो यः स्वनिष्ठाऽपकृष्टत्वबोधः, तदनुकूलव्यापाररूपनमस्कारफलस्य तादृशबोधस्याऽऽश्रयतया देवानां कर्मत्वं बोध्यम्। अस्य च 'नमः'शब्दस्य साक्षात्प्रभृतिषु, ऊर्यादिषु वा पाठेन गतित्वात्सत्वम्। 'हरये नम' इत्यादौ तु स्वरादिपठितः। एतेन 'एकस्या एवोपपदविभक्तित्वे, कारकविभक्तित्वे चाऽयं न्याय' इत्यपास्तम्। किञ्च 'एकस्या एवे'त्याद्यङ्गीकारे 'नमस्यति देवानि'त्यत्र परिभाषोपन्यास-परभाष्यविरोधः। 'सहयुक्ते' इत्यादिसूत्रस्थभाष्यविरोधश्च।

पर्याप्त्यर्थेति। पर्याप्तिः—सामर्थ्यम्। 'अलमि'त्यर्थग्रहणं व्याख्येय-मिति भावः। 'भूषणवारणनिषेधाऽर्थकस्य क्रियासमभिहाराऽऽवश्यकत्वेन तत्र क्रियानिमित्तकारकविभक्तिभिर्बाधात् 'पर्याप्त्यर्थे'ति न्याय-

---

१ 'एवञ्च' ख॰ पाठः।

२ 'भविष्ययागफलकम् यानमिति बोधः' ख. पाठः।

३ 'अत एव' इत्यारभ्य 'निरूपितः' इत्यन्तो ग. घ. पाठः।

सिद्धमि'ति हरदत्तादयः। वस्तुतः कारकस्य शेषत्वविवक्षायां तत्र चतुर्थी-वारणाऽर्थं व्याख्यानादेव पर्याप्त्यर्थग्रहणम् । ध्वनितं चेदं भाष्ये ।

अर्थपरतया व्याख्याने बीजमाह–तस्मै इति। आशीर्विवक्षायामिति । स्वस्त्यर्थस्याऽऽशीर्विषयत्वविवक्षायामित्यर्थः। स्वस्त्यर्थः कुशलं, मङ्गलं वा।

परामर्पीति। स्वस्तियोगे चतुर्थ्या अवकाशः 'स्वस्ति जाल्माया-ऽस्ती'ति तत्त्वकथनम्। 'कुशलाऽर्थैराशिषी'त्यस्याऽवकाशः स्वस्तिभिन्नाः कुशलोऽर्थाः।

मन्यकर्मणि। तिरस्कार इति। अनादरशब्देन नाऽऽदराऽभाव-मात्रम्, अपि तु नञोऽधर्माऽऽदिवत्प्रतिपक्षवाचित्वात्तिरस्काराऽर्थत्वमिति भावः। तत्र अनादर इति मन्यकर्मविशेषणम्। अनादरद्योतकं यत्कर्मेत्यर्थः। तेन युष्मच्छब्दाच्चतुर्थी न। अनादरश्च द्वेधा, उत्कृष्टस्याऽपकृष्टेनोपमानात्, नञादियोगेनाऽपकृष्टनिरूपितोपमेयत्वाऽभावस्योपमेयेऽनितुच्छत्वबोधनाय प्रतिपादनाद्वा। आद्ये 'तृणमिव मन्ये' इत्यर्थः। अन्त्ये 'तृणतुल्यमपि न मन्ये' इत्यर्थः। तत्र 'कुत्सिते' इति वक्तव्येऽतिशयिताऽनादरप्रति-पत्त्यर्थोऽनादरग्रहणेनाऽन्त्ये एवाऽस्य प्रवृत्तिः। ध्वनितं चेदं 'प्रकृष्य कुत्सितग्रहणं कर्त्तव्यमि'त्यादिना भाष्ये। 'यद्वाचिनश्चतुर्थी ततोऽपि यदि कुत्सा, न तु साम्यमात्रं, तदा चतुर्थी'ति तदर्थः। एवं च 'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थदि'त्यादिप्रयोगाश्चिन्त्या एव। नञोऽध्याहारो वा। तद्ध्वयन्नुदाहरति—न त्वां तृणमिति। द्वितीया-समानाऽर्था चतुर्थी। श्यनेति। न तु यका, व्याख्यानादिति भावः। तेन दैवादिकधातुमात्रस्य ग्रहणं, न तु श्यन्विशिष्टस्यैव। तेन 'न त्वां तृणाय मेने'इत्यादि सिद्धमित्याहुः। अपनीयेति। स्पष्टं चेदं भाष्ये।

नौकाकेति। ननु भाष्ये'अनावादिष्वि'ति वक्ष्यामि। 'न त्वां नावं

१ 'वस्तुतः' इति ग. घ. पाठः। ख. नास्ति।

२ इतोऽग्रे—'चतुर्थ्येवेति। 'स्वस्तिशब्दाऽर्थोऽन्वये' इति शेषः' इति ख. पाठः।

मन्ये' 'न त्वामन्नं मन्ये'इत्युदाहृत्या'ऽत्र येषु प्राणिषु नेष्यते, ते नावादय भविष्यन्ती'त्युक्तं, न तु परिगणनं, तत्कथमेतदुच्यते। यदि तूदाहरण-प्रामाण्येनोदाहृता एव नावादयः, तर्हि शृगालोक्तिरसङ्गता। न हि तदुदाहरणं भाष्ये दत्तमिति चेन्न। भाष्ये 'येष्व'ति बहुवचनेन, वृत्त्यादि-प्रमाणेन च एष्वेवाऽनिष्टनिर्णयादित्याहुः।

**गत्यर्थकर्मणि। ग्रामं ग्रामायेति।** कर्म[1] चतुर्थ्यर्थः। गत्यर्थेति किम्?। ओदनं पचति। 'कर्मणी'ति किम्?। 'अश्वेन गच्छति'। **चेष्टायां किमिति।** गत्यर्थस्य[2] क्रियारूपत्वात्प्रश्नः। शारीरपरिस्पन्दरूपक्रियाऽर्थस्यैव ग्रहण-मित्युत्तरम्। **पन्थानमिति।** 'अनध्वनी'त्यत्राऽध्वशब्दोऽर्थपरः। 'कर्मणी'त्य-नेन सामानाधिकरण्यात्। अर्थस्यैव तत्संज्ञाविधेरिति भावः। एतदभि-प्रायेणैव'अध्वन्यर्थग्रहणमि'ति वार्त्तिकम्। **अधिष्ठित इति।** शब्दप्रयोग-समकालिकैगन्तृव्यापारजन्यफलाश्रय इत्यर्थः। **उत्पथादिति।** तं सन्त्यज्ये-त्यर्थः। **आक्रमितुमिष्यत इति।** न त्वाक्रान्त इत्यर्थः। [3]**उत्पथेनेति**—करणे तृतीया। 'आस्थितप्रतिषेध' इति वार्त्तिकेनाऽयमर्थो बोधितः। आस्थितो—गन्त्राऽधिष्ठित इत्यर्थः। अत्राऽयमाशयः—'अध्व'पदेन गन्त्राऽधिष्ठितः = संप्राप्तोऽर्थ उपलक्ष्यते। तद्भिन्ने चाऽयं विधिः। तेन प्रागुदाहृते, गन्तृ-संबद्धस्त्रियां 'स्त्रियं गच्छती'त्यादौ च न चतुर्थी। ध्वनितं चेदं भाष्ये।

अत्र 'गत्यर्थकर्मणि चतुर्थी वे'ति, 'मन्यतेः कर्मण्यनादरे' इत्युत्तरम् 'गत्यर्थानां चेष्टायामनध्वनी'ति वा कुतो न सूत्रितमिति चिन्त्यम्।

यत्तु 'चतुर्थी वे'त्येव सिद्धे 'द्वितीया'ग्रहणमपवादविषयेऽपि द्विती-याऽर्थम्। तेन 'ग्रामं गन्ते'ति कृद्योगे षष्ठी ने'ति वृत्तिः। तन्न। गम्यादेः स्वार्थोपसर्जनकसन्दर्शनप्रार्थनाऽऽदिपरतायां धात्वर्थस्य कृत्रिमकर्मतया

---

१ 'फलाऽऽश्रयश्चतुर्थ्यर्थः'—इति ख. पाठः।

२ 'धात्वर्थस्य' ख. पाठः।

३ 'उत्पथेनेति भावप्रधानम्। करणे तृतीया' इति ख. पाठः।

सम्प्रदानत्वेन चतुर्थ्या, गतिमात्रपरत्वे द्वितीयायाश्च सिद्धिमाश्रित्य प्रत्याख्यानपरभाष्यविरोधात्। एवं 'क्रियाग्रहणं कर्त्तव्यमि'तिसम्प्रदानसूत्रस्थवार्त्तिकमपि प्रत्याख्यातम्। न च प्रत्याख्यानाऽऽरम्भयोः समफलत्वे मानाऽभावः। 'आरम्भेण न योगस्य प्रत्याख्यानं समं भवेदि'ति[1]हरिग्रन्थस्य, प्रत्याख्यानाऽसम्भवस्य च मानत्वात्। [2]अर्थकृतविशेषस्तु न दोषाऽऽवहः। तमवलम्ब्यैव भगवता प्रत्याख्याने, 'तत्रैवाऽर्थे साधुत्वं, न सूत्रसंमते' इत्यर्थस्य लाभात्। यथोत्तरं मुनीनां प्रामाण्यात्। भाष्यनये षष्ठ्यभावे उपायाऽभावेन, सूत्रमते षष्ठीस्वीकारस्यैवोचितत्वम्। स्पष्टं चेदं सम्प्रदानसंज्ञासूत्रे कैयटहरदत्तकौस्तुभादौ।

संदर्शनादिपरत्वे देवदत्तादेः कर्त्तृत्वन्तु संदर्शनाद्याश्रयत्वेनैव बोध्यम्। न च सन्दर्शनाऽऽदिपरत्वेऽपि ग्रामस्योत्तरदेशसंयोगरूपफलाऽऽश्रयत्वसत्त्वात्परत्वात्कर्मत्वस्यैवाऽऽपत्तिः। न च तस्य धात्वर्थप्रधानसन्दर्शनजन्यत्वाऽभावान्न तदाश्रयस्य कर्मत्वम्। तत्प्रयोज्यत्वसत्त्वेनाऽक्षतेरिति वाच्यम्। वस्तुगत्या फलाऽऽश्रयत्वेऽपि, तत्त्वेन तस्याऽविवक्षणात्, उद्देश्यत्वेनैव च विवक्षणाददोषः। न च 'घटं करोती'त्यादावप्येवंविवक्षया चतुर्थ्यापत्तिः। लक्ष्याऽनुरोधेनैव विवक्षायाः सत्त्वेनाऽदोषात्। तदुक्तं हरिणा—'भेदाऽभेदविवक्षा च स्वभावेन व्यवस्थिता' इति।

—इत्यलं विस्तरेण।

॥ इति चतुर्थी ॥

---

१ 'हरिग्रन्थस्यैव मानत्वात्' ख. पाठः।

२ 'अर्थकृतविशेषस्तु न दोषाऽऽवहः। शब्दशास्त्रे शब्दकृतविशेषस्यैव युक्तत्वात्। एवं च सूत्रभाष्ययोः समफलत्वावश्यकत्वे भाष्यनये षष्ठ्यभावे उपायाऽभावेन' इति ख. पाठः।

[ अथ पंचमी ]

ध्रुवम । 'ध्रु गतिस्थैर्ययोः' इत्यतः कुटादेः पचाद्यच् । 'ध्रुव स्थैर्ये' इति पाठे इगुपधत्वात्कः । ध्रुवं = स्थिरम् । अपायः = विभागजनको व्यापारः । विभागश्च न वास्तवसम्बन्धपूर्वक एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वकोऽपि[2]। तेन जुगुप्सादिपूर्वकनिवृत्तिलक्षकतामाश्रित्य 'जुगुप्साविरामे'-त्यादिप्रत्याख्यानं भाष्योक्तं, 'यतश्च निर्धारणमि'तिसूत्रप्रयोगः, 'यतो यतो विरज्येते'त्यादिप्रयोगश्च सङ्गच्छते ।

पातमात्रन्तु नाऽपायः । वृक्षमजहत्यपि पर्णे, भूमिं स्पृशति, 'वृक्षस्य पर्णं पतती'ति प्रयोगात् । अधोदेशसंयोगाऽनुकूलव्यापारो हि तत्र पतेरर्थः । उक्तं च हरिणा–'गतिर्विना त्ववधिना नाऽपाय इति कथ्यते'

१ 'अपायो विश्लेषो, विभागः । स च न वास्तवसम्बन्धपूर्वक एव' ख. पाठः ।

२ इतोऽग्रे—'तज्जनको गतिविशेषोऽप्यत्राऽपायशब्देनोच्यते । 'गतिर्विना त्ववधिना नाऽपाय इति कथ्यते' इतिहरिणा गतेरप्यपायशब्दवाच्यतोक्तेः । अवध्यन्वययोग्यविभागजनकत्वं विना सा नाऽपायशब्दवाच्येति तदर्थः । विभागस्य बुद्धिकल्पितसम्बन्धपूर्वकस्याऽपि ग्रहणादेव जुगुप्साऽऽदिपूर्वकविश्लेषजनकनिवृत्तिलक्षकतामाश्रित्य 'जुगुप्साविरामे'त्यादिप्रत्याख्यानं भाष्योक्तं, 'यतश्च निर्द्धारण'मिति सूत्रप्रयोगः, 'यतो यतो विरज्येते'त्यादिप्रयोगश्च सङ्गच्छते । 'अपाये' इति चाऽऽवर्त्तते । तत्रैकस्य विश्लेषोऽर्थः । अपरस्य तज्जनको गतिविशेषः । एवं च प्रतियोगितया विश्लेषवैशिष्ट्ये सति, यदपाये ध्रुवं = गतिरूपाऽपायाऽनाश्रयः, व्यापारताऽवच्छेदकसम्बन्धेन प्रकृतधातुवाच्यक्रियारहितं, तदपादानमित्यर्थः । कर्त्तृवारणाय विशेष्यदलम् । परया कर्त्तृसंज्ञया बाधेन तदनुवादरूपं तत् । 'धावतोऽश्वात्पतति' 'कुड्यात्पततोऽश्वात्पतती'त्यादिसंग्रहाय 'प्रकृते'ति । 'परस्परस्मान्मेषावपसरत' इत्यादिसंग्रहाय तद्विश्लेषजनकतत्तत्क्रियेत्यर्थकं विशेष्यदले 'क्रिया'पदम्' इति ख. पाठः ।

इति । 'अवध्यन्वययोग्यविभागाऽनुकूलत्वं विने'ति तदर्थः । एवञ्च 'अपाये = तद्विषये, ध्रुवं = प्रकृतव्यापाररहितं, कारकं, प्रत्यासत्त्या प्रकृत-विभागाऽऽश्रयस्तदपादानमि'त्यर्थः । कर्त्तृवारणायोक्तार्थकं 'ध्रुवमि'ति । अन्यथा कर्त्तृसञ्ज्ञाया इयमपवादः स्यात् । कर्त्तृसञ्ज्ञा तु पचत्यादियोगे चरितार्था । वृक्षस्य च न स्यात् । तदाश्रयत्वाऽभावात् ।

भाष्येऽप्युक्तं–'ध्रुवग्रहणं किमर्थम् । 'वृक्षस्य पर्णं पतती'ति । यत्त्वत्र 'वृक्षे प्राप्ति'रिति कैयटः । तन्न । पर्णेऽन्वयेन कारकत्वाऽभावात् । स्वाऽन्वययोग्यसमभिव्याहारे षष्ठ्यास्तत्रैवाऽन्वयात् । अत एव 'कारके' इति-सूत्रे 'तदभावे 'वृक्षस्य पर्णं पतती'त्यत्र स्यादि'त्याशङ्क्य 'नाऽत्रापायो विवक्षितः, किन्तु सम्बन्ध' इत्युक्तम् । 'नाऽत्र वृक्षे धात्वर्थविभागाऽऽश्रयत्वं विवक्षितं, किन्तु पर्णसम्बन्ध' इति तदर्थः । कारकाऽधिकाराऽभावेऽपि 'अपाये ध्रुवमि'त्यस्याऽपायवैशिष्ट्ये सति, प्रत्यासत्त्या तद्विषये ध्रुव = तदनुकूलव्यापाराऽनाश्रयमि'त्यर्थेन तद्वारणं सुकरमिति तत्तात्पर्यम् ।

यत्तु कैयटेन'अत्र संयोगाऽनुकूलव्यापार एव पतेरर्थो, न विभागाऽनुकूल' इति तत्तात्पर्यमुक्तम् । तन्न । तत्राऽर्थे भाष्याऽक्षरस्वारस्यहानेः । किन्तु 'सम्बन्ध' इति शेषेण 'नाऽत्रे'त्यत्र वृक्षस्यैवा'ऽत्र'पदार्थत्वलाभात् । 'धात्वर्थत्वेऽपि तस्य वृक्षे सम्बन्ध' इत्यर्थस्यैव स्वारस्येन लाभात् ।

किञ्च विभागाऽर्थत्वे ईदृशप्रयोगाऽभावे दृढमानाऽभावः । 'धावतोऽश्वात्पतति' 'कुड्यात्पततोऽश्वात्पतति' 'परस्परस्मान्मेषावपसरतः' इत्यादि-सङ्ग्रहाय तत्तद्विभागजनकतत्तत्क्रियारहितत्वं बोध्यम् । तदुक्तम्—

'अपाये यदुदासीनं, चलं वा, यदि वाऽचलम् ।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाऽश्वो यस्मादश्वात्पतत्यसौ ।
तस्याऽप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ।
मेषाऽन्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियाऽपेक्षं कर्त्तृत्वं च पृथक् पृथक् ॥' इति ।

अतदावेशात् । धातूपात्तगत्यनावेशादित्यर्थः । 'तदावेशादि'तिपाठे तन्मात्राऽऽवेशादित्यर्थः । धातूपात्तविभागस्यैवाऽऽवेशो, न तदुपात्त-क्रियाया इति भावः । पृथक् पृथगिति । 'अपसरतः' इति सृधातुना गतिद्वयस्याऽप्युपादानादेकनिष्ठां गतिं प्रति इतरस्याऽपादानत्वमविरुद्ध-मिति भावः ।

परे तु 'मेष'पदोपात्तयोरेव क्रियाऽऽश्रयत्वम् । 'परस्पर'-पदोपात्तयोर्विभागाऽऽश्रयत्वमेवेति, 'तत्तत्क्रिये'त्यादिनिवेशो व्यर्थः । अन्यथा वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि, सृधातुना निवृत्तभेदस्यैवा-ऽपायस्योपादानादुभयोरपि तत्क्रियाऽऽश्रयत्वेन परत्वात्कर्तृत्वमेव स्यात् । एकस्यैव विभागस्योभयाऽनुयोगिकत्वोभयप्रतियोगिकत्वसत्त्वेऽपि, कस्य चिदेव प्रतियोगित्वेन विवक्षेति नाऽतिप्रसङ्गः । एतेन 'तादृशे विषये 'मेषः स्वस्मादपसरती'ति स्यादि'त्यपास्तम् । प्रतियोगिताया अवधिताऽवच्छेदकसम्बन्धभूतायाः स्वपदवाच्ये कदाऽप्यविवक्षणात् । प्रयोगाऽनुसारित्वाद्विवक्षायाः । अत एव 'अन्योन्यमाश्लिष्यतः' इत्यादौ तयोः कर्मत्वसिद्धिः । अन्यथा परत्वात्कर्तृत्वमेव स्यात् । 'आत्मानमात्मने'-

---

१ 'तदावेशादिति पाठे' इत्यारभ्य 'इति भावः' इत्यन्तः ख. पाठः । शब्दरत्न-गतत्वात् ग. घ. नास्ति ।

२ 'गतिं प्रत्यपरस्य' ख. पाठः ।

३ 'परस्पर'पदोपात्तयोर्विभागाऽऽश्रयत्वमेवेति, यत्पदोपात्तस्याऽवधित्वं, तस्य न कदाऽपि क्रियाऽऽश्रयत्वम् । अत एव 'देवदत्त आत्मानं हन्ती'-त्यादावात्मपदोपात्तस्य कर्मत्वम् । 'सृ'धातुनाऽपायद्वयस्याऽपि निवृत्तभेदस्यै-वोपादानात् विभागजनकक्रियाऽऽश्रयत्वस्यैव प्रतीत्या, तत्त्वेनाऽप्रतीत्या च, अस्या एव गतेरुचितत्वात्' इति ख. पाठः ।

४ 'तत्तत्क्रियेत्यादि'इत्यारभ्य 'कर्तृत्वमेव स्यात्' इत्यन्तो ग. घ. पाठः ।

५ 'भेदस्याऽभावात्' ख. पाठः ।

त्यादौ शब्दकृतभेदाऽभावादन्तःकरणाऽऽद्युपाधिकृतभेदोपादानं [1] भाष्ये कृतम्। 'चैत्र आत्मानं हन्ती'त्यादौ शब्दभेदादेव कर्मत्वोपपत्तिः। इतरोपाधिकृतभेदवत् शब्दरूपोपाधिकृतभेदाऽग्रहणे मानाऽभावात् [2]। शब्दाऽऽलिङ्गिताऽर्थभानस्यैवं [3] सत्त्वाच्चेत्याहुः।

प्रकृतत्वं च यथाकथञ्चिच्छब्दोपात्तत्वम्। अत एव 'धनुषा विध्यती'त्यत्राऽपादानसंज्ञां बाधित्वा करणसंज्ञे'ति भाष्यं सङ्गच्छते। शरनिःसरणं प्रत्यवधिभावोपगमेनैव व्यधने करणताऽभ्युपगमेनोभयोरपि बुद्ध्यारोहणम्। विध्यतेर्निस्सरच्छरजन्यवेधार्थत्वादिति ध्येयम्।

स चाऽर्थादवधिरेव। तदाह—**साध्ये ध्रुवमवधिभूतमिति**। 'साध्ये' इत्यनेन विश्लेषादेर्धात्वर्थत्वं सूचयति। अवधित्वं च पूर्वोक्तविश्लेषाऽऽश्रयत्वसमानाधिकरणपदार्थाऽन्तरमित्यन्यदेतत्।

'वृक्षाद्भूमिं पतती'त्यत्र भूमिनिष्ठसंयोग-पर्णनिष्ठविश्लेषोभयाऽनुकूलो व्यापारः पतत्यर्थः। एवम् 'आयाती'त्यादावपि। तत्र विश्लेषस्य धातुलभ्यत्वादवधिः पञ्चम्यर्थः। 'वृक्षाद्विभजते' इत्यादौ तस्यैव विभक्त्यर्थतायाः सकलसंमतत्वाच्च। न च वृक्षस्य विश्लेषाऽऽश्रयत्वेन कर्मत्वाऽऽपत्तिः। फलताऽवच्छेदकसम्बन्धेन तस्य तदाश्रयत्वाऽभावात्। कर्त्तृनिष्ठविभागीय-[4]सम्बन्धस्यैव तत्त्वात्।

---

1 'भेदोपादानं भगवता कृतम्' ख. पाठः।

2 'मानाऽभावाच्च। तत्र तत्र तस्याऽप्याश्रयणाच्च' ख. पाठः।

3 'भानस्यैवाऽस्मन्मते सत्त्वाच्चेत्याहुः।' 'निवर्त्तेत तत' इत्यादौ निवृत्तेर्यत्न-विशेषस्य विषयतयाऽवधौ सत्त्वात्तत्राऽतिव्याप्तिवारणाय सम्बन्धविशेष-निवेशः। तत्र चाऽऽश्रयताया एव व्यापारताऽवच्छेदकसम्बन्धत्वान्न दोषः। उदासीनेऽतिव्याप्तिवारणाय विशेष्यदलम्। 'वटं पटाद्विभजते देवदत्त' इत्यत्र तदभावप्रतियोगित्वसम्बन्धेनेति। प्रकृतत्वं च न शब्दोपात्तत्वं, किन्तु विवक्षितत्वमात्रम्। अत एव धनुषा विध्यतीत्यत्र' इति ख. पाठः।

4 'विभागीयाऽनुयोगितासम्बन्धस्यैव' इति ख. पाठः, क. ग. नास्ति।

'वृक्षं त्यजती'त्यादौ तु व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन भवत्येव कर्मत्वम। एवं च कर्मत्वेनाऽपादानत्वस्य बाधान्न 'वृक्षात् त्यजती'त्यस्याऽऽपत्तिः। अत एवाऽभियुक्तैः 'आश्रयोऽवधिरुद्देश्य'इत्यादिनाऽवधेरेव पञ्चम्यर्थत्वमुक्तं, न[1] विभागाऽऽदेः। स्पष्टं चेदमत्र भाष्ये। एवं च 'वृक्षाऽवधिकविभागाऽनुकूलो, भूमिनिष्ठसंयोगाऽनुकूलो व्यापारः पर्णवृत्तिरि'ति बोधः। न चैवमपि विभागाऽनुकूलस्पन्दस्य धात्वर्थत्वे 'वृक्षा[2]त्स्पन्दते' इति स्यादिति वाच्यम्। स्प[3]न्दस्य वृक्षनिष्ठविभागजनकत्वात्। शब्दशक्तिस्वाभाव्येन स्पन्दस्य सत्यपि यत्किञ्चिद्विभागाऽनुकूलत्वे, विभागस्य तदर्थत्वाऽभावात्। एवं च तत्र 'वृक्षे स्पन्दते' इत्येव भवति। चलतेस्तु 'आसनाच्चलित' इत्यादिप्रयोगाद्भवत्येव विभागार्थत्वमित्याहुः।

ननु 'सार्थाद्धीयते' इत्यत्र, 'सार्थाद्धीन' इत्यत्र च धातूपात्तव्यापाराऽऽश्रयत्वं साऽर्थस्याऽस्ति, उत न ?। नाऽऽद्यः। 'अपादानमुत्तराणी'तिकर्त्तृत्वाऽऽपत्तेः। नाऽन्त्यः। देवदत्तस्य कर्त्तृत्वाऽऽपत्तौ तत्र कर्[4]मणि

---

१ 'न विभागादेः। अत एव 'ध्रुव'ग्रहणं चरितार्थम्, अवध्युपलक्षणार्थत्वात्। तद्धि वृक्षस्य जनकत्वसम्बन्धेन पतनक्रियैकदेशविभागान्वयेऽपादानत्वाऽभावार्थम्। तदभावे हि 'अपाये = विश्लेषे, कारकं = तद्रूपक्रियाया यज्जनकं, तदपादानमि'त्यर्थः स्यात्। स्पष्टं चेदमत्र भाष्ये। न च 'ध्रुव'ग्रहणाऽभावे कर्त्तुः पर्णस्याऽप्यपादानत्वाऽऽपत्तिः। परत्वात्कर्त्तृसंज्ञया बाधात्। तस्मात् ध्रुवग्रहणमवधित्वप्रकारकशाब्दबोधे पञ्चम्याः साधुत्वाऽर्थमिति तत्त्वम्। एवं च पञ्चम्यर्थोऽवधावभेदेन प्रकृत्यर्थो विशेषणं, प्रत्ययाऽर्थस्तु प्रतियोगितया क्रियायाम्' इति ख. पाठः। ग.घ. नास्ति।

२ 'वृक्षात्स्पन्दते' इति स्यादिति वाच्यम्। 'आसनाच्चलित' इतिवदिष्टाऽऽपत्तेः। अत एव स्पन्देः क्रियामात्राऽर्थत्वे 'वृक्षे स्पन्दते' इत्येव भवति। इति ख. पाठः। ३ 'स्पन्दस्य' इत्यारभ्य 'इत्याहुः' इत्यन्तो ग. घ. पाठः।

४ 'कर्मणि यगाद्यनापत्तेः' ख. पाठः।

लाद्यनापत्तेः। 'वृक्षं त्यजती'त्यादौ वृक्षाऽऽदीनामिव सार्थस्य कर्मताऽऽपत्तौ, 'सार्थो हीयते देवदत्तेने'त्यस्याऽऽपत्तिश्चेति चेत्—

अत्राहुः—सार्थस्य व्यापाराऽऽश्रयत्वेन कर्त्तृत्वे प्राप्तेऽपि, 'अपादाने चाऽहीयरुहोरि'ति सूत्रेणाऽपादानत्वस्य ज्ञापितत्वान्न दोषः। तच्च कर्मप्रत्ययान्त'ही'धातुविषयकमेव, 'हीये'ति निर्देशात्। अत एव 'देवदत्तः सार्थं जहाति', 'देवदत्तं सार्थो जहाती'त्यादौ च न।

'स्वर्गाद्धीयते' इत्यत्राऽपि स्वर्गस्य धातूपात्तव्यापाराऽऽश्रयत्वं बोध्यम्। कर्मसंज्ञायां कर्त्तृपदं प्रधानीभूतधातूपात्तव्यापाराऽऽश्रये लाक्षणिकमिति देवदत्तस्य कर्मत्वं बोध्यम्। सम्प्रदानसंज्ञासूत्रे कैयटस्वरसोऽप्येवमेव। केचित्तु 'कर्मकर्त्तरि लकारः। अपगमना जहातेरर्थः। क्षुदुपघाताऽऽदिना स्वयमेवाऽपगमने च कर्मकर्त्तृत्वमि'त्याहुः।

धावत इति। इह क्रियाऽऽविष्टस्याऽप्यश्वस्य प्रकृतधातूपात्तगत्यनाविष्टत्वेन तं प्रत्यपादानत्वं बोध्यम्।

जुगुप्साविरामेति। अत्र जुगुप्सादीनां यद्विषयकत्वेन विवक्षा, तदपादानम्। तस्यैव विषयस्य क्रियाजनकत्वेनाऽविवक्षायां[2], सम्बन्धित्वेन च विवक्षायां 'पापस्य जुगुप्सते' इति षष्ठी भवत्येव। एवमुत्तरसूत्रेष्वपि बोध्यम्[3]।

नन्वेवमेषां धातूनां स्वाऽर्थपूर्वकविश्लेषजनकनिवृत्तिलक्षणायां सूत्रेणैवाऽपादानत्वं सिद्धम्। एवम् 'उपाध्यायादधीते' इत्यत्रापि निःसरणपूर्वकशब्दग्रहणमर्थः। 'निःसरन्तं शब्दं गृह्णाती'त्यर्थात्। 'जायते' इत्यत्राऽपि ततोऽपक्रामतीति लोकप्रसिद्धाश्रयोऽपायः। लोके हि यद्यस्माज्जायते तत्ततो निर्गच्छतीत्युच्यते। भवतेरपि [4]भवनपूर्वकनिःसरण-

१ 'कर्मसंज्ञायां च कर्त्तृपदं धातूपात्तव्यापाराश्रये' ख. पाठः।

२ 'क्रियाजनकस्वरूपकारकत्वेनाऽविवक्षायां' ख. पाठः।

३ 'उत्तरसूत्रेऽपि बोध्यम्' ख. पाठः।

४ 'प्रभवनपूर्वक' ख. पाठः।

मर्थ इति 'ध्रुवमपाये' इत्येव सिद्धेः सूत्रजालमपि व्यर्थमिति चेन्न। भाष्ये प्रत्याख्यातत्वेनेष्टाऽऽपत्तेः।

**भीत्रा**। भयं = भीः, त्राणं = त्राः। तदाह—**भयाऽर्थानामिति**। हेतुः पञ्चम्यर्थः। हेतुतृतीयाऽपवादोऽयम्। **अरण्ये इति**। न चाऽत्र परत्वात् अधिकरणत्वं भविष्यतीति वाच्यम्। 'एषां योगे कारकमपादानमि'त्यर्थे अविशेषात्सर्वसंज्ञाऽपवादत्वाऽऽपत्तेरिति भावः।

**पराजेः**। असोढः—ग्लानिविषयः। असहनं—ग्लानिः। एवं च पराजेरकर्मकत्वे उदाहरणत्वम्। तद्ध्वनयन्नाह—**ग्लायतीत्यर्थ इति**।

**शत्रूनिति**। अत्र तिरस्काराऽनुकूलो व्यापारो धात्वर्थः। तदाह—**अभिभवतीत्यर्थ इति**।

**वारणाऽर्थानाम्**। **प्रवृत्तिविघात इति**। भक्षणसंयोगाऽऽदिजनकव्यापाराऽभावाऽनुकूलो व्यापार इत्यर्थः। **ईप्सित इति**। वारणाऽर्थधात्वर्थफलाऽऽश्रयत्वेनेच्छाविषय इत्यर्थः। उदाहरणे च धात्वर्थसंयागरूपफलाऽऽश्रयत्वेन गवेप्सितत्वात् यवानामपादानत्वम्। 'ईप्सित' इत्यनेन प्रधानाऽप्रधानाऽन्यतरव्यापाराश्रयरूपकर्त्तृमात्रस्याऽऽक्षेपादिति भावः। स्पष्टं चेदं 'यथैवाऽस्याऽन्यत्राऽपश्यत ईप्सा, एवं कूपेऽपी'ति भाष्य-

---

१ 'न चाऽत्र परत्वादधिकरणत्वं भविष्यतीति वाच्यम्। न्यायसिद्धबाध्यबाधस्यैवाऽनुवादेनाऽदोषादिति सम्प्रदायः। एवमग्रेऽपि बोध्यम्।

'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे'इति रामायणे तु क्रियाजनकत्वेनाऽविवक्षणात्सम्बन्धित्वेन विवक्षणाच्च न दोषः। 'कस्य संयुगे' इत्यन्वयो वा' इति ख. पाठः। मनोरमायामपि अयं पाठोऽस्ति।

२ 'एषाम्' इत्यारभ्य 'इति भावः' इत्यन्तो ग. घ. पाठः।

३ 'धात्वर्थतावच्छेदकफलाऽऽश्रयत्वेन' ख. पाठः।

४ 'धात्वर्थतावच्छेदकसंयोगरूपफलाश्रयत्वेन' ख. पाठः।

५ 'ईप्सित' इत्यनेन कर्त्तृमात्रस्याक्षेपादिति भावः' ख. पाठः।

व्याख्यानकैयटे। 'कर्त्तुरीप्सिततममि'त्यत्र तु 'तम'ग्रहणसामर्थ्यात्प्रकृत-धात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाऽऽश्रयस्य ग्रहणमिति तदाशयः।

अन्तर्द्धौ। 'अन्तर्द्धिः—अन्यकर्त्तृकस्वकर्मकदर्शनाऽभावानुकूलो व्यवहितदेशस्थितिरूपः, तद्घटकं यत्कर्त्तृकदर्शनाऽभावमिच्छति, तत् अपादानमि'त्यर्थः। तत्फलितमाह—व्यवधाने सतीति। न च 'येने'त्यत्र 'कर्त्तृकर्मणोरि'ति षष्ठीप्रसङ्गः। 'कर्म'पदाऽध्याहारेण 'उभयप्राप्तावि'ति-नियमेनाऽदोषात्। अत एव निर्देशादनित्यं तदित्यन्ये। प्रत्यासत्तिन्याय-लब्धाऽर्थमाह—आत्मन इति। 'मातुर्निलीयते' इत्यादावाक्षेपलभ्येच्छा बोध्या। पञ्चम्यर्थो वृत्तित्वं, धात्वर्थैकदेशे दर्शनेऽन्वेति।

चोरानिति। 'चोरकर्मकदर्शनेच्छाऽभाव' इति शाब्दोऽर्थः। स च चोरकर्त्तृकस्वकर्मकदर्शनाऽभावायेति प्राप्तिः। इच्छामात्रस्याऽऽक्षेपलभ्यत्वे इव, विशिष्टस्याऽऽक्षेपलभ्यत्वेऽपि स्यादिति भावः। 'अन्तर्द्धावि'ति-विशेषणे तु प्रकृते तदभावान्न दोषः। नन्वन्तर्द्धावित्येवाऽस्तु, किं 'येने'-त्यादिना ?। 'अन्तर्द्ध्यर्थकस्य कारकमपादानमि'ति सूत्राऽर्थ इति चेन्न। अधिकरणाऽऽदेरपि तत्त्वाऽऽपत्तेः। न चैवमपि 'येने'ति व्यर्थम्। तथा सति 'अन्तर्द्धौ सति स्वकर्मकदर्शनाऽभावं य इच्छति, सोऽपादानमि'-त्यर्थे कर्त्तुरेव स्यात्।

इच्छतिग्रहणं किमिति। 'अन्यवृत्तिव्यापारजन्यस्वकर्मकदर्शना-ऽभावाऽनुकूलदेशविशेषस्थितिरूपाऽन्तर्द्धिघटको यत्कर्त्तृकस्य दर्शनस्या-ऽभावः, सोऽपादानमि'ति सूत्राऽर्थ इति भावः। सत्यपीति। अदर्शने-च्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः। अन्यथा हि यत्र दर्शनाऽभाव एव, तत्रैव स्यादिति भावः।

नियमेति। उपयोगशब्दस्य तत्रैव रूढेरिति भावः। नियमो ब्रह्मचर्यादिः। नटस्येति। 'नटजन्यं श्रवणमि'ति बोधात् कारकत्वेन प्रसङ्गः। नियमपूर्वकविद्यावक्तृत्वाऽभावात् नेत्युत्तरम्।

जनिकर्त्तुः। जननं-जनिः = उत्पत्तिः। 'जनिरुत्पत्तिरुद्भव' इत्यमरः। 'जनिघसिभ्यामिण्'। 'इञजादिभ्य' इति इञ् वा। 'जनिवध्योश्चे'ति वृद्धि-प्रतिषेधः। 'तस्याः कर्त्ते'ति शेषषष्ठ्या समासः। तेन तदर्थकयोगेऽपि भवति। 'अङ्गादङ्गात्सम्भवसी'ति यथा। तदाह—जायमानस्येति। एतेन 'इका निर्देशे उपधालोपप्रसङ्गो, जन्धातूत्पत्त्यनुकूलव्यापाराऽऽश्रय इत्यर्थोऽऽपत्त्याऽर्थोऽसङ्गतिः, समासाऽसङ्गतिश्च'ति परास्तम्।

हेतुरिति। उपादानकारणमित्यर्थः। 'प्रकृति'शब्दस्य तत्रैव प्रसिद्धेः। प्रागुक्तप्रत्याख्यानपरभाष्याऽऽदिसंमतत्वाच्च। अत एव ब्रह्मणो जगदुपादानत्वे 'यतो वा इमानि भूतानि जायन्ते' इतिपञ्चमीमुपष्टम्भिकामाहुः। 'पुत्रात्प्रमोद' इत्यादावुपादानत्वाऽऽरोपेण, 'विभाषे'ति योगविभागाद्वा पञ्चमीत्याहुः। एतेन 'प्रकृतिग्रहणं हेतुमात्रपरम्। 'पुत्रात्प्रमादो जायते' इत्यप्युदाहरणमि'ति वृत्तिः परास्ता। किञ्च 'कारके' इत्यधिकृतस्य कारणसामान्यवाचिनो निर्द्धारणसप्तम्यन्तस्याऽन्वयोऽसम्भवो। न हि 'कारणानां मध्ये उपादानकारणमि'तिवत् 'कारणानां मध्ये कारणमि'ति सम्भवति। ब्रह्मण इति। ब्रह्मेह मायाशबलम्। तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः। 'विभाषे'त्येव सिद्धे इदं कारकपूर्वपदत्वनिमित्तकोत्तरपदप्रकृतिस्वराऽर्थमित्याहुः।

भुवः। भवनं भूः। सम्पदादित्वाद्भावे क्विप्। जनिसाहचर्यात्। अत एव भूधातोर्न ग्रहणम्। समासैकदेशमपि 'कर्त्तृ'ग्रहणमनुवर्त्तते। स्वरितत्वात्। तद्ध्वनयन्नाह-भूकर्त्तुरिति। प्रभवत्यस्मादिति-प्रभवः। प्रभवनमत्र प्रथमप्रकाशः। सूत्रे भवनमप्येतदेव विवक्षितम्। 'हिमवतो गङ्गा

---

१ 'विभाषेत्येव सिद्धे इदमुपादानत्वप्रकारकबोधार्थं, कारकपूर्वपदप्रकृतिस्वरार्थं चेत्याहुः। 'विभाषे'ति योगविभागे न मानं, 'पुत्रात्प्रमोद' इत्यादौ 'जायते' इत्यध्याहारेणोक्तरीत्यैव गतिः। एवमन्यत्राऽपि तत्त्वम्' इति ख. पाठः।

प्रभवती'ति भाष्योदाहरणात्, सूत्रे 'प्र'शब्दग्रहणाच्च। तदधिकरणमपादानमित्यर्थः। अधिकरणत्वं चैतत्पञ्चम्यर्थः। 'प्रकाशते' इत्यस्य योगे तु न। तस्य प्रथमप्रकाशार्थत्वाऽभावात्। प्रत्यासत्त्या[1] तदर्थकधातुयोगे एवास्य प्रवृत्तिः। तद्ध्वनयन्नाह-तत्र प्रकाशत इत्यर्थ इति। पर्याप्त्यर्थप्रभवतियोगे न, 'तस्मै प्रभवती'ति निर्देशादित्याहुः।

ल्यब्लोप इति। ल्यबन्तशब्दस्याऽज्ञाने इत्यर्थः। कर्मणीति। प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति बोध्यम्। [2]प्रासादादिति। 'फलेभ्यो याती'त्यत्रेवाऽत्र बोधप्रक्रिया। अत एव 'आजघ्ने विषमविलोचनस्य वक्ष' इत्यत्राऽकर्मकत्व-स्वाङ्गकर्मकत्वाऽभावेनाऽप्राप्ताऽऽत्मनेपदस्य 'वक्षः प्राप्ये'त्यध्याहारेण साधनेऽपि, न पञ्चमी। शब्दाऽध्याहारे शब्दज्ञानसत्त्वेन लोपाऽभावात्तदप्रवृत्तेः। अत्र ल्यप्ग्रहणं ल्यबर्थप्रत्ययपरम्। तेन 'आसने स्थित्वा पश्यती'त्यर्थेऽपि भवति[3]।

गम्यमानाऽपीति। [4]शब्दाऽनुपात्ताऽपीत्यर्थः। यथा प्रत्यक्षदृष्टमागमनं मनसि निधाय 'कस्मात्त्वमि'त्यादि प्रश्नाऽऽदौ। 'पदजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्व'नये 'गम्यमानाऽपी'त्यस्य 'अनुच्चारितशब्दगम्याऽपी'त्यर्थ इत्याहुः।

यतश्चेति। 'यत् अवधित्वेनाऽऽश्रित्याऽध्वनः, कालस्य वा निर्माणं = परिच्छेदः प्रतिपाद्यते, तत' इत्यर्थः। तद्युक्तादिति। तत्परिच्छेद्यादित्यर्थः। 'तेन पञ्चम्यन्तेनाऽर्थद्वारा युक्तात्, निर्मीयमाणाऽध्ववाचिन' इति यावत्। कालादिति। 'तद्युक्तादि'त्यपेक्ष्यते। अन्येत्यर्थेति। अन्य-

---

१ 'प्रत्यासत्त्या च' ख. पाठः।

२ 'प्रासादादिति। आरोहणादिक्रियारूपाऽर्थाऽध्याहारेण बोधः। अत एव 'आजघ्ने' इति ख. पाठः।

३ इतोऽग्रे—'अत एव प्रत्याख्यानेन फलैक्यमित्याहुः' इति ख. पाठः।

४ 'शब्दाऽनुपात्ता, प्रत्यक्षादिदृष्टाऽपीत्यर्थः' ख. पाठः।

शब्दाऽर्थश्च भेदवान्। अत एव 'घटाद्भिन्न' इत्यादिसिद्धिः। न चैवं 'घटः पटो ने'त्यादावपि पञ्चम्यापत्तिः, तस्याऽपि भेदार्थकत्वादिति वाच्यम्। अन्याऽर्थकस्य तत्सदृशस्य[1] भेदवदर्थप्रतिपादकस्य ग्रहणात्। अत एव तदर्थकेतरशब्दस्याऽवयुत्याऽनुवादः। स हीदृशानामेव तदर्थकानां ग्रहणमिति बोधनाऽर्थः। तद्वक्ष्यति—प्रपञ्चार्थमिति। अत एव 'भेद'शब्दयोगे 'घटस्य भेदः'[2] 'घटीयो भेद' इत्यादि सङ्गच्छते[3]।

केचित्तु 'ध्रुवमपाये' इत्यत्राऽपायशब्देन भेदस्याऽपि ग्रहणम्। 'पञ्चमी विभक्ते'इतिसूत्रे विभागार्थकविभक्तपदेन भेदस्य व्याख्यातत्वात्। यथा च 'ग्रामादायाती'त्यादेः स्वस्वामिभावाऽऽदिसम्बन्धसत्त्वेऽपि संयोगसम्बन्धाऽभावमादाय प्रयोगस्तथेहाऽपि तादात्म्यसम्बन्धाऽभावसत्त्वादक्षतिः। एवं च भेद-भिन्नाऽऽदिशब्दयोगेऽपादाने एव पञ्चमी। [4]'भिदिर् विदारणे' इत्यत्र भेदज्ञानविषयत्वमपि विदारणम्। एकत्वेन गृहीतस्यैव तथा बोधनेन बुद्धिविदारणस्य तत्राऽपि सत्त्वात्। तस्यैव सम्बन्धत्वेन विवक्षायां 'घटीयो भेद' इत्याद्यपि साधु। अन्यशब्दाऽर्थस्य तु धात्वर्थत्वाऽभावेन क्रियात्वाऽभावात्तद्योगे एतद्विधानम्। एवं चाऽर्थग्रहणे फलं चिन्त्यम्। अत एव भाष्येऽर्थग्रहणं नोक्तम्। 'घटादेक' इत्यादि त्वसाध्वेव। अत एवेतरग्रहणं चरिताऽर्थमित्याहुः।

प्रपञ्चाऽर्थमिति। न च 'इतरस्त्वन्यनीचयोरि'ति नीचाऽर्थकस्य

---

१ 'तत्सदृशस्यं लिङ्गाद्यन्वयिभेदवदर्थप्रतिपादकस्य' ख. पाठः।

२ 'घटस्य भेद इत्येव। अत एव 'घटीयो भेद' इत्यादि' ख. पाठः।

३ इतोऽग्रे—'किञ्च नञो द्योतकतया घटाऽऽदिपदानामेव लक्षणासत्त्वाद् भेदनिबन्धनपञ्चम्या अप्राप्तेः। केचित्तु 'ध्रुवमपाये' इत्यत्राऽपायशब्देन सम्बन्धभावसमनियतविभागस्येव, भेदस्याऽपि ग्रहणम्। भेदेऽपि तस्य सत्त्वात्' इति ख. पाठः।

४ 'भिदिर' इत्यारभ्य 'सत्त्वात्' इत्यन्तो ग. घ. पाठः।

ग्रहणाऽर्थमितरग्रहणमस्त्विति वाच्यम्। साहचर्येणाऽन्यार्थस्यैव ग्रहणात्। तद्योगे 'अस्मात्तारो, मन्दो वे'त्यादिवत् 'पञ्चमी विभक्ते' इत्येव सिद्धेश्च। न चाऽन्ययोगेऽपि तेन सिद्धिरिति वाच्यम्। निर्द्धारणप्रयोजकीभूतस्य धर्मस्याऽनभिधानात्। परस्परप्रतियोगिकभेदस्य परस्परवृत्तित्वेनाऽनिर्द्धारकत्वाच्च।

यत्त्वितरग्रहणं पृथक्त्वाऽर्थम्। अत एव 'घटः पटात्पृथगि'त्यादौ पञ्चमी। न च सोऽन्याऽर्थः। पृथक्त्वस्याऽतिरिक्तगुणत्वाऽङ्गीकारादिति। तन्न। तस्य गुणत्वाऽनङ्गीकारात्। अत एव 'रूपं रसात्पृथगि'त्यादिप्रयोगोपपत्तिः। 'पृथग्विने'त्यादिना सिद्धत्वाच्च। ( सम्बन्धोऽत्र पञ्चम्यर्थः )।

आराच्छब्दः समीपाद्यर्थः। 'दूराऽन्तिकार्थैरि'ति प्राप्तम्।

ऋते कृष्णादिति। 'ऋते'शब्दयोगे'अन्यत्राऽपि दृश्यते' इति दृशिग्रहणात् 'चैत्रं[४] यावच्छीतामि'त्यादाविव द्वितीयाऽपि। अत एव 'पुरुषाराधनमृते' इत्यादिसिद्धिः।

ऋतेर्शब्दो विनाऽर्थः। नन्वयं देशवाचको, न दिक्शब्द इत्यत आह– दिशि दृष्ट इति। शब्दग्रहणात्। 'रूढ्ये'ति शेषः। तेन ऐन्द्र्यादयो न गृह्यन्ते। 'दिशी'त्यस्य दिग्विशेषे इत्यर्थः। तेन ककुभादिशब्दानां न ग्रहणम्।

---

१ 'विधिवाक्याऽकल्पनलाघवेन,साहचर्येण चाऽन्याऽर्थस्यैव ग्रहणात्'ख. पाठः।

२ 'न चाऽन्याऽर्थयोगेऽपि' ख. पाठः।

३ ख. पाठोऽयं, ग. घ. नास्ति।

४ 'चैत्रं यावच्छीतमित्यादाविव' इति क. ग. पाठः, ख. नास्ति।

५ 'इत्यादिसिद्धिः। 'ऋते' शब्दस्याऽभावोऽर्थः। 'कृष्ण'शब्दश्च तद्भक्त्यादौ लाक्षणिकः। 'कृष्णभक्त्यभावप्रयोज्यं दुःखमि'त्यर्थः। क्वचिच्छेदवानपि तदर्थः। यथा 'कृष्णादृते न धनुर्धर' इति। इत्याद्यन्यत्र विस्तरः' इति ख. पाठः।

६ 'ऋतेशब्दो विनाऽर्थः' इति ग. घ. पाठः। ख. नास्ति।

नन्वेवमवयववाचिपूर्वादीनां योगेऽपि पञ्चमी स्यादत आह्–अवयववाचियोगे तु नेति। 'अवयविवाचकादि'ति शेषः। ज्ञापकस्य सजातीयाऽपेक्षत्वात्। अत एव 'अस्मादयं पूर्वो भागः कायस्ये'त्यादिकं सङ्गच्छते।

पूर्वं कायस्येति। अवयवे पूर्वत्वं त्ववयवाऽन्तराऽपेक्षया प्रथमकालोत्पत्तिकत्वेन बोध्यम्।

अञ्चूत्तरपदस्येति। न च सध्र्यङित्यादावदिग्वाचके पञ्चम्यर्थं तदस्त्विति वाच्यम्। दिक्शब्दसाहचर्येण दिग्वाचकस्यैव तस्य ग्रहणात्। ध्वनितं चेदमत्रैव भाष्ये। बाधितुमिति। 'परत्वात्प्राप्तामि'त्यादिः।

ननु 'षष्ठ्यतसर्थने'त्येव 'प्रत्ययाऽप्रत्यययो'रिति परिभाषया प्रत्यये लब्धे, प्रत्ययग्रहणेन श्रूयमाणप्रत्यये एव तत्प्रवृत्तिरित्यर्थस्य तत्र सूत्रे भाष्याऽऽदौ स्पष्टतया कथमत्र तत्प्राप्तिरिति चेन्न। इष्टाऽऽपत्तेः। अत एव 'षष्ठ्यतसर्थे'त्यत्र भाष्यम्, 'अथ प्रत्ययग्रहणं किमर्थम्?। इह मा भूत्-प्राक् प्रत्यग्वा ग्रामात्। अञ्चूत्तरपदग्रहणस्याऽप्येतदेव प्रयोजनमुक्तम्, तत्राऽन्यतरच्छक्यमकर्त्तुमि'ति। तत्र लघुना प्रत्ययग्रहणेनाऽञ्चूत्तरपदग्रहणप्रत्याख्यानमेव न्याय्यम्। दक्षिणा ग्रामादिति। दक्षिणस्यां दिशीत्यर्थे 'दक्षिणादाच्' आहि च दूरे' इत्याभ्यामाजाही। 'षष्ठ्यतसर्थे'त्यस्याऽपवादः।

प्रभृतियोगे इति। प्रभृत्यर्थकयोगे इत्यर्थः। 'तत आरभ्ये'त्यर्थ' इति कैयटात्, 'मेरुपृष्ठादारभ्ये'ति पातञ्जलभाष्ये प्रयोगाच्च। तदाह— आरभ्य वेति। 'प्रभृती'ति आरभ्येत्यर्थकमव्ययम्। तच्चाऽवधिमादायेत्यर्थकम्। तत्र आरभ्यशब्दयोगे तस्य ग्रहणमात्रार्थत्वे कर्मत्वविवक्षायां द्वितीया। यथा 'प्रातःकालमारभ्ये'त्यादौ। प्रभृतिशब्दाऽर्थस्य तु क्रियात्वा-

---

१ 'पूर्वादीनां योगे तद्वाचकादपि पञ्चमी स्यादत आह' ख. पाठः।

२ इतोऽग्रे–'पूर्वे पञ्चाला' इत्यादौ तूदयाचलसन्निहितत्वादिनेत्यवधेयम्' इति ख. पाठः।

३ 'अवयावभेदान्वये कर्मत्वविवक्षायाम्' ख. पाठः।

ऽभावान्न तद्योगे कदाचिदपि द्वितीया । आदिप्रकाराऽर्थकप्रभृतिशब्दयोगे तु न पञ्चमी । मानाऽभावात् ।

**ज्ञापकादिति** । 'अपपरिबहिरि'ति पञ्चम्यन्तेन समासविधानात् ज्ञापकादित्यर्थः । अयं भावः—'अपपरी परस्परसाहचर्याद्वर्जनाऽर्थौ कर्मप्रवचनीयावेव गृह्येते । तद्योगे 'पञ्चम्यपाङ्परिभिरि'ति वचनात्, लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च 'पञ्चम्यैव सिद्धः समासः । तत्साहचर्यात्, उक्तपरिभाषया चाऽञ्चूत्तरपदेनाऽपि तन्निमित्तपञ्चम्यैव सिद्धः समास इति व्यर्थं 'पञ्चम्ये'ति,-'बहिः'शब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चमीज्ञापनाऽर्थमि'ति । एतेन 'पञ्चम्येत्यस्याऽपादियोगे चारितार्थ्यात्सामर्थ्येनाऽन्यसुबन्तेनैव समासोऽस्तु' इत्यपास्तम् । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वाच्च 'करस्य करभो बहिरि'ति सिद्धम् । एतेन 'पञ्चमीप्रकरणे एव 'बहि'र्ग्रहणं कर्त्तुं युक्तमि'त्यपास्तम् ।[1]

**वचनग्रहणादिति** । अयं भावः-'मर्यादे'ति शब्द उच्यते यस्मिन्सूत्रे तत् 'मर्यादावचनम्' 'आङ्मर्यादाऽभिविध्योरि'ति सूत्रं, तत्र[2] य आङित्यर्थः ।

**परिहरेरिति** । 'परेर्वर्जने वावचनमि'ति वार्त्तिकात्पक्षे द्वित्वाऽभावः ।

**परित्रेति** । पञ्चमीविधावित्यर्थः । वर्जनार्थोऽपसाहचर्यादिति भावः । स्पष्टं चेदं 'कर्मप्रवचनीययुक्ते' इत्यत्र भाष्ये ।

**यस्मादिति** । अस्मादेव निर्देशादाभ्यां योगे पञ्चमी । यत्तु 'अनेन सूत्रेणैवे'ति । तन्न । एतद्घटकीभूतप्रत्योः प्रतिनिध्याद्यर्थकत्वाऽभावेन कर्मप्रवचनीयत्वाऽभावादित्याहुः । 'यस्मादि'ति पञ्चम्यर्थः प्रतियोगित्वम् । प्रतिनिधि-प्रतिदानशब्दौ च कर्मणि कि-ल्युडन्तौ । एवं च 'प्रतिनिधि-प्रतिदाने यत्प्रतियोगिकप्रतिनिधित्व-प्रतिदानत्ववती[3], ततः कर्म-

---

१ एतदग्रे—'तदविवक्षायां षष्ठीं बाधित्वा पञ्चम्येवेति बोध्यम्' इति ख. पाठः ।

२ 'तत्र विद्यमानो य आङित्यर्थः' ख. पाठः ।

३ 'प्रतिदानकर्मत्ववती' ख. पाठः ।

प्रवचनीययुक्तात्पञ्चमी'त्यर्थः। 'प्रतिनिधित्वं सादृश्यम्। प्रतिदानन्तु अदत्त-प्रत्यर्पणमि'ति हरदत्तः। 'भावक्लिल्युडन्तावि'ति तु युक्तम्। यद्यपि दत्तमेव न प्रत्यर्प्यते, किन्तु द्रव्याऽन्तरमिति, 'दत्तप्रत्यर्पणं प्रतिदानमि'त्यसङ्गतं, तथाऽपि तुल्यमूल्यत्वादिना 'तदेव प्रत्यर्पितमि'ति प्रतिपत्तेरदोषः।

कर्त्तवर्जितमिति। कर्त्तृसंज्ञारहितमित्यर्थः। ऋणत्वं वस्तुगत्या विद्यमानं निमित्तं, न तु तृतीयावाच्यकोटिनिविष्टम्। हेतुतृतीयाऽपवादो-ऽयम्। करणत्वविवक्षायान्तु तृतीयैव। शतेन बन्धित इति। शतमिह[1] ऋणम्। 'तत्प्रयोजको हेतुश्चे'ति चात्कर्त्तृसंज्ञा।

विभाषाऽगुणे। गुण इह संज्ञाक्रियाजातिव्यतिरिक्तं धर्ममात्रम्। योगविभागादिति। इदं 'हेतुमनुष्येभ्य' इत्यत्र पदमञ्जर्यां स्पष्टम्।

स्त्रियां चेति। 'उणादयो बहुलमि'तिसूत्रस्थ-'बाहुलकं प्रकृतेस्तनुदृष्टे-रि'ति वार्त्तिकनिर्देशादिदं विशेषणद्वयं प्रायिकमिति तत्त्वम्।

समुच्चयाऽर्थमिति। निपातानामनेकार्थत्वादिति भावः। स्पष्टं चेदं भाष्ये। एतेन'अन्यतरस्य, आम् = अङ्गीकार' इत्यर्थकं पदद्वयमेतदि'-त्यपास्तम्। पञ्चमीद्वितीये इति। तत्र मण्डूकप्लुत्या पञ्चमी। द्वितीया तु सन्निहितैव। उभयोः समुच्चयस्तु व्याख्यानादिति बोध्यम्। यद्यपि द्वितीया-समुच्चयो भाष्याऽऽदौ नोक्तस्तथाऽपि 'विना वातं, विना वर्षं, केनेमौ पातितौ द्रुमावि'तिप्रयोगबाहुल्यादेवंव्याख्यातमित्याहुः। केचित्तु[2] द्वितीयासमुच्चये न फलम्, 'ऋते' शब्दयोगे इव 'ततोऽन्यत्रापि दृश्यते' इत्यनेन विनाऽऽदिशब्दयोगेऽपि तत्सिद्धेरिति[3] वदन्ति। न चाऽन्य-तरस्याङ्ग्रहणस्य समुच्चयाऽर्थत्वे मानाऽभावः, विकल्पाऽर्थत्वेऽपि पक्षे षष्ठी-साधनेन तस्य चारितार्थ्यादिति वाच्यम्। 'अन्यतरस्याङ्ग्रहणसामर्थ्यात्

---

१ 'शतमिह उत्तमर्णाय धार्यमाणत्वात् ऋणम्' ख. पाठः।

२ 'केचित्तु' इत्यस्य स्थाने 'वस्तुतः' इति ख. पाठः।

३ 'तत्सिद्धेरिति बोध्यम्' ख. पाठः।

पञ्चमी भविष्यती'ति भाष्याऽऽदिप्रामाण्येन समुच्चयाऽर्थत्वाऽङ्गीकारात्।

करणे चेति। करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चमीविधानाऽर्थमिदम्। चकारः 'तृतीयाऽन्यतरस्यामि'त्यनुकर्षणाऽर्थः। वृत्तिमतेऽपि व्याख्यानादत्र न द्वितीयासमुच्चयः। षष्ठो 'गापोष्टगि'तिवत्। अद्रव्येति। द्रव्यभिन्नवचनेभ्य इत्यर्थः। द्रव्यपदेनाऽत्र सर्वनामपरामर्शयोग्यत्वे सति, किञ्चिन्निरूपितविशेष्यतावद्गृह्यते। स्तोकशब्दो यद्धर्माऽऽवेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः। स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तम्-अल्पत्वमेव। शुक्लादिवच्च एते केवलधर्मवचना अपि। करणत्वं च परम्परया। ईदृशाऽर्थे एव च साधुत्वं सूत्रबलादनुमीयते। स्पष्टं चेदम् 'अलुगुत्तरपदे' इति सूत्रे कैयटे। करणे किम्?। क्रियाविशेषणे कर्मणि माभूत् 'स्तोकं चलति'। क्रिया न द्रव्यम्। अतस्तत्समानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्याऽद्रव्यवचनत्वं बोध्यम्। न च तस्या विशेष्यत्वे द्रव्यत्वाऽऽपत्तिः। आख्याते विशेष्यत्वेऽपि द्रव्यत्वाऽभावात्। सर्वनामपरामर्शयोग्यत्वे सति विशेष्यतायामेव द्रव्यत्वाऽङ्गीकारादिति दिक्।

दूरान्तिकाऽर्थेभ्यो। अत्र 'दूरान्तिकाऽर्थैः षष्ठ्यन्यतरस्या'मितिपूर्वसूत्रात्समुच्चयार्थकाऽन्यतरस्याङ्ग्रहणाऽनुवृत्त्यैवार्थाऽधिकारात् पञ्चम्याः सिद्धत्वेन, चकारो व्यवहिततृतीयाया अपि समुच्चयाऽर्थो, व्याख्यानात्। तदाह–चात्पञ्चमीतृतीये इति। ननु 'दूराऽन्तिकाऽर्थैः षष्ठ्यन्यतरस्याम्'

---

१ 'करणत्वं च परम्परया। तृतीयार्थव्यापारे स्वाश्रयवृत्तित्वसम्बन्धेन प्रकृत्यर्थस्याऽन्वयः' इति ख. पाठः।

२ 'अतः' इत्यारभ्य 'बोध्यम्' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

३ तस्याः = क्रियाया इत्यर्थः। 'न च तस्याऽपि विशेष्यत्वे' इति पाठान्तरम्।

४ आख्याते = तिङन्ते, धातुवाच्यायाः क्रियाया, विशेष्यत्वेऽपि तस्या द्रव्यत्वाऽभावात्। तस्या असत्त्वरूपत्वस्याऽऽकरे प्रसिद्धत्वादित्यर्थः।

५ 'अङ्गीकाराच्चेति दिक्' इति ख. पाठः।

'तेभ्यो द्वितीया चे'त्येव सिद्धे 'दूराऽन्तिकाऽर्थेभ्य' इति व्यर्थमिति चेन्न । गुरुनिर्देशस्य स्वार्थे विधानाऽर्थत्वात् । अयं भावः—पूर्वविभक्ति-वैलक्षण्यबोधनाऽर्थं तथोक्तिः । 'तेभ्य' इत्युक्ते ह्युपस्थितशेषरूपपूर्वविषये एव प्रवृत्तिः स्यात् । तदाह—प्रातिपदिकार्थमात्रे इति ।

• दूरं दूरादिति । इह प्रातिपदिकाऽर्थमात्रे सप्तम्यपि वक्ष्यते । किञ्च 'दूरान्तिकार्थेभ्य' इत्यस्य 'सप्तम्यधिकरणे चे'त्यत्राऽनुवर्त्तनादेभ्योऽधि-करणेऽपि विभक्तिचतुष्टयं बोध्यम् । 'आवसथस्य दूरे' इत्यर्थे 'दूरा-दावसथान्मूत्रमि'ति प्रयोगादिति बोध्यम् ।

असत्त्वेति । व्याख्यानाच्चाऽत्राऽस्याऽनुवृत्तिः । असत्त्ववचनत्वन्तु प्रागुक्तमेव । उदाहरणे क्रियाविशेषणत्वेनाऽसत्त्ववाचिता बोध्या । 'सप्तम्यधिकरणे चे'त्यत्राऽनुवृत्ते तु नाऽस्य सम्बन्ध इति बोध्यम् । स्पष्टं चेदं सर्वं [1]वृत्त्यादौ ।

॥ इति पंचमी ॥

( अथ षष्ठी )

'शेष'शब्दाऽर्थमाह—कारकेति । न चैवं 'राहोः शिर' इत्यादौ षष्ठी न स्यात्, कारकप्रातिपदिकव्यतिरिक्ताऽर्थाऽभावादिति वाच्यम् । 'नाना-ऽवस्थायुक्तराहोरिदमेकाऽवस्थायुक्तं शिर' इति काल्पनिकाऽवयवा-ऽवयविभावमादाय तदुपपत्तेराद्यन्तवत्सूत्रे आकरे उक्तत्वात् ।

स्वस्वामीति । [2]स्वत्व-स्वामित्वसमूहः सम्बन्ध इत्यर्थः । एतच्च मञ्जूषायां विस्तरेण निरूपितम् । षष्ठी च विशेषणत्वेन विवक्षितादेव । विशेष्ये प्रातिपदिकाऽर्थ–कारकाऽर्थाऽन्यतरत्वस्याऽऽवश्यकतया शेषत्वाऽभावात् । शब्दशक्तिस्वभावाच्च । तदुक्तम्—

---

१ 'वृत्तौ' ख. पाठः ।

२ 'स्वत्व' इत्यारभ्य 'निरूपितम्' इत्यन्तो ग. घ. पाठः ।

'द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तत्राऽभिधीयमानश्च प्रधानेऽप्युपयुज्यते' ।। इति[1] ।

परार्थत्वात्[2] = गुणानां परं प्रति विशेषणत्वेन विवक्षितत्वात्, विशेषणतायाश्च भेदसम्बन्धं[3] विनाऽनुपपत्त्या विशेषणत्वेनाऽऽकाङ्क्षितत्वात्, तत्र सम्बन्धो व्यतिरिच्यते = उद्भूततया प्रतीयते इति तत्रैव षष्ठी । विशेष्यस्य तु पदान्तराऽसमभिव्याहारे स्वार्थनिरूपितविशेष्यत्वादेव न विशेष्यतानियामकसम्बन्धाकाङ्क्षा । विशेषणसमभिव्याहारे तु विशेषणे शब्देन = षष्ठ्यादिना. प्रतीयमानः प्रधानेऽप्युपयुज्यते, तस्य द्विष्ठतास्वभावत्वात्- राजादिनिरूपितविशेष्यतायाः पुरुषे प्रतीयमानाया उपकारको भवतीत्यर्थः।

अयं भावः—'राज्ञ' इत्यत्र पुरुषपदाऽसमभिव्याहारेऽपि विशेषणत्वं 'स्व'सामान्यनिरूपितं प्रतीयते । तेन चाऽऽकाङ्क्षितः सम्बन्ध इति, तत्रैव

---

१ इतोऽग्रे-'पराऽर्थत्वात् = परं प्रति विशेषणत्वेन विवक्षितत्वात् । व्यतिरिच्यते = स्वामित्वाऽऽदिरूपषष्ठ्यर्थस्तत्रोद्भूततया प्रतीयते । तत्राऽभिधीयमानः = तद्गतत्वेन शब्देनाऽभिधीयमानः, प्रधानेऽप्युपयुज्यते, निरूपकत्वस्य तत्र प्रतीतेरि'ति तदर्थः ।

अयं भावः–प्रधानाऽनुरोधित्वाद् गुणानां, तैरेव स्वाऽन्वयसिद्धये सम्बन्धाऽवलम्बनम् । एतन्मूलक एव 'विशेषणनिष्ठः सम्बन्ध' इत्युद्घोषः । एवं च गुण एव सम्बन्धस्योद्भूतत्वेन प्रतीतेस्तदर्थिका षष्ठी, न प्रधानात् । एवं च 'राज्ञ' इत्यत्र स्वामित्वं षष्ठ्यर्थः । राज्ञि स्वामित्वं–पुरुषे तन्निरूपकस्वत्वं विनाऽनुपपन्नमिति तत्र तदप्याक्षेपगम्यम् । अत एव तत्र षष्ठीप्रयोजकता तस्येति । शेषश्च उक्तादन्यः' इति ख. पाठः ।

२ 'परार्थत्वात्' इत्यारभ्य 'भाष्यप्रदीपोद्द्योते' इत्यन्तो ग. घ. पाठः । ख. तु भिन्नोऽत्र पाठः । स च अत्रैव पत्रे १ सङ्ख्यकटिप्पण्यां द्रष्टव्यः ।

३ 'अभेदसम्बन्धं विना' इति ग. पाठः ।

षष्ठी । एवञ्च षष्ठ्यर्थो विशेषणत्वं, तन्नियामकः सम्बन्धश्चेति भाष्ये स्पष्टम् । निरूपितं च भाष्यप्रदीपोद्द्योते ।

शेषश्च उक्तादन्यः । स च तत्तद्रूपेण स्वत्वादिः, सम्बन्धत्वेन रूपेण च । सम्बन्धत्वेन रूपेण कर्मत्वाऽऽदिश्च ।

तत्र कासाञ्चित्कारकविभक्तीनां 'कारके' इत्यधिकाराज्जनकत्वसमानाधिकरणाऽऽश्रयत्वोद्देश्यत्वाऽवधित्वैर्बोधकत्वम् । कासाञ्चिज्जनकत्वमात्रेण, यथा 'अकथितं चे'त्यादिकर्माऽऽदिविभक्तीनाम् । उभयत्राऽपि यथाप्रयोगं सम्बन्धत्वेन विवक्षायां षष्ठी । क्रियाकारकभावमूलकसम्बन्धविवक्षायां वा । 'सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः' इति ह्युक्तेः । ते च मञ्जूषायां विस्तरेण निरूपिताः । यथा स्वत्वादि प्रतिग्रहाऽऽदिनिमित्तम् । तत्तद्रूपेण स्वत्वाऽऽदिबोधादेव यत्किञ्चित्सम्बन्धसत्त्वेऽपि स्वत्वाऽऽदिसम्बन्धविशेषतात्पर्येण 'चैत्रस्य नेदं वास' इत्यादिप्रयोगः । 'एकशतं षष्ठ्यर्थाः' 'अस्तेरनन्तरे, समीपे वे'ति 'षष्ठी स्थाने' इति सूत्रस्थं भाष्यं, 'षष्ठी स्थाने' इति सूत्रं च सङ्गच्छते । सम्बन्धविशेषप्रतीतिस्तु प्रकरणाऽऽदिना बोध्या । कारकविभक्तीनामपि क्रिया-तत्तत्कारकभावः सम्बन्ध एवाऽर्थः । तस्य च संसर्गविधयैव भानमित्येव तत्त्वमिति निरूपितं मञ्जूषायां षष्ठीप्रकरणे ।

यत्तु 'अप्रधानं शेष' इति । तन्न । प्रातिपदिकाऽर्थमात्रे 'शुक्लो घट' इत्यादौ विशेषणे षष्ठीप्रसङ्गात् । न च प्रथमया बाधः । तस्याः प्राधान्ये चरिताऽर्थत्वात् । एतेन 'गुणे षष्ठी'ति न्यासः परास्तः । सङ्ख्याऽन्वयस्त्वत्र प्रकृत्यर्थे, न तु षष्ठ्यर्थसम्बन्धे । एकराजकीयसम्बन्धद्वयाद्यभिप्रायेण

---

१ 'क्रियाकारकभाव' इत्यारभ्य 'निमित्तम्' इत्यन्तो ग. घ. पाठः ।

२ 'संयोगादिसम्बन्धसत्त्वेऽपि' ख. पाठः ।

३ 'कारकविभक्तीनामपि' इत्यारभ्य 'षष्ठीप्रकरणे' इत्यन्तो ग. पाठः ।

४ 'सङ्ख्याऽन्वयस्तत्र' ग. घ. पाठः । ५ 'षष्ठ्यर्थे सम्बन्धे' ख. पाठः ।

'राज्ञोरि'त्याद्यापत्तेः। सम्बन्धमात्रविवक्षायामिति। सम्बन्धसामान्येनाऽन्वयविवक्षायामित्यर्थः। सम्बन्धत्वेन सम्बन्धभाने इति यावत्। कर्त्तुरपि तथा विवक्षा 'क्तस्य च वर्त्तमाने' इतिसूत्रे 'छात्रस्य हसितमि'त्यादिप्रयोगसिद्धये भाष्ये स्पष्टा। 'प्रत्ययलोपे' इति सूत्रे 'सदन्वाख्यानाच्छास्त्रस्ये'ति वार्त्तिकव्याख्यानभाष्ये 'सतो वा, शास्त्रमन्वाख्यापकमि'ति दर्शनात्। 'वार्त्तिके शास्त्रं कर्तृ, शेषत्वेन विवक्षितमि'ति कैयटेन स्पष्टमेवोक्तम्। संयोगसम्बन्धाऽवच्छिन्नाऽऽधारस्य न सम्बन्धसामान्येनाऽन्वयविवक्षा। अत एव मतुब्विधायके 'घटवद्भूतलमि'त्यादिप्रयोगसाधकम् 'अस्मिन्नि'ति चरिताऽर्थमिति तत्रैव सूत्रे भाष्ये स्पष्टम्।

एधोदकस्येति। एधः–कर्तृ। दकस्य = उदकस्येत्यर्थः। उदकपर्यायो दकशब्दोऽप्यस्ति। 'भुवनममृतं जीवनीयं दकं चे'ति हलायुधकोशात्।

हेतौ द्योत्ये इति। 'हेतावि'त्यनुवर्त्तते। जनकतासम्बन्धेनेतराऽन्वये इत्यर्थः। तेन 'अन्नं हेतुं पश्ये'त्यादौ नेत्याहुः। षष्ठी स्यादिति। हेतुशब्दात्, तत्समानाधिकरणशब्दाऽन्तराच्चेत्यर्थः। हेतुशब्दाऽर्थस्य विशेषणत्वेनाऽन्नादर्विशेष्यत्वात्तत्र तत्सिद्धये 'प्रयोगे' इति। अन्यथा 'हेतोरि'त्येव वदेत्। हेतुशब्दविशेषणे तु 'सुन्दरं कटमि'त्यादाविव तत्समानविभक्तिर्न्यायत एव सिद्धेति दिक्।

सर्वनाम्नस्तृ। 'सर्वनाम्न' इति षष्ठी। तदाह–सर्वनाम्नः प्रयोगे इति। पञ्चम्यान्तु हेतुशब्दात्षष्ठीतृतीये न स्यातामिति भावः। किं निमित्तमिति– प्रथमान्तं, द्वितीयान्तं च। किं प्रयोजनमिति। यद्यपि भाष्ये 'निमित्तकारणहेतुष्वि'ति त्रय एव पठ्यन्ते, तथाऽपि तदुपलक्षणमिति भावः। 'पर्यायाऽन्तरव्यावृत्त्यर्थं पर्यायाऽन्तरोपादानमिच्छन्ती'ति

---

१ 'प्रत्ययलोप इति सूत्रे कैयटे च सदन्वाख्यानात्' ख. पाठः।

२ वार्त्तिकव्याख्याने सतो वा शास्त्रमन्वाख्यापकमिति भाष्ये' ख. पाठः।

३ 'तत्रैव भाष्ये स्पष्टम्' ख. पाठः। ४ 'हलायुधे'ति ग. घ. नास्ति।

मताऽन्तरमपि कैयटीये स्पष्टम्। यद्यपीदं वृत्तौ 'सर्वनाम्नस्तृतीया चे'-त्यत्र पठितं, तथाऽपि भाष्ये 'हेताविे'त्यत्र पठितत्वादसर्वनामविषयमपि। 'निमित्तादिषु प्रयुक्तेषु तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चे'त्यर्थः।[1]

किन्तु 'प्राय'ग्रहणात्तत्र तृतीयाऽऽदय एवेत्याशयेनाह—प्रायग्रहणादसर्वनाम्न इत्यादि। यत्तु 'सर्वनामसूत्रशेषे भाष्ये 'भवतः सर्वनामत्वे तृतीया प्रयोजनम् 'सर्वनाम्नस्तृतीया चे'ति, 'भवता हेतुना' 'भवतो हेतोरि'त्यादि। तत्तु यथाश्रुतसूत्रमते। अत एव सूत्रोपन्यासः।

यत्तु तद्बलादिदं[2] वार्त्तिकमपि सर्वनामविषयमिति। तन्न। कैयटाऽऽदिविरोधात्। प्रयोजनोपलक्षणतायास्तद्भाष्ये आवश्यकत्वाच्च। 'हेतावि'-त्यत्रोपन्यासस्य निर्बीजत्वाऽऽपत्तेश्च। एवं च 'षष्ठी हेतुप्रयोगे' 'सर्वनाम्नस्तृतीया चे'ति सूत्रे गताऽर्थे इति वदन्ति।

**षष्ठ्यतस**। दिक्शब्दत्वात्पञ्चम्यां प्राप्तायां वचनम्।[3] प्रत्ययग्रहणप्रयोजनम् 'अन्यारादितरे'त्यत्र निरूपितम्। 'ततः पश्चात्स्रंस्यते, ध्वंस्यते' इति भाष्यप्रयोगात्पश्चाद्योगे [4]पञ्चम्यपीत्याहुः। 'सार्वविभक्तिकः षष्ठ्यन्तात्तसिरि'त्यन्ये। दिशि रूढाभ्यां दिग्देशकालवृत्तिभ्यां प्रथमा-सप्तमी-पञ्चम्यन्ताभ्यां दक्षिणोत्तराभ्यां स्वार्थेऽतसुज्विधीयते। 'अस्तात्यर्थे' इति नोक्तम्। गौरवाऽऽपत्तेः।

**षष्ठ्यपीति**। स्पष्टं चेदं वृत्तौ। ननु क्लृप्तस्वरितत्वकत्वादधिकाराच्च पञ्चम्याः सम्बन्धो न्याय्यः, अत एव 'तत्राऽगारं धनपतिगृहादुत्तरेणाऽस्मदीयमि'ति, 'स्त्र्यधिकारात्परेण वाऽसरूपविधिर्ने'ति, 'ततः परेण नाऽयमनुवर्त्तते' इत्यादिप्रयोगाः सङ्गच्छन्ते, न तु षष्ठ्या इति चेन्न।

---

१ 'निमित्तादिषु' इत्यारभ्य 'इत्यर्थः' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

२ 'तद्बलादिदं' ख. पाठः।

३ 'दिक्शब्दत्वात्' इत्यारभ्य 'वचनम्' इत्यन्तो ग. घ. पाठः। ख. नास्ति।

४ 'पञ्चमीत्याहुः' ख. पाठः।

'अतसर्थप्रत्यये ने'ति षष्ठीप्रकरणे करणेनैव षष्ठ्याः सम्बन्धे सिद्धे, षष्ठीग्रहणेनोत्तरत्र सम्बन्धबोधनात्। एतेन 'योगविभागे मानाऽभाव' इत्यपास्तम्। भाष्ये तु नैतद्दृश्यते।

'स्त्र्यधिकारात्परेणे'त्यत्र तृतीया। 'ततः परेण शास्त्रेण वासरूपसम्बन्धो ने'त्यर्थः। 'ततः परेणे'त्यत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिः। 'तत्राऽगारमि'ति श्लोके ('[1]उत्तरेणे'ति) 'तारणेने'त्यनेन समानाधिकरणं तृतीयान्तमित्यपि वक्तुं शक्यमित्यन्यत्र विस्तरः।

दूरान्तिकाऽर्थैः। इयं च षष्ठी यदपेक्षया दूरत्वाऽऽदिकं तत इति बोध्यम्। पञ्चमी चेति। व्याख्यानाच्चाऽत्र पञ्चम्या[2] एव समुच्चयो, न तु द्वितीयातृतीययो[3]रपि।

ज्ञोऽविदर्थे। इत आरभ्य 'व्यवहृ' इत्यन्तसप्तसूत्री[4] न षष्ठीविधानाऽर्था। अत्राऽपि 'शेषे' इत्यस्य सम्बन्धेन 'षष्ठी शेषे' इत्येव सिद्धेः। अत एव 'अधीगर्थे'ति सूत्रे 'शेषे' इति वर्त्तते। कर्मणश्चाऽविवक्षा शेष' इति भाष्ये[5] उक्तम्। किन्त्वेतैर्योगे षष्ठ्येव, न तु तल्लुक्प्रयोजकीभूतः समास इत्यर्थकतया समासाऽभावाऽर्था[6]। अत एव 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्त्तिकं नाऽपूर्वम्। एतेन 'एतत्सूत्रकदम्बसामर्थ्याल्लुक एव

---

१ अत्र 'उत्तरेणेति' इति मनोरमातः पूरितम्।

२ 'पञ्चम्या एव षष्ठ्या समुच्चयो, न तु षष्ठ्या द्वितीयातृतीययोरपि समुच्चयः' इति ख. पाठः।

३ 'द्वितीयातृतीययोरपि समुच्चयः। मनोरमायामपि 'विप्रकृष्टाऽपि पञ्चमी समुच्चीयते, न तु द्वितीयातृतीये'इत्येव साम्प्रदायिकः पाठो, न तु षष्ठीपदघटितः ( 'षष्ठीद्वितीयातृतीयाः' इति ) इति बोध्यम्' इति ख. पाठः।

४ 'सप्तसूत्री, कृत्वोर्थे इति च न षष्ठीविधानाऽर्थम्'-ख. पाठः।

५ 'भाष्ये स्थितम्' ख. पाठः।

६ 'समासाऽभावाऽर्थम्' इत्येव सर्वत्र पाठः।

बाधो, न समासस्ये'ति परास्तम् । तथा सति समासाऽभावाय तद्वचनस्याऽऽवश्यकत्वे, लुकः प्राप्तेरेवाऽभावेनैतत्प्रकरणवैयर्थ्यस्य तादवस्थ्यादित्याहुः ।

न चैवं षष्ठीसमासनिषेधप्रकरणे एवैतानि पठ्यन्तामिति वाच्यम् । 'अधीगर्थे'त्यादिभिः कृद्योगे कर्मेऽर्थकषष्ठ्यां समासनिषेधाऽऽपत्तेः । 'दिवस्तदर्थस्ये'त्यत्र 'कर्मणी'त्यस्य कर्त्तव्यताऽऽपत्तेश्च । न च शेषत्वाऽविवक्षायां कृद्योगषष्ठ्या समासस्य दुर्वारत्वेन, वैकल्पिकत्वेन च 'अधीगर्थे'त्यादीनां वैयर्थ्यमेवेति वाच्यम् । करणाऽऽदिल्युडन्तस्मरणाऽऽदिशब्दैः कृद्योगषष्ठ्या समासे, कारकपूर्वत्वात्कृदुत्तरपदप्रकृतिस्वरः, शेषषष्ठ्या समासे त्वन्तोदात्तत्वमिति भेदात् । आदिकर्मणि कर्त्तरिक्तप्रत्ययाऽन्तप्रस्मृताऽऽदिभिः 'न लोके'तिनिषेधात्कारकषष्ठ्यभावे, समासाऽभावस्यैव फलत्वाच्च[2] । तदुक्तं हरिणा—

'कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये' ॥ इति ।
'निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते' ॥ इति च ।

एवं च वृत्त्यादिषु यदेषामुदाहरणं, प्रत्युदाहरणं च तिङन्तं दृश्यते, तत्सर्वमुपलक्षणं बोध्यम् । तद्ध्वनयन्नाह—सर्पिषो ज्ञानमिति । अत्र सूत्रे 'अविदर्थस्ये'तिच्छेदः । अन्यथाऽसन्देहार्थं 'विदर्थस्य ज्ञः करणे' इत्येव

१ 'षष्ठ्यन्तात्' इति घ. पाठः ।

२ 'फलत्वाच्च । एतेन 'मातुः स्मृतमि'त्यादौ यदि कर्मणि क्तस्तदा कर्मण उक्तत्वात् 'अधीगर्थे'त्यस्य विषय एव न । भावे तु सकर्मकत्वात् क्तो दुर्लभः । गत्याद्यर्थत्वाऽभावात्कर्त्तर्यपि दुर्लभ' इत्यपास्तम् । कर्मणः शेषत्वेन विवक्षायामविवक्षितकर्मत्वेनाऽकर्मकत्वसत्त्वाच्च' इति ख. पाठः ।

ब्रूयात्। उदाहरणे सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः। जानातेः प्रवृत्तौ लक्षणेत्याहुः।

अधीगर्थद। अधीगर्थः–स्मृतिः। कर्मणि किम्?। 'मातुर्गुणस्मरणम्'। करणभूतगुणानां शेषत्वविवक्षायामनेन षष्ठ्यभावे, समासो यथा स्यादिति। एधोदकस्येति। 'एध' इति पृथक् पदम्।

रुजार्थानाम्। यद्यपि रुजा व्याधौ रूढस्तथाऽपि 'भावकर्त्तृकाणामि'त्यस्य 'नदी कूलानि रुजती'ति भाष्ये प्रत्युदाहरणादत्र धात्वर्थमात्रपरः। धातोर्भाववचनत्वाऽव्यभिचारेण सामर्थ्यात् 'वचन' इति कर्त्तरि ल्युट्। 'भाव'शब्देन च घञादिवाच्यः सिद्धरूप उच्यते। ल्युट्प्रकृत्यर्थोऽविवक्षितः। तत्फलितमाह—भावकर्त्तृकाणामिति। एवमेव तु सूत्रयितुमुचितम्। भावकर्त्तृकत्वं प्रकटयन्व्याचष्टे—रोगकर्त्तृकमिति। रोगोऽत्र क्षयादिः। भावकर्त्तृकाणां किम्?। 'श्लेष्मणश्चौररुजा'। अत्र श्लेष्मा न भाव इति नाऽनेन षष्ठी।

सर्पिषो नाथनमिति। 'सर्पिर्मे भूयादि'त्याशासनमित्यर्थः।

जासिनिप्र। 'जसु ताडने' 'जसु हिंसायामि'ति चुराद्योर्ग्रहणं, न तु 'जसु मोक्षणे' इति दैवादिकस्य। 'जासी'ति निर्देशात्, 'हिंसायामि'तिवचनाच्च। निप्रोपसृष्टो हनो 'निप्रहणः'। 'हन्तेरत्पूर्वस्ये'ति णत्वम्।

चुरादिरिति। 'नट नृत्तावि'त्यस्य घटादेरग्रहणं, दीर्घनिर्देशात्। क्राथनमिति। 'क्रथ हिंसायाम्, घटादिः। तस्येह निपातनाद्वृद्धिरि'ति वृत्तिः। एतत्सूत्रप्रामाण्यान्नाटसाहचर्याच्चाऽयमपि चुरादिर्बोध्यः। तस्याऽऽकृति-

१ 'प्रत्युदाहरणात्सूत्रे लक्षणया धात्वर्थमात्रपरः' ख. पाठः।

२ 'तस्येह निपातनाद्वृद्धिरिति वृत्तिः। 'चिण्णमुलो'रिति तु मित्त्वसामर्थ्यात्परत्वाच्च निपातनं बाधित्वा, चिण्णमुल्विषये प्रवर्त्तत एव। तत्र 'क्राथे'तिविकृतनिर्देशात्संनियोगशिष्टन्यायेन निपातनविषय एवाऽनेन शेषलक्षणा षष्ठी, तत्रैव च समासाऽभाव इत्याहुः' इति ख. पाठः।

३ 'एतत्सूत्र' इत्यारभ्य 'इत्यन्ये' इत्यन्तो ग. घ. पाठः ख. नास्ति।

गणत्वात् । 'निपातनस्य शेषषष्ठीसंनियोगशिष्टत्वे कर्मत्वेन विवक्षायां 'नटस्य क्राथनमि'त्यस्याऽनापत्तिः । सामान्येन निपातने चिण्णमुल्विषये 'क्रथं-क्रथमि'त्यादेः, 'क्रथयती'त्यादेश्चाऽनापत्ति'रित्यन्ये ।

समर्थयोरिति । 'सम'पर्याय'सम्'शब्देन समासः । शकन्ध्वादित्वात् पररूपं वा । ब्राह्मणपणनमिति । 'आय'प्रत्ययो वैकल्पिकत्वान्न कृतः । उदाहरणे 'स्तुतावेवे'ति नियमादपि नेत्याहुः ।

दिवस्त । कर्मणि षष्ठी स्यादिति । '[1]शेषे' इति त्वत्र न सम्बध्यते, उत्तर[2]सूत्रद्वयाऽऽरम्भात् । तथा हि—अत्र 'शेषे इत्यस्य सम्बन्धे, 'विभाषोपसर्गे' इत्यत्र 'शेषे' इति सम्बध्यते, उत न ? । नाऽऽद्यः । 'दिवस्तदर्थस्ये'त्यनेनैव समासाऽभावस्य सिद्धत्वेन सूत्रवैयर्थ्याऽऽपत्तेः । न च पक्षे 'षष्ठी शेषे' इत्यस्य प्रवृत्त्या, पक्षे समासप्रवृत्तिः फलम् । 'नोपसर्गे' इति न्यासेन 'दिव' इत्यस्य निषेधे, शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया, 'विभाषा'ग्रहणस्य तथाऽपि वैयर्थ्याऽऽपत्तेः । नाऽन्त्यः । वेदेऽपि 'विभाषोपसर्गे' इतिसूत्रेण कर्मणि द्वितीयायाः सिद्धत्वात्, आपाद्यरूपस्य तत्राऽभावाच्च 'द्वितीया ब्राह्मणे' इत्यस्य वैयर्थ्याऽऽपत्तेः । न च तन्निरुपसर्गे द्वितीयाऽर्थमिति वाच्यम् । कर्मत्वविवक्षायां 'दिव' इत्यस्याऽप्रवृत्त्या 'कर्मणि द्वितीये'त्येव सिद्धत्वेन वैयर्थ्यस्य तदवस्थ-

---

१ 'शेष इति त्वत्र न सम्बद्ध्यते । व्याख्यानात् । (अत[1]एव 'द्वितीया ब्राह्मणे' इति सूत्रं 'गामस्य तदहः सभायां दीव्येयुरित्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयाऽर्थमि'ति भाष्ये उक्तम्) । तद्ध्वनयन् तिङन्तमुदाहरति—शतस्य दीव्यतीति' इति ग. घ. पाठः ।

२ 'उत्तरसूत्रद्वयारम्भात्' इत्यारभ्य 'कैयटश्च सङ्गच्छते' इत्यन्तः ख. पाठो, मनोरमाशब्दरत्नधृतत्वात् ग. घ. नास्ति ।

---

1 लघुशेखरपाठोऽयम् ।

त्वात्। न च 'द्वितीया ब्राह्मणे' इति सूत्रे 'शेषे' इत्यनुवर्त्तते, तेन कर्मत्वाऽविवक्षायां द्वितीयाऽर्थमिति वाच्यम्। विच्छिन्नत्वेनाऽनुवृत्तेरयुक्तत्वात्। वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्च। कृति त्विदं न प्रवर्त्तते इति 'पुनर्विधानं समासाऽभावाये'त्यपि न वाच्यम्। अत एव 'द्वितीया ब्राह्मणे' इति सूत्रे 'किमुदाहरणम्?'। 'गां प्रतिदीव्यन्ति'। पूर्वेणाऽप्येतत् सिद्धम्। इदं तर्हि 'गामस्य तदहः सभायां दीव्येयुरि'ति भाष्यम्, 'अत्र 'दिवस्तदर्थस्ये'ति नित्यं षष्ठी प्राप्नोती'ति कैयटश्च सङ्गच्छते। तद्ध्वनयन् तिङन्तमुदाहरति—शतस्य दीव्यतीति। ([1]मनोरमायान्तु 'अत एवेह त्रिसूत्र्यां तिङन्तमुदाहरती'त्युक्तम्। तत्र तृतीयसूत्रस्य वैदिक्यामुपन्यासः)। यद्यपि पूर्वसूत्रे दिवं पठित्वा 'तदर्थस्ये'ति त्यक्तुं शक्यते, तथाऽपि योगविभाग उत्तरार्थः। 'शेषे' इत्यस्याऽसम्बन्धाऽर्थश्चेत्याहुः।

विभाषोपसर्गे। अत्र 'शेषे' इत्यस्याऽसम्बन्धे बीजमुक्तम्। तदाह—पूर्वयोगापवाद इति। स्पष्टं चेदं 'न वेती'त्यत्र भाष्ये।

प्रेष्यब्रुवोः। इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषैकवचनं—'प्रेष्ये'ति। तत्साहचर्याद्ब्रुविरपि तथाभूत एव। अत एवेह 'शेषे'इति न सम्बध्यते। तिङन्तेन समासस्याऽप्रसक्तत्वात्। यद्यपि कल्पबाद्यन्ते समासप्रसक्तिरस्ति, तथाऽपि प्रैषे तदन्तप्रयोगाऽभावान्न दोषः। अत एव 'हविषः प्रस्थितस्य ने'ति वक्तव्यमि'ति वार्त्तिकस्य, 'प्रस्थितं प्रेष्ये'त्युदाहरणं भाष्योक्तं सङ्गच्छते। अन्यथा शेषषष्ठ्यापत्तेः। 'प्रस्थितत्वेन विशेषितात् हविर्वाचकात्पूर्वसूत्रविषये षष्ठी ने'ति तदर्थः। ([2]इदं सूत्रं लोकेऽपि वर्त्तते, उत्तरसूत्रे 'छन्दो'ग्रहणादित्याहुः)। अग्नय इति। '[3]छागाऽवयवीभूतमेदस्वि-वपा-रूपहविः-कर्मकमि'ति बोधः।

---

१ ख. पाठोऽयं ग. घ. नास्ति।

२ अयं ख. पाठः।

३ 'छागावयवीभूतवपासम्बन्धिहविर्भूतमेदःकर्मकमितिबोधः' ख. पाठः।

**शेषे किमिति** । 'शेषे' इत्यस्य विच्छिन्नत्वादधिकरणकारके एव षष्ठी-विधानं युक्तम् । न च 'कृद्योगा षष्ठी समस्यते', 'प्रतिपदविधाना न समस्यते' इत्युक्त्वा, 'सर्वा प्रतिपदविधाना, शेषलक्षणां वर्जयित्वे'ति भाष्यात् 'शेषे षष्ठी'तिलक्षणभिन्नलक्षणविहितषष्ठ्या समासाऽभावस्य बोधितत्वेनाऽत्र शेषसम्बन्ध आवश्यक इति वाच्यम् । 'दिवस्तदर्थस्ये'त्यादौ शेषपदाऽसम्बन्धस्य भाष्यसंमतत्वेन, तद्भाष्यस्य सङ्कोचेन व्याख्येयत्वात् । 'वर्जयित्वे'ति पर्युदासात् 'सर्वा'पदेन शेषपदसम्बन्धवत्या एव ग्रहणमिति भाष्याऽऽशय इति प्रश्नः ।

**द्विरहनीति** । वृत्त्यादिप्रामाण्यात्, एवंविधबहुतरप्रयोगदर्शनाच्च 'दिवस्तदर्थस्य' 'प्रेष्यब्रुवोरि'त्यत्र शेषपदाऽसम्बन्धस्य मानाऽन्तरसिद्धतया, तदंशे[1] सर्वपदसङ्कोचेऽप्येतदंशे सङ्कोचे मानाऽभावाच्च, मण्डूकाऽनुवृत्तिः स्वीक्रियते इत्युत्तराऽऽशयः । अनुवृत्तौ[2] दृढतरं मानन्तु नोपलभ्यते ।

**कर्त्तृकर्मणोः** । अत्र 'शेषे' इति न सम्बध्यते । सूत्रवैयर्थ्याऽऽपत्तेः । न च समासनिवृत्त्यर्थम् । 'कृद्योगा षष्ठी समस्यते' इति भाष्यविरोधात् ।

**कृतिरिति**—भावे क्तिन् । कृष्णः कर्त्ता । जगत इति । कर्मेदम् । तृचा कर्त्तुरुक्तेर्न कृष्णात्षष्ठी । अत्र कर्त्तृसाहचर्यात्कर्माऽपि धात्वर्थे भेदेनाऽन्वय्येव गृह्यते । तेन 'स्तोकं पाक' इत्यादौ क्रियाविशेषणान्न षष्ठी । ध्वनितं चेदं 'पूजनात्पूजितमि'ति सूत्रे भाष्यकैयटयोः । स्पष्टं च पद[3]-मञ्जर्याम् । **गुणकर्मणि चेति** । इदं च 'अकथितं चे'ति सूत्रे भाष्ये स्पष्टम् ।

**कृति किमिति** । कर्त्तृकर्मभ्यां क्रिया सन्निधाप्यते । धातुरेव च क्रियावाची । एतद्भाष्यप्रामाण्येन च धातुवाच्यक्रियाऽन्वये एव कर्माऽऽदिसंज्ञाः । तदन्वययोग्यताऽवच्छेदकरूपेण धातुभिरेव तदुपस्थापनं, न तु

१ 'तदंशे' इति ग. घ. नास्ति ।

२ 'अनुवृत्तौ' इत्यारभ्य 'नोपलभ्यते' इत्यन्तो ग. घ. पाठः ।

३ 'पदमञ्जर्यामपीत्याहुः' ख. पाठः ।

तद्धितादिभिः । अत एव हिरुगादियोगे न कर्माऽऽदिसंज्ञाः । एवं च 'देवदत्तेन शत्योऽश्वः' 'आश्रिको भूमिमि'त्यादयोऽपप्रयोगा एव । एतेनाऽत्र षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम् ।

'अधिका खारी द्रोणेने'त्यत्र तृतीया हेतौ । 'अध्यारूढा खारी द्रोणेने' त्यत्रेव कर्त्तुरत्र क्रियायोगाऽभावात्कर्त्तृत्वाऽभावे जनकत्वरूपहेतुत्त्व-सत्त्वात् । एतेनाऽत्रैव षष्ठीवारणाऽर्थं कृद्ग्रहणमित्यपास्तम् ।

धातोश्च द्वये प्रत्ययाः, तिङः, कृतश्च । तत्र तिङ्योगे 'न लोके'ति-निषेधात्कृद्योगे एव भविष्यतीति, किं तेन ? । न च 'न लोके'त्यत्र कृद-व्ययस्य ग्रहणं यथा स्यादित्यर्थं तत्र विशेषणाऽर्थं तत् । 'अव्ययाऽर्थस्य ये कर्त्तृकर्मणी' इत्युक्त्यैवाऽन्याऽव्ययवारणात् । न च 'उभयप्राप्तावि'-त्यत्र बहुव्रीह्यर्थं कृद्ग्रहणम् । अन्यथा तत्पुरुषः सम्भाव्येत । तथा च भिन्न-क्रियाकर्त्तृकर्मणोः प्राप्तावपि नियमः स्यात्—'ओदनस्य पाकः', 'ब्राह्मणानां प्रादुर्भावः' इति । किञ्च 'करोतीति कृदि'ति 'कृ'च्छब्देन कर्त्तोच्यते । तत्र 'कर्त्तृकर्मणोरि'त्येव सिद्धे, तद्ग्रहणं गुणभूतेऽपि णिच्प्रकृत्यर्थ-कर्त्तरि यथा स्यादिति, यथा 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामि'-तीति वाच्यम् ।

'एकाचो द्वे' इत्यादाविव व्याख्यानेन बहुव्रीहिसम्भवात् । तृतीया-वद्गुणभूते कर्त्तरि षष्ठ्या अपि विनैव यत्नं सिद्धेश्चेति प्रश्नः ।

---

१. 'अधिका खारी द्रोणेनेत्यत्र प्रकृत्यादित्वात्ततीया, हेतौ वा' इति ख. पाठः ।

२. 'कर्त्तृत्वाऽभावेन' ख. पाठः ।

३. 'एतेन' इत्यारभ्य 'अपास्तम्' इत्यन्तो ग. घ. पाठः, ख. नास्ति ।

४ 'गुणभूतेऽपि णिच्प्रकृत्यर्थकर्त्तरि यथा स्यादित्येतदर्थम् । यथा' इति ख. ग. पाठः ।

५ 'गुणभूते कर्त्तरि तृतीयावत्षष्ठ्या अपि' ख. पाठः ।

तद्धित इति । कृद्ग्रहणात्कृदन्तशक्तिप्रयोज्योपस्थितिविषयक्रियाऽन्वयिनोः कर्त्तृकर्मणोरित्यर्थः[1] । अत एव 'तण्डुलानां पाचकतरः' इत्यादौ[2] षष्ठी । तरबन्तेन क्रियोपस्थितौ कृदन्तशक्तिज्ञानस्याऽपेक्षणात् । प्रकृते तु न षष्ठी, सकर्मकप्रकृतिकभावक्तान्तस्येदृशवृत्तिमात्रविषताया भाष्यसंमततया, तस्य केवलस्याऽप्रयोगेण, तत्र व्यवहाराऽभावाच्छक्त्यग्रहेणाऽस्य समुदायस्य तच्छक्तिज्ञानसहकारेणोपस्थित्यजनकत्वात् । किन्तु तद्धितान्तसमुदायशक्त्यैवाऽस्य क्रियोपस्थापकत्वम् ।

तथा च भाष्यम्—'तद्धितस्य ये कर्त्तृकर्मणी, तत्र मा भूदि'ति । तद्धिताऽन्तशक्त्युपस्थाप्यक्रियाया एव ये कर्त्तृकर्मणी, तत्र मा भूत् । उदाहरणे[3] तद्धितान्तशक्त्युपस्थाप्यैव क्रिया, न तु कृदन्तशक्तिज्ञानोपस्थाप्या । [4]कृदन्तस्येदृशस्य शक्त्यग्रहात् । (धातु[5]शक्तिज्ञानस्य सहकारित्वेऽपि, न सा कृदन्तशक्तिः) । तथा च भाष्याऽन्तरं—'यदा वाक्यं, न तदा प्रत्ययः । यदा प्रत्ययः, सामान्येन तदा वृत्तिरि'ति । न तदा प्रत्ययः = न तदा भावे प्रत्ययः । धातोः सकर्मकत्वात् । यदा प्रत्ययः । भावे इत्यर्थः । तदा वृत्तिरेव । वृत्तिर्न कदाऽपि कर्मक्तान्तेनेत्याह—सामान्येनेति । सामान्येनैव तदा वृत्तिरित्यर्थः । 'सामान्येने'त्यस्य 'कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाऽविवक्षाविशिष्टो योऽर्थस्तदर्थकधातुप्रकृतिकक्तान्तेने'त्यर्थः । इयमेव कर्मणोऽविवक्षा नाम । अनेन तादृशक्तान्तस्य न वाक्ये प्रयोग इति स्पष्टमेवोक्तम् । 'प्रयोगाऽनुरोधिनी विवक्षे'ति हि तदाशयः । वृत्त्यनन्तरं तु कर्मयोगो भवत्येव । तत्र चोक्तरीत्या षष्ठ्यभावे-

---

१ 'क्रियान्वयिनोर्या कर्तृकर्मणोः षष्ठीत्यर्थः' ख. पाठः ।

२ 'तण्डुलानां पाचकतरः' 'पाचकपुत्र' इत्यादौ तु' इति ख. पाठः ।

३ 'उदाहरणे तथैव, न तु' ख. पाठः ।

४ 'कृदन्तस्य ईदृशशक्त्यग्रहात्' इति ख. पाठः ।

५ अयं ख. पाठः ।

ऽनभिहितत्वाद् द्वितीयां। एवंरीत्या साधुत्वे इदमेव भाष्यं मानम्। वृत्तेः पूर्वं कर्माऽन्वयाऽभावाच्च 'साऽपेक्षत्वाद् वृत्तिर्न स्यादि'ति वक्तुमशक्यम्।

एवम् 'अधीती व्याकरणे' इत्यत्रापि बोध्यम्। न च 'कृतपूर्वी'त्यत्र 'न लोके'ति निषेधेनेष्टसिद्धिः। निष्ठान्तोपस्थाप्यक्रियाकर्त्तृकर्मत्वाऽभावात्। 'निष्ठाऽन्तघटितोपस्थाप्ये'त्यर्थे मानाऽभावात्। न चाऽविवक्षितकर्मतया भावे क्तसाधनयत्नो विफलः, नपुंसके भावे क्तेनैव सिद्धेरिति वाच्यम्। तस्याऽप्यकर्मकेभ्य एवेष्टेः। 'तयोरेवे'ति सूत्रे 'भावे चाऽकर्मकेभ्य' इत्यनुवर्त्तते। तच्च वाक्यभेदेन सम्बध्यते। 'कृत्यादयो भावकर्मणोरेव', 'भावे च ये कृत्यादयः प्राप्तास्तेऽकर्मकेभ्य एवे'ति। तत्राऽनुवादे क्तोऽविशेषात्सर्व एव गृह्यते, 'णेरध्ययने वृत्तमि'त्यादिसूत्रस्थभाष्यकैयटाऽऽदिप्रामाण्यात्। 'पूर्वं कृतोऽनेने'ति विग्रहः। 'पूर्वं कृतवानि'त्यर्थः। 'सुप्सुपे'ति समासः। 'पूर्वादिनिः' 'सपूर्वाच्चे'ति कर्त्तरीनिः। तद्विधौ 'श्राद्धमनेने'ति सूत्रादनेनेति वर्त्तते। [4]कथं तर्हि 'धायैरामोदमुत्तममि'ति भट्टिरिति चेदत्राऽहुः। अनित्यमिदम्। अनित्यत्वे प्रमाणन्तु 'तदर्हमि'ति निर्देशः। तथा हि 'तत्रेव' 'तस्य' 'अर्हमि'ति सूत्रत्रयं कार्यम्। 'अर्हमि'ति सूत्रे योग्यताबलात्कर्मणि षष्ठी। एवं च 'तस्य भाव' इति सूत्रे 'तस्ये'ति न वक्तव्यमिति महल्लाघवम्। एवं सिद्धे 'तदि'ति निर्देशोऽसमस्तद्वितीयान्तत्वबोधनाऽर्थः। एतेन 'सूत्रे कर्मोपपदादण्प्रत्यये उपपदसमासः, अजन्तस्य कर्मषष्ठ्या वा समास'

---

१ 'द्वितीया भवत्येव' ख. पाठः।

२ 'एवमधीती व्याकरणे इत्यत्रापि बोध्यम्' इति ग. घ. पाठः, ख. नास्ति।

३ 'पूर्वं कृतमनेनेति विग्रहः' ख. पाठः।

४ 'कथं तर्हि 'धयैरामोदमुत्तममि'ति भट्टिरिति चेत्। अत्राऽऽहुः—प्रतियोगे भट्टिप्रयोगे द्वितीया। चिन्त्य एव वा भट्टिप्रयोगो 'हे सुभ्रु' इतिवदिति।' इति ग. घ. पाठः। अत्र 'पाघ्राध्माधेट्दृशः शः' इति शप्रत्यये 'धयः' इति रूपम्। 'धायैरि'त्यपि प्रामाणिकः पाठः। लघुशब्देन्दुशेखरे 'धायैरि'तिपाठदर्शनात्।

इति निरस्तम्। अत एव 'द्वितीयासमर्थादि'ति व्याख्यायते, 'राजानमर्हती'ति च विगृह्यते। तत्फलन्त्वनित्यत्वबोधनमेव।

केचित्तु प्रतियोगे भट्टिप्रयोगे द्वितीया। चिन्त्य एव वा भट्टिप्रयोगो, 'हे सुभ्रु' इतिवत्। अनित्यत्वे तु न मानं, भाष्याऽनुक्तेः। 'तदर्हमि'त्यत्र कर्मोपपदादण्प्रत्ययेनैव 'द्वितीयासमर्था'दित्यर्थलाभः। तदर्थलाभाऽर्थमेव च तदुपादानं सार्थकमित्याहुः।

**उभयोः प्राप्तिर्यस्मिन्निति**। तेनैकनिमित्तकत्वलाभाद्विभिन्नकृन्निमित्तककर्त्तृकर्मणोः षष्ठीप्राप्तौ नाऽयं नियम इति भावः। 'प्राप्ति'पदेन चोभयोः प्रयोग एवाऽयं निषेध इति ध्वनितम्।

**स्त्रीप्रत्यययोरिति**। 'स्त्रियां क्तिन्नि'त्यधिकारविहितयोरित्यर्थः। **नाऽयं नियम इति**। तेन कर्त्तरि, कर्मणि च षष्ठी भवत्येवेति भावः।

**भेदिकेति**। 'पर्यायाऽर्हणोत्पत्तिषु ण्वुच्'। धात्वर्थनिर्देशे ण्वुल् वा।

**बिभित्सेति**। सन्नन्ताद्भिदेः 'अ प्रत्ययादि'त्यकारप्रत्ययः। 'सुटा सीयुटो बाधा ने'तिवृत्तिप्रयोगे तु करणत्वविवक्षायां तृतीयेति बोध्यम्।

**शेष इति**। नियमस्याऽयं विकल्पः। कदा चिद्भवति, कदा चिन्नेत्यर्थः। तदुदाहरति—**हरेर्हरिणा वेति**। **केचिदविशेषेणेति**। अकाऽकारभिन्ने कृन्मात्रे इत्यर्थः। स्पष्टं चेदं मतद्वयं कैयटे[1]। **अनुशासनमिति**। 'अनुशिष्यन्तेऽसाधुभ्यो विविच्य बोध्यन्ते येने'ति करणे ल्युट्। **राज्ञां मत इति**। 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्त्तमाने क्तः। **इदमेषामिति**—कर्त्तरि षष्ठी। सकर्मकेभ्यस्त्वधिकरणे क्ते, कर्त्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाऽविशेषात्—'इदमेषां भुक्तमोदनस्य'। 'उभयप्राप्तावि'ति तु मध्येऽपवादन्यायेन[2] 'कर्त्तृकर्मणोरि'त्यस्यैव नियम इत्याहुः।

---

१ 'स्पष्टं चेदं मतद्वयं कैयटे' इति ग. घ. पाठः ख. नास्ति।

२ 'उभयप्राप्तावि'ति तु 'अनन्तरस्ये'तिन्यायेन, 'येननाप्राप्ति' न्यायेन, 'मध्येऽपवाद'न्यायेन च' इति ख. पाठः।

न लोका । ननु लकारस्य क्वाऽपि प्रयोगाऽभावेन 'लान्तयोगे ने'-त्यर्थाऽसम्भवः । न चाऽऽदेशे स्थानिवद्भावेन लत्वं सुलभम् । अल्-विधित्वात् । अत आह—लादेशा इति । 'ल'पदं सामर्थ्यात्तदादेशे लाक्षणिकमिति भावः । 'लादेशप्रकृतिप्रतिपाद्यक्रियाकर्तृकर्मणाः षष्ठी ने'ति फलितोऽर्थः ।

कुर्वन्निति । अत्र कर्मणि प्राप्नोति, कर्त्तुरुक्तत्वात् । ननु 'ल' ग्रहणं व्यर्थम् । 'कुर्वन्नि'त्यत्र शतुः 'तृनामि'ति प्रत्याहारघटकतया निषेधसिद्धे-रिति चेन्न । तृशब्दस्य तद्घटकत्वेऽपि, शतुरतद्घटकत्वात् । लिडादेश-कस्वादियोगे निषेधाऽर्थं तस्याऽवश्यकत्वात् ।

उ इति । 'ल-उ-उके'त्युकारोऽत्र प्रश्लिष्यते । उश्च उकश्चेति द्वन्द्वे पश्चाल्लादिभिर्द्वन्द्वः । तत्रोकारेण व्याख्यानात्तदन्तविधिः । व्यपदेशिव-द्भावेनोकारस्याऽपि । तदाह—दिदृक्षुरिति । करिष्णुरिति च । 'सना-शंसे'ति, 'अलंकृञ्निराकृञि'ति च विष्णू । अत एव 'कन्यामलङ्करिष्णु-रि'त्युदाहरणं क चिद्भाष्येऽपि दृश्यते इति दिक् ।

घातुक इति । 'लषपतपदस्थाभूवृषहने'त्युकञ् । वृद्धिस्तत्त्वम् । कमेरिति । उकाऽन्तस्येत्यर्थः १ तथा च वार्त्तिकम्—'उकप्रतिषेधे कमेरप्रति-षेध' इति । निष्ठेति । एतदपवादतया भाष्ये वार्त्तिकं पठ्यते—'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यानमि'ति । छात्रस्य हसितम् ।

---

१ इतोऽग्रे—'एवं च लक्षणा चिन्त्यैव । 'लप्रकृती'त्यपि वक्तु शक्यत्वात्' इति ख. पाठः ।

२ 'निषेधसिद्धेः' । न च तृशब्दस्य' ख. पाठः ।

३ 'शतुर्न तद्घटकत्वमिति वाच्यम् । तमाश्रित्यैव निषेधसिद्धेरिति चेन्न' इति ख. ग. पाठः ।

४ विष्णू = उ–इष्णुच्प्रत्ययावित्यर्थः ।

५ 'छात्रस्य हसितम् । कालसामान्ये 'नपुंसके भावे क्तः' । भूतत्वविवक्षायां

इदं च वार्त्तिकं लक्षणप्रतिपदोक्तपरिभाषया 'नपुंसके भावे क्त' इतिसूत्रविहित-कालोदासीन-क्ताऽन्तयोग एव प्रवर्त्तते । अत² एव 'भ्रान्तं देशमि'त्यादौ 'गत्यर्थाऽकर्मके'ति क्ते न षष्ठी । नपुंसके भावे क्तस्तु नाऽत्र । तस्याऽप्यकर्मकेभ्य एव प्रवृत्तेः । अविवक्षितकर्मतयाऽकर्मकत्वेन क्तस्तु 'कृतपूर्वी'त्यादिवृत्तिविषये एवेत्युक्तम् । एवञ्च 'इहाऽहेः सुप्तमि'त्यादौ परत्वेन 'क्तोऽधिकरणे चे'त्यनेन भावे क्तविषये शेषत्वविवक्षयैव षष्ठीसाधनस्याऽऽवश्यकत्वेनेदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम् । इहाहेः सुप्तमित्यादौ शेषत्वविवक्षयैव षष्ठी साध्या । निरूपयिष्यते चैतद्गत्यर्थाऽकर्मकेति सूत्रे कृदन्ते ।

---

'निष्ठे'त्यनेन । न च तदापि परत्वादयमेव न्याय्यः । 'तयोरेवे'ति सूत्रे यत् 'निष्ठे'तिसूत्रविहितक्तस्योपस्थितस्य भावाऽर्थे विधानं, तस्याऽचारितार्थ्यात् । तेन तदा 'छात्रेण हसितमि'त्येव' इति ख. पाठः ।

इतोऽग्रे—'अत एवाऽत्र वार्त्तिके नपुंसकग्रहणं चरितार्थम् । शेषत्वविवक्षया च भाष्ये प्रत्याख्यातमित्यन्यत् । 'भ्रान्तं देशमि'त्यादौ द्वितीया तु 'गत्यर्थाऽकर्मके'त्यनेन तत्र क्तप्रवृत्त्या निर्बाधा । यत्तु 'पदसंस्कारपक्षे पूर्वमविवक्षितकर्मत्वेनाऽकर्मकतया, भूतत्वविवक्षाया असत्त्वेन च 'निष्ठे'ति सूत्रेणैव क्तेऽस्याऽप्रवृत्तौ, 'कर्त्तृकर्मणोरि'त्यस्य च 'न लोके'ति निषेधादप्रवृत्तौ द्वितीयेति । तन्न । तादृशरीत्या क्तप्रत्ययस्य 'कृतपूर्वी'त्यादिवृत्तिविषयताया एव भाष्यकृता स्वीकारेणाऽन्यत्राऽप्रवृत्तेः । अत एव 'घटः क्रियते' 'घटं कृतमि'ति च न । 'गत्यर्थाकर्मके'त्यस्य, 'क्तोऽधिकरणे चे'त्यस्य च विषये तु 'नपुंसके' इति क्तः । परत्वेनाऽनवकाशत्वेन च तयोरेव प्रवृत्तेः । चेन तत्तत्सूत्रोपात्तधातुभ्यः तस्याऽपि भावकर्मणोर्विशेषविहितत्वादिति तद्योगे न वार्त्तिकप्रवृत्तिः । अत 'इहाऽहेः सुप्तमि'त्यादौ 'अधिकरणे'त्यादिना भावे क्तविषये शेषत्वविवक्षयैव षष्ठी साध्या । निरूपयिष्यते चैतद्गत्यर्थाकर्मकेति सूत्रे कृदन्ते' इति ख. पाठः ।

२　'अत एव' इत्यारभ्य 'सूत्रे कृदन्ते' इत्यन्तो ग. घ. पाठः, ख. नास्ति ।

प्रत्याहार इति । स्पष्टं चेदमत्रैव भाष्ये । अधीयन्निति । 'इङ्धार्योः शत्रकृच्छ्रिणी'ति शता[1] । द्विषन्निति । 'द्विषोऽमित्रे' इति शता । सर्वोऽयमिति । ध्वनितं चेदं 'क्तस्य च वर्त्तमाने' इति सूत्रे भाष्ये।[2] शेषषष्ठी त्विति । के चित्तु 'नपुंसके भावे क्तस्ये'तिवार्त्तिकात्कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न । तत्प्रत्याख्याने त्वनभिधानात् क्ताऽतिरिक्तविषये सा न । अत एव 'पूरणगुणे'ति सूत्रे सद्ग्रहणं भाष्ये प्रत्याख्यातमित्याहुः ।

अकेनो । 'अत्र यथासङ्ख्यं नेष्यते' इतीहैव भाष्ये स्पष्टम् । तत्राऽकस्याऽऽधमर्ण्येऽसम्भवादाह—भविष्यत्यकस्येति । अत्र 'भविष्यदि'ति स्वयते । तेन भविष्यदधिकारविहितस्य 'तुमुनण्वुलावि'त्यस्यैव ग्रहणम् । अतो 'वर्षशतस्य पूरक' इत्यादौ 'ण्वुल्तृचावि'ति ण्वुलि, पदाऽन्तरसम्बन्धाद्भविष्यत्त्वस्य गम्यमानत्वेऽपि, षष्ठी भवत्येव । एवमेतत्कर्मकयाजनकर्त्तार इत्यर्थके 'अङ्ग ! यजतां, लप्स्यन्तेऽस्य याजका' इत्यादौ च षष्ठी । ध्वनितं चेदं 'तुमुनण्वुलावि'ति सूत्रे भाष्ये ।

ग्रामं गमीति । 'भविष्यति गम्यादय' इतीनिः ।

शतं दायीति । 'आवश्यकाधमर्ण्ययोरि'ति णिनिः । अत्र के चित्—'आवश्यके णिनिः प्रायेण भविष्यत्येव । भूतवर्त्तमानयोरावश्यकत्वबोधनस्य व्यर्थत्वात् । तत्र भविष्यदर्थकत्वादेव सिद्धम । 'भविष्यती'त्यस्य स्वरितत्वन्तु नाऽस्त्येव । शब्दशक्तिस्वाभाव्येन क्रियाऽर्थक्रियाऽनुपपदकाऽकान्तस्य कर्त्तृमात्रप्रतिपादकत्वं, पदाऽन्तरसम्बन्धाऽऽदिना तु भविष्यत्त्वप्रतीतिरिति नाऽकान्ताद्भविष्यत्त्वप्रतीतिः, अतो नाऽनेन तत्र निषेध इति,

---

१ शता = शतृप्रत्यय इत्यर्थः ।

२ 'शेषषष्ठी त्विति । एतेन 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः', 'अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयमि'ति व्याख्यातम् । यद्वा 'इक्ष्वाकूणां सिद्धय' इति, 'वागधिपस्य विस्मयम्' इत्यन्वयः' इति ख. पाठः । मनोरमास्थितत्वात् ग. घ. नास्ति ।

उक्तदोषाऽभावात्। स्पष्टं चेदमपि 'तुमुन्ण्वुलावि'त्यत्र भाष्ये। अत एव 'अंशं हारी'ति निर्देशः सङ्गच्छते। स्पष्टं चेदम्—'अंशं हारी'त्यत्र पदमञ्जर्यामि'त्याहुः।

कृत्यानां कर्त्तरि। 'कर्त्तृकर्मणोरि'ति नित्ये प्राप्ते विभाषेयम्। कर्मनिवृत्त्यर्थं कर्त्तृग्रहणम्।

अनुवर्त्तत इति। 'निषेधश्चाऽयं कर्त्तरि, कर्मणि च। 'कर्त्तरि चे'ति तु अनुभयप्राप्तिविषयं, सामर्थ्यादि'ति हरदत्ताऽऽदयः। कैयटोऽप्येवमेव।

अन्ये तु 'उभयप्राप्तावि'तिसम्पूर्णसूत्राऽनुवृत्तेः कर्मण्येव निषेधः। विकल्पस्तूभयप्राप्त्यनुभयप्राप्त्योरुभयोरपीत्याहुः। भाष्यन्तूदासीनम्। न च 'व्रजमि'त्यत्र 'गुणकर्मणि वेष्यते' इति विकल्पाऽऽपत्तिः। कृत्याऽतिरिक्ते चरिताऽर्थस्य 'दोग्धव्या गावः पयः कृष्णेने'त्यादौ गुणकर्मण उक्तत्वात्प्रधाने चरितार्थेनाऽनेन परत्वाद्बाधात्। ध्वनितं चेदं सर्वं भाष्ये।

न चैवमनभिहिताऽधिकाराऽभावे 'कर्त्तव्यः कट' इत्यादौ द्वितीयातः परत्वात्प्राप्तामपि प्रथमां बाधित्वा परत्वात्कृद्योगलक्षणषष्ठी स्यादित्याकरविरोधः। तदधिकाराऽभावे उभयप्राप्तेरपि सत्त्वेन, अनेन निषेधाऽऽपत्तेरिति वाच्यम्। अधिकाराऽभावे सर्वत्रैवोभयप्राप्तिविषयसत्त्वात्कर्मण्येव षष्ठ्यापत्तौ 'कर्त्तृकर्मणोरि'तिसूत्रस्थकर्त्तृग्रहणस्य, 'उभयप्राप्तावि'ति सूत्रस्य च वैयर्थ्याऽऽपत्त्या, 'आत्ममाने खश्चे'ति सूत्रस्थभाष्यप्रामाण्येन च उभयोः प्रयोगे एवोभयप्राप्तेर्वाच्यतया, प्रकृते नोभयप्राप्तिरित्यदोषात्। प्रकृत 'कृत्यानामि'तिविभक्तसूत्रस्था'ऽऽक्रष्टव्या ग्रामं शाखे'तिभाष्योदाहरणे आश्चर्यपद-कर्त्तृपदे अध्याहृत्योभयप्राप्तिर्निरूप्या।

---

१ 'अनेन निषेधापत्तेरिति वाच्यम्। उदाहरणदिक्प्रदर्शनार्थत्वात्। 'भवतो लाभोऽश्वः क' इत्युदाहरणं बोध्यम्। किञ्च अधिकाराऽभावे' इति ख.पाठः।

२ 'उभयप्राप्तिर्वाच्या। तथा च प्रकृते' ख. पाठः।

३ 'नोभयप्राप्तिरिति न दोषः' ख. पाठः।

तुल्यार्थैर्योग इति। 'अतुलोपमाभ्यामि'ति पर्युदासात्, तुल्यशब्दसाहचर्याच्चाऽनव्ययैरित्यर्थः। तेन[1] इवशब्दयोगे तृतीया न। 'तुल्यार्थैरि'त्यस्य तुल्यत्वाऽर्थैरित्यर्थः। अत एव 'अतुलोपमाभ्यामि'ति चरितार्थम्। अत्र 'कृत्यानां कर्त्तरी'त्यतो 'वे'त्यनुवृत्त्यैव सिद्धेऽन्यतरस्याङ्ग्रहणं स्पष्टाऽर्थम्। उत्तरसूत्रे चकारोऽप्येवम्। 'स्फुटोपमं भूतिसितेने'त्यादावुपमाशब्दो भावसाधनः[2]। 'सहयुक्ते' इति तृतीया। एवं 'तुलां यदारोहति दन्तवाससे'-त्यपि बोध्यम्। विनाऽपि तद्योगं तृतीयाया उक्तत्वात्। अर्थग्रहणमिति। सूत्रे अर्थशब्दः पृथङ् निमित्तमिति भावः। भाष्ये तु नैतद्दृश्यते।

॥ इति षष्ठी ॥

( अथ सप्तमी )

आधारो। 'कारके' इत्यधिकारात् क्रियाजनके एतत्प्रवृत्तिः। एवं च आधार उपस्थितत्वात् क्रियाया एव। तत्र साक्षात्क्रियाऽऽधारयोः कर्त्तृकर्मसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणम्। न च कर्त्तृकर्मसंज्ञे एव परम्परा[3]ऽऽधारस्य स्यातामिति वाच्यम्। कर्त्तृक्रियाप्रयोज्यतद्बोधकधातूपात्तफलशालित्वरूपस्य 'कर्त्तुरीप्सिततमत्वस्याऽभावात्कर्मसंज्ञासूत्रे,

1 'तेन इवशब्दयोगे तृतीया न। किञ्च षष्ठ्यर्थे इयं तृतीया। तदर्थश्च सम्बन्धः। तत्र इवादीनां द्योतकत्वपक्षे व्यतिरेकाऽभावेन षष्ठ्यर्थाऽप्रसिद्ध्या तृतीयाऽऽपादनस्यैवाऽभावः। स्पष्टं चेदं 'तत्र तस्येवे'ति सूत्रे भाष्ये, कैयटे च। तुलोपमाशब्दौ च कर्मसाधनौ। अत एव सादृश्याऽनुयोगिवाचकतुल्यशब्दसमानाऽर्थत्वमनयोरिति बोध्यम्' इति ख. पाठः।

२ 'भावसाधनः, कर्मसाधनो वा। उभयथाऽपि 'सहयुक्ते' इति तृतीया' इति ख. पाठः।

३ 'परम्परयाऽऽधारस्य' ख. पाठः।

स्वतन्त्रपदसामर्थ्यात्कर्त्तृसंज्ञासूत्रे च परम्पराक्रियाऽऽधारस्याऽग्रहणात्[1] ।

परम्परा च कर्त्तृकर्मद्वारिकैव, व्याख्यानादित्याशयवानाह—कर्त्तृकर्मद्वारेति[2] । एवञ्च[3] क्रियाऽन्वयोऽप्यत्रैतच्छास्त्रबलात्कर्त्रन्वयद्वारक एव। अत एव 'अक्षशौण्ड' इत्यादौ समासः । एवञ्च 'अन्तर्भूतक्रियाद्वारा सामर्थ्यमि'ति कैयटादयश्चिन्त्या एव । अत एव भाष्यकृताऽत्राऽसामर्थ्यशङ्काऽपि न कृता । 'अक्षप्रवीणः' 'अक्षशौण्ड' इत्यादौ क्रियाऽन्तर्भावेण बोधस्याऽनुभवविरुद्धत्वाच्च । न च 'देवदत्तः पचति भवती'त्यादौ पाकाऽऽदिद्वारा प्रधानीभूतभवनाऽऽश्रयत्वविवक्षायामधिकरणत्वाऽऽपत्तिः । तथाविवक्षायां पाकाऽऽश्रयत्वस्याऽपि सत्त्वेन, परया कर्त्तृसंज्ञया बाधात्[4] । 'मूले वृक्षः कपिसंयोगी'त्यत्राऽप्यस्तिक्रियामध्याहृत्य तस्याः स्वकर्त्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वम् । तद्गुणसंविज्ञानमत्वर्थाश्रयणाच्च कपिसंयोगस्याऽपि मूलवृत्तित्वम् । एवं चाऽवच्छेद्याऽवच्छेदकभावः फलतीति बोध्यम् । चकारादिति । 'प्रातिपदिकार्थे' इति शेषः ।

---

१ 'स्वतन्त्रपदसामर्थ्याच्च कर्त्तृसंज्ञासूत्रेऽपि न परम्पराक्रियाधारस्य ग्रहणम्' इति ख. पाठः ।

२ 'कर्त्तृकर्मद्वारेति । न चैवं फलस्य कर्मतायाः पूर्वं व्युत्पादनात्कर्मभूतफलद्वारा क्रियाऽऽश्रयस्य तण्डुलाऽऽदेरधिकरणत्वं दुर्वारमिति वाच्यम् । व्यापारजन्यफलाऽऽश्रयस्याऽपि कर्मसंज्ञाप्रयोजकत्वेन, परत्वेन तया बाधात्' इति ख. पाठः ।

३ 'एवञ्च' इत्यारभ्य 'विरुद्धत्वाच्च' इत्यन्तो ग. घ. पाठः ।

४ इतोऽग्रे—'मोक्षे इच्छास्ती'ति तु इच्छारूपकर्त्तृद्वारकसम्बन्धेनाऽस्तिक्रियाऽन्वयविवक्षायां बोध्यम् । यदि त्विच्छापदार्थेऽन्वयस्तदा षष्ठ्येव' इति ख. ग. पाठः ।

५ इतोऽग्रे—'त्रिधेति । एतच्च 'संहितायामि'ति सूत्रे भाष्ये स्पष्टम् । तत्र संयोगसमवायाऽन्यतरसम्बन्धेन सकलाऽवयवव्याप्तौ व्यापकाऽऽधारत्वम् ।

त्रिधेति[1]। एतच्च 'संहितायामि'ति सूत्रे भाष्ये स्पष्टम्। तत्र सकलाऽवयवव्याप्तौ व्यापकाऽऽधारत्वम्। यथा 'तिलेषु तैलमि'ति। इदमेव मुख्यमधिकरणमिति 'स्वरितेनाऽधिकारः' 'साधकतममि'तिसूत्रभाष्ये स्पष्टम्।

उप = समीपे, श्लेषः, तत्कृतमौपश्लेषिकम्। अत एव 'यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमि'ति 'तत्र च दीयते कार्यमि'ति सूत्रे भाष्ये उक्तम्। तथा 'तदस्मिन्नधिकमि'ति सूत्रे भाष्ये 'एकादशाऽधिका अस्मिन् शते' इत्यत्र शतस्याऽधिकरणत्वाऽभावात्कथं तत्र सप्तमी'त्याशङ्क्य, औपश्लेषिकमिदमधिकरणम्—'एकादश कार्षापणा उपश्लिष्टा अस्मिन् शते' इति। शतसमीपे हि ते भवन्ति, न तु तदन्तर्भूताः। तदन्तर्भावेऽपि 'वृक्षे शाखे'तिवत्स्यादधिकरणत्वम्। तथा 'संहितायामि'तिसूत्रे भाष्ये–'इको यणची'त्यादावौपश्लेषिके आधारे सप्तम्युक्ता। तत्राऽजादिसामीप्यमेवेगादेर्न तु कटादिवदाधारत्वम्'। तथा यत्किञ्चिदवयवाऽवच्छेदेन सम्बन्धोऽप्युपश्लेषः। अत एव 'कटे आस्ते' इत्याद्यौपश्लेषिकाऽऽधारे उदाहृतं 'संहितायामि'ति सूत्रे कैयटेन। स्पष्टं च कटादेर्गौणमधिकरणत्वं 'स्वरितेने'त्यादिसूत्रे भाष्ये उक्तं—'किमधिकरणं न्याय्यम्?। यत्र कृत्स्न आधाराऽऽत्मा व्याप्तः। तेनहैव स्यात्– तिलेषु तैलमि'ति। इह न स्यात् 'गङ्गायां गावः' 'कूपे गर्गकुलमि'ति। गङ्गैकदेशस्थितगोषु, कूपैकदेशस्थितगर्गकुले च तथा प्रयोगः। 'गङ्गादेः सामीप्याद्गौणमाधारत्वमि'ति कैयटस्तु तत्रापि गौणमेवाधारत्वमिति यथाकथञ्चि-

उपश्लेषक्रियाऽऽध्याहारेण तन्निरूपितमाधारत्वमौपश्लेषिकमिति 'तदस्मिन्नधिकमि'ति सूत्रस्थभाष्यस्वरसः। उपश्लेषश्च संयोगेन, समवायेन वा। तदितरसम्बन्धेनाऽऽधारस्य वैषयिकत्वम्। अत एव सामीपिकाऽऽदेः पृथग् ग्रहणमिति तत्सूत्रस्थभाष्यकैयटस्वरसः' इति ख. पाठः।

१ 'त्रिधेति' इत्यारभ्य 'इको यणची'त्यादावितिदिक्' ( –१३७ पृष्ठे ) इत्यन्तो ग. घ. पाठः।

न्नेयः। एतेन सामीपिकस्याऽनुक्तेर्भाष्ये न्यूनतेत्यपास्तम्। तत्र क्व चिदुपश्लिष्टपदाऽध्याहारेणौपश्लेषिकाऽऽधारप्रतीतिः, यथेको यणचीत्यादाविति दिक्।

चतस्रोऽत्रेति। प्रातिपदिकार्थमात्रे इत्यर्थः। 'सप्तम्यधिकरणे' इतिसूत्रेणाऽधिकरणे सप्तम्याः सिद्धत्वात्, चकारेणाऽन्तरङ्गप्रातिपदिकार्थमात्रे सप्तमी विधीयते। सा चोपस्थितत्वाद्व्याख्यानाच्च दूराऽन्तिकार्थेभ्य एव। प्रागुक्ताश्च तिस्र इति भावः। अनया च सप्तम्या निरवकाशत्वात्पराऽपि प्रथमा बाध्यत इति बोध्यम्। किञ्च 'दूरान्तिके'तिसूत्रस्येहाऽनुवर्त्तनादधिकरणेऽप्येता बोध्या इत्याहुः। यद्यपि कर्त्तृकर्मकरणाऽधिकरणाऽर्थकविभक्तीनामाश्रयमात्रमर्थस्तथाऽपि निरूपकभेदात्, तत्तत्संज्ञोपलक्षितस्यैवाऽऽश्रयस्य तत्तद्विभक्तिशक्यत्वाच्चाऽऽसां वैलक्षण्यं बोध्यम्। संज्ञाशब्दे शब्दस्य प्रवृत्तिनिमित्तत्वादिति दिक्।

क्तस्येन्विषयस्येति। 'इनो विषयस्ये'ति विग्रहः। 'इन्प्रकृतेः क्तान्तस्य कर्मणी'त्यर्थः। तेन 'कृतपूर्वी कटमि'त्यत्र न[1]।

अधीती व्याकरणे इति। नाऽत्र कर्मणि क्तः। तथा सति कर्मणोऽभिहितत्वाऽऽपत्त्या सप्तमी न स्यात्। किन्तु भावे क्त इत्याशयेनाऽऽह—अधीतमनेनेति। कृतपूर्वीवद्वृत्तिः। 'इष्टादिभ्यश्च' तीनिः। 'श्राद्धमनेन भुक्तमि'त्यतोऽनेनेति हि तत्र वर्त्तते। 'व्याकरणकर्मकाऽध्ययनकर्त्ते'ति बोधः।[2] अत्रेदं चिन्त्यम्—कर्मणि क्तप्रत्ययाऽन्ताऽधीतशब्दाद्व्याकरणादि-

१ इतोऽग्रे—'केचित्तु इन् = इन्नन्तः शब्दो, विषयो = वृत्तिभूमिर्यस्य क्तान्तस्येति, 'यस्क्ताऽन्तनिरूपितपराऽर्थाऽभिधायकत्वाऽऽश्रय इन्नन्तः शब्द' इत्यर्थमाहुः। तत्र बहुव्रीह्याश्रयणे फलं चिन्त्यम्' इति ख. पाठः।

२ 'अत्रेदं चिन्त्यम्—कर्मणि क्तप्रत्ययाऽन्ताऽधीतशब्दाद्व्याकरणादिविशेषकर्मोऽन्वयिन इनौ तु न। 'अनेने'ति इन्प्रत्ययाऽर्थकर्त्तुः प्राधान्याऽनुरोधेन भावक्ताऽन्तेभ्य एव इनिप्रवृत्तेः। तदा हि 'एतत्कर्त्तृकाऽध्ययनकर्म'ति

विशेषकर्माऽन्वयिन इनौ तु कर्मणोऽभिहितत्वाद्व्याकरणादिशब्दात् प्रथमैवेति, यद्यभिधानमस्ति। न च 'मासमधीती व्याकरणे' इत्यादौ मासरूपे कर्मणि द्वितीयावत्, सप्तम्यपि दुर्वारेति वाच्यम्। लक्ष्याऽनुरोधेनाऽत्र कालादिव्यतिरिक्तकर्मण एव ग्रहणादिति कैयटादयः।

साध्वसाधु। शेषषष्ठ्यपवादोऽयम्। 'साधुनिपुणाभ्यामि'त्येव सिद्धेऽनर्चाऽर्थमत्र साधुग्रहणम्। तेन तत्त्वकथनेऽपि भवति। सूत्रेऽर्चाग्रहणन्तु निपुणाऽर्थम्। निमित्तादिति। 'निमित्तवाचकात्सप्तमी भवति, तस्य निमित्तस्य कर्मणा योगे सती'त्यर्थः। कर्म च प्रत्यासत्त्या स्वाऽन्वयिक्रियाया एव। 'निमित्त'शब्देन चेह क्रियाफलं विवक्षितम्। एवं च फलं सप्तम्यर्थ इति कैयटादयः।

योगः संयोग इत्यादि। यद्यपि भाष्ये 'कर्मसंयोगे' इत्येव पठ्यते, तथाऽपि 'चर्मणि द्वीपिनमि'ति तदुदाहरणादेवं व्याख्यातम्।

चर्मणीति। 'चर्मफलकं द्वीपिकर्मकं हननमि'त्यादि रीत्या बोधः। चर्मणः फलत्वं च हननस्य तल्लाभेच्छाऽधीनत्वात्[1]। कर्मसम्बन्धश्च न सप्तम्यर्थः, अपि तु स्वरूपसन्नपेक्षितः। हेतुतृतीयेति। तत्सूत्रे फलस्या-

---

बोधः स्यात्। एतेन 'कर्मणि क्तप्रत्यये कर्मणोऽभिहितत्वाद्व्याकरणशब्दात् प्रथमैवे'ति निरस्तम्। 'मासमधीती व्याकरणे' इत्यादौ व्याकरणरूपकर्मणः सत्त्वेनाऽकर्मकत्वाऽभावान्मासादीनां कर्मत्वमेव न। न च भावे क्ताऽर्थे व्याकरणाऽऽदिकर्मणोऽविवक्षायां, मासादीभामन्वये कर्मत्वमस्त्येव। देशकालाऽऽदिभिन्नकर्मरहितानामेव 'तयोरेवे'त्यादावकर्मकग्रहणेन ग्रहणाद्भावे क्तोऽपि सिद्ध्यति। एवं च मासरूपे कर्मणि सप्तमी दुर्वारा। किञ्च 'प्राकृतमेवेदं कर्मे'ति प्रागुपपादितभाष्योक्तरीत्या तु कर्मत्वे द्वितीयावत्सप्तम्यपि दुर्वारेति वाच्यम्। लक्ष्याऽनुरोधेनाऽत्र कालादिव्यतिरिक्तकर्मण एव ग्रहणादिति कैयटादयः।' इति ख. पाठः।

1 'तल्लाभेच्छाधीनत्वादिति' इति ख. पाठः।

ऽपि 'हेतु'शब्देन ग्रहणादित्यर्थः। (तादर्थ्ये चतुर्थीत्यपि बोध्यमित्याहुः)।

**सीमाण्डकोश इति**। तथा च मेदिनी–'सीमा घाटस्थितिक्षेत्रेष्वण्ड-कोशेऽपि च स्त्रियाम्'। 'अथ पुष्कलको गन्धमृगे क्षपणकीलयोरि'ति च।

हरदत्तस्तु 'पुष्कलकः शङ्कुः, सीम्नि = सीमज्ञानाऽर्थं, हतो = निहतो, निखात' इत्याह। अत्र द्वीपिचमणोरण्डकोशमृगयोश्च समवायः। इतर-योस्तु संयोगः सम्बन्धः। 'मुक्ताफलाय करिणं रघुवीर हंसी'त्यादौ तु 'क्रियाऽर्थोपपदस्ये'ति चतुर्थी। 'मुक्ताफलान्याहर्त्तुमिति बोध' इत्याहुः।

**यस्य च भावेन**। भावः = क्रिया। तदाह = **यस्य क्रिययेति**। ततः = ज्ञापकक्रियाऽऽश्रयवाचकात्। क्रियाऽऽश्रयः कर्त्ता, कर्म च। तत्र 'ब्राह्मणे-ष्वधीयानेषु गत' इति कर्त्तर्युदाहरणम्। कर्मण्याह–**गोषु दुह्यमानास्विति**।

ननु लक्ष्यलक्षणभावो ज्ञाप्यज्ञापकभावः। स च भूयोदर्शनाऽऽश्रयो दृष्टो, यथाऽग्निधूमयोः। ततश्च 'उदिते आदित्ये तमो नष्टमि'त्यादावेव स्यान्न तु प्रकृते। कदा चिद्धि गोषु दुह्यमानास्वसौ गत इति चेन्न। निर्ज्ञातदेशकालक्रियाया अनिर्ज्ञातदेशकालक्रियापरिच्छेदकत्वेन लक्षणत्वा-ऽक्षतेरिति स्पष्टं भाष्ये। तत्र देशोदाहरणं–'सति गुणे द्रव्यत्वमस्ती'-त्यादि। तत्र का चित्क्रिया स्वाऽऽधारकालेनाऽन्यत्परिच्छिनत्ति, यथा प्रकृते। का चित्तु स्वाऽऽधारकालाऽव्यवहितपूर्वकालेन, यथा 'गोषु धोक्ष्यमाणास्वि'त्यादौ। का चित्स्वाऽऽधारकालाऽनन्तरकालेन, यथा 'गोषु दुग्धास्वि'त्यादौ।

ज्ञापकत्वं सप्तम्यर्थः[२]। तस्य च क्रियायामन्वयः। 'भावलक्षणमि'-त्युक्तेः। न चैवं 'गवां दोहे आगत' इत्यादौ दोहशब्दात्सप्तम्यनापत्तिः, गोशब्दाच्च तदापत्तिरिति वाच्यम्। 'सती'त्यध्याहारेण दोहकर्त्तृकसत्ताया

---

१ ख. पाठोऽयम्।

२ इतोऽग्रे 'तत्र प्रकृत्यर्थस्य स्वप्रवृत्तिनिमित्तीभूतक्रियाद्वारकसम्बन्धेनाऽन्वयः' इति ख. पाठः।

लक्षणत्वेनाऽक्षतेः। एतेन 'विवाहे नान्दीमुखं कुर्यादि'ति व्याख्यातम्। अत्र 'करिष्यमाणे' इति शेषः। एतेन 'राहूपरागे स्नायात्', 'क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे पराऽवरे' इत्याद्यपि व्याख्यातम्। 'सती'त्यध्याहारात्। लक्ष्यलक्षणभावोऽपि शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं, न तु तस्य मानाऽन्तरेण नियमतो ग्रहणाऽपेक्षेति बोध्यम्। राहूपरागाऽऽदीनां निमित्तत्वं तु 'सिद्धसाध्यसमभिव्याहारे' इति न्यायेन फलति। न त्वस्मिन् शास्त्रे विशिष्य निमित्ते सप्तमी विहिता। स्पष्टं चेदं 'क्ङिति चे'त्यत्र कौस्तुभे।

अन्ये तु विवाहशब्देन तत्प्राक्कालो लक्ष्यते। राहूपरागपदेनाऽपि तदाश्रयकाल एवेति तत्राऽधिकरणे सप्तम्येव। निमित्तत्वं तूक्तन्यायेनैव फलति। इदन्तु सूत्रं यत्र मानाऽन्तरेण ज्ञातस्वरूपस्याऽर्थस्य कालविशेषाऽऽदिसम्बन्धज्ञानाऽर्थमेव शब्दप्रयोगस्तत्रैव प्रवर्त्तते। तथैव सूत्रस्वरसात्, भाष्यस्वरसाच्च। 'गवां दोहे' इत्यादावप्यधिकरणसप्तम्येवेत्याहुः।

अर्हाणां कर्त्तृत्वे। अर्हाणां = कर्त्तृत्वाऽर्हाणाम्। तद्वैपरीत्ये। अर्हाणामकर्त्तृत्वे, अनर्हाणां च कर्त्तृत्वे इत्यर्थः। वाक्यचतुष्टयमेतत्। कर्त्तृसमर्पकादकर्त्तृसमर्पकाच्च सप्तमीत्यर्थः। सप्तम्यां च तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्यस्य सत्त्वाच्छतृशानचावेव।

षष्ठ्यपवादश्चाऽयम्। यद्यपि लक्ष्यलक्षणभावस्येदृशे विषये प्रतीतेः सूत्रेणैव सिद्धं, तथाऽपि तदविवक्षाऽर्थमिदम्।

---

१ 'सिद्धसाध्यसमभिव्याहारे सिद्धः साध्यायोपयुज्यते' इति हि न्यायः। अत्र सिद्धं—राहूपरागादिः। साध्यं च —स्नानादि।

२ इतोऽग्रे—'शयानैर्यवनैर्भुक्तं' 'शयाना भुञ्जते यवना' इत्यादौ तु नाऽस्य प्रवृत्तिः। 'लक्षणहेत्वोरि'ति विहितशानचैव लक्ष्यलक्षणभावस्योक्तत्वात्।' इति ख. पाठः।

३ 'तदविवक्षणार्थम्' इति ग. घ. पाठः।

सत्सु तरत्स्विति। सन्तो हि तरणक्रियाकर्त्तृत्वाऽर्हाः। 'तरणक्रियाकर्त्तृमत्सम्बन्धि असत्कर्त्तृकमासनमि'ति क्रमेण बोधः। स्वाऽधिकरणकालवृत्तित्वं सम्बन्धः। असत्स्विति। तरणक्रियाकर्त्तृत्वाऽनर्हाणां तदकर्त्तृत्वे उदाहरणमेतत्। यद्यपि स्थितिक्रियाकर्त्तृत्वाऽर्हतयैवेदं सिद्धं, तथाऽप्यसतां तरणक्रियाऽनर्हत्वाऽऽदिकमपि बोधे विषय इति भावः।

सत्सु तिष्ठत्स्विति। तरणक्रियाकर्त्तृत्वाऽर्हाणां तदकर्त्तृत्वे उदाहरणमिदम्। असत्स्विति। तरणक्रियाकर्त्तृत्वाऽनर्हाणां तत्कर्त्तृत्वमत्र। 'अत्र कर्त्तृपदं कारकोपलक्षणमि'ति केचित्। ध्वनितं चेदं भाष्ये।

षष्ठी चाऽनादरे। 'अनादरे' इति विषयसप्तमी। 'यस्य च भावेने'त्याद्यनुवर्त्तते। 'अनादरे गम्यमाने सति यस्य क्रियया क्रियाऽन्तरं लक्ष्यते, ततः सप्तमी, षष्ठी चे'ति वाच्योऽर्थः। तत्फलितमाह–अनादराऽऽधिक्य इति। रुदन्तमिति। अत्र लक्ष्यलक्षणभावरूपसम्बन्धः षष्ठ्यर्थः। अनादरविशिष्टं प्रव्रजनं धातुलक्ष्यम्। तत्र षष्ठी तात्पर्यग्राहिका। अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः।

स्वामीश्वरा। 'स्वाम्यर्थे'ति वक्तव्ये ईश्वराऽधिपत्योर्ग्रहणं पर्यायाऽन्तरनिवृत्त्यर्थम्। स्वरूपपरत्वात् 'विरूपाणामि'ति नैकशेषः। 'दीयते' इति व्युत्पत्त्या 'दीयमानांऽशरूपं दायमादत्ते इति सोपसर्गाद्प्याद्न्तादत एव निपातनात्कः। गवादिकं च दीयमानेऽन्वेति। दीयमानस्य नित्यसाकाङ्क्षत्वाच्च वृत्तिः।[1] 'दीयमानमि'त्युक्ते किमिति नियताऽऽकाङ्क्षादर्शनात्। अत एव निपातनाद्वा वृत्तिः। केचित्तु 'दायादशब्दोऽत्र स्वामिपर्याय' इत्याहुः। (तेन[2] गवाद्यात्मकांऽशस्य आदातेति फलिताऽर्थः)। अत्र 'एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवती'तिन्यायात् 'गवामश्वेषु स्वामी'ति प्रयोगो न, किन्तु 'गवामश्वानां चे'त्येव,

---

१ 'अत एव निपातनाद्वा वृत्तिः' इति ग. घ. पाठः। ख. नास्ति।

२ ख. पाठोऽयं, ग. घ. नास्ति।

'गोष्वश्वेष्वि'त्येव वा। स्पष्टं चेदं 'कृञ्चाऽनुप्रयुज्यते' इति सूत्रे भाष्ये।

षष्ठ्यामेवेति। 'शेषे षष्ठी'त्यनेनेति भावः।

तात्पर्ये इति। 'आसेवा'पदस्य तत्र रूढेरिति भावः। तात्पर्यं च तदेकव्यापारता। तत्राऽऽयुक्तयोगेऽधिकरणत्वविवक्षायां सप्तम्यां प्राप्तायां षष्ठ्यर्थं वचनम्। सम्बन्धत्वेन विवक्षायान्तु षष्ठ्यां प्राप्तायां सप्तम्यर्थं वचनम्। कुशलयोगे तु षष्ठ्यामेव प्राप्तायामिति बोध्यम्।

शकटे इति–अधिकरणे सप्तमी।

यतश्च। जातिगुणक्रियासंज्ञाभिरिति[1]। [2]विशिष्टस्येत्यध्याहारः। 'तद्विशिष्टस्यैकदेशस्य यतः समुदायात्पृथक्करणं, तद्वाचकात्षष्ठी'त्यादिर्वाक्यार्थः। पृथक्करणमिति। स्वेतर[3]व्यावृत्तधर्मप्रकारकज्ञानविषयीकरणं हि निर्धारणमित्यर्थः[4]। एवं च 'स्वेतरयद्धर्माऽवच्छिन्नव्यावृत्तधर्मवत्त्वं जात्यादिविशिष्टस्य प्रतिपाद्यते, ततः षष्ठी'त्यादि फलितम्।

यत इति किम्?। यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वप्रतिपादनं, तत एव विभक्तिर्मा भूदिति। न च षष्ठीवद्विशेषणादेवोचिता। 'दूराऽन्तिकार्थेभ्य' इतिवत्प्रथमापवादत्वस्याऽपि सम्भवात्। अस्ति च 'नराणां ब्राह्मणः श्रेष्ठः' इत्यादौ ब्राह्मणत्वाऽऽदिविशिष्टस्य तदितर-नराऽऽदि-व्यावृत्त-श्रेष्ठत्वधर्मवत्तया प्रतिपत्तिः। 'नरेभ्यो राक्षसः क्रूरतम' इत्यादौ राक्षसत्वविशिष्टे तदितरनरव्यावृत्तक्रूरतमत्वविवक्षायामपि नाऽनेन षष्ठी। 'पञ्चमी विभक्ते' इत्युत्तरसूत्रेणाऽपवादभूतायाः पञ्चम्या विधानात्।

एवं च व्यावृत्तत्वाऽऽख्यः सम्बन्धो निर्धारणविभक्तेरर्थः। नरादिपदानां समभिव्याहृतेतरनरादौ लक्षणा। एवं च 'विप्रेतरनरव्यावृत्त-

---

१ 'जातिगुणक्रियासंज्ञाभिरि'ति–करणे तृतीया' इति ख. पाठः।

२ 'विशिष्टस्य' इत्यारभ्य 'वाक्यार्थः' इत्यन्तो ग. घ. पाठः।

३ 'स्वेतरस्वजातीयव्यावृत्तधर्म' ख. पाठः।

४ इतोऽग्रे–'यत इति पञ्चमी निर्धारणघटकीभूतव्यावृत्तत्वेऽन्वेति' इति ख. पाठः।

श्रेष्ठत्ववान् विप्र' इत्यादि क्रमेण बोधः। अधिकं मञ्जूषायां द्रष्टव्यम्।

उद्भूताऽवयवभेदविवक्षया 'नृणा'मिति बहुवचनम्। तिरोहिताऽवयवभेदविवक्षायान्तु 'नरस्ये'त्येकवचनमपि बोध्यम्। अत एव 'द्वन्द्वः सामासिकस्य चे'ति गीता सङ्गच्छते।

[2]यत्तु गोसमूहस्याऽऽधारत्वविवक्षायां सप्तम्याः सिद्धेः, अवयवाऽवयवीभावविवक्षायां षष्ठ्याः सिद्धेश्च, अन्यतरविभक्तेर्विधेयत्वाऽभावलाघवाऽनुरोधेन स एव विभक्त्यर्थो वक्तुमुचितः[3]। [4]"यत्समुदायावयवस्य जात्यादिभिः करणैः स्वेतरसमुदायात्पृथक्करणं, ततः षष्ठी'त्यादिर्वाक्यार्थः। एवञ्च 'नरसम्बन्धी द्विजः श्रेष्ठ' इति बोधः। श्रेष्ठत्वादौ द्विजेतरनराद्यवृत्तित्वबोधस्तु मानसः। 'देवदत्तो वामेनाऽक्ष्णा पश्यती'त्युक्ते 'दक्षिणेन न पश्यती'तिवत्। अत एव 'गोमण्डले वर्त्तमाना या कृष्णा गौः, सा बहुक्षीरे'त्याधारसप्तमीघटितवाक्ये तद्बोधः सङ्गच्छते। [5]यद्वा 'नरेतरद्विजेभ्य' इत्यध्याहारेण बोध इति। तन्न[6]। एतदपवाद'पञ्चमी विभक्ते'इतिसूत्रोदाहरणे एतत्प्रकारद्वयस्य वक्तुमशक्यत्वादस्मदुक्तप्रकारस्यैवाऽऽवश्यकत्वेन, तदैकरूप्यायाऽस्या[7] एव सरणेरावश्यकत्वाच्च। अनुभवसिद्धत्वाच्च। आद्ये 'पुरुषोत्तम' इत्यादौ सामर्थ्याऽभावात्समासाऽनापत्तेश्च। पञ्चमीविधायकस्य एतदपवादत्वोक्त्यसङ्गतताऽऽपत्तेश्च। ममाऽपि

---

१ 'श्रेष्ठत्ववदभिन्नो विप्रः' इति ख. पाठः।

२ 'यद्यपि' इति ख. पाठः।

३ 'वक्तुमुचितः। बहुक्षीरात्वादौ कृष्णेतरगवाद्यवृत्तिबोधस्तु मानसः' इति ख. पाठः।

४ 'यत्समुदायावयवस्य' इत्यारभ्य 'मानसः' इत्यन्तो ग. घ. पाठः।

५ 'यद्वा' इत्यारभ्य 'बोध इति' इत्यन्तो ग. घ. पाठः।

६ 'तथाऽपि' ख. पाठः।

७ 'तदैकरूप्याय इयमेव सरणिराश्रिताऽस्माभिः' ख. पाठः।

षष्ठ्यंशेऽनुवादत्वस्य सत्त्वाच्चे। 'नृणां मध्ये द्विजः श्रेष्ठ' इत्यादौ तु 'मध्ये' इत्यव्ययेन, विभक्त्या च, 'हे चैत्रे'त्यादौ सम्बोधनवत्समुच्चित्य सम्बन्धो द्योत्यते इति वदन्ति।

पञ्चमी विभक्ते। विभागो—विभक्तम्। भेद इति यावत्। 'यतश्च निर्द्धारणमि'त्यनुवर्त्तते। तत्र सर्वत्रैव निर्धारणे यथाकथञ्चिद्भेदस्य सत्त्वेन विभक्तग्रहणसामर्थ्याद्यत्र भेद एव, न तु केनाऽप्युपात्तरूपेणाऽभेदस्तत्रे-वाऽस्य प्रवृत्तिः। तदाह-निर्धार्यमाणस्य च यत्र भेद एवेति। एवं च 'स्वेतरयद्धर्माऽवच्छिन्नव्यावृत्तधर्मवत्तया निर्धारणाऽवधिनिरूपितभेदवत एव जात्यादिविशिष्टस्य प्रतिपादनं, ततः पञ्चमी'ति सूत्राऽर्थः। 'साङ्काश्य-कानां,पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा'इत्यादौ निर्धार्यमाणेषु पाटलिपुत्रकेषु निर्धारणाऽवधिसाङ्काश्यकभेदसत्त्वेऽपि, निर्धारणाऽवधि-साहित्याऽऽश्रयनिरूपिताऽभेदस्याऽपि सत्त्वेन, भेदस्यैवाऽभावान्न दोषः। साङ्काश्यकमात्रन्तु न निर्धारणाऽवधिः, पाटलिपुत्रकपदोपादानस्य वैयर्थ्याऽऽपत्तेरित्याहुः। स्पष्टं चेदं कैयटे।

'अत्र पञ्चम्यर्थो व्यावृत्तत्वमेव। 'पाटलिपुत्रकव्यावृत्ताऽऽढ्यतरत्ववद्-भिन्ना माथुरा' इति बोधः। 'माथुरपाटलिपुत्रकेभ्यः पाटलिपुत्रकमाथुरा-वाढ्यपण्डितावि'ति प्रयोगे पञ्चमी भवत्येव। द्वन्द्वोपात्तपदार्थानां द्वन्द्वो-पात्तपदार्थेषु क्रमेणाऽन्वयस्य व्युत्पन्नत्वेन विभागस्यैव सत्त्वादि'ति केचित्।

---

१ इतोऽग्रे—'गोमण्डले वर्त्तमाना या'इत्यत्र गवामिति निर्द्धारणविभक्त्यन्ता-ध्याहारेणैव बोधः। अस्तु वा क्व चित्तथेति, न सर्वत्र तथैवेति नियम इत्याहुः 'इति ख. पाठः।

२ 'तत्र निर्धारणाऽवधेर्निर्धार्यमाणस्य च केन चिद्रूपेणाऽभिन्नस्य यत्र केन चिद्रूपेण भेदस्तत्र निर्धारणं भवति। यथा 'नृणां विप्रः श्रेष्ठ' इत्यत्र नरत्वेना-ऽभिन्नस्य श्रेष्ठत्वेन भेदः। एवं च सर्वत्रैव निर्धारणे भेदस्य सत्त्वेन' इति ख. पाठः।

तन्न । 'आद्यन्तावि'तिसूत्रस्थभाष्यविरोधात् । तस्मात्षष्ठ्यथैव युक्ता ।

साधुनिपुणाभ्याम् । निपूर्वात् 'पुण कर्मणि शुभे' इत्यस्मादिगुपधलक्षणः कः । अर्चतेश्च भौवादिकात् 'गुरोश्च हल' इत्यकारप्रत्ययः । 'अर्चा'। चौरादिकात्तु 'ण्यासश्रन्थ' इति युच् स्यात् । निपुणो राज्ञ इति । साधुशब्दप्रयोगे त्वर्चाऽभावेऽपि 'साध्वसाधुप्रयोगे चे'ति सप्तमी भवत्येव । ननु 'साधुर्भृत्यो राज्ञ' इति न स्यादिति चेन्न । राज्ञो भृत्येनाऽन्वये[1] तस्य सुलभत्वात् । प्रत्यासत्त्या राजविषयमेव साधुत्वं गम्यते, न तु शब्देन तत्स्पृश्यते । अर्चायां[2] प्रतियोगे निषेधाऽर्थं तु अत्र साधुग्रहणमि'त्याहुः । अप्रत्यादिभिरिति । 'लक्षणेत्थम्भूते'ति सूत्रोपात्ताः प्रत्यादय इत्याहुः । षष्ठ्यपवादोऽयम् ।

प्रसितोत्सुका । 'तत्परे प्रसिताऽऽसक्तावि'त्यमरः । उत्सुकसाहचर्यात्प्रसितोऽपि तत्पर एव गृह्यते । तेन 'प्रकर्षेण सित' इत्यर्थे न । अयमपि षष्ठ्यपवादः ।

नक्षत्रे च लुपि । 'लुप्'शब्देन च लुप्संज्ञया लुप्यमानप्रत्ययस्याऽर्थो लक्ष्यते इत्याशयेनाह—नक्षत्रे इति । अधिकरणे किम्? । अद्य पुष्यः । पुष्यं प्रतीक्षते । असति तदनुवृत्तौ सर्वविभक्त्यपवादोऽयं विज्ञायेत । अन्तरङ्गत्वात्प्रातिपदिकाऽर्थ एव वा विधानं स्यात् । एतेन 'परत्वात्प्रथमया बाध' इत्यपास्तमि'त्यादि स्पष्टं भाष्यादौ ।

मूलेनेति । 'नक्षत्रेण युक्तः काल' इत्यणो 'लुबविशेषे' इति लुप् । नक्षत्रे किम् ? । 'पञ्चालेषु तिष्ठति' । 'जनपदे लुबि'ति लुप् ।

केचित्तु 'सूत्रे पञ्चम्यर्थे सप्तम्या[3] 'लुबन्तान्नक्षत्रवाचिन इत्यर्थ' इति

---

१ 'अन्वयेन तस्य सुलभत्वात्' घ. पाठः ।

२ 'अर्चायाम्' इत्यारभ्य 'ग्रहणम्' इत्यन्तो ग. घ. पाठः ।

३ 'सप्तम्याम्' इति क्वचित्पाठः ।

वदन्ति । तेषां लुबन्तविशेषणान्न स्यात्—'उत्तराभ्यां फल्गुनीभ्यां नोत्तरां गच्छेदि'ति यथेति हरदत्तः ।

**सप्तमीपञ्चम्यौ** । 'कालाध्वनोरत्यन्तसंयोगे' इत्यतः 'कालाध्वनोरि'ति वर्त्तते । तच्च पञ्चम्या विपरिणम्यते । मध्यस्याऽवधिद्वयसापेक्षत्वात्, 'कारकयोर्मध्ये' इति द्विवचनान्तेन समासः । न चाऽवध्यवधिमतोः साजात्यनियमान्न कालाऽध्वानौ कारकमध्ये सम्भवत इति वाच्यम्। कारकशब्देन तच्छक्तेराश्रयत्वाऽऽदिरूपाया ग्रहणात् । सा च निरूपकक्रियादिभेदेन भिन्नैवेति न दोष इत्याशयेनाऽऽह—**शक्तिद्वयमध्ये** यावित्ति । षष्ठ्यपवादश्चाऽयम् । स्वाऽनन्तरकालवृत्तित्वाऽऽदिकं विभक्त्यर्थः । शक्तिद्वयमध्यवर्त्तित्वं तु कालाऽध्वनोर्वस्तुसन्निमित्तमित्याहुः ।

इह कालाध्वनोर्विभक्त्योश्च न यथासङ्ख्यम्, अस्वरितत्वादित्याहुः ।

**अधिकशब्देन योगे** इति । कर्त्तरि क्तप्रत्ययाऽन्ताऽध्यारूढशब्दात् कन्युत्तरपदलोपे च सिद्धेनेत्यर्थः । तत्र 'अध्यारूढो द्रोणः खारीमि'त्यर्थे अधिकशब्दयोगे खारीशब्दात्षष्ठ्यां प्राप्तायां, तदपवादतया ज्ञापकादिमे इष्येते इत्यर्थः । कर्मणि क्तप्रत्ययान्ताऽध्यारूढशब्दार्थकाऽधिकयोगे[2] तु कर्मणोऽभिहितत्वात्प्रथमैव—'अधिका खारी द्रोणेने'ति । स्पष्टं चेदम् 'अधिकमि'ति सूत्रे भाष्ये । **उप परार्धे** इति । उपशब्दोऽधिकबोधकः । 'उपोऽधिके च'ेति कमप्रवचनीयत्वम् ।

· **स्वस्वामिभ्यां पर्यायेणेति** । अयं भावः—यदि 'यस्ये'ति स्वं निर्दिश्यते, ईश्वरशब्दश्च धर्मिप्रधानः, 'यस्य स्वस्येश्वर उच्यते, ततः सप्तमी'·

---

१ 'सम्भवत इति वाच्यम् । कारकशब्देन तदधिकरणकालादेर्ग्रहणात् । ननु द्रव्यं कारकं, तस्य च 'अद्य भुक्त्वे'त्युदाहरणे कर्त्तृरूपस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशाऽसम्भव इति चेन्न । कारकशब्देन तच्छक्तेराश्रयत्वादिरूपाया ग्रहणात्' इति ख. ग. पाठः ।

२ 'योगे तु परत्वात्प्रथमैव' इति ग. घ. पाठः ।

त्यर्थस्तदा स्वस्मादिति । यदि त्वीश्वरशब्दो भावप्रधानः, 'यस्य स्वामिन ईश्वरत्वमुच्यते, ततः सप्तमी'त्यर्थस्तदा स्वामिन इति । तत्र प्रत्ययाऽर्थस्य प्रकृत्यर्थं प्रति विशेष्यताया न्याय्यत्वेन, कर्मप्रवचनीयविभक्तेः षष्ठ्यपवादतया च, सा षष्ठीवद्विशेषणादेव । विशेष्यात्तु प्रथमैवेति बोध्यम् ।

अधि भुवीति । 'भूनिरूपितस्वामित्ववानि'ति बोधः । अधि रामे इति । 'रामनिरूपितस्वत्ववती भूरि'ति बोधः । रामाऽधीनेति । विभक्त्यर्थेऽव्ययीभावे तु 'अधिरामंमि'ति बोध्यम् । यदत्रेति । ननु 'मामि'ति कर्मणि द्वितीययैव सिद्धे, किं कर्मप्रवचनीयत्वेनेत्यत आह–अगतित्वादिति । तिङि चेति । 'उदात्तवति तिङन्ते गतिर्निहन्यते' इत्यर्थः । अत्र 'तिङ्ङतिङ' इति निघातस्य 'निपातैर्यद्यदी'त्यादिना निषेधात् 'करिष्यती'ति तिङन्तस्योदात्तत्वं बोध्यमिति सर्वेष्टसिद्धिः ।

( इति सप्तमी ) ।

॥ इति विभक्त्यर्थाः ॥

[ इति श्रीनागेशभट्टविरचिते बृहच्छब्देन्दुशेखरे कारकप्रकरणम् ] ।



## अथाऽव्ययीभावसमासप्रकरणम् ।

समर्थः पदविधिः । 'विधि'शब्दः कर्मसाधनः । शेषषष्ठ्या समास[1] इत्यभिप्रेत्याह–पदसम्बन्धीति । अत्र 'पदविधि'शब्देन तत्सहचरितो विधिरपि गृह्यते । अत एव सनन्तादावेकार्थीभावप्रतिपादकं भाष्यं सङ्गच्छते[2] । स चाऽर्थात्समाससंज्ञाऽऽदिः । तस्य च न सामर्थ्यं साक्षाद्विशेषणम् , असम्भवादित्याशयेनाऽऽह–समर्थाऽऽश्रित इति । सूत्रे च 'समर्थ'शब्दो लाक्षणिक इति भावः । 'यत्र[3] शास्त्रे पदसम्बन्धिविधिस्तत्र समर्थ इत्युपतिष्ठते इत्यर्थ' इत्यन्ये । सामर्थ्यं चाऽत्र न व्यपेक्षा । व्याख्यानात्, वक्ष्यमाणदोषप्रासाच्च । किन्त्वेकार्थीभावः । स चाऽपृथगुपस्थितिजनकत्वम् । तच्च विशेषणविशेष्यभावाऽवगाह्युपस्थितिजनकत्वम्[4] । अत एव 'किं समर्थम् ? । संसर्गताऽर्थं संसृष्टाऽर्थमि'ति भाष्ये उक्तम् ।

अत एव राजपुरुषैकदेशे राज्ञि वाक्ये इव 'ऋद्धस्ये'त्यादिविशेषणाऽन्वयो न । तस्य पदार्थैकदेशत्वात् । न चैवं 'शिवस्य भगवतो भक्त' इत्यर्थे 'शिवभागवत' इति न सिद्ध्यती'ति वाच्यम्[5] । 'अयःशूलदण्डाऽजिनाभ्यामि'ति सूत्रस्थभाष्यप्रयोगात्सविशेषणत्वेऽपि तत्र प्रयोगे तद्धितवृत्तेः[6] ।

उद्देश्यविधेयभावेनाऽन्वयोऽपि न । पृथगुपस्थितेस्तथाऽन्वये नियाम-

---

१ 'शेषषष्ठ्या च समासः' ख. घ. पाठः ।

२ 'सङ्गच्छते इत्याहुः' ख. घ. पाठः ।

३ 'यत्र' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. ग. पाठः ।

४ इतोऽग्रे—'अन्यथा घटपदस्याऽपि घट-घटत्व-सम्बन्ध-रूपनानार्थत्वादेकाऽर्थत्वं न स्यात्' इति ख. पाठः ।

५ इतोऽग्रे–'भगवद्'द्वारकसम्बन्धेन शिवस्य भक्ते एवाऽन्वयेनेष्टसिद्धेः' इति घ. ङ. पाठः ।

६ 'प्रयोगाद्वा सविशेषणत्वेऽपि तद्धितवृत्तिरिति तत्त्वम्' इति घ. ङ. पाठः ।

कत्वात् । यद्यपि 'कटोऽपि कर्म, भीष्मादयोऽपी'ति पक्षे 'उत्पलं नीलं ज्ञेय-मि'त्यादिक्रमेण पूर्वं द्वयोरपि क्रियायामन्वयः, तथा च परस्पराऽन्वयित्व-रूपसामर्थ्याऽभावादेव समासाऽप्राप्तिः, तथाऽपि पाष्ठिकपरस्पराऽन्वय-सत्त्वेन समासो दुर्वारः । स एव च समासोपयोगी । अन्यथा 'परमेण कारकेण कृतमि'त्यादौ समासाऽनापत्तौ, 'तत्पुरुषे तुल्यार्थे'तिसूत्रस्थ-भाष्यविरोधः, समानाधिकरणेन षष्ठीसमासनिषेधवैयर्थ्यं च स्यात् । षष्ठीस्थलेऽपि उभयोर्बाह्यसम्बन्धिनैव प्रथममन्वयात् । अत्र[1] पक्षेऽपि परस्परं विशेष्यविशेषणभावेनैव बोध इति वस्तुतत्त्वं मञ्जूषायां निरूपितम् ।

अत एव च 'राज्ञः पुरुषोऽश्वश्चे'तिवत् 'राजपुरुषोऽश्वश्चे'ति न । एकत्र विशेषणत्वेनाऽन्वितस्याऽपरत्र विशेषणत्वाऽयोगात् । एवं 'राज्ञः पुरुषो, भार्यायाश्चे'तिवदेकत्र द्वयमितिविषयताशालिबोधजनकं 'राज-पुरुषो, भार्यायाश्चे'त्यपि न । एकविशेषणवैशिष्ट्येनैवोपस्थितेः । एतत्सर्वं समुदायशक्तिसाध्यम् । एवं च प्रत्येकशक्त्या समुदायशक्तिसहकृतया तथोपस्थितिः । अयमेव च एकार्थीभाव इति तत्त्वम्[2] ।

न[3] च समुदायशक्तिज्ञानस्य कारणत्वाऽऽवश्यकत्वेऽवयवशक्ति-ज्ञानस्याऽपि तत्त्वकल्पने मानाऽभावः । वाक्यक्लृप्तत्यागे मानाऽभावात् । राजत्वविशिष्टेऽपि समुदायस्य शक्तिकल्पने गौरवाच्च । अत एव तेषा-

---

१ 'अत्र पक्षेऽपि' इत्यारभ्य 'निरूपितम्' इत्यन्तः क. ग. पाठः । ख. घ. ङ. नास्ति ।

२ इतोऽग्रे–अत एव च 'प्राप्तोदक' इत्यादौ विशेषणविशेष्यभाववैपरीत्येन बोधः' इति ख. घ. ङ. पाठः ।

३ 'न च समुदायशक्तेरावश्यकत्वेऽवयवानां शक्तिकल्पने मानाऽभावः । क्लृप्त-शक्तित्यागे मानाऽभावात्' इति घ. ङ. पाठः ।

मर्थवत्त्वप्रयुक्तकार्यसिद्धिः । नामाऽर्थयोरभेदाऽन्वयाऽऽदिव्युत्पत्तयस्तु पृथगुपस्थितनामाऽर्थाऽऽदिविषया इत्यदोषः ।[1]

एतेन 'वाक्यवदुपस्थितानां पदाऽर्थानां पश्चादन्वयः । 'राजपुरुष' इत्यादौ च राजपदस्य राजसम्बन्धिनि लक्षणे'त्यादिनैयायिकाद्युक्त-व्यपेक्षावादो निरस्तः । पूर्वोक्ताऽर्थानां वचनैः साधने गौरवाऽऽपत्तेः । पङ्कजादावपि डप्रत्ययाऽऽदेः पद्मत्वविशिष्टे निरूढलक्षणयैवोपपत्तौ, समुदायशक्त्युच्छेदाऽऽपत्तेश्च । 'कण्ठेकालः' 'दास्याः पुत्र' इत्यादौ लक्षणाया अभावेन 'सुन्दरे' इत्यादिविशेषणाऽन्वयाऽऽपत्तेश्च ।

न चैवं 'देवदत्तस्य गुरुकुलमि'त्यादि न स्यादिति वाच्यम् । ससम्बन्धिकत्वेनाऽदोषात् । नियमेन[2] सम्बन्ध्याकाङ्क्षत्वं तत्त्वम् । गुरुत्वं पुंस्त्वे सत्यध्यापकत्वम् । तच्च शिष्यनिरूपितम् । तत्र द्वयी विधा । ( १ ) सापेक्षोऽपि समस्यते इत्येका । 'पदार्थैकदेशेऽप्यन्वय'इति तात्पर्यम् । ( २ ) प्रधानपदाऽर्थस्यैव कुलाऽऽदेर्गुर्वादिनेव, देवदत्ताऽऽदिनाऽपि सम्बन्धः । स च गुरुणा सहोत्पत्तिगर्भः । देवदत्तेन सह तु तदीय-गुरूत्पाद्यत्वरूपो गुरुघटित इति द्वितीया ! तदुक्तं—

'सम्बन्धिशब्दः साऽपेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' ॥

यद्वा—

'समुदायेन सम्बधो येषां गुरुकुलादिना ।
संस्पृश्याऽवयवांस्ते तु युज्यन्ते तद्धता सह' ॥ इति ।

---

१ 'इत्यदोषः । अन्यथा घटपदजन्यबोधविषययोर्घटत्व-घटयोरप्यभेदाऽन्वय एव स्यात् । एवं च 'दर्शनीयामाते'त्यादौ पुंवद्भाववारणक्लेशोऽपि न' इति ख. घ. ङ. पाठः ।

२ 'नियमेन विद्यमानसम्बन्ध्याकाङ्क्षत्वम्' इति घ. ङ. पाठः ।

अयमपि प्रकारो निर्णीतलक्ष्यविषय एव[1]। एतेनाऽनया रीत्या 'ऋद्धस्य राजपुरुष' इत्यपि स्यादि'त्यपास्तम्[2]। किञ्चाऽत्र सूत्रे व्यपेक्षासामर्थ्यस्यैव ग्रहे 'परमसर्पिःकुण्डिके'त्यत्र षत्वाऽऽपत्तिः। 'इसुसोः सामर्थ्ये' इति-सूत्रे व्यपेक्षासामर्थ्यस्यैव ग्रहा[3]दिति दिक्।

एतेन 'जहत्स्वार्थैव एकाऽर्थीभावः। अजहत्स्वार्था च व्यपेक्षे'ति निरस्तम्। 'वाप्यश्वः' 'सोमो गौरी अधिश्रित' इत्यनयोरविशेषाऽऽपत्तेः। अत एव प्रगृह्यसंज्ञासूत्रस्थम्-'अथाऽजहत्स्वार्था वृत्तिः?। अजहत्स्वार्थायां

१ 'अयमपि प्रकारो नित्यसापेक्षविषय एव' इति घ. ङ. पाठः।

२ इतोऽग्रे—'किञ्च 'कमण्डलुपाणिं छात्रमद्राक्षीदि'त्यादौ 'कमण्डलु'शब्दात् इत्थम्भूतलक्षणे इति तृतीयाऽऽपत्तिः। ([1]तदर्थस्य चाऽन्यपदार्थेऽन्वयः। व्यधिकरणबहुव्रीहौ सर्वेषां सुबन्तानामन्यपदार्थवृत्तित्वस्य तव दुरुपपादत्वात्)। न च 'सुपो धात्वि'ति तस्या[2] लुक्। समासोत्तरं जायमानत्वेन प्रातिपदिकाऽनवयवत्वात्। तन्मध्यपतितन्यायात्तद्ग्रहणेन ग्रहणेऽपि, अवयवत्वे मानाऽभावात्। स्पष्टं चेदमित्थम्भूतसूत्रे भाष्यकैयटयोः। ननु लक्ष्यलक्षणभावस्य विवक्षितत्वात् 'कमण्डलुना पाणिरस्ये'ति व्यधिकरणत्वेऽपि क्वचिद्बहुव्रीहिप्रवृत्तिस्वीकारेण समासे, ततस्तृतीयाया लुकि, 'लक्ष्ये लक्षणस्ये'तिन्यायेन कथं तृतीयाऽऽपादनमिति चेन्न। समासे जाते, पश्चाल्लक्षणत्वविवक्षायां तृतीयाऽऽपादनस्य भाष्यसम्मतत्वेनाऽदोषात्। 'कृतपूर्वी कटमि'तिवदेकार्थीभावे तु व्यधिकरणविशेषणाऽन्तर्भावेणैव समुदायस्याऽन्यपदार्थवृत्तित्वान्न क्षतिरित्याहुः' इति घ. ङ. पाठः।

३ 'ग्रहात्। एवं च 'नित्यसमासे' इति सूत्रस्थेन 'नानापदार्थयोर्वर्त्तमानयोः ख्यायते यदा यागः। तस्मिन् षत्वं कार्यं, तद्युक्तं, तच्च मे नेह' इति भाष्येण विरोधः स्पष्ट एवेति दिक्' इति घ. ङ. पाठः।

1 कुण्डलितोऽयं घ. पाठः। ङ. नास्ति।

2 'तस्य' इति ङ. नास्ति।

च न दोषः । समुदायाऽर्थोऽभिधीयते' इति भाष्यं सङ्गच्छते इत्याद्येकार्थीभाववादे विस्तरः ।

[1]'सर्वत्र जहत्स्वार्था वृत्तिः, तद्घटकसर्वपदानामानर्थक्यमि'ति तु न युक्तम् । 'सुपन्था' इत्यादावात्वाद्यनापत्तेरिति हरदत्तः । अत एवाऽन्यैरप्युक्तौ-'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी'ति । रूढिः = समुदायशक्तिः, सा यत्राऽवयवार्थप्रतीतौ विरुध्यते' इति तदर्थः । अवयवाऽर्थविरुद्धो यत्र समुदायाऽर्थ इति तात्पर्यम् । यथा रथन्तराऽक्षौहिणी-गौरखरशालिपर्ण्यादि[2]ष्विति तत्त्वम् ।

परिभाषेयम् । अधिकारत्वे ह्युपपदनिमित्तविभक्तिविधावपि प्रवृत्तिः स्यात् । 'पदविधिरि'ति लिङ्गसमर्पकवैयर्थ्यं च स्यात् । इयं च 'पदविधिरि'ति सूत्रस्वरसात्, 'समासेऽङ्गुलेः सङ्ग'इत्यादौ समासग्रहणाच्च, 'गतिर्गताविति'सूत्रे 'पदस्ये'त्यधिकारात्समर्थपरिभाषोपस्थितिरि'ति कैयटस्वरसाच्च, पदत्वेन, सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता, तत्सहचरितता वा, तत्रैव प्रवर्त्तते । तेन पदाऽन्तरसम्बन्धनिमित्त[3]विभक्तिविधौ 'अन्याराद्दितर' 'नेर्विश' इत्यादौ, 'युष्मद्युपपदे' इत्यादौ, 'अभिज्ञावचने लृडि'त्यादौ, 'कृञ्चाऽनुप्रयुज्यते' इत्यादौ, 'दीर्घात्' 'पदान्ताद्वे'त्यादौ च न प्रवर्त्तते । एकार्थीभावे सामर्थ्ये विभक्तिविधानाऽसम्भवं वदता भाष्यकारेण तद्विषये एकार्थीभावाऽभावबोधनात् ।

[4]न च 'सार्वधातुके यगि'तिसूत्रे भाष्ये 'प्रकृतिप्रत्ययौ प्रत्ययाऽर्थं सह ब्रूत' इत्युक्तम् । 'प्रत्ययाऽर्थमि'त्यस्य [5]शास्त्रवासनया प्रतीयमानाऽर्थ-

---

१ 'सर्वत्र' इत्यारभ्य 'इति तत्त्वम्' इत्यन्तः क. ख. ग. घ. पाठो ङ. नास्ति ।

२ 'पर्ण्यादयः' घ. पाठः ।

३ 'निमित्तक' इति क्वचित् पाठः ।

४ 'न च' इत्यारभ्य 'इत्यर्थात्' इत्यन्तः क. ख. ग. घ. पाठो ङ. नास्ति ।

५ 'शास्त्रवासनया' इति क. पाठः । ख. ग. घ. ङ. नास्ति ।

मि'त्यर्थः। एवञ्च[2] तयोरपि मिलित्वैकोपस्थितिजनकतेति वाच्यम्। इष्टाऽऽपत्तेः। अत एव समर्थसूत्रे 'एकार्थीभावसामर्थ्ये विभक्तिविधानमसङ्गृहीतम्। व्यपेक्षासामर्थ्ये तस्य संग्रहेऽपि समासोऽसङ्गृहीत' इति भाष्यप्रघट्टके विभक्तिविषये क्रियाकारकयोरुपपदविभक्त्यन्तयोश्च व्यपेक्षा कैयटेनोपपादिता, न तु विभक्ति-तत्प्रकृत्यर्थयोः[1]।

विभक्तिविषये एकार्थीभावव्यवहारस्तु न। समुदायशक्तिसहकारेण बोधे एव तत्स्वीकारात्। न हि विभक्त्यन्तस्थले शास्त्रप्रक्रियायां विभक्त्यन्तसमुदायशक्तिज्ञानाऽपेक्षा तज्जन्यबोधे। अवयवशक्तिभ्यामेव तथोपस्थितेः। विभक्त्यर्थश्च सम्बन्ध एवेति प्रकृतसूत्रभाष्ये एव स्पष्टतया, सम्बन्धसम्बन्धस्य चाऽभानेन, 'प्रकृतिप्रत्ययार्थयोः सम्बन्धो विशिष्टशक्य' इति न वाच्यम्। कृत्तद्धितादौ तु क्रियाकारकभावसम्बन्धस्य, विभक्त्यर्थसम्बन्धस्य च बोधाय विशिष्टज्ञानाऽपेक्षा प्रक्रियादशायामपीत्याहुः।

एकार्थीभावश्च साक्षात्तद्विध्युद्देश्ययोः, उद्देश्यविधेययोर्वा, नेतरेण। मानाऽभावात्। प्रत्यासत्तेश्च। अत एव 'बहुवचनस्य वस्नसौ'[3] 'तिङ्ङतिङः' इत्यादौ च न दोषः[4]। 'कर्मण्यणि'त्यादौ 'कर्मणी'त्यादीनां प्रथमार्थत्वेऽपि

---

१ इतोऽग्रे—'एवं च तयोर्मिलित्वैवोपस्थापकतायाः सिद्धेः, फलतस्तद्विषये एकार्थीभावोऽङ्गीकृत एवेति वाच्यम्। अन्तरङ्गाऽऽकाङ्क्षया तयोः प्रथमं परस्पराऽन्वयबोधोत्तरमितराऽर्थेनाऽन्वयबोध इति तदर्थात्, न तु वृत्ताविव ताभ्यामेकोपस्थितिरित्यर्थ इति न दोषः। अत एव 'प्रतीयमाने'त्यर्थकं 'प्रत्यये'त्यर्थविशेषणतयोपात्तम्। 'स्वस्वजन्योपस्थितिविषयं सह बोधविषयी कुरुत' इत्यर्थात्' इति ख. घ. पाठः।

२ 'एवञ्च' इत्यारभ्य 'प्रक्रियादशायामपीत्याहुः' इत्यन्तः क. ग. पाठः।

३ 'वस्नसाविस्यादौ' इति ख. घ. ङ. पाठः।

४ इतोऽग्रे—'अत एव 'समानवाक्ये निघातयुष्मदस्मदादेशा' इत्यस्य चारितार्थ्यम्' इति ङ. पाठः। घ. तु मसीलेपेनाऽयं दूरीकृतः।

'तत्रोपपदमि'त्युपस्थित'तत्रे'त्यंशस्य कारकविभक्तित्वाद्विधेयक्रिययैवाऽन्वयेन, साक्षात्पदोद्देश्यकत्वमस्त्येव—इति[1] प्राचीनग्रन्थपरिशीलनशालिभिर्विभाव्यम् ।

एकार्थीभावसामर्थ्यकल्पना चाऽलौकिकविग्रहवाक्ये[2] एव द्रष्टव्या । यथा शत्रादौ द्वितीयाऽऽदिसामानाधिकरण्यं दृष्ट्वा लकारेऽपि तत्कल्पना । 'अन्यपदार्थे[3] 'समर्थः' 'चार्थे' इति सौत्राऽनुवादात्[4] ।

समर्थः किम् ? । 'पश्य कृष्णं, श्रितो रामं मित्र' इत्यादौ समासो मा भूदिति । कृष्णश्रितयोः परस्परसम्बन्धाऽभावेनैकोपस्थित्यजनकत्वात् । क्वचित्तु सामर्थ्याऽभावेऽपि समासः, सूत्रभाष्याऽऽदिप्रामाण्यात्—'असूर्यम्पश्याः' 'किमोदनः शालीनामि'त्यादौ । केषां शालीनामोदन इत्यर्थः ।

प्राक्कडारा । अत्र प्राग्ग्रहणमावर्त्तते । तेन 'समाससंज्ञा भवन्ति प्राक् । समाससंज्ञाः सन्तोऽव्ययीभावाऽऽदिसंज्ञका' इत्यर्थस्याऽपि लाभः । तेन ताभिः समावेशसिद्धिः । अन्यथा पर्यायः[5] स्यात् ।

'समास' इत्यत्र 'अकर्त्तरि चे'ति कर्मणि घञ् । अत एव 'सुबन्तं समस्यते' इत्युत्तरग्रन्थः सङ्गच्छते । 'सुबि'ति प्रथमान्तैरन्वयश्चेत्याहुः ।

परे तु 'सुबन्तसहितं[6] सुबन्तं समाससंज्ञकमि'त्यर्थः । अत एव 'आ कडारा'दिसूत्रे[7] भाष्ये 'समाससंज्ञे'ति व्यवहारः । 'समस्यते' इत्युक्ति-

१ 'प्राचीनग्रन्थपरिशीलनशालिभिर्विभाव्यम्' इति ख. घ. ङ. पाठः । क.नास्ति ।

२ 'विग्रहवाक्येऽपि द्रष्टव्या' इति ख. पाठः ।

३ 'अन्यपदार्थे' इत्यादि सौत्रानुवादाच्च' ख. घ. ङ. पाठः ।

४ इतोऽग्रे—'सा च विशेषणाऽनन्वयाद्यनुरोधेन न्यायसिद्धा' इति ङ. पाठो घ. पुस्तके मसीलेपेनाऽपसारितः । क. ख. ग. नास्त्येव ।

५ इतोऽग्रे—'अस्याऽधिकारतयाऽव्ययमित्यादिसूत्रविहितसमाससञ्ज्ञाया अचारिताथ्यात्' इति घ. ङ. पाठः ।

६ 'सुबन्तेन सहितम्' इति ख. पाठः । ७ 'आ कडारादिसूत्रभाष्ये' ख. पाठः ।

स्त्वबुधैर्भिन्नयोः शब्दयोः संश्लेषोऽनेन क्रियते इति प्रतिपत्तेः[1]। संपूर्वको-ऽस्यतेश्च[2] संश्लेषोऽर्थ इत्याहुः[3]। [4]ननु 'सुपे'ति तृतीयया सहाऽर्थाऽऽक्षेपात् 'सह'ग्रहणं व्यर्थमत आह—योगो विभज्यत इति। अत्र 'सुबि'त्येकत्वं विवक्षितम्[5]। तेन सुबन्तसमुदायेन न समासः। [6]तेन 'महिष्या, अजा-याश्च क्षीरमि'त्यर्थे 'महिष्यजाक्षीरमि'ति नेति स्पष्टं समर्थसूत्रे[7] कैयटे।

[8]अन्ये त्वनुवाद्यत्वादेकत्वाऽविवक्षैव। किञ्च तद्विवक्षायामेकेनैव केन चित्सुबन्तेन किञ्चिदेकं सुबन्तं समस्येत, न त्वन्यैरन्यानि। तस्मात्सुबि-त्यादौ जातिविवक्षा। एवञ्च स्वाङ्गग्रहणेन यथा स्वाङ्गसमुदायस्य न ग्रहणं, स्वाङ्गत्वस्य प्रत्येकसमाप्तत्वात्, तथा सुबन्तत्व-प्रातिपदिकत्वा-ऽऽदेरपि प्रत्येकसमाप्तत्वेन, सुबन्ताऽऽदिग्रहणेन सुबन्ताऽऽदिसमुदाया-ऽग्रहणम्[9]। तदुक्तम्-'आकृतौ शास्त्राणि प्रवर्त्तन्ते। आकृतिस्तु प्रत्येकं परिसमाप्यते। यावति चैतत्परिसमाप्यते-प्रातिपदिकादिति, सुप्सुपेति च, तावत उत्पत्त्या भवितव्यम्। द्वयोश्चैतत्समाप्यते, न बहुषु। 'प्राति-

१ 'इति प्रतिपत्तेरिति बोध्यम्' इति ख. पाठः।

२ 'संपूर्वकस्याऽस्यतेश्च' इति ख. पाठः।

३ 'इति परे' इति ख. पाठः।

४ 'नन्वन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमत आह' इति घ. ङ. पाठः।

५ इतोऽग्रे—'संख्यायाः प्रकृत्यर्थविशेष्यान्वयित्वे संभवति विशेषणजात्यन्वया-ऽनौचित्यात्' इति घ. ङ. पाठः।

६ 'तेन' इत्यस्य स्थाने 'अत एव' इति ख. घ. ङ. पाठः।

७ 'समर्थसूत्रे भाष्ये' इति ख. घ. ङ. पाठः।

८ 'अन्ये तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः, ख. घ. ङ. नास्ति।

९ 'सुबन्तादिसमुदायग्रहणम्' इति क. पाठः। 'सुबन्ताऽसमुदायग्रहणम्' इति ख. पाठः।

पदिकादि'ति चाऽवयवे समाप्यते. न समुदाये' इति समर्थसूत्र-मतुप्सूत्रयोर्भाष्ये । 'एतत्सुबादिपदोपात्तसुबन्तत्वादिकमि'त्येव तदर्थः पूर्वाऽपरपर्यालोचनया लभ्यते, न त्वेकत्वविवक्षयेत्याहुः ।

योगविभागस्येति[1] । यद्यप्युदात्तवता, गतिमता च तिङा गतेः समासो नित्याऽधिकारे वार्त्तिककृतोक्तस्तथाऽपि नाऽसौ नित्यः । 'य आ नयत्' 'अभि प्र भर धृषते'त्यादौ समासाऽदर्शनात् । एवं चाऽधिकारप्राप्तमपि नित्यपदं तदंशे न सम्बध्यते । अत एव भाष्यकृता 'सहे'तियोगविभागेनाऽयं साधितः । यथोत्तरं च मुनीनां प्रामाण्यमिति बोध्यम् ।

स च च्छन्दस्येवेति । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते । एतच्च सम्प्रदानसंज्ञासूत्रे पदमञ्जर्यां स्पष्टम् । यदि लोकेऽपि स्यात्तर्हि 'यत्प्रकुरुते' इत्यत्र सुप्-ह्रस्वयोः, 'प्रकुर्वीरन्नि'त्यत्र नलोपस्य चाऽऽपत्तिरिति भावः । 'शयितव्यमि'त्यादेः क्रियावाचकस्याऽपि नपुंसकत्ववत्, प्रातिपदिकत्वेऽस्याऽपि नपुंसकत्वं स्यादिति बोध्यम् । ( यदि[2] तु नाऽस्ति नपुंसकत्वक्षमा, तदा नलोप एव दोषो बोध्यः ) । एवं च काव्याऽऽदौ 'प्र भवती'त्यादिप्रयोगेषूपसर्गः पृथक्पदमेवेति बोध्यम् । काव्यपाठिनाम् ऐकपद्यभ्रमे मूलन्तु संहिताया नित्यत्वं, निपातानां द्योतकत्वं च[3] ।

अनुव्यचलदिति[4] । 'उदात्तवता गतिमते'तिवार्त्तिकात्तु[5] त्रयाणां युग-

---

१ इतोऽग्रे—'अत एव सुपेत्यंशस्याऽधिकारत्वं, लक्षणत्वं च भगवतोक्तमित्याहुः' इति ख. घ. ङ. पाठः ।　　　२ अयं ख. पाठः क. ग. नास्ति ।

३ इतोऽग्रे—'अग्न आ याही'त्यादौ पदपाठे उपसर्गेष्ववसानं तु तत्सम्प्रदायाऽनुरोधादिति बोध्यम् । 'तदीयपूर्वपदोत्तरपदविभागप्रदर्शनार्थेत्यन्ये' इति घ. ङ. पाठः ।

४ 'अनुव्यचलदिति । एकत्वस्य विवक्षितत्वात्क्रमेण समासद्वयं बोध्यम् । अत्र सति शिष्टत्वात् 'तिङ्ङतिङः' इति निघातं बाधित्वा समासाऽन्तोदात्तत्वमेवेति बोध्यम् ।' इति ख. घ. ङ. पाठः ।

५ 'वार्त्तिकमते तु' इति ख. पाठः ।

पत्समासो बोध्यः। ( तत्र 'सुपे'त्यस्याऽसम्बन्धात्) । केवलतिङन्तस्योदात्तत्वाऽभावान्नैकेन समासः। गतिमत्त्वाऽभावाच्च । एतदर्थमेव 'गतिमते'-त्युक्तम्। अन्वित्यनेन व्यचलदिति विशिष्टस्य समर्थत्वात्सूत्रमतेऽपि तथैव । अत्र सतिशिष्टत्वात्समासान्तोदात्तत्वमेवेति बोध्यम्। अव्ययपूर्वपदप्रकृतिस्वरः, कृद्ग्रहणप्रत्याख्यातृभाष्यनये 'गतिकारके'त्युत्तरपदप्रकृतिस्वरश्च तत्पुरुषत्वाऽभावान्न भवति । यत्र तु स इष्यते, तत्र बाहुलकात्साधनीयः।

सुपेति । इदं 'शेषे' इतिवल्लक्षणं चाऽधिकारश्च । अधिकारत्वफलन्तु 'देवः करोति' 'मातुर्जानाती'त्यादौ विशेषणसमास-षष्ठीसमासाऽभाव इति बोध्यम् ।

सुपो धातु । यत्तु 'अङ्गस्य सुप' इति सूत्रमस्त्विति । तन्न । 'परम सु गर्ग सु' इत्यस्यामवस्थायां समासे, समासत्वात्प्रातिपदिकत्वेऽङ्गत्वाय प्रथमं स्वाद्युत्पत्तौ, पूर्वस्वोर्लुक्यपि, अकाराऽन्तप्रकृतिकसुबन्ताऽभावात् इनाद्यनापत्तेरि'ति केचित्। तन्न । अकारान्तपूर्वकसुबन्तलक्षणायामपि बाधकाऽभावेनाऽक्षतेः । वस्तुतस्तत्र लक्षणैव नेति ङ्याप्सूत्रे निरूपितम् । 'अङ्गत्वनिमित्तस्य सुप' इत्यर्थभ्रमवारणाय तु न तथोक्तमिति बोध्यम्।

न च 'समर्थस्य सुप' इत्येव सूत्र्यताम् । सामर्थ्यं चैकाऽर्थीभावः । 'तद्वदवयवस्य सुपो लुगि'त्यर्थ इति वाच्यम् । 'त्वयके'त्यादावपि सुपो लुगापत्तेः । 'कुत्सिते' इतिसूत्रस्थभाष्यरीत्या कुत्सादिभिः सुबन्तस्यैव एकार्थीभावात्। 'किमोदनः शालीनामि'त्यसमर्थसमासे लुगनापत्तेश्च ।

---

१ ख. पाठोऽयं क. ग. नास्ति ।

२ 'अन्वित्यनेन' इत्यारभ्य 'सूत्रमतेऽपि तथैव' इत्यन्तः क. ग. पाठः ।

३ 'समासाद्यभाव इति बोध्यम्' इति घ. ङ. पाठः ।

४ 'अङ्गस्य निमित्तमित्यर्थोपत्त्या दोषापत्तेः । किञ्च परम गर्ग सु' घ. ङ. पाठः ।

५ घ. ङ. पुस्तकस्थ पाठस्य खण्डनमेतत् ।

६ 'किमोदन' इत्यारभ्य 'अनापत्तेश्च' इत्यन्तः क. ग. पाठः ।

निर्देशादिति। प्रथमानिर्दिष्टत्वाऽविशेषेऽपि, उपसर्जनसंज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः। 'सुपे'त्यनेनैव 'विस्पष्टपटुत्ववन्त' इत्यर्थे 'विस्पष्टपटव' इत्यादि सिद्ध्यति।

इवेनेति। अयमपि योगविभागसिद्धत्वादनित्य एव। 'सहे'त्यत्र भाष्ये पाटाच्च। स्पष्टं चेदं कैयटे। 'जीमूतस्येवे'त्यादौ बह्वृचैः समासाऽभ्युपगमेऽपि, तैत्तिरीयैर्व्यस्तस्यैव पाठाच्च। अत एव 'उद्बाहुरिव वामन' इति व्यस्तप्रयोगः सङ्गच्छते। विभक्त्यलोपस्त्वपूर्व एव विधीयते। स च प्रत्यासत्त्या समासाऽवयवस्यैव। तेन समासादुत्पन्नस्य 'अव्ययादि'ति लुग्भवत्येव। यत्त्विदं छान्दसमिति। तन्निर्मूलम्।

१ 'एवमेव विस्पष्ट' इति ख. घ. ङ. पाठः।

२ 'अयमपि योगविभागसिद्धत्वात्काचित्क एव। न च कुगतीत्यत्र नित्याऽधिकारे भाष्ये तद्वार्त्तिकपाठान्नित्यमिदम्। अत्राऽपि भाष्ये पाठेन, योगविभागेन तत्साधनेन चाऽन्यस्यैव तत्र स्मारितत्वेनाऽक्षतेः' इति ख. घ. ङ. पाठः।

३ 'काचित्क एव' ख. घ. ङ. पाठः।

४ 'सहेत्यत्र भाष्ये पाठाच्च' इति क. ग. पाठः।

५ इतोऽग्रे—'अत एवाऽस्य तत्पुरुषत्वं न' इति ख. घ. पाठः।

६ 'लुग्भवत्येवेत्याहुः' इति ख. घ. ङ. पाठः।

७ 'यत्त्विदं छान्दसमिति। तन्निर्मूलम्। 'हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीमि'ति प्रयोगविरुद्धं च। न च 'मातेवे'त्यसमस्तमेव। तथा सति 'उपमितं व्याघ्रादिभिरि'ति समानाधिकरणाऽधिकारे समासवचनेन, तथैव व्युत्पत्त्या चोपमानोपमेययोः समानविभक्तिवचनत्वनियमात् 'मातरमिवे'त्यस्याऽऽपत्तेः। निपातानां द्योतकतानये उपमानसदृशलाक्षणिकस्योपमानपदस्योपमेयेऽभेदाऽन्वयेन, तत्समानविभक्तिकत्वस्यैवौचितत्वाच्च। समानलिङ्गत्वनियमस्तु न। 'शस्त्रीश्यामो देवदत्त' इति 'उपमानानी'ति सूत्रे

यत्तु 'हरीतकीं भुङ्क्ष्व राजन् ! मातेव हितकारिणीमि'ति प्रयोगविरुद्ध-मेतत् । न च 'मातेवे'त्यसमस्तमेव । तथा सत्युपमानपदस्योपमेयसामानाधिकरण्येन, तत्समानविभक्तिकत्वाऽऽपत्तेः । तथा हि—सामानाधिकरण्यं नाम-एकार्थबोधकत्वम् । विभक्तिभेदे हि कारकशक्तिभेदेनैकाऽर्थबोधकत्वं भज्येत । तस्मात् 'विशेष्यसमानशक्तिकत्वं समानाधिकरणविशेषणे' इति-नियम इति । समानलिङ्गत्वनियमस्तु न । 'शस्त्रीश्यामो देवदत्त' इत्युपमानानीति सूत्रे भाष्योदाहरणात् । समासे तु 'प्रथमान्तेन समास' इति पक्षस्याऽप्याकरे स्थितत्वेन न दोषः । समस्तं तु द्वितीयान्तम् । तदन्तस्याऽप्यव्ययत्वात्सुपो लुक् । 'मातृसदृशीमि'ति च तदर्थः । इवशब्दान्तस्याऽव्ययत्वेऽपि कारकत्वयोगो भवति । लिङ्गयोगस्तु न । मानाऽभावात् । स्वभावाच्च । अस्तु वा प्रथमैकवचनम् । तच्चाऽव्ययात्साधुत्वमात्रफलक-

भाष्योदाहरणात् । समासे तु 'प्रथमान्तेन समास' इति पक्षस्याऽप्याकरे स्थितत्वेन न दोषः । समस्तन्तु द्वितीयान्तम् । तदन्तस्याऽप्यव्ययत्वात्सुपो लुक् । 'मातृसदृशीमि'ति च तदर्थः । न चेवशब्दाऽन्तस्याऽव्ययत्वेन कारकत्वाऽयोगः, कारकत्वयोगस्येव लिङ्गयोगस्याऽप्यापत्त्या टापो दुर्वारत्वाऽऽपत्तिश्चेति वाच्यम् । विशेषणविभक्तेः साधुत्वाऽर्थत्वेनाऽदोषात् । 'स्वरि'त्यादेरिव कारकत्वेऽप्यक्षतेश्च । लिङ्गयोगस्तु न । मानाऽभावात्, स्वभावाच्च । अस्तु वा प्रथमैकवचनं, तच्चाऽव्ययात्साधुत्वमात्रफलकमिति, विरुद्धविभक्तिराहित्येन नाऽभेदान्वयबाधः । अनया रीत्या 'चन्द्र इव कृष्णं पश्ये'त्याद्यपि [1]साध्वेवेत्यन्यत्र विस्तरः' इति ख. घ. पाठः ।

1 'साध्वेव । साधारणधर्मवाचकपदं तु उपमेयसमानलिङ्गवचनमेव । तदर्थस्योपमेयवृत्तितया विधेयताया विवक्षितत्वेन तत्रैवान्वयस्य युक्ततया तत्त्वस्यैव युक्तत्वात् । 'सक्तवो भक्षिता देव ! शुद्धा कुलवधूरिवे'त्यादौ दुष्टोपमेत्यालङ्कारिकग्रन्थास्तु सहृदयोद्वेजकतामात्रेण तत्त्वमित्यभिप्रायका इत्यन्यत्र विस्तरः' इति ङ. पाठः ।

मिति, विरुद्धविभक्तिराहित्येन नाऽभेदान्वयबाधः। अनया रीत्या 'चन्द्र इव कृष्णं पश्ये'त्याद्यपि साध्वेवेति। तन्न। 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमे'तिन्यासयोरत्र प्रथमाया अप्राप्तेः। प्रातिपदिकार्थसूत्रस्याऽपि क्रियायोगे एव प्रवृत्त्या क्रियायोगे एव प्रथमा। अत एवाऽनभिहितपदे प्रथमायाः कारकविभक्तित्वेनोपपदविभक्तिभ्यो बलवत्त्वोक्तिर्भाष्योक्ता सङ्गच्छते। एवञ्चेदृशप्रयोगा असाधव एवेत्यपरे इत्यन्यत्र विस्तरः।

अत्रेदं बोध्यम्—अत्रत्ययोगविभागसिद्धसमासानामव्ययीभावादिविशेषसंज्ञा न सन्त्येव। तत्तदधिकारेष्वस्याऽपाठात्। एवञ्च 'समासश्चतुर्धे'ति प्रायोवाद एवेति दिक्।

[1]जीमूतस्येवेति। 'यथाऽर्थ'ग्रहणात्, सादृश्यग्रहणाद्वा प्राप्ताऽव्ययीभावस्तु न। 'इवेने'त्यनेन बाधात्। 'तत्र तस्येवे'ति निर्देशाच्च।

अव्ययीभावः। अनव्ययमव्ययं भवतीत्यर्थः। 'भवतेर्ण उपसङ्ख्यानमि'ति कर्त्तरि णः। एवं चाऽन्वर्थत्वेनैवाऽव्ययत्वे सिद्धे 'अव्ययीभावश्चे'ति सूत्रं न कार्यमिति के[2]चित्।

[3]योगो विभज्यत इति। स्पष्टं चेदं 'गम्भीराञ्ञ्यः' 'अव्ययीभावाच्चे'तिसूत्रे न्यासग्रन्थे। [4]केचित्तु भाष्ये योगविभागाऽनुक्तेः 'अपदिशमि'त्यादिमान्तानामव्ययत्वं स्वरादिपाठात्। 'अपदिशेने'त्यादि तु चिन्त्यमेवेत्याहुः।

ननु समासे कस्याऽपि प्रथमान्तेन निर्देशाऽभावः। अन्तर्वर्त्ति-

---

१ 'जीमूतस्येवेति। 'अव्ययमि'ति योगविभागात्, यथार्थग्रहणात्' इति ख. घ. ङ. पाठः।

२ 'इति केचित्' इति क. ग. पाठः। ख. घ. ङ. नास्ति।

३ 'योगो विभज्यत इति। यद्यपीदं भाष्ये न दृश्यते, तथाऽपि बहुतरप्रयोगदर्शनादादृतम्' इति ख. घ. ङ. पाठः।

४ 'केचित्तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ख. ग. पाठो घ. ङ. नास्ति।

षष्ठ्या व्याख्येया। तत्र प्रातिपदिकाऽर्थमात्रव्याचिख्यासायां प्रथमैव प्राप्नोति।[1] [2]परिनिष्ठितविभक्त्याऽपि समास इत्यतिक्रान्तमतिक्रान्तेने-त्यादिक्रमेण तस्याऽनियतविभक्तिकत्वात्।

अत्र[3] चेदमेव ज्ञापकम्। अत एव 'तत्पुरुषे तुल्याऽर्थे'ति सूत्रे 'परमे कारके' 'परमेण कारकेणे'त्यादावतिप्रसङ्गमाशङ्क्य, 'लक्षणप्रतिपदोक्त'-परिभाषया भाष्योक्तं समाधानं सङ्गच्छते।[4] न चैवं 'चित्रगुरि'त्यादौ सम्बन्धस्याऽभिहितत्वेन समासात्प्रथममेव राजपुरुषादिभ्योऽपि सैव स्यात्, विभक्त्यर्थानां समासेऽन्तर्भूतत्वादिति वाच्यम्। समस्यमान-पदार्थाऽतिरिक्तपदाऽर्थनिरूपितविभक्त्यर्थस्य समासेन वक्तुमशक्यत्वा-दिति दिक्।

गोस्त्रियोः। 'स्त्री'शब्दः स्वर्यते। तेन स्त्र्यधिकारोक्तप्रत्ययलाभः। तेनेह न 'अतिश्रीः'। न च 'स्त्रियां क्तिन्नि'त्यधिकारस्थस्याऽप्यत्र ग्रहणं स्यात्। तत्प्रकरणस्थानां ह्रस्वभावित्वाऽभावात्। 'अतिमतेरि'त्यादौ गुणस्य बहिरङ्गत्वेनाऽसिद्धत्वं बोध्यमिति कैयटादयः।

'उपसर्जनस्ये'ति गोस्त्रियोर्विशेषणम्। स्त्रीप्रत्ययेन च 'प्रत्ययग्रहणे यस्मादि'तिपरिभाषया स्त्रीप्रत्ययान्तं गृह्यते। ताभ्यां च प्रातिपदिक-विशेषणात् 'येन विधिरि'ति तदन्तविधिः। तदाह–उपसर्जनं य इत्यादि।

---

१ 'प्रथमैव प्राप्नोति। अत एव 'मातेव हितकारिणीमि'त्यादिप्रयोगाः सङ्गच्छन्ते इति चेन्न' इति ख. घ. ङ. पाठः।

२ 'परिनिष्ठितविभक्त्या समास इति पक्षेऽतिक्रान्तम्' ख. घ. ङ. पाठः।

३ 'अत्र च पक्षे इदमेव' ख. घ. ङ. पाठः।

४ इतोऽग्रे–अत एव 'पूरणगुणे'ति समानाधिकरणेन षष्ठीसमासनिषेधोऽपि सङ्गच्छते'–इति ख. घ. ङ. पाठः।

ननु 'गोकुलं' 'राजकुमारीपुत्र' इत्यादौ ह्रस्वाऽऽपत्तिः। न चाऽऽद्ये गोऽन्तत्वाऽभावः, व्यपदेशिवद्भावस्य 'अप्रातिपदिकेने'ति निषेधादिति वाच्यम्। तस्य प्रत्ययविधिविषयत्वात्। अत्रत्यं भाष्यन्तु 'असमासे निष्कादिभ्य' इतिसूत्रस्थ–न्यायाऽनुगृहीतभाष्यविरोधादेकदेश्युक्तिरिति बोध्यमिति चेन्न। उपसर्जनपदस्याऽप्रधानाऽर्थत्वेन ससम्बन्धिकतया, 'प्रातिपदिकस्ये'त्यनुवृत्तेश्च, प्रत्यासत्तिन्यायेन यस्य गोऽन्तादेः प्रातिपदिकस्य ह्रस्वो विधीयते, तदर्थं प्रति यदि गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वप्रवृत्त्यङ्गीकारात्। न चेह तथा। गो-राजकुमार्यादीनां कुल-पुत्रौ प्रत्युपसर्जनत्वेऽपि, स्वं प्रत्यतथात्वात्। तादृशत्वञ्च गवाद्युत्तरपदकचित्रग्वादावेव सम्भवति। उपसर्जनसंज्ञाया रूढत्वे यत्समासशास्त्रे गो-स्त्रीप्रत्ययाऽन्तयोः प्रथमानिर्दिष्टत्वं, यत्र समासे वा एकविभक्तित्वं, प्रत्यासत्त्या गोऽन्तादेस्तस्यैव समासस्य ह्रस्वविधानान्न दोषः।

यद्यप्यत्र पक्षे 'कुक्कुटमयूर्यावि'तिद्वन्द्वे दोषः, तत्राऽपि 'अनेकमि'त्यनुवृत्त्या द्वयोरपि प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्, तथापि भाष्ये 'द्वन्द्वे ने'ति वचनाऽऽरम्भान्न दोषः।

---

१ 'राजकुमारीपुत्रः' 'राजपुत्र' इत्यादौ' इति ख. ङ. पाठः। 'राजकुमारीपुत्रः' 'अजापुत्र इत्यादौ' इति घ. पाठः।

२ 'तस्याः प्रत्ययविधि' ख. घ. ङ. पाठः।

३ 'एकदेश्युक्तिरिति बोध्यम्। यद्यपि 'अजापुत्र' इत्यत्रोभयत आश्रयणेऽन्तादिवद्भावविरहाश्चाऽजाशब्दस्य प्रातिपदिकत्वम्, गाङ्गेये तु न दोषः, 'स्त्रीभ्यो ढगि'त्यत्र 'प्रातिपदिकादि'त्यस्याऽसम्बन्धात्, अत एवैणेयादिसिद्धिः, स्पष्टं चेदं भाष्ये, तथाऽपि राजकुमारीपुत्रे दोष इति चेन्न' इति ख. घ. ङ. पाठः।

४ 'गोराजकुमार्यजादीनाम्' इति ख. घ. ङ. पाठः।

५ 'रूढत्वेऽपि' ख. घ. पाठः।

६ इतोऽग्रे—'तथापि संज्ञापर्वकविधेरनित्यत्वान्न दोषः' इति ख. पाठः।

शास्त्रीयमिहोपसर्जनत्वं गृह्यते[1]। कृत्रिमत्वात्। तेन 'कुमारीवाऽऽचरन् ब्राह्मणः कुमारी'त्यादौ ह्रस्वो न। स्पष्टश्चाऽयमर्थ 'उपमानानी'ति सूत्रे कैयटे। न च 'समास' इत्यनुवर्त्त्य, षष्ठ्या विपरिणमय्य, स्त्रीप्रत्ययान्ताऽन्तसमासस्यैव ह्रस्वविधानात् 'कुमारी'त्यादौ दोषाऽभावेन, शास्त्रीयोपसर्जनग्रहणं व्यर्थमिति वाच्यम्[2]। एकदेशे स्वरितत्वं प्रतिज्ञाय समासग्रहणाऽनुवृत्तौ मानाऽभावात्। किञ्च 'गोबष्कयणी'त्यादौ 'बष्कयणी'-शब्दस्य गुणशब्दत्वादप्रधानत्वेनोत्तरपदत्वेन, तदन्तस्य समासत्वेन च, तत्र ह्रस्ववारणाय शास्त्रीयोपसर्जनग्रहणमावश्यकम्। अत एव 'एकविभक्ती'तिसूत्रमपि चरिताऽर्थम्। एवं च 'इद्गोण्या' इतिसूत्रे 'न गोण्या' इति वक्तव्ये, इद्वचनं–'गोणीमात्रमिदं गोणिरि'ति भाष्यमुपादाय यत्कैयट आह—'मात्रचो लुकि, स्त्रीप्रत्ययलुकि अनेन प्रतिषिद्धेऽपि, सिद्ध्यत्येव ह्रस्वत्वमि'ति, तच्चिन्त्यमेव। भाष्यन्तु शास्त्रीयोपसर्जनग्रहणबोधकतयाऽस्मन्मताऽनुकूलमेव।

न च शास्त्रीयोपसर्जनस्य ग्रहणे, समासे एवैतत्प्रवृत्त्या, प्रत्यासत्त्या स्त्रीप्रत्ययान्तगोशब्दोत्तरपदक एव प्रवृत्त्यापत्तौ, 'राजकुमारीमतिक्रान्तोऽतिराजकुमारिरि'त्यादौ ह्रस्वो न स्यात्। समुदायस्योपसर्जनत्वेऽपि, तदवयवस्योपसर्जनत्वे मानाऽभावादिति वाच्यम्[3]। स्त्रीप्रत्यये तदादिनियमनिषेधात्। न चोपसर्जनत्वेन 'राजकुमारी'शब्दस्य न स्त्रीप्रत्ययाऽन्तत्वमिति वाच्यम्। यस्य समुदायस्य स्त्रीप्रत्ययाऽन्तत्वं, तदर्थं प्रति स्त्रीप्रत्ययस्याऽनुपसर्जनत्वस्यैव सत्त्वेन, तदादिनियमनिषेधप्रवृत्तेः। प्रत्यासत्त्या तादृशाऽनुपसर्जनत्वस्यैव निषेधनिमित्तत्वात्। अस्य चाऽतिक्रान्ताऽर्थं प्रत्युपसर्जनत्वं, न तदर्थं प्रतीति, न दोषः।

---

१ 'शास्त्रीयमिहोपसर्जनत्वमुक्तार्थसमानाऽधिकरणं गृह्यते' ख. पाठः।

२ 'इति वाच्यम्' इति ख. नास्ति।

३ 'मानाऽभावाच्चेति वाच्यम्' ख. पाठः।

नाऽव्ययीभावा। 'अपञ्चम्या' इति अम एव विशेषणं, न लुगभावस्य। तुना व्यवच्छेदात्। अपदिशमिति। यत्तु नपुंसकह्रस्वत्वेनैव सिद्धौ 'गोस्त्रियोरि'त्यस्याऽत्रोपन्यासश्चिन्त्यः। किञ्च 'दिश्'शब्दस्य शरदादिषु पाठेन, लिङ्गविशिष्टपरिभाषया टचि, परत्वात् 'यस्येति चे'त्यकारलोपे, ह्रस्वस्य विषय एव नाऽस्ति। तन्न। समासाऽन्तप्रकरणे लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रभाष्ये उक्तत्वेनाऽक्षतेः। उपायस्योपायाऽन्तराऽदूषकत्वाच्च। परत्वेनाऽस्यैव युक्तत्वाच्च। दिश्शब्देन विग्रहे तु ह्रस्वस्य नैव प्रयोजनम्।

इत्यादाविति। आदिना 'एकविंशतिभारद्वाजम्' 'सप्तगङ्गमि'त्यादिसङ्ग्रहः। तथा च वार्त्तिकं-'सप्तम्या ऋद्धि-नदी-समास-सङ्ख्याऽवयवेभ्यो नित्यमि'ति। अत्र नद्यवयवः समासो-नदीसमासः। सङ्ख्याऽवयवाः = सङ्ख्याविशेषाः। 'अव्ययमि'ति विभक्तेन 'ग्रामे भुक्त्वा देवदत्तो गत' इत्यादौ क्त्वान्ताऽव्ययेन न समासः। तस्येष्टसिद्ध्यर्थत्वात्।

विभक्तीत्यादेरिति। 'विभक्ति'शब्देन तदर्थो लक्ष्यते। 'वचन'शब्दः कर्मसाधनः प्रत्येकं सम्बध्यते। विभक्त्यादयश्च श्रुतत्वादव्ययस्यैव विशेषणानीत्याह—विभक्त्यर्थादिष्विति।

हरि ङि अधीति। 'अन्तरङ्गानपी'ति न्यायादिति भावः।

यत्तु 'वाक्ये प्रयोगाऽनियमेऽपि समासाऽनुरोधेनाऽधिशब्दस्य हरावधीतिलौकिकवाक्येऽपि पूर्वत्वं युक्तमि'ति[1]। तन्न। ङ्यध्योः समानाऽर्थत्वध्वननायाऽव्यवहितपरप्रयोगस्यैव युक्तत्वात्। वचनसामर्थ्यादिति। यद्यपि प्रथमाऽन्तेन समासेऽपि न क्षतिस्तथाऽपि 'सुपे'त्यनुवृत्तेः प्रत्यासत्त्या 'यद्विभक्त्यर्थद्योतकाऽव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव सुबन्तत्वस्य ग्रहणादि'त्याशयः[2]। अत एव 'गृहस्योपरी'त्यादावधिकरणशक्ति-

१ इतोऽग्रे—एतेन 'हरावधीत्यलौकिकमि'त्यपास्तम्' इति ख. पाठः।

२ 'ग्रहणादित्याहुः' ख. पाठः।

प्रधानाद्यव्ययेन न समासः। प्रत्यासत्त्या समभिव्याहृतपदीयविभक्त्यर्थ-द्योतकस्यैवाऽव्ययस्य ग्रहणात्। 'अब्भक्ष'न्यायेन विभक्त्यर्थमात्रवृत्त्य-व्ययस्यैव ग्रहणाच्च। इदं हि देशाऽऽदिवृत्त्यपि। 'वचनसामर्थ्यादि'त्युक्ति-वृत्त्यादिरीत्या। वस्तुतो 'निपातेनाऽभिहितेऽपि विभक्तिर्भवत्येवे'ति निरूपितं प्राक्। 'अधिहरि भक्तिरि'त्यत्र 'हर्यभिन्नाऽधिकरणवृत्तिर्भक्तिरि'ति बोधः।

[1]यत्तु 'हरावधिकृत्ये'ति विग्रहमाहुः। तन्न। समासस्य नित्यत्वेन तद्घ-टकशब्दानां तदभावस्य वक्तुमशक्यत्वेन, ईदृशप्रयोगस्यैवाऽभावात्। न च 'कृत्ये'ति ल्यबन्तस्य समासाऽप्रविष्टस्य सत्त्वादस्वपदविग्रहोऽयमिति वाच्यम्। समासाऽर्थलेशमप्यबोधयतस्तस्य विग्रहे प्रवेशस्यैवाऽसम्भ-वात्। न चाऽर्थकथनमात्रमेतत्, न विग्रहः, विग्रहसादृश्यात्तु तत्र 'विग्रह'पदप्रयोगः। अर्थकथनवाक्यस्यैव विग्रहत्वात्। किञ्च 'हरावधि-कृत्ये'त्यस्य यदि 'हरिविषयमधिकारं कृत्वे'त्यर्थस्तदा परत्वात्कर्मत्वेनैव भाव्यम्, 'वासवदत्तामधिकृत्ये'त्यादिवत्। स्पष्टं चेदम् 'अधिकृत्य कृते'इति सूत्रे आकरे। यदि तु 'हरौ किञ्चिदधिकृत्ये'त्यर्थस्तदा हरिशब्दस्याऽधि-शब्देन सामर्थ्याऽभाव इति यत्किञ्चिदेतत्।

विधानसामर्थ्यादिति। न च मध्याऽर्थक'समया'शब्दयोगे द्वितीया-[2]विधानं चरितार्थम्। तथा दूरार्थकाऽऽराच्छब्दयोगे पञ्चमीविधानं

---

१ 'यत्तु' इत्यारभ्य 'यत्किञ्चिदेतत्' इत्यन्तः ख. घ. ङ. पाठो, मनोरमास्य-स्वारस्य. ग. पुस्तकयोरपसारितो नागेशभट्टैः।

२ 'द्वितीयाविधानं चरितार्थमिति वाच्यम्। 'निकषा'साहचर्येण समीपाऽर्थक-'समया'शब्दयोगेऽपि तद्विधानात्। 'अनुर्यत्समये'ति निर्देशादपि तद्योगे समासाऽभावो बोध्यः। नन्वेवमपि पञ्चमीविधानसामर्थ्यं दुरुपपादम्, दूरा-ऽर्थकाऽऽराच्छब्दयोगे तत्सार्थक्यात्, न हि समीपाऽर्थे विशिष्य तद्विधान-मस्तीति चेन्न। 'आजाहिभिरि'त्येव सिद्धे 'युक्त'ग्रहणेनैतद्युक्तमात्रे पञ्चमी-विधानेन तदर्थेऽपि विशिष्य विधानसत्त्वात्। तत्फलं च समासाऽभावः।

चरितार्थम् । न हि समीपाऽर्थे विशिष्य तद्विधानमस्तीति वाच्यम् । रक्षितग्रन्थाऽनुसारेण मूलसत्त्वात्[1] ।

परे तु 'समया-निकषा-ऽऽराच्छब्दा उच्चैरादिवदधिकरणशक्तिप्रधाना इति, समीपमात्रवाचित्वाऽभावान्नैतैः समासप्राप्तिः । 'समीपे' इति हि तेषामर्थः । 'उप'शब्दस्तु तन्मात्रवाची । अत एव कृष्णसामीप्यवन्त इति बोधः 'उपकृष्णं गोपा' इत्यत्रेत्याहुः ।

सुमद्रमिति । 'अव्ययीभाव' इति प्राचीनसंमतमहासंज्ञाकरणेन तत्संमते[2] समीपादिरूपपूर्वपदार्थप्राधान्यरूपेऽर्थे तासां संज्ञानामसति बाधके इष्टत्वात् । समीपवर्त्तिपदार्थप्राधान्ये 'उपदशा' इत्यादौ, समृद्धा मद्रा इत्युत्तरपदार्थप्राधान्ये च बहुव्रीहि-तत्पुरुषावेव । 'उन्मत्तगङ्गमि'[3]त्यादौ तु वचनादव्ययीभावत्वम्[4] । यद्वा 'वचन'ग्रहणाद्वाच्येष्वेषु वर्त्तमानाऽव्ययेनाऽव्ययीभावः । 'सुमद्रौ'[5] इत्यादौ तु सुशब्दो द्योतकः ।

---

अत एव 'अव्ययमि'ति विभक्तेनाऽपि न समासः । एतच्च रक्षितग्रन्थे स्पष्टम् । यत्तु 'चैत्रस्य वनादारादि'त्यादौ साऽपेक्षत्वादसमासे चरितार्थे इमे इति । तन्न । नित्यसमासस्य न्याय्यत्वे, 'चैत्रस्ये'त्यादिविशेषणप्रयोगस्यैवाऽसम्भवात्, 'वृत्तस्य विशेषणयोगो ने'ति भाष्यात् । 'सविशेषणानां वृत्तिर्ने'ति त्वनित्यसमासविषयम् । नित्यसमासस्याऽपि सविशेषणेष्वप्रवृत्तौ 'महतः कुम्भस्य कार' इत्याद्यापद्येतेत्याहुः । केचित्तु समया-निकषा-ऽऽराच्छब्दाः' इति ख. घ. ङ. पाठः ।

१ 'मूलग्रन्थसत्त्वात्' ख. पाठः ।

२ 'तत्संमतेऽर्थे एव तासां संज्ञानामसति बाधके इष्टत्वादसत्त्वरूपाऽव्ययार्थप्राधान्ये एवाऽयं समासः । अत एव समीपवर्त्ति' इति ख. घ. ङ. पाठः ।

३ 'उन्मत्तगङ्गं' 'पारेगङ्गं' 'द्विमुनी'त्यादौ च' ख. घ. ङ. पाठः ।

४ 'अव्ययीभावत्वमित्याहुः । परे तु वचनग्रहणात्' ख. पाठः ।

५ 'सुमद्रा' इत्यादौ तु 'सु'शब्दो द्योतको, न तु वाचकः । 'सुमद्रमि'त्यादौ तु

द्योत्याऽर्थस्य तु विशेषणतेति 'स्त्रियामि'त्यादिसूत्रेषु भाष्ये स्पष्टम्। निपातानां वाचकत्वं, द्योतकत्वं चेत्यत्रैव भाष्यकैयटयोः स्पष्टम्।

विगता ऋद्धिरिति। ऋद्धेरभाव इत्यर्थः। न चाऽत्राऽर्थाऽभावग्रहणेन सिद्धिः। प्रत्यासत्त्या समस्यमानपदाऽर्थप्रतियोगिकाऽभाववृत्त्यव्ययस्यैव तेन समासात्। इह तु न यवनानामभावः, किन्तु तदीयाया ऋद्धेः।

अर्थाऽभावे आह—निर्मक्षिकमिति। न च 'न पचतितराम्' 'घटः पटो ने'त्यत्र नित्यसमासाऽऽपत्तिः। अर्थग्रहणसामर्थ्येन लिङ्गसङ्ख्याऽन्वयि-समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिनोऽभावस्यैव ग्रहणात्। आद्ये समस्यमानपदजन्यप्रतीतिविशेष्यस्य लिङ्गसङ्ख्याऽन्वयित्वाऽभावात्। द्वितीये च न विशेष्यविरोधित्वम्। भेदस्य प्रतियोगिताऽवच्छेदकेनैव विरोधात्। 'भूतले घटो नास्ती'त्यादौ तु न समासः, नञो निषेधाऽर्थतया क्रिययाऽन्वयेऽपि, घटेनाऽनन्वयात्। किञ्च तदन्वये नित्यसमासाऽऽपत्तौ तथा प्रयोग एवोच्छिद्येत। न च ततो भूतलाऽऽधारकघटाऽभावप्रतीतिर्न स्यात्। आर्थ्यास्तस्या उपपत्तेः।

'समनियताऽभावानामैक्येन घटकर्त्तृकसत्ताऽभावो, घटप्रतियोगिकोऽपीति न दोष' इति कश्चित्।

अत्ययो ध्वंस इति। ध्वंसश्च भावस्यैवाऽवस्थाविशेषो, नाऽतिरिक्त इत्यर्थाऽभावात्पृथगुपादानम्। सम्प्रति न युज्यत इति। 'सम्प्रती'ति इदानीमित्यर्थेऽधिकरणशक्तिप्रधानमव्ययम्। 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथे'त्यमरात्। तच्च कर्त्तृकर्मद्वारा क्रिययैवाऽन्वयाऽर्हम्। निषेधोऽपि क्रिययैवाऽन्वयार्ह इति भावः। 'अतिनिद्रमि'त्यत्राऽपि निद्रा-

---

वाचकः। स्वरादिषु, निपातेषु च पाठादेषां वाचकत्वं, द्योतकत्वं चेत्याहुः। स्पष्टं चेदं पक्षद्वयमपि भाष्यकैयटयोः'—इति ख. पाठः।

१ कर्त्तृकर्मद्वारा क्रियापदेनैवाऽन्वयाऽर्हम्' इति ख. नास्ति।

२ 'क्रियया एवेति भावः' ख. पाठः।

कर्त्तृकवर्त्तमानकालयुजिक्रियाऽभाव एकाऽर्थीभावेन बोध्यते । 'अतिनिद्र-मासीदि'त्यादौ तथाऽव्यवहारविषये 'अतिनिद्र'पदस्य लक्षणेत्याहुः ।

इतिहरीति । 'हरि'शब्दः स्वरूपपरः । तेन षष्ठ्यन्तेन शब्द-प्रकाशाऽर्थकेतिः समस्यते । 'हरिस्वरूप-शब्द-प्रकाश' इति बोधः ।

भाष्यप्रयोगादिति । 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्वपश्चादि'ति-भाष्यप्रयोगोऽपीह मानम् । अस्माद्भाष्यप्रयोगात्, 'सादृश्यसम्पत्तीति प्राप्नोती'ति 'यथाऽसादृश्ये' इतिसूत्रस्थभाष्याच्च एतत्सूत्रगृहीताऽव्ययेन नाऽयं समास इति तत्त्वम् । 'यथाशक्ती'त्यत्र तूत्तरसूत्रेण समास इत्याहुः ।

योग्यतेति । तत्राऽऽद्यत्रये 'यथा'शब्दोऽव्युत्पन्नं प्रातिपदिकम् । चतुर्थे प्रकारवचने थाल्न्त इति 'यथाऽसादृश्ये' इति सूत्रे भाष्ये स्पष्टम् ।

प्रत्यर्थमिति । द्योतकानां समुच्चयस्याऽपि दृष्टत्वेन वाक्ये 'प्रति'शब्द प्रयोगो, द्वित्वं च न विरुध्यते ।

ननु नित्यसमासत्वाद्वाक्यं दुर्लभमत आह—प्रतिशब्दस्येति । इदं भाष्यादर्शाद्यनुरोधेन । परं त्विदमयुक्तम्, 'प्रतिस्तवनं' 'प्रतिस्थानमि'-त्यादा षत्वाऽभावसम्पादनेन तस्याश्चारितार्थ्यात् । तस्मादर्थमर्थं प्रति प्रत्यर्थमिति सरूपसूत्राऽऽदिस्थभाष्यप्रयोगाद्वीप्सायां समासस्याऽनित्यत्वं

---

१ 'प्रतिशब्दस्येति । 'अर्थमर्थं प्रतिप्रत्यर्थमि'ति सरूपसूत्राऽऽदिस्थभाष्य-प्रयोगादप्यत्र समासस्याऽनित्यत्वं बोध्यम् । नन्विदमयुक्तम्, 'प्रतिस्तवनं' 'प्र[ति]स्थानमि'त्यादौ षत्वाऽभावसम्पादनेन तस्याश्चारितार्थ्यात् । किञ्च 'समया ग्राममि'तिवत्तत्सामर्थ्यात्समासबाध एवोचित इति चेन्न । कार्यकालपक्षे 'कर्मप्रवचनीययुक्ते द्वितीये'त्यत्र वीप्साविषयप्रतेः कर्मप्रवच-नीयसंज्ञाया यदुपस्थानं, तत्सामर्थ्येनेत्याशयात् । 'किञ्चे'त्यादि च न । 'प्रत्यर्थमि'त्यादिसमस्तभाष्यप्रयोगाऽनुपपत्तेः । पर्यादियोगे तु प्रागुक्तरीत्या समासाऽभाव एव । विकल्पस्याऽयुक्तत्वात् । एतेन 'प्रतेरेवोपन्यासे पर्यादीनां च त्यागे बीजं चिन्त्यमित्यपास्तम्' इति ख. घ. ङ. पाठः ।

बोध्यम्। हरदत्तस्तु 'नाऽत्र वाक्येऽव्ययं वीप्सावृत्ति, किन्तु कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति। वीप्सा तु द्विर्वचनद्योत्ये'ति प्राह।

हरेः सादृश्यमिति। 'हरि टा सहे'त्यलौकिकं वाक्यं बोध्यम्।

वक्ष्यमाणेनेति। 'अव्ययीभावे चे'त्यनेन। अत्रैव तत्सूत्राऽलेखने हेतुश्चिन्त्यः। प्राचामनुरोधेन वा।

'अनुज्येष्ठं प्रणमति' 'अनुज्येष्ठं कार्यं कृतमि'त्यादौ करणत्वेनाऽन्वयात्परिनिष्ठितविभक्त्या समासमभिप्रेत्याऽऽह—ज्येष्ठस्याऽऽनुपूर्व्येणेति। आनुपूर्व्यं—क्रमः। 'पूर्वक्रमेणेत्यनुपूर्वमि'त्ययमेव समासः। अत एव सूत्रगृहीताऽव्ययेनाऽपि अनुनाऽत्र समासो भवत्येव। युगपच्छब्देन तु न समासः, सूत्रगृहीतत्वात्। [2]'यौगपद्यमि'ति च स्वार्थे ष्यञ्। तद्ध्वनयन्नाह—चक्रेण युगपदितीत्याहुः।

गुणभूतेपीति। अन्यथा यत्र सादृश्यं प्रधानं तत्रैव स्यात्। अव्ययाऽऽर्थप्राधान्यस्याऽव्ययीभावे औत्सर्गिकत्वात्। एवं च 'सादृश्ये' इति स्वार्थे ष्यञीति भावः। सम्पत्ति-समृद्ध्योः पर्यायत्वमाशङ्क्याऽऽह—ऋद्धेरिति। धनधान्यादेरित्यर्थः।

अनुरूप इति। योग्य इत्यर्थः। आत्मभावः। आत्मनः = समस्यमानो-

---

१ इतोऽग्रे—'केचित्तु षष्ठ्यन्तेनाऽपि समासः। 'सहयुक्ते' इत्यत्र प्रसिद्धतया साहित्यविद्यमानत्ववाचिनः 'सह' शब्दस्यैव ग्रहणात्। परत्वेन 'तुल्यार्थैरि'त्यस्य न्याय्यत्वाच्चेत्याहुः' इति ख. घ. ङ. पाठः।

२ 'यौगपद्यमिति' इत्यारभ्य 'इत्याहुः' इत्यन्तः पाठो ग. नास्ति।

३ इतोऽग्रे—'गोबलीवर्दन्यायेन 'यथाऽर्थ'शब्देन त्रयाणामेव ग्रहणं, न सादृश्यस्य। 'सदृशी'त्यादेस्तु सादृश्यवाचकस्य [illegible] लक्षणे'ति पूर्वे। अत एव 'यथाऽसादृश्ये' इति सूत्रे भाष्ये 'स[illegible]सम्पत्त'ति मात्रस्य निषेध इत्युक्तम्' इति ख. पाठः।

त्तरपदस्य, भावः = प्रवृत्तिनिमित्तं, क्षत्रत्वादिः, सम्पत्तिरित्यर्थः । 'सक्षत्रमि'त्यत्र क्षत्रियाणां योग्यं क्षत्रत्वमित्यर्थः ।

तृणमपीति । 'साकल्यबोधकाऽव्ययेन समास'इति सूत्राऽर्थः । तत्र समस्यमानपदार्थसाकल्यबोधकस्याऽभावात्[1]समभिव्याहृतक्रियाकर्मसाकल्य-बोधकेन समासः । तत्र 'सह'शब्दयोगे तृतीयाऽन्त'तृण'शब्देन समासः । तत्र यद्यपि 'तृणेन सहे'ति प्रयोगाऽर्हमेव, तथाऽपि साहित्य-मात्रविवक्षायां तथा । साकल्यस्याऽपि विवक्षायान्तु नित्यः समासः । अत एवाऽस्वपदविग्रहो दर्श्यते-तृणमप्यपरित्यज्येति । एवमन्यत्राऽपि बोध्यम् । 'पराऽवरयोगे चे'ति क्त्वा । अदनक्रिया-तृणाऽपरित्यागयोर्बौद्धं पौर्वापर्यम् । तादृशमेव च सामानाधिकरण्यं सम्बन्ध इति बोध्यम् । तृणाऽपरित्यागकथनेन हि सकलमभ्यवहार्यं भुङ्क्ते इति प्रतीयते । 'यस्तृणानि भक्षयेत्कथमन्यत्स परित्यजेदि'ति प्रतीतेः । अत एवाऽत्र समस्य-मानपदार्थस्याऽदनादिक्रियाऽन्वये न तात्पर्यम् । तदाह—न त्वत्रेति । 'उत्तरपदं साधुत्वमात्राऽर्थम् । 'सकलमत्ती'त्येव बोधः[2] । यद्वोत्तरपदस्य[3] समभिव्याहृततत्तत्क्रियाकारके लक्षणा तत्तद्रूपेण । तेन सकलमाद्यमत्तीति बोध' इति परे ।

अग्निग्रन्थेति । 'अग्नि'शब्दस्तत्प्रतिपादकग्रन्थे वर्त्तते । तृतीयान्तेन समासः । यद्यपि 'अग्निना सहे'ति प्रयोगाऽर्हमेव, तथापि साहित्यमात्रे तथा । अन्तत्वस्याऽपि विवक्षायान्तु समासो नित्यः । अत एव 'अग्निग्रन्थपर्यन्तमि'त्यस्वपदविग्रहो दर्शितः । 'अग्निग्रन्थपर्यन्तमि'ति बहुव्रीहौ द्वितीयान्तम् । ग्रन्थोऽन्यपदार्थः । 'तदानीमध्येयत्वेन परिगृही-तस्य हि सोऽन्त्यो, न तु तत्परेणाऽध्ययनं नास्ती'ति । अत एव साकल्यात्

---

१ 'साकल्यद्योतकस्याऽसम्भवात्' घ. ङ. पाठः । 'असम्भवात्' ख. पाठः ।

२ 'बोध इत्यपि कश्चित्' ख. घ. ङ. पाठः ।

३ 'यद्वा' इत्यारभ्य 'परे' इत्यन्तः क. ग. पाठः ।

पृथगुक्तिः । 'अधीते' इति क्रियायास्तु न समासमध्येऽन्तर्भावः। मानाऽभावात् । अन्ते समासविधानेनैवाऽन्त्यत्वम् । साहित्यं च 'सह'शब्दाऽर्थ इत्यवसीयते। इदमेव ध्वनयितुं 'सहित'शब्दघटितविग्रहमपहाय 'पर्यन्त'शब्दघटितविग्रहो दर्शितो मूले । 'अन्त्याऽग्निग्रन्थसहितमि'[2]ति बोधः । निःक्रियवाक्यस्याऽयोग्यत्वादधीते इति क्रियोपादानम्।

न चाऽधीते इत्यर्थे 'तदधीते' इत्यणप्रसङ्गः। वैकल्पिकत्वात्। अणपक्षे तु 'सर्वादेः सादेरि'त्यनेन लुकि, 'साऽग्निरि'ति श्रूयमाणविभक्त्यन्तमेव। न च 'अव्ययादाप्सुप' इति लुक्। गौणत्वेनाऽनव्ययत्वादित्याहुः।

यथाऽसा। असन्देहाय 'सादृश्ये यथे'ति वक्तव्ये, विपरीतोच्चारणादकारप्रश्लेष इत्याशयेनाह–असादृश्य एवेति । तत्रैव वर्त्तमान इत्यर्थः। एवं चाऽव्युत्पन्नस्यैव योग्यतावीप्साद्यर्थस्याऽत्र सूत्रे ग्रहणमिति स्पष्टं भाष्ये[3]।

तथा हर इति । ननु[4] सादृश्यवाचकत्वात् 'तथा'शब्देन समासो दुर्वार इति चेन्न । सादृश्यप्रतियोगिवाचकेनैव तद्द्योतका-

---

१ इतोऽग्रे 'यद्यप्येवंरीत्या'अग्निरन्तोऽस्ये'ति प्राचीनविग्रहेऽपि न दोषः, तथाऽपि 'प्रथमान्तेन समास' इति तदीयवाक्यशेषोऽसङ्गतः। सहयोगे तृतीयाया एव न्याय्यत्वात् । एतेन 'अग्नेरन्तत्वमि'ति विग्रहः, 'षष्ठ्यन्तेन समास' इत्यपास्तम्' इति ख. पाठः ।

२ 'अन्त्याऽग्निग्रन्थसहितमिति बोधः' इति क. ग. पाठः ।

३ 'ग्रहणमिति बोध्यमिति स्पष्टं भाष्ये' इति ख. पाठः ।

४ 'ननु सादृश्यवाचकत्वेन यथार्थत्वात् तथाशब्देन समासो दुर्वार इति चेन्न । यथाऽर्थत्वेन यथाशब्दसदृशस्योपमानाऽन्विताऽर्थप्रतिपादकस्यैव ग्रहणात्। एतेन 'सादृश्यग्रहणात्समासः स्यादि'त्यपास्तम् । पूर्वसाहचर्येण सादृश्यप्रतियोगिवाचकेनैव तद्द्योतकाव्ययस्य समासात्' इति ख. पाठः, क. कुण्डलितः ।

ऽव्ययस्य[1] समासात् । उपमानं तु सादृश्यप्रतियोग्येव । तदाह—हरेरुपमानत्वमिति । सादृश्यप्रतियोगित्वमित्यर्थः । द्योतयतीति । यद्यपि 'यथाशब्दः सादृश्ये वर्त्तते' इति भाष्याद्वाचकत्वमेव लभ्यते, तथाऽपि तत्र 'वर्त्तते' इत्यस्य 'द्योतकतये'ति शेषः ।

अत्रेदं बोध्यम्—'सामान्यस्य भेदको यो विशेषस्तद्रूपप्रकारे थालि'ति 'यद्विशेषवान्हरिस्तद्विशेषवान्हर' इति बोधे, यत्तच्छब्दाभ्यां तयोरेकत्वाऽवगमेऽर्थात्सादृश्यप्रतीतिरिति । तदेतत्सर्वं 'द्योतयती'त्युक्त्या ध्वनितम् । सादृश्यस्य यथाऽर्थत्वोक्तिरप्येतावतैव । किञ्च यथाशब्दः किम् इवाऽऽदिवत्सादृश्यबोधक, उत यत्पदार्थनिरूपितसादृश्यबोधकः ? । नाऽऽद्यः । 'तथे'त्यस्य प्रयोगाऽनापत्तेः । नाऽन्त्यः । 'यत्सदृशो हरिस्तदृशो हर' इति बोधेऽपि, 'हरिसदृशो हर' इति बोधाऽनापत्तेरिति दिक् ।

यावदव । अवधारणं-सङ्ख्यादिना इयत्तापरिच्छेदः । तद्द्योतकं 'यावदि'त्यव्ययं समस्यते । अत एव तद्धितान्तेनाऽस्वपदविग्रहः । 'श्लोकपरिमाणपरिच्छिन्नाः प्रणामा' इति बोधः । अवधारणे किम् ? । यावद्दत्तं तावद्भुक्तम् । कियद्दत्तं[2], कियद्भुक्तं वा, नाऽवधारयामीत्यर्थः ।

सुप् प्रति । 'मात्रा' 'बिन्दुः', 'स्तोकमि'त्यल्पपर्यायाः । 'तन्त्राऽर्थे वर्त्तमानप्रतिना सुबन्तं समस्यते' इत्यर्थः । पुनः सुब्ग्रहणम् अव्ययाऽधिकारनिवृत्त्यर्थम् । अन्यथा 'दोषामन्यमहः''दिवामन्या रात्रिरि'ति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाऽव्ययान्येव मात्राऽर्थप्रतिना समस्येरन्नित्याहुः । वृक्षं प्रतीति । आभिमुख्यमात्रे, प्रातिकूल्येवाऽत्र प्रतिः । प्रतियोगे चेयं द्वितीया ।

अक्षशला । 'अक्षशलाकाशब्दौ, सङ्ख्या च, परिणा समस्यन्ते' इत्यर्थः । द्यूतेति । तथा च भाष्यं-'कितवव्यवहारे' इति वाच्यम् । 'पराजये

---

१ 'तद्द्योतकाऽव्ययस्य तेन समासात्' इति क. पाठः ।

२ 'कियद्दत्तम्' इति पाठः क्वाऽपि न दृश्यते ।

पञ्चे'ति। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः, शलाकाभिर्वा भवति, तत्र यदि सर्वे उत्ताना, अवाञ्चो वा, तदा पातयिता जयति, अन्यथा तु जीयते। विपरीतवर्त्तने कर्त्तृत्वेनाऽक्षादिभिः तृतीयान्तैः समासः। विपरीतवर्त्तनं पर्यर्थः। वैपरीत्यं च जयकालिकवृत्ताऽपेक्षया बोध्यम्। तच्च पराजयरूपमेव। एकवचनान्तेनैवाऽयं समासो, न त्वक्षाभ्यां विपरीतं वृत्तमित्याद्यर्थे, अनभिधानात्। स्पष्टं चेदं सर्वं भाष्ये। तद्ध्वनयन्नाह—अक्षेणेति। न च समासे सङ्ख्याविशेषस्याऽभानात्कथं द्विवचनाद्यन्तेन समासाऽऽपादनम्। 'भवद्भिरामवसरप्रदानाये'तिवत्प्रकरणादिना द्वित्वाद्यवगमे दोषाऽऽपत्तेः। प्रकृते च भाष्यादिप्रामाण्येनैकत्वसङ्ख्याया भानम्। एकपरीति। 'पञ्चपरी'ति तु न, पञ्चानामेकजातीयपाते जयस्यैव सम्भवात्।

विभाषा। नन्विदं व्यर्थम्, सामर्थ्यस्यैकार्थीभावस्यैव ग्रहणेन, तत्र समासस्य, व्यपेक्षायां वाक्यस्य च सिद्धत्वात्। न चैकार्थीभावे एव समासविकल्पार्थमेतत्। भाष्यविरोधात्। तदुक्तं 'न हि संज्ञाया भावाऽभावाविष्येते'। 'न ह्येकार्थीभावे कदाचिदपि संज्ञाऽभाव इष्यते' इति तदर्थः। न च सामर्थ्यस्यैव विशेषणं 'वा'वचनम्। एकार्थीभावरूपसामर्थ्यस्य स्वाभाविकत्वनये लोकसिद्धस्यैवाऽनुवादेन समासविधानात्तस्याऽविधेयतया, विशेषणतया च, तद्विशेषणत्वाऽसम्भवात्। एवं समासनिषेधसूत्राणि, 'नित्यं क्रीडे'त्यत्र 'नित्य'ग्रहणं च व्यर्थम्। निषेधविषये एकाऽर्थीभावस्यैवाऽभावेन, समासाऽप्राप्तेः। नित्याऽधिकारविषये व्यपेक्षाऽभावेन, वाक्याऽप्राप्तेश्च। 'वावचनाऽऽनर्थक्यमि'ति भाष्यन्तूपलक्षणमिति चेन्न।

लक्षणैकचक्षुष्कैर्लोकस्वभावमजानद्भिः कैकार्थीभावो नित्यः, क पाक्षिकः, क नास्त्येवेत्यर्थस्य ज्ञातुमशक्यत्वेन, तद्बोधनाय तेषामावश्यकत्वात्।

---

२ 'विपरीतवर्त्तनं पर्यर्थः' इति ग. नास्ति। क. तु पश्चाद् वर्द्धितम्। 'विपरीतवर्त्तनं च पर्यर्थः' इति ख. पाठः।

लोकसिद्धशब्दस्वरूपबोधनायेव, तादृशाऽर्थव्यवस्थाबोधनायाऽप्याचार्य-व्यापारस्याऽऽवश्यकत्वात् । भगवता तु अर्थाऽभिधानस्य स्वाभाविकत्वपक्षे लक्ष्यैकचक्षुष्कदृष्ट्या वैयर्थ्यमुक्तम् । इदमेवाऽभिप्रेत्य 'समर्थानामि'ति-सूत्रेऽनयैव रीत्या वाग्रहणाऽऽनर्थक्यमाशङ्क्य, 'कर्त्तव्यं च वावचनम् । किं प्रयोजनम् ? । नित्याः शब्दाः । नित्येषु शब्देषु वाक्यस्य साधुत्व-मनेनाऽन्वाख्यायते' इत्युक्तम् । एवं च तुल्यन्यायत्वादस्याऽपि तदेव फलं भवतीत्युक्तम् । एवं च विशेषणीभूतैकार्थीभावस्यैव विकल्पाऽऽदिबोधकानि विभाषाधिकाराऽऽदीनीति बोध्यम् । अत एव 'पारेमध्ये' इति सूत्रे 'एकया वृत्तिर्विभाषा, अपरया वृत्तिविषयेऽनित्योऽपवाद' इत्युक्तं सङ्गच्छते । तत्र वृत्तिरेकार्थीभावः । वृत्तिवर्त्तनवादिनां मते तु सार्थक्यं स्पष्टमेव ।

एतत्सामर्थ्यादिति । अत्रैतत्करणात्प्राक् तदसम्बन्धेन, टि-घु भादि-संज्ञावत्तस्याः अपि नित्यत्वमिति भावः । एवं च तद्विषये नित्यमेवैकार्थी-भावः, विकल्पकल्पकाऽभावात् ।

नन्वेवं 'सुप्सुपे'त्यस्याऽपि नित्यताऽऽपत्तिः तथा च 'पूर्वं भूतो भूत-पूर्व' इत्यादिविग्रहाऽसङ्गतिरत आह—सुप्सुपेति त्विति । अयं भावः—योगविभागेनैव समासे, तदनुवादेनैवाऽव्ययीभावाऽऽदिसंज्ञाविधानेन च सिद्धे, पुनस्तैः समाससञ्ज्ञाविधानं तस्याऽनित्यसमासत्वं ज्ञापयति ।

नन्वव्ययमित्यादिभिः पुनस्तद्विधाने मानाऽभावः । किन्तु[1] 'सुप्सुपे'-ति सिद्धसमासाऽनुवादेनाऽव्ययीभावादिसंज्ञामात्रविधानम् । 'प्रथमा-निर्दिष्टमि'त्यत्र 'समासे' इत्यस्य समाससम्बन्धिशास्त्रलक्षकतया-ऽव्ययादीनां, 'सुप्सुपे'ति समासे, 'वाप्यश्च' इत्यादौ वाप्यादीनां चोप-सर्जनत्वसिद्धेः । सम्बन्ध उद्देश्यत्वं, विधेयत्वं च । न च समासोद्देश्यक-समासान्तादिविधौ प्रथमानिर्दिष्टस्याऽपि तत्त्वाऽऽपत्तिः । तद्विधौ तथा

---

१ 'किन्तु' इत्यारभ्य 'संज्ञामात्रविधानम्' इत्यन्तः क. ग. पाठः ख. नास्ति ।

निर्दिष्टाऽभावात् । 'अनन्तरस्ये'ति न्यायेन तदग्रहाच्चेति चेन्न । एवमपि 'उपपदमतिङ्' 'कर्त्तृकरणे कृता' 'आख्यातमाख्यातेने'त्यादावुद्देश्याऽप्रसिद्धेः । एकत्वविवक्षादिना स्यादिपदघटितसमासस्य बहुव्रीहावुद्देश्यत्वाऽलाभाच्च । अतस्तेषु समाससंज्ञाविधानस्याऽऽवश्यकत्वेनाऽर्थाऽधिकाराऽनुरोधेन सर्वत्र तस्य विधेयसमर्पकतया तद्विधानस्य तात्पर्यग्राहकत्वं तत्रे-

---

१ 'अनन्तरस्येतिन्यायेन तदग्रहाच्च । न च १ 'समासः सह', २ 'सुपा', ३ 'अव्ययीभावः' इत्येव न्यासः कार्यः । तत्राऽऽद्ये 'समर्थमि'त्यनुवर्त्तते । 'समर्थं केन चित्सह समस्यते' इत्यर्थः । इदं चोत्तरसूत्रेपूद्देश्यसमर्पणाऽर्थं, लक्ष्याऽनुरोधेन क्वचित्प्रवृत्त्यर्थम् । 'सुपे'ति चाऽधिकारसूत्रम् । अव्ययीभावादिसंज्ञाविधायके स्वरितत्वबलादनुवृत्तं समासपदमुद्देश्यसमर्पकमेव । तस्य सिद्धत्वात् । एतेन 'सुपे'ति विभक्ते 'सुबि'त्यनुवर्त्तनात्'उपपदमतिङ्' 'कर्त्तृकरणे कृता' 'आख्यातमाख्यातेने'त्यादावुद्देश्याऽप्रसिद्धिः । एकत्वस्य विवक्षितत्वात् स्यादिपदघटितसमासस्य बहुव्रीहावुद्देश्यत्वाऽलाभश्चे'त्यपास्तम् । अनुवादबलेनाऽन्यपदार्थाद्युपसंक्रमविषये एकत्वस्याऽविवक्षाकल्पनाच्च । एवं सिद्धे विशिष्टाऽवधिपरिच्छिन्नाऽधिकारबोधकगुरुभूत'प्राक्कडारात्समास' इतिन्यासेन समासपदस्य वाक्यभेदेन विधेयसमर्पकत्वबोधनान्न दोषः । 'प्राक्'ग्रहणसामर्थ्याच्चाऽव्ययीभावाऽऽदिविधावुद्देश्यत्वमपि । तेन समावेशसिद्धिरिति वाच्यम् । अस्य नित्यत्वेऽपि 'अपपरी' इत्यादिविषये पक्षे वाक्यसिद्धये तत्र वैकल्पिकसमासविधायकतया तस्य चारितार्थ्यात् । न च विभाषाऽधिकारादव्ययीभावविकल्पेनैव वाक्यसिद्धिः । समासत्वे सत्येवाऽव्ययीभावसंज्ञाविकल्पेन तत्कार्यविकल्पाऽर्थं चारितार्थ्यादिति चेन्न ।

अर्थाऽधिकाराऽनुरोधेन 'अव्यय'मित्यादावपि तस्य विधेयसमर्पकतया, तद्विधानस्य तत्र तात्पर्यग्राहकत्वात् । एवमव्ययमित्यादिसमासविधानस्यैतद्वैकल्पिकतायां तात्पर्यग्राहकत्वे स्थिते, 'अपपरी' इत्यादौ वाक्यभेदेन समासविधानमप्यर्थाधिकारनिर्वाहाऽर्थमेवेति दिक्' इति ख. पाठः ।

त्याशयात् । 'प्राक्कडारादि'तिसूत्रे, 'सुप्सुपे'त्युदाहरणभूते 'विस्पष्टपटुरि'-त्यत्र 'विस्पष्टं पटुरि'ति भाष्ये विग्रहप्रदर्शनाच्चाऽस्य वैकल्पिकत्वं बोध्यम् ।

आङ् मर्यादा । अत्र 'आङ्' इत्येव सूत्रयितुमुचितम् । 'पञ्चम्ये'ति हि वर्त्तते । आङा च कर्मप्रवचनीयेनैव योगे पञ्चमीविधानेनाऽतिप्रसङ्गाऽभावात् । आङश्च एतयोरेवाऽर्थयोः कर्मप्रवचनीयत्वात् । 'आङ्मर्यादावचने' इति सूत्रे ऽभिविधि'ग्रहणं पाठ्यमित्याहुः । ('आ च भूगोलकमि'ति किरणावलीप्रयोगस्तु प्रामादिकः । समासमध्ये 'च'प्रयोगाऽसम्भवात् । तदभावे 'भूगोलकादि'त्येवोचितमि'ति केचित् । अन्ये तु 'ऋते'योगे इवाऽऽङ्योगेऽपि 'अन्येभ्योऽपि दृश्यते' इति द्वितीयाऽपीति न दोष इत्याहुः) ।

लक्षणेनाऽभि । अभ्यग्नीति । अत्राऽभि-प्रती आभिमुख्ये वर्त्तेते, अग्निपदस्य ज्ञापकत्वविशिष्टे लक्षणायां, तेन सम्बन्धेनाऽन्वये वा तात्पर्यग्राहकौ च । 'ज्ञापकमग्निमभिमुखीकृत्य शलभकर्त्तृकं पतनमि'ति बोधः । 'अग्न्यभिमुखं तज्ज्ञाप्यं तत्कर्त्तृकं पतनमि'ति वा । अग्नेर्द्वेधाऽन्वयेऽपि स एव तात्पर्यग्राहकः । आद्ये षष्ठी । अन्त्ये द्वितीया । कर्मप्रवचनीयद्योत्यसम्बन्धेनाऽन्वये एव द्वितीयाप्राप्तेः । तस्य प्रकारत्वे तु षष्ठीतिबोध्यम् ।

लक्षणेनेति किम् ? । 'स्रुघ्नं प्रतिगत' इति । स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः । आभिमुख्ये किम् ? । 'अभ्यङ्का गावः' 'प्रत्यङ्का

---

१ ख. ब. ङ. पाठोऽयं, क. ग. नास्ति ।

२ 'अभ्यग्नीति । 'अभि'रभिमुखीकृत्येत्यर्थोपस्थितौ तात्पर्यग्राहकः, अग्निशब्दस्य ज्ञापकत्वविशिष्टाऽग्निलक्षणायां च । एवं च 'शलभकर्त्तृकं ज्ञापकमग्निमभिमुखीकृत्य पतनमि'ति बोधः । अभिमुखीकरणक्रियाकर्मत्वादेव वाक्ये 'अग्निमभी'त्यादौ द्वितीया । यदा तु पतेरभिमुखपतनलक्षणायामभिस्तात्पर्यग्राहकोऽग्नेश्च तत्राऽन्वयस्तदाऽभिमुख्याऽन्वयमादाय शेषे षष्ठ्येव । द्वितीया तु कर्मप्रवचनीययोगे विधीयमानतया उक्तसम्बन्धाऽर्थे प्राप्तायाः ष . या एव बाधिकेत्याहुः' इति ख. पाठः ।

गाव:' । अभिनव:, प्रतिनवश्चाऽङ्क आसामिति विग्रहः । अङ्कोऽत्र भवति लक्षणम । आभिमुख्यन्तु नाऽस्ति ।

नन्वव्ययाऽर्थप्राधान्येऽयं समासोऽन्वर्थत्वादित्युक्तम, तत्कथमिह प्रसङ्गः ? । सत्यम् । इह प्रकरणे बहुव्रीहिविषयेऽप्यव्ययीभावज्ञापनाऽर्थमिदम् । तेन 'सङ्ख्या वंश्येन' 'द्विमुनि व्याकरणमि'ति सिद्धमिति प्राञ्चः । तन्न । प्रत्यासत्त्या लक्षणत्वद्योतकाभ्यामेवाऽऽभ्यां समासेन, तत्र तदप्राप्तेः । 'वृक्षं प्रति विद्योतते विद्युदि'त्यत्राऽऽभिमुख्यद्योतनाऽभावे समासव्यावृत्त्यर्थं चारिताऽर्थ्याच्च । कर्मप्रवचनीयत्वन्तु पक्षे चरितार्थम् । अस्य समासस्य वैकल्पिकत्वात् । एतेन 'अभिप्रतीति किम् ? । 'येनाऽग्निस्तेन गत:' । 'येन देशेनाऽग्निर्गतस्तेन गत' इति प्रतीतेर्भवति गमनस्याऽग्निर्लक्षणम् । आभिमुख्यमप्यस्तीति 'येन''तेन'शब्दयोरग्निशब्देन समासापत्तिरि'ति निरस्तम । कारकाणां परस्परमन्वयाऽभावेन सामर्थ्याऽभावात्[1] । 'अग्नेः संमुखं शलभाः पतन्ती'त्यर्थे सांमुख्याऽर्थक'सं'शब्देन समासवारणेन चारिताऽर्थ्याच्चेति नव्याः ।

अनुर्यत् । 'लक्षणेने'ति वर्त्तते । 'यदि'ति सामान्ये नपुंसकं, द्वितीयान्तम् । 'समये'ति अधिकरणशक्तिप्रधानम् । एवं च 'यं पदार्थं समया[2] कश्चिदि'त्यर्थद्योतकोऽनुस्तेन वस्तुतो लक्षणभूतेनाऽनुः समस्यते' इत्यर्थः । तदाह—यं पदार्थमिति । 'यस्य समये'ति व्याख्यानन्तु चिन्त्यम् । 'समया'शब्दयोगे द्वितीयाया: षष्ठीबाधकत्वात् ।

([3]अनुवनमिति । अत्र वनशब्दस्य 'ज्ञापकवने'त्यर्थे लक्षणायामनुस्तात्पर्यग्राहकः, 'स्वनिरूपितसामीप्यवदधिकरणकत्व'सम्बन्धेन वनादेः क्रियाद्यन्वये च तात्पर्यग्राहकः । ज्ञापकत्वञ्च वनादेः समभिव्याहृतक्रियानिरूपितमेवाऽर्थात् ।

---

१ 'सामर्थ्याऽभावाच्च' ख. पाठः । २ यस्य पदार्थस्य समीपे इत्यर्थः ।

३ ख. पाठोऽयं, क. कुण्डलितः ।

'सूत्रस्वरसात् 'समीप' इत्यादिपदाऽध्याहारे तात्पर्यग्राहक' इत्यन्ये । एवं च समासाऽभावे 'वनस्याऽन्वि'ति षष्ठी । न च कर्मप्रवचनीयाऽन्वादियोगे द्वितीया दुर्वारा । कर्मप्रवचनीयद्योत्यसम्बन्धेनेतराऽन्वये एव तत्प्राप्तेः । ने चाऽत्र तथा । लक्षणत्वस्य वनविशेषणतया भानात् ।

केचित्त्वत्र लक्षणत्वं वस्तुसन्निमित्तम् । अत एव 'लक्षणेने'ति तृतीयान्तं सूत्रे उक्तम् । अन्यथा स्फुटत्वाय 'लक्षणे चाऽभिप्रती आभिमुख्ये' इत्येव वदेत् । एवं चाऽऽभिप्रत्योर्लक्षणद्योतकाऽभावस्य सूत्रकृता ध्वनितत्वात्कर्मप्रवचनीयसंज्ञायाः प्राप्तिरेव नाऽस्ति । 'अग्निमभी'त्यस्योपपत्तिस्तूक्तैवेत्याहुः ) ।

यस्य चायामः । आयामो-दैर्घ्यम् । अत्राऽपि 'लक्षणेने'ति वर्त्तते । यस्य दैर्घ्यमिति । यद्दैर्घ्यसदृशदैर्घ्यमित्यर्थः । तत्र गङ्गापदस्य ज्ञापकगङ्गाऽर्थकत्वे, स्वदैर्घ्यसदृशदैर्घ्यसम्बन्धेनेतराऽन्वये चाऽनुस्तात्पर्यग्राहकः । ( तद्बोधकपदाऽध्याहारो वा ) । यद्यपि वाराणसी स्वरूपेण ज्ञातैव, तथाप्यायामवैशिष्ट्येन ज्ञाप्या । अत एव 'किं प्रागायता वाराणसी, उत उदगायते'ति सन्देहे, इदं प्रयुज्यते । अत एव 'गङ्गाया अन्वि'त्यत्र षष्ठी । अयं च समास उपमानविधया ज्ञापकत्वे एव भवतीति ध्वनयन्फलिताऽर्थमाह–गङ्गादैर्घ्यसदृशेति । उपलक्षितेत्यस्य युक्तेत्यर्थः । ध्वनितं चेदं सर्वं भाष्यादौ ।

तिष्ठद्गु । चकार 'एव'काराऽर्थे । तेनैषां वृत्त्यन्तरे प्रवेशो न । तेन 'परमतिष्ठद्गु' इत्यादिन्ने'ति भाष्यम् । एवं च 'उत्कृष्टकेशाकेशी'त्यादि चिन्त्यम् । अत्र वृत्त्यन्तरं प्रकरणात्समासरूपमेव गृह्यते । 'आतिष्ठद्गु

१ 'न चेह तथा' ख. पाठः ।

२ 'ज्ञापकगङ्गालक्षकत्वे' ख. पाठः । ३ अयं ख. पाठः ।

४ 'तिष्ठतगु' इति सर्वत्र पाठः क. पुस्तके ।

५ 'अत्र वृत्त्यन्तरं प्रकरणात्समासरूपमेव गृह्यते इत्याहुः । केचित्त्वव्ययीभावव्यतिरिक्तसमासस्यैव वारणम् । अव्ययीभावस्तु भवत्येव । तेन 'आतिष्ठद्गु-

जपन्सन्ध्यां, पश्चिमामायतीगवमि'त्यादिभट्टिप्रयोगे 'आतिष्ठद्गु' इति पृथक् पदे। 'आयतीगवादि'ति पाठ इत्याहुः।

इह शत्रादेश इति। प्रथमासामानाधिकरण्यान्न प्राप्नोतीति भावः। यद्यपि 'पचन पुरुष' इत्यादिवत्सिद्धयति, तथाऽपि उपायस्योपायाऽन्तराऽदूषकत्वाददोषः। 'तिष्ठद्गु' इत्यत्र तु शत्रादेशमात्रम्।

इत्यादीति। वहद्गु। खलेयवम्। खलेबुसम्। सप्तम्यलुक् निपातनात्। लूनयवम। लूयमानयवम। पूयमानयवम्। संह्रियमाणयवम्। संह्रियमाणबुसम। खलेयवादयोऽन्यपदार्थवृत्तयः प्रथमान्ता एवेति स्पष्टं भाष्य-कैयटयोः[1]।

एते कालशब्दाः।

समभूमि। समपदाति। संभूमि। संपदाति। समंभूमि। समंपदाति। षण्णां 'समत्वं भूमेरि'त्यर्थः[2]।

'सु-वि-नि-दुर्भ्यः षमम्'। अपसमम्। समस्य शोभनत्वादीत्यर्थः। आयतीसमम्। शत्रादेशपुंवत्त्वाऽभावौ निपातनात्। आयतीसमा। संवत्सर इत्यर्थः। एवं-पापसमम्। पुण्यसमम्।

प्राह्ण-प्रमृग-प्ररथ-प्रदक्षिणेषु प्रगतत्वमह्न इत्यादि विग्रहः। प्रतिगतस्य सङ्गतत्वमित्यर्थे-'सम्प्रति'। विपरीतम्–'असम्प्रति'। 'इच् कर्मव्यतिहारे'। अयमेव द्विदण्ड्यादिष्विति[3], तस्याऽप्यव्ययत्वम्।

पारेमध्ये। पक्षे इति। अयं भावः—महाविभाषया ह्येकार्थीभावस्य पाक्षिकत्वं बोध्यते, वृत्तिश्चैकार्थीभावे नित्यैवेति, येन नाप्राप्तिन्यायेनाऽव्ययीभावस्तत्पुरुषं बाधेत, यथैकदेशिसमासः षष्ठीतत्पुरुषमिति,

---

जपन्सन्ध्यां, पश्चिमामायतीगवमि'त्यादिभट्टिव्याख्यात इत्याहुः। 'आतिष्ठद्गु'इति पृथक्पदे। 'आयतीगवादि'ति पाठ इत्यन्ये' इति ख.पाठः।

१ 'भाष्ये, कैयटे च' ख. पाठः।

२ 'भूमेरित्यर्थः' ख. पाठः।

३ 'द्विदण्डयादिष्वपीति' ख. पाठः।

पाक्षिकतत्पुरुषलाभाऽर्थं पुनर्वाग्रहणमिति । इदमेव च ज्ञापयति—'महाविभाषा विशेषणीभूतसामर्थ्यस्यैव विकल्पिके'ति ।

'सङ्ख्ये'त्यादित्रिसूत्री[1] स्वभावात्समानाधिकरणविषया । वंश इति । एकस्वभावः सन्तानप्रबन्धो वंश इत्याहुः । द्वौ मुनीति । पाणिनिकात्यायनौ । त्रिमुनि । भाष्यकृत्, तौ च । स्वपदार्थप्राधान्ये एवाऽयं समासः ।

नन्वेवं 'त्रिमुनि व्याकरणमि'तिसामानाधिकरण्यमनुपपन्नमत आह—विद्या तद्वतामिति । जन्मनोदाहरति—एकविंशतीति । एकविंशतिर्भरद्वाजा[2] वंश्या इति विग्रहः । ननु भरद्वाजशब्दादञो 'यञञोश्चे'ति लुक् प्राप्नोति, यथा 'गर्गाऽपत्यभूतानां गर्गाणां कुलमि'त्यर्थक'—गर्गकुलमि'त्यादाविति चेन्न । 'तृतीयासप्तम्योरि'तिसूत्रस्थभाष्यकारप्रयोगादेव लुगभाव इति हरदत्तादयः ।

नदीभिः । नन्विदमारम्भसामर्थ्यात्समानाधिकरणसमासमात्रबाधकम्, यद्वा पुरस्तादपवादन्यायेन 'पूर्वकालैके'त्यस्यैव बाधकम्, उभयथाऽपि 'एकनदीतर' इत्यत्राऽव्ययीभावे नपुंसकह्रस्वाऽऽपत्तिः । एकाऽपूपीवत् समाहारविवक्षायान्तु द्विगुत्वे नपुंसकह्रस्वत्वम्, उपसर्जनह्रस्वत्वं वा स्यादिति एकनदीतरो न सिद्ध्यतीत्यत आह—समाहारे चेति । तत्रैवेत्यर्थः । एवं च तदविवक्षायां 'पूर्वकाले'ति समासे तत्सिद्धिरिति भावः । न च तत्राऽपि 'गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदो'त्यच् दुर्वारः[3] । एतद्भाष्यप्रामाण्यात् तस्य'अच्प्रत्यन्ववे'तिसूत्रे 'अजि'तियोगविभागसिद्धत्वेन काचित्कतयाऽत्राऽप्रवृत्त्यङ्गीकारात् । अत्रेदं बोध्यम्,—इह संज्ञा-नदीस्वरूपयोर्न ग्रहणम्, बहुवचननिर्देशात् । किन्त्वर्थस्य । तद्वाचकाश्च

१ 'सङ्ख्या' इत्यारभ्य 'विषया' इत्यन्तः क. ग. पाठः ।

२ 'एकविंशति भरद्वाजाः' इति सर्वत्र निर्विसर्गः पाठो लभ्यते ।

३ इतोऽग्रे—'एतद्भाष्यप्रामाण्यात्तस्याऽव्ययीभाव एव प्रवृत्त्यङ्गीकारात्' इति ख. पाठः ।

सामान्यशब्दा, विशेषशब्दाश्च। सङ्कोचे मानाऽभावात्। तेन 'पञ्चनदम्' 'सप्तगङ्गमि'त्यादिसिद्धिरित्याहुः।

अन्यपदार्थे च। 'सङ्ख्ये'ति निवृत्तम्। 'नदी'ग्रहणमनुवर्त्तते। तदाह–सुबन्तं नदीभिरिति। संज्ञाऽनवगमादिति। 'संज्ञे'ति कर्मण्यङ्। तेन संज्ञिनो देशविशेषस्याऽनवगमादित्यर्थः। 'अन्यपदार्थाऽनवगमादि'ति नोक्तम्। 'यस्ये'त्यादिपदाऽन्तरसमभिव्याहारेण तत्प्रतीतेः। अत एव बहुव्रीहिर्न नित्यसमासः। तद्घटितमेव च तत्र वाक्यम्, न केवलवर्त्तिपदार्थघटितमिति भावः।

नित्यसमास इति। तत्सदृश इत्यर्थः। नैतावता 'वा' ग्रहणाऽसम्बन्ध इति भ्रमितव्यम्। तत्सादृश्यं समाससमानाऽर्थकवाक्याऽभावेन। विग्रहस्त्वस्त्येव समासघटकीभूतानां पदानाम्। अत एव 'द्वितीयतृतीये'तिसूत्रेऽन्यतरस्याङ्ग्रहणेन 'उत्सर्गाऽपवादयोर्महाविभाषया विकल्पविषयेऽपवादाऽभावे, उत्सर्गाऽप्रवृत्तिरि'त्यर्थे ज्ञापिते, 'उन्मत्तगङ्गमि'त्युदाहृतम्, 'अव्ययीभावेन मुक्ते बहुव्रीहिर्न भवती'ति चोक्तं सङ्गच्छते। [1]अस्याऽव्ययीभावस्य नित्यसमासत्वे 'तेन मुक्ते' इत्यस्याऽसङ्गतिः स्पष्टैव। एवमन्यत्राऽपि बोध्यम्। संज्ञायां किम्?। शीघ्रगङ्गो देशः।

समासान्ताः। अत्र 'समास'पदं तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरम्। एवम् 'अव्ययीभावा'दिपदान्यपि। तथा च 'गोस्त्रियोरि'त्यत्र भाष्यम्— 'कपि ह्रस्वत्वस्य प्रतिषेधो वक्तव्यः'। बहुकुमारीकः। न वक्तव्यः। कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वं न भविष्यति। 'इदमिह संप्रधार्यम्, कप् क्रियताम्, ह्रस्वत्वमि'ति। परत्वात्कप्। समाससामान्याऽपेक्षत्वादन्तरङ्गं ह्रस्वत्वम्। अन्तरङ्गतरः कप्। ननु चाऽयं कप् समासाऽन्त उच्यते। तादर्थ्यात् ताच्छब्द्यं भविष्यती'ति। 'न कपी'ति निषेधस्तु 'अनन्तरस्ये'ति न्यायात् 'केऽण' इत्यस्यैवेति तदाशयः।

---

१ 'अस्य' इत्यारभ्य 'स्पष्टैव' इत्यन्तः क. ग. पाठः, ख. नास्ति।

नन्विदं 'द्वित्रिभ्यां पाद्दन्मूर्धस्वि'तिसूत्रस्थभाष्येण विरुध्यते । तथाहि-यदि कृतसमासान्तमूर्धन्शब्दे पाद्दत्साहचर्यादस्य प्रवृत्तिस्तदा समासान्तस्य नित्यत्वान्नकारान्तस्य साधुत्वं, स्वरश्चोपसङ्ख्येयो भवति । यदि तु 'मूर्द्धस्वि'तिनिर्देशात्साहचर्यमनादृत्याऽकृतसमासान्ते प्रवृत्तिस्तदा कृते समासान्ते 'द्विमूर्द्ध' इत्यादौ स्वर उपसङ्ख्येयः । अकृतसमासान्तग्रहणे न दोषः । समासान्ताऽपेक्षया पूर्वं परत्वात्स्वरे कृते, टिलोपे, उदात्तनिवृत्तिस्वरेण सिद्धेरि'त्युक्तम् । तस्याऽयं भावः—ङचश्चित्त्वेन समासान्तविधायके 'आद्युदात्तश्च'त्यस्याऽसम्बन्धज्ञापनेन, पश्चाज्जातोऽपि समासान्तोऽनुदात्त एवेति । एतच्चं ज्ञापकमनुपदमेवोपपादयिष्यते । त्वद्रीत्या विग्रहवाक्ये एव समासाऽन्तप्रवृत्तेः, 'परत्वात्स्वर' इत्यसङ्गतं स्यात् । तस्मात्समासप्रवृत्त्युत्तरमेव समासान्ता इति चेन्न । पूर्वोक्तभाष्यविरोधेन तद्भाष्यस्यैकदेश्युक्तित्वात्[2] । प्रकृतसूत्रे समासस्यैव कार्यित्वमाश्रित्याऽकृतसमासान्तग्रहणेऽपि, कृतसमासान्तद्विमूर्धेऽनेनैव सूत्रेणेष्टसिद्धिसत्त्वाच्च ।

किञ्चैवम् 'अन्त' इतिसूत्रस्थभाष्यमसङ्गतं स्यात् । तत्र हि—'किं समासस्याऽन्त उदात्त, आहोस्विदुत्तरपदस्य ? । आद्ये 'इदम्प्रथमका' इत्यादौ 'कपि पूर्वस्योपसङ्ख्यानम्' । अन्त्ये– 'अनृच'इत्यादौ 'नञ्सुभ्यामि'त्यनेनाऽन्त्याऽकारस्योदात्तत्वाऽनापत्तिरि'त्युक्तम् । त्वद्रीत्या 'इदम्प्रथमका' इत्यादौ समासान्ताऽपेक्षया परत्वात् 'इदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने' इत्यनेन स्वरे, आद्ये दोषाऽभावात् । न च पूर्वं समासान्तप्रवृत्तौ, तत्सन्नियोगशिष्टाऽऽद्युदात्ते, तदेकवाक्यताऽऽपन्ने च पूर्वस्य निघाते कृते, पूर्वपदस्योदात्तस्वरितयोगित्वाऽभावेन, पूर्वपदप्रकृतिस्वराऽप्रवृत्तौ, ङचश्चित्त्वं व्यर्थमिति वाच्यम् । तत्सामर्थ्यादेव समासान्तविधौ 'आद्यु-

---

१ 'एतच्च ज्ञापकमनुपदमेवोपपादयिष्यते' इति क. ग. पाठः, ख. नास्ति ।

२ 'प्रौढिवादपरत्वात्' ख. पाठः ।

दात्तश्चे'त्यसम्बन्धस्य ज्ञापनात्। तेन 'समृद्धपुरो राजे'त्यादौ पूर्वपद-प्रकृतिस्वरसिद्धिः। 'समृद्धा पूर्यस्ये'ति विग्रह इति दिक्।

'अन्त'शब्दश्चरमाऽवयववाची, न समीपवाची। प्रत्ययपरत्वेनैव 'समासादि'ति न्यासेन सिद्धौ, तद्ग्रहणवैयर्थ्याऽऽपत्तेः। स च समुदाया-ऽवयवः। अत एव 'उपशरदमि'त्यत्र 'नाऽव्ययीभावा'दित्यम् सिद्ध्यति, 'अव्ययानाम्भमात्रे' इति टिलोपाऽभावश्च। पूर्वभागस्याऽव्ययीभावत्वा-ऽभावेनाऽनव्ययत्वात्। [2]केचित्तु 'समासाऽर्थविग्रहवाक्यस्थोत्तरपदलक्षणया उत्तरपदाऽवयवा' इत्यर्थः[3]। अत्र च मानं 'समासान्ता' इति सूत्रे— 'अन्त-ग्रहणं किमर्थम्?। अन्ताऽवयवो यथा स्यात्। प्रयोजनं-'द्विधुरी'[4]।

१ 'समृद्धा पूर्यस्येति विग्रहः। यद्यपि 'बहुकुमारीकेऽकृतव्यूहपरिभाषया ह्रस्वाऽभावः सुवचः। यथाऽऽगमे कृते तद्रहितस्य न प्रत्ययत्वादि, एवं समासान्ते कृते, तत्पूर्वभागस्य न समासत्व-प्रातिपदिकत्वादि, तथाऽपि 'विष्णोः पूर्विष्णुपुरमि'त्यादावकारान्तस्याऽन्तोदात्तत्वसिद्धये 'समासान्ता' इत्यादौ समासाऽऽदिपदानां लक्षणैवाऽऽश्रिता भगवता। अन्यथा हि पूर्वं समासे, परत्वात्स्वरे, ततो जायमानः समासाऽन्त उक्तरीत्या उदात्तः स्यात्। स्वरविधौ तु तत्परिभाषाया अप्रवृत्तिरायनादिसूत्रे उक्ता। इच-श्चित्त्वमप्येवं सति साऽर्थकं भवतीति दिक्' इति क. कुण्डलितः ख. पाठः।

२ 'केचित्तु 'समासान्ता' इत्यावर्त्तते। तत्रैकस्योक्तोऽर्थः। अपरस्य समासार्थ-विग्रहवाक्यस्थोत्तरपदलक्षणया' इति ख. पाठः।

३ इतोऽग्रे-'तयोश्च लक्ष्याऽनुरोधेन व्यवस्था। तत्राऽऽद्ये 'अन्त' इति सूत्रस्थं भाष्यं मानम्. 'अकारान्तोत्तरपदो द्विगुरि'ति वार्त्तिके 'उत्तर'पदग्रहणं च। तद्धि समासाऽन्ते प्रवृत्त्यभावाऽर्थम्। अत एव[1] 'द्विगुश्चे'त्यत्र 'पञ्चराजम्' 'पञ्चगवमि'ति भाष्ये उदाहृतम्। उत्तरव्याख्याने तु 'समासान्ता' इति सूत्रे-ऽन्तग्रहणं किमर्थम्' इति क. कुण्डलितः' ख. पाठः।

४ 'द्विधुरी' 'त्रिधुरी'ति' इति ख. पाठः।

1 'अत एव द्विगुश्चेति सूत्रादौ' इति ख. पाठः।

'द्विगोरि'ति ङीबि'ति भाष्यं मानम् । समासमात्राऽवयवत्वे अकारान्तोत्तरपदत्वाऽभावेनाऽस्त्रीत्वान्ङीपोऽप्राप्तेः । धूःशब्दस्य स्त्रीत्वात् परवल्लिङ्गतया स्त्रीत्वन्तु न । 'से नपुंसकमि'त्यनेन बाधात् ।

'अवयवाऽवयवः समुदायाऽवयव' इति समासाऽवयवत्वमपि । तेन उपशरदमि'त्यादावम्सिद्धिः । अत एव 'गोस्त्रियो'रितिसूत्रे 'तादर्थ्यात्ताच्छब्द्यमि'तिप्रतीकमुपादाय–'ततश्चाऽवयवाऽपेक्षत्वात्कपः, समुदायापेक्षो ह्रस्वो बहिरङ्ग' इत्युक्तमित्याहुः। तन्न । 'द्विधुरी'त्यादौ लोकतः स्त्रीत्वसिद्धेः। तदुक्तं–'लिङ्गमशिष्यं, लोकाऽऽश्रयत्वाल्लिङ्गस्ये'ति । अनेन 'लिङ्गप्रकरणस्य न नियमार्थत्वमि'ति बोध्यते । अत एव 'परवल्लिङ्गमि'तिसूत्रसत्त्वेऽपि 'द्विनावम्''अर्धखारमि'त्यादौ नपुंसकत्वसिद्धिः ।

किञ्चाऽकारान्तोत्तरपदो द्विगुरित्यत्रोत्तरपदग्रहणाऽसङ्गतिः । तद्धि 'पञ्चराजमि'त्यादौ समासान्तेऽप्रवृत्त्यर्थम् ।

किञ्चैवं सति-'अन्त' इति सूत्रे उत्तरपदस्य कार्यित्वे 'अनृच' इत्यादावन्त्याऽकारस्योदात्तत्वाऽनापत्तिरित्याशङ्क्य, 'नञ्सुभ्यां परमुत्तरपदं कपि परतोऽन्तोदात्तमि'त्यर्थक-'कपि पूर्वमि'ति ज्ञापकात् 'नञ्सुभ्यामि'त्यत्रोत्तरपदाऽसम्बन्ध इति समाहितं, तदसङ्गतिः ।

अपि च 'इदम्प्रथमका' इत्यादौ समासान्तोदात्तत्वे कप्युपसङ्ख्यानमिति च तत्रोक्तम् । त्वद्रीत्योत्तरपदान्तोदात्तत्वेऽपि तदावश्यकं स्यात् । तस्मादसङ्गत एवोत्तरपदाऽवयवत्वपक्षः । लिङ्गाऽतिरिक्तकार्यस्य तत्पक्षसाध्यस्याऽभावाच्च । 'गोस्त्रियोरि'तिसूत्रस्थकैयटस्त्वयुक्तः । 'तादर्थ्यात्ता-

---

१ 'स्त्रीत्वाऽभावेन' ख. पाठः ।

२ 'तस्य 'स नपुंसकमि'त्यनेन बाधादित्याहुः । अपरे तु द्विधुरीत्यादौ लोकतः स्त्रीत्वसिद्धेः । तदुक्तम्' इति ख. पाठः ।

३ 'तत्पक्षसाध्यस्य क्वाऽप्यदर्शनाच्चेति वदन्ति । तस्मात्समासान्तः समासप्रवृत्तेः' इति ख. पाठः ।

च्छब्दं भविष्यती'त्युत्तरेण 'येषां पदानां समासो, न तावत्तेषामन्यद्भवति, कथं तावत्प्रतीक्षते' इति भाष्येण विरोधात्। 'तेषामन्यत्समासो, न तावत्-प्रथमं भवति, यतः स तेषां कथं प्रतीक्षते' इत्यक्षरमर्यादया लभ्यते। तत्प्रतीक्षा च तस्य तदर्थवाक्ये प्रवृत्त्याऽन्तरङ्गत्वादिति ह्यर्थस्तस्य, न तु कैयटोक्तः, 'अन्त' इति सूत्रस्थभाष्यविरुद्धत्वादिति वदन्ति।

तस्मात् समासान्तः समासप्रवृत्तेः पूर्वमलौकिकवाक्ये 'बहु जस् गोमत् जसि'त्यस्यामवस्थायां प्रवर्त्तते। तत्राऽपि सुपः परस्तादेव। ततः पूर्वत्वे तु वाच्याऽर्थविरोधः। न हि सुप्रहितं समासाऽर्थं, किन्तु तद्विशिष्टमेव। न च विशिष्टस्य सुबन्तत्वाऽभावेन 'सुबन्तात्तद्धित' इति सिद्धान्तविरोधः। पूर्वत्वेऽपि समत्वात्। तेषामतिरिक्ताऽर्थाऽभावेन, 'परिपूर्णं पदं पदाऽन्तरेणाऽन्वययोग्यमि'ति न्यायस्य तन्मूलभूतस्याऽत्राऽभावाच्च।

एवं चैषु 'ङ्याप्प्रातिपदिकादि'त्यस्याऽप्यसम्बन्धः। तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वाऽभावात्[1]।

समुदायात्कपि, तन्निमित्तप्रातिपदिकत्वात्सुपोर्लुक्यपि, प्रत्ययलक्षणेन सुबन्तत्वात्समाससंज्ञा। सा च कबन्तस्यैव। 'सह'ग्रहणेन समुदायस्य[2] संज्ञितया, समासान्तस्य च तदवयवत्वेन, तद्ग्रहणेन ग्रहणात्। अत एव 'प्रत्ययस्थादि'ति सूत्रसंमते 'बहुचर्मिके'त्यादावापः सुपः परत्वाऽभावा-दित्त्वसिद्धिरिति दिक्।

अथाऽव्ययीभावेऽसाधारणसमासान्तानाह—अव्ययीभा। 'अव्ययी-भावे उत्तरपदतया वर्त्तमानं यच्छरदादि, तदन्ताट्टच्, स च समासस्या-ऽन्ताऽवयव' इत्यर्थः। 'राजाह' इत्यतष्टजनुवर्त्तते। 'अनन्तादव्ययी-भावादि'त्यादि वक्ष्यमाणन्तु फलिताऽर्थपरतया कथं चिन्त्येयम्।

---

१ 'प्रातिपदिकत्वाऽभावादिति बोध्यम्' ख. पाठः।

२ 'समुदायस्यैव संज्ञित्वेन' ख. पाठः।

'अत्र गणे ये झयन्तास्तेषां 'झय' इति विकल्पे प्राप्ते नित्यार्थः पाठ' इति केचित् ।

जराया इति—गणसूत्रम् । प्रतिपरेति च ।

प्रत्यक्षमिति । 'लक्षणेनाऽभिप्रती' इति समासः । अक्ष्णः परमिति । अविषय इत्यर्थः । 'अक्षि'शब्दो वृत्तिविषये इन्द्रियमात्रपरः । इन्द्रियाऽविषयमनुमानादिगम्यं 'परोक्षमि'त्युच्यते ।

नन्वव्ययाऽघटितत्वात्कथमत्राऽव्ययीभाव इत्यत आह—सामर्थ्यादिति ।

परस्यौकारेति । परशब्दस्य ओकारादेश इत्यर्थः । 'एकः पदान्तादि'ति पूर्वत्वम् । क्वचित्तु 'परस्य उकारादेश' इति पाठः । तत्र 'परस्याऽक्षिशब्दस्याऽऽदेरुकार' इत्यर्थः । 'आद्गुणः' । उपसर्जनस्याऽप्यक्षिशब्दस्य अत एव निपातनात्परनिपात इति बोध्यम् । 'परोक्षे लिडि'ति सूत्रे कैयटस्तु 'मयूरव्यंसकादित्वात्समासेऽव्ययीभावत्वाऽभावेऽपि, सामर्थ्यादयं प्रवर्त्तते । अत एवाऽस्य त्रिलिङ्गते'त्याह । तच्चिन्त्यम् । 'परोक्षा क्रिये'त्यत्र ङीबापत्तेः । (टित्त्वप्रयुक्तङीपोऽनित्यत्वं वा)[1] । 'अत्र गणसूत्रे परग्रहणं नास्त्येवे'ति पक्षाऽन्तरमपि तेन ध्वनितम् । भाष्यस्वरसोऽप्येवमेव तत्रेति बोध्यम् ।

अर्श आद्यचीति । धर्मपरादिति भावः ।

नदीपौ । इह स्वरूपस्यैव ग्रहणं, न संज्ञायाः । पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात् । उपनदीति । टजभावे नपुंसकह्रस्वः । 'गोस्त्रियोरि'ति वा ह्रस्वः । 'नदीभिश्चे'ति सूत्रोदाहरणभूते 'पञ्चनदमि'त्यत्र तु 'अच्प्रत्यन्ववे'ति योगविभागसिद्ध-'गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदी'त्यभियुक्तोक्तेर्नित्यमजेवेति बोध्यम् ।

पूजाऽर्थमिति । अन्ततरस्याङ्ग्रहणस्य प्रकृतत्वादिति भावः । ननु

---

१ अयं ख. पाठः, क. ग. नास्ति ।

'सेनक'ग्रहणं 'नदी'त्यादेर्व्यवस्थितविभाषात्वबोधनद्वारा, क्वचिन्नित्यतया प्रवृत्तिरित्यर्थकमावश्यकम्। अत एव च सङ्ख्यासंज्ञासूत्रस्थभाष्ये 'नदीपौर्णमासी'ति सूत्रे 'पौर्णमास्या'दिग्रहणसामर्थ्यान्न नदीसंज्ञकस्य ग्रहणम्। न च 'नदीभिश्चे'तिवद्विशेषाणां ग्रहणमपि स्यात्। शरत्प्रभृतिषु 'विपाट्'-शब्दपाठसामर्थ्यान्ने'त्युक्तं सङ्गच्छते। अस्य वैकल्पिकत्वे नित्यत्वाय पाठस्याऽऽवश्यकत्वाज्ज्ञापकत्वाऽसङ्गतिः स्पष्टैवेति चेन्न। तस्य सर्वमते पाक्षिकत्वं, गिर्यंशे तु सेनकमत एव टच्सत्ता, नाऽन्यमते इति स्वमताऽप्रच्युतिबोधनेन चरिताऽर्थस्य तस्य तत्राऽप्रमाणत्वात्।

तस्मात्प्रयोगाऽनुरोधात्, भाष्यप्रामाण्याच्चाऽवङ्गादीनामिव 'नदी'-त्यादेस्तत्त्वसिद्धिरित्याहुः।

केचत्तु सङ्ख्यासंज्ञासूत्रस्थभाष्यप्रामाण्यात् 'नपुंसकादि'ति-सूत्रस्थाऽन्यतरस्याङ्ग्रहणस्याऽस्वरितत्वमेव कल्प्यते। 'सेनक'ग्रहणन्तु विकल्पाऽर्थमेवेत्याहुः।

॥ इत्यव्ययीभावः ॥

[ इति श्रीनागेशभट्टविरचिते बृहच्छब्देन्दुशेखरे-अव्ययीभावसमासप्रकरणम् ] ।



'विकल्पार्थमेव। ध्वनितं चेदं मतं—'प्राग्दीव्यतमि'ति तु युक्तं, 'ञ्य' इति टच्प्रवृत्तेरि'ति 'प्राग्दीव्यतोऽणि'ति सूत्रस्थमनोरमायाम्। प्रकृतमूलन्तु वृत्त्याद्यनुरोधेनेत्याहुः' इति ख. पाठः। क. ग. नास्ति।

॥ श्रीः ॥

# बृहच्छब्देन्दुशेखरः ।

## अथ तत्पुरुषसमासप्रकरणम् ।

चकारबलेनेति । 'सङ्ख्यापूर्वः' 'द्विगुरि'ति योगं विभज्य, पूर्वेण सङ्ख्यापूर्वस्य 'तद्धितार्थे'त्यत्रोक्तस्य तत्पुरुषसंज्ञाविधानसामर्थ्यादेव पर्याये सिद्धे, चकारः समावेशाऽर्थ इति भावः ।

तत्र तत्पुरुषत्वे फलमाह—पञ्चराजमिति । तत्प्रयुक्तष्टजिति भावः । समासान्तानां समुदायाऽवयवत्वेनाऽकारान्तोत्तरपदत्वाऽभावात्स्त्रीत्वाऽभावः । द्विगुत्वे फलन्तु नपुंकत्वम् ।

द्वितीया । श्रितादिप्रकृतिकैरिति । श्रितादीनां सुबन्तत्वाऽसम्भवात्

---

१ इतोऽग्रे—'समासान्ता उत्तरपदाऽवयवा' इति पक्षस्तु काचित्क इति निरूपितम्' इति घ. पाठः ।

२ 'श्रितादिप्रकृतिकैरिति । सुपः प्रत्ययत्वेन तदाक्षिप्तप्रकृत्यंशं प्रति तेषां विशेषणतया तल्लाभ इति भावः । नन्वेवं काष्ठश्रितेयो न सिद्ध्यति । कदाचित् [1]श्रिताशब्दादपि टगापत्तेः । तस्मात्सुपेति नाऽनुवर्त्यम् । एवं च 'गतिकारकोपपदानामि'ति न्यायेन [2]सुबुत्पत्तेः पूर्वं समासे, ततो विशिष्टा-

---

1 'श्रितादिशब्दादपि' ख. घ. पाठः ।

2 'टाप्सुबुत्पत्तेः इति ख. घ. पाठः ।

तेषां तत्प्रकृतिके लक्षणेति भावः। 'येन विधिरि'तिसूत्रस्थभाष्यप्रामाण्येन सम्बुद्धिस्त्रीलिङ्गप्रथमान्तभिन्नेऽपि प्रवृत्तिरावश्यकीति तात्पर्यम्।

परे तु 'श्रितादिभिरत्राऽपि सुबुत्पत्तेः प्रागेव समासः। 'सुपे'ति चाऽत्र न सम्बध्यते। अत एव 'उपपदमतिङि'ति सूत्रे 'कुम्भकार' इत्यादौ 'षष्ठीसमासादुपपदसमासोऽन्तरङ्गत्वादि'त्युक्त्वा, 'अथवा विभाषा षष्ठीसमासो, यदा न सः, तदोपपदसमासो भविष्यती'ति भाष्ये उक्तम्। तस्याऽयं भावः-'गतिकारकोपपदानामि'तिपरिभाषायां, 'गतिकारकोपपदादि'तिस्वरविधायके च 'लक्षणप्रतिपदोक्त'परिभाषा न प्रवर्त्तते इति, षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव। स्वरश्च षष्ठीसमासेऽपि। एवञ्चोभयोः समत्वेनाऽन्तरङ्गत्वाऽभावेऽपि न क्षतिः। 'विप्रतिषेधे परमि'त्यस्याऽपि न

---

ह्यापि, 'श्रिते'त्यस्य स्त्रीप्रत्ययाऽन्तत्वाऽभावान्न दोष इति चेन्न। 'कर्त्तृकरणे' इतिवत्कारक-तद्विशेषयोरनुपादानेन 'गतिकारकोपपदानामि'त्यस्याऽप्राप्तेः। न च द्वितीयाशब्द एव तद्विशेषोपस्थापक इति वाच्यम्। द्वितीयात्वस्योपपदविभक्तिसाधारणत्वात्। किञ्च परिपूर्णार्थस्याऽभिव्यक्तपदार्थस्य पदान्तरेणाऽन्वयात्, परत्वाऽन्तरङ्गत्वाभ्यां चोत्तरपदे सुप् दुर्वार इति, तदननुवृत्तावपि सोः प्राक् समासो दुर्लभः।' अत एव 'आम' इति सूत्रे 'न कारयामि'त्यादौ नञ्समासमाशङ्क्य भाष्ये उक्तम्-'आमन्तस्याऽनभिव्यक्तपदार्थकत्वेनाऽसामर्थ्यान्न समास' इति। 'उपपदमतिङि'त्यादौ तु यथोत्तरपदे सुपो बाधस्तथा वक्ष्यते। 'देवः करोति' 'मातुः स्मरती'त्यादौ विशेषणसमासादिवारणाय 'सुपे'त्यस्योत्तरत्राऽनुवृत्तेरावश्यकत्वेन, मध्येऽसम्बन्धे मानाऽभावाच्च। तद्घटक'श्रिता'शब्दात्तु न कदाचिदपि ढक्। पूर्वपदेनैकार्थीभूतस्य तत्सापेक्षत्वेन, निष्कृष्टस्याऽपरयाद्यर्थान्वये सामर्थ्याऽभावाच्चेति केचित्। 'टिड्ढाणञि'तिसूत्रोक्तया तत्सूत्रस्थभाष्यसंमतरीत्या श्रिताशब्दादपि कदाचिड्ढकि, काष्ठश्रैतेयो भवत्येवेति तत्रैव निरूपितम्' इति क. कुण्डलितः ख. घ. पाठः।

प्रवृत्तिः । असम्भवरूपविप्रतिषेधाऽभावात् । तेनाऽनेन च तत्पुरुष-समास-सञ्ज्ञयोर्विधानम् । तच्च युगपदेवोभाभ्यां सम्भवति । तत्कृतैकार्थीभावस्याऽभावेऽपि, एतत्कृततत्सत्त्वमिति तदाशयः । 'तदोपपदसमासो भविष्यनो'-त्यस्य च 'स्थास्यती'त्यर्थः । एवञ्च कारक-तद्विशेषयोरनुपादानेऽपि तत्प्रवृत्तिरस्त्येव । 'षष्ठी'ति सूत्रे 'मातुः स्मरती'त्यादौ समासवारणाय 'सुपे'त्यस्य सम्बन्धेऽपि, अस्माद्विशेषवचनात्कृद्भिः सुबुत्पत्तेः पूर्वमेव समास इत्याहुः ।

कृष्णं श्रित इति । 'न लोके'ति षष्ठीनिषेधः । 'इह श्रिताऽऽदिषु गत्यर्थत्वात्कर्त्तरि क्तः । श्रयणप्राप्त्यापत्तयश्च गतिविशेषा एव । अत्यासो व्यतिक्रमः । सोऽपि गतिविशेष एवे'ति प्राञ्चः ।

( 'आदिकर्मणि कर्त्तरि क्त' इत्यन्ये ) ।

ननु 'कृष्णश्रित' इत्यस्य कृष्णकर्मकश्रयणकर्त्तेति ह्यर्थः । स च 'कृष्णः श्रितो येने'ति कर्मणि क्ताऽन्तेन बहुव्रीहिणाऽपि सुलभ इति, व्यर्थं श्रिताऽऽदिग्रहणमिति चेन्न । बहुव्रीहौ निष्ठाऽन्तत्वेन श्रिताऽऽदीनां पूर्वनिपातप्रसङ्गात् । जातिकालसुखादिभ्यः पराया हि निष्ठायाः परनिपात उक्तः । ननु 'पतिते'त्ययुक्तं, तनिपतिदरिद्रातिभ्यः सनो वेट्कत्वेन 'यस्य विभाषे'-ति निष्ठायामिण्निषेधादिति चेन्न । अत एव निपातनादिट् । यद्वा 'सेऽसिची'ति वेट्कत्वात्सिद्धे कृन्तत्यादीनामीदित्त्वेन 'यस्य विभाषे'त्यस्या-

१ 'गतिरेव, न फलम्' इति ख. घ. पाठः । अयं पाठः क. ग. नास्ति ।

२ ख. घ. पाठोऽयं, क. ग. नास्ति ।

३ 'बहुव्रीहिणापि सुलभः । बहुव्रीहौ विशेषणविशेष्यभाववैपरीत्यस्य सर्वसिद्धत्वेन 'कर्मणः प्रत्ययार्थत्वेन विशेष्यत्वं स्यादि'ति नाऽऽपादनीयमिति व्यर्थं श्रितादिग्रहणम्' इति ख. घ. पाठः ।

४ 'अत एव निपातनादिड्विति प्राञ्चः । 'चुरादावदन्तेषु पठितस्य 'पत गतौ वे'त्यस्येदं रूपम् । न च सोऽपि वेट् । अचुरादिसाहचर्येण तद्ग्रहात् । 'यस्य विभाषे'त्यत्रैकाच इत्यनुवृत्तेश्चे'त्यन्ये । प्रसिद्धत्वात्साहचर्याच्च 'द्वितीयाश्रिते'-

ऽनित्यत्वादिष्ट् । चुरादावदन्तेषु पठितात् 'पत गतौ वे'त्यतो निष्ठायां निष्पन्न-'पतिते'त्यस्य त्वप्रसिद्धत्वात् 'द्वितीया श्रिते'त्यत्राऽग्रहणमिति दिक् ।

ग्रामं गमीति । गमेरिनिर्भविष्यति । 'भविष्यति गम्यादय' इत्युक्तेः । 'अकेनोरि'ति कृद्योगलक्षणषष्ठीनिषेधात्कर्मणि द्वितीया । अयोग्यत्वादिति । 'स्वयमि'त्यस्याऽऽत्मनेतिकर्तृशक्तिप्रधानत्वादिति भावः ।

स्वायंकृतिरिति । असमासे 'कर्त्तरि'ति स्यादिति भावः । ऐकस्वर्यमपि समासफलं बोध्यम् ।

खट्वा । अस्य तत्प्रकृतिके लक्षणया 'द्वितीये'त्यनेन सामानाधिकरण्यम् । [1]जाल्म इति । असमीक्ष्यकारीत्यर्थः । केवलरूढोऽयम्[2] । तेन खट्वामारोहतु, न वा, सर्वोऽपि निषिद्धाऽनुष्ठानपर एवमुच्यते । एतेन 'प्रकरणादिसहकृतवाक्येन निन्दाप्रतीतिसम्भवात्, 'न हि वाक्येन निन्दे'ति मूलमयुक्तमि'त्यपास्तम् । योगरूढे तत्सम्भवेऽपि, केवलरूढे तदभावात् । 'न हि निन्दे'त्यस्य च 'विवक्षिता निन्दे'त्यर्थ इत्याहुः । 'सामी'ति अर्द्धपर्यायः ।

काला इति । कालवाचिन इत्यर्थः । बहुवचनं स्वरूपग्रहणनिवृत्त्यर्थम् । क्तान्ताऽक्तान्तसाधारणोत्तरसूत्रेण सिद्धे, योगविभागो व्यर्थोऽत आह— अनत्यन्तेति । तदाह–मासं परिच्छेत्तुमिति । न तु सम्पूर्णमाससम्बन्धी-

---

त्यत्राऽचुरादेरेव ग्रहणं न्याय्यम् । अत एव 'तनादिकृञ्भ्य' इत्यत्र कृञ्-ग्रहणं गणकार्योऽनित्यत्वे ज्ञापकमि'त्याकरोक्तं सङ्गच्छते । अत एव 'पत्त' इति न साध्विति प्राचामाशयः' इति ख. घ. पाठः ।

१ 'जाल्म इति । चेदं, व्रतानि च समाप्य समावृत्तेन खट्वाऽऽरोढव्या । ब्रह्मचर्य एव भूशयनार्होऽपि, यः खट्वामारोहति, स जाल्मः । असमीक्ष्यकारीत्यर्थः' इति ख. घ. ङ. पाठः ।

२ 'अनेन केवलरूढोऽयमिति ध्वनयति' इति ख. पाठः ।

त्यर्थः । आरब्धवानिति । 'शकधृषे'ति तुमुन्निति भावः ।

मुहूर्त्तमिति । 'कालाऽध्वनोरि'ति द्वितीया ।

तृतीया । 'तत्कृते'ति तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते । 'तेन कृत' इति समासः । तज्जन्यगुणवचनेन शब्देनेत्यर्थः । ( तेन शास्त्रपटुर्दधिपटुरित्यादिसिद्धिः ) । इदं सूत्रं 'कृत'द्वारक एव सामर्थ्ये प्रवर्त्तते, न साक्षात्परस्पराऽन्वये । उत्तरसूत्रेण निपुण-श्लक्ष्णाभ्यां समासविधानात् । तद्योगे हि हेतौ तृतीया । इदमेवाऽभिप्रेत्य भाष्ये 'शङ्कुलया कृतः खण्ड' इत्यत्र 'करोति'द्वारकसामर्थ्ये इव, 'दध्ना भुङ्क्ते पटुरि'त्यादौ भोजनक्रियाद्वारकसामर्थ्येऽपि समासवारणाय, 'करोति'द्वारकसामर्थ्ये एव यथा स्यादि'त्यर्थं 'तत्कृत'ग्रहणं कर्त्तव्यमि'त्युक्तम् ।

न चैवं 'तत्कृते'ति किम् ? , अक्ष्णा काण' इति मूलमसङ्गतम् । कृत-

---

१ 'आरब्धवानिति । आदिकर्मणि कर्त्तरि क्तः' इति ख. घ. पाठः ।

२ 'तज्जन्योत्पत्तिमद्गुण' इति ख. पाठः ।

३ ख. घ. पाठोऽयम् । क. ग. नास्ति ।

४ एतदुत्तरं 'न चैवं तदग्रिमभाष्यं विरुध्यते । तत्र 'नाऽर्थस्तत्कृतग्रहणेन । भवति हि शङ्कुलायाः खण्डेन सामर्थ्यम् । असामर्थ्याच्चाऽत्र न—'दध्ना भुंक्ते पटुरि'त्युक्तमिति वाच्यम् । सर्वधात्वनुस्यूताऽव्यतिरिक्तकल्पा-ऽन्तरङ्गकृञ्-[1]योगे चारितार्थ्येनाऽन्ययोगेऽसामर्थ्यादप्रवृत्तिरिति तदाशयात् ।

न चैवमपि 'अक्ष्णा काण' इति व्यावर्त्त्यस्य सत्त्वेन, 'नाऽर्थ' इत्यस्याऽसङ्गतिरिति वाच्यम् । उत्तरत्र सदृशाऽऽदिग्रहणेन साक्षात्परस्पराऽन्वये एतत्प्रवृत्त्यभावेन 'अक्ष्णा काण' इत्यादिसिद्धिरिति तदाशयात् । एतत्सकलक्लेशमसहमानेन सूत्रकृता 'तत्कृत'ग्रहणमेव कृतम् । तत्र साक्षादन्वये ज्ञापकादप्रवृत्त्युपस्थित—'कृ'द्वारक एव प्रवर्त्तते' इति क. कुण्डलितः, ख. घ. पाठः ।

५ 'कृंद्वारके' ख. पाठः ।

---

1 'कृञ्द्वारकसामर्थ्ये' इति ख. घ. पाठः ।

द्वारके एव प्रवृत्त्यर्थं तदावश्यकत्वादिति वाच्यम्। अन्याऽर्थं कृतेन तद्वारणेऽप्यक्षतेः। एतेन 'खडि भेदने' इति धातोर्घञि निष्पन्न[1]'खण्ड'-शब्दयोगे करणतृतीयान्तेन समास' इत्यपास्तम्। 'कर्त्तृकरणे कृते'त्यनेनैव तत्र सिद्धेश्च। 'खण्ड'शब्दस्य तद्गुणे रूढेः। वचनग्रहणं च 'गुणोपसर्जन-[2] द्रव्यवचनेनैव समासो यथा स्यादि'ति। तेन 'कुम्भेन कृतं रूपमि'त्यादौ न[3]। शङ्कुलाखण्डस्य सिद्धिश्च। 'खण्ड'शब्दो हि मतुब्लोपेन खण्डगुणके वर्त्तते। अत्राऽऽकडारसूत्रोक्तगुणवचनसंज्ञापरो न गुणवचनशब्दः, किन्तु शुद्धयौगिको, व्याख्यानात्। एतच्च प्रकृतसूत्रे भाष्ये स्पष्टम्।

'अर्थ'शब्दोऽत्र रूढो धनपर्यायः। 'अर्थरैत्रिभवा अपी'त्यमरात्। 'धान्येने'ति हेतौ तृतीया। यत्तु 'अर्थ्यते इति अर्थः = प्रयोजनम्। अर्थनम्-अर्थः = अभिलाषो वा। 'धान्येने'ति करणे तृतीये'ति। तन्न। 'कर्त्तृकरणे कृते'त्येव सिद्धत्वादिति दिक्।

पूर्वसदृश। अत्र श्लक्ष्ण-निपुणयोगे हेतौ तृतीया। पूर्वो-नाऽर्थ-कलह-मिश्र-योगेऽत एव वचनात्। केचित्तु 'सम-सदृशयोगे लक्षणप्रतिपदोक्त-परिभाषया 'तुल्याऽर्थैरि'तिविहिततृतीयाया एव ग्रहणमि'त्याहुः। तन्न। 'भोजनसदृश' इत्यादौ हेतुतृतीयान्तेनाऽपि समासस्य 'सदृशप्रतिरूपयो-रि'ति सूत्रे भाष्येऽङ्गीकृतत्वात्।

---

१ 'घ'निष्पन्न' इति क्वचिच्छोधितः पाठः।

२ 'खण्डशब्दस्य शकले रूढेश्च। तदर्थहेतुकत्वं च गुणवचनस्याऽर्थद्वारकं विशेषणं, न तु गुणस्य' इति ख. पाठः।

३ इतोऽग्रे—'गुणशब्देनाऽत्र जाति-संज्ञा-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-सङ्ख्याशब्दभिन्नशब्दवाच्योऽर्थः। तेन 'घृतेन पाटवमि'त्यादौ न। तद्धितान्तत्वात्। न च रूपादिशब्दानां जातिशब्दत्वम्। 'आकृतिग्रहणा जातिरि'त्येतलक्षणलक्षिताया जातेरेव तत्र ग्रहणादिति स्पष्टमाकडारसूत्रे भाष्य इति निरूपितं 'वोत' इति सूत्रे' इति ख. घ. पाठः।

समो न सर्वाऽर्थः। सदृशसाहचर्यात्। सर्वनाम-'पूर्व'शब्दसन्निधावपाठाच्च।

अत्र 'सदृश'ग्रहणं व्यर्थम्। षष्ठीसमासेन सिद्धेः। न च पूर्वपदप्रकृतिस्वराऽर्थम्। 'सदृशप्रतिरूपयोः सादृश्ये' इति सिद्धेः। तत्र हि 'दास्याःसदृश' इत्यादौ षष्ठीसमासे, षष्ठ्या अलुकि, पूर्वपदप्रकृतिस्वराऽर्थं सदृशग्रहणमावश्यकम्। न चेदमपि 'मनसः संज्ञायामि'त्यलुकि, 'मनसासदृश' इति सिद्ध्यर्थमावश्यकमिति वाच्यम्। अनभिधानेन तत्र समासस्यैवाऽभावात्। एतादृशसंज्ञायां मानाऽभावाच्च। इदमेवाऽभिप्रेत्योक्तं भाष्ये 'तृतीयासमासे सदृशवचनाऽऽनर्थक्यमि'ति। 'सदृशप्रतिरूपयोरि'ति सूत्रे भाष्ये तु 'भोजनहेतुकसादृश्यवानि'त्यर्थे 'भोजनसदृश' इति तृतीयासमासाऽर्थमत्र सादृश्यग्रहणमि'त्युक्तम्। न चाऽत्राऽपि हेतोः शेषत्वविवक्षायां षष्ठीसमासेन सिद्धम्। पूर्वपदप्रकृतिस्वराऽसिद्धेः।

न च 'सदृशप्रतिरूपयोरि'त्यनेन सिद्धिः। तस्य सादृश्यग्रहणसामर्थ्येन प्रतियोगिबोधकपूर्वपदके एव प्रवृत्तेः[2]। प्रकृतसूत्रस्थभाष्यं त्वेकदेश्युक्तिरिति तदाशयः।

ऊनार्थेति। पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहाऽर्थग्रहणमभिधेयपरम्। अत एव 'ऊनाऽर्थान्युत्तरपदानि, कलहशब्दश्च तृतीयान्तात् पराण्यन्तोदात्तानी'त्यर्थकम् 'ऊनार्थकलहं तृतीयायाः' इति सूत्रं सङ्गच्छते। तत्र हि प्रतिपदोक्तत्वादस्यैव ग्रहणम्। तेन[3] 'वाचा कृतः कलह' इत्यर्थे 'तृतीया तत्कृतेति' समासे नाऽन्तोदात्तत्वम्। एतेन 'अत्रत्याऽर्थशब्दस्य पूर्वसूत्राऽन्त्यभाष्ये प्रत्याख्यानादिदमयुक्तमि'त्यपास्तम्। 'अर्थशब्देन

१ 'इदमेवाऽभिप्रेत्याऽत्रोक्तं भाष्ये' ख. पाठः।

२ इतोऽग्रे—'हेतुत्वप्रकारकबोधे समासाऽर्थमावश्यकत्वाच्चेति तदाशयः। ऊनार्थेति।' इति ख. घ. पाठः।

३ 'अत एव वाचा कृतः कलहः' इति ख. पाठः।

समासाऽर्थं न कार्य'मिति तत्तात्पर्यस्य कैयटेनोक्तत्वात्। यद्यपि स्वरविधायकेऽर्थशब्दः स्वरूपपरस्तेन 'धान्याऽर्थे'इत्यन्तोदात्तत्वसिद्धिस्तथापि व्याख्यानादत्रानाऽर्थग्रहणमिति वृत्तिकृता व्याख्यानाददोषः[1]। तच्चाऽर्थग्रहणं पूर्वादिभिर्न सम्बध्यते, व्याख्यानात्, समसदृशयोः पृथगुपादानाच्चेत्यभिमानः[2]।

परे तु पूर्वसूत्राऽन्तभाष्ये एतत्प्रत्याख्यानात्, समर्थसूत्रभाष्ये 'तृतीया तत्कृते'त्युपन्यस्य 'उपादानविकल' इत्युदाहरणाच्च प्रकृतसूत्रेऽर्थग्रहणं चिन्त्यप्रयोजनमेव। 'उपादानेन कृतो विकल' इत्येव विग्रहः। स्वरविधायकेऽपि व्याख्यानादर्थग्रहणे न कश्चिद्भाष्याऽनुग्रहः। 'माषविकल' इत्यादावन्तोदात्तत्वप्रवृत्तौ च न दृढतरं मानम्[3]। 'तृतीयाया' इत्युक्त्या 'ऊनार्थमि'ति स्वरविधायके प्रतिपदोक्तपरिभाषाप्रवृत्त्यभावज्ञापनेन 'वाचा कृतः कलह' इत्यर्थके 'वाक्कलह'शब्दे, तादृशाऽर्थे 'माषनो'शब्दे चाऽन्तोदात्तत्वं भवत्येवेत्याहुः।

मिश्रं चेति। 'पणबन्धेन ऐकार्थ्यं सन्धिः, तत्राऽगम्यमाने 'मिश्र' इत्युत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तमि'त्यर्थः। अवरस्येति। न चोनाऽर्थत्वात्सिद्धिः, 'द्व्यजवरार्द्धादि'त्यादौ चाऽस्योनाऽर्थत्वं प्रसिद्धमेवेति वाच्यम्। 'पूर्वपराऽवरे'तिसूत्रप्रसिद्धव्यवस्थाविषयदिगादिवाचकाऽवरशब्दयोगे चारितार्थ्यात्[4]।

कर्त्तरि करणे चेति। सूत्रे समाहारद्वन्द्वात्सप्तम्येकवचनमिति भावः[5]। तृतीयेति। तदन्तमित्यर्थः।

---

१ 'अदोष इत्यभिमानः' इति ख. घ. पाठः।

२ 'पृथगुपादानाच्चेति केचित्' ख. घ. पाठः।

३ 'प्रमाणम्' इति ख. घ. पाठः।

४ 'व्यवस्थाविषयाऽवरशब्दे चारितार्थ्यात्' इति ख. घ. पाठः।

५ इतोऽग्रे—'प्रथमाद्विवचनम्। कर्त्तृकरणबोधके तृतीयान्ते इत्यर्थ' इत्यन्ये' इति ख. घ. पाठः।

**कृद्ग्रहणे इति।** अस्याश्च 'कर्मणि क्तान्ते उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर' इत्यर्थक—'गतिरनन्तर' इतिसूत्रस्थाऽनन्तरग्रहणं ज्ञापकम्। तद्धि 'अभ्युद्धृतमि'त्यादावतिव्याप्तिवारणाऽर्थम्। प्रत्ययग्रहणपरिभाषया उद्धृतस्य क्तान्तत्वाऽभावादेवाऽप्राप्तौ, तदर्थं सदस्या ज्ञापकम्। न च 'अभ्युद्धृतमि'त्यादौ परत्वात् 'गतिर्गताबि'त्यनेनाऽभेर्निघात एवेति वाच्यम्। पादादिस्थत्वे, पदात्परत्वाऽभावे च तदप्राप्तेः। अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्गत्याक्षिप्तधातुनिरूपितमेवाऽऽनन्तर्यं गृह्यत इति न दोषः।

अस्या अर्थस्तु 'यत्र गतिकारकसमभिव्याहृतं कृदन्तं, तत्र कृद्ग्रहणेन तद्विशिष्टस्यैव ग्रहणम्, 'अपि'शब्दात्तदसमभिव्याहृतस्य केवलस्याऽपी'ति। अन्यथाऽनया कृद्ग्रहणविषये परत्वात्प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम्। अत एव 'साङ्कूटिनमि'त्येव 'गतिकारकोपपदानामि'ति, 'कृद्ग्रहणे' इति च परिभाषाभ्यां कृदन्तेन समासे कृते, विशिष्टादेवाऽणि सिद्ध्यति, न तु 'संकौटिनमि'ती'ति 'पुंयोगा'दितिसूत्रस्थभाष्योक्तं सङ्गच्छते। अन्यथा तत्र केवल'कूटिन्नि'त्येतस्याऽपि इनुणन्तत्वात्ततोऽणि, पाक्षिकदोषो दुर्वार एव स्यात्। स्पष्टं चेदं सर्वं 'समासेऽनञ्पूर्वे' इतिसूत्रे भाष्यकैयटयोः। 'गतिरनन्तर' इत्यत्र तु गतेः पूर्वपदस्य क्तान्ते उत्तरपदे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम्।

इयं च कृद्विशेषग्रहणे, कृत्सामान्यग्रहणे च प्रवर्त्तते। 'क्षेपे' इति

---

१ 'सूत्रेऽनन्तरग्रहणम्' इति ख. घ. पाठः।

२ 'अभेर्निघातेन सिद्धमिति वाच्यम्' इति ख. घ. पाठः।

३ 'कृद्ग्रहणे परत्वात्' इति ख. पाठः।

४ 'साङ्कूटिनमित्येतत्' ख. पाठः।

५ 'परिभाषाभ्यां सिद्ध्यतीति पुंयोगादितिसूत्रस्थ' इति ख. घ. पाठः।

६ 'इयं च परिभाषा' इति ख. घ. पाठः।

सूत्रे 'नकुलस्थित'शब्दस्य कारकपूर्वत्वोक्तेः, 'नखनिर्भिन्न' इत्युदाहरणाच्चेति बोध्यम्। 'बहुलग्रहणाच्छानच् शतृ-क्तवतु-प्रभृतिषु न, 'हस्तेन भुञ्जानः, कुर्वन, कृतवान्वे'ति। क्व चित्कारकविभक्त्यन्तरमपि समस्यते,–'पादाभ्यां ह्रियते पादहारकः'। 'गले चोप्यते गलेचोपकः'। उभत्राऽपि बाहुलकात् कर्मणि ण्वुल्। उत्तरत्र 'अमूर्द्धमस्तकादि'त्यलुक्। अत एव 'साधनं कृते'ति वक्तव्यम्, पादहारकाद्यर्थमि'ति वार्त्तिकं सङ्गच्छते। एतेनाऽत्र सूत्रे 'क्तेनेति वक्तव्यमि'ति वार्त्तिकोक्तेः क्तान्तभिन्नेन नाऽयं समास' इति मन्दोक्तमपास्तम्। 'बहुल'वचनमाश्रित्य भाष्ये एव तत्प्रत्याख्यानाच्च।

कृता किमिति। 'सुपे'त्यधिकारेण तिङन्तेनाऽप्रसङ्गात्कर्त्तृकरणाभ्यामाक्षिप्तक्रियायां कृत्येव भविष्यती'ति प्रश्नः। तिङन्तप्रकृतिकतद्धितान्तेऽतिप्रसङ्ग इत्याह—काष्ठैरिति।

अन्ये तु[1] 'कृदन्तेनैव समासो यथा स्यात्, न तु सुबन्तेनेत्यर्थं तत्। उक्तोदाहरणे तु शानजन्तादिभिरिव, बहुलग्रहणेनाऽपि स वारयितुं शक्य इत्याहुः।

कृत्यैः। अर्थवादः=आरोपितोऽर्थः। काकपेयेति। शक्याऽर्थे कृत्यः। पूर्णाऽम्भस्त्वेन स्तुतिः, अल्पाऽम्भस्त्वेन निन्दा वा। एवं 'वाते'त्यत्राऽपि कोमलत्व-दुर्बलत्वाभ्यां स्तुति-निन्दे बोध्ये। अधिकाऽर्थवचनं प्रायिकम्। 'तृणोपेध्यं' 'घनघात्यमि'त्यादिदर्शनात्। एवं च 'कृत्यग्रहणे यत्-ण्यतोर्ग्रहणम्, 'काकैः पातव्ये'त्यादौ मा भूदि'ति वृत्त्युक्तं यदि प्रामाणिकं, तर्हि तदपि बहुलग्रहणेनैव सिद्धम्।

इहान्तर्भूतेति। तां विना दध्नः संस्कार्यत्वेन प्रतीताऽन्नसंस्कारकत्वाऽनुपपत्तेरिति भावः। 'इहाऽन्नग्रहणं संस्कार्यमात्रोपलक्षणमि'त्येके।

'इहाऽन्नशब्देन ओदनः। 'भिस्सा स्त्री भक्तमन्धोऽन्नमि'तिकोशेनाऽन्नशब्दस्य ओदने रूढेः। योगाच्च रूढेर्बलीयस्त्वादि'त्यन्ये।

---

१ 'अन्ये तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः। ख. घ. नास्ति।

भक्ष्येण । कठिनं[1] विविक्ताऽवयवमभ्यवहार्यं भक्ष्यम् । यत्प्रत्ययान्तस्य, ण्यजन्तस्य च भक्षयतेस्तत्रैव प्रयोगात् । मिश्रणेति । तां विना मिश्रीकरणत्वाऽयोगादिति भावः ।

चतुर्थी । तच्छब्देन चतुर्थ्यन्तपरामर्शिना तदर्थो लक्ष्यत इत्याशयेनाह–चतुर्थ्यन्तार्थायेति । तादर्थ्ये एषा चतुर्थी । बलिरक्षितग्रहणादिति । तद्योगे हि तादर्थ्ये चतुर्थी । 'हितसुख'ग्रहणन्तु न ज्ञापकम् । तयोरतादर्थ्यचतुर्थ्या समासाऽर्थं चारितार्थ्यात् । स्पष्टं चेदं भाष्ये । तद्योगे चतुर्थी त्वस्मादेव ज्ञापकाद्बोध्या । हितयोगे 'तस्मै हितमि'ति निर्देशाच्च । कारके चेदं व्युत्पादितम् । सुखयोगे तु तादर्थ्यचतुर्थी वक्तुमेवाऽशक्या । न हि सुखमन्यमुपकारं जनयति । यत्तु 'गोरक्षितमि'त्यत्र 'सम्प्रदाने चतुर्थी'ति काशिकोक्तं, तदत्रत्येन[2] रक्षितग्रहणस्योक्ताऽर्थज्ञापकतापरेण भाष्येण विरोधादुपेक्ष्यम् ।

षष्ठीसमासा इति । एतच्चेहैव भाष्ये स्पष्टम् । ननु चतुर्थीसमास एवाऽस्तु । 'रन्धनाय स्थाली'त्यत्र षष्ठीसमासस्येष्टत्वेन 'प्रकृति-विकृतिभाव एवे'त्यस्य निष्फलत्वात् । न च 'चतुर्थी तदर्थे' इति पूर्वपदप्रकृतिस्वरप्रसङ्गः । प्रकृतिविकारभाव एव तत्प्रवृत्तेः । अन्यथा 'गोरक्षितमि'त्यत्राऽप्यनेनैव स्वरसिद्धौ, 'क्ते चे'ति व्यर्थं स्यात् । न च हिताऽर्थम्[3] । तत्रापि 'तदर्थे' इत्यनुवृत्तेः । अत एवाऽस्योक्ताऽर्थज्ञापकतापरं भाष्यं सङ्गच्छते । अत एव 'गोबलिरि'त्यादौ न पूर्वपदप्रकृतिस्वरत्वम् । न च 'रन्धनाय स्थाली'त्यादौ षष्ठीसमासोऽनभिधानान्नेति वाच्यम् । चतुर्थीसमासस्यैव तद्वदनभिधानमस्तु, किमनेन विशेषेण । एवं च बलिरक्षितग्रहणमपि न कार्य-

---

१ 'कठिणम्' इति णकारघटितः क. ख. ग. पाठः ।

२ 'अत्रत्यभाष्यविरोधात्' ख. पाठः ।

३ 'न च हितार्थम् । 'हिते चे'ति वक्तव्ये, 'क्ते चे'ति सामान्यवचनस्य ज्ञापकत्वात्' इति ख. ग. पाठः ।

मित्यपरं लाघवमिति चेन्न । 'रन्धनाय स्थाली'त्यादावभिधानस्वाभाव्या-त्तादर्थ्यत्वेनैव तस्य भानं, न तु सम्बन्धत्वेनेति, षष्ठ्यभावादेव तदप्राप्तेः। चतुर्थ्याः सत्त्वेन चतुर्थीसमासवारणाय तस्याऽऽवश्यकत्वादिति भाष्या-ऽऽशयः । अश्वघासादौ तूपकारकत्वेन बोधे वाक्यमेव, सम्बन्धत्वेन बोधे समासोऽपीति व्यवस्थाया इष्यमाणत्वेन तत्साफल्यात् । न च 'रन्ध-नाय इयं रन्धनाऽर्था । सा चासौ स्थाली च रन्धनार्था स्थाली'ति मध्यमपद-लोपिसमासे उपकारकत्वेनाऽपि बोधस्य समासतः सम्भवः । तस्य सर्वत्रा-ऽङ्गीकारे मानाऽभावात् ।

'शाकपार्थिवादीनामि'त्यादिशब्दः प्रकारे । प्रकारः सादृश्यम् । तच्चोत्तरपदार्थगर्भतया दृष्टप्रयोगत्वम् । अन्यस्याऽसम्भवादि'त्यन्ये ।

**अर्थेन नित्यसमास इत्यादि** । सर्वलिङ्गतामात्रविधायकमिदम्, अर्थशब्दस्य नित्यपुंस्त्वेन परवल्लिङ्गताबाधनाय । समासस्य नित्यत्वन्तु न्यायसिद्धम् । चतुर्थ्यैव तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहस्याऽप्रसक्तेः ।

'यदि लिङ्गमपि लोकतः सिद्धं, तदा व्यर्थमेवे'ति चिन्त्यम् । 'चतुर्थी सम्प्रदाने' इति सूत्रस्थे, प्रकृतसूत्रस्थे च 'गुरोरिदं गुर्वर्थमि'तिभाष्योक्त-षष्ठीसमासे विशेष्यनिघ्नतायै लोकाऽनुसरणस्यावश्यकत्वात् । तादर्थ्यस्य सम्बन्धत्वेन विवक्षणात्षष्ठी। तत्र समासनित्यत्वमपि भाष्यप्रामाण्यादेव ।

**पञ्चमी । भयमीति** । 'निर्गतजुगुप्सुभ्यामि'त्यपि वक्तव्यम् । स्पष्टं चेदमत्रैव भाष्ये । 'भये'त्यर्थग्रहणन्तु न । 'वृकात्त्रास' इत्यादौ समासा-

---

१ 'भाष्याशयः । उपकारकत्वेन बोधे' इति ख. घ. पाठः ।

२ 'व्यवस्थाऽर्थमिदम् । न च रन्धनार्था स्थालीति मध्यमपद' इति ख. ग. घ. पाठः । ३ 'दृष्टप्रयोगयोगत्वम्' इति ग. पाठः ।

४ 'षष्ठीसमासे तु विशेष्यनिघ्नता लोकाश्रयत्वाद्बोध्या' इति ख. घ. पाठः ।

५ इतोऽग्रे—'योगविभागात् , सुप्सुपेति वा समासे, 'भोगोपरत' 'ग्रामनिर्गत' 'वन्येतरा'ऽऽदय इवेमेऽपि साधव इति तु मूलाशयः । सूत्रन्तु शेषप्रकृत्यर्थे-

ऽऽपत्तेः । भोगोपरत-वन्येतरादयः सुप्सुपेति समासेन साधवः, मयूरव्यंसकादित्वाद्वा ।

अल्पं पञ्चम्यन्तमिति । 'कानि चिदेव पञ्चम्यन्तानि समस्यन्ते' इत्यर्थः । अल्पश इति । अस्मादेव निपातनाच्छस् । 'बह्वल्पाऽर्थान्मङ्गला-ऽमङ्गलवचनमि'ति वक्ष्यमाणत्वात् ।

स्तोकाऽन्तिक । अर्थग्रहणेऽपि स्तोकाऽर्थोऽल्पशब्द एव, न लेशादयः । 'करणे चे'ति पञ्चमीविधौ तस्यैव ग्रहणाऽन्येभ्यस्तेन पञ्चम्य-भावादस्याऽप्राप्तेः । प्रतिपदोक्तपरिभाषया च तद्विहितपञ्चम्यन्तेनैवाऽयं समास इत्याहुः । अन्तिक-दूराऽर्थयोस्तु 'दूरान्तिकाऽर्थेभ्य' इत्यनेन ।

राजपुरुष इति । अन्तर्वर्त्तिविभक्त्या पदत्वान्नलोपः ।

याजकादि । याजक । पूजक । परिचारक । परिवेषक[2] । स्नातक । अध्यापक । उत्पादक[3] । ( उद्वर्त्तक[4] ) । होतृ । पोतृ । भर्त्तृ । कर्त्तृ । गोप्तृ । रथगणक । पत्तिगणक । वृत् ।

'क्रियाऽनुगतिमास्थाय लोके ख्यातिमुपागताः ।
ये कान्ताः पाचकाद्यास्ते द्रष्टव्या याजकादिषु ॥'

—इति गणरत्नकृतः ।

गुणात्त । यद्यपीदं वचनं 'सर्वं गुणकार्त्स्न्ये' इत्यत्र भाष्ये पठितं, तथापि समासादिसंज्ञासम्बन्धाऽर्थमत्रोक्तम् । भाष्ये 'पूरणगुणे'त्यपवादतोक्तेः षष्ठीसमास एवाऽनेन, न कर्मधारयादिः । नाऽपि तत्र 'तर'लोपः ।

इदं वचनं 'सर्व'शब्दे एव प्रवर्त्तते । सर्वपदाऽनुवृत्तेः । एतदर्थमेव स्वरविधाविदं पठितं भाष्ये । 'गुणवचनाद्विहितो यस्तरप्, तदन्तेन

---

मावश्यकम् । 'भये'त्यर्थग्रहणन्तु न, 'वृका त्रास' इत्यादौ समासाऽऽपत्तेः' इति ख. घ. पाठः ।

१ 'पञ्चम्यभावादेव तदप्राप्तेः' इति ख. घ. पाठः । २ 'परिषेचक' इति वृत्तिपाठः । ३ 'उत्सादक' इति वृत्तिपाठः । ४ अयं वृत्तिपाठः ।

सुबन्तस्य सर्वशब्दस्य समास' इति वाच्योऽर्थः। गुणाद्विहिततरबन्तं च गुणवाच्येव भवतीत्याशयेनाऽऽह—तरबन्तं यद्गुणवाचीति।

न निर्धारण इतीति। ननु यतो निर्धार्यते, यश्च निर्धार्यते, यश्च निर्धारणहेतुः—एतत्रितयसन्निधाने एवाऽस्य निषेधस्य, तत्रैव निर्धारणषष्ठ्याश्च युक्तत्वात्, तद्विधायकसूत्रे कैयटादिभिरुक्तत्वाच्च, नाऽस्य[1] प्राप्तिः। 'सर्वेषां श्वेततर' इत्यादौ तमबापत्तिश्चेत्यरुचेराह—पूरणगुणेतीति।

सर्वेषां श्वेततर इति। द्रव्याऽन्तराऽऽधेयश्वेताऽपेक्षया सर्वेषां पटानामधिकोऽयं श्वेतो गुण इत्यर्थः।

कृद्योगा चेति। 'षष्ठी'ति सूत्रबाधे मानाऽभावादिति भावः। न त्विदमपूर्वम्। नृणामिति। 'नृ'पदेन समभिव्याहृतद्विजेतरनरा लक्ष्यन्ते। व्यावृत्तत्वं विभक्त्यर्थः। तेन 'द्विजेतर-नर-व्यावृत्त-श्रेष्ठत्व-वन्तो द्विजा' इति बोध इति, 'श्रेष्ठ'पदेन समासः प्राप्तः[3]। 'पुरुषोत्तम' इत्यत्र तु[4] त्रितय-

१ 'नास्य प्रवृत्तिः' ख. पाठः। २ 'इति मते' ख. पाठः।

३ इतोऽग्रे—'द्विजत्वस्यैव निर्धारणहेतुत्वे तु 'द्विज'पदेन तत्प्राप्तिः। तदा हि तदपेक्षा षष्ठी। 'पुरुषोत्तम' इत्यादौ तु निर्धारणसप्तम्या 'संज्ञाया'मिति समासः। न चैवं 'हलदन्ता'दित्यलुक् स्यादिति वाच्यम्। 'हलदन्ता'दित्यत्राऽपि 'बहुल'मित्यपकृष्यते। तेन क्वचिल्लुगभावेनेष्टसिद्धेः। 'कारनाम्नी' त्यादि तु तस्यैव प्रपञ्चः। ध्वनितं चेदं 'तत्पुरुषे कृती'ति सूत्रे भाष्ये।

'तत्तत्कार्यविशिष्टस्य यत्र संज्ञात्वं, तत्रैव संज्ञानिमित्तकतत्तत्कार्यप्रवृत्तेर्न दोष' इत्यन्ये। न चैवं 'न निर्धारणे' इति व्यर्थम्। स्वरभेदात्। सप्तमीसमासे पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे त्वन्तोदात्तं स्यात्। असंज्ञाऽर्थं चरितार्थ्याच्च।

यत्तु 'पुरुषेभ्य उत्तम' इति 'पञ्चमी विभक्ते' इतिसूत्रविहितपञ्चम्यन्तेन समास' इति। तन्न। निर्धार्यमाणस्य भेद एव तत्प्रवृत्त्या, उत्तमस्य पुरुषत्वाऽनापत्तेः। वस्तुतस्तु त्रितयसन्निधानाऽभावान्नाऽत्र निर्धारणविभक्तिः' इति ख. घ. पाठः। ४ 'पुरुषोत्तम इत्यत्र तु' इति क. पाठः।

सन्निधानाऽभावान्न निर्धारणविभक्तिः। किन्तु सम्बन्धसामान्ये षष्ठी। तेन 'षष्ठी'समासो भवत्येव। अत एव 'हलादिः शेष' इति सूत्रे- 'किमयं हलामादिरिति षष्ठीसमास' इति भाष्ये उक्तम्। 'न निर्धारणे' इति तथा बोधेऽसाधुत्वाऽर्थम्। 'गुणेन निषेधस्त्वनित्य' इति तरप्सूत्रे कैयटः।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यस्मात्क्षरमतीतोऽहमक्षरा- दपि चोत्तमः' इति गीतावाक्यात्त्वत्र कर्मधारय इति लभ्यते। राजदन्तादि- त्वात् पूर्वनिपातः।

प्रतिपदेति। धातु-कारकविशेषोपादानेन 'ज्ञोऽविदर्थस्ये'त्यादि सप्त- सूत्र्या विधीयमानेत्यर्थः। तेषु 'शेष'ग्रहणाऽनुवृत्त्या तेषां समासनिवृत्त्यर्थ- त्वादिति भावः।

पूरणगुण। पूरणाद्यर्थैरिति। आदिना गुण-सुहितयोः सङ्ग्रहः। अत्र पूरणाऽर्थत्वेन 'पूरणाद्भागरूपे स्वार्थ तीयादन्' इत्याद्यन्तस्याऽपि ग्रहणमिति 'द्वितीयतृतीये'तिसूत्रे भाष्यकैयटयोः स्पष्टम्। 'भिक्षाद्वितीयमि'- त्यादावन्यतरस्याङ्ग्रहणसामर्थ्यात्समास' इति तत्रोक्तम्। 'गुण'शब्देन

---

१ 'षष्ठीति समासो भवत्येव' ख. घ. पाठः।

२ 'अत एव' इत्यारभ्य 'असाधुत्वार्थम्' इत्यन्तः क. ग. पाठः।

३ 'कैयट इति दिक्' ख. घ. पाठः।

४ 'उत्तमः' इत्यारभ्य 'पूर्वनिपातः' इत्यन्तः क. ग. पाठः।

५ इतोऽग्रे—'अत्र पूरणाऽर्थः प्रत्यय एव गृह्यते, न 'उम्भना'दिशब्दाः, प्रत्यासन्नत्वात्, अत्र शास्त्रे पूरणप्रत्ययविधानेन तज्ज्ञानरूपप्रकरणाच्च, 'लोपे चेत्पादपूरणमि'त्यादिनिर्देशाच्च। तेन 'कुम्भपूरणभव' इत्यादि सिद्धम्। 'तान्युञ्छषष्ठाऽङ्कते'त्यत्र 'उञ्छात्मकः षष्ठ' इति समासो बोध्यः' इति ख. घ. पाठः।

६ इतोऽग्रे—'एतेनोञ्छषष्ठ इत्यत्र षष्ठशब्दस्य 'षष्ठाऽष्टमाभ्यां चे'ति भागार्थका-

केवलगुणवाची, गुणोपसर्जनद्रव्यवाची च गृह्यते, व्याप्तिन्यायात्, तथैव भाष्ये उदाहरणाच्चेत्याह—काकस्येत्यादि । अत एव आ कडारसूत्रोक्त-गुणवचनानां नेह ग्रहणं, तद्धिताऽन्तत्वेन कार्ष्ण्यादेरसङ्ग्रहापत्तेः । अत एवाऽत्र वचनपदाऽनुपादानम् । तदेदमिनि । अन्यथा 'ब्राह्मणस्य ये दन्तास्ते शुक्ला' इत्यर्थे शुक्लपदेनाऽसामर्थ्यात्समासप्राप्तिरेव नेति भावः[1] । इदानीन्तु 'शुक्ल'शब्द एव विशेष्यसमर्पक इति तात्पर्यम् ।

अनित्योऽयं गुणेनेति । पूरणाऽर्थेनेत्यपि बोध्यम् । इत्यादीति । 'लोपे चेत्पादपूरणमि'ति—आदिशब्दाऽर्थः । तेन 'कुम्भपूरणभवः' 'उञ्छषष्ठः'[2] 'चन्दनगन्धः' 'घटरूपमि'त्यादि सिद्धम् । अत एव 'षष्ठी'ति सूत्रे भाष्ये 'तत्स्थैश्च गुणैः समासो वक्तव्य' इति—अस्य प्रतिप्रसववचनमारब्धम् । 'तात्स्थ्यवद्गुणवाचकैः समास' इत्यर्थः । तात्स्थ्यं च गुणिसमानाधिकरण-स्ववाचकशब्दाऽभाववत्त्वम् । 'तत्स्थैरि'त्यस्य 'द्रव्यस्थत्वेनैव प्रतीयमानै-र्न तु तदभेदेनाऽपि प्रतीयमानैरि'त्यर्थात् । न हि गन्धरूपगुणवाचकः कोऽपि शब्दो गुणिसमानाधिकरणः । 'पिनष्टि गन्धानि'त्यादौ 'गन्ध'-शब्दो न गुणशब्दः, किन्तु चन्दनत्वादिजातिनिमित्तकोऽन्य एव, मालतीकुसुमादावदर्शनात् । शौक्ल्यादेस्तु न तात्स्थ्यम् । तद्बोधक-शुक्लादिशब्दस्य गुणिसमानाधिकरणत्वात् । न च 'घटः शुक्ल' इत्यादौ गुणवचनेभ्यो मतुपो लुकः सत्त्वेन, गुणवत्त्वेनैव बोध इति, कथं गुणिसामानाधिकरण्यं गुणबोधक[3]शब्दस्येति वाच्यम् । अभेदा-ऽध्यवसायेन तथा प्रयोगसत्त्वेनाऽक्षतेः । इदमेवाऽभिप्रेत्य तत्र तत्र भाष्ये

---

ऽन्प्रत्ययान्ततया पूरणाऽधिकारविहितत्वाऽभावान्न निषेध इत्यपास्तम्'–इति ख. घ. पाठः ।

१ 'अत एव' इत्यारभ्य 'वचनपदानुपादानम्' इत्यन्तः क. ग. पाठः ।

२ 'पूरणार्थेनेत्यपि बोध्यम्' इत्यारभ्य 'उञ्छषष्ठः' इत्यन्तः क. ग. पाठः ।

३ 'गुणस्येति वाच्यम्' इति ख. ङ. पाठः ।

उच्यते—'गुणवचनानामाश्रयतो लिङ्गवचनानी'ति। वार्त्तिकन्तु 'घटस्य शुक्ल' इति भेदविवक्षाया अपि सत्त्वेन, पक्षे मतुपोऽश्रवणाऽर्थम्।

एतेन 'वार्त्तिकमतेऽभेदाऽध्यवसायो नास्ती'ति परास्तम्। किञ्चैवं गन्धादिभ्यो मतुपो लुगभावाऽर्थम् अनभिधानमाश्रयणीयम्। मन्मते तु वचनग्रहणेनाऽभेदाध्यवसाययोग्यानामेव ग्रहणेन, न गन्धादिष्वतिप्रसङ्गः।

अयं च प्रतिप्रसवः प्रतिपदोक्तत्वेनाऽनन्तरत्वेन च 'गुणस्य ने'ति निषेधस्यैव, न समानाधिकरणत्वप्रयुक्तस्य। तेन 'गुणस्य गन्धस्ये'त्यादौ निषेध एव। न चैवं प्रकरणादिना यदा तीव्रादिशब्दास्तीव्रत्वादिविशिष्ट-गन्धपरास्तदा 'चन्दनस्य तीव्र' इत्यादौ समासाऽऽपत्तिः। पूर्वोक्तरीत्या तेषामपि तत्स्थत्वादिति वाच्यम्। 'तीव्रं घृतम्', 'मृदु चन्दनमि'त्यादि-दर्शनेन तत्स्थत्वाऽभावादित्याहुः।

अनित्यत्वादेव च सङ्ख्यावाचकशब्दैर्न निषेधः। 'क्रोशशतयोजन-शतयोरि'त्यादिनिर्देशाच्चेति दिक्।

'सुहिते'ति सूत्रे भावे क्तः। तेन 'फलानां तृप्तिरि'त्यादावपि निषेध इत्याहुः। तदाह—तृप्त्यर्था इति। 'फलानामि'ति करणस्य शेषत्वविवक्षायां षष्ठी।

तृतीयेति। तत्र हि करणत्वेन भानम्, षष्ठीसमासे तु सम्बन्धत्वेनेति न निषेधवैयर्थ्यम्। श्रुतिकृतविशेषमप्याह— स्वरे विशेष इति। तृतीया-समासे 'तत्पुरुषे तुल्यार्थे'ति बाधित्वा'थाथा'दिस्वरेणाऽन्तोदात्तत्वे प्राप्ते, 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरः। षष्ठीसमासे त्वन्तोदात्तः स्यात्। 'पितॄनताप्सीदि'ति भट्टिप्रयोगदर्शनेन तृप्त्यर्थानां सकर्मकत्वात्कर्मणि क्तः।

एतेन 'सुहिताऽर्थ'ग्रहणसामर्थ्यात्तद्योगे करणस्य शेषत्वविवक्षैवे'ति निरस्तम्। 'फलैर्नानाविधैश्चित्रैः, स्वादुशीतैश्च वारिभिः। तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियमि'ति भट्टिप्रयोगविरोधाच्चेत्याहुः।

---

१ 'तृपेः' इति ख. पाठः।

द्विजस्येति। 'कुर्वन्नि'त्यपेक्षया न कर्मणि षष्ठी। 'न लोके'ति निषेधात्। नाऽपि घटाद्यपेक्षया। असामर्थ्यात्समासाऽनापत्तेः। किन्तु क्रियाऽपेक्षा शेषे इत्याह—किङ्कर इत्यर्थ इति।

ब्राह्मणस्य कृत्वेति। तादर्थ्यरूपसम्बन्धस्य सम्बन्धत्वेन विवक्षायां षष्ठी। 'ब्राह्मणसम्बन्धिक्रियाऽनन्तरमि'त्यर्थः।

रक्षित इति। भाष्यसंमतं चैतदेव। तत्र हि अकृदव्ययैरुच्चै-रादिभिरसामर्थ्येनाऽसमासमुक्त्वा, कृदव्ययमेवोदाहृतम्। तेनाऽन्या-ऽव्ययैः सति सामर्थ्ये समास इष्ट इति गम्यते। अत एव 'सर्वपश्चादि'ति 'अनेकमन्यपदार्थे' इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते। 'ततः पश्चात् स्रंस्यते' इत्यत्राऽप्याद्यादित्वात्षष्ठ्यन्तादेव तसिः।

अत्र वदन्ति—'भाष्ये 'द्विजस्य कुर्वन्, कुर्वाणः, कृत्वे'त्येवंजातीयके 'कर्तृकर्मणोरि'ति षष्ठ्या 'न लोके'ति निषेधात्, कटाद्यपेक्षषष्ठ्यां त्वसामर्थ्यात्समासप्राप्तिरेव नेत्याशङ्क्य, 'द्विजस्य द्विषन्' 'पुरा सूर्यस्यो-देतोरि'त्याद्युदाहृतं सदव्ययविषये। 'द्विषः शतुर्वावचनं, तोसुन्कसुनो-रप्रतिषेध' इत्युक्तस्तत्र कारकषष्ठी भवत्येवेति चोक्तम्। ततो ज्ञायते—'ईदृशे विषये कारकस्य शेषत्वविवक्षा, तादर्थ्यादेः सम्बन्धत्वविवक्षा च नाऽस्ति। (सम्बन्ध्यन्तरानिरपेक्षं क्रियायां षष्ठ्यन्ताऽन्वयश्च नास्ति)। ऋषितात्पर्यं च ऋषिवाक्येनैव निर्णेयम्। पाणिनितात्पर्यनिर्णयाऽर्थमेव भाष्यकृतः प्रवृत्तेरि'ति। स्वकर्तव्यमिति। कर्तृषष्ठ्या समासः।

स्वरे भेद इति। तव्यति कृदुत्तरपदप्रकृतिस्वरेणाऽन्तस्वरितत्वम्। तव्येन तु समासे मध्योदात्तं स्यात्। शेषषष्ठ्यां यद्यपि न स्वर-

१ 'क्रियाऽपेक्षया' इति ख. घ. पाठः।

२ 'अत एव' इत्यारभ्य 'षष्ठ्यन्तादेव तसिः' इत्यन्तः क. ग. पाठः।

३ 'भवत्येव वेत्युक्तम्' ख. घ. पाठः।

४ अयं ख. घ. पाठः। क. ग. नास्ति।

भेदस्तथाऽपि कारकषष्ठ्यामस्त्येव । समासनिषेधश्चाऽविशेषादुभयोरपीति भावः ।

तक्षकस्येति । 'परिनिष्ठितविभक्त्या समास' इति पक्षे इदम् । अत्र[1] समानाधिकरणसमासं बाधित्वा षष्ठीसमासः प्राप्तः, परत्वात् । नन्वेवं 'कटोऽपि कर्म, भीष्मादयोऽपी'तिपक्षे द्वयोरपि षष्ठ्यन्तयोर्विषप्रभृतिनाऽन्वयो, न परस्परमित्यसामर्थ्यात्कथं समासप्राप्तिरिति चेन्न[2] । पार्ष्ठिकाऽन्वयमादाय तत्पक्षेऽपि सामर्थ्यस्य सत्त्वात्[3] । अत्र च निषेध एवाऽयं ज्ञापक इत्याहुः ।

[4]परे त्वस्मादेव ज्ञापकात्तत्पक्षेऽपि परस्पराऽन्वय एव । कारकाणां क्रियाऽन्वयनियमश्च न साक्षादेव, किन्तु यद्द्वारा कारकत्वं तद्द्वारकोऽपीति न दोष इत्याहुः । न च 'समानाधिकरणमसमर्थवदि'त्यसामर्थ्यम् । तस्य 'इसुसोरि'तिषत्वमात्रविषयकत्वात् । अत एव 'समर्थ'सूत्रे एतत्प्रयोजनविचाराऽवसरे 'सर्पिः कालकमि'ति[5] प्रकरणाऽन्तरस्थं षत्वमेवोदाहृतम् । अत एव समानाधिकरणप्रकरणपठितं 'समान-मध्य-मध्यम-वीराश्चे'ति सार्थकमित्याशयः[6] । यदि तु तेन ज्ञापकेन समानाधिकरणपदपुरस्कार-

१ 'अत्र' इत्यारभ्य 'परत्वात्' इत्यन्तः क. ग. पाठः ।

२ इतोऽग्रे—'कट एव कर्म, भीष्मादयस्तु तत्सामानाधिकरण्यमात्रात्तद्विभक्तिं लभन्ते' इति पक्षेऽदोषात्' इति ख. घ. पाठः ।

३ 'सत्त्वाच्च' ख. घ. पाठः ।

४ 'परे तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ।

५ 'सर्पिः कालकमित्यत्र' इति ख. पाठः ।

६ 'समानमध्यमध्यमवीराश्चे'ति सार्थकम् । न च 'धातुसहचरितप्रत्ययेन यत्र कर्माद्यभिधीयते, तत्र समानाधिकरणमपि न असमर्थमि'त्यर्थका'ऽभ्रात्वभिहितमि'ति वचनेन 'वीरः पचन्ति'त्यादौ सामर्थ्यसत्त्वात्तत्र तेषां चारितार्थ्यम् । अनभिधानेन समानादिभिः 'पचन्ति'त्यादेः समासस्यैवाऽभावादिति सूत्राऽऽशयः' इति ख. घ. पाठः ।

विहितसमासाऽविषयत्वमात्रं तस्य[1] ज्ञाप्यते, तदा 'धातुसहचरितप्रत्ययेन यत्र कर्माद्यभिधीयते, तत्र समानाधिकरणमपि नाऽसमर्थमि'त्यर्थका- 'ऽधात्वभिहितमि'ति वचनात् 'यजुषः पीयमानस्ये'त्येवोदाहरणमिति बोध्यम् । स्पष्टं चेदमत्र[2] भाष्ये । समर्थसूत्रे[3] प्रकरणान्तरस्थोदाहरणदानन्तु तत्राऽप्यस्य प्रवृत्तिरिति बोधनायेति दिक् ।

नन्वत्र विशेषणसमासस्य दुर्वारत्वेन नेदं निषेधोदाहरणं युक्त- मत आह—विशेषणसमासस्त्विति । ननु विशेषणविशेष्योभयोपादाना- त्समस्यमानपदजन्यबोधप्रकारयोः परस्परं व्यभिचारित्वे एव समास इति, कथमत्र तस्य प्राप्तिः, तक्षकत्वस्य सर्पत्वाऽव्यभिचारादिति चेन्न । 'कैलासाऽद्रिः' 'भावपदार्थः' 'तर्कविद्ये'त्यादिप्रयोगाऽसङ्गत्या तत्रैव प्रवृत्तौ मानाऽभावात् । 'शिंशपावृक्ष' इति भाष्यध्वनितसमासाऽनापत्तेश्च । शिंशपात्वं च वृक्षत्व-फलत्वव्याप्यं भिन्नमेव । उभयसाधारणैकजातौ मानाऽभावात् । एवं च न व्यभिचारः परस्परम् । किञ्चैवं 'तक्षको नाग- वर्द्धक्योरि'तिकोशात्तक्षकत्वस्याऽपि तद्व्यभिचरितत्वम् । अत एव कैयटेन 'उभयोपादानं स्पष्टाऽर्थमि'त्युक्तम् ।

इहेति । 'तक्षकस्य सर्पस्ये'त्यादौ । बहुलेति । न चेष्टाऽऽपत्तिरेव समासेऽस्त्विति वाच्यम्[4] विशेषणसमास-षष्ठीसमासयोः फलेऽविशेषात् । तस्मादेतन्निषेधोदाहरणे विशेषणसमासाऽभाव एवाऽभ्युपगन्तव्यः । एवं च 'प्रथमान्तेनैव समास' इति पक्षेऽपि षष्ठ्यन्ततत्प्रयोगाऽभाव एव, अनभिधानात्, बहुलग्रहणाद्वेति वदन्ति ।

---

१ 'तस्य ज्ञाप्यते, तदा 'यजुषः पीयमानस्ये'त्येवोदाहरणमिति बोध्यम्' इति ख. घ. पाठः ।

२ 'स्पष्टं चेदं भाष्ये' ख. घ. पाठः ।

३ 'समर्थसूत्रे' इत्यारभ्य 'बोधनायेति दिक्' इत्यन्तः क. ग. पाठः ।

४ 'निषेधविषये' इति ख. घ. पाठः ।

न चैवम् 'अन्यपदार्थे' इति सूत्रप्रयोगाऽसङ्गतिः। 'अन्यस्य पदस्याऽर्थे' इति तदर्थात्। एवम् 'एकाचो द्वे' इति सूत्रे 'एकाऽच' इति कर्मधारयो, बहुव्रीहिर्वा ? । आद्ये 'पपाचे'त्याद्यसिद्धिरि'ति भाष्यमसङ्गतं स्यात्। त्वद्रीत्या कर्मधारयाऽप्राप्तेरिति चेन्न । उक्त[1]सूत्रनिर्देशेनाऽस्य निषेधस्याऽनित्यत्वात् । एवञ्च भाष्यवृत्त्याद्युदाहृतेषु 'राज्ञः पाटलिपुत्त्रकस्य' 'शुकस्य माराविकस्य' 'तक्षकस्य सर्पस्ये'त्यादिष्वेव भाष्य–वृत्त्यो[2]रेतदुदाहरणत्वकथनप्रामाण्येन बहुलग्रहणात्तदभावकल्पनं, नाऽन्यत्र[3]। एवं च 'नीलोत्पलस्ये'त्यादि साध्वेवेति वदन्ति ।

यत्तु 'राज्ञः पाटलिपुत्त्रकस्ये'त्यादिप्रतीकमुपादाय कैयटेनोक्तं-'षष्ठीसमासे पूर्वनिपाताऽनियमः स्यात्। विशेषणसमासस्तु स्यादेवे'ति । तन्न[4] । 'अप्रधानमुपसर्जनमि'त्यन्वर्थतामाश्रित्य,द्रव्याऽपेक्षया गुणादीनां विशेषणतैवेति व्यवस्थया विशेषणसमास इव, षष्ठीसमासेऽपि तन्नियमसम्भवात् । 'यदि[5] तूपसर्जनमन्वर्थं नाऽऽश्रीयते, तदा कैयटः सम्यगेवे'त्यन्ये ।

यत्तु 'समानाधिकरणेन षष्ठीसमासनिषेधविषये विशेषणसमासो न, निषेधसामर्थ्यादि'ति । तन्न । 'श्रज्याऽवमकन्पापवत्सु भावे कर्मधारये' इति सूत्रेण 'गमनस्य श्रेयस' इत्यादौ कर्मधारये पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे त्वन्तोदात्तत्वमिति स्वरभेदेन तत्सार्थक्यात् । किञ्च 'गोर्धेनोरि'त्यादौ विभक्त्यन्तरे चरितार्थ-'पोटायुवती'त्यादीनां परत्वेन बाधकस्य षष्ठीसमासस्य निषेधेन चारितार्थ्यम् । तत्र हि षष्ठीसमासे गुणप्रवृत्ति-

१ 'उक्तसूत्रनिर्देशेन' इत्यारभ्य 'एवञ्च' इत्यन्तः क. ग. पाठः ।

२ 'भाष्यवृत्त्यादिप्रामाण्येन' ख. घ. पाठः ।

३ 'नाऽन्यत्रेत्याशयात्' ख. घ. पाठः ।

४ 'तन्न । विशेषणविशेष्यभावे कामचारादव्यवस्थायां प्राप्तायामप्रधानमुपसर्जनमित्यन्वर्थतामाश्रित्य द्रव्याश्रितत्वेन गुणादीनामप्राधान्यात् , द्रव्याऽपेक्षया गुणादीनां विशेषणतैवेति व्यवस्थया' इति ख. घ. पाठः ।

५. क. पाठः ।

निमित्तकत्वेनाऽप्रधान्यात्प्रथमानिर्दिष्टत्वाच्च धेनोः पूर्वनिपातो, विशेषणसमासे तु 'गोरि'ति भेदात्। तदाह-गोर्धेनोरिति। आदिना 'भोज्यस्योष्णस्ये'त्यादिसङ्ग्रहः। एवं चेदृशे विषये विशेषणसमासो भवत्येवेत्याहुः।

केचित्तु 'प्रथमानिर्दिष्टम्' 'उपसर्जनं पूर्व'मि'ति—सूत्रभाष्योक्तरीत्या 'षष्ठी'तिसूत्रस्य 'येन सुबन्तेन समासस्तदर्थनिरूपितसम्बन्धाऽर्थकषष्ठ्या एव समास' इत्यर्थः। प्रत्यासत्त्याऽयमेवाऽर्थ उचितश्च। एवं च तादृशाऽन्वयघटितं सामर्थ्यमेव तत्प्रवृत्तौ निमित्तम्। न चेदृशं सामर्थ्यं प्रकृते। तदुक्तं भाष्ये-'असामर्थ्यादत्र न भविष्यती'ति। एवं च समानाधिकरणग्रहणं व्यर्थमेवेत्यर्थादुक्तं भगवता। 'कथमसामर्थ्यम्। असमानाधिकरणत्वात्' इत्यादिभाष्यन्त्वेतदभिप्रायाऽनभिज्ञपूर्वपक्षिसिद्धान्तैकदेशिनोरिति, तन्नाऽर्थसाधकम्। एवं च 'तक्षकस्ये'त्यादौ यदि विशेषणसमासो नेत्यत्र दृढं मानमस्ति, तदा तदभावो बाहुलकात्कल्प्यो, नो चेन्मे'ति वदन्ति।

'षष्ठी'[3]त्यादि 'क्त्वा चे'त्यन्तसूत्रसन्दर्भः 'सप्तमी शौण्डैरि'त्यतः प्राक् कुतो न कृतः। एवञ्च 'समानाधिकरणेने'ति नैव कर्त्तव्यं भवति। परत्वात् समानाधिकरणसमासेन बाधसिद्धेरिति चिन्त्यम्।

व्याख्यानात् 'पूजायामि'[2]ति सूत्रोपलक्षणाऽर्थमित्याह-मतिबुद्धीति।

राज्ञामिति। 'क्तस्य च वर्त्तमाने' इति षष्ठी। यत्तु 'कारकषष्ठ्यैवाऽयं समासनिषेधः, प्रतिपदोक्तत्वात्, शेषषष्ठ्या तु समासः स्यादेवे'ति। तन्न। फ[4]ले विशेषाऽभावेन निषेधवैयर्थ्याऽऽपत्तेः। 'थाथघञ्क्ते'ति-'समासस्ये'तिसूत्राभ्यामुभयथाऽप्यन्तोदात्तत्वस्यैव प्राप्तेः। तस्माच्छेष-

१ 'प्राधान्यात्' इति क. पाठः।

२ इतोऽग्रे—'पूजाभ्य' इत्येव सिद्धे 'पूजाया'मिति निर्देशः सूत्रोपलक्षणार्थं इत्याह—मतिबुद्धीति' इति ख. पाठः।

३ 'षष्ठीत्यादि' इत्यारभ्य 'चिन्त्यम्' इत्यन्तः क. ग. पाठः।

४ 'फले विशेषाऽभावात्' इति ख. पाठः।

षष्ठ्याऽपि समासस्य निषेधोऽयम् । तद्ध्वनयन्नाह—[1]भूते क्तान्तेन सह तृतीयान्तस्येति । ननु भूते क्तो दुर्लभः, 'तक्रकौण्डिन्य'न्यायेन 'मती'-त्यादिवर्त्तमानकालेन [2]भूतकालस्य बाधादिति चेन्न । तस्य न्यायस्य विधेय-विषयत्वेनाऽनुवादविषयेऽप्रवृत्तेः । अत एव 'तेन प्रोक्तमि'त्यधिकारे 'उपज्ञाते' इति सङ्गतम् ।

इदमेषामिति । 'क्तोऽधिकरणे चे'ति क्तः । 'अधिकरणवाचिनश्चे'ति कर्त्तरि षष्ठी । न च 'किं शब्दस्य वृत्तिस्थानमि'त्यर्थे 'किंवृत्तमि'ति-समासप्रयोगाऽसङ्गतिः, [3]अनेन निषेधाऽऽपत्तेरिति वाच्यम् । कर्त्तरि क्ते 'किमा वृत्तं = निष्पन्नं—किंवृत्तमि'ति तदर्थेनाऽदोषात् ।

कर्मणि च । क्त-षष्ठ्यौ सन्निहिते । तत्र क्तेन न सम्बन्धः, पूजायां प्रतिषेधाऽऽनर्थक्यापत्तेः । तस्मात् 'कर्मणी'त्यस्य षष्ठ्यैव सम्बन्धः । तत्र 'अपां स्रष्टे'त्यादावनेनैव सिद्धे 'तृजकाभ्यामि'त्यस्य वैयर्थ्याऽपत्तेः

---

१ 'भूते क्तान्तेनेति' इति ख. घ. पाठः ।

२ 'भूतकालस्य बाधात् । यत्त्वासीदित्यध्याहारेण 'धातुसम्बन्धे' इति भूते क्त इति । तन्न । 'सुराऽसुरैः पूजिताय नम' इत्यादिप्रयोगे धातुसम्बन्धा-ऽभावात् । 'राजपूजितोऽस्ती'त्यादौ दोषाच्चेति चेन्न । 'तेन प्रोक्तमि'त्यधिकारे 'उपज्ञाते' इति प्रत्ययविधानेन, 'भूतकालस्य 'मतिबुद्धी'ति वर्त्तमानकालो न बाधक' इति ज्ञाप्यते । अन्यथा वर्त्तमाने क्तप्रत्यये, 'क्तस्य च वर्त्तमाने' इत्यस्य कर्त्तरि षष्ठ्या दुर्वारत्वेन, उपज्ञातशब्दयोगे तृतीयान्तत्वाऽसम्भवात् । न चेयमर्थान्तरे तृतीया । पूर्वोत्तरत्र कर्त्तरि तृतीयाया एव निर्णीतत्वात् । न च ज्ञानाऽर्थत्वे एव ज्ञापकम् । 'पूजितो यः सुरासुरैरि'त्यादिप्रयोगाऽनुरोधेन सामान्यविषयकत्वस्यैव न्याय्यत्वादित्याहुः । परे तु 'तस्माज्ज्ञापकात्तक्र-कौण्डिन्यन्यायो येन नाप्राप्तिन्यायेन समानविषयः । न चाऽत्र तस्य विषय' इति वदन्ति' इति ख. घ. पाठः ।

३ अनेन निषेधाऽऽपत्तेरिति वाच्यम्' इति क. ग. पाठः ।

'च' शब्द इत्यर्थस्तदाह—कर्मणीति। स्पष्टं चेदमत्रैव भाष्ये। एवं च क्तस्याऽननुवृत्तिरेव।

तृजकाभ्याम्। यत्तु[1] 'कर्त्तृषष्ठ्या' इति वृत्तिकृत्। तस्याऽयं भावः— 'भवतः शायिके'त्युदाहरणम्। 'ओदनस्य पाचक' इत्यादौ 'कर्त्तरि चे'ति-निषेधः। तत्र हि कर्त्तरीति तृजकयोर्विशेषणमि'ति। तन्न। तृच उत्तराऽर्थत्व-कल्पनाऽऽपत्तेः[2]। अतत्वेन तृजकविशेषणताया एव न्याय्यत्वाच्चेत्याश-येनाऽऽह—कर्त्रर्थतृजकाभ्यामिति। अत्र यद्यपि 'कर्त्तरी'ति अकस्यैव विशेषणं, तत्र सम्भवव्यभिचारयोः सत्त्वात्, तथापि तृजंशे[3] बाधाऽभावेन उपरञ्जकत्वमस्त्येवेति भावः। तत्र सम्भवः-'ओदनस्य पाचक' इत्यादौ। व्यभिचारः—इक्षुभक्षिकेति। 'पर्यायाऽर्हणोत्पत्तिषु ण्वुजि'ति भावे ण्वुच्। धात्वर्थनिर्देशे ण्वुल्वा। कर्मणि षष्ठ्या समासः। कर्त्तुः प्रयोगा-ऽभावेन 'उभयप्राप्तावि'त्यस्याऽप्राप्तेः। ननु तृच्साहचर्यात्कर्त्रर्थकाऽकस्यैव ग्रहणं भविष्यति, किं 'कर्त्तरी'त्यनेनेति चेत्[4]। स्पष्टाऽर्थत्वात्।

पत्यर्थेति। 'अभिव्यक्तपदार्था ये' इति न्यायात्तस्यैव[5] तत्र ग्रहणादिति भावः। एतेन 'वज्रस्य भर्त्ते'त्युदाहरणमयुक्तमि'त्यपास्तम्।

कैयट इति। पूर्वोत्तरसाहचर्येण कारकषष्ठ्यैव समासनिषेधादिति भावः। 'गुणिविशेषक' इति प्रतीकमुपादाय 'बहुषु बहुवचनमि'ति सूत्रे कैयटे स्फुटमेतत्। 'अस्मादेव भाष्यप्रयोगादनित्योऽयं प्रतिषेध' इति-

१ 'यत्तु' इति क. ग. पाठः। ख. घ. नास्ति।

२ इतोऽग्रे—'उपात्तसूत्रे प्रयोजने सम्भवत्युत्तरार्थत्वमात्रकल्पनस्याऽन्याय्य-त्वात्' इति ख. घ. पाठः।

३ 'तृजंशे उपरञ्जकमस्त्येवेति भावः' इति ख. घ. पाठः।

४ 'इति चेन्न' ख. घ. पाठः।

५ 'इति न्यायादिति भावः' इति ख. घ. पाठः।

मताऽन्तरमपि तत्र तेनोक्तम्[1]। 'तत्प्रयोजकः' 'जनिकर्त्तुरि'त्यादिनिर्देशो[2] अप्यत्र मानम्। न चैवं 'त्रकाभ्यामि'त्येव वाच्यम्। तृन्योगे 'न लोके'तिनिषेधेन कारकषष्ठ्या अभावादिति वाच्यम्। 'कर्त्तरी'तिपदवत् अस्याऽपि सत्त्वात्।

कर्त्तरि च। अत्र द्वयोरप्यश्रुतत्वेऽपि, सामर्थ्यात् 'कर्त्तरी'ति षष्ठ्या एव विशेषणम्। भवतः शायिकेति। 'पर्याये'ति ण्वुच्। धात्वर्थे ण्वुल्वा।

नित्यं क्रीडा। जीविकायां निषेधस्य सिद्धत्वात्, 'नित्य'ग्रहणसामर्थ्याच्च विधिरेवाऽयम्। 'दन्तानां लेखिते'त्यादौ जीविकायां तृचः सम्भवेऽपि, क्रीडायां तृचोऽसम्भवाद्विच्छिन्नत्वाच्च तस्याऽत्राऽसम्बन्ध इति मत्वाऽऽह—अकेनेति। न चैवम् 'अके जीविकाऽर्थे' इत्यत्राऽकग्रहणं व्यर्थम्, प्रतिपदोक्ततया एतद्विहितसमासस्यैव तत्र ग्रहणादिति वाच्यम्। 'प्राचां क्रीडायामि'तिवत् 'जीविकायामि'त्येव सिद्धेऽर्थग्रहणवत्तस्याऽपि व्यर्थत्वात्। भावे ण्वुलिति। यद्यपि भावे 'धात्वर्थनिर्देशे' इत्येव सिद्धमिति, 'संज्ञायामि'त्येतदधिकरणाऽर्थमि'ति कृदन्ते वक्ष्यते, तथाऽपि भावेऽपि[3] परत्वादस्यैव प्रवृत्तिरित्याशयः। उद्दालकः= श्लेष्मातकः। वस्तुतः 'संज्ञायामिति ण्वुलि'त्येव पाठः।

षष्ठीसमासप्रसङ्गेन तदपवादमेकदेशिसमासमाह—पूर्वापरेति। ननु कर्मधारयान्मत्वर्थीयो नेष्टः। वृत्तिद्वयकल्पनागौरवात्। स्पष्टं चेदं 'वर्णो वर्णेने'ति सूत्रे भाष्ये[4]। अत एवाऽपृथुशब्दान्नञ्तत्पुरुषान्मतुप्नेति 'र ऋतं'[5] इति सूत्रे भाष्यकैयटयोरुक्तम्। एवं च 'एकदेशिने'त्यनुपपन्नमिति चेन्न।

---

१ 'तेनोक्तम्। अत एव तत्प्रयोजकः' इति ख. घ. पाठः।

२ 'निर्देशाः सङ्गच्छन्ते' ख. घ. पाठः।

३ अपिः ख. घ. नास्ति।

४ 'स्पष्टं चेदं वर्णो वर्णेनेति सूत्रे भाष्ये' इति क. ग. पाठः।

५ लिखितेषु प्रायेण 'रऋत' इति रेफघटितः पाठ उपलभ्यते।

कर्मधारयान्मत्वर्थीये योऽर्थः प्रतीयते, तस्मिन्बहुव्रीहिणा लभ्ये हि लाघवगौरवचिन्ता, यथा चित्रगुरित्यादावित्यदोषात् । 'एकदेश'शब्दो ह्यवयवे रूढः । न च रूढ्यर्थो बहुव्रीहौ लभ्यः । अत एव 'गौरखरवदरण्यमि'त्यादिसिद्धिः । अत्र हि जातिविशेषवान्प्रतीयते, न तथा प्रतीतिर्बहुव्रीहौ । 'अदण्डी''अवाग्मी'त्यादौ मत्वर्थीयाऽन्तेनैव नञ्समासः, न तु तत्र बहुव्रीहिणा गताऽर्थत्वम् । दण्डसंयोगनिषेधस्य, सम्यग्बहुभाषित्वनिषेधस्य च ततोऽनवगमात् । स्पष्टं चेदं मतुप्सूत्रे कैयटे । 'सर्वधनी'त्यादि तु व्रीह्यादिपाठात्सिद्धमित्याहुः । 'असुब्वतोऽङ्गस्ये'ति प्रत्ययस्थात्सूत्रस्थभाष्यप्रयोगेण क चिल्लाघवाऽनादरोऽपीत्यन्यत् । यद्यपीह 'एकगोपूर्वादि'ति ठञ् प्राप्तस्तथाऽप्यत एव निर्देशादिनिर्बोध्यः ।

अवयवित्वं चाऽवयवाऽपेक्षम् । तद्वाचकाश्चोपस्थितत्वात्पूर्वादय एवेत्याह-**पूर्वादय इति** । **अधिकरणं**-द्रव्यम् । 'एकत्वविशिष्टद्रव्यवृत्तिनाऽवयविवाचकेने'ति वाच्योऽर्थः । फलितमाह-**एकत्वेति** ।

**षष्ठीसमासेति** । यद्यपि कायशब्दादेरवयविवाचिनोऽवयवे लक्षणायां कर्मधारयेण पूर्वकायादिसिद्धिः, ऊर्द्ध्वकायवत्, तथापि कायपूर्वादिनिवृत्तये सूत्रमिति भावः । **पूर्वं कायस्येति** । 'तस्य परमि'तिनिर्देशादवयववाचियोगे पञ्चमी न, किन्तु षष्ठीति भावः । **पूर्वं नाभेरिति** । 'नाभेरि'ति दिग्योगलक्षणा पञ्चमी । नाभिरत्राऽवधिर्नाऽवयविनीति न तेन समासः । 'नाभेर्यः पूर्वो भागः स कायस्याऽवयव' इति ह्यर्थः । कायेन तु स्यादेव-'पूर्वकायो नाभेरि'ति । पूर्वशब्दस्य नित्यसापेक्षत्वात्, प्राधान्याच्च ।

---

१ 'यथा चित्रगुरिति' इति ख. पाठः ।

२ 'के चित्तु असुब्वतोऽङ्गस्य' इति ख. घ. पाठः । 'अन्ये तु' इति पा० ।

३ 'लाघवाऽनादरोऽपि ज्ञाप्यते । तेन सर्वधनीत्यादिप्रयोगसिद्धिरित्याहुः' इति ख. घ. पाठः ।

४ 'द्रव्यप्रतिपादकेन' ख. घ. पाठः ।

छात्राणामिति। उद्भूताऽवयवसमुदायविवक्षया बहुवचनम्। अत एवाऽवयवित्वम्। समुदाय-समुदायिसम्बन्धे 'छात्राणामि'ति षष्ठी।

सर्वोऽपि। पूर्वादिभिन्नोऽपि। ज्ञापकादिति। अन्यथाऽह्नस्य सायपूर्वत्वं न स्यादिति भावः।

मध्याह्न इति। 'राजाह' इति टच्। 'अह्नोऽह्न' इत्यह्नादेशः।

'परवल्लिङ्गमि'तिसूत्रभाष्ये तु एकदेशिसमासः प्रत्याख्यायते। तथा हि—अत्र[2] प्राप्तादिषु निषेधो न कार्यः। 'परवल्लिङ्गमि'तिसूत्रे—'तत्पुरुष'-ग्रहणं न करिष्यते। एकदेशिग्रहणात्सिद्धम्। 'द्वन्द्वैकदेशिनोरि'ति-वक्ष्यामि। तदेकदेशिग्रहणं कर्त्तव्यम्?। न कर्त्तव्यम्। एकदेशिसमासो नाऽऽरप्स्यते। कथम् 'अर्द्धपिप्पली'ति?। समानाधिकरणो भविष्यति—'अर्द्धं चासौ पिप्पली चे'ति। षष्ठीसमासोऽपि प्राप्नोति। इष्यत एव षष्ठीसमासः-'अपूपाऽर्द्धं', 'पिप्पल्यर्द्धमि'त्युक्तम्। यत्तु 'द्वितीयतृतीये'ति-सूत्रे भाष्यम्—'अन्यतरस्याङ्ग्रहणं विशेषविधिना मुक्ते सामान्यविधेरप्रवृत्तिज्ञापनार्थम्। किं प्रयोजनम्। अर्द्धपिप्पली। एकदेशिसमासेन मुक्ते षष्ठीसमासो मा भूदि'ति, तदेकदेशयुक्तिरिति[3] बोध्यम्। ईदृशेऽर्थे एव साधुत्वम्। यथोत्तरं मुनीनां प्रामाण्यात्। न च 'अहःसर्वैकदेश'-'अह्नोऽह्न एतेभ्य' इत्येतेषां कर्मधारयेऽप्रवृत्त्यर्थं, प्रतिपदोक्तैकदेशसमासे एव च प्रवृत्त्यर्थमावश्यिकेयं त्रिसूत्रीति वाच्यम्। एतद्भाष्यप्रामाण्यादेव लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्त्या, तत्पुरुषमात्रे तत्प्रवृत्त्यङ्गीकारात्। समप्रविभागादन्यत्र—'अर्द्धोऽऽहारः' 'अर्द्धजरतीयमि'त्यादौ सूत्रमतेऽपि कर्म-

---

१ इतोऽग्रे—'कालेनेति। 'दिनमध्य' इति तु ज्ञापकसिद्धस्याऽसार्वत्रिकत्वाद्बोध्यम्। इत्याहुरिति। परवल्लिङ्गमितिसूत्रभाष्ये तु' इतिरीत्या ख. पाठः।

२ 'तत्र' इति ख. ग. घ. पाठः।

३ 'तदेकदेशयुक्तिपरं बोध्यम्। इत एवाऽस्वरसात्तत्र प्रयोजनाऽन्तरोपन्यासः' इति ख, घ. पाठः।

धारयेणैव निर्वाहस्याऽऽवश्यकत्वाच्च। न च 'पूर्वाऽपरे'तिसूत्रविषयेऽपि षष्ठीसमासाऽऽपत्तिरिति वाच्यम्। अनभिधानेन वारणात्। यद्वा तत्राऽपि षष्ठीसमासो भवत्येवेत्यलम्।

अर्द्धम्। खण्डवाच्यर्द्धशब्दस्त्रिलिङ्गः, 'भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं' समेऽशके' इत्यमरात्। अत्र 'वा पुंसी'ति पूर्वोत्तराऽन्वयि। तत्र 'शकलखण्डे' इति रूपभेदान्नपुंसकत्वे निर्णीते, वचनाच्च पुंस्त्वविकल्पे, 'अस्त्रियामि'ति फलितम्। 'खण्डे' इति स्त्रीलिङ्गन्तु न। 'भिन्नलिङ्गानां न द्वन्द्व' इति तेन परिभाषणात्। 'शकलश्चाऽस्त्री'ति निर्देशेनैव निर्णीतम्। 'अर्द्धे' इति रूपभेदात्पुंस्त्वेऽवगते, 'वा पुंसी'त्यनेनाऽविशेषात्स्त्रीनपुंसके लभ्येते। अत एव 'दन्ताऽर्द्धमास्यात्पतितम्' 'अपूपाऽर्द्धं मया भक्षितमि'तिप्रयोगदर्शनादेवं कोशो व्याख्यातः। 'अवयववाची पुंलिङ्ग' इति भाष्यन्तूपलक्षणमिति कैयटादयः। अन्ये तु भाष्याऽनुरोधेन कोशे 'वा पुंसी'ति पूर्वाऽन्वय्येव। 'दन्तार्द्धमि'त्यादयः समांऽशत्वारोपाऽभिप्रायकाः प्रयोगाः। स्त्रियां प्रयोगाऽदर्शनाच्चेत्याहुः। तत्र प्रकृते योगविभागात्, 'अर्द्धमि'तिनिर्देशेनैव नपुंसकत्वविवक्षया सिद्धे, नपुंसग्रहणं नित्यनपुंसकत्वाऽर्थम्। एतेन 'तस्येदमि'त्यादौ सूत्रे लिङ्गवचनयोरविवक्षितत्वात्, 'बन्धुनो'त्यादौ शब्दस्वरूपाऽपेक्षया नपुंसकनिर्देशदर्शनाच्च निर्देशेन लिङ्गलाभो न युक्त'

१ 'भाष्यनयेऽनभिधानेन वारणात्' इति ख. घ. पाठः।

२ 'केचित्तु तत्राऽपि षष्ठीसमासो भवत्येव, सूत्रन्तु मुख्येऽर्थे 'पूर्वकाय'-सिद्ध्यर्थमेव। अर्थविशेषाऽनादरेण तु भगवता प्रत्याख्यातमित्याहुः' इति ख. घ. पाठः।

३ 'अर्द्धशब्दोऽस्त्रीलिङ्गः' इति ख. पाठः।

४ 'अत एव' इत्यारभ्य 'व्याख्यातः' इत्यन्तः क. ग. पाठः।

५ 'इति कैयटादयः' इत्यारभ्य 'तत्र प्रकृते' इत्यन्तः क. ग. पाठः।

६ 'बन्धुनि' इत्यारभ्य 'दर्शनाच्च' इत्यन्तः क. ग. पाठः।

इत्यपास्तमित्याशयेनाऽह—समांशेति । नित्यं क्लीबे[1] इति च । पिप्पल्या 'एकविभक्ती'त्युपसर्जनत्वाद्ध्रस्वत्वं स्यादत आह—एकविभक्ताविति ।

एवं तर्हि 'पञ्चानां खट्वानां समाहार' इति विग्रहे 'पञ्चखट्वी'ति न सिद्ध्येदत आह—एकदेशीति । इदं च 'अपथं नपुंसकमि'ति सूत्रे 'पञ्चखट्वी'ति भाष्योदाहरणाज्ज्ञायते । अर्द्धं पिप्पलीनामिति । 'अर्द्धपिप्पल्य' इति तु खण्डसमुच्चये बोध्यम् । अर्द्धपिप्पली चाऽर्द्धपिप्पली चाऽर्द्धपिप्पली चेति विग्रहात् । एकदेशिनेति किम् ? । 'अर्द्धं पशोर्देवदत्तस्य' । अत्र देवदत्तः स्वामी, न त्ववयवीति न तेन समासः ।

निषेधं बाधित्वेति । न च[2] अन्प्रत्ययाऽन्तेषु चरिताऽर्थमिदम् । 'पूर[3]णाद्भागे तीयादन्' इत्यस्य 'भागे वर्त्तमानात्पूरणप्रत्ययान्तात्स्वार्थेऽन्' इत्यर्थकतया तेषामपि स्वार्थिकत्वेन पूरणाऽर्थत्वादिति स्पष्टं भाष्ये ।

पक्षे षष्ठीसमास इति । प्रागुक्तप्रत्याख्याने तु 'षष्ठी'ति सूत्राऽनन्तरं 'द्वितीयतृतीयचतुर्थतुर्यैरि'ति पाठ्यमिति बोध्यम्[4] ।

ननु 'भिक्षायाश्चतुर्थी भक्तिरि'ति विग्रहे 'चतुर्थीभिक्षे'ति सूत्रमते । प्रागुक्तप्रत्याख्याने तु पुंवद्भावाऽऽपत्तिरिति चेन्न । लिङ्गविशिष्टपरिभाषाया अनित्यत्वेन ङ्यन्तेनाऽसमासात् । भागार्थकाऽन्प्रत्ययान्तस्य स्त्रीत्वमेव नास्तीति 'विभाषा द्वितीये'ति सूत्रे निरूपितम् । अतस्तत्र टापि एकादेशस्य पूर्वाऽन्तत्वेन ग्रहणात् 'चतुर्थाभिक्षे'तीष्यते' इति न शङ्क्यम् ।

---

१ इतोऽग्रे—'एतेन 'निर्देशादेव नपुंसकत्वे लब्धे पुनस्तद्ग्रहणं सूत्रे लिङ्गाऽविवक्षायां ज्ञापकमि'ति कैयटोक्तं परास्तम्' इति ख. ब. पाठः ।

२ 'न च भागार्थकाऽन्प्रत्ययान्तेषु' इति ख. ब. पाठः ।

३ 'पूरणाद्भागे' इत्यारभ्य 'इत्यर्थकतया' इत्यन्तः क. ग. पाठः ।

४ इतोऽग्रे—'संज्ञाप्रमाणत्वादि'त्यादिनिर्देशानां सामान्याऽपेक्षज्ञापकतया 'पूरणे'त्यादिनिषेधस्याऽनित्यत्वेन षष्ठीसमासः साध्यः । यद्वा 'षष्ठी'तिसूत्राऽनन्तरम्' इति ख. ब. पाठः ।

केवल 'द्वितीया'शब्देन समासे तु सर्वथाऽपि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इति पुंवत्त्वं भवत्येवेति न फले विशेषः।

द्वितीयया अ इति। चकारात्पूर्वं प्रश्लेषे 'ईदूदेदि'ति प्रकृतिभावाऽभावाय सौत्रत्वाद्याश्रयणीयं स्यात्। न चाऽत्र प्रश्लेषे द्वितीयाऽन्तस्यैवाऽकारः स्यात्। प्राधान्येन तयोरेवाऽऽदेशात्। चकारश्चाऽत्र भिन्नक्रमे इति भावः। एकादेशस्य पूर्वाऽन्तत्वेन ग्रहणात् 'प्राप्ता'शब्देन समासः। 'जीविका'शब्दस्य 'गोस्त्रियोरि'ति ह्रस्वे, तदन्ताट्टाबिति बोध्यम्। न च बहुव्रीहिणेदं गतार्थम्। स्वरे विशेषात्। 'प्राप्तसुख' इत्यादौ निष्ठान्तस्य 'जातिकालसुखादिभ्य' इति परनिपाताऽऽपत्तेश्च।

कालाः। परिमीयतेऽनेनेति परिमाणम् = परिच्छेदकम्। तद्वच्च परिच्छेद्यमेवेत्याशयेनाह-परिच्छेद्येति। काला इति। कालसामान्यस्याऽपरिच्छेदकत्वात्कालशब्दस्तद्विशेषपरः। अत एव बहुवचनम्। मासो जातस्येति। षष्ठीसमासे प्राप्ते वचनम्। न च जातः पुरुषः, तस्य हस्तादिकं परिच्छेदकं, न तु कालः, तस्य क्रियापरिच्छेदकत्वादिति वाच्यम्। साक्षात्क्रियापरिच्छेदकोऽपि कालस्तद्द्वारा पुरुषं परिच्छिनत्ति। यस्य हि जननादूर्ध्वं मासो गतः, स एव मुच्यते। तत्र व्यवहारकालजननक्षणयोरन्तरालभावी मासः स्वपरिच्छिन्नजननक्रियया तावत्कालाऽतीतजननाश्रयत्वेन जातमपि परिच्छिनत्त्येवेत्यदोषात्[1]। यद्यपि विग्रहे मासः प्रधानं, तथाऽपि वृत्तौ जातः प्रधानम्। 'मासजातो दृश्यतामि'त्यादौ जातस्यैव दर्शनकर्मत्वादिप्रतीतेः। अत एवौत्सर्गिकमुत्तरपदार्थप्राधान्यमपि निर्बाधम्। इदमेव ध्वनयितुं[2] 'यस्य स' इत्युक्तं विग्रहे। तेन[3] हि गुणीभूतमपि यच्छब्दार्थं तच्छब्देन परामृश्य, तस्य मासजातपदप्रतिपाद्यता प्रदर्श्यते।

---

१ 'मासो जननद्वारा जातमपि' ख. पाठः।

२ 'ध्वनयितुं वृत्तौ यस्य सः' इति ख. पाठः।

३ 'तेन हि' इत्यारभ्य 'तदर्थात्' इत्यन्तः क. ग. पाठः।

'स मासजातपदप्रतिपाद्य' इति तदर्थात्। न त्वेतावताऽन्यपदार्थप्रधानोऽयमिति भ्रमः कार्यः।

नन्वेवं 'मासस्य जात' इत्येवंविग्रहे षष्ठीसमासेनैव सिद्धे, इदं सूत्रं व्यर्थमिति चेन्न। 'जातमास' इत्यनिष्टनिवृत्त्यर्थत्वात्। न च बहुव्रीहिणैव सिद्धे इदं व्यर्थम्। न च स्वरे विशेषः। 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तः' 'वा जाते' इत्यन्तोदात्तत्वात्। 'जातिकालसुखादिभ्यः परा निष्ठे'ति वचनान्न जातस्य पूर्वनिपात इति वाच्यम्। जातवच्छब्देन

१ 'भ्रमः कार्यः। बहुव्रीहौ त्वन्यपदार्थप्राधान्यमेव। अलौकिके प्रक्रियावाक्ये तूभयत्राऽपि नाऽस्य प्रवेशः। इयांस्तु विशेषः, इह जातशब्दात्षष्ठी, 'चित्रगुरि'त्यादौ तु द्वाभ्यामपि प्रथमैव। 'समानाधिकरणानां बहुव्रीहिरि'तिवक्ष्यमाणत्वात्। 'विशेषणविशेष्यभावव्यत्यासेन एकार्थीभाव' इति प्रासोदकादिना तुल्यम्।

यत्तु—मीमांसकाः '[1]यस्य स' इति पदाऽन्तरप्रक्षेपगौरवभिया, समानाऽर्थत्वाऽनुरोधेन च,'चित्राणां गवामयमि'ति विग्रहमाहुः। तन्न। प्रथमान्तानामेव बहुव्रीहेः सूत्रवार्त्तिकभाष्यसंमतत्वेनाऽलौकिके प्रविष्टानामेव परिनिष्ठितानां पक्षाऽन्तररूपे लौकिकेऽपि प्रवेशसम्भवे, उपस्थितपरित्यागेनाऽनुपस्थितकल्पनाया अन्याय्यत्वात्[2]। विग्रहस्य समासवैकल्पिकत्वप्रदर्शनफलकत्वाच्च तदनुगुणतया 'यस्य स' इति पदान्तरप्रक्षेपगौरवं फलमुखत्वान्न दोषाऽऽवहम्। तदुक्तं—

'वाक्याऽर्थे तत्पदं दातुं प्राच्येन विषयेऽर्पिते।
लौकिको वाक्यभेदेन विग्रहो वृद्धसंमतः ॥' इति।

'चित्रा गावो यस्य सन्ति सोऽस्ती'त्युभयत्राऽपि क्रियाऽध्याहारस्याऽऽवश्यकत्वाद्वाक्यस्य भेदो बोध्यः' इति ख. घ. पाठः।

1 'यस्य' इति क. ख. नास्ति। 'यस्य स इति' इति घ. नास्ति।

2 'अन्याय्यत्वात्। अन्यथा तु तदनुगुणतया' इति क. ग. पाठः।

समासे 'मासजातवानि'त्यादावन्तोदात्तार्थमावश्यकत्वात्। अत्र मासे एकत्वं भासते, तं विना परिच्छेदकत्वाऽनवगतेः। न तु राजपुरुषादिवत् सङ्ख्याविशेषाऽभाव एव। 'मासो जातस्ये'त्याद्यर्थे तु नाऽयं समासो-ऽनभिधानादिति दिक्।

उत्तरपदेनेति। हेतौ तृतीया। 'परिमाण्युत्तरपदहेतुकद्विगुसिद्ध्यर्थे' इत्यर्थः। अनेकस्य पदस्य यथा न तत्पुरुषस्तथोक्तम्। बहूनामिति। त्रिपदे 'काला' इत्यनेन तत्पुरुषे, उत्तरपदे परतोऽवान्तरद्विगुर्बोध्यः।

इदं च वार्त्तिकमेतत्सूत्रविषयमेव। तद्धितार्थसूत्रे पठित्वा एतद्विषयस्यैव भाष्यकृतोदाहरणात्। पूर्वत्र त्विति। 'द्व्यहजात' इत्यत्रेत्यर्थः।

सप्तमीबहुवचननिर्देशाद्गणपाठसामर्थ्याच्च 'शौण्ड'शब्दस्तद्घटित-समुदाये भाक्त इत्याशयेनाऽऽह—शौण्डादिभिरिति। शौण्डः= प्रवीणः। शौण्डस्याऽक्रियात्वेऽप्यासक्त्यादिक्रियान्तर्भावात्तद्द्वारकं कारक-सप्तम्या सामर्थ्यमिति कैयटादयस्तच्चिन्त्यमिति निरूपितं कारके सप्तमी-प्रकरणे। 'अक्षकुशल' इत्यादौ तदासक्तत्वाद्यप्रतीतेश्च।

अधिशब्द इति। स चाऽऽधेयप्रधानः। स्पष्टं चेदं 'ख'विधायकसूत्र-भाष्ये। तद्ध्वनयन्नाह—ख इति। अधिकरणशक्तिप्रधानस्य त्वव्ययीभाव-

---

१ 'एकत्वं मुख्यमेव भासते' इति ख. घ. पाठः।

२ 'मासो जातस्य' इत्यारभ्य 'अनभिधानात्' इत्यन्तः क. ग. पाठः।

३ इतोऽग्रे—'सुप्सुपेत्येकत्वस्य विवक्षितत्वादप्राप्ते वचनम्। एकत्वविवक्षायां चेदमेव ज्ञापकम्। स्पष्टं चेदं 'समर्थ'सूत्रादौ भाष्ये' इति ख. पाठः।

४ 'अनेकस्य' इत्यारभ्य 'तथोक्तम्' इत्यन्तः क. ग. पाठः।

५ इतोऽग्रे—'इदमेव बोधयितुं 'तद्धितार्थे' इति सूत्रे पठितमपीदं पुनरत्र सूत्रे पठितं भाष्यकृता' इति ख. घ. पाठः।

६ 'तद्धितार्थसूत्रे' इत्यारभ्य 'भाष्यकृतोदाहरणात्' इत्यन्तः क. ग. पाठः।

७ 'तद्घटितसमुदाये लाक्षणिकः' इति ख. घ. पाठः।

एव । 'अधिहरी'ति यथा । न च 'प्रतेरुरसः सप्तमीस्थादि'ति सूत्रसंमत-सप्तम्यर्थमात्रवृत्ति-प्रति-रूपाऽव्यये चरितार्थस्याऽव्ययीभावस्य परत्वादनेन बाध एवोचित इति वाच्यम् । आधेयप्रधानस्यैवाऽत्र पाठादित्याहुः । शौण्ड । धूर्त्त । कितव । व्याड । प्रवीण । संवीत । अन्तर् । अधि । पटु । पण्डित । कुशल । चपल । निपुण । वृत् । 'आकृतिगणोऽयमि'ति गण-रत्नकृतः । अन्तःशब्दो 'मध्ये' इत्यर्थको मध्यरूपाऽधिकरणवृत्तिः । तद्योगे 'वृक्षे शाखे'तिवदवयविन आधारत्वविवक्षया सप्तम्यां 'वनेऽन्तः वनाऽन्तरि'ति–अनेन तत्पुरुषः । 'वनाऽवयवमध्यरूपाऽधिकरणे' इत्यर्थः । तदविवक्षायां 'वनस्याऽन्तरि'त्यपि भवति । अनेन च नाऽव्ययीभावः । मध्यरूपाऽवयवस्याऽपि बोधेनाऽभक्षन्यायलब्ध-विभक्त्यर्थमात्रवृत्तित्वा-ऽभावात् । किञ्च प्रत्यासत्त्या येन सुबन्तेन समासस्तद्विभक्त्यर्थवाचका-ऽव्ययेनैव स समासः । प्रकृते तु मध्याऽवयवनिष्ठविभक्त्यर्थबोधकत्वेऽपि, वननिष्ठविभक्त्यर्थबोधकत्वाऽभावादव्ययीभावाऽप्राप्तिः । यस्तु मध्यरूपा-ऽवयवाऽनालिङ्गिताऽधिकरणत्वमात्रवृत्तिस्तेनाऽव्ययीभाव एव–'अन्तर्वण-मि'ति । 'वनरूपाऽधिकरणे' इत्यर्थः । 'प्रनिरन्त' इति णत्वम् ।

साङ्काश्ये सिद्ध इति । सङ्काशेन निर्वर्त्तिते वने तपसा सिद्ध इत्यर्थः । यद्वा सा[ङ्का]श्ये नगरे, सिद्धः = ज्ञात इत्यर्थः ।

ध्वाङ्क्षेण । व्याख्यानादर्थग्रहणम् । स्पष्टं चेदं भाष्ये । तदाह—ध्वाङ्क्षवाचिनेति । इवेति । तत्र स इव यो गुरुकुलादौ न चिरं तिष्ठति,

---

१ इतोऽग्रे—'एतत्प्राप्त्ययोग्यस्य विभक्त्यर्थमात्रवृत्त्यन्याऽव्ययस्याऽप्रसिद्धत्वा-दित्याहुः' इति ख. पाठः ।

२ इतोऽग्रे—'एतेन 'तत्पुरुषस्य वैकल्पिकत्वात्पक्षेऽव्ययीभाव' इति निरस्तम् । महाविभाषया पक्षे व्यपेक्षाया एव बोधनेन, तत्राऽव्ययीभावाऽप्राप्तेश्च । यदा तु वनरूपे मध्ये इत्यर्थस्तदा विशेषणसमासेनैव सिद्धमिति दिक्' इति ख. घ. पाठः ।

स एवमुच्यते । एवं हि निन्दा भवति । 'ऋण'ग्रहणमावश्यकोपलक्षणमित्याशयेनाऽऽह—आवश्यक इति । स्पष्टं चेदं भाष्ये । तत्फलमाह—पूर्वाह्णगेयं सामेति । 'तत्पुरुषे कृती'त्यलुक् ।

अत्र सूत्रे मण्डूकप्लुत्या 'अल्पश' इत्यनुवर्त्तते । तेन यत्प्रत्ययान्तेनैवाऽयं समासः । 'कृत्यैरि'तिबहुवचनन्तु प्रकृतिभेदाऽभिप्रायम् । तेनेह न, 'मासे दातव्यम्' । स्पष्टं चेदं भाष्ये ।

क्तेनाऽहो । 'रात्रिवृत्तमनुयोक्तुमुद्यते'ति तु 'कर्तृकरणे' इति साध्वित्याहुः ।

'तत्रे'त्येतत्सप्तम्यन्तमिति । यद्यप्यभिहितत्वात्तत्रशब्दात्सप्तमी दुर्लभा, तथाऽपि सप्तम्यधिकाराऽबाधायाऽधिकरणशक्तिप्रधानादपि 'तत्र'शब्दात्सप्तम्येवेति [1]वृत्तिकृत् । यत्तु 'स्वयं क्तेने'त्यत्रेवाऽधिकारबाध एव । पूर्वपदप्रकृतिस्वरस्त्वव्ययत्वेनैवे'ति । तन्न । 'अव्यये नञ्कुनिपातानामि'ति परिगणनात् । अवतप्तेनकुलेति । चापलादिति भावः । कृद्ग्रहणपरिभाषया 'नकुलस्थित'शब्देन समासः । 'तत्पुरुषे कृती'त्यलुक् । अव्यवस्थितत्वप्रतिपत्त्याऽत्र निन्दा । एवं 'भस्मनिहुतमि'त्यादौ नैष्फल्यादिना सा बोध्या ।

गेहेनर्दीति । 'नर्द शब्दे' । अस्माण्णिनिः । 'तत्पुरुषे कृती'त्यलुक् सर्वत्र । समासान्तरेति । समासप्रकरणादिति भावः । अत एव 'पात्रे[2]समितीयती'त्यादि भवत्येव । तत्राऽप्यनन्तरत्वात्कर्मधारय एव व्यावर्त्यते इत्याहुः । घटकतयेति । तेन 'परमाः पात्रेसमिता' इत्येव, न तु समास इति भावः । समितेति-अनुस्वाररहितः पाठः ।

पूर्वकालैक । अत्र 'पूर्वकाल'शब्दोऽर्थपरः । अन्ये षट् स्वरूपपराः । 'पूर्वः कालो यस्य तद्वाचकः शब्दः प्रत्यासत्त्या परकालवाचकेन समस्यते' इत्यर्थः । अत एवोदाहरिष्यति—'पूर्वं स्नातः पश्चादनुलिप्त' इति ।

---

१ 'वृत्तिकृतः' ख. पाठः ।

२ 'अत एव 'पात्रेसमिती'त्यादि भवत्येव' इति ख. ग. पाठः ।

नियमबाधनार्थं चेति । न च मुख्याद्यर्थकैकशब्दे इदं चरितार्थम् । प्रसिद्धतरत्वेन सङ्ख्यावाचकस्यैव ग्रहणात् । ध्वनितं चेदं प्रकृतसूत्रभाष्ये, 'नदीभिश्चे'त्यत्र च । 'नव'शब्दस्तु 'पुराण'साहचर्यान्नूतनाऽर्थः । जरन् = वृद्धः । समानाधिकरणेनेति किम् ? । 'एकस्याः शौल्क्यम्' ।

नियमाऽर्थमिति । 'विशेषणमि'त्यादिना सिद्धेरिति भावः । 'विशेषणमि'ति-तत्पुरुषविषयोऽयं नियमः । तेन 'पञ्चगुः' सिद्ध्यति । 'पञ्चगवमि'ति च । 'पूर्वसूत्रमि'त्यादौ संज्ञात्वाऽभावेपि, कालवाचकत्वेनाऽदिग्वाचकत्वात्समासो निर्बाध एव । एवं देशवाचकैरपि । न चैवमपि 'नवरसरुचिरे'त्यनुपपन्नम् । असंज्ञात्वात् । समाहारे हि 'नवरसी'त्यापत्तिरिति वाच्यम् । 'नव'शब्दस्य नवाऽवयवके लाक्षणिकतयाऽदोषात् । प्रत्यासत्त्या[1] समस्यमानपदाऽन्तराऽर्थगतसङ्ख्याबोधकेनैवाऽनेन समाम्नात् । 'नवाऽवयवो रस' इति मध्यमपदलोपी वा । अत एव 'द्विगोर्लुगनपत्ये' इति सूत्रे 'त्रैविद्य' इत्यत्र 'त्र्यवयवा विद्या, तामधीते' इति विग्रहः प्रदर्शितो भाष्ये । 'तै रुचिरे'ति पश्चात्तृतीयासमासः, बहुव्रीहिगर्भः कर्मधारयो वेति दिक्[2]। 'नवरस[3]'शब्दः पात्रान्तादिरि'त्यन्ये ।

तद्धितार्थो[4]। वैषयिके आधारे सप्तमी । विषयत्वं चाऽनेकप्रकारैः । यद्वा एकोच्चारणविषयाऽपि सप्तमी तन्त्रेणोच्चारणाद्विषयभेदेन भिद्यते ।

---

१ 'प्रत्यासत्त्या' इत्यारभ्य 'मध्यमपदलोपी वा' इत्यन्तो ग. पाठः । क. तु त्रुटितः ।

२ इतोऽग्रे—'एतेन 'त्रिलोकनाथेने'ति व्याख्यातम् । न च तत्र पात्रादित्वेन निर्वाहः । 'यदि त्रिलोकी गणनापरा स्या'दितिप्रयोगविरोधात्' इति ख. घ. पाठः ।

३ 'नवरसशब्दः पात्रान्तादिरित्यन्ये' इति क. ग. पाठः ।

४ 'तद्धितार्थोत्तर । एकाऽपि सप्तमी विषयभेदाद्भिद्यते, व्याख्यानत इत्याशयेनाऽऽह—विषय इत्यादि' इति ख. पाठः ।

सौत्रत्वाच्च द्वन्द्व इत्याशयेनाह— **विषय इत्यादि**। 'तद्धिताऽर्थे वाच्ये' इति तु नोक्तम्। 'पौर्वशालः' 'पाञ्चनापितिरि'त्यादौ समासेनोक्ताऽर्थत्वात् तद्धिताऽनापत्तेः। 'द्विगोर्लुगनपत्ये' इत्यस्य वैयर्थ्याऽऽपत्तेश्च। न चाऽर्थ-ग्रहणं व्यर्थम्, 'उत्तरपदे'इतिवत्तद्धिते परत इत्यर्थेनैव निर्वाहादिति वाच्यम्। वाक्यस्याऽप्रातिपदिकत्वेन तद्धिताऽप्राप्तेः। 'द्विगोर्लुगि'ति-ज्ञापकाऽऽश्रयणे तु क्लिष्टता। (परत्वेन बहुव्रीहिणा बाधात्)। अनभिधा-नाच्च मत्वर्थे न द्विगुरिति मतुप्विधायके भाष्ये ध्वनितम्। प्रकृतसूत्रे तु 'मत्वर्थे प्रतिषेध' इति वचनमेवाऽऽरब्धम्।

**समाहारे वाच्य इति**। समाहारश्च समुदायः। स च बुद्धिविशेष-विषयतासमानाधिकरणो धर्मविशेषो, वस्तुतोऽवयवाऽभिन्नोऽप्याकृत्या-दिवद् बुद्धिकल्पितभेदवानिति भाष्यकैयटयोः स्पष्टम्। न च समाहार-समूहयोरेकत्वात्समूहस्य च तद्धिताऽर्थत्वात्तेनैव सिद्धे, समाहारग्रहणं व्यर्थम्। सामूहिकस्य 'द्विगोर्लुगि'ति लुकि, 'पञ्चगवमि'त्यादौ 'गोर-तद्धितलुकी'ति टज्न स्यात्। 'पञ्चकुमारि'[२] इत्यादौ 'लुक्तद्धितलुकी'ति ङीपो लुगापत्तेश्च।

**सर्वनाम्न इति**। यद्यपि 'स्त्रियाः पुंवदि'त्यनेनाऽपीदं सिद्धं, तथाऽपि 'दक्षिणपूर्वे'त्यादिसिद्धयर्थमावश्यकं तत्प्रतिपदोक्तत्वादिहाऽपि न्याय्य-मिति भावः। **उदात्त इति**। बहुव्रीहिनिबन्धनपूर्वपदप्रकृतिस्वरं बाधित्वा, सतिशिष्टत्वात्तत्पुरुषत्वप्रयुक्तसमासाऽन्तोदात्तत्वेनेति भावः। षाण्मातुरे-'मातुरुत्सङ्ख्ये'त्युदणौ। 'अनपत्ये' इत्युक्ते'द्विगोर्लुगि'ति न। **विकल्पे प्राप्ते इति**। 'महाविभाषये'[३]ति शेषः। ततश्च पक्षे तत्पुरुषत्वप्रयुक्तटजभावे,

---

१ ख. घ. पाठोऽयं क. ग. नास्ति।

२ 'पञ्चकुमारिरि'त्यादौ' इति ख. पुस्तके, लघुशेखरे च पाठः।

३ 'महाविभाषयेति भावः' इति ख. पाठः।

'पञ्चगोधन' इति स्यादिति भावः। एतेन 'कर्मधारयपूर्वपदक-बहुव्रीह्या-श्रयणेनेष्टसिद्धावत्र सूत्रे उत्तरपदग्रहणं व्यर्थमि'ति परास्तम् ।

द्वन्द्वतत्पुरुषयोरिति । अत्र तत्पुरुषो न विधेयः। सूत्रेणैव सिद्धेः। स्पष्टं चेदं 'समर्थ'सूत्रे भाष्ये—'यस्य बहुव्रीह्यवयवस्य तत्पुरुषस्य लक्षण-मस्ती'त्यादिग्रन्थे । तत्राऽयं बहुव्रीह्यवयवोत्तरपद इव, तत्पुरुषाऽवयवोत्तर-पदेऽपि प्रवर्त्तते । अत एव 'उत्तरपदेन परिमाणिने'तिवार्त्तिके 'द्विगोः सिद्धये' इत्युक्तम् । द्वन्द्वस्तु बहुव्रीह्यवयवोत्तरपदे एव, न द्वन्द्वाऽवयवो-त्तरपदे। चतुर्णां द्वन्द्वे 'होतृपोतृनेष्टोद्गातार' इति भाष्यप्रयोगेण[1] तदनभिधानात् ।

तत्पुरुषाऽवयवत्वन्तु द्वन्द्वविषये न सम्भवत्येव। न च 'घटं पटं च करोती'त्यर्थे णिसम्भवोऽस्ति । 'सुप्सुपा' 'उपपदमि'त्यादावेकत्वस्य विव-क्षणात् । सुबन्तसमुदायादेः[2] सुबन्तत्वाद्यभावाच्च । अत एव 'अनेकमन्य-पदार्थे' इत्यत्राऽनेकग्रहणं चरितार्थम् । स्पष्टं चेदं समर्थसूत्रादौ भाष्ये ।

अत्राऽपि द्वन्द्वस्तत्सूत्रेणैव सिद्धः । न च त्रयाणां बहुव्रीहौ, तेषामन्य-पदार्थोपसङ्क्रमेण निष्कृष्यपदद्वये एकार्थीभावस्य दुरुपपादतया, समास-योरप्राप्तिरेवेति वाच्यम् । 'समासे च कृतेऽवयवादुत्पत्तिः प्राप्नोती'ति 'अनुपसर्जनादि'तिसूत्रस्थभाष्यपर्यालोचनया निष्कृष्यैकार्थीभावाऽभावेऽपि समासतद्धितादिशास्त्रप्रवृत्तेः ।

न[3] च तयोः सामानाधिकरण्याऽभावात्तत्पुरुषाऽप्राप्तिः । तयोः सामानाधिकरण्याऽभावे 'पश्चिमशालाप्रिय' इत्यादौ पुंवत्त्वाऽनापत्तेः। 'समासे निष्कृष्य सामानाधिकरण्यं नियामकं, पुंवत्त्वे तु यथाकथञ्चि-दि'त्यत्र न विनिगमकम् । नित्यत्वमात्रं विधेयमिति वार्त्तिकाऽऽशयः ।

---

१ 'भाष्यप्रयोगात्' इति ख. घ. पाठः ।

२ 'सुबन्तसमुदायादेः सुबन्तत्वाऽभावाच्च' इति क. ग. पाठः ।

३ 'न च' इत्यारभ्य 'इति वार्त्तिकाशयः' इत्यन्तः क. ग. पाठः ।

न चैवं 'द्वौ मुनी वंश्यौ प्रियौ यस्ये'तिबहुव्रीहौ पूर्वयोरव्ययीभावाऽऽपत्तिः। तथा च स्वरे दोषः। किञ्च 'द्वित्रिंशत्प्रिया अस्ये'ति शैषिकबहुव्रीहौ, 'सङ्ख्ययाऽव्ययासन्ने'त्यवान्तरबहुव्रीह्यापत्तौ, 'बहुव्रीहौ सङ्ख्येये' इति समासान्ताऽऽपत्तिः, सुचः श्रवणाऽनापत्तिश्चेति वाच्यम्। द्वन्द्वाऽवयवोत्तरपदे द्वन्द्वस्येव, एषामप्यनभिधानेनैव वारणात्। इदं च 'अधिकषष्टिवर्ष'प्रसङ्गे समर्थसूत्राऽन्ते भाष्ये स्पष्टम्।

वस्तुतो नित्यांशोऽपि न्यायसिद्धः। 'एकार्थीभावे समासो, व्यपेक्षायां वाक्यमि'ति व्यवस्थामाश्रित्य 'विभाषे'त्यस्य प्रत्याख्याततत्वेन, समुदितैकाऽर्थीभावे द्वन्द्वतत्पुरुषभाविपदानां व्यपेक्षाया दुरुपपादत्वात्। इदमेवाऽभिप्रेत्याऽत्र भाष्ये उक्तं—'यदा वृत्तिपक्षस्तदा सर्वेषामेव वृत्तिरि'ति' एतद्वार्त्तिकं न कार्यमि'ति।

यत्तु 'त्रयाणां बहुव्रीहौ विशेषणसमासो बाहुलकान्ने'ति समर्थसूत्रभाष्ये उक्तं, तत्तु 'तद्धितार्थे'तिसूत्राऽतिरिक्तसूत्रविषयम्[3]। अत एव 'चित्राजरद्गुरि'ति सङ्गच्छते। अन्यथा 'पूर्वकाले'ति पूर्वयोः समासे, जरत एव पूर्वनिपाताऽऽपत्तिः। उत्तरयोः समासे च टजापत्तिः। अत एव 'खादिरेतरशम्यमि'ति कर्मधारयोत्तरपदो बहुव्रीहिः, न तु त्रिपदः। अन्यथा पुंवद्भावो न सिद्ध्येदि'ति कैयटोक्तं सङ्गच्छते। पूर्वयोः कर्मधारये तु विशेषणत्वादितरशब्दस्य पूर्वनिपाताऽऽपत्तिः[4]। यद्यपि त्रिपदे-

---

१ 'द्वन्द्वतत्पुरुषग्रहणन्तु नियमार्थम्। अन्यथा द्वौ मुनी वंश्यौ' इति ख. पाठः।

२ 'सुचः श्रवणाऽनापत्तिश्च। नित्यांशस्तु' ख. पाठः।

३ इतोऽग्रे—'इदमेव ध्वनयितुमेतत्सूत्रे एव वार्त्तिकं पठितम्। सूत्रसिद्धस्यैव तत्पुरुषाऽनुवादश्च वार्त्तिककृता कृतः' इति ख. घ. पाठः।

४ इतोऽग्रे—'यत्तु 'तद्धितार्थे'त्युत्तरपदग्रहणं नियमार्थम्—'उत्तरपदे दिक्सङ्ख्ये एवे'ति, तेन नाऽत्र दोष' इति। तन्न। 'दिक्सङ्ख्ये संज्ञाया'मित्यस्य नियमस्य सत्त्वेनाऽस्य विध्यर्थताया एवोचितत्वात्' इति ख. घ. पाठः।

ऽपि सर्वनामत्वादितरस्य पूर्वनिपातः प्राप्नोति, तथापि 'तपर' इत्यादिनिर्देशैस्तदनित्यत्वेन स वारयितुं शक्यः ।

द्वन्द्वोदाहरणं—'वाक्दृषदप्रिय' इत्यादि । अत्र त्रिपदे बहुव्रीहौ कृते, पूर्वयोर्नित्यं द्वन्द्वः । तेन[1] समासाऽन्तष्टजपि नित्यमेव । अत्र वाग्दृषदोः परस्परं सामानाधिकरण्याऽभावेऽपि, प्रियशब्देन तयोः सामानाधिकरण्याद्बहुव्रीहिर्निर्बाधः । अन्यत्र द्वन्द्वे तु स्वर एव प्रयोजनम् । निमित्तस्वराऽपेक्षया निमित्तिस्वरस्य बलवत्त्वात् ।

**गोरतद्धित** । 'तत्पुरुषस्ये'त्यनुवर्त्तते, टच्च । 'गोऽन्तस्य तत्पुरुषस्य समासस्याऽन्तष्टजि'ति वाच्योऽर्थः । तत्फलितं दर्शयति—**गोन्तात्तत्पुरुषादिति** । **न त्विति** । 'न तु तद्धितलुग्विषये' इत्यर्थः । तेन 'पञ्चभिर्गोभिः क्रीतः-पञ्चगुः'[2] । **समाहार इति**—भावे घञ्, न तु कर्मणि । तत्र हि 'स्वद्वानामि'ति

---

१ 'तेन समासान्तष्टजपि नित्यमेव । इतरेतरयोगद्वन्द्वे हेतुस्वर एव प्रयोजनं, निमित्तस्वरापेक्षया निमित्तिस्वरस्य बलवत्त्वात् । यत्तु 'समासान्तकृतविशेषमात्रविषयमिदं वार्त्तिकमि'ति । तन्न । सङ्कोचे मानाऽभावात् । प्रकृतसूत्रस्थैतत्प्रत्याख्यानपरं भाष्यन्तु नित्यग्रहणमात्रप्रत्याख्यानपरं बोध्यम् । वस्तुतस्त्वनभिधानाच्च द्वन्द्वतत्पुरुषाऽतिरिक्तसमासप्रवृत्तिरुत्तरपदे । द्वन्द्वोत्तरपदे द्वन्द्वाऽभावाय वार्त्तिकमतेऽप्यनभिधानस्यावश्यकत्वात् । एवं च वार्त्तिकं व्यर्थमेवेति भाष्याशयः । एतेन 'विकल्पे प्राप्ते नित्यार्थमि'ति प्राचां ग्रन्थाः, 'निष्कृष्यैकार्थीभावस्य दुरुपपादत्वादप्राप्तो द्वन्द्वोऽनेन विधीयते, नित्यत्वं तूक्तन्यायेनैव सिद्धम्, तत्पुरुषस्तु 'तद्धितार्थे'त्यनेन वचनसामर्थ्यात्सिद्ध एवे'ति नव्यग्रन्थाश्च परास्ता इत्याहुः' इति ख. घ. पाठः । क. ग. नास्ति ।

२ इतोऽग्रे—'नन्वलुकीत्येवाऽस्तु, किं तद्धितग्रहणेनेति चेत् । 'राजगवीयती'त्यादौ टजनापत्तेः । न चाऽन्तरङ्गत्वात् क्यजिनिमित्तकसुब्लुकः पूर्वमेव टजिति वाच्यम् । अकृतव्यूहपरिभाषया तस्य दुर्लभत्वादि'त्याहुः' इति ख. पाठः । क. ग. नास्ति ।

षष्ठ्यनापत्त्या 'पञ्चखट्वी'त्यसिद्ध्यापत्तेः। 'पञ्च खट्वाः समाहृता' इति विग्रहे खट्वाऽर्थस्य प्राधान्यात्समासशास्त्रे चाऽप्रथमानिर्दिष्टत्वान्नियतविभक्तिकत्वा-ऽभावाच्च ह्रस्वो न स्यात्। ततश्चाऽदन्तलक्षणो ङीप् न स्यात्। सिद्धान्ते समासाऽर्थे समाहारे नानाविभक्तिभियुज्यमानेऽपि, खट्वाशब्दस्य नित्यं षष्ठ्यैव योग इति सिद्धमुपसर्जनत्वम्।

संख्यापूर्वो। तद्धितार्थेति। 'अनन्तरस्ये'ति न्यायात्पूर्वसूत्रविषय एव एतत्संज्ञाप्रवृत्तिरिति भावः। अत एव ह्येतदुत्तरमस्य पाठः। तेन 'सप्तर्षय' इत्यादेरन्तोदात्तत्वम्। द्विगुत्वे हि 'इगन्ते'ति पूर्वपदप्रकृतिस्वरत्वं स्यात्। न च 'पूर्वकाले'ति समासे, 'एकाऽपूपी'त्यस्य द्विगुत्वाऽनापत्तौ, ङीब-नापत्तिः। अत्राऽपि समाहारे द्विगुसत्त्वात्। एकमप्यपूपं कश्चित्कारणो ददनेकं मन्यते, तत्राऽऽरोपितबहुत्वाऽऽश्रयः समाहारः। 'एकभिक्षी'ति तु न समाहारे द्विगुः, अनभिधानादि'ति कैयटः।

द्विगुरे। 'वचनमि'ति कर्त्तरि ल्युट्। 'सामान्ये नपुंसकम्'। इदं सूत्रं समाहारद्विगावेव। समाहारस्यैकत्वादेवैकवचने सिद्धेऽनुवादकत्वेन लाघवात्। अन्यत्र प्रवृत्तौ हि विधित्वे गौरवं स्यात्। अत एव 'पञ्चपूली च, पञ्चपूली च, पञ्चपूली च पञ्चपूल्य' इति शिष्यमाणस्य द्विगुत्वेपि, तदर्थस्यैकवद्भावो न। 'विधायकत्वाऽऽपत्तेः। तथा 'पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा' इत्यत्र च नेत्याशयेनाऽऽह—समाहार इति। अनुवाद-फलन्तु द्विगुवाच्यस्य समाहारस्य न कदाचिदुद्भूताऽवयवभेदत्वविवक्षा। किञ्च 'स नपुंसकमि'त्यत्र तच्छब्देन समाहारद्विगोरपि परामर्शः। तदाह—स नपुंसकमितीति।

कुत्सितानि। अत्र 'कुत्स अवक्षेपणे' इत्यतो वर्त्तमाने क्तः। व्याख्या-नात्। स च 'पूजार्थेभ्यश्चे'ति चस्याऽनुक्तसमुच्चयार्थत्वाद्बोध्य इत्याशये-नाह—कुत्स्यमानानीति। तद्वाचकानीत्यर्थः। कुत्सनैरिति। करणे

---

१ 'इत्यत्र च नेत्यपास्तमित्याशयेनाह' इति ख. पाठः।

ल्युट् । प्रवृत्तिनिमित्तकुत्सायामेवाऽयमिष्यते । तेनेह न—'मीमांसको दरिद्रः' । खसूचिरिति । सूचयतेरच इः । यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयति—'अहो निर्मलं गगनमि'ति, स एवमुच्यते । दुर्दुरूटो—दुष्टकर्मकर्त्तरि रूढः । विशेष्यस्य पूर्वनिपाताऽर्थमिदम् । प्रायेणाऽग्रऽप्येवमेव । बहुवचननिर्देश उभयत्राऽपि स्वरूपग्रहणनिरासाऽर्थः ।

पूर्वसूत्रेति । पापाऽणकयोः कुत्सनाऽभिधायित्वात्तेन समासे परनिपातः स्यादिति भावः ।

लाक्षणिकमिति । अत एव समानाधिकरणाऽधिकारस्याऽबाधः । येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तत्—उपमानम् । सादृश्यं चोत्तरपदोपस्थितश्यामत्व-चापलादिद्वारकमेव । सामान्यवचनत्वं चोपमानोपमेयसाधारणधर्मविशिष्टवचनत्वम् । एवं च पूर्वपदस्योपमानवाचित्वं भूतपूर्वगत्या इवाऽसमभिव्याहारे शक्याऽर्थमादाय बोध्यम् । अत एव 'मृगीव चपले'ति विग्रहे 'मृगचपला कन्ये'त्यत्र पुंवद्भावः । समानाधिकरणोत्तरपदत्वात् । न चैवं 'दर्शनीयाया माता दर्शनीयामाते'त्यत्रा[2]ऽपि इवाद्यसमभिव्याहारे[1] द्वयोरेकविशेष्यकप्रतीतिजनकत्वेन सामानाधिकरण्यात् पुंवद्भावाऽऽपत्तिः । वृत्तौ, वृत्तेः प्राक् च सामानाधिकरण्ये एव तत्प्रवृत्तेः । स्पष्टं चेदं 'चाऽर्थे द्वन्द्व' इतिसूत्रे भाष्ये । इव[3]स्य द्योतकत्वाच्च वृत्तेः प्रागपि सामानाधिकरण्यमत्रेति बोध्यम् । अपरे तूपमानत्वं स्वसमभिव्याहृतनिष्ठमिवादिद्योत्यं, वाच्यं वा । साधारणधर्मसम्बन्धस्य चोभयत्र बोधे तात्पर्यग्राहकताऽस्य । एवञ्च 'उपमानश्यामघनाऽभिन्नः श्याम' इति

---

१ 'इवसमभिव्याहारे' इति क. पाठः । 'इवाद्यसमभिव्याहारे' इति ख. पाठः ।

२ 'दर्शनीयामाते'त्यत्रापि पूर्वपदे सम्बन्धिनि लक्षणेति मते पुंवद्भावापत्तिः' इति ख. पाठः ।

३ 'प्रकृते च इवस्य द्योतकत्वाद्वृत्तेः प्रागपि सामानाधिकरण्यमक्षतम्' इति ख. पाठः ।

बोधः। अत एवोपमानोपमेययोः समानविभक्तिकत्वनियम इवादिसमभिव्याहारे। समासे त्वस्याऽर्थस्यैकार्थीभावबलाद्बोधः। वाक्ये त्वन्वयमर्यादया। एवमेव भाष्यस्वरसः, काव्यप्रकाशस्वरसश्चेति मञ्जूषायां विस्तरेण निरूपितमित्याहुः।

अत एव 'जरतीवाऽऽकृतिर्जरदाकृतिरि'त्यत्र 'सुप्सुपे'ति समासेऽपि पुंवत्। 'महिषीवाऽऽकृतिर्महिष्याकृतिः', 'महिषीव रूपं महिषीरूपमि'त्यत्र तु न। 'जातेश्चे'ति निषेधात्। न चाऽस्य कर्मधारयत्वात्पुंवत्कर्मधारये'ति दुर्वारम्। साधारणधर्मविशिष्टवाचकत्वाऽभावेनैतदप्रवृत्तः। विसंष्ठुलत्वादिर्हि साधारणो धर्मः। ( [1]तस्यैव तत्त्वे त्विष्टाऽऽपत्तिः )।

न च महिषीव विसंष्ठुलेयमाकृतिरित्यर्थेऽपि 'सुप्सुपे'ति बाधित्वाऽपवादत्वाद्विशेषणसमासाऽऽपत्तौ, नियमेन पुंवत्त्वाऽऽपत्तिः। 'बहुल'-ग्रहणेन तदप्रवृत्तेः। ध्वनितं चेदं 'घ'संज्ञासूत्रे भाष्यादिषु।

उपमितम्। 'उपमानोपमेययोः समभिव्याहारे उपमानस्य विशेषणतैव। अत एव विशेष्यस्य पूर्वनिपाताऽर्थमिदमि'ति प्राञ्चः। प्रयोगेऽसतीति। न चैवं 'प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा' इत्यादौ समासाऽनुपपत्तिः, 'प्रसन्नेने'ति साधारणधर्मप्रयोगादिति वाच्यम्। 'अनुपात्तधर्मेण साम्यविवक्षणाददोष' इति प्राञ्चः। [2]

वस्तुतस्त्विदं चिन्त्यम्। उपात्तधर्मसत्त्वे तेनैव साम्यप्रतीतेरनुभवसिद्धत्वात्। [3]किञ्चेदं सूत्रं समानलिङ्गत्वे एव प्रवर्त्तते। अत एव 'उपमानै-

---

१ अयं ख. पाठः क. ग. नास्ति।

२ इतोऽग्रे—'अत्र सदृशे लक्षणा। यद्वा सादृश्येन निमित्तेनाऽऽरोपितघनत्वादिमत्युपमेये लक्षणा। तत्राऽऽद्ये उपमा, द्वितीये रूपकमिति बोध्यम्। ध्वनितं चेदं कैयटे। एतेनोपमानानीति समासे उपमैवेति निरस्तम्' इति ख. घ. पाठः।

३ 'किञ्चेदं सूत्रं समानाधिकरणाऽधिकारे पाठसामर्थ्यात्समानलिङ्गत्वे एव प्रवर्त्तते' इति ख. घ. पाठः।

रि'त्यनुक्त्वा 'व्याघ्रादिभिरि'त्युक्तम् । तद्धि कतिपयानामेवोपमानानां ग्रहणाऽर्थम् । तानि च वक्ष्यमाणभाष्यप्रामाण्यात्समानलिङ्गान्येव । अत एव 'परवल्लिङ्गमि'ति सूत्रे 'तत्पुरुषश्चाऽपि कः प्रयोजयति । यः पूर्वपदार्थ-प्रधान एकदेशिसमास' इति भाष्ये उक्तं सङ्गच्छते । 'अ[1]न्यथाऽस्य पूर्व-पदार्थप्रधानस्य 'दृगब्जेने'त्यादौ दृश्यमानपरवल्लिङ्गस्य त्यागे बीजा-ऽभावेन तदसङ्गतिः स्पष्टैव । अत एव 'द्वन्द्वैकदेशिनोरि'ति न्यासं कृत्वा तत्पुरुषग्रहणस्य, 'द्विगुप्राप्ते'त्यादि वार्त्तिकस्य च प्रत्याख्यानं तत्रैव भाष्ये उक्तं सङ्गच्छते । उभयोः समानलिङ्गत्वे एवैतत्प्रवृत्तौ तु परवल्लिङ्गा-ऽनुपयोगः स्पष्ट एव ।

इदं च सूत्रमुपमेयाऽर्थकोपमितशब्दस्वारस्याद्व्याघ्रादीनां[2]मुपमानत्वे प्रवर्त्तते[3] ।

नन्वेवं 'भाष्याऽब्धिः काऽतिगम्भीर' इत्यादौ केन समासः ? । नाऽनेन, सामान्यधर्मप्रयोगात् । न चाऽनुपात्तधर्मेण साम्यम्, एतदुपा-दानवैयर्थ्याऽऽपत्तेः । 'सकलकलः पुरचन्द्रो राजते' इत्यादावुपात्तधर्माऽति-रिक्तस्य साम्यप्रयोजकस्याऽभावाच्च । लिङ्गभेदाच्च । नाऽपि विशेषण-समासः । उपमानस्य विशेषणतया पूर्वनिपाताऽऽपत्तेरिति चेन्न । मयूर-व्यंसकादित्वात्सिद्धेः । 'राजाऽन्तरमि'त्यादौ तस्याऽपि पूर्वपदाऽर्थप्रधान-ताया दृष्टत्वात् । अत एव 'प्रसन्नेन दृगब्जेने'त्यादौ दृश एव प्राधान्या-द्वीक्षणाद्यन्वयोऽपि नाऽनुपपन्नः । एवञ्चाऽत्र रूपकेणैवोपपत्तौ, परिणामस्य

---

१ 'अन्यथाऽस्य परवल्लिङ्गस्य 'मुखचन्द्र' इत्यादेः पूर्वपदार्थप्रधानस्य त्यागे बीजाऽभावेन तदसङ्गतिः स्पष्टैव' इति ख. ग. पाठः ।

२ 'व्याघ्रादीनां रूढ्या सदृशलक्षकत्वे' इति ख. पाठः ।

३ इतोऽग्रे—'अत एवैतद्विषये 'उपमे'ति प्राञ्चः । कैयटस्तु 'उपमानस्य सादृश्य-मूलाऽभेदारोपेणोपमेयेऽन्वयेऽपीदं प्रवर्त्तते । सङ्कोचे मानाऽभावात् । एवं चैतद्विषये रूपकमपी'त्याह'—इति ख. ग. पाठः ।

पृथगलङ्कारताऽपि न कल्प्या ।

अत एव 'मुखचन्द्र' इत्यादौ चन्द्ररूपकव्यवहारोऽप्याञ्जस्येनोपपन्नः । चन्द्रप्रतियोगिकाऽभेदस्य भानात् । परवल्लिङ्गताऽपि तत्पाठेन निपातनादेव बोध्या, लोकाद्वा, 'राजाऽन्तरमि'त्यादौ नपुंसकत्ववत् । विशेषणसमासेन 'चन्द्रमुखमि'ति प्रयोगो यदि नेष्टस्तर्हि बाहुलकाद्वारणीयः । एवञ्च सामान्यधर्म[1]प्रयोगे मयूरव्यंसकादिसमासेन रूपकमेव । विभिन्नलिङ्गकेऽपि रूपकमेवेति भाष्यपरिशीलनशालिनो विभावयन्तु ।

पुरुषो व्याघ्र इव शूर इति । न च शूरसापेक्षत्वेनाऽसामर्थ्यात् समासाऽप्राप्ताविदं व्यर्थमिति वाच्यम् । प्रधानस्य सापेक्षत्वेऽप्यसामर्थ्याऽभावात् । अत्र चेदमेव ज्ञापकम् ।

विशेषणम् । 'अनयोः ससम्बन्धिकत्वादन्यतरोपादानेन सिद्धे, उभयोपादानं स्पष्टाऽर्थमि'ति कैयटः । अत्र 'जाति'शब्दस्य गुणक्रियाभ्यां समभिव्याहारे विशेष्यतैव । एवं संज्ञाशब्दस्याऽपि । गुणयोः, क्रिययोः गुणक्रिययोश्चाऽनियम एव । तेन 'नीलोत्पलमि'त्यादौ व्यवस्थित एव प्रयोगः । 'कुब्जखञ्जः' 'खञ्जकुब्ज' इत्यादौ त्वव्यवस्थित एवेति बोध्यम् । व्याप्यव्यापकभावाऽनापन्नजात्योरप्येवम् । यथा भूत-मूर्त्तयोः । तादृशयोस्तु व्यापकस्य विशेष्यतैव । यथा 'शिंशपा वृक्ष' इति ।

यत्र 'कृष्णसारङ्ग'इत्यादावेकोऽवयवशब्दोऽपरः समुदायशब्दस्तत्राऽवयवस्याऽप्रधानत्वाद्विशे[2]षणत्वमेव । द्वयोस्त्ववयवशब्दयोरनियम एवेति

---

१ इतोऽग्रे—'नचैवं प्रकृतसूत्रे 'सामान्याऽप्रयोगे' इति व्यर्थम् । तादृशसमासस्य क्वाचित्कत्वबोधनाऽर्थत्वात् । उपमाविषयसमासस्य सामान्यप्रयोगे सर्वथाऽभावबोधनार्थत्वाच्च । एवं च सामान्यधर्माऽप्रयोगे उपमा, रूपकं वा यथायथं भवति । सामान्यधर्मप्रयोगे तु मयूरव्यंसकादिसमासेन रूपकमेव'—इति ख. घ. पाठः । २ 'उपसर्जनत्वमेव' इति ख. पाठः ।

बोध्यम् । एवं च 'डित्थसोमयाजी'त्यादयोऽपप्रयोगा एव । 'सोमयाजि-डित्थ' इत्येव तूचितम् । यद्यपि व्यावर्त्तकत्वरूपं विशेषणत्वं 'नील' इति सामान्योपक्रमे उत्पलस्याऽप्यस्ति, तथाऽपि विषयताविशेषरूपं गुणादीनामेव नियतम् । भाष्यप्रामाण्यात् । प्रकृतसूत्रे च विषयता-विशेषरूपमेव विशेषणत्वं गृह्यते, व्याख्यानात्, विशेषणग्रहणसामर्थ्या-च्चेत्याहुः[2] ।

पूर्वाऽपर । 'बहुल'ग्रहणाऽनुवृत्तेः क्रियाशब्दैः पचन् पाचकादिभिरेषां न समासः । स्पष्टं चेदं समर्थसूत्रभाष्यादौ । एवं च 'अपराऽध्यापक' इत्युदाहरणं चिन्त्यम् । पूर्वसूत्रन्तु प्रवर्त्तत एव । 'भृत्यभरणीय' इति भाष्यात् । अत्र ह्येकत्र शक्याऽर्थे, अपरत्राऽर्हाऽर्थे कृत्यः । अत एव 'समानाधिकरणमसमर्थवदि'त्यस्य समानाधिकरणसमासेऽप्रवृत्तौ 'पूर्वा-ऽपरे'त्यस्यैव ज्ञापकतोक्ता भाष्ये, न 'विशेषणमि'त्यस्य । एतेन 'पचमान-पाठक' इत्यादेरसाधुत्वमि'ति मन्दोक्तमपास्तम् ।

अपरस्येति । एतच्च 'पश्चादि'ति सूत्रे भाष्ये स्पष्टम् । बाहुलकादिति । एकेषु = मुख्येषु, वीरयते = पराक्रमते इति वा बोध्यम् ।

श्रेण्या । एकेन शिल्पेन, पण्येन वा जीवन्ति तेषां समूहः—श्रेणिः । च्व्यर्थेति । तेन श्रेणिभूतानां दण्डा[3]ऽऽदिकरणे न समासः । च्व्यन्तानां तु परत्वात् 'कुगती'ति नित्यसमासः । श्रेणि, एक, पूग, कुन्द, राशि,

---

१ 'विषयताविशेषरूपं विशेषणत्वं जात्यादीनामेव' इति ख. पाठः ।

२ इतोऽग्रे—'यत्त्वत्र मूलमुपसर्जनमिति महती संज्ञा । अप्रधानम्—उपसर्जनम् । गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवे'ति । तन्न । महासंज्ञया 'राज्ञः कुमार्याः' इत्यादावनेकस्य प्रथमानिर्दिष्टत्वेऽप्रधानस्यैव सा संज्ञेत्यर्थस्य लाभेऽपि, विशेषणत्वव्यवस्थाया न्यायतस्ततोऽलाभात्' इति ख. पाठः ।

३ 'दण्डाऽऽकारादिकरणे' इति ख. घ. पाठ ।

४ 'कुण्ड' इति काशिकावृत्तौ पाठः । 'कुक्कुमः' 'कुन्दुमः' ( = मार्जारः) इत्यन्ये ।

विषम, ( त्रिशिखे[1] ), निधान, निचय, इन्द्र, देव, मुण्ड, भूत, श्रमण, वदान्य, अध्यापक, अभिरूपक, ब्राह्मण, क्षत्रिय, पटु, पण्डित, कुशल, चपल, निपुण, कृपण। वृत्। 'कृतादिराकृतिगणः। श्रेण्यादिरप्येवमि'ति गणरत्नकृत्। तद्भाष्यविरुद्धम्।

क्तेन नञ्। 'अनञि'त्यत्र 'क्तेने'ति विभक्तिविपरिणामेन सम्बध्यते। एकदेशकरणाऽकरणाभ्यां चैकमेव वस्तु कृतमकृतं चोच्यते। तत्र प्रत्यासत्त्योभयोः क्तान्तत्वे, एकप्रकृतिकत्वे एव चाऽयं समासः। तेन 'सिद्धं च तदभुक्तं चे'त्यत्र, 'कर्त्तव्यं च तदकृतं चे'त्यत्र च न समासः। नञा वैशिष्ट्यमिह विवक्षितं, न नञ्मात्रेण। एवं च 'सनञे'त्येव वक्तुमुचितम्। तेन 'अशिताऽनशितं' 'क्लिष्टाऽक्लिशितं' 'छाताऽछितमि'ति सिद्धम्। अन्यथाऽत्रेडादेरधिकस्य सत्त्वादत्र न स्यात्। नञ्ग्रहणं च क्रियागताऽसमाप्तिद्योतकाऽव्ययोपलक्षणम्। तेन कृताऽपकृतादीनां सङ्ग्रहः। 'क्रयश्च क्रयिका चे'त्यर्थे 'क्रयाक्रयिके'त्यादि तु मयूरव्यंसकादित्वाद्बोध्यम्। स्पष्टं चेदं भाष्ये। पूर्वनिपातनियमाऽर्थं चेदम्।

देवब्राह्मण इति। देवपूजको ब्राह्मण इत्यर्थः। अत्र पूर्वपदस्य तत्तदर्थे लक्षणायां विशेषणसमासेनैव सिद्धे, 'शाकपार्थिवादीनामि'तिवचनं न कार्यमिति प्राञ्चः। मुख्याऽर्थे 'शाकप्रियपार्थिव' इत्यादिनिवृत्त्यर्थमावश्यकमेव वचनमिति प्रतिभाति।

सन्महत्। गुणक्रियाशब्दैः समासे पूर्वनिपातनियमाऽर्थमिदम्। 'महापापमि'त्यादौ पूजाऽभावेऽपि विशेषणसमासो बोध्यः। 'महान् व्रीह्यपराह्णे'ति पूर्वपदप्रकृतिस्वरस्त्वत्र न। 'सन्महदि'ति प्रतिपदोक्तसमासे एव तत्प्रवृत्तेः।

वृन्दारक। 'वृन्दारक'शब्दो देवजातिवाची। द्वितीयो गजसर्पयोर्वाचकः। अन्त्यो हस्तिनः। ते उपमानत्वेनैव पूजावचना भवन्तीत्याशये-

1 'विशिख' इति काशिकावृत्तिपाठः।

नाह—व्याघ्रादेरिति । सामान्यप्रयोगार्थमिति । एतेन 'पूजायामेव यथा स्यान्न निन्दायामित्येवमर्थमिदम् । तेनेह न—'माणवकोऽयं नागो, यतो मूर्ख' इति परास्तम् । विधित्वस्यैवोचितत्वात् ।

कतरकतमौ । 'वा बहूनां जातिपरिप्रश्ने' इति व्युत्पादित—'कतम'-साहचर्यात्कतरस्याऽपि तादृशस्यैव ग्रहणे सिद्धे, 'जातिपरिप्रश्न'ग्रहणमन्यत्राऽपि कतमस्य साधुत्वाऽर्थम् । तेन 'कतमो भवतां पण्डित' इत्यपि सिद्धम् । किंराजेति । 'किमः क्षेपे' इति समासान्तनिषेधः । क्षेपे किम् ? । 'को राजा पाटलिपुत्रे' ।

तत्पुरुषः । 'समानाधिकरण' इति अर्शआद्यजन्तम् । समानाधिकरणपदक इत्यर्थः । तत्पुरुषाधिकारे एतत्करणे त्वेकसंज्ञाऽधिकारात्तस्या अनया बाधः स्यात् । 'तत्पुरुष'इति सूत्राऽनन्तरं 'समानाधिकरणः, कर्मधारयश्चे'ति सूत्रयितुमुचितमित्याकडारसूत्रे भाष्ये ध्वनितम् ।

पुंवत्कर्मधारय । 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्' इत्यनुवर्त्तते । ननु 'स्त्रियाः पुंवत्' 'तसिलादिष्वि'ति सूत्राभ्यां सिद्धे, इदं व्यर्थमत आह—पूरणीत्यादि । ऊङर्थन्तु न । 'अनूङ्' इत्यस्याऽत्राऽपि भाष्यकृताऽनुवर्त्तितत्वात् । 'भाषितपुंस्कादनूङ्' इत्यस्य समस्तत्वाच्च । अत एव 'न कोपधाया' इति निषेधप्रकरणे 'ऊङ' इति नोक्तम् । 'अपूरणीप्रियादिष्वि'ति तु नाऽनुवर्त्तते । व्याख्यानात् । इदं च 'स्त्रियाः पुंवदि'त्यत्र भाष्ये स्पष्टम् ।

महानवमीति । पुंवद्भावे 'आन्महत' इत्यात्त्वम् । यत्तु 'निषेधप्रकरणात्पूर्वमेवेदं सूत्रं पठनीयम् । 'पुंवदि'ति च न कार्यमि'ति । तन्न । अनन्तरपूर्व-पूरणी-प्रियादिनिषेधबाधेन कृताऽर्थस्य परनिषेधबाधकत्वाऽनापत्तेः । तदाह—तथा कोपधादेरिति ।

---

१　इतोऽग्रे—'अपूरणीप्रियादिष्वि'ति निषेधप्रकरणे एव कार्यम् । 'पुंवदि'ति च न कार्यमिति चिन्त्यम् । वस्तुतस्तु 'पुंवदि'ति योगो विभज्यते । तेन 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव'इति सिद्धम् । अत एव तस्य 'न कोपधाया' इत्यादिनिषेधविषयेऽपि प्रवृत्तिः' इति ख. घ. पाठः ।

प्रतिषिद्ध इति । 'न कोपधायाः', 'संज्ञापूरण्योश्च' 'वृद्धिनिमित्तस्य' 'स्वाङ्गाच्चेतः' 'जातेश्चे'ति पञ्चसूत्र्या निषिद्ध इत्यर्थः । विध्युन्मूलकत्वरूप-युक्तिमूलक-'निषेधाश्च बलीयांस' इत्यस्य तु न विषयः । तद्बाधं विना कर्मधारयांऽशे विधेरचरितार्थत्वादित्याहुः । स्त्रीपुंसेति । स्त्रीपुरुषयो-र्लक्षणेन स्तनश्मश्र्वादिना युक्तेत्यर्थः । इभी पोटेति विग्रहः । भाष्ये तु 'इभ्ययुवतिरि'ति पाठः । कौस्तुभादौ 'इभ्यपोटे'ति च । तत्र 'इभ्य'शब्दो जातिविशेषवाची । भाष्यप्रामाण्यात् । अत एव 'जातेरस्त्री'तिसूत्रे 'अयोपधादि'त्यस्य 'इभ्या क्षत्रिये'ति प्रत्युदाहृतमिति बोध्यम् ।

कठधूर्त्त इति । अत्र हि कठत्वं न कुत्स्यतेऽतः 'कुत्सितानि कुत्सनैरि'-त्यनेन गतार्थता न शङ्क्या । प्रवृत्तिनिमित्तकुत्सायां तत्प्रवृत्तेः । 'धूर्त्तबक' इत्यसाध्वेव । जातेः पूर्वनिपातार्थमिदम् ।

प्रशंसाव । 'वचन'ग्रहणं 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनी'ति कोशप्रसिद्धरूढपरिग्रहार्थम् । तेन प्रशस्त-शोभन-रमणीय-शुचि-मृद्वादीनां न । 'जातिरि'त्यनुवर्त्तते ।

ननु मतल्लिकादेः स्त्रीत्वात्प्रशस्त इति व्याख्यानमयुक्तम् । 'प्रशस्ता गौरि'ति पाठे उद्धादेः पुंस्त्वात्, प्रकाण्डस्य क्लीबत्वादयुक्तत्वमत आह— न तु विशेष्यनिघ्ना इति ।

लिङ्गविशिष्टेति । अस्याश्चेदमेव 'जरती'ग्रहणं ज्ञापकम् । न हि युवशब्दस्य पुंस्त्वे जरतीसामानाधिकरण्यं न्याय्यम् । अत एव न संज्ञाया ग्रहणम् । स्त्रियां युवसंज्ञाया अभावात् । पुंसि जरतीसामानाधिकरण्या-ऽनुपपत्तेश्च । ननु युवतीजरत्योरपि सामानाधिकरण्यमारोपेणैवोपपाद्य-

---

१ इतोऽग्रे—'पोटायुवती'त्यनेनैकयोगसम्भवे पृथग्योगश्चिन्त्यप्रयोजनः' इति ख. पाठः । 'प्रशंसावचन-पोटायुवती'त्येकयोगसम्भवे पृथग्योगश्चिन्त्य-प्रयोजनः' इति घ. पाठः । क. ग. तु नास्ति ।

२ 'पाठः' 'अयुक्तः' इति लघुशेखरे ।

मिति, युवजरत्योरेव तदारोपेणाऽस्त्विति, कथमस्य ज्ञापकत्वमिति चेन्न । प्रकृतिप्रत्ययाऽर्थयोरुभयोरारोपे गौरवात् । लक्ष्याऽनुरोधेन भाष्यादिप्रामाण्येन परिभाषाज्ञापनस्यैवोचितत्वाच्च । 'जरद्भिरि'तिपाठस्तु भाष्यविरुद्धः । युवखलतीति । 'कृदिकारादि'ति ङीष् ।

युवत्यामेवेति । यद्यपि जरत्यां युवतीधर्माऽऽरोपोऽपि वक्तुं शक्यः, तथाऽप्युपक्रमस्थस्याऽऽरोपितत्वाऽपेक्षया, उपसंहारस्थस्यैव तत्त्वमुचितम् । किञ्च तदा 'युवती'शब्दस्यैव विशेषणत्वात् 'विशेषणमि'ति समासेऽपि पूर्वनिपातनियमसिद्ध्या, प्रकृतसूत्रे 'जरती'ग्रहणं व्यर्थमेव स्यादतस्तत्फलप्रदर्शनायैवमुक्तम्[1] ।

कृत्यतुल्याख्या । 'कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च जातिभिन्नवाचकेन समस्यन्ते' इत्यर्थः । इदं सूत्रं पूर्वनिपातनियमाऽर्थम् । 'तुल्यमहानि'त्यादौ 'सन्महदि'ति बाधित्वा, परत्वादनेनैव समासः । 'सत्कृत्यमि'त्यादौ 'सतां कृत्यमि'ति षष्ठीसमासो बोध्यः । एवं 'परमपूज्य' इत्यपि ।

'बाहुलकादेतद्विषये[2] 'सन्महदि'त्यस्यैव प्रवृत्तिरि'त्यन्ये ।

प्रतिषेधसामर्थ्यादिति । न चैवं 'पण्यकम्बलः' 'पण्यहस्ती' 'पण्यगव' इति 'कुरुगार्ह'ति सूत्रभाष्योदाहृतेषु समासाऽनुपपत्तिः । सूत्रभाष्यप्रामाण्येन बहुलग्रहणेन सुसाधत्वात्[3] । केचित्तु—'भाष्यप्रामाण्यात् 'अजात्ये'ति न्यायसिद्धाऽनुवादः । पूर्वनिपाताऽनियमे हि तन्नियमाऽर्थमिदम् । स च जातिभिन्नवाचकेनैवेति । यदि तु 'भोज्य ओदन' इत्यत्राऽसमास एवेष्यते, तर्हि स एव बाहुलकात्साध्यः । एवं च 'अजात्ये'तिस्पष्टाऽर्थमेवेति, न पण्यकम्बलादावनुपपत्तिरि'त्याहुः ।

यत्तु 'तत्पुरुषे तुल्याऽर्थे'तिसूत्रे तुल्याऽर्थकृत्यपूर्वपदप्रकृतिस्वरस्य

---

१ 'जरतीग्रहणफलाभायैवमुक्तं' ख. पाठः ।

२ 'एतद्विषये तस्यैव प्रवृत्तिरित्यन्ये' ख. पाठः ।

३ 'सुसाधत्वादित्याहुः' इति ख. पाठः ।

लक्षणप्रतिपदोक्तपरिभाषया एतद्विहितसमासे एव प्रवृत्तेर्विशेषणसमासे स्वराऽप्रवृत्त्या चारितार्थ्याद्विशेषणसमासबाधे न मानमि'ति । तन्न । स्वरविधायके 'कृत्यतुल्याख्य' इत्येव वक्तव्ये, कृत्य-तुल्याऽर्थयोर्वियोग-पाठेन, अर्थपदघटितपाठेन च, तदंशे परिभाषाबाधस्य बोधितत्वात् । अत एव 'कुरुगार्हपते'ति सूत्रे 'पण्यकम्बलः संज्ञायामि'त्युपादाय कृत्य-प्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे, 'पण्यकम्बलः संज्ञायामेवे'ति, 'पण्यकम्बल एवे'ति वा नियमाऽर्थमिदमि'ति भाष्यकैयटयोरुक्तम् । 'विशेषणसमास' इति च व्याख्यातम् । न हि तत्राऽनेन समासः । कम्बलस्य जातित्वात् ।

समानाधिकरणेनेति । 'वर्णवाचिना तादृशेन वर्णवाचि समस्यते' इत्यर्थः । सारङ्गः–चित्रः । 'कृष्ण'शब्दस्य च कृष्णाऽवयवके लक्षणेति सामानाधिकरण्यम् । 'कृष्णशुक्ल' इत्यप्युदाहरणम् । 'विशेषणं विशेष्येणे'-ति सिद्धे, इदं चिन्त्यप्रयोजनम् । स्पष्टं चेदं भाष्ये ।

न च 'वर्णो वर्णेष्वनेते' इतिपूर्वपदप्रकृतिस्वरविधायके प्रतिपदोक्तस्या-ऽस्यैव ग्रहणं यथा स्यादित्येतदर्थमिदमावश्यकम् । तत्फलन्तु 'सारङ्ग-स्याऽवयवोऽयं कृष्णः—सारङ्गकृष्ण' इत्यत्र षष्ठीसमासे मा भूदिति वाच्यम् । 'श्रज्याऽवमकन्पापवत्सु भावे कर्मधारये' इत्युत्तरं 'वर्णो वर्णेष्वनेते' इत्यस्य पाठेन सौम्राज्यादित्याहुः ।

बहुवचननिर्देशादाद्यर्थोऽवगम इत्याशयेनाह–कडारादय इति । 'अयमाकृतिगण' इति बहवः । कर्मधारये किम् ? । 'कडारपुरुषको ग्रामः' ।

एतदेवेति । 'एव'कारः स्फुटत्वद्योतनाय । श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी, दासी, बन्धकी, अध्यापक, अभिरूपक, पटु, मृदु, कुशल, निपुण । वृन् । चतुष्पाज्जातीति । एतच्च 'बहुल'ग्रहणाऽनुवृत्त्या, 'जाति'रि'त्यस्य मण्डूकाऽनुवृत्त्या वा लभ्यते । स्पष्टं चेदमत्र भाष्ये ।

---

१ अत्र 'सामञ्जस्यात्' इति पाठः स्यात् ।

जातिः किम् ? । 'कालाऽक्षी'गर्भिणी' । चतुष्पात्किम् ? । 'ब्राह्मणी-गर्भिणी' । गर्भिणीशब्दस्य परनिपातार्थमिदम् । प्रत्युदाहरणे विशेषण-समासो भवत्येव[1] ।

मयूरव्यं । चोऽवधारणाऽर्थः । तेनैषां प्रकरणात्समासाऽन्तरे प्रवेशो न[2] । मयूरो व्यंसक इति । व्यंसकस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते, इदं वचनमिति भावः । तद्ध्वनयन्नाह–धूर्त इति । कैयटस्तु 'मयूर इव व्यंसक' इत्यर्थेऽपि 'उपमानानी'त्येव सिद्धे, पूर्वपदप्रकृतिस्वराऽभावार्थेदम् । तत्र हि प्रतिपदोक्तपरिभाषया 'उपमानानी'त्यस्यैव ग्रहणमि'त्याह ।

उच्चावचमिति । उच्चावचाऽऽदेशः । निश्चितप्रचितयोः निश्चप्रचाऽऽदेशश्च[3] । अकिञ्चन इति । एवं 'सकिञ्चनः' 'स्नात्वाकालकः' 'पीत्वास्थिरकः' 'भुक्त्वासुहितः' । 'स्नात्वा कालकः सम्पन्न' इत्यर्थाऽवगमात्तदपेक्षं समानकर्तृकत्वम् । ( उत्पत्यै-पाकला[4] । उत्पतनं कृत्वा पाण्डुरित्यर्थः । 'पाकलो = हस्तिज्वर'इत्यन्ये ) ।

एतदन्तर्गणसूत्राण्याह–आख्यातमिति । तिङन्तमित्यर्थः । अत्र 'एहीडादय' इत्यतोऽन्यपदार्थे इत्यनुवर्त्तते । गणे तस्य पूर्वं पाठात् । इह तु असातत्याऽर्थतां तस्य ध्वनयितुं व्युत्क्रमेण पाठः । तद्ध्वनयन्नाह—यत्राऽभिधीयत इति । अश्नीतपिबतेति । अन्यपदार्थस्य[5] क्रीडादिरूपत्वेन स्त्रीत्वात्, समासत्वेन प्रातिपदिकत्वाच्च टाप् ।

१ 'भवत्येवेत्याहुः' ख. घ. पाठः ।

२ इतोऽग्रे—'मयूरव्यंसकीयति' 'मायूरव्यंसकिरि'ति तु भवत्येव । 'मध्येऽपवादन्यायेन कर्मधारयस्यैव व्यावृत्तिरि'त्येके' इति ख. घ. पाठः ।

३ इतोऽग्रे—'उच्चैःनीचैःशब्दस्योच्चनीचादेशोऽपि । 'उच्चनीचम्' एवमाचितं चोपचितं च-'आचोपचम्' इति ख. घ. पाठः ।

४ अयं ख. घ. पाठः । क. ग. नास्ति । 'उत्पत्यव्याकुला' इति काशिकायां पाठः ।

५ इतोऽग्रे—'एवं चाऽन्यपदार्थाऽनेकत्वविवक्षायां द्विवचनाद्यपि भवतीत्याहुः' इति ख. पाठः ।

खादतमोदतेति। निपातनात् 'मोदन्तामि'त्यस्य स्थाने 'मोदते'त्यादेशः। एवं-'खादतवसता', 'आहरनिचया', 'आहरनिष्कषा'[1], 'उत्पचनिपचे'त्यादि।

एहीडादय इति लडुत्तमपुरुषैकवचनस्य 'ईडे' इत्यस्य ईडादेशः। एवम्—'एहियवमि'त्यत्र 'यौमी'त्यस्य यवादेशः। उद्धर कोष्ठादिति। 'उद्धर उत्सृजे'ति विग्रहः। 'उत्सृजे'त्यस्य विवरणं—'देही'ति। 'कोष्ठादि'ति तु 'उद्धरे'त्यस्याऽऽकाङ्क्षापूरणायेति। एवम् 'एहि वाणिजे'ति यस्यां क्रियायां सा 'एहिवाणिजा'। 'एहिस्वागता'। 'अपेहिवाणिजा'। 'प्रोहकटा'। निपातनात्परस्मैपदम्। 'आहरवसना'। 'आहरवनिते'त्यादि। 'उत्पतनिपता'।

इह पाठ इति। एहीडादिषु[2] तिङन्तपूर्वपदकोत्तरपदकसमुदायानामित्यर्थः। कर्त्रेति। 'उक्तेरि'त्यादिः। 'जोडं जही'त्याभीक्ष्ण्येनाऽऽह यः स 'जहिजोडः'। राजाऽन्तरमिति। अन्तर-मात्रशब्दाभ्यां भिन्नाऽवधारणवाचिभ्यां नित्यसमासः। मात्रशब्दयोगे परसवर्णनित्यता[3] निपातनादेव। तत्र भिन्नः अभेदेन सम्बन्धेन पूर्वपदार्थे विशेषणम्। पूर्वपदजन्यबोधप्रकाराऽऽश्रययत्किञ्चित्प्रतियोगित्वं च भेदे व्युत्पत्तिविशेषबललभ्यमित्याहुः।

एवं 'कां[4] दिशं गच्छामी'ति य आह-स 'कान्दिशीकः'। गणपाठसामर्थ्यादीकण्। द्वितीयाया अलुक्च। 'कान्दिशीको भयद्रुतः'। 'अहो पुरुषोऽहमि'ति यो मन्यते, तस्य भावः—'आहोपुरुषिका'। मनोज्ञादित्वाद्वुञ्। 'अहं शक्तोऽहं शक्त' इति यस्यां सा-'अहमहमिका'। या इच्छा = अभिप्राय इति-'यदृच्छा'। आकृतिगणोऽयम्।

---

१ 'आहर-निकषा' इति ग. पाठः। २ 'एहीडादिषु' इति ख. नास्ति।

३ 'परसवर्णनित्यताऽपि' इति ख. पाठः।

४ 'कां दिशं, कां दिशं' ख. पाठः।

ईषद्गुणेति । 'अकृते'त्यपनीय तत्स्थाने इदं पूरणीयमिति भावः । तत्फलमाह—ईषद्रक्तमिति । अत एव 'ईषद्गार्ग्य' इत्यत्र नाऽतिव्याप्तिः । यद्यपि गर्गाऽपत्ये नोत्कर्षाऽपकर्षौ, तथापि तत्समवेतगुणक्रियादौ तौ बोध्यौ । एवमेव 'गार्ग्यतर' इत्युपपद्यते । 'विशेषणमि'त्येव सिद्धे 'गुणवचनेनैवे'त्येतदर्थमिदमित्याहुः ।

नञ् । ञकारो निषेधाऽर्थक'न'शब्देन समासे, तत्पुरुषत्वाऽभावाय । अत एव 'न-राजे'त्यादौ टच् न । पूर्वपदप्रकृतिस्वरश्च न । 'ईषदकृते'तिसाहचर्यान्नञ् अव्ययमेव, न तु 'स्त्रीपुंसाभ्यां नञ्' । इदमेव ध्वनयितुम् अष्टाध्याय्यामुत्तरत्र पठितमपि तत्सूत्रमादौ व्याख्यातम् ।

नलोपो । निषेधाऽर्थक'न'शब्देन समासे'नैकधे'त्यादौ लोपवारणायाऽनुबन्धोच्चारणम्, 'पामनपुत्र'[1] इत्यादौ तद्वारणाय च । अत्र सूत्रे उत्तरपदाऽऽक्षिप्तसमासस्य प्रतिपदोक्तस्याऽग्यैव ग्रहणात्स्त्रीपुंसाभ्यां नञो न ग्रहणम् । 'नञोऽशि'ति सिद्धे लोपवचनं साकच्काऽर्थम् । तेन 'अक-ब्राह्मण'इत्यादि सिद्धमित्याहुः ।

तस्मान्नुट् । नञो नुट्व्यावृत्त्यर्थं–'तस्मादि'ति । तत्सामर्थ्यादेवाऽचीति[2] सप्तमी षष्ठ्यर्थे । सप्तमीनिर्देशस्तु 'यस्मिन्विधिरि'ति परिभाषाप्रवृत्त्यर्थ इत्याशयेनाह–अजादेरिति । न च 'नाऽची'ति नलोपप्रतिषेधेनैव सिद्धे, नुड्वचनसामर्थ्यादेवोत्तरपदस्य भविष्यति, तत्किं 'तस्मादि'त्यनेनेति वाच्यम् । एवं हि नाऽप्राप्ते नलोपे आरभ्यमाणो नुट् तस्य बाधकः स्यात् । 'तस्माद्'ग्रहणे तु निमित्तमेव नलोपो नुट इति न दोषः ।

नुक् तु न कृतः । ङमुट्प्रसङ्गात् ।

अनश्व इति । उत्तरपदार्थप्रधानोऽयम्[3] । इहाऽऽरोपिताऽश्वत्ववान्

---

१ 'वामनपुत्रः' इति ख. पुस्तके, लघुशब्देन्दुशेखरे च पाठः ।

२ 'तत्सामर्थ्यादचीति' इति ख. पाठः ।

३ 'उत्तरपदार्थप्रधानोऽयम् । आरोपो नञर्थः । विषयत्वं संसर्गः । यद्वा

प्रतीयते। नञ् तु द्योतकः। इदमेव युक्तम्। न त्वारोपो नञर्थः, विषयत्वं संसर्ग इति। तस्य नञर्थत्वेऽपि ब्राह्मणादिपदानां मुख्यसम्बन्धेन ब्राह्मणत्वादिमति शक्तिग्रहात्तत्राऽऽरोपितत्वाऽन्वयस्य दुर्घटत्वाऽऽपत्तेः।

न च नञ्समभिव्याहारात्तदर्थत्यागः। शब्दाऽर्थसम्बन्धस्याऽनित्यतापत्तेः। मम तु न दोषः। मुख्यसम्बन्धेन ब्राह्मणत्ववानिव, आरोपितसम्बन्धेन ब्राह्मणत्ववानपि तदर्थः। नञ् तु स्वविशिष्टस्य तदर्थकत्वतात्पर्यनिर्णायकः। इदमेव नञो द्योतकत्वं नाम। एतावतैवाऽत्रैकार्थीभावव्यवहारः। विशिष्टाऽनुपूर्व्यां द्योत्याऽर्थोऽन्तर्भावेण शक्तावच्छेदकत्वाद्विशिष्टस्याऽर्थवत्त्वव्यवहारः। समासविधायकशास्त्रबलादत्रैवमेव कल्पनोचिता। न तु 'प्रजयती'त्यादौ। तत्र हि अडादिव्यवस्थाऽर्थं तथा शास्त्रकृतां कल्पना। लोकस्य तु विशिष्टशक्त्यैव पदादितो बोधः। अवयवशक्तिबोधनद्वारा विशिष्टस्य विशिष्टेऽर्थे शक्तिबोधकमेव च व्याकरणशास्त्रमिति दिक्।

'आरोपश्च सादृश्यमूलक' इति नाऽब्राह्मणपदाल्लोष्टादिप्रतीतिः। उत्तरपदार्थप्राधान्यादेव 'अस'इत्यादौ सर्वनामकार्यसिद्धिः। तत्पुरुषस्य औत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम्। पूर्वपदद्योत्याऽर्थमादायैव चैवं व्यवहारः। 'एतत्तदोरि'तिसूत्रेऽनञ्समासग्रहणं च चरिताऽर्थम्। 'ब्राह्मणभिन्न' इत्यादि त्वार्थिकाऽर्थकथनम्।

नव्यास्तु-'ब्राह्मणभिन्न' इत्येव बोधः। न च 'अस' इत्यादौ सर्वनामकार्योऽनापत्तिः। 'अनञ्समासे' इति निषेधेन पूर्वपदाऽर्थप्राधान्येऽपि, नञ्समासे उत्तरपदार्थप्राधान्यप्रयुक्तकार्यज्ञापनान्न दोषः। एवं च 'अत्वं भवसि' 'अनहं भवामी'त्यादौ पुरुषव्यवस्थाऽपि सिद्धा। एतेन 'अवर्षा

आरोपिताऽश्वत्ववान् उत्तरपदेनैव प्रतीयते। नञ् तु द्योतकः। इदमेव युक्तम्। अन्यथाऽऽरोपितत्वस्य नञर्थत्वेऽपि' इति ख. पाठः।

१ 'अन्वयो दुर्घटः' ख. पाठः।

२ 'नामेति स्पष्टं भाष्ये' इति ख. पाठः।

हेमन्त' इत्यादौ 'वर्षाभिन्न' इति बोधे पुंस्त्वाद्यापत्तिः, विशेष्याऽनुरोधा-दि'ति परास्तमित्याहुः ।

तन्न । 'अनेकमि'त्यादावेकवचनाऽसङ्गतेः । 'उत्तरपदार्थप्राधान्या-ऽतिदेशेऽपि एकत्वादिसङ्ख्याया अनुपपादनेन, एकवचनाद्युत्पत्तेरुपपाद-यितुमशक्यत्वात् । स्पष्टं चेदं भाष्ये ।

'पतन्त्यनेके जलधेरिवोर्मय' इत्यादौ समुदायबहुत्वेन बहुवचनम् । अनेकश्चाऽनेकश्चेत्याद्येकशेषात् । अत एव 'तस्य भाव' इतिसूत्रे 'अब्राह्मण-त्वमि'त्यादौ नञ्सम्बन्ध-भावाऽर्थयोर्युगपद्विवक्षायां परत्वात्पूर्वं त्वप्रत्यये, अन्तोदात्तत्वं न स्यादि'त्याशङ्क्य, ब्राह्मणस्याऽऽरोपितत्वसापेक्षतया नञ्सापेक्षत्वेन, असामर्थ्यान्न पूर्वं भावप्रत्ययः । न च भावाऽर्थसापेक्ष-त्वान्नञ्समासोऽपि न स्यादिति वाच्यम् । ब्राह्मणत्वविशिष्टस्य प्रधानस्य सापेक्षतया तत्सम्भवादि'ति भाष्ये उक्तमिति सुधियो विभावयन्तु ।

सादृश्या-ऽभावा-ऽन्यत्वा-ऽल्पत्वा-ऽप्राशस्त्य-विरोधास्त्वार्थिका अर्था बोध्याः । तादात्म्याऽऽरोपस्य भेदसादृश्ययोः सतोरेव सत्त्वेन, संसर्गा-रोपस्य च तदभाव एव सत्त्वेनाऽऽरोपितत्वबोधे तेषामर्थतो भानात् । तदुक्तं भाष्ये-'नञिवयुक्तमन्यसदृशाऽधिकरणे तथा ह्यर्थगतेरि'ति । तत्र इव-ग्रहणं दृष्टान्ताऽर्थम् । अन्यस्मिन्, तत्सदृशे च, अधिकरणे = द्रव्ये इत्यर्थः । अस्याऽनित्यत्वात्क्वचिदन्यत्वमात्रस्याऽपि प्रतीतिः । 'अब्राह्मण' इत्यादि

---

१ इतोऽग्रे--'अत एवाऽनेकमित्यादावेकवचनं सङ्गच्छते' इति ख. पाठः ।

२ इतोऽग्रे—'अस्य श्लोकस्य पूर्वशेषः सायकसमूहप्रतिपादको, रथादिसमूह-प्रतिपादकश्चेत्याहुः । प्रकृतसूत्रस्थभाष्यन्तु पूर्वमतपक्षपात्येव' इति ख. घ. पाठः ।

३ 'इत्याशङ्क्य, नञ्सापेक्षत्वेनाऽसामर्थ्यान्न पूर्वं भावप्रत्ययः । न च भावार्थ-सापेक्षत्वान्नञ्समासोऽपि न स्यादिति वाच्यम्' इति ग. पाठः ।

४ 'ब्राह्मणत्वस्य प्रकारस्याऽऽरोपितत्व' इति ख. पाठः ।

अन्यसदृशे, ( 'अनश्वे' इति केवलाऽन्यत्वे ), 'अपापमि'ति संसर्गाऽभावे, 'अनुदरा कन्ये'त्यल्पत्वे, 'अपशवो वाऽन्ये गोऽश्वेभ्य' इत्यप्राशस्त्ये, तत्कृते एव तत्राऽभावा-ऽन्यत्वे, 'अधर्म' इति विरोधे उदाहरणानि।

[4]अर्थाऽभावे इति। [5]एतद्विषयेऽप्यारोपितो घटसंसर्ग इति बोधः। घटपदस्य च तत्सम्बन्धपरतैकार्थीभावेन। विकल्पते इति। पूर्वपदार्थ-प्राधान्येऽव्ययीभावः, उत्तरपदार्थप्राधान्येऽयमिति रीत्येति भावः।

एवमेव 'अनुपलब्धिरि'ति सिध्यति। 'आरोपित उपलब्धिसंसर्ग' इति, तदभावः फलति। यद्वा 'आरोपितो घट' इत्येव बोधः। भेदेन तदारोपे-ऽत्यन्ताऽभावबोधः। तादात्म्येन तदारोपबोधे भेदबोधः। अत्र च प्रकरणादिकं नियामकम्। न्यायसिद्धेऽर्थे लिङ्गमाह—असन्देहा इति। सन्देहाऽभावः प्रयोजनमित्यर्थः। 'आरोपितः सन्देहसंसर्ग' इति बोध इति वाच्योऽर्थः। अव्ययीभावेन द्वन्द्वसमासे हि परवल्लिङ्गत्वेनाऽसन्देहा इति

१ 'अब्राह्मण इत्यन्यसदृशे' इति ख. पाठः।

२ अयं ख. पाठः क. ग. नास्ति।

३ इतोऽग्रे—'के चित्तु नञ्विशिष्टोत्तरपदेन सदृशादयो लक्ष्यन्ते। न चैवम् 'अस' इत्यादौ सर्वनामकार्याऽनापत्तिः। लाक्षणिकत्वेऽप्यनुपसर्जनत्वा-ऽविघातादित्याहुः। तत उक्तरीत्योपपत्तौ लक्षणायां मानाऽभावात्' इति ख. पाठः।

४ 'अर्थाऽभाव इति। एतद्विषयेऽपि 'आरोपितो घट' इति बोधः। आरोपश्चा-ऽत्र संसर्गाऽऽरोपः। नव्यरीत्या तु 'घटाऽभाव' इति बोधः। तत्राऽऽद्यमते 'उत्तरपदार्थप्राधान्यविवक्षायां तत्पुरुषः, पूर्वपदार्थप्राधान्यविवक्षायामव्ययी-भाव' इत्यपि सुवचनम्। नव्यमते त्वभावो नञर्थः। उत्तरपदार्थस्य प्रति-योगितयैव तत्राऽन्वयः। अव्ययीभावविकल्पे तु ज्ञापकमेव शरणमिति बोध्यम्। तदाह—असन्देहा इति' इति ख. घ. पाठः।

५ 'एतद्विषये' इत्यारभ्य 'असन्देहा इति' इत्यन्तः क. ग. पाठः।

पुंस्त्वाऽनुपपत्तिरिति भावः । इदं पस्पशायां भाष्ये ।

असंहितमिति । इदं च संहितासंज्ञासूत्रे भाष्ये । 'द्रुता-मध्या-विलम्बिता-ख्यवृत्तित्रयमध्ये द्रुताभिन्नायां संहिताऽभाव' इति तदर्थः । एतेन 'बहुव्रीहिणेदं सिद्धमि'त्यपास्तम् । एवं चाऽर्थाऽभावाऽर्थकाऽसमस्तनञः क्रिययाऽन्वयनियम इति बोध्यम् । 'त्वं पचसि' 'युवां पचथ' इत्यादौ नञ्समभिव्याहारे क्रियाया एव निषेधप्रतीतेः, 'घटो नाऽस्ति' 'घटौ न स्तः' 'अहं नाऽस्मी'त्यादौ पुरुषव्यवस्थादर्शनाच्च, स नियम आवश्यकः । अर्थाऽभावे नित्याऽव्ययीभावस्य दुर्वारत्वेन, द्रव्याऽन्वये वाक्यविलोपाऽऽपत्तेश्च ।

यत्तु—'असमस्तनञ्मात्रस्य क्रिययैवाऽन्वयः' इति । तन्न[3]। 'घटः पटो ने'त्यत्र दोषाऽऽपत्तेः ।

प्रसङ्गादाह–नञो नलोप इति । तिङन्तेन समासाऽभावादप्राप्तौ वचनम् । अपचसीति । कुत्सितं पचसीत्यर्थः । नञा समासे 'अनेकधे'त्येव स्यादत आह–नशब्देनेति । सुप्सुपेति समास इति । 'न'शब्देन एकशब्दस्य समासः । ततो 'धा' प्रकारे । प्रकारेऽनेकसङ्ख्यत्वप्रतीतेः । एवम् 'नैकधे'त्यत्रापि नञा एकशब्देन समासे 'धा'प्रत्ययो बोध्यः ।

शत्रन्त इति । 'पातेः क्विपि निपातनात्तुगि'ति 'उभे वनस्पत्यादिष्विति'-

१ 'इदं च पस्पशायांभाष्ये। नन्वव्ययीभावस्य निर्मक्षिकादौ कृताऽर्थस्य, भेदाऽर्थनञि कृताऽर्थनाऽनेन परत्वाद्बाध एवोचितो, न विकल्प इत्यत आह–असंहितमिति' इति ख. घ. पाठः ।

२ 'असमस्तनञ एव' ख. पाठः ।

३ 'तच्चिन्त्यम्' इति ख. पाठः ।

४ इतोऽग्रे—'न च परत्वादव्ययमितिसूत्रेणाऽव्ययीभावाऽऽपत्तिः, तथा च 'नैकधा' इत्येव स्यादिति वाच्यम् । 'अव्यय'मिति योगविभागस्येष्टसिद्ध्यर्थत्वात्' इति ख. घ. पाठः ।

सूत्रे वृत्तिः । 'नासत्या' इत्यन्तानि चत्वारि पृथक्पदानि । 'एते निपात्यन्ते' इत्यर्थः । समासे हि 'नवेदो-नासत्ये'ति स्यात् । यत्त 'नासत्या' इति बहुवचनं बहुवचनान्तस्यैव साधुत्वार्थमि'ति । तन्न । 'नासत्यावश्विनौ दस्रौ' इत्यमरविरोधात् । तस्मान्नासत्या इति बहुवचनमनेकप्रकार-'नासत्य'शब्दसाधुत्वाऽर्थम् । 'न विद्यते सत्यं येषान्ते-असत्याः । न असत्याः 'नाऽसत्या' इति( -एकः १ ) । सत्सु साधवः सत्याः । न सत्या इत्यादिमूलोक्तः परः ( -२ ) । नासिकया त्यक्ता' इति चाऽन्यः ( ३ ) । सर्वं चैतन्निरुक्ते स्पष्टम् । न च तृतीयस्याऽनेन सङ्ग्रहे नञः प्रकृतिभावप्रकरणविरोधः । आद्यद्वयविषये चारितार्थ्यात् । 'अश्विनोरेव चाऽयं साधुः । तेनाऽन्यत्र 'अनसत्य' इत्येवे'ति [२]हरदत्तः । 'नमुचि'शब्दे औणादिक 'इगुपधात्किरि'ति किप्रत्यय' इति हरदत्तः । के चित्तु—'सर्वधातुभ्य इन्' । स च 'इगुपधात्किदि'त्यनेन किदित्याहुः ।

क्षीयतेरिति । 'क्षीष् हिंसायामि'ति दिवादिः । तस्याऽऽकृतिगणत्वात् । 'क्षियतेरि'ति ह्रस्वपाठे 'क्षि निवासगत्योः' तुदादिः [३] । नान्तरीयक-

---

१ 'नासत्याः' इति क्वचित् पाठः ।

२ इतोऽग्रे 'के चित्तु-बहुवचनादन्यत्राऽपि 'नासत्य' इत्येवेत्याहुः' इति ख. घ. पाठः ।

३ इतोऽग्रे 'समुदायपाठेन निपातनादेव नञः प्रकृतिभावे सिद्धेऽत्र 'प्रकृत्ये'-तिपदं योगविभागाऽर्थम् । तेन 'नाऽन्तरीयक'शब्देन नञा समासेऽपि, नलोपो न । तत्र हि विनाऽर्थकाऽन्तरशब्दाद् गहादित्वाच्छे भवाऽर्थे जाते, नञा समासे, स्वार्थे कः । स्पष्टं चेदं 'भावे' इति सूत्रे कैयटे । एवं 'नमेरु' 'नाराच' 'नग' 'ननान्दा' इत्यादयोऽपि साधवो बोध्याः । 'योगविभागस्येष्टसिद्ध्यर्थत्वान्नाऽतिप्रसङ्ग' इति के चित्' इति ख. पाठः । क. ग. नास्ति ।

नमेरु-नाराच-ननान्दा इत्यादि (–[1]निषेधार्थक'न'शब्देन समासः । नञा समासस्त्वनभिधानान्न । तेनाऽपि समासे पृषोदरादित्वान्नलोपाऽभावः । सूत्रन्तु प्रपञ्चाऽर्थमिति तत्त्वम् ) ।

कुगति । 'कु'शब्दोऽत्र पापाऽर्थमव्ययमेव, न तु पृथ्वीवाचकः । गत्यादिसाहचर्यात् । अव्ययत्वाच्चाऽव्ययपूर्वपदप्रकृतिस्वरो भवति ।

ऊर्यादि । क्रियायोग इति । 'उपसर्गा' इत्यतस्तदनुवर्त्तते । अत एव संज्ञाविधावपि च्वि-डाजंशे तदन्तविधिः । च्वेर्लुप्ततयाऽश्रुतस्य संज्ञायाः कर्त्तुमशक्यत्वाच्चेति भावः । इदं सूत्रं कृभ्वस्तियोगे एव । च्विडाचो-स्तत्रैव विहितत्वात् । ऊर्यादीनामपि तत्साहचर्यात्, भाष्यप्रामाण्याच्च, अन्यत्राऽप्रयोगाच्च, तद्योगे एव । तत्राऽप्याविःप्रादुःशब्दौ विहायाऽन्येषां करोतिनैव योग इति माधवादिग्रन्थे स्थितम् । तदाह—ऊरीकृत्येति ।

'ऊरी' 'उरी' 'उररी'-इत्यङ्गीकारे । 'वेताली' 'पाम्पी', 'ताली' 'विताली', 'आताली', 'धूसी', 'धूली', 'शंसकला', 'गुग्गुला'[2], 'आलम्बी'—एते विस्तारे । 'शकला', 'संसकला', 'ध्वंसकला', 'भ्रंशकला'[3]–एते हिंसायाम् । 'गुग्गुलुधाः'–पीडायाम् । 'सजूः'-सहाऽर्थे । 'फलूफली', 'विक्ली', 'फली', 'फलू', 'आक्ली'-एते विकारे । 'आलोष्ठी', 'केवाली', ('सेवाली',)[4] 'वर्षाली', 'मश्मशा', 'मसमसा'-एते हिंसायाम् । 'वषट्', 'वौषट्', 'श्रौषट्', 'स्वाहा', 'स्वधा'-एते दाने । 'प्रादुस्', 'आविस्'–प्रकाशने । तत्राऽऽविस्-शब्दस्य साक्षात्प्रभृतिषु पाठात्कृञ्योगे गतित्वविकल्पः । भ्वस्तियोगे त्वनेन नित्यमिति विशेषः । 'श्रत्', पाम्पाली', 'सक्ला', 'केवासी',

---

१ 'इत्यादौ निषेधाऽर्थकनशब्देन' इत्यादिपाठः क. कुण्डलितः । ख. ग. नास्ति ।

२ 'गुलुगुका' इति ख. ग. पाठः ।

३ भ्रंसकला' इति क. पाठः ।

४ अयं ख. पाठः । क. ग. नास्ति ।

'वार्दाली', 'पार्दाली',-इत्यूर्यादिः। एषां 'प्राग् निपाता' इत्यधिकारेण निपातत्वादव्ययत्वेन सुब्लोपादि सिद्ध्यति। 'ऊर्यादयो निपाता भवन्ति', 'निपाताः सन्तः क्रियायोगे गतिसंज्ञा' इति वाक्यभेदो बोध्यः। अत एव 'ते प्रागि'त्यस्य संज्ञानियमत्वे, व्यवहितप्रयुक्तानां निपातत्वाऽव्ययत्वसिद्धिः।

**कारिका क्रियेति**। मर्यादास्थितिरित्यर्थः। 'यत्न' इत्यपरे। धात्वर्थनिर्देशे ण्वुच्। यस्तु कर्त्तरि ण्वुलन्तो दासीवाची, यश्च श्लोकवाची, तयोर्न ग्रहणम्। 'क्रियायोगे' इत्यनुवृत्त्या क्रियावाचकस्यैव ग्रहणात्। अन्वयरूपयोगस्येव, वाच्यवाचकभावस्याऽपि ग्रहणात्। विनिगमकाऽभावात्। धात्वर्थनिर्देशण्वुलस्तु धात्वर्थाऽनुवादकत्वात्क्रियावाचकत्वमक्षतमेव।

**अनितिपरं किमिति**। 'ते प्राग्धातोरि'त्यस्य संज्ञानियमाऽर्थत्वे, व्यर्थमिति प्रश्नः। प्रयोगनियमाऽर्थत्वाऽभिप्रायेणोत्तरम्। प्रयोगनियमार्थत्वमेव च सूत्रकाराऽभिप्रेतम्। अत एव 'छन्दसि परेऽपि' 'व्यवहिताश्चे'तिसूत्रद्वयं सार्थकम्। 'अनितिपर'ग्रहणं चाऽत्र ज्ञापकम्। भाष्यकृता तु संज्ञानियमाऽर्थत्वमाश्रित्य त्रितयमपि प्रत्याख्यातम्। अत एव 'सुकटङ्कराणि' 'स्वाढ्यम्भवमि'त्यादिभाष्यप्रयोगाः सङ्गच्छन्ते। 'कटंसुकराणी'त्यादि त्वनभिधानेनैव वारणीयं संज्ञानियमपक्षेऽपि। तस्मादिदमपि सूत्रं व्यर्थम्। अनभिधानेनैव सर्वाऽतिप्रसङ्गवारणादिति 'ते प्रागि'ति सूत्रे भाष्ये एव स्पष्टम्। एतेन 'आविश्चक्षुषोऽभवदसाविव राग' इत्यादि व्याख्यातम्। अत्र पक्षे 'सु-आविरि'त्यादीनामगतित्वमेव। 'प्रयोगनियमेऽपि 'व्यवहिताश्चे'त्यत्र 'छन्दसी'त्यननुवृत्त्या एषां साधुत्वमि'ति केचित्।

**खाडितीति**। एवं चैतद्विशेषणाऽभावे प्रयोगनियमशास्त्रादेवंप्रयोगो-

---

१ 'किञ्च क्रियायोगे' इति ख. पाठः।

२ 'ग्रहणम्' इति ख. पाठः।

३ अपिः ग. पुस्तके नास्ति।

च्छेद एव स्यादिति भावः। अत्र 'अनितिपरम' इति बहुव्रीहिः। षष्ठीतत्पुरुषे हि उक्ते स्यात्, 'कफ इति खाट्कृत्ये'त्यत्र च न स्यादिति बोध्यम्। न च खाडादीनामितिशब्दाऽर्थान्वयेन क्रियायोगाऽभावात्कथं गतित्वम्। इतेः शब्दपरतामात्रे तात्पर्यग्राहकत्वात्। न च 'नेतौ' इत्येव सिद्धे 'पर'ग्रहणं व्यर्थम्। अनुकरणाऽऽकृतावनितिपरत्वविवक्षालाभाऽर्थं तत्सत्त्वात्। तेन 'श्रौषड्वौषडिति कृत्वे'त्यादौ व्यवहितेऽपि निषेधसिद्धिः। एतद्बलादेव 'ते प्रागि'त्यादावपि गत्याकृतिनिर्देशः। एतत्प्रकरणे आकृतिपरतायां तस्य तात्पर्यग्राहकत्वात्। अत एव 'अभ्युद्धरती'त्यादावुभयोः पूर्वप्रयोग इति स्पष्टं भाष्ये।

आदराऽनादरयोः। अत्राऽसद्ग्रहणं न कार्यमिति भाष्यकृतः। 'गोष्पदं सेविते'त्यत्राऽसेवितेऽगोष्पदस्येव, नञ्पूर्वग्रहणसिद्धेः। अनादराऽसेवितपदे नञ उपस्थितत्वेन, तद्भिन्ननिषेधाऽर्थकपूर्वपदस्य न ग्रहणमिति तदाशयः। अत्र 'अनादर' इति नाऽर्थाभावे तत्पुरुषः। तथा सत्यादरस्य यत्र प्रसक्तिस्तदीयाऽनादर एव स्यात्—'गुरुमसत्कृत्ये'त्यादौ। 'पाखण्डिनमसत्कृत्ये'त्यादौ न स्यात्। इष्यते त्वत्र। तस्मादविद्यमानाऽऽदर इति बहुव्रीहिरिति भाष्ये स्पष्टम्।

कृञ्विषयेति। तत्र लक्ष्याऽनुसारेण व्यवस्था। अत एव च 'स्त्रीष्विवाऽयमहं वदेदि'त्यादौ न गतित्वादि। नाऽपि 'उदात्तवता गतिमते'ति-

---

१ इतोऽग्रे—'कृञ्चाऽनुप्रयुज्यते' इतिवदत्राऽपि 'कृ'ञ'ति प्रत्याहारः। तेन कृभ्वस्तिविषयेत्यर्थः। एतेन 'नासदासीयं ब्रह्मसूक्तमि'ति प्रयोगे 'नासदासीद्'तितान्तमनुकृत्य 'अनुकरणं चाऽनितो'ति निपातत्वेऽव्ययत्वाट्टिलोप' इति 'गुणवचने'तिसूत्रस्थमनोरमाविरोधादिदं चिन्त्यमि'ति मन्दोक्तमपास्तम्। 'नासदासीदिति अस्त्यस्मिन्नि'ति मत्वर्थे छविधानेनाऽस्तियोगस्य तत्रापि सत्त्वात्। तत्र लक्ष्याऽनुसारेण व्यवस्था' इति शब्दरत्नस्थत्वात् क. कुण्डलितः ख. ग. पाठः।

वार्त्तिकेन 'वदेदि'त्यनेन समासः। समासाऽनुपयोगाच्च। समासे विभक्त्यलुगर्थं यत्नान्तराऽऽस्थाने गौरवाच्चेत्याहुः।

हतं परिगृह्येति। हत्वा गमनं द्विधा, हतं त्यक्त्वा, परिगृह्य चेति। आद्यमुदाहरणम्, अन्त्यं प्रत्युदाहरणम्। 'अपरिग्रहे' इति च प्रयोगोपाधिर्न तु वाच्यकोटिनिविष्टम्। अर्थगतलिङ्गस्य शब्दे आरोपात् 'कणेमनसी' इति निर्देशः। 'शब्दस्वरूपे' इति विशेष्यं वा। कणेहत्येति। 'पराऽवरयोगे चे'ति क्त्वा। अतिशयेनाऽभिलष्य, तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः। ततश्च श्रद्धाया अपगमात्तत्प्रतिघातो गम्यते। प्रत्युदाहरणन्तु 'कणे हत्वा गतः'। सूक्ष्मो धान्याऽवयवः कणः, तस्मिन्हत्वेत्यर्थः।

'नमस्पुरसोरि'ति सत्वमभिप्रेत्याऽऽह—पुरस्कृत्येति। 'पुरोभूय' 'पुरोगत्ये'त्यप्युदाहरणम्। 'कृञ्योगे एवे'ति नियमे मानाऽभावात्। अत एव 'पुरोहितमि'त्यादौ 'गतिरनन्तर' इति पूर्वपदप्रकृतिस्वरः। 'पुरः'शब्दश्चाऽसिप्रत्ययस्वरेणाऽन्तोदात्तः। न चाऽनेन गतित्वेन 'निपाता आद्युदात्ता' इत्यस्याऽऽपत्तिः। प्रकृतिप्रत्ययविभागशून्ये एव फिट्स्वरप्रवृत्तेरित्याहुः। 'अमुं पुरः पश्यसी'त्यादौ 'स्थितमि'त्यध्याहारेण दृशिं प्रत्यगतित्वान्न सत्वम्।

मान्तमव्ययमिति। प्रतिपदोक्तपरिभाषालभ्यमेतत्। उत्तराऽर्थाऽऽवश्यकाऽव्ययपदाऽनुवृत्तेर्वा। तेनेह न 'काण्डमस्तं कृत्वा गतः'। अस्तं = क्षिप्तमित्यर्थः।

जलमच्छं गच्छतीति। 'प्राग्रीश्वरादि'त्यधिकारान्निपातत्वेऽव्ययत्वे च विभक्तिलुक्स्यादिति भावः। न च 'चोरशब्दमुच्चार्ये'त्यर्थक-'चोरङ्कारमाक्रोशती'त्यादौ 'अनुकरणं चाऽनिती'ति गति-निपातत्वयोः सत्त्वात् मुमनापत्तिः, 'अरुर्द्विषदि'त्यत्र 'खित्यनव्ययस्ये'त्यतोऽनव्ययस्येत्यनुवृत्तेरिति वाच्यम्। खित्करणसामर्थ्यात्तत्सिद्धेरित्याहुः। 'कृञ् साधुत्वाऽर्थः।

---

१ 'उदाहरणे' इति ग. पाठः।

'चोरमाक्रोशतीत्येव बोध' इत्यन्ये । सप्तमीनिर्देशेऽपि 'तस्मिन्नि'ति-परिभाषा न प्रवर्त्तते। 'क्रियायोगे' इत्यनुवृत्तेः। एतेन'अनुस्वारव्यवधानात् कथमत्र प्राप्तिरि'ति मन्दोक्तमपास्तम् ।

परं प्रतीति। स्वयमेव पर्यालोचने उदाहरणमिति भावः ।

तिरो । अन्तर्धौ किम् ? । 'तिरो भूत्वा स्थितः' । पार्श्वतो भूत्वेत्यर्थः । तिरः कृत्वेति । सत्वविधौ गतिग्रहणाऽनुवृत्तेर्गतित्वाऽभावे न सत्वम् । 'तिरस्कार' इति तु 'विभाषे'ति सूत्रे 'अन्तर्द्धावि'त्यस्य निवृत्त्या सिद्ध-मित्याहुः । 'तत्प्रयोगाऽनुरोधेन तत्र गतिग्रहणनिवृत्तिरि'ति मते तु 'तिरस्कृत्वे'त्यपि ।

उपाजेऽन्वाजे'शब्दौ एदन्तौ, विभक्तिप्रतिरूपकौ निपातौ, दुर्बलस्य बलाऽऽधाने वर्त्तेते इत्यभिप्रेत्याऽऽह–दुर्बलस्येति । च्व्यर्थ इति । च्व्यन्ते तु पूर्वविप्रतिषेधेन नित्यैव संज्ञेति बोध्यम् । स्पष्टं चेदमत्रैव भाष्ये ।

इदं प्रायिकम् । अत एव 'नमस्करोती'त्यादौ च्व्यर्थाऽभावेऽप्यनेन गतित्वमित्याहुः । अन्ये तु नमःशब्दमूर्यादिषु पठन्ति, स्वरादिषु चेति स्वरादिस्थस्य[1] गतित्वाऽभावः, ऊर्यादिस्थस्य गतित्वमिति, विकल्पफल-सिद्धिमाहुः ।

मान्तत्वमिति । विकल्पितगतिसंज्ञासन्नियोगेन 'लवणम्', 'उष्णम्', 'शीतम्', 'उदकम्', 'आर्द्रमि'ति पञ्चानामित्यर्थः । आकृतिगणोऽयम् ।

अनत्या । 'उरसि' 'मनसि' इति विभक्तिप्रतिरूपकौ निपातौ ।

मध्येपदे । 'विभाषा कृञी'ति वर्त्तते, 'अनत्याधाने' इति च । अनत्याधानरूपेऽर्थे एषामेदन्तत्वं निपात्यते । 'मध्ये' इत्यादि न सप्तमी, अनन्वितत्वात् । मध्यं, पदं च कृत्वा, वाचं नियम्येति च प्रत्ययात् ।

निवचनं–वचनाऽभावः । अर्थाऽभावेऽव्ययीभावः । अनत्याधाने किम् ? । 'हस्तिनः पदे कृत्वा शिरः शेते' ।

---

१ 'स्वरादिस्थस्वस्य' इति तु सर्वपुस्तकेषु पाठः ।

नित्यं हस्ते। उदाहरणे 'तत्पुरुषे कृती'त्यलुक्। उपयमने किम्?। 'हस्ते कृत्वा कार्षापणं, गतो भृत्यः'।

प्राध्वमिति-मान्तमव्ययं, बन्धनहेतुकाऽऽनुकूल्ये वर्त्तते। अत्र 'कृञी'त्येव। जीविका-जीवनोपायः।

सुपुरुष इति। क्रियायोगाऽभावादगतित्वमिति भावः।

अत्रेति। अव्यवस्थया समासप्राप्तौ, व्यवस्थाऽर्थानीति भावः।

प्रादयो गतादीति। उभयत्राऽप्यादिशब्दः प्रकारे। तेन 'दुराचारः पुरुषो दुष्पुरुष' इत्यादि सिद्धम्। प्रगत इति। अनेन गताऽर्थे वृत्तिम्, अस्वपदविग्रहेण नित्यसमासत्वं च दर्शयति। अतिमाल इति। 'गोस्त्रियो-रि'ति ह्रस्वः। न च 'प्रादय' इत्यादीनि व्यर्थानि, शाकपार्थिवादित्वादेव सिद्धेरिति वाच्यम्। 'अनित्यसमासे यदुत्तरपदं सावेकाजन्तोदात्तं, तस्मात्परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ते'त्यर्थका'ऽन्तोदात्तादुत्तरपदा-दन्यतरस्यामनित्यसमासे' इत्यस्याऽप्रवृत्त्यर्थमत्र पाठादित्याहुः।

कर्मप्रवचनीयेति। निषेधोऽयमनित्यः। 'सुराजा' 'अतिखट्वः', अति-राज' इत्यादिभाष्यप्रयोगात्। यत्तु 'अध्यापकधूर्त्तैरि'त्यादिनिर्देशादयम-नित्यः। तत्र हि 'अधिपरी अनर्थकावि'ति कर्मप्रवचनीयत्वमि'ति। तन्न। 'अधीते' इत्यादावधेरुपरिभावाऽर्थताया भूवादिसूत्रे भाष्ये उक्तत्वात्। 'अधीते'इत्यस्य विशिष्टाऽर्थयुक्तं, नियमपूर्वकं वा पठतीत्यर्थ' इति कैयटाच्च।

वृक्षं प्रतीति। न च कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्समासो नेति वाच्यम्। 'प्रतिस्तुतं गतः' इत्यादौ षत्वाऽभावसम्पादनेन चारि-तार्थ्यात्। 'दुर्निन्दायाम्' 'स्वती पूजायाम्' 'आङीषदर्थे' इति वार्त्तिकत्रय-मन्यदपि भाष्ये पठ्यते। तच्च प्रादिसमासस्यैव नियामकम्, न गतिसमा-सस्य। अत एव कृच्छ्राऽर्थकदुःशब्देन 'दुष्कृतमि'त्यादिभाष्योदाहृते समासः। अनभिधानात्तु भूते खल् न। 'अतिदेवान् कृष्ण' इत्यादौ

---

१ इतोऽग्रे—'यत्र तु समासो नेष्यते, तत्राऽनभिधानाद्वारणीयः। अत एव

पूजाऽर्थत्वेऽपि समासाऽभावस्त्वेवम् । तथाहि—सूत्रे 'प्रादी'त्यत्राऽऽदिशब्दः प्रकारे । तेनाऽलम्शब्देन समाससिद्धिः । एवं च कोरव्ययस्य तेनैव सिद्धे, पुनः 'कु'ग्रहणेन प्रादित्वप्रयुक्तसमासस्य काचित्कत्वकल्पनादित्याहुः ।

तत्रोपपदम् । अयमधिकारः । अत एव 'अमैव तुल्यविधानमि'त्यादि सङ्गच्छते । 'येनाऽमेव विधीयते, तेन यस्योपपदसंज्ञाऽपि विधीयते' इति हि तदर्थः । 'अम्'मात्रविधायकसूत्रस्थं सप्तम्यन्तं पदमि'त्यर्थो हि न शब्दमर्यादालभ्यः । 'कर्मण्यणि'त्यादौ 'कर्मणी'त्यादिः सौत्रत्वात्प्रथमाऽर्थे सप्तमी । एवं च 'धातोरण् प्रत्ययो भवति, कर्म चोपपदसंज्ञमि'ति तदर्थः । सूत्रे 'सप्तमी'पदं-सप्तम्यन्तपदपरम् । तत्स्थम् = तद्वाच्यमित्यर्थः । तदाह सप्तम्यन्ते पदे इति । महासंज्ञाबललभ्यमर्थमाह—तद्वाचकं पदमिति । न च 'द्वाभ्यां पिबति द्विप' इत्यादौ 'द्वाभ्यामि'त्यस्य 'सुपी'ति सप्तम्यन्तपदवाच्यवाचकत्वाऽभावेन उपपदसंज्ञा न स्यादिति वाच्यम् । ईदृशे विषये प्रथमाऽर्थे सप्तम्युच्चारणसामर्थ्यात्सप्तम्यन्तपदवाच्यत्वमेव तत्त्वमित्यदोषः ।

अत्र केचित्—'पदं शब्दमात्रं, न सुबन्तादि । 'स्तम्बकर्णयोरुपपदयोरि'त्यादिवृत्तिविरोधात् । न च तेषां तत्प्रकृतिकसुबन्ते लक्षणया न दोषः । लक्षणायां मानाऽभावात् । तां विनैवोपपत्तेश्च । अत एव 'स्तम्बेरम' इत्यादावधिकरणत्वात्सप्तमी, कारकत्वात्पूर्वपदप्रकृतिस्वर' इति 'कारके' इति सूत्रस्थाऽऽकरग्रन्थाः सङ्गच्छन्ते । अन्यथोपपदत्वादेव सिद्धे, तद-

---

'अतिदेवान्कृष्ण' इत्यादौ पूजार्थत्वेऽपि समासाऽभाव इत्याहुः । केचित्तु 'प्रादी'त्यत्राऽऽदिशब्दः प्रकारे । तेनाऽलंशब्देन समाससिद्धिरिति वक्ष्यते' इति ख. पाठः ।

१ 'काचित्कत्वकल्पनान्न दोष इत्याहुः' इति ख. पाठः ।

२ इतोऽग्रे—'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं ने'ति तूद्देश्यप्रत्ययपरम्' इति ख. घ. पाठः ।

सङ्गतिः स्पष्टैवे'ति । तन्न । 'सुपी'त्यधिकारेण लक्षणाया आवश्यकत्वात् ।

किञ्च 'स्तम्बेरम' इत्यादौ समासाऽनापत्तिः । उपपदसंज्ञकसुबन्ताऽभावात् । न चोपपदप्रकृतिकसुबन्तग्रहणम् । 'सुप्यजाताविॽ'ति णिनौ 'राजदर्शी'त्यादौ समासाऽनापत्तेः ।

तत्र हि सुबन्तमेवोपपदं, न तु तत्प्रकृतिकम् । आवृत्त्याऽर्थद्वयपरत्वे च न मानम् । तस्मात् पदं सुबन्तमेव । यत्राऽपि 'विभाषाऽग्रेप्रथमपूर्वेष्वि'-त्यादौ न 'सुपी'त्यादि श्रूयते, तत्राऽपि महासंज्ञाबलात्सुबन्तस्यैवोपपदत्वम् । तेषां च तत्प्रकृतिके लक्षणा । 'कारके' इति सूत्रस्थकैयटादि-ग्रन्थास्तु चिन्त्या एव । संज्ञासमावेशफलन्तु 'ग्रामेवास' इत्यादि बोध्यम । अत एव 'उपपदमि'ति सूत्रे 'सुप्सुपे'ति निवृत्तमि'ति भाष्योक्तं सङ्गच्छत इति वक्ष्यते । उप = समीपोच्चारितं पदम्—उपपदम् । सामीप्यञ्च-सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यन्वयित्वमात्रेण, न त्वानुपूर्व्यव्यवधानम् । अत एव कर्मण्यण्सूत्रे 'उष्ट्रप्रणाय' इति भाष्योदाहृतं सङ्गच्छते । 'आतोऽनुपसर्गे क' इत्यत्राऽनुपसर्गग्रहणं च चरितार्थम् ।

'गुरुं नमस्करोति' 'कन्यामलं करोती'त्यादौ तु 'हिमवन्तं शृणोती'-त्यादाविवाऽनभिधानान्नाऽण् । 'अभिधानलक्षणाः कृत्तद्धितसमासाः' इत्यकर्त्तरि चेति सूत्रे भाष्योक्तेः । 'महान्तं कुम्भं करोती'त्यत्राऽपि नाऽण् । सविशेषणत्वेनाऽसामर्थ्यात् । 'उपपदमतिङि'त्यनेन कृदन्तस्योपपदेन नित्यैकाऽर्थीभावबोधनात् । तत्सामर्थ्येन चोपपदेनैकाऽर्थीभाव एव प्रत्ययोत्पत्तेः । अत एवोपपदनिमित्तकृद्विधौ समर्थपरिभाषोपस्थिति-रत्रैव सूत्रे भाष्ये उक्ता । विशिष्टस्य तु नोपपदसंज्ञा । अपदत्वात् ।

नन्वेवं 'तत्र'ग्रहणं व्यर्थम् । न च 'प्रकृतधात्वधिकारे एवोपपदत्वं यथा स्यादि'त्यर्थम् । अधिकारेणैव सिद्धेरत आह—तस्मिन्श्चेति । एतेन

---

१ इतोऽग्रे—'अत एव 'मा भवान्भूदि'त्यादौ माङुपपदत्वनिबन्धनो लुङ् सङ्गच्छते' इति ख. पाठः ।

उपपदाऽभावेऽप्यण्स्यात् । सति तु तत्प्रयोगे उपपदसंज्ञायां समास' इत्य-पास्तम् । एवं चाऽर्थनिरपेक्षा प्रातिपदिकार्थमात्रे प्रयुक्ता यत्र सप्तमी, तत्राऽस्य प्रवृत्तिः । अन्यथा 'कर्मणि सत्यण्भवति, तच्च कर्मोपपदसंज्ञकं भवती'त्यर्थे उपपदाऽभावेऽणः प्राप्तेरेवाऽभावेन, 'तद्व्यावृत्त्यर्थं 'तत्र'ग्रहणमि'त्यर्थपरं भाष्यमसङ्गतं स्यात् । अत एव 'भुवो भावे' 'पशौ' इत्यादौ नाऽस्य प्रवृत्तिः । तद्व्यवस्था त्वनुनासिकाऽऽदिवल्लक्ष्याऽनुरोधेनैव ।

नन्वेवमप्यप्रयुक्तस्य संज्ञायाः कर्त्तुमशक्यत्वात्सन्नियोगशिष्टन्यायेनोपपदप्रयोगाऽभावेऽणादिकं नेति, व्यर्थमेव 'तत्र'ग्रहणमिति चेत् । सत्यम् । स्पष्टाऽर्थमेवैतत् । ध्वनितं चेदं भाष्ये इत्यलं विस्तरेण ।

उपपदं सुबन्तमिति । 'सुपि'ति प्रथमाऽन्तमनुवर्त्तते । तेन 'राजयुध्वे'-त्यादौ नलोपादि सिद्ध्यतीति प्राञ्चः ।

अन्ये तु-विभक्त्यन्तस्यैवोपपदसंज्ञकत्वेन नाऽयं दोषः । स्वार्थे परिसमाप्तस्यैवेतरक्रियाद्यन्वयाच्च । न च-'एधानाहारको व्रजती'त्यत्र समासव्यावृत्तये तत् । अत्र हि 'व्रजती'त्युपपदमिति वाच्यम् । 'अतिङि'ति बहुव्रीहिणा 'तिङन्ताऽघटितः समास' इत्यर्थकेनैव तद्व्यावृत्तिसिद्धेः ।

यत्तु 'इदमुपपदविशेषणमि'ति । तन्न । 'अनवक्लृप्त्यमर्षयोरि'तिसूत्रस्थभाष्यविरोधात् । तत्र हि–'किंवृत्तस्याऽनधिकारादकिंवृत्तग्रहणाऽऽनर्थक्यमि'-त्युक्त्वा 'सामर्थ्यादुपपदसंज्ञाऽर्थं तर्ही'त्याशङ्क्य, 'अतिङिति प्रतिषेधात् संज्ञाऽऽनर्थक्यमि'त्युक्तम् । किञ्च प्रकृतसूत्रे भाष्ये 'अतिङि'ति किमर्थम् । कारको व्रजती'त्युक्तम्[1] । तदाशयस्तु-'मा भवान् भूदि'त्यादौ[2] न समासप्राप्तिः । उपपदत्वाऽभावात्[3] । तथा हि[4]—'पशावि'त्यादिवल्लविधौ 'माङो'-

---

१ इतोऽग्रे—'अनवक्लृप्त्यमर्षयोरि'तिसूत्रस्थभाष्यविरोधात्' इति ख. पाठः ।

२ 'मा भूदित्यादौ तु न समासप्राप्तिः' इति ख. पाठः ।

३ 'माङादेरुपपदत्वाऽभावात्' इति ख. पाठः ।

४ 'तथा हि' इति क. ग. पाठः । ख. नास्ति ।

त्यादिसप्तम्याः स्वार्थे सत्त्वेन, सौत्रप्रथमाऽर्थसप्तम्या एव चोपपद-संज्ञालिङ्गत्वेनाऽत्र तदप्राप्तेः। तस्योपपदसंज्ञायाः फलाऽभावाच्च। तुमुन्-विधौ तु 'क्रियार्थोपपदस्ये'त्यर्थमुपपदसंज्ञाऽऽवश्यकीति, तदुपस्थितौ समासस्याऽपि प्राप्तिरि'ति। तत उक्तम्-'न दोषः। सुप्सुपे'ति वर्त्तते' इति। ततः शङ्कितम्—'कारको गत' इत्यादौ तिङन्ताऽर्थक्रियाबोधकसुबन्तेन समासप्रतिषेधाऽर्थं 'तिङन्तोऽर्थोऽर्थोऽघटित' इत्यर्थकं तदि'ति। तत्रोत्तरम्-'द्रव्यवाचि तदि'ति। तदाशयस्तु-'गतादेर्द्रव्यवाचितया क्रियाऽर्थक्रिया-वाचकोपपदत्वाऽभावात् 'तुमुण्वुलावि'त्यस्यैवाऽत्राऽप्राप्तिः। अत एव तत्र सिद्धान्ते न समासः। तुमुन्विधायके प्राधान्येन क्रियाऽर्थक्रियावाचक-स्यैव क्रियाग्रहणसामर्थ्येन ग्रहणमि'ति।

यत्तु कैयटेन तत्र समासवारणायोक्तं-'तत्र धातोरेवोपपदत्वम्। तस्य च क्तादिप्रत्ययेनैकार्थीभूततया निष्कृष्यैकार्थीभावस्य वक्तुमशक्यत्वेन, न समास' इति। तन्न। 'अनुपसर्जनादि'तिसूत्रभाष्योक्तरीत्या निष्कृष्यै-कार्थीभावाऽभावेऽपि शास्त्रप्रवृत्तेर्दुर्वारत्वात्। 'उपपदमि'तिमहासंज्ञा-विरोधेन तावन्मात्रस्योपपदताया वक्तुमशक्यत्वाच्च।

किञ्चैवं सति 'कारको व्रजती'त्यत्र तिङन्तस्योपपदत्वाऽभावात्तेन समासप्राप्तिशङ्काऽसङ्गतैवं स्यात्। यदि तस्याऽन्यबोधकत्वेऽपि, प्राधान्येन क्रियाबोधकत्वाद्विशिष्टमप्युपपदं, तर्ह्यत्र धातोः प्राधान्येन क्रियाबोध-कत्वाऽभावात्तुमुनोऽप्राप्तिरेव। प्रत्ययाऽर्थविशेषणतयैव ततस्तदुपस्थितेः। एवं च 'कर्त्तु गत' इत्याद्यसाध्वेवेति बोध्यम्। 'कारको व्रजतितरामि'ति-तदर्थसुबन्तप्रतिषेधाऽर्थन्तु नाऽतिङिति, तस्याऽनभिधानादित्याशयेन

१ 'तिङन्ताऽर्थ-क्रिया-बोधकाऽघटित इत्यर्थकम्' इति लघुशेखरे पाठः।

२ 'तदुपस्थितिः। यदि यथाकथञ्चित् क्रियाबोधकत्वेनैव तस्य तत्त्वं, तर्हि विशिष्टस्याऽपि तत्त्वं दुर्वारमिति बोध्यम्' इति ख. पाठः। क. पुस्तके तु मसीलेपेन निःसारितोऽयं पाठः।

अतिङ्ग्रहणवैयर्थ्यमाशङ्क्य-'एवं तर्हि सिद्धे सति, यदतिङिति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्योऽनयोर्योगयोर्निवृत्तं-'सुप्सुपे'ति। तेन 'गतिकारकोपपदानामि'ति परिभाषा न कर्त्तव्या भवति। केनेदानीं समासो भविष्यति ?। 'समर्थेनेती'त्युक्तम्। 'अनयोरि'त्यस्याऽयं भावः-'पूर्वसूत्रे 'गतिरि'ति, इह 'अतिङि'ति च योगं विभज्योभाभ्यां सम्बन्ध' इति। तत्र 'गति'रिति सूत्रे गत्यंशे 'अतिङि'त्यस्य सम्बन्धे फलाऽभावेन, समासविशेषणताया एवाऽऽवश्यकत्वेनाऽत्रापि तथैवोचितम्।

न चैवमपि 'गतिरतिङन्तेन समस्यते' इत्यर्थोऽस्त्विति वाच्यम्, तृतीयान्तत्वकल्पने, सौत्रलुक्कल्पने च मानाऽभावात्। किञ्चैवमन्वये 'केनेदानीं समास' इति प्रश्नस्य, 'समर्थेने'त्युत्तरस्य च भाष्येऽसङ्गतिः। 'उपपदमि'ति सूत्रे तथाऽन्वये उक्तरीत्याऽतिङ्ग्रहणफलस्य दुर्वचत्वाच्च। अत एव 'प्र पचतितरामि'त्यादौ न नित्या गतिसमासः।

नन्वेवं तत्र तद्वारणायाऽतिङ्घटितः समास इत्यस्य चारितार्थ्येन, कथं तत्र 'सुप्सुपे'त्यस्याऽसम्बन्धे तस्य ज्ञापकत्वम्। तत्र हि वैकल्पिकः समास इष्यते। तथा हि-'गतिकारकोपपदादि'ति सूत्रे कृत्रिमकृद्ग्रहणे 'प्र पचतितरामि'त्यत्र स्वरो न स्यात्। तस्मात्कृद्ग्रहणं भावकिबन्ततया क्रियामात्राऽर्थकमि'त्युक्तं भाष्ये।[1] तेन समासो लभ्यते। 'तिङि चोदात्तवती'ति सूत्रे च-'यदि तिङ्ग्रहणं क्रियते, आमन्ते न प्राप्नोति—प्र पचतितरामि'ति। तेन समासाऽभावो लभ्यते। अन्यथा नित्यसमासे, कृदुत्तरपदप्रकृतिस्वरे, शेषनिघातेनैव 'प्र'शब्दस्य निघातसिद्धेस्तदसङ्गतिः स्पष्टैवेति चेन्न। एतत्सम्बद्धनैवाऽतिङ्ग्रहणेन प्राचीनपठितपरिभाषाऽनुरोधेन सूत्रद्वये[2]ऽपि तदसम्बन्धज्ञापनमिति भाष्याऽऽशयसत्त्वेनाऽक्षतेः। ज्ञापिते च 'पचति' 'पचतितरामित्या'दिभि-

१ 'इति भाष्ये उक्तम्' ख. पाठः।

२ 'सूत्रद्वयविषये' इति ख. पाठः।

गतेः समासवारणायाऽतिङित्यस्याऽपि 'तिङघटित' इत्यर्थकस्य तत्र सम्बन्धः। एव च तत्र 'उदात्तवता गतिमते'ति वार्त्तिकेन समासः। तत्र 'तिङ्'पदं तिङ्घटितोपलक्षणम्, उक्तभाष्यप्रामाण्यात्। तस्य च 'सुप्सुपे'त्यत्र, अत्र च पाठात्तत्पुरुषत्वं, तदभावश्च, वैकल्पिकत्वं चेति सर्वभाष्यसामञ्जस्यम्। न च 'यत्क्रियायुक्ता' इति न्यायात्, धातूपसर्गयोः सम्बन्धस्याऽन्तरङ्गत्वाच्च, 'अनुभूयते' इत्यादौ कर्मणि लकारोत्पत्तये 'पूर्वं धातुरुपसर्गेणे'त्यस्यैवाऽङ्गीकाराच्च, गतिसूत्रेण धातुना समासः स्यात्, तथा चैकस्वर्यादिप्रसङ्ग इति वाच्यम्। एतद्विषये 'पूर्वं धातुः साधनेन युज्यते' इति पक्षस्याऽङ्गीकारेण भाष्ये समाधानात्। सामान्यतः फलव्यधिकरण-व्यापारवाचित्वमाश्रित्य कर्मप्रत्यये कृते, 'किं तत्फलमि'ति विशेष-जिज्ञासायां, तन्निवृत्तये पश्चादुपसर्गसम्बन्ध, इत्येतदेव तस्य द्योतकत्व-मिति तदाशयः[1]। एवञ्च[2] गतादिभिर्विशिष्टैरेकार्थीभावे धातोरप्येकार्थी-भावेन, धातूपसर्गयोः समासेऽपि न दोषः। तिङन्तेन तु नैकार्थीभावः, 'अतिङि'ति'निषेधादिति, तदवयवेन प्रत्ययाऽर्थोऽस्पृष्टेन नैकाऽर्थीभाव इति, तत्राऽपि न दोष इति केचित्। तन्न। 'यो हि मन्यते पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेणे'ति 'आस्यते गुरुणे'त्यकर्मकः 'उपास्यते गुरुरि'ति केन सकर्मकः स्यादि'ति' 'सुट् कात्पूर्व' इतिसूत्रस्थभाष्याऽसङ्गतेः। त्वद्रीत्या तत्र पक्षेऽपि तस्य सिद्ध्या तद्भाष्याऽसङ्गतिः स्पष्टैव। तस्मादुक्त-रीत्या कर्मप्रत्ययोपपादनं भाष्यविरुद्धमेवेत्याहुः[3]।

अतिङन्तश्चेति। कथमपि तिङन्ताऽघटित इत्यर्थः।

समास इति। तत्संज्ञकः समुदाय इत्यर्थः।

कुम्भ असिति। ननु 'हरि ङी'तिवत् 'कुम्भ ङसि'त्येव प्रक्रिया-

---

१ इतोऽग्रे—'शाकलप्रतिषेधप्रसङ्गश्च' इति ख. घ. पाठः।

२ 'तदाशय इत्याहुः' इति ख. घ. पाठः।

३ 'एवञ्च' इत्यारभ्य 'भाष्यविरुद्धमेवेत्याहुः' इत्यन्तः क. ग. पाठः।

वाक्यमुचितम् । 'अन्तरङ्गानपी'ति न्यायेन लुका इत्संज्ञालोपयोर्बाधादिति चेन्न । इत्सञ्ज्ञालोपबाधाऽबाधयोः फले विशेषाऽभावेन, 'अन्तरङ्गानपी'त्यस्याऽप्रवृत्त्या, इत्संज्ञालोपयोः साम्राज्यात् ।

'अलौकिकं प्रक्रियावाक्यमि'त्यस्य समासरूपप्रक्रियाप्रवृत्तियोग्यं, लोके प्रयोगाऽनर्हमित्यर्थः । 'हरि ङी'त्यत्राऽपि अन्तरङ्गत्वात् इत्संज्ञालोपयोः कृतयोरेव समासाऽऽदिप्रवृत्तिः । लोकप्रयोगाऽनर्हत्वस्य उभयत्राऽपि सत्त्वेनाऽविशेषात्, अकृतेत्संज्ञालोपमेवोच्चारितमित्यलम् । स्पष्टा चेयं रीतिः 'उपसर्गादस्यत्यूह्योरि'त्यत्र कैयटे । कृद्योगलक्षणा चाऽत्र षष्ठी ।

न चाऽन्तरङ्गत्वात् द्वितीया । 'उपजनिष्यमाणोऽप्यपवाद' इतिन्यायेन पूर्वं द्वितीयाया अप्राप्तेः । ध्वनितं चेदं प्रकृतसूत्रे 'षष्ठीसमासात् उपपदसमासो विप्रतिषेधेने'त्यादिभाष्येण ।

मा भवानिति । समासे सति व्यवहितप्रयोगो न स्यादिति सूचयितुं 'भवानि'त्यस्योल्लेखः । ननु 'सुपे'त्यधिकारात्तिङन्तेन न भविष्यतीत्यत आह—सुपेत्येतन्नेहेति ।

गतिकारकोपपदानामिति । कारकांऽशे 'कर्त्तृकरणे कृते'ति सूत्रस्थ-'बहुल'ग्रहणं मानम् । 'बहुल'ग्रहणादेव क्वचित्सुबुत्पत्त्यनन्तरमपि समासः । यथा 'सा हि तस्य धनक्रीते'त्यादावि'ति कैयटः । यत्तु 'तत्सूत्रस्थं कृद्ग्रहणं मानमि'ति । तन्न । 'काष्ठैः पचतितरामि'त्यादिव्यावृत्त्या चारितार्थ्यात् । प्राक् सुबिति । उत्तरपदे इत्यर्थः । ( पूर्वपदन्तु सुबन्तमेवेति बोध्यम् ) । परिभाषायाः फलं दर्शयन् 'गति'मुदाहरति—व्याघ्रीति । व्याजिघ्रतीत्यर्थः । आङो 'घ्र'शब्देन 'गतिरि'ति समासे कृते, पुन-'र्वि आघ्र'शब्दयो'र्गतिरि'ति समासः । न च 'आतश्चोपसर्गे' इत्युक्तेराङ उपपदत्वेन, परत्वादाङा उपपदसमास उचितः । फलाऽभावेन तत्रोपपद-

१ 'सूत्रस्थबहुलग्रहणं मानं बोध्यम्' इति ख. घ. पाठः ।

२ अयं ख. घ. पाठः । क. ग. नास्ति ।

संज्ञाया अप्रवृत्तेः। समासस्य, स्वरस्य च गतित्वादेव सिद्धेः। अत एव 'कर्मण्यणि'तिसूत्रे भाष्येऽनुपपदत्वेनाऽयं व्यवहृतः। तत्र सुबन्तेन समासे बहिर्भूतसङ्ख्यानिमित्तसुबपेक्षयाऽन्तरङ्गत्वाल्लिङ्गनिमित्ते प्रत्यये टापि, अदन्तत्वाऽभावाज्जातिलक्षणो ङीष् न स्यात्। पूर्वन्तु न ङीष्। 'घ्र'-'आघ्र'योर्जातिवाचित्वाऽभावादिति भावः।

अश्वक्रीतीति। 'अश्वेन क्रीते'ति कृता समासः। 'क्रीतात्करणपूर्वादि'-ति ङीष्। सुबन्तेन समासे पूर्वं टापि, अदन्तत्वाऽभावात्स न स्यादित्यर्थः।

[1]कच्छपीति। 'कच्छस्याऽधिकरणस्य करणत्वविवक्षायां तृतीयान्तेन उपपदसमासः। 'सुपी'ति योगविभागात्कः। न च कारकत्वात्सिद्धम्। कारकत्वेऽप्युपपदत्वस्याऽहान्या, परत्वादुपपदसमासस्यैव प्राप्तेः। एवं च 'प्राक् सुबुत्पत्तेरि'त्यवयुत्याऽनुवादः। 'लिङ्गबोधकप्रत्ययोत्पत्तेः प्रा'गित्यपि बोध्यम्। 'सुबि'त्यस्याऽसम्बन्धे, ततोऽपि प्रागन्तरङ्गत्वात्समासप्रवृत्तेरिति दिक्।

[2]अमैवा। अमैवेति। 'तुल्यविधानमि'त्यध्याहारलब्धम्। संज्ञायास्तुल्यविधानत्वमाश्रित्य तत्संज्ञकस्य तुल्यविधानत्वमुक्तम्। 'यस्मिन्नुपपदे येन वाक्येनाऽमेव विहितस्तदेवोपपदमव्ययेन समस्यते' इति फलितम्। अत्र 'अम्' इति णमुल्खमुञोः सामान्यग्रहणम्। तेन 'चोरङ्कार-

---

१ 'कच्छपीति। कच्छस्याऽधिकरणत्वाद्यविवक्षायां शेषषष्ठ्यन्तेनोपपदसमासः। 'सुपी'ति योगविभागात्कः। एतेन 'कच्छपी'त्यत्र कारकत्वात्सिद्धमि'त्यपास्तम्। कच्छस्याऽधिकरणकारकत्वेऽप्युपपदत्वस्याऽहान्या परत्वादुपपदसमासस्यैव प्राप्तेश्च' इति ख. घ. पाठः।

२ 'अमैव। पूर्वेण सिद्धे नियमार्थमेतत्। तद्वक्ष्यति—तदेवेति। सौत्रस्त्वेवशब्द उपपदविशेषणाऽर्थः। तदाह—अमैवेति' इति ख. घ. पाठः। क. ग. नास्ति।

मि'त्यप्युदाहरणम् । अव्ययेनेति किम् ? । कुम्भकारः । असति तस्मिन् अमैव यत्तुल्यविधानं, तदेव समस्येत । 'पूर्वसूत्रारम्भसामर्थ्यादव्ययविषय एव नियम' इति चेत्तर्हि अमन्तविषय एव किं न स्यात्—'अमन्तेन यः समासः सोऽमैव तुल्यविधानस्ये'ति । एवं च 'अग्रेभोजमि'त्यत्र मा भूत्, 'अग्रे भुक्त्वा कालो भोक्तुमि'त्यत्र तु स्यादेवेति भावः । 'अमैव[1] तुल्य-विधानं यदुपपदं, तदव्ययेन समस्यते, नाऽन्येन तुल्यविधानमि'त्यर्थः[2] ।

तत्फलितमनुवदति—तदेवेति । कालादेरमैव तुल्यविधानत्वाऽभावात् न दोषः । एवमग्रेप्रभृतेरपि, इति बोध्यम् ।

तृतीया प्रभृ । उभयत्र विभाषेयम् । अमैव तुल्यविधानस्य प्राप्ते यथा—'उपदंशस्तृतीयायामि'ति । अन्येनाऽपि तुल्यविधानस्याऽप्राप्ते । अप्राप्ते-'उच्चैःकारमाचष्टे' इत्युदाहरणे 'अव्ययेऽयथाभिप्रेते'ति क्त्वाणमुलौ । अत्र समासे कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम् । आद्युदात्त-त्वन्तु तस्य 'लिती'त्यनेन[4] । असमासे तूच्चैरिति प्रातिपदिकस्वरेणान्तोदात्तम्[5] ।

अमन्तेनेति । 'अमे'त्यनुवर्तते इति भावः । तेनेह न 'पर्याप्तो भोक्तुम्' ।

---

१ इतोऽग्रे—'तादृगुपपदमव्ययेनैवे'तिविपरीतनियमस्तु नाऽऽशङ्क्यः, व्याख्यानात्' इति क. कुण्डलितः ख. पाठः ।

२ 'परे त्वमैव तुल्यविधानं' ख. पाठः ।

३ 'इत्येवाऽर्थः । पुनस्तदेवेति व्यर्थम् । फलाऽभावात् । कालादेरमैव तुल्य-विधानत्वाऽभावादित्याहुः' ख. पाठः ।

४ इतोऽग्रे—'अन्ये तु 'आदिर्णमुल्यन्यतरस्यामि'त्यनेन । इदं च 'अभ्यस्ताना-मि'त्यननुवृत्तिरि'ति मते । अत्र मते प्रकृतसूत्रस्थहरदत्त एव मानमित्याहुः' इति ख. घ. पाठः ।

५ 'अन्तोदात्तं स्यात् । अत एव 'स्वरादिपाठे सनुतरादयो नवाऽन्तोदात्ता' इति वृत्तिकृतोक्तम् । यत्तु 'स्वरादिपाठादन्तोदात्तत्वमि'ति । तच्चिन्त्यम्' । इति ख. घ. पाठः ।

'पर्याप्तिवचनेष्वलमर्थेष्वि'ति तुमुन्। वेति। अत्र विषये कृन्निमित्त-कार्याभावस्तु प्रकृतिप्रत्यययोरेव, नोपपदेनाऽपीति भावः। अत्र यथा सामर्थ्यं तथा कृदन्ते निरूपयिष्यामः।

क्त्वा च। क्त्वेति तृतीयान्तम्। तदाह—क्त्वान्तेनेति।

अलंकृत्वेति। 'अलंखल्वोरि'तिसूत्रस्य 'उपदंशस्तृतीयायामि'त्यतः पूर्वं पठितत्वादिति भावः।

अथ तत्पुरुषाऽसाधारणसमासान्तानाह—तत्पुरुषस्याङ्गुलेः। 'तत्पुरुष-स्ये'ति समासान्ताऽपेक्षयाऽवयवषष्ठी। द्व्यङ्गुलमिति। 'तद्धितार्थे'ति-समासः। ऊर्ध्वाऽवस्थितशङ्क्वादिपरिच्छेदकत्वे 'द्विगोर्नित्यमि'ति द्वयसचो लुक्। तिर्यक्स्थितवस्तुपरिच्छेदकत्वे तु मात्रचो लुक्।

द्वन्द्वार्थमिति। स्पष्टं चेदं भाष्ये। अत एव 'हेमन्तशिशिरावहो-रात्रे च च्छन्दसी'त्यादौ द्वन्द्वे समासाऽन्तनिर्देशः सङ्गच्छते। तत्पुरुष-स्याऽसम्भवाच्च। अन्यतरस्य गौणत्वेन, 'ब्रह्मणोऽह्नोऽवयवभूता मानुषी रात्रिरि'त्यर्थेन वा सम्भवेऽप्यनभिधानमिति भावः।

अहोरात्र इति। 'जातिरप्राणिनामि'त्येकवत्त्वम्। 'स नपुंसकमि'ति-बाधित्वा 'रात्राऽह्नाऽहा' इति पुंस्त्वम्। सर्वरात्र इति। 'पूर्वकालैके'ति-समासः। 'पुंवत्कर्मधारये'ति पुंवत्।

द्विरात्रमिति। 'सङ्ख्यापूर्वं रात्रं क्लीबमि'ति वक्ष्यते। अतिराजीति। उत्तरपदाऽवयवत्वस्य भाष्याऽसंमतत्वेन टितोऽनुपसर्जनत्वान्ङीप्।

---

१ 'नोपपदेनाऽपीति भावः। तस्य प्रत्ययविधौ साक्षादुद्देश्यत्वाऽभावात्। अत्र मूलकादेरुपदंशनक्रियायां 'पयसौदनं भुङ्क्ते' इत्यत्र पयस इव करण-त्वेनाऽन्वयात् सामर्थ्यमि'त्यादि कृदन्ते निरूपयिष्यामः' इति ख. घ. पाठः।

२ 'बाधित्वा परत्वात् 'रात्राऽह्नाऽहा' इति पुंस्त्वम्' इति ख. पाठः।

३ इतोऽग्रे—'कृष्णसख इति। समासान्तानामुत्तरपदावयवत्वस्याऽनित्यत्वा-दनङादि नेति बोध्यम्' इति ख. पाठः।

नान्यत्रेति । 'नस्तद्धिते' इत्येव सिद्धे नियमाऽर्थमिदमिति भावः । एवकारो विपरीतनियमशङ्कावारणाय । नियमफलं तु 'आह्निकमि'ति । 'अह्ना निर्वृत्तमि'ति 'कालादि'त्यधिकारे 'तेन निर्वृत्त'मिति ठञ् ।

द्व्यहीन इति । समासाऽन्तविधेरनित्यत्वान्न टच् । न च नान्तस्य खे टिलोपविधानसामर्थ्यान्न टच् । 'अहीन' इत्यत्र तस्य सावकाशत्वात् ।

केचित्तु 'अत्र समासान्तेऽपि न क्षतिः, 'यस्ये'ति लोपसम्भवात् । खस्योदाहरणं तु 'अहीन' इत्येवे'ति । तन्न । समासान्तेऽहन्शब्दान्तद्विगोरभावेन खस्याऽनापत्तेः ।

अनित्यत्वादिति । अत्र च ज्ञापकं 'शक्तिलाङ्गले'त्यत्र 'घटघटी'-ग्रहणम् । अत एव 'समासाऽन्तप्रकरणे लिङ्गविशिष्टपरिभाषा ने'ति ङ्याप्सूत्रे भाष्ये उक्तम् । मद्रराज्ञीति । टचि 'भस्याऽढे' इति पुंवत्त्वे, टिलोपे, 'मद्रराजी'ति स्यादिति भावः ।

अह्नोऽह्न । 'अहःसर्वैकदेशे'ति सूत्रे गृहीतानामेतदा परामर्शोऽप्यहः-शब्द इह न गृह्यते, ततः परत्वस्याऽहन्शब्देऽसम्भवात् । तथा हि— एकशेषेण बाधाद् द्वन्द्वाऽसम्भव एव । तत्पुरुषाऽधिकाराच्च । अत एव बहुव्रीहौ न । ननु 'ब्रह्मणाऽह्नाऽवयवीभूतं मानुषमह' इत्यर्थे षष्ठीसमासे सम्भवतीति चेन्न । अनभिधानात् । अत एव पूर्वसूत्रे 'द्वन्द्वाऽर्थमहर्ग्रहण-मि'ति भाष्योक्तिः सङ्गच्छते, इत्याशयेनाऽऽह—सर्वादिभ्य इति ।

समासान्ते पर इति । 'समासान्ता' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः । नन्वयमूधसोऽनङित्यादिवत्समासान्त एवाऽस्तु । एवं च विभक्तिविपरिणामो न कार्य इति लाघवमिति चेन्न । टजपवादत्वाऽऽपत्तौ 'अत्यह्न' इत्यादावन्तोदात्तत्वाऽनापत्तेः । अव्ययपूर्वपदप्रकृतस्वरेण आद्युदात्तताऽऽपत्तेः । टचि तु चित्त्वसामर्थ्यादन्तोदात्तत्वम् । तच्चेष्टम् । अत एवैतेभ्यः पराऽहन्शब्दाट्टजपवादम् अचमाश्रित्य 'अह्नष्टखोरेवे'ति-नियमाट्टिलोपाऽभावे, 'अल्लोपोऽन' इत्यल्लोपेऽत्यह्नादिसिद्धिमाश्रित्य

अह्नादेशप्रत्याख्यानं भाष्योक्तं सङ्गच्छते ।

परे तु प्रकरणप्राप्तस्य समासान्ताऽचस्त्यागे मानाऽभावात्, 'समासान्ता' इत्यनुवृत्तस्य विभक्तिविपरिणामे मानाऽभावाच्च, सूत्रमतेऽप्यनेनाऽचोऽह्नादेशस्य च विधानम् । 'अह्नष्टखोरि'ति नियमाऽस्मरणमूलकं सूत्रमित्यस्योभयोरप्यावश्यकत्वम् । प्रकरणविस्मरणपूर्वकं चेत्यधिकं तवेत्याहुः ।

अह्नोऽदन्तात् । 'अत' इत्येव पूर्वपदविशेषणतया सामानाधिकरण्येनाऽन्वयेऽदन्तपूर्वपदेत्यर्थेनोपपत्तावन्तग्रहणमत्र प्रकरणे वर्णग्रहणेऽपि तदन्तविध्यभावज्ञापनाऽर्थम् । अत एव रषाभ्यां न तदन्तविधिरिति हरदत्तः ।

रेफादिति । 'षादि'त्यपि बोध्यम्, यदि 'लक्षाऽह्न' इति प्रयोगोऽस्ति । 'अह्न' इति नान्ताऽनुकरणात्षष्ठी । कालाट्ठञिति । विशेषविहितत्वेन वृत्त्युक्ताऽणं बाधित्वाऽस्यैवौचित्यादिति भावः ।

त्र्यह्नेति । द्वयोरह्नोर्भवेत्यर्थः । न च ठञन्तत्वान्ङीबुचितः । तस्य लुप्तत्वात् । 'ठञो योऽकार' इति व्याख्यानेन वर्णाऽऽश्रयतया प्रत्ययलक्षणविरहात् । तद्धिताऽर्थं प्रत्युपसर्जनत्वात्, टितः स्त्रियामभावाच्च, भाष्य-

---

१ 'इतोऽग्रे—'परे तु भाष्यप्रामाण्यात्, 'समासान्ता' इत्यनुवृत्तस्य विभक्तिविपरिणामे मानाऽभावाच्च, सूत्रमतेऽप्यनेनाऽचः, अह्नादेशस्य च विधानमिति न सूत्रमतेऽपि ङीपः प्राप्तिः । 'अह्नष्टखोरि'ति नियमाऽस्मरणपूर्वकं सूत्रमि'त्यस्योभयोरप्यावश्यकत्वात् । अयमेव च भाष्याऽऽशयः । कैयटादयस्तु चिन्त्या एवेत्याहुः । सर्वादीनामनुवृत्त्यैव सिद्धे 'एतेऽभ्य' इति स्पष्टाऽर्थम्' इति ख. घ. पाठः ।

२ 'अत एव 'वनं पुरगेत्यादि सङ्गच्छते' इति हरदत्तः' इति ख. घ. पाठः ।

३ 'षादित्यपि बोध्यम् । तेन 'लक्षाऽह्न'सिद्धिः' इति ख. घ. पाठः ।

४ इतोऽग्रे—'अत एव 'द्विनिष्के'त्यादौ क्रीताऽर्थे प्राग्वतीयस्य ठको लुकि, टाबेवाऽऽकरे उदाहृतः । 'ठञो लुगि'ति[1] तु चिन्त्यम् । 'अपरिमाणादि'ति-

---

1 'ठञो लुकीति तु चिन्त्यम्' इति ख. पाठः ।

मतेऽचा टचो बाधनाच्च, न टज्निमित्तोऽपि सः। नाऽपि 'द्विगोरि'ति-ङीप्। 'अपरिमाणे'ति निषेधात्। ननु बह्वादिगणे अहन्शब्दपाठ-

ठक एव प्राप्तेः। न च 'टच्' निमित्तः स दुर्वारः। तदर्थस्य तद्धिताऽर्थं प्रत्युपसर्जनत्वात्' इति ख. पाठः।

इतोऽग्रे—'अत एव 'द्विवर्ष'त्यादिसिद्धिः। ननु टाबपि दुर्लभः, 'रात्राह्नाहाः' इति पुंस्त्वेन स्त्रीत्वाऽभावात्। अत एव 'रात्राह्नाहाः' इति वचनात्स्त्रियां वृत्त्य-भावाट्टजचोर्नाऽस्ति विशेष' इत्यह्नोऽह्न इति सूत्रे कैयटादय आहुरिति चेन्न। सर्वादिषट्कपूर्वादह्नष्टजपवादोऽच्। तत्र सङ्ख्यापूर्वस्य तद्धिताऽर्थे द्विगोर्विशेष्य-निघ्नत्वेन स्त्रीत्वसम्भवेऽपि, तद्धिताऽर्थं प्रत्युपसर्जनत्वात् 'टिड्ढे'ति ङीपः प्राप्तिरेव नेति, तत्र टजचोरविशेषः स्पष्ट एव। 'पुण्याऽहमि'त्यत्र 'उत्तमै-काभ्यां चे'ति निषेधः 'अचो निषेधोऽह्नादेशस्य चे'ति मतभेदेन व्यवस्थितम्। एवं च सर्वत्र टच एव सत्त्वान्न विशेषः। पुण्यादह्नः क्लीबत्वसत्त्वाच्च। सर्वैकदेशसङ्ख्याताऽव्ययपूर्वस्य तु 'रात्राह्नाहाः' इति वचनात्स्त्रीत्वमेव नास्तीति कैयटाद्याशयसत्त्वेनाऽदोषात्। न च 'द्व्यह्ने'त्यत्राऽपि 'रात्राह्नाहाः' इति दुर्वारम्। रात्राऽह्नशब्दघटितसमासमात्रनिमित्तलिङ्गस्याऽन्तरङ्गस्य बाधे-नोपपत्तौ, बहिर्भूततद्धिताऽर्थनिमित्तलिङ्गबाधकत्वे मानाऽभावादिति दिक्।

अत एव पुंस्त्वाऽधिकारे—'अह्नाऽहान्ताः, क्षेडभेदाः, रात्रान्ताः, प्रागसङ्ख्यकाः।' इत्येतदनन्तरम्—'अर्थान्ताः प्राद्यलंप्राप्ताऽऽपन्नपूर्वाः परोपगाः। तद्धितार्थे द्विगुः, सङ्ख्यासर्वनामतदन्तकाः'। इत्य-मरेणोक्तम्।

तत्र 'अह्नाहान्ता' इत्यनेन पुंस्त्वं प्राप्तं, 'तद्धितार्थे द्विगुरि'ति परोपगत्वेन परत्वादेव बाध्यते। परोपगम् = विशेष्यलिङ्गम्। 'परं विरोधे, शेषन्तु ज्ञेयं शिष्टप्रयोगत' इति तदुक्तेः। किञ्च भवाद्यर्थतद्धितान्तं परोपगमिति निर्वि-वादम्। तद्धितलोपे तु 'शिष्यमाणं लुप्यमानार्थाऽभिधायी'ति न्यायेन भवाद्यर्थवत्स्त्रीत्वादेरप्यभिधानं न्याय्यमेव। प्रकृते लिङ्गाऽनुशासनस्य

सामर्थ्याद्दीर्घाह्नीत्यादावुपसर्जनेऽपि तत्प्रयुक्तो ङीष् यथा जायते, तथा प्रकृतेऽपि स्यादिति चेन्न। समासान्ते कृतेऽहन्शब्दान्तत्वाऽभावात्। उत्तरपदाऽवयवत्वन्तु न भाष्यसंमतमिति बोध्यम्। इदं तद्धिताऽर्थद्विगोर्विशेष्यनिघ्नत्ववादिनां मते उक्तम्। वस्तुतो नाऽस्य स्त्रीत्वम्। 'रात्राऽह्नाहा' इति पुंस्त्वेन स्त्रीत्वबाधात्। अत एव 'रात्राऽह्ने'तिवचनात्स्त्रियां वृत्त्यभावाद्द्वृजचोर्नास्ति विशेष' इत्यह्नोऽह्न इतिसूत्रे कैयटादयः। न च 'रात्राऽह्नाऽहा' इत्यस्य रात्राऽह्नशब्दघटितसमासमात्रनिमित्तलिङ्गस्याऽन्तरङ्गस्य बाधेनोपपत्तौ, बहिर्भूततद्धिताऽर्थनिमित्तलिङ्गबाधकत्वे मानाऽभावः। एवं सति सूत्रोपस्थितरात्राऽह्नादिशब्दाऽर्थविशेष्यत्वप्राप्तलिङ्गस्यैवेदं बाधकं स्यान्न तु बहिर्भूतसमाहारविशेष्यत्वप्राप्तस्याऽपीति, अत्राऽन्तरङ्गन्यायाऽप्राप्तेरि'ति कैयटाशयात्। न च पुंस्त्वाऽधिकारे—

'अह्नाऽह्नाऽन्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसङ्ख्यकाः'।

इत्येतदनन्तरम्—

'अर्थाऽन्ताः प्राग्लम्भाप्ताऽऽपन्नपूर्वाः परोपगाः।
तद्धिताऽर्थे द्विगुः, सङ्ख्यासर्वनामतदन्तकाः'।

---

लुप्तप्रत्ययेष्वप्रवृत्तेः। अत एव 'लुपि युक्तवदि'ति लिङ्गाऽतिदेशश्चरितार्थः। अत एव 'लवणः सूप' इत्यादौ न क्लीबत्वम्। 'कुमारीमिच्छन् ब्राह्मणः कुमारी'त्यादौ च विशेष्यनिघ्नतेति दिक्।

अन्ये तु 'एवं सति सूत्रोपस्थितरात्राऽह्नादिशब्दाऽर्थविशेष्यत्वप्राप्तलिङ्गस्यैवेदं बाधकं स्यात्, न तु बहिर्भूतसमाहारविशेष्यत्वप्राप्तस्यापीति, अत्राऽन्तरङ्गन्यायाऽप्राप्तेरिति कैयटाऽऽशयः। अमरस्तु व्याकरणसिद्धलिङ्गाद्यनुवादको, न स्वातन्त्र्येण बोधकः। तद्विरोधाय तत्रत्य-'तद्धितार्थे द्विगुरि'त्यस्य रात्राह्नाहाऽतिरिक्तविषयतैवोचितमि'त्याहुः।

ननु बह्वादिगणेऽहन्शब्दपाठसामर्थ्यादुपसर्जनेऽपि तत्प्रयुक्तो ङीष्। अत एव 'दीर्घाह्नी'त्यादिसिद्धिः। एवं चात्राऽपि ङीष् दुर्वार इति चेन्न। समासान्ते कृतेऽहन्शब्दाऽन्तत्वाऽभावात्। उत्तरपदाऽवयवत्वं तु न भाष्यसंमतम्' इति ख. घ. पाठः।

—इत्यमरेणोक्तम्। तत्र 'अह्नाहाऽन्ता' इत्यनेन पुंस्त्वं प्राप्तं 'तद्धितार्थे द्विगुरि'ति परोपगत्वेन परत्वादेव बाध्यते। परोपगम् = विशेष्यलिङ्गम्। 'परं विरोधे, शेषं तु ज्ञेयं शिष्टप्रयोगत' इति तदुक्तेरित्यमरविरोध इति वाच्यम्। 'प्राद्यलंप्राप्ते'त्यनेनाऽपि परत्वात्तद्बाधे 'प्राह्ण' इत्याद्यसिद्ध्यापत्तेः। अतोऽमरस्य लोकव्याकरणसिद्धलिङ्गाऽनुवादकत्वेन, तदेकवाक्यतया 'तद्धितार्थे द्विगुरि'त्यस्य 'प्राद्यलम्प्राप्ते'तिवद्रात्राह्नाहाऽतिरिक्तविषयताया एवौचित्यादिति दिक्।

क्षुभ्नादीति। यद्यपि भाष्यादौ 'युवादिषु पाठ' इत्युक्तम्, तथाऽपि तस्य क्षुभ्नाद्याकृतिगणाऽन्तर्गतत्वमेवेति भावः। तत्पुरुषाऽतिरिक्तोऽहन्शब्दाऽन्तः समासः सर्वोऽपि क्षुभ्नादिरिति बोध्यम्। तद्ध्वनयन्नाह—अदन्तानुकरणक्लेश इति। तत्पक्षे णत्वविधायके षष्ठ्याः स्थाने व्यत्ययेन प्रथमा। स्पष्टार्थमिति। समाहारेऽन्यस्य वृत्त्यभावादित्याहुः।

एकाऽह इति। 'रात्राऽह्नाऽहा' इति पुंस्त्वम्। उपान्त्यस्यापीति। अत एवोत्तमग्रहणं चरितोऽर्थम्। सौत्रं द्विवचनम्।

अग्र्याख्या। अग्रे भवोऽग्र्यो-मुख्यः। अग्र्याख्यायां किम्?। देवदत्तस्य उरो देवदत्तोरः। उपानसमिति। प्रादिसमासः। अतिश्व इति। तदधिकवेगवानित्यर्थः। सेवेति। नीचेत्यर्थः। आकर्ष इति। पञ्चाऽङ्गुलो धान्यादिकर्षकः काष्ठविशेष इत्यर्थः। उपमानात्किम्?। शुनो निष्क्रान्तो निःश्वा। फलकसक्थमिति। अत एव ज्ञापकात्समासः।

नावो। मण्डूकप्लुत्या 'अतद्धितलुकी'त्यनुवर्त्तते इत्याह—न त्विति। ननु परवल्लिङ्गतया स्त्रीत्वमुचितमत आह—क्लीबत्वमिति। द्विगोरिति। खारीशब्दान्ताद् द्विगोरित्यर्थः। अत्राऽप्यतद्धितलुकीत्येव। तेन 'द्वाभ्यां खारीभ्यां क्रीतो द्विखारिरि'ति सिद्धम्। अर्द्धखारमिति। क्लीबत्वं प्राग्वत्।

---

१ 'इतोऽग्रे—उत्तमश्चोत्तमश्चेति समाहारद्वन्द्वविषये कृतैकशेषेण द्वन्द्वे, द्विवचनं साधु' इति ख. पाठः।

अर्द्धखारी इति। 'एकविभक्तावषष्ठ्यन्ते'ति वचनादुपसर्जनत्व-निषेधेन न ह्रस्वः। ह्रस्वपाठे तु लोकान्नपुंसकत्वं बोध्यम्।

द्व्यञ्जलमिति। समाहारे द्विगुः। अञ्जलिभ्यामिति। अञ्जलि-परिमितधान्यादिनेत्यर्थः। अस्य परिमाणत्वाट्टचः 'अर्ध्यर्द्धपूर्वे'ति लुक्। व्यवस्थितविभाषात्वादुत्तरपदद्विगौ न—'द्व्यञ्जलिप्रिय' इति हरदत्तः।

ब्रह्मणो। जनपदे भवो-जानपदः। भावप्रधानो निर्देशः। तदाह—समासेनेत्यादि। प्रत्यासत्तिलभ्यमेतत्। कस्येत्याकाङ्क्षायां सन्निधानात् 'ब्रह्मण' इति लभ्यते। सुराष्ट्रब्रह्म इति। अधिकरणस्य शेषत्वविवक्षायां षष्ठीसमासः। 'सप्तमी'ति योगविभागात्समास' इति कश्चित्। जानपदेति किम्?। देवब्रह्मा नारदः। कुब्रह्म इति। ब्राह्मणपर्यायो ब्रह्मनशब्दः।

आन्महतः। 'महत' इति उत्तरपदाऽऽक्षिप्तपूर्वपदस्य विशेषणम्। तेन तदन्तस्याप्यात्वम्। 'ग्रहणवते'ति निषेधस्य प्रत्ययविधिविषयत्वात्। तेन 'परममहाबाहुरि'ति सिद्धमित्याहुः। 'परममहत्परिमाणमि'ति तु 'परम-महतो=द्रव्यस्य परिमाणमि'ति षष्ठीतत्पुरुषो बोध्यः।

ग्रहीष्यत इति। एवं च समानाधिकरणग्रहणं व्यर्थमिति भावः।

महाबाहुरिति—बहुव्रीहिः। ननु 'द्व्यष्टन' इत्युत्तरसूत्रे द्वयोरेव ग्रहणात् 'एकादशे'त्यत्राऽऽत्वं न स्यादत आह—आदितीति।

पुंवत्कर्मधारयेति। यद्यपि तसिलादित्वात्पुंवत्त्वं सिद्धं, तथापि परत्वादेतत्प्रवृत्तिरेवोचिता। कृत इति। 'आन्महत' इति सूत्रविषये लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे भाष्ये उक्तत्वादिति भावः। तेन 'परत्वात्पुंवत्त्वं बाधित्वा आत्त्वं स्यादि'ति न शङ्क्यम्। एतेन 'यदसि महतीभक्तिर्भानावि'ति श्रीहर्षप्रयोगो व्याख्यातः। 'भक्ति'शब्दस्य प्रिया-दिषु पाठेनाऽपुंवद्भावात्। 'अमहान्महान्भवति महद्भूतश्चन्द्रमा' इत्यादौ गौणत्वादात्त्वं नेति स्पष्टं भाष्ये। यस्याऽनुपचरितं महत्त्वं स मुख्योऽर्थः। च्व्यन्तेन चोपचरितोत्तराऽवस्थोऽर्थात्मा पूर्वावस्थोऽभिधीयते इति महत्त्व-

म्-अमहत्युपचरितमिति, गौणार्थाऽभिधायी महच्छब्द' इति कैयटः ।

यद्यपि च्व्यन्तस्य निपातत्वाद्द्योतकत्वं, तथापि द्योत्याऽर्थमादायैव सामानाधिकरण्यं बोध्यम् । अत एव 'महद्भूता ब्राह्मणी'त्यत्र पुंवत् । 'गोमतीभूते'त्यत्र तु प्रत्ययलक्षणसूत्रस्थभाष्यप्रयोगादेव न पुंवदिति बोध्यम् । महतो महत्या वेति । 'पुंवद्भावश्चे'ति चकारोऽन्वाचये इति भावः । 'समुच्चये 'च'शब्दः, तेन पुंवद्भावसन्नियोगेनैवाऽऽत्त्वम् । अत एव भाष्ये स्त्रियामेवोदाहृतमि'ति कैयटेन मताऽन्तरमप्युक्तम् ।

अष्टन इति । 'कपाले उत्तरपदे, हविषि वाच्येऽष्टन आत्त्वं वक्तव्य-मि'त्यर्थः । अष्टाकपाल इति । 'संस्कृतं भक्षा' इत्यणो 'द्विगो'रिति लुक् । हविषीति किम् ? । अष्टकपालम् । समाहारे द्विगुः । पात्रादि-त्वादस्त्रीत्वम् । तत्पुरुषे एव टचः सम्भवेनाऽन्यसमासे समासान्ता-ऽप्रसक्तेराह-बहुव्रीहावपीति । 'अपी'त्यस्य 'प्रकृत्यन्तरादि'त्यादिः । एतेन 'अस्य साधारणत्वाद्बहुव्रीहावपीति चिन्त्यमि'त्यपास्तम् । 'तत्पुरुषे एव टच्समासान्तः सुलभ इति न, यतो बहुव्रीहावप्यच्समासाऽन्तः सुलभ' इत्यर्थाच्च । समाहार इति । अत्र पक्षे 'गोरतद्धिते'ति टजिति भावः ।

द्वादशेति । न च 'द्वौ च, त्रयश्चे'ति द्वन्द्वे किमिति नोदाहृतं, प्रथमो-पस्थितत्वादिति चेन्न । अनभिधानेनैकादिनवान्तानां परस्परं द्वन्द्वतत्पुरुष-समासाऽभावात् । ध्वनितं चेदं 'चार्थे द्वन्द्व' इति सूत्रशेषे भाष्ये । 'द्व्येक-योरि'त्यत्र तु सौत्रत्वान्न दोषः । 'द्वात्रिंशतिरि'त्यादावितरेतरयोगद्वन्द्वस्तु न, अनभिधानादित्यपि तत्रैव ध्वनितम् । समाहारद्वन्द्वे स्त्रीत्वं तु लोकादिति बोध्यम् । द्व्यधिका दशेति । अत एव 'सङ्ख्यायास्तत्पुरुषस्य डच उपसङ्ख्यानम्, अन्यत्राऽधिकलोपात्, निस्त्रिंशाद्यर्थमि'तिवार्त्तिके 'एका-ऽधिका त्रिंशतिरि'ति भाष्याद्युक्तं सङ्गच्छते । 'एकाऽधिके'ति बहुव्रीहिः ।

---

१ 'आत्वं च वक्तव्यम्' ख. पाठः ।

२ 'पुंस्त्वन्तु' इति ख. पाठः ।

'एकाऽभिन्नाऽधिकसम्बन्धिनी'ति बोधः। सङ्ख्या, सङ्ख्येयं वाऽन्यपदाऽर्थः। तस्य चोत्तरपदाऽर्थे विंशत्यादावभेदान्वयः। एकादयश्च वृत्तिविषये सङ्ख्यापरा अपि। 'आदशतः सङ्ख्याः सङ्ख्येये' इति कोशस्तु प्रायोवादः। 'असमस्तपरः, प्रधानपरश्चे'त्यन्ये। अत एव 'एकविंशतिर्गावः' 'एकविंशतिर्गवामि'त्युभयमपि सिद्धम्। एवं च द्वन्द्वे पूर्वपदप्रकृतिस्वरत्वं 'सङ्ख्ये'त्यनेन। तत्पुरुषे त्वन्तोदात्तत्वमिति, समासभेदेन स्वरभेदो बोध्य इत्याहुः।

त्रेस्त्रयः। सन्धिवेलादिषु 'त्रयोदशी'शब्दपाठात्सान्तोऽयमादेश इति ध्वनयन्नाह-त्रयस्स्यादिति। 'विभाषा चत्वारिंशदि'ति सूत्रे भाष्ये स्पष्टमेतत्। सुजर्थे इति। 'सङ्ख्ययाऽव्ययाऽऽसन्ने'ति समासः। सुजर्थस्य वृत्तावन्तर्भावान्न तत्प्रयोगः।

विभाषा। व्यवहित'अष्टन्'सम्बन्धाय 'सर्वेषामि'त्युक्तिः।

एकादिश्चैकस्य। 'अदुगि'ति च्छेदः। अकारोच्चारणसामर्थ्यात्पररूपं न। अत्रैकशब्दः सङ्ख्यावाचक एव प्रसिद्धत्वाद्गृह्यते इत्याहुः।

धासु वेति। नानाऽधिकरणवाचिनः सङ्ख्याया विधार्थे 'धा'। 'अधिकरणविचाले चे'त्यस्यैव ग्रहणमिति बोधयितुं बहुवचनम्। तेनेह न-षट् दधातीति 'षड्धा'। 'आतोऽनुपसर्गे कः'। स्त्रियां टाप्। 'न पदान्तादि'ति ष्टुत्वं न। अन्यथा उत्तरपदाऽधिकारात् 'प्रत्ययाऽप्रत्यययोरि'त्यादिपरिभाषां बाधित्वाऽस्यैव ग्रहणं स्यात्। 'अनेनोत्वस्यैव विकल्पः। तेन ष्टुत्वं नित्यमेवे'ति कैयटः। अत एव भाष्ये 'षष उत्त्वं दतृदशसूत्तरपदादेः ष्टुत्वं च वक्तव्यमि'त्यग्रे 'धासु वेति वक्तव्यम्'। 'उत्तरपदादेः ष्टुत्वं च वक्तव्यमि'ति वचनद्वयं पठितम्। अत्र 'पद'शब्दो बोधकपरः। तेन पक्षे 'षड्ढे'त्येव। यत्तु 'उत्त्वपक्षे नित्यं ष्टुत्वमि'ति हरदत्तेनोक्तम्। तन्न।

---

१ 'इति कोशस्त्वसमस्तपरः, प्रधानपरश्च, प्रायोवादश्च' इति ख. पाठः।

सन्नियोगशिष्टन्यायेनैव सिद्धे पृथग्वचनाऽऽरम्भवैयर्थ्याऽऽपत्तेः ।

मूले 'षड्न्न्'ति कश्चित्कोऽपपाठः ।

षोडन्निति । 'षट् दन्ता अस्ये'ति बहुव्रीहिः । 'वयसि दन्तस्ये'ति-दत्रादेशः । इदं च पृषोदरादिसूत्रे भाष्ये स्पष्टम् ।

परवल्लिङ्गम् । 'द्वन्द्व'पदमितरेतरयोगविषयम् । समाहारे 'स नपुंसक-मि'त्यपवादस्य वक्ष्यमाणत्वात् । तत्र[1] उद्भूताऽवयवभेदः समुदायो द्वन्द्वाऽर्थः, स चाऽवयवलिङ्गेन लिङ्गवानिति[2], लिङ्गाऽनियमे प्राप्ते, नियमा-ऽर्थमिदम् । तत्पुरुषे त्वनुत्तरपदार्थप्रधानेऽर्द्धपिप्पल्यादौ परवल्लिङ्गाऽप्राप्ते-र्विध्यर्थमेव । 'द्वन्द्वतत्पुरुषयोरि'ति षष्ठी, न सप्तमी । तथा हि सति 'द्वन्द्वे, तत्पुरुषे च यत्परपदं, तस्यैव लिङ्गं भवती'ति, परपदाऽऽक्षिप्तपूर्व-पदस्यैव स्यात् । तथा च 'मयूरीकुक्कुटावि'त्यत्र पूर्वपदे ङीप्श्रवणं न स्यात् । 'द्वन्द्वतत्पुरुषयोरि'ति चाऽर्थपरम् । शब्दाऽर्थयोरभेदाच्च सूत्रे तथा निर्देशः । अत एवाऽनुप्रयोगेऽपि तल्लिङ्गसिद्धिरित्याशयेनाऽऽह—परपदस्येवेति । परपदाऽर्थस्येवेत्यर्थः । उपमेये षष्ठीदर्शनाद्वतिरपि तदन्तादेवेति भावः ।

द्विगुप्राप्तापन्नेति । यद्यप्यत्र भाष्ये 'द्विगु'ग्रहणं न दृश्यते, तथाऽपि 'द्विगुरेकवचनमि'ति सूत्रे 'पञ्चकपाली' 'पञ्चकपालाः' इति भाष्यप्रयोगात्, 'एकविभक्ती'तिसूत्रस्थकैयटप्रामाण्याच्च तस्याऽपि ग्रहणम् । वस्तुनो द्विगु-ग्रहणं व्यर्थम् । 'परवल्लिङ्गमि'त्यस्य परपदोपस्थितपूर्वपदप्रयुक्तलिङ्गमात्र[3]-बाधकत्वात् । अत एव भाष्ये 'तत्पुरुषश्चाऽपि कः प्रयोजयती'ति प्रश्ने, 'पूर्वपदार्थप्रधान एकदेशिसमास' इत्युत्तरितम् । 'तत्पुरुष'पदस्थाने 'एक-देशि'ग्रहणं कृत्वा निषेधवार्त्तिकं प्रत्याख्यातं चेति दिक् । अत एव ज्ञापका-

---

१ 'तत्र यदाऽवयवाऽर्थव्यतिरिक्त उद्भूताऽवयवभेदः' इति ख. पाठः ।

२ 'लिङ्गवानिति मतम्, 'अवयवाऽर्थावेवाऽपेक्षितपरस्परौ द्वन्द्वार्थ' इति वा मतम् , उभयथाऽपि लिङ्गाऽनियमे प्राप्ते' इति ख. पाठः ।

३ 'लिङ्गस्यैवेदं बाधकम्' ख. पाठः ।

दिति। 'कुगती'तिसूत्रोक्तदिशा आदिग्रहणस्य प्रकाराऽर्थत्वं व्याख्याय, समासः कार्य इति भावः। न च तस्य नित्यसमासत्वाद्वाक्याऽनुपपत्तिः। 'अलं'शब्दयोगे चतुर्थीविधानसामर्थ्येन तस्याऽप्युपपत्तेः। एतेन 'एकविभक्ति चे'तिसूत्रे 'अलंकुमारिरि'ति भाष्यं, 'पर्यादयो ग्लानाद्यर्थे' इति समास' इति कैयटश्च व्याख्यातः। 'गतिसमास'पदं च 'गतेः समासो यस्मिन्नि'-तिबहुव्रीहिणा 'कुगती'तिसूत्रपरम्। तच्चाऽन्यत्र फलाऽभावात्प्रादिपरमेवे-त्याशयेनोदाहरति—निष्कौशाम्बिरिति।

अतन्त्रमिति। अत एव 'पूर्ववद्'ग्रहणं चरितार्थम्। अन्यथा निपातनादेव सिद्धे, किं तेन ?। ननु समुदायस्य पूर्ववल्लिङ्गत्वेऽपि, स्वाऽऽश्रय-स्त्रीत्वाऽनिवर्त्तनाद्वडवाशब्दे टापः श्रवणप्रसङ्गः। अतिदेशस्तु विशेषणे चरिताऽर्थ इति चेन्न। 'अश्ववडव'–'पूर्वाऽपराऽधरोत्तराणामि'तिनिर्देशात् तन्निवृत्तेः।

रात्राऽह्ना। द्वन्द्वतत्पुरुषग्रहणाऽनुवृत्तिमभिप्रेत्याऽऽह—एतदन्ताविति। इदं सूत्रं-प्राप्ताऽऽपन्नाऽलम्प्रादिसमासेष्वपि प्रवर्त्तते। अत एव 'परवल्लिङ्गमि'ति सूत्रे 'एकदेशि'ग्रहणं कृत्वा 'द्विगुप्राप्ते'त्यादिप्रत्याख्यानं भाष्योक्तं सङ्गच्छते। न च तत्पक्षेऽस्याऽप्येकदेशिसमासमात्रविषयकतेति

---

१ 'सूत्रे आदिग्रहणस्य' इति ख. पाठः।

२ इतोऽग्रे—'पुनः 'कु'शब्दग्रहणाच्च नाऽतिप्रसङ्गः। तेनाऽस्य काचित्कत्व-कल्पनात्' इति ख. पाठः।

३ किन्तेनेति' इति क. पाठः।

४ 'अतिदेशस्तु शसि नत्वप्रवृत्त्याऽनुप्रयोगे, विशेषणे च चरितार्थ इति चेन्न' इति ख. पाठः।

५ इतोऽग्रे—'अत एव इह 'अश्ववडवावि'ति निर्देशः सङ्गच्छते। अन्यथा ह्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावेन 'अश्ववडवे' इति स्यादित्याहुः' इति क. कुण्डलितः, ख. घ. पाठः।

वाच्यम् । 'अह'ग्रहणवैयर्थ्याऽऽपत्तेः। 'पुण्यसुदिनाभ्यामि'त्यस्य वैयर्थ्याऽऽपत्तेश्च । 'सर्वाह्णः' 'प्राह्णः' इत्यस्याऽसिद्ध्यापत्तेश्च । एतेन 'यत्र द्विगुप्राप्ते'त्यादिना 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि'त्युत्सर्गो निषिद्धस्तत्र तदपवाद-'रात्राऽह्नाऽहा' इत्यादेरप्य[1]प्रवृत्तिः । अन्यथा तदपवादत्वाऽयोगात्' इति माधवाद्युक्तमपास्तम्[2]। तस्मादिदं बाध्यसामान्यचिन्तया सर्वबाधकमिति तत्त्वम् । एवञ्च 'परत्वात्समाहारनपुंसकताबाध' इति चिन्त्यमेव ।

द्व्यह इति । 'अकारान्तोत्तरपद' इत्यस्य तु न प्रवृत्तिः, अकारान्तोत्तरपदत्वाऽभावात्। सङ्ख्यापूर्वमिति । 'अपथपुण्याऽहौ नपुंसकम्','सङ्ख्यापूर्वा रात्रिरि'ति लिङ्गाऽनुशासनमूलकोऽयमर्थो, न तु वार्त्तिकमिति भ्रमितव्यम् ।

गणरात्रमिति । समाहारे तत्पुरुषः । न च 'भविष्यति मर्यादावचनेऽवरस्मिन्नि'तिसूत्रस्थ—'त्रिंशद्रात्रः' 'पञ्चदशरात्र' इति भाष्यप्रयोगो विरुध्यते इति वाच्यम् । 'त्रिंशद्रात्रयः सन्त्यस्मिन्नि'ति बहुव्रीहिसत्त्वेनाऽदोषात् । 'अच् प्रत्यन्ववे'ति योगविभागात्समासाऽन्तः। इदन्तु तत्पुरुषे एव। तदधिकारे लिङ्गाऽनुशासनेषु पठितत्वात् । तत्राऽपि प्रतिप्रसवविधिलाघवाऽनुरोधात्समाहारद्विगावेव प्रवर्त्तते[3] ।

तत्पुरुष इत्येवेति । तादृशद्वन्द्वाऽसम्भवादिति भावः ।

अपन्था इति । 'पथो विभाषे'ति समासाऽन्तनिषेधः ।

---

१ 'इत्यादेरप्यप्रवृत्तिरिति माधवाद्युक्तमपास्तम्' इति ख. पाठः ।

२ इतोऽग्रे—'यत्तु रात्रादीनामेवाऽनेन पुंस्त्वं, तदन्तस्य तु 'परवल्लिङ्गमि'त्येव सिद्धमि'ति । तन्न । 'द्व्यहः' 'त्र्यहः' 'ते तु त्रिंशदहोरात्रः' 'मासेन स्यादहोरात्र' इत्यादौ समाहारे नपुंसकत्वाऽऽपत्तेः । तस्य परवल्लिङ्गताऽपवादत्वात्' इति ख. पाठः ।

३ इतोऽग्रे—'वृत्त्युक्तं-'द्विरात्र' इत्यादि तु षष्ठीतत्पुरुषे बोध्यम्' इति ख. पाठः ।

अर्द्धर्चाः। बहुवचनादाद्यर्थोऽवगतिः। आकृतिगणोऽयम्। इह केषाञ्चिदर्थभेदेन व्यवस्था,—

'मकरन्दस्य, मद्यस्य, माक्षिकस्याऽपि वाचकः।
अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः'॥

—इति शाश्वतात्, 'माध्वीकं मधु न द्वयोरि'त्यमराच्च।

'मार्द्वीकमि'ति पाठाऽन्तरम्।

ननु 'अर्धनावम्' 'अर्धखारमि'त्यादौ 'लोकाऽऽश्रयत्वाल्लिङ्गस्ये'त्यस्याऽऽवश्यकत्वेन लिङ्गप्रकरणं व्यर्थमिति चेत्। 'जात्याख्यायामि'त्यादिसूत्रसमूहवदिष्टाऽऽपत्तेः। इदमेव ध्वनयितुं प्रकृताऽनुपयुक्तान्यपि तानि व्याचष्टे—

जात्याख्यायामित्यादि। 'जातेः प्राधान्येनाऽऽख्यायामि'त्यर्थः। यदा जातिरेव पदार्थः, वाह-दोहाद्यन्वयोऽपि व्यक्तिघटितपरम्परया जातावेव, तदा जातेरेकत्वाद्व्यक्तिघटितपरम्परया सङ्ख्याऽन्वये मानाऽभावादेकवचनमेव प्राप्नोतीत्ययमारम्भः।

अत्र 'जात्याख्यायामि'ति भिन्नपिण्डविषया जातिर्गृह्यते, न त्ववस्थाभेदाऽनुगता, एकव्यक्तिविषया, डित्थत्वादिजातिरि'ति कैयटः[1]। भावप्रत्ययं विनाऽपि जातेर्विशेष्यतया बोधे गवादिशब्दानां साधुत्वे इदमेव सूत्रं मानम्। केचित्तु 'गोर्वृत्तिधर्म[2]' इति बोधेऽसाधुत्वमेव। अभेदप्रधानतादात्म्य-संसर्गक-व्यक्तिप्रकारक-जातिविशेष्यकबोधे च अनेन साधुत्वबोधनम्। अयमेव च 'भावप्रधानो निर्देश' इत्यस्याऽर्थ इत्याहुः।

यत्तु 'यस्मिन्वने एक एवाऽऽम्रवृक्षस्तत्र लक्षणया जातिपरत्वे

१ 'इति कैयटः। यत्तु यस्मिन्वने' इति ख. पाठः।
२ 'गोवृत्तिधर्मः' इति ग. पाठः।

'आम्राः सन्ती'ति प्रयोगसाधुत्वाऽर्थमिदमि'ति। तन्न। प्रत्याख्यानपरभाष्यविरोधात्। तादृशलक्षणया प्रयोगे फलाऽभावाच्च।

एतद्विहितबहुवचनस्य चैकत्वमेवाऽर्थः। 'एकस्मिन्नर्थे वर्त्तमानः शब्दो बहुप्रतिपादकः शब्दो भवती'ति व्याख्यानादर्थेनोऽतिदेशोऽयम्। तत्फलितमाह—एकोऽप्यर्थ इत्यादि। अत्राऽप्येकत्वेऽर्थे बहुत्वप्रयुक्तं कार्यमतिदिश्यते इति, अयमपि कार्याऽतिदेश एव। यत्त्वर्थोऽतिदेशोऽयमिति। तन्न। अतिदेशवाक्ये 'वति'प्रकृति-वाच्याऽर्थ-निष्ठधर्माणामतिदेशस्य 'ब्राह्मणवत्क्षत्रिय' इति लोके, 'स्थानिवदादेश' इति शास्त्र (च) दृष्टत्वेनाऽर्थोऽतिदेशस्योक्तिसम्भवाऽभावात्। स्थानिवत्सूत्रस्थस्य, प्रकृतसूत्रस्थस्य च 'अर्थोऽतिदेशात्सिद्धमि'तिभाष्यस्य 'अर्थप्रयुक्त-कार्योऽतिदेशात्सिद्धमित्यर्थ' इति न तद्विरोधः। आदेशपक्षे तु चतुर्थीबहुवचनादौ स्थानिवद्भावेनैकवचनप्रयुक्तकार्याऽऽपत्तिः। सप्तमीनिर्देशेन तस्योक्तिसम्भवाऽभावाच्च। न चैकस्मिन्नर्थे एकवचनाऽपवादतया बहुवचनविधानमस्त्विति वाच्यम्। तद्विशेषणेऽपि बहुवचनसाधुत्वायाऽतिदेशाऽङ्गीकारादित्याहुः।

सविशेषणस्येति। अनुवाद्यरूपविशेषणसहितस्येत्यर्थः। तेन 'त्वं राजा, वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः' इति सिद्धम्, 'अत्रोन्नतत्वस्य विधेयत्वादि'ति हरदत्तः। 'अस्मच्छब्दस्योच्चारयितृसदृशे लाक्षणिकत्वात् बहुत्वं साधु। एतेन 'अस्माकन्तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामि'त्याद्यपि व्याख्यातम्। वार्त्तिकन्तु मुख्याऽर्थे बहुवचनस्याऽसाधुत्वाये'त्यपरे। अनेनैव 'अहं देवदत्तो ब्रवीमि', 'अहं

---

१ इतोऽग्रे—'अत्र भाष्ये 'गार्ग्ये गार्ग्यत्वमेकमि'त्युक्तम्। यद्यपि गर्गाऽपत्यत्वं नैकं सर्वेषु तदपत्येषु, तथाऽपि गर्गाऽपतनहेतुत्वमखण्डोपाधिरूपमेकमिति तदाशयः' इति ख. पाठः।

गार्ग्यो ब्रवीमी'त्यादावपि निषेधः। अत्रोत्तमपुरुषाऽनुरोधात् 'अहमि'-त्यस्यैव विशेष्यत्वं बोध्यम्।

फल्गुनी। सूत्रे 'नक्षत्रे' इति प्रथमाद्विवचनम्। 'नक्षत्रे यद्यभिधीयेते' इत्यर्थः। चेन 'द्वयोरि'त्यनुकृष्यते। तदाह—द्वित्वे इत्यादि।

फल्गुन्यौ माणविके इति। फल्गुन्योर्जाते इत्यर्थः। 'फल्गुन्यषाढाभ्यां टाऽनावि'ति टः। टित्त्वान्ङीप्। एकस्यान्तु तारायां नेमौ शब्दौ प्रयुज्येते। उद्भूताऽवयवभेदसमुदाये एव रूढत्वादित्याहुः।

तिष्यपुनर्वस्वोः। पूर्वत्र चाऽनुकृष्टत्वाच्छन्दसीति न सम्बध्यते। तिष्य एको तारा, पुनर्वसू द्वे तारे[1]। अत एव 'च्छन्दसि पुनर्वस्वोरेकवचनमि'ति सङ्गच्छते। एतेन 'पुनर्वसुशब्दस्य ताराचतुष्टयवाचकत्वमि'त्यपास्तम्। सूत्रप्रामाण्येन ताराद्वये एव नक्षत्रत्वाऽङ्गीकारात्। तदाह—तिष्यश्च पुनर्वसू चेति। 'नक्षत्रे' इत्यनुवर्त्तमाने 'नक्षत्रे' इत्युक्तिः पर्यायद्वन्द्वाऽर्था। तेन 'सिद्धयपुनर्वसू' इत्यपि। 'तिष्यपुनर्वस्वोः शब्दयोरभिधेये, नक्षत्रे वर्त्तमानो यो नक्षत्रशब्दानां द्वन्द्व' इति व्याख्यानात्।

विशाखेति। विशाखाश्चाऽनुराधाश्चेति द्वन्द्वः। माणवका इति। 'नक्षत्रेण युक्त' इत्यणो 'लुबविशेषे' इति लुपि, जाताऽर्थे 'सन्धिवेले'-त्यणि, तस्य 'श्रविष्ठाफल्गुन्यनुराधे'त्यादिना लुक्। माणवकवृत्तिरयं, न नक्षत्रवृत्तिः। ननु 'नक्षत्रसमासे' इति वक्तव्यं, 'द्वन्द्वे' इतिविशेषनिर्देशो व्यर्थः, यद्वा 'प्रथमानिर्दिष्टमि'त्यतो मण्डूकप्लुत्याऽनुवर्त्तनीयमिति चेन्न। 'यस्तिष्यस्तौ पुनर्वसू येषामिति तिष्यपुनर्वसवः'। तिष्यादयोऽवयवभूता विग्रहाऽर्थाः। तेषामेव विपर्यासबुद्धिविषयाणामुद्भूताऽवयवभेदः समुदायः समासाऽर्थः। भाष्यस्थोन्मुग्धा इत्यस्याऽपि विपर्यासविषया इत्येवाऽर्थः। अन्यथा पुरुषाणामन्यपदार्थत्वेन, नक्षत्रे समासाऽभावेनाऽप्राप्त्याऽसङ्गतताऽऽपत्तिः।

१ 'तिष्य एकः, पुनर्वसू द्वौ' इति ख. पाठः।

बहुवचनस्य किम् ? । इदं तिष्यपुनर्वसु । समाहारद्वन्द्वः । अत एव 'समाहारश्चेत्प्राण्यङ्गानामेवे'ति 'द्वन्द्वश्चे'त्यादीनां नाऽर्थ इत्याहुः ।

एतत्सूत्रचतुष्टयमपि व्यर्थम्, जातौ सङ्ख्याऽन्वये एकवचनस्य, व्यक्तौ तदन्वये, व्यक्तिद्वारकपरम्परया जातौ वा सङ्ख्याऽन्वये च, बहुवचनस्य सिद्धत्वात् । जातेरेकत्वविवक्षायान्तु बहुवचनस्याऽनभिधानमेव, भाष्यप्रामाण्यात् । किञ्च तथा प्रयोगेऽसाधुत्वम् । यथोत्तरं मुनीनां प्रामाण्यात् । अग्रिमाण्यपि व्यर्थानि, 'आचार्याः कथयन्ति' 'यूयं गुरव' इत्यादौ शक्तिगतबहुत्वाऽऽरोपेणेव, अवयवबहुत्वाऽऽरोपेणेव च, एतद्विषयेऽप्यारोपेणेव सिद्धेः । मुख्याऽर्थे 'पटवो वयं ब्रूम' इति त्वनभिधानान्नेति बोध्यम् । स्पष्टप्रतिपत्त्यर्थमिति चेत् । लिङ्गाऽनुशासनमपि तथेति भावः ।

केचित्तु 'कालोपसर्जने च तुल्यमि'त्यत एष्वपि 'तुल्य'पदाऽनुवृत्त्या सूत्रकृतैव प्रत्याख्यातमेतत् । 'प्रधानप्रत्ययाऽर्थवचनेनेदमपि तुल्यमि'त्यर्थात् । अत एव 'द्व्येकयोरि'त्यत्रैवेदं प्रकरणं न कृतम् । एकशेषप्रकरणेऽप्यनुवृत्त्या तत्प्रत्याख्यानमपि सूत्रसंमतमित्याहुः । परन्तु भाष्याऽनुक्तमिदम् ।

स नपुं । तच्छब्देनाऽविशेषात्समाहारे द्विगुर्द्वन्द्वश्च परामृश्यते । तदाह—समाहार इत्यादि । अकारान्तेति । अत्राऽपि द्विगुः—समाहारद्विगुरेव । 'स नपुंसकमि'त्यपवादत्वात् । इदमेव ध्वनयितुम् 'अपथमि'त्यत्र भाष्ये पठितान्यपीमानि, मूलकृताऽत्र पठितानीति बोध्यम् ।

पात्रादीति । आकृतिगणोऽयम् । 'स्त्रीत्वमि'ति शेषः । 'अत्र सूत्रशब्दः पठ्यते' इति वृद्धिरादैच्सूत्रस्थकैयटस्वरसः । 'त्रिसूत्री'त्यादिप्रयोगदर्शनाच्चिन्त्यमिदम् । 'बहुसूत्रमि'ति भाष्ये प्रयुज्यमानन्तु बहुव्रीहिणैव साध्यमि'त्यन्ये । 'भाष्ये तु 'पात्रादिभ्यः प्रतिषेध' इति पठितम् । तादर्थ्ये

---

१ इतोऽग्रे 'इदमेव ज्ञापयति—'सर्वो द्वन्द्वो विभाषयैकव'दिति' इति ख. पाठः ।

चतुर्थ्येषा । 'पात्राऽन्तादिप्रयोगसिद्धये' इति तदर्थः । तदा 'त्रिसूत्री'त्यादौ न दोषः । 'बहुसूत्र'शब्दस्यैव तत्र पाठादि'त्यपरे ।

पुण्येत्यादि । 'रात्राऽह्नाऽहा' इति पुंस्त्वाऽपवादः ।

सुदिनाहमिति । 'सुदिन'शब्दः प्रशस्तवाची, 'सुदिनासु समासु कार्यमेतदि'ति प्रयोगात् । प्रशस्तास्वित्यर्थः ।

पथः सङ्ख्या । कृतसमासान्त इति । 'अपथमि'ति सूत्रे भाष्ये पठितत्वेन, 'रात्राऽह्ना' इत्यादिसाहचर्येण, 'पथ' इतिप्रथमानिर्देशेन चेदं लभ्यते । इहाऽव्ययसाहचर्यात्सङ्ख्यांऽशेऽपि प्रतिपदोक्तपरिभाषा न प्रवर्त्तते । तद्ध्वनयन्नाह–त्रयाणां पन्था इति । 'ऋक्पूरि'ति समासाऽन्तः । 'विपथा नगरी'त्यादौ, 'पन्थानमतिक्रान्ताअतिपथे'त्यादौ चेदं न । लिङ्गस्य लोकाऽऽश्रयत्वात् । यत्तु 'परवल्लिङ्गताऽपवादत्वादिदं तत्पुरुषे एव । तेन 'विपथे'ति बहुव्रीहौ न । 'अतिपथे'त्यादौ च न । 'द्विगुप्राप्ते'त्यादिना परवल्लिङ्गतायाः प्रतिषेधादि'ति माधवः । तन्न । 'अपवादत्वात्तत्पुरुषे[1] प्रवृत्तिः, तत्रैव प्रवृत्तौ चाऽपवादत्वमि'त्यन्योन्याऽऽश्रयात् । भाष्योक्तरीत्या परवल्लिङ्गत्वप्रत्याख्याने, तदपवादत्वाऽसम्भवाच्च । आवश्यकत्वादनेनैव[2] सिद्धे 'अपथं नपुंसकमि'ति सूत्रं न कार्यम् । 'वाटः पथश्च मार्गः स्यादि'तिकोशप्रामाण्यादकारान्तोऽपि 'पथे गताव्रि'त्यतो[3] निष्पन्नः 'पथ'शब्दः 'पथि'पर्यायः । तेन समासे 'विपथः' 'अपथः' 'कापथ' इत्यादिपुंस्त्वम्[4] ।

कापथे—'ईषदर्थे चे'ति काऽऽदेशः । कुत्सायान्त्वर्थतः पर्यवसानं बोध्यमित्याहुः ।

सामान्ये नपुंसकमिति । इदं च 'दाण्डिनायने'तिसूत्रे भाष्ये

---

१ 'तत्पुरुषे एव प्रवृत्तिः' इति ख. पाठः ।

२ 'एवञ्चाऽऽवश्यकत्वादनेनैव सिद्धे' इति ख. पाठः ।

३ 'पथे गतावि'त्यतः परस्मैपदिनः, मतान्तरे आत्मनेपदिनो वा निष्पन्नः' इति ख. पाठः ।

४ 'पुंस्त्वमेव' इति ख. पाठः ।

स्पष्टम् । तत्र हि 'लिङ्गसर्वनामनपुंसकमि'त्युक्तम् । अनियतलिङ्गविषयमेतत् । तेन 'आदिं पचति' 'आदिः पचती'त्येव । आदिशब्दो नित्यं पुमान् । 'आद्यपाकाऽनुकूला क्रिया' इत्याद्यस्याऽर्थः । 'आद्या पाकाऽनुकूला क्रिये'ति चाऽन्त्याऽर्थः । फलविशेषणत्वे द्वितीयाप्राप्तावपि, व्यापारविशेषणत्वे तदप्राप्तेन्यायसिद्धमेतत्[1] । विशेष्यविशेषाऽसंनिधाने लिङ्गसर्वनाम्नो नपुंसकस्य न्याय्यत्वात् । अनेनैव क्रियाविशेषणानां क्लीबत्वसिद्धेः 'क्रियाविशेषणानां द्वितीयाऽन्तत्वं, नपुंसकत्वं चे'ति परिभाषासु पठ्यमानं नाऽपूर्वम् । भाष्यादावपठितत्वाच्च । 'द्वितीयान्तत्वमि'त्यंशोऽपि न्यायसिद्धः । धातूपात्तभावनां प्रति फलांऽशस्य कर्मत्वात् तत्सामानाधिकरण्ये क्रियाविशेषणात् द्वितीयासिद्धेः । अत एव 'सकृल्ल्वावि'त्यादौ कारकपूर्वत्वाद्यण् ।

यत्र तु विक्लित्त्यादेः करणत्वेनाऽन्वयस्तत्र तद्विशेषणेऽपि तृतीयैव । यथा 'ओदनं स्तोकेन पचती'ति । 'स्तोकविक्लित्त्या ओदनं निष्पादयती'त्यर्थः । द्वितीयाऽन्तत्वस्य वाचनिकत्वे तु तृतीया दुर्लभैव स्यात् । 'तृप्तिकामः स्तोकेनौदनं पचती'त्यादौ तु 'तृप्त्युद्देश्यका[2], स्तोकविक्लित्तिकरणिका, ओदनकर्मिका, निष्पत्तिरि'ति बोधः । अत्र तृप्त्यादेरुद्देश्यतया भावनाविशेषणत्वेऽपि, धातूपात्तफलशालित्वाऽभावान्न[3] द्वितीयोत्पत्तिप्रयोजकं कर्मत्वम् । तेन न कदा चिदपि 'तृप्तिं पचती'ति प्रयोगः । 'काम'शब्दश्च उद्देश्यत्वेनाऽन्वये तात्पर्यग्राहकः । अत एवेदृशानां 'काम'शब्दान्तेनैवोल्लेखः, अकर्मकधातुयोगश्च सङ्गच्छते । केषाञ्चिदेषु कर्मत्वव्यवहारस्तु उद्देश्यत्वसामान्यात् ।

अन्ये तु–'तृप्तिविषयकामनावत्कर्त्तृकः पाक' इत्येव बोधः । तस्य च

---

१ 'न्यायसिद्धमेतत्' इति ख. पुस्तके अत्र नास्ति । किन्तु अयं पाठः 'नपुंसकस्य न्याय्यत्वान्न्यायसिद्धमेतत्' इति रीत्याऽग्रे पठ्यते ।

२ 'उद्देश्यकः' 'करणकः' 'कर्मकः' 'पाकः' इति ख. पाठः ।

३ 'फल-तच्छालित्वा-ऽन्यतरत्वाऽभावात्' ख. पाठः ।

कामनावत आख्यातार्थाऽऽश्रयाऽन्वये, तद्वृत्तीच्छायां प्रकरणादिना धात्वर्थस्य प्रयोजकत्वलाभे, उद्देश्यत्वमर्थाऽऽयातमित्याहुः । 'ज्योतिष्टोमेन भक्तिपूर्वं यजेते'त्यादौ तु भावनाविशेषणत्वेन नपुंसकत्वं, प्रथमान्तत्वं च 'भक्तिपूर्वमि'त्यस्ये ।

तत्पुरुषो । 'परवल्लिङ्गमि'ति यावदयमधिकारः ।

संज्ञायाम् । अनादिरिह संज्ञा । सा च उशीनरेषु तत्पुरुषभिन्ना, नञ्समासरूपा, कर्मधारयरूपा च नाऽस्तीति, नाऽत्राऽधिकारप्रयोजनम् ।

इदं प्रकरणं परवल्लिङ्गताया, विशेष्यनिघ्नतायाश्चाऽपवादः ।

उपज्ञोप । इच्छासना 'इह शास्त्रे विवक्षैव शब्दव्युत्पत्तौ नियामिका, न वस्तुस्थितिरि'ति बोध्यते । 'तेन 'त्वदुपक्रमं सौजन्यमि'त्याद्यपि सिद्ध्यति । इह षष्ठीतत्पुरुषं विना तदादित्वाऽसंप्रत्ययान्नाऽधिकारफलम् ।

उपज्ञायते इति उपज्ञा । कर्मण्यङ् । यत्तु 'भावेऽङ् । लक्षणया सामानाधिकरण्यमि'ति । तन्न । कर्मणि लक्षणसत्त्वे लक्षणायां मानाऽभावात् । 'पाणिनेरुपज्ञे'ति कर्त्तरि षष्ठ्या समासः । उपक्रमे—कर्मणि घञ् । 'पाणिनिसम्बन्धबाद्योपज्ञाविषय' इति बोधः ।

छाया बा । बाहुल्ये सति या छाया, तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । तत्र 'कस्य बाहुल्ये' इत्यपेक्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्ये इति गम्यते । तच्च पूर्वपदाऽर्थभूतमेवेत्याशयेनाऽऽह—पूर्वपदार्थेति । अत एवाऽत्रापि नाऽधिकारफलम् । पूर्वपदार्थबाहुल्यस्य षष्ठीतत्पुरुषे एव सम्भवात् । पर्यायस्यैवेति । 'पर्यायवचनस्ये'ति वक्तव्ये 'पर्यायस्ये'-

---

१ 'तद्वृत्तीच्छायां प्रयोजकत्वलाभे' इति ख. पाठः ।

२ इताऽग्रे—'सन्दर्शन-प्रार्थनादिभिर्व्याप्यमानत्वात् क्रियायाः कृत्रिमकर्मत्वविवक्षायान्तु तद्विशेषणत्वात् द्वितीयान्तत्वमिति बोध्यम्' इति क. कुण्डलितः ख. पाठः ।

३ 'कर्मधारयभिन्ना च' इति ख. पाठः ।

त्युक्तिः 'सत्या' 'सत्यभामे'तिवन्नामैकदेशग्रहणमित्याहुः । स्पष्टं चेदं 'स्वं रूपमि'ति सूत्रे भाष्ये। एवकारेण स्वरूपस्य, विशेषाणां च व्यावृत्तिः। ('नृपतिसभामगमन्नवेपमानः' इति कीचकवधे[2] तु गजपतिवन्नृपते राजविशेषत्वात्साध्विति रक्षितः)।

रूढ्या रक्ष इति। 'पर्युदासवृत्त्ये'त्यपि केचित्। तेनेह न 'काष्ठसभा'। अत्रापि नाऽधिकारोपयोगः, अन्या[3]ऽसम्भवात्।

'सभा'शब्दः शालावाची, सङ्घातवाची च । तत्राऽऽद्यप्रतिषेधात् फलितमाह—सङ्घातेति।

पूर्वत्र तु शालावाचिन एव ग्रहणम्। अत्राऽप्यन्याऽसम्भवादेव नाऽधिकारोपयोगः। प्रथमाऽर्थे षष्ठीत्याशयेनाह—एतदन्त इति।

श्वनिशमिति। कृष्णचतुर्दशीत्यर्थः। तस्यां हि केचित् श्वान उपवसन्ति। 'शुनश्चतुर्दश्यामुपवसतः पश्याम' इति शाबरभाष्यात्।

द्वन्द्वे समाहारेतरेतरयोगाभ्यां रूपद्वयस्य दुर्वारत्वेन, क्वचिन्नित्यैकवद्भावसत्त्वेन च, बहुव्रीहौ प्रत्युदाहरति–दृढसेन इति।

इति तत्पुरुषः।



---

१ अयं ख. पाठः।

२ 'कीचकवधे' इति क. ख. ग. घ. नास्ति।

३ 'अन्ये'ति ग. पाठः क. ख. नास्ति। 'असम्भवात्' इत्येव क. ख. पाठः।

# अथ बहुव्रीहिसमासप्रकरणम् ।

द्वितीयाश्रितेत्यादिनेति । व्याख्यानात् प्रथमाऽन्तपदोपात्ताऽपेक्षयैव शेषो विवक्षित इति भावः । तेन 'प्रादयो गताद्यर्थे प्रथमये'त्यनेन प्रथमया समासोऽप्युक्त' इति नाऽऽशङ्क्यम् । तस्य तत्र तृतीयाऽन्तत्वात् । तदाह—प्रथमान्तमिति । एतदर्थमेव 'शेष'ग्रहणमिति बोध्यम् । 'उन्मत्तगङ्गमि'-त्यादौ बहुव्रीहिंवारणाय तु न तत् । एकसञ्ज्ञाऽधिकारादनवकाशत्वेना-ऽव्ययीभावस्यैव प्रवृत्तेः । 'शेषाऽधिकारस्थबहुव्रीहेरेव 'शेषाद्विभाषे'ति-कप्, नाऽन्यस्मात्' इत्यपि 'शेष'ग्रहणफलं बोध्यम् ।

अन्यस्येति । अन्यत्वं चोपस्थितप्रत्यासन्नसमस्यमानप्रथमाऽन्ता-ऽपेक्षम् । तच्च 'यस्य', 'यस्मिन्नि'त्यादि । तदाह—अप्रथमेति ।

ननु 'अन्यपदार्थे' इति सूत्रम् । सुबन्तं च पदम् । एवञ्च तदर्थे समासो, न तु विभक्त्यर्थे । न हि विभक्तिः पदमिति चेन्न । पदेन हि प्रकृत्यर्थो-पसर्जनप्रत्ययाऽर्थस्याऽभिधानात्प्राधान्येन तस्यैव ग्रहात् ।

नन्वेवं 'चित्रगुरि'त्यादौ सम्बन्ध्यादिबोधाऽनापत्तिः । किञ्च 'देवदत्त' इत्यादिना सामानाधिकरण्याऽनुपपत्तिः । द्वितीयाद्यर्थ-शक्तोनां लिङ्गसङ्ख्याकारकाऽनन्वयित्वेन, तदर्थकसमासेऽपि तदनापत्ति-श्चेति चेन्न । 'अन्यपदे' इत्युक्त्यैवं 'यस्ये'त्याद्युच्चारितपदे समभि-व्याहृतपदाऽन्तरस्य वृत्त्यभावात्तदर्थलाभे सिद्धेऽर्थग्रहणं लिङ्गसङ्ख्या-कारकविशिष्टपदाऽर्थसङ्ग्रहाऽर्थमिति न दोषः । 'अर्थ'पदेन यादृशस्यो-

---

१ इतोऽग्रे—'शेषपदस्य प्रथमाऽन्तत्वेन प्रथमान्तपदोपात्ताऽपेक्षयैव'—इति ख. घ. पाठः ।

२ इतोऽग्रे—'कण्ठेकाल' इत्यादौ तु 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापका-त्समासो बोध्यः' इति ख. पाठः ।

३ 'यस्योपस्थितिः' ख. पाठः ।

पस्थितिर्लिङ्गादिविशिष्टस्य, तादृशस्यैवाऽर्थग्रहणेन ग्रहणात्। एवञ्च 'यस्ये' त्यादौ 'लौकिके प्रयोगे प्रत्ययाऽर्थसम्बन्धेनाऽऽक्षिप्तसम्बन्धिनश्चित्रगो-रूपस्य प्राधान्येऽपि, तस्य समस्यमानपदोक्तत्वेन, अर्थग्रहणसामर्थ्यात्, 'दण्डी देवदत्तः' 'चित्रगुर्देवदत्त' इत्यादौ निर्विचिकित्सप्रतीयमानसामाना-धिकरण्याऽनुरोधाच्च, प्रत्ययाऽर्थविशिष्टप्रकृत्यर्थे एव बहुव्रीहिघटक-पदानामेकार्थीभावः कल्प्यते । तदर्थबोधकविग्रहवाक्येऽपि विशेष्यवि-शेषणभावव्यत्यास इत्युक्तम् । मूले-'अप्रथमे'त्यादेः-'तदन्ताऽर्थे' इत्यर्थो बोध्यः। यदाऽपि 'पञ्चकं प्रातिपदिकार्थः, लिङ्गसङ्ख्यावत्कारकमपि तद्विशेषणम्, क्रियाऽन्वये चाऽऽकाङ्क्षावशात्तस्यैव संसगत्वमि'ति पक्षः,-तदाऽपि 'तदन्ताऽर्थे' इत्येवाऽर्थः। तत्र षष्ठीसप्तमीविभक्त्यतिरिक्ताऽर्थे कर्मकर्तृवचनसुबन्तानामेव समासः। 'मत्वर्थे बहुव्रीहिः कर्तृकर्मवचनेना-ऽप्रथमायाः' इति वार्त्तिकात्। तपरसूत्रे 'तः परा यस्मादि'ति विग्रहस्तु मत्वर्थे एव । तत्र पञ्चम्याः षष्ठ्यपवादत्वेन षष्ठ्यर्थकत्वात् ।

एवं 'वन्या इनरे येभ्य' इत्यत्रापि बोध्यम् । यद्यपि 'बहुव्रीहौ सत्ताऽन्त-र्भावेणाऽप्येकार्थीभावः' इत्यनभिहिते इति सूत्रे कैयटः, तथापि स प्रौढि-वादः। मत्वर्थे बहुव्रीहेर्विधानेऽपि,'अस्त्यर्थोऽन्तर्भावेण नाऽस्य शक्तिरि'ति-मतुब्विधायके भाष्ये स्पष्टमुक्तत्वात् । न चैवमपि 'अन्याऽर्थे'इति वक्तव्ये, 'पद'ग्रहणं व्यर्थम् । 'अन्याऽर्थे' इत्यत्र कर्मधारयाऽऽपत्तौ 'ज्ञानाऽऽत्मकं ब्रह्मे'त्यादौ समासाऽनापत्तेः । भिन्नाऽर्थत्वाऽभावात् । 'पद'ग्रहणे तु न दोषः। अन्यपदाऽर्थत्वसत्त्वादित्याहुः ।

---

१ 'चित्रगोरूपस्य प्राधान्येऽपि प्रत्ययार्थप्राधान्येऽपि तस्य' इति ख. पाठः ।

२ 'कल्प्यते इति बोध्यम्' इति ख. पाठ ।

३ इतोऽग्रे—'विभक्तीनां भमिशक्तत्वमते तु यथाश्रुतमेव सम्यक्' इति ख. पाठः ।

४ 'पञ्चकं प्रातिपदिकाऽर्थ' इति सूत्रसंमते पक्षे लिङ्गसङ्ख्यावत्' इति ख.पाठः ।

५ 'षष्ठीविभक्त्यतिरिक्तार्थ' इति क. ग. पाठः । 'षष्ठीसप्तमीविभक्त्यन्ताऽतिरि-क्तार्थे' इति लघुशेखरे पाठः ।

'ग्राहवती नदी'त्यादौ 'मा स्नाही'तिवाक्याऽर्थे वर्त्तमानपदसमुदायस्य मा भूदित्यर्थं षष्ठीतत्पुरुषपक्षेऽपि तत्सार्थकमिति भाष्ये स्पष्टम् ।

'अन्ये'त्यादि किम् ? । बहुव्रीहि-तत्पुरुषयोर्विषयविभागाऽर्थम् । स्वपदार्थे हि सावकाशं तत्पुरुषं, परत्वादन्यपदार्थे बहुव्रीहिर्बाधते। असति त्वस्मिन् बहूनां समुदाये सावकाशं बहुव्रीहिं, स्वपदार्थे इवाऽन्यपदार्थेऽपि 'नीलोत्पलं सर' इत्यादौ समानाधिकरणतत्पुरुषो बाधेतेति भाष्यकृतः । त्रिपदबहुव्रीहेः स्वपदार्थेऽपि प्रसङ्गाच्च ।

अनेकं किम् ?[1] । बहूनामपि यथा स्यात् । अत एव 'सुसूक्ष्मजटकेशेन' 'होतृपोतृनेष्टोद्गातार'इति सिद्धम् । तत्फलन्तु 'चित्राजरद्गुरि'त्यादौ' चित्रापदे पुंवत्त्वाऽप्रवृत्तिः ।

'सुपे'ति तृतीयाऽन्तं नेह सम्बध्यते । द्वयोः समासाऽनापत्तेः । समानाधीति । शेषग्रहणलब्धोऽयमर्थः ।

प्राप्तमुदकमिति । 'यत्कर्मकमकप्राप्तिकर्त्रुदकं' विग्रहाऽर्थः । 'उदककर्त्तृकप्राप्तिकर्मे'ति समासोऽर्थः[2] । 'प्राप्त'पदे वृत्तौ प्रकृतिप्रत्ययाऽर्थयोर्विशेषणविशेष्यभावव्यत्यासो बोध्यः । अन्यथा कारकाणां परस्परमनन्वयेनाऽन्यपदार्थस्य विशेष्यत्वाऽनापत्तिः । एवं तु 'प्राप्ता भार्या यं स प्राप्तभार्य' इत्यादौ पुंवत्त्वाऽनापत्तिः । पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याऽभावात् । उपजीव्यसामानाधिकरण्यभङ्गेन समासाऽनापत्तिश्च । विशेषणविशेष्यभावव्यत्यासस्यैकार्थीभावफलतयाऽनुक्तत्वेन, भाष्यकृतो न्यूनताऽऽपत्तिश्चेति चिन्त्यमिदम् ।

---

१ इतोऽग्रे–'ननु कपिञ्जलाऽधिकरणन्यायेन त्रयाणामेव स्यान्न चतुरादीनामिति वाच्यम् । बहुलक्ष्यसंस्काराऽनुरोधेनाऽत्र शास्त्रे तन्न्यायाऽप्रवृत्तेः । अत एव 'निजां त्रयाणामि'त्यत्र 'त्रयाणामि'ति चरितार्थम्' इति ख. पाठः ।

२ इतोऽग्रे—'यत्तु विग्रहे 'स' इति प्रयोगे तु तस्याऽप्ययमेवाऽर्थः' इति, तत्तु विशेष्यांऽशसाम्यमात्रेणेति बोध्यम् । 'अयमेवे'त्यस्य 'ग्राम एवे' त्यर्थात्' इति ख. पाठः ।

तस्मात् 'प्राप्ताऽभिन्नोदक-कर्म'त्येव बोधः । उदककर्मत्वं च तत्कर्तृक-प्राप्तिकर्मत्वेन बोध्यम् । समासबोध्यकर्मत्वस्य कारकशक्त्यरूपत्वेन तस्य न क्रियाऽन्वयनियमः । अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन, कर्मप्राधान्याऽनापत्तिः । कर्मादिपदैरिव, पक्वादिपदैरपि न विभक्तिप्रयोजक-रूपेण कर्मादीनां भानमिति 'षष्ठी शेषे' इत्यत्र भाष्ये स्फुटम् । 'कृत्तद्धित-समासैरभिधाने' इत्यस्याऽप्ययमेवाऽर्थो, यत् तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति, विभक्त्यप्रसक्तिः । तिङाऽभिधानेऽपि, प्रातिपदिकाऽर्थस्य न तत्तच्छक्त्याविष्टत्वेन भानमिति, न ततो विभक्तिप्रसक्तिः । 'अत्रैव 'अनभिहिते' इति तात्पर्यग्राहकम्' इत्याद्यन्यत्र विस्तरः ।

प्रथमार्थे तु नेति । 'वृष्टे' 'देवे' इत्यनयोरशेषत्वादिति भावः । अत एव 'वृष्टे देवे गतं पश्ये'त्यादावपि न दोषः । तत्राऽन्यपदार्थबोधः समुदाय-शक्तिसाध्यः । न चैवं समुदायस्याऽन्यपदार्थवृत्तित्वेऽपि, प्रत्येकपदानां

---

१ इतोऽग्रे—'उपस्थितपदार्थानां विशेषणविशेष्यभावव्यत्यासोऽपि तत्साध्य एव । व्यपेक्षावादिनान्तु क्तप्रत्ययाऽर्थकर्तुर्धात्वर्थं प्रति विशेष्यतैव स्यात् । 'प्रत्ययार्थः प्रधानमि'त्युत्सर्गात् । न च वृत्तावुत्सर्गत्यागो भिन्नव्युत्पत्ति-स्वीकारादिति वाच्यम् । एवं हि कर्तृविशिष्टप्राप्तेः पदार्थत्वेन, तस्यैव नामाऽर्थतया, उदकस्य तदभेदो वाच्यः, नामजन्यप्रतीतिविशेष्ययोरभेदा-ऽन्वयाऽङ्गीकारात् । स च बाधितः । न हि कर्तृविशिष्टा प्राप्तिरुदकमिति सम्भवति । न चेयमपि व्युत्पत्तिः समासाऽतिरिक्तविषया । एकार्थीभाव-स्वीकारस्यैवौचित्यात् ।

यद्यपि 'पचतिकल्पं देवदत्त' इत्यत्र नियमद्वयस्याऽपि त्यागः क्लृप्तस्तथा-ऽपि व्यस्ते 'समीचीनमुदकमि'तिवत्, समस्तेऽपि तद्विशेषणप्रयोगः प्राप्तः । तदर्थं 'वृत्तस्य विशेषणयोगो ने'ति वचनाऽऽरम्भे गौरवम् । एवं 'राजपुरुषो-ऽश्वश्चे'तिवारणाय 'वृत्तौ सजातीयविशेषणाऽन्तरयोगो ने'त्यपि वचनं कार्यम् । एवं 'राजपुरुषो भार्यायाश्चे'त्येतद्वारणाय 'सजातीयविशेषणाऽन्तर-

तद्वृत्तित्वं दुर्लभमिति 'अनेकं सुबन्तमन्यपदाऽर्थे वर्त्तमानमि'त्यसङ्गतमिति वाच्यम्। समुदायस्य प्रत्येकाऽनतिरिक्तत्वात्। तद्घटकत्वाच्च। प्रथमान्तानां समासे तु प्रथमार्थोऽन्यपदार्थोऽसम्भव्येवेत्याहुः।

व्यधिकरणानामिति। 'शेष'ग्रहणसिद्ध एवाऽयमर्थः। प्रथमान्तानां विशिष्य समासाऽनुक्त्या, तस्यैव शेषत्वम्। तत्र च न वैयधिकरण्यम्, नाऽप्यन्यपदं प्रथमाऽन्तमिति भावः। 'अम्भोऽभिगमोऽस्या अम्भोभिगमे-'ति बहुव्रीहिः अनभिधानान्ने'ति 'कर्मण्यणि'ति सूत्रे भाष्ये स्पष्टम्।

प्रादिभ्य इति। 'प्रादिभ्यः परं यद्धातुजं, तदन्तस्य पदाऽन्तरेण बहुव्रीहिर्व्याख्येय' इत्यंशोऽनुवादः।' वा चे'त्यादि वाचनिकम्। 'पूर्वपदाऽन्तर्गतस्योत्तरपदस्य धातुजस्य लोपो वा वाच्य' इत्यर्थः।

नञोऽस्त्यर्थानामिति। 'नञः परं यदस्त्यर्थवाचि पदं, तदन्तस्य पदाऽन्तरेण बहुव्रीहिः, अस्त्यर्थवाचिनां तु वा लोप' इत्यर्थः। एवं 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च'। 'सप्तम्यन्तमुपमानवाचि च पूर्वपदं यस्य तस्य पदान्तरेण समासः, पूर्वपदाऽन्तर्गतोत्तरपदलोपश्च'। 'कण्ठेस्थः कालो यस्येति–कण्ठेकालः'। 'उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः'। 'अवयव-

---

योगो ने'त्यपि वचनं कार्यम्। द्वन्द्वे 'च'काराऽप्रयोगाय, निष्कौशाम्ब्यादौ क्रान्ताद्यप्रयोगाय च वचनं कार्यम्। विभाषाऽधिकारादिश्च कार्यं इत्यतिगौरवम्। 'वीराः पुरुषा यस्मिन्नि'त्यादावन्यपदार्थस्याऽधिकरणकारकरूपत्वेऽपि, बहुव्रीहिणाऽनुद्भूतशक्तिकवस्तुमात्रबोधात्क्रियाभिन्नेनाऽप्यन्वयः। अत एव न तत्र कारकविभक्तिप्रसङ्गः। एतेन 'समासेनाऽभिधानान्न विभक्तिरि'त्यपास्तम्' इति निरूपितम्। क्रियाऽन्वये, विभक्त्युत्पत्तौ च तादृशरूपेणोपस्थितिरेव नियामिकेति। स्पष्टं चेदमनभिहितसूत्रे कैयटे' इति क. कुण्डलितः, ख. पाठः।

इतोऽग्रे—'एतच्च प्रादीनामेव विशिष्टाऽर्थवृत्तितामाश्रित्य सुत्यजम्' इति ख. पाठः।

धर्मस्य समुदाये आरोपादुष्ट्रम्योपमानत्वम्'। इत्यादिवचनान्यपि चिन्त्यप्रयोजनानि, उष्ट्रादिपदानामुष्ट्रादिमुखे लक्षणयोपपत्तेः, 'कण्ठेस्थकाल' इत्यादि त्वनभिधानान्नेति 'शाकपार्थिवादीनामि'तिवार्त्तिकोक्तकैयटरीत्या एषामपि प्रत्याख्यानमभिप्रेत्य नोक्तानीत्याहुः।

'उच्चैर्मुख' इत्यादावुच्चैरित्यस्याऽधिकरणशक्तिप्रधानत्वेऽपि, वृत्तावाधेयप्रधानतया सामानाधिकरण्यम्। 'अस्ती'त्यस्य तिङन्तत्वेन 'सुबि'त्यनुवृत्तेः समासो न स्यादत आह—विभक्तीति।

अस्तिक्षीरेति। विद्यमानक्षीरेत्यर्थः। 'अर्द्धतृतीया द्रोणा' इत्यत्राऽर्द्धस्तृतीयो येषामिति विग्रहः। उद्भूताऽवयवभेदः समुदायः समासाऽर्थ इति बहुवचनम्। स च द्वौ द्रोणावर्द्धद्रोणश्च। द्रोणशब्दश्च द्रोणयोरर्द्धद्रोणे च लक्षणया वर्त्तते इति सामानाधिकरण्यम्। अर्द्धं चाऽन्यपदार्थभूतसमभिव्याहृतद्रोणस्यैव। यद्यपि समुदायोऽन्यपदार्थस्तथापि व्युत्पत्तिवैचित्र्यादर्द्धं समुदायिनो द्रोणस्यैव। एवम्-अनुद्भूताऽवयवभेदसमुदायविवक्षायाम् 'अर्द्धतृतीयो द्रोण' इत्यपि। 'सङ्कर्षणद्वितीयस्ये'त्यादावनुद्भूताऽवयवभेद एव समूहः समासाऽर्थ इति बोध्यम्। 'पञ्च भुक्तवन्तोऽस्ये'त्यर्थे न बहुव्रीहिः, अनभिधानादिति स्पष्टम् 'अनेकमि'तिसूत्रे भाष्ये।

'अतिशयेन सूक्ष्माणि वस्त्राणि यस्ये'त्यर्थे पूर्वं प्रकर्षविवक्षायां 'सूक्ष्मतरवस्त्र' इति, अन्यपदाऽर्थसम्बन्धोत्तरं प्रकर्षविवक्षायां तु 'सूक्ष्मवस्त्रतरक' इति च भवति। 'बहवोऽतिशयेनाऽऽढ्या यस्मिन्नि'त्यर्थे पूर्वमातिशयिकं कृत्वैव बहुव्रीहिः कार्यः। तेन 'बह्वाढ्य-तरक' इत्येव, न तु 'बह्वाढ्यक-तर', इति स्पष्टं 'वर्णो वर्णेने'तिसूत्रे भाष्ये। 'बह्वाढ्यकतर' इत्युक्तौ बहुत्वगतः प्रकर्षः, उताऽऽढ्यत्वगत इति सन्दिह्येत।

ननु 'के सब्रह्मचारिणोऽस्ये'त्यर्थक-'किंसब्रह्मचारी भवानि'ति प्रश्ने, 'अहं कठ' इत्युत्तरं न स्यात्, 'कठा' इति च स्यादिति चेन्न। तेषां कठत्वं विनाऽस्य कठत्वाऽसम्भवादनेनैव तेषां तत्त्वाऽऽक्षेपात्, 'अहं कठ' इत्यस्य

आर्थमुत्तरत्वं बोध्यम्। 'कठा' इति तु नोत्तरम्। वर्त्तिपदार्थस्योपसर्जनत्वा-दन्यपदार्थस्य प्राधान्यात्तदनुरोधेन ईदृशे विषये तादृशाऽऽर्थोत्तर-स्यैवौचित्यादि'ति कैयटादयः।

ऊङोऽभाव इति। अत एव 'इडविडोऽपत्यम्, 'जनपदशब्दादि'ति अञ्। 'ऐडविडः'। तस्य स्त्रियाम् 'अतश्चे'ति लुक्। इडबिट् चाऽसौ वृन्दारिका च-'ऐडविडवृन्दारिके'ति सिद्ध्यति। पर्युदासे हि टाबाद्यन्ते एव प्रवृत्त्यापत्तौ, तदसिद्धिः स्पष्टैव। न च 'ऐडविडे'त्यादौ 'जातेश्चे'ति-निषेधः। 'पुंवत्कर्मधारये'त्यस्य निषेधविषये एव प्रवृत्तेः। 'जातेरि'ति-पञ्चमीनिर्देशेन जातेः परो यः प्रत्ययस्तदन्तस्यैव तेन निषेधाच्च। एवञ्च बहुव्रीहावपि 'ऐडविडभार्य' इत्येव, सत्यभिधाने। भाष्ये तूत्तरत्राऽप्येव-मेवाऽर्थ इति सूचयितुमुत्तरसूत्रोदाहरणं दत्तमिति दिक्।

एतेन'स्त्रिया'इति स्वरितत्वप्रतिज्ञया स्त्रीप्रत्ययपरम्। 'अपूङः स्त्रीप्रत्यय-स्य पुंसीव निवृत्तिरि'त्यर्थः, 'मरुभूवदत्र ग्रामे जलमि'तिवत्' इत्यपास्तम्।

निपातनादिति। इदं पूर्वोत्तराऽन्वयि। अत एव वैयधिकरण्येऽपि

---

१ इतोऽग्रे—'यदि तु 'प्रत्ययत्वेनैव सादृश्यम्, लुक् च,-प्रत्ययलक्षणेन, स्थानिवद्भावेन वा,-प्रत्यय' इत्युच्यते, तदाऽस्तु पर्युदासोऽपि। ध्वनितं चेदं भाष्ये' इति ख. पाठः।

२ इतोऽग्रे-'अत एव बहुव्रीहौ न प्रत्युदाहृतम्। एवं चाऽर्थाऽधिकाराऽनुरोधा-दिहाऽपि तादृशाऽर्थ एवोचित इति भावः। अस्य शार्ङ्गरवादिगोत्रत्वाऽभावात्, अप्रवराध्यायप्रसिद्धत्वाच्च न जातित्वमिति तत्त्वम्' इति क. कुण्डलितः, ख. पाठः।

३ इतोऽग्रे—'किञ्चाऽत्र पक्षे 'गार्ग्यायणीवृन्दारिके'त्यर्थे 'गार्ग्यवृन्दारिका' न सिद्ध्यति। योऽत्र भाषितपुंस्कात्परः ष्फः, स नोत्तरपदपरः, ङीप् च न तस्मात्परः' इति क. कुण्डलितः, ख. पाठः।

बहुव्रीहिः । 'श्रुतसमुदायेनाऽवयवानामनुमानं-निपातनम्' । भाषितः पुमान्=पुँल्लिङ्गोऽर्थो, यस्य प्रवृत्तिनिमित्तस्याऽऽश्रयः, तत्प्रवृत्तिनिमित्तं भाषितपुंस्कम् । भाष्ये तु 'प्रवृत्तिनिमित्तस्याऽऽधारत्वविवक्षया सप्तमी प्रयुक्ता 'भाषितः पुमान् यस्मिन्नर्थे' इति । सत्सप्तमी वा । 'यस्मिन्नर्थे सति पुमान् भाषितो भवती'त्यर्थः । अतद्गुणसंविज्ञानश्चाऽयम् । पुमर्थविशिष्टस्य स्त्रीलिङ्गशब्दवाच्यत्वाऽभावात् । शब्दश्च स्त्र्यर्थकृतवैलक्षण्याऽतिरेकेण स्त्रीवाचकसमानाऽनुपूर्वीकः, समानाऽर्थश्च गृह्यते । प्रत्यासत्तेः । तत अर्श-आद्यजित्याशयेनाऽऽह–तुल्ये वृत्तिनिमित्ते इति । यद्वस्तुज्ञानेन शब्दस्य प्रवृत्तिस्तत्प्रवृत्तिनिमित्तम् । अत औपगवादौ सम्बन्धस्याऽपि प्रवृत्तिनिमित्तत्वव्यवहार इति बोध्यम् । 'भाषितः पुमान्येने'ति तु नोक्तं, 'कुटीजीविक' इत्यादावतिप्रसङ्गाऽऽपत्तेः । 'कुट'शब्दो घटे पुमान्, गेहे स्त्री ।

'गर्भिभार्यः' 'प्रसूतभार्यः' 'प्रजातभार्यः' इत्यत्र तु 'गर्भिणो दारा' इत्यादिप्रयोगात् पुंस्त्वविशिष्टस्याऽपि बोधनेन, भाषितपुंस्कत्वमस्त्येव । यथा चैतत्तथैकशेषप्रकरणे वक्ष्यते ।

पुंवाचकस्येति । प्रत्यासत्त्या पुंवद्भावभाजः, स्त्रीशब्दस्य, प्रयोगाऽन्तरे पुमांसमाचक्षाणस्य, यद्रूपं तदेवाऽतिदिश्यते । तेन 'जरती'शब्देन विग्रहे–'वृद्धगुरि'ति न । अत्र च रूपाऽतिदेशः, न त्वर्थाऽतिदेशः । अर्थस्योत्तरपदपरत्वाऽभावात् । किञ्च स्त्र्यर्थस्य पुमर्थाऽतिदेशे, पुंवद्भावह्रस्वयोर्विप्रतिषेधाऽनुपपत्तिः, कार्यिभेदात् । अन्यतरप्रवृत्त्युत्तरमपि

---

१ इतोऽग्रे—'अलुगिति । इदं प्राचामनुरोधेन । भाषितं पुंस्कमत्तीति भाषितपुंस्काऽत् । अतेः क्विप् । एवं च समानाधिकरण एव बहुव्रीहिः । अलुगर्थं च यत्नो माऽस्त्वि'ति नव्याः' इति ख. पाठः ।

२ इतोऽग्रे—'प्रवृत्तिनिमित्तत्वं च शब्दजन्योपस्थितौ विशेष्यताऽवच्छेदकत्वम् । अत एव लक्षणया स्त्रियां वृत्तावपि भाषितपुंस्कत्वनिर्वाहः' इति ख पाठः ।

अन्यतरप्रवृत्तियोग्यतासत्त्वेनाऽसम्भवाऽभावाच्चेति दिक्।

चित्रा असिति। 'अन्तरङ्गानपी'ति न्यायात्पूर्वं न सवर्णदीर्घादि[1]। अन्यथा एकादेशस्य परादिवत्त्वेन तत्सहितसुपो लुकि, 'चित्रगुरि'ति न सिद्ध्येदिति भावः। ननु वृत्तावभेदैकत्वसङ्ख्याया औत्सर्गिकत्वेन, अलौकिके एकवचनप्रवेश एव युक्त इति चेन्न[2]। ( गोत्वेनाऽनेकव्यक्ति-भानात्[3] ) भूमरूपमत्वर्थ बहुव्रीहिसत्त्वेनाऽदोषात्।

नेहेति। अत्रैव सूत्रे 'पट्वीमृद्व्यौ भार्ये यस्ये'तिद्वन्द्वगर्भ-बहुव्रीहौ 'पट्वीमृदुभार्य' इति भाष्योदाहरणात्। तत्र हि यः पूर्वपदं द्वन्द्वो, न स भाषितपुंस्कः। अत एव 'पट्वी'शब्दोत्तरङ्कोषो न निवृत्तिः। 'मृद्वी'शब्दस्य केवलस्य भाषितपुंस्कत्वेऽपि, न पूर्वपदत्वमि'ति, तदाक्षेपे नैतत्सिद्ध्येदिति भावः।

परे[4] तु-'आक्षेपेऽपि न दोषः। पूर्वपदशब्दस्य समासाऽवयवरूढत्वं नाऽस्ति। 'धर्मादनिच्'सूत्रे 'केवला'दित्युक्तेः। तद्धि मध्यमपदव्यावृत्तये समासाऽऽक्षिप्तपूर्वपदस्य विशेषणमित्याकर' इत्याहुः। अत्र सामानाधिकरण्यम् एकाऽर्थविशेष्यकप्रतीतिजनकत्वमात्रम्, न तु भिन्नप्रवृत्ति-निमित्तत्वगर्भम्। अत एव युगपदधिकरणवचनतापक्षे 'पटीमृद्व्यावि'त्यत्र पुंवत्त्वमाशङ्क्य, वृत्तेः प्राक् सामानाधिकरण्याऽभावात्तरिहृतं भाष्ये द्वन्द्व-सूत्रे। 'नाऽऽमन्त्रिते समानाधिकरणे' इतिसूत्रस्थ'सामान्यवचनमि'त्यस्य

---

१ 'न सवर्णदीर्घः' इति ख. पाठः।

२ 'इति चेन्न। सति तात्पर्यग्राहके बहुवचनाऽन्तेन विग्रहस्याऽङ्गीकारात्। अत एव 'गोषुचर' इत्यादिसिद्धिः। अत एव 'स्तोकाभ्यां मुक्त' इत्यादावनभिधानान्न समास' इत्याकरः सङ्गच्छते' इति ख. पाठः।

३ 'अयं पाठो लघुशब्देन्दुशेखरादावश्यकत्वात्पूरितः।

४ 'परे तु' इति लघुशेखरस्थः पाठः। क. ख. ग. तु नास्ति। किन्तु तत्र अग्र 'इत्याहुः' इत्यस्य स्थाने 'इत्यन्ये' इति पाठः।

'अघ्न्ये देवि सरस्वती'ति पर्यायेषु प्रत्युदाहरणं दत्तं भाष्ये इति दिक् ।

आनङिति । अत एव समर्थसूत्रभाष्ये 'होतृपोतृनेष्टोद्गातार' इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्याऽऽनङुदाहृतः । नेष्ट्रन्तद्वन्द्वं कृत्वोद्गातृशब्देन द्वन्द्वस्तु नाऽत्र, उपक्रमस्थभाष्यविरोधात् । अत एव = पूर्वपदाऽनाक्षेपादेव ।

भाष्यमिति । 'पट्वीमृदुभार्य' इतिभाष्येणेदं ध्वनितमिति भावः ।

जरच्चित्रेति । लिङ्गविशिष्टपरिभाषया 'पूर्वकालैके'ति समासः । जर[illegible] 'गोरतद्धिते'ति टचि, टित्त्वान्ङीप् । तदन्तेन बहुव्रीहौ 'नद्यृतश्चे'ति कप् । वामोरूभार्य इति । 'संहितशफे'त्यूङ् ।

प्रधानमिति । भावल्युडन्तं, नित्यनपुंसकम् ।

अप्पूरणी । न चाऽपः पित्त्वं व्यर्थम्, पूर्वपदप्रकृतिस्वरेणाऽनुदात्तत्वस्य सिद्धत्वादिति वाच्यम् । 'सुपञ्चमा' इत्यादौ 'नञ्सुभ्यामि'त्यन्तोदात्तबाधनाऽर्थत्वात् । स्त्रीलिङ्गनिर्देशाच्छोभनः पञ्चमो येषां 'सुपञ्चमा' इत्यादावप् न । तेन तत्राऽन्तोदात्तत्वमेवेत्याहुः । रात्रय इति । उद्भूताऽवयवभेदो रात्रिसमुदायोऽन्यपदार्थः । प्रमाणीति करणे ल्युट् । विशेष्यलिङ्गतया ङीप् । 'प्रमाणायां स्मृतावि'ति तु प्रमाणशब्दाद्भवतीत्यर्थे णिजन्तात्पचाद्यचि टापि बोध्यम् । (यत्तु 'श्रुतिरूपं प्रमाणमयते =

१ इतोऽग्रे—'कल्याण्या इति । षष्ठीतत्पुरुषे[1] उभयोरेकार्थीभावेनैकविशेष्यकप्रतीतिजनकत्वेऽपि ([2]पूर्वपदस्य सम्बन्धिनि लक्षणेति मतेऽपि ) न दोषः । वृत्तौ, वृत्तेः प्राक् सामानाधिकरण्यस्य विवक्षितत्वात्' इति ख. पाठः । क. कुण्डलितः ।

२ शाबरभाष्येऽयं प्रयोग इति मनोरमादौ स्पष्टम् ।

३ अयं ख. पाठो मनोरमास्थत्वात् क. ग. नास्ति ।

1 'षष्ठीतत्पुरुषे' इति क. पाठः । ख. नास्ति ।

2 अयं ख. पाठः । क. ग. नास्ति ।

यातो'ति विग्रहे क्विबन्तादयतेः क्विपि 'प्रमाणे'ति रूप'मिति । तन्न । अय-पयादीनां क्विपि 'अत्' इत्यादिमाधवाद्युदाहृते इवाऽत्राऽपि तुगापत्तेः । न च वलि लोपस्य प्रत्ययाऽऽश्रयतया बहिरङ्गत्वेनाऽसिद्धत्वेन, न तुक्-प्राप्तिः । तुकोऽपि प्रत्ययाऽपेक्षत्वेन समत्वात् । 'आगमशास्त्रमनित्य-मि'ति त्वगतिकगतिः । इह तु गत्यन्तरमुक्तमेव । किञ्च त्वदुक्तविग्रहे उपपदसमासे पूर्वपदस्य सुब्लुक्यन्तरङ्गत्वात्सवर्णदीर्घे टाब्दुर्लभः ) ।

प्रधानपूरण्यामेवेति । पुंवद्भावविधौ वार्त्तिकमिदम् । ( प्रधाने कार्य-सम्प्रत्ययात्प्रायसिद्धम् )।[1] 'समासान्तोऽपि तत्रैवे'त्यत्र प्रमाणन्तु[2] पुंवद्भाव-सूत्रे 'कल्याणपञ्चमीकः पक्ष' इति भाष्योदाहरणमेव । वाच्या चेति । 'अन्यपदाऽर्थघटकतया समासवाच्या चे'त्यर्थः । 'उद्भूताऽवयवरात्रीणां प्रधानत्वेन, यथा प्रथमाद्या रात्रयः समासाऽभिधेया, एवं पञ्चम्यपी'ति वत्तिपदार्थस्याऽन्यपदार्थेऽनुप्रवेशात्प्राधान्यमिति भावः ।[3]

[4]नद्युत्तरपदादिति । 'नद्यन्तादि'ति नोक्तम् । 'बहुधीवरी'ति नद्यन्त-

१ श्लोकवार्त्तिके कुमारिलभट्टैरिदमुक्तम् ।

२ अयं ख. पाठः । क. ग. नास्ति ।

३ तुः क. नास्ति ।

४ 'नद्युत्तरपदादिति । 'नद्यन्तप्रकृतिकसुबन्तोत्तरपदकादि'त्यर्थः । अन्यथा 'बहुधीवरी'त्यादौ कबापत्तिः । 'बहवो धीवानो यस्यामि'ति विग्रहः । एतदर्थमेव 'नद्यन्तादि'ति नोक्तम् । इदं हि लिङ्गविशिष्टपरिभाषया नद्युत्तर-पदकं, नद्यन्तं च भवति । तस्यां विहितत्वांऽशानिवेशाऽभावात् । प्राति-पदिकत्व-तद्व्याप्यधर्माणां लिङ्गप्रत्ययसमभिव्याहारे, तद्विशिष्टेऽपि प्रवृत्तिबोधनात् । न च समासान्तविधौ समासादिपदानां तदर्थाऽलौकिक-विग्रहवाक्यलक्षकतया कथमिदानीं तत्प्राप्तिः । 'समास'पदेन गौणस्याऽपि ग्रहणमिति 'तादर्थ्यात्ताच्छब्द्य'मिति भाष्यतात्पर्यसत्त्वेन, मुख्याऽग्रहणे मानाऽभावात् । अत एव 'बहुव्रीहेरूधस' इति सूत्रे 'कुण्डोध्नी'त्यत्र

बहुव्रीह्यर्थके 'बहु जस् धीवन् जसि'त्यत्र कबापत्तेः। न च 'बहुधीवरी'त्यस्य नद्यन्तस्य न बहुव्रीहित्वम् । लिङ्गविशिष्टपरिभाषया तत्त्वात् । तथा हि प्रातिपदिकत्व–तद्व्याप्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽतिदेशात् । ध्वनितं चेदं 'बहुव्रीहेरूधस' इति भाष्ये ।

पुंवदिति । पूरण्या अप्रधानत्वादिति भावः ।

केऽणः । अत्र तद्धित एव को गृह्यते । 'न कपी'ति साहचर्यात् । तेन 'राका''धाके'त्यादौ न ह्रस्वः । प्रियेत्यादि ।

'प्रिया, कान्ता, मनोज्ञा, स्वा, कल्याणी, भक्ति, दुर्भगा ।

सचिवा, वामना, क्षान्ता, चपला, निन्दिता, समा ।

सुभगा, दुहिता, वामा, स्वसा च, तनया तथा ॥' इति गणरत्नकृत् ।

दृढं भक्तिरिति । अदाढर्यनिवृत्तिमात्रपरत्वेनाऽत्र दृढशब्दप्रयोगान्न लिङ्गविशेषविवक्षेति भावः । तद्विवक्षायान्तु 'दृढाभक्तिरि'त्यादिसिद्धये प्रियादिषु 'भक्ति'शब्दपाठः । यत्तु 'कर्मसाधनभक्तिशब्दस्यैव प्रियादिषु पाठः, तेनाऽन्यस्मिन्पुंवदेवे'ति । तन्न । मानाऽभावात् । यस्य स इति । अन्यपदार्थप्राधान्यं सूचयितुं विग्रहे 'त'च्छब्दप्रयोगः ।

([1]तसिलादिष्वा । अभिविधावाङ् )। अव्याप्त्यतीति । 'वृकतिः''अजथ्या' 'बहुश' इत्यत्राऽव्याप्तिः । तसिलादि-कृत्वसुजन्तेषु तिल्-थ्यन्-शसां पाठाऽभावात् । 'पट्वीदेश्ये'त्यादावतिव्याप्तिः । तत्र देश्यादेः पाठादिति भावः । तरप्तमपाविति । 'युवतितरे'त्यत्र कथाप्सूत्रस्थभाष्यप्रयोगात् पुंवत्त्वाऽभावः । 'युवत्वस्य वैकल्पिकजातिताया भाष्यसंमतत्वात् 'जातेश्चे'-ति निषेधेन तत्सिद्धिरि'त्यपरे ।

---

एनं कपमाशङ्क्य, 'नद्यन्तानां समास इत्येवं तदि'ति परिहृतम् । 'अलौकिकविग्रहवाक्ये एव समासान्तप्रवृत्तिरि'त्यन्ये । ऋदिति तपरत्वं 'कृ'शब्देन समासे तदभावाचेत्याहुः' इति ख. घ. पाठः ।

१ अयं ख. पाठः क. ग. नास्ति ।

चरट्जातीयरावििति। नन्वत्र जातीय-देशीयग्रहणं व्यर्थम्,'दर्शनीय-जातीये'त्यादौ चरितार्थेन 'पुंवत्कर्मधारये'त्यनेन परत्वात् 'न कोपधाया' इति निषेधं बाधित्वा, पाचकजातीयादावपि पुंवत्त्वसिद्धेरिति चेन्न। 'कर्मेर्णिङि'ति सूत्रे भाष्यकृदुक्तेन 'निषेधाश्च बलीयांसो भवन्ती'ति-न्यायेन तद्विषये परत्वाऽप्रवृत्तेः। पुनर्ग्रहणे तु सामर्थ्यान्निषेधविषयेऽपि प्रवृत्तिः। अस्याश्चेदमेव ज्ञापकमित्याहुः।

नन्वेवमपि परिगणनं न्यूनम्। 'पुंवत्कर्मधारये'ति सूत्रे इम्वादिभि-र्विप्रतिषेधविचारे 'दारदिके'त्यत्र पुंवद्भावाऽवकाशप्रदर्शनपरस्य,'पद्विके'-त्युदाहरणपरस्य च भाष्यस्य प्रामाण्येन 'प्रागिवात्क' इत्यस्याऽपि तसि-लादित्वाऽऽवश्यकत्वात्। दरच्छब्दात् 'अपत्यं स्त्री'त्यर्थे 'द्व्यञ्मगधे'त्यण्। तस्य 'अतश्चे'ति लुक्। 'प्रागिवात्कः', इति चेत्सत्यम्। भाष्येऽप्यत्र परि-गणनेऽस्याऽपाठात्। स च के पुंवत्त्वस्य वार्त्तिकसिद्धत्वबोधनपूर्वकं सौत्र-त्वाऽबोधनफलक इति। तत्फलं तु 'दारदिके'त्यत्र 'जातेश्चे'ति निषेधा-ऽभाव इति बोध्यम्। यद्यप्येतत्सूत्रभाष्ये थमु-दा-र्हिलोऽपि परिगणिताः। 'कया वृत्त्या कथम्', 'तस्यां वेलायां तदा', 'तर्हि' इत्युदाहृतं च, तथाऽपि 'सर्वनाम्नो वृत्तिमात्रे' इत्येव सिद्धत्वान्मूलकृता न गणिताः।

यत्तु 'भाष्ये एतद्गणनसामर्थ्यात्तत्रत्य'वृत्ति'पदं तद्धितभिन्नवृत्तिपरमि'-ति। तन्न। 'दक्षिणोत्तराभ्यामतसुजि'तिसूत्रेऽकारोच्चारणाऽभावे 'दक्षिणा'-शब्दात्तसि 'दक्षिणत' इत्यसिद्धिमाशङ्क्य, 'सर्वनाम्नो वृत्तिमात्रे' इत्येव सिद्धमि'ति भाष्ये उक्तत्वेन, त्वदुक्ताऽर्थस्य कल्पयितुमशक्यत्वात्। अत एव 'भवन्मयो ध्यायती'त्यादिमहाकविप्रयोगाः सङ्गच्छन्त इत्यलम्।

बह्वीष्विति। यद्यपि ङीषो वैकल्पिकत्वात्तदभावे 'बहुत्रे'ति सिद्ध्यति, तथाऽपि पाक्षिकाऽनिष्टवारणायेदम्। बहुथेति। 'प्रकारवचने थाल्'। तत्र 'किंसर्वनामबहुभ्य' इत्यधिकृतम्। वृकतिरिति। 'वृकज्येष्ठाभ्या-

१ 'तत्फलं तु चिन्त्यम्' इति ख. पाठः।

मि'ति लिङ्गविशिष्टपरिभाषया तिल् । परिगणनसामर्थ्यादेव 'जातेश्चे'ति-निषेधाऽप्रवृत्तिरिति बोध्यम् । अजथ्येति । 'अजाऽविभ्यां थ्यन्' ।

शसीति । 'बह्वल्पार्थादि'त्ययमपि शस् तसिलादिषु द्रष्टव्य' इत्यर्थः ।

[1]त्वतलोः । अत्र संज्ञा-जाति-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-सङ्ख्या-शब्दाऽतिरिक्तः शब्दो गुणवचनः । 'आकडार'सूत्रभाष्यतस्तथैव लाभात् । तेन क्रियाशब्दा न पुंवत् । अत एव 'इग्यण'इतिसूत्रे 'उभयसंज्ञात्वस्ये'ति भाष्ये प्रयुक्तम् । तस्य समस्तत्वेनाऽगुणवचनत्वात् ।

यत्तु–'एकतद्धिते चे'तिसूत्रे 'एकत्वमि'त्युदाहृत्य 'पुंवत्त्वेन सिद्धम् । न सिद्ध्यति । उक्तमेतत्–'त्वतलोर्गुणवचनस्ये'ति भाष्यमुपादाय 'एकशब्दस्य सङ्ख्यायां गुणवचनत्वेऽप्यसहायवाचिनोऽतथात्वादि'ति कैयटेनोक्तम् । तन्न । आ कडारसूत्रभाष्यत एकशब्दे सर्वनामसञ्ज्ञया, सङ्ख्यासंज्ञया च गुणवचनसंज्ञाबाधस्य लाभेनाऽस्य सर्वथा गुणवचनत्वाऽलाभात् । अत एव भवच्छब्दे सर्वनामसञ्ज्ञया बाधाद्गुणवचनत्वाऽभावेन ष्यङभावः सर्वादिसूत्रशेषे कैयटेनोक्तः । यत्तु 'परः सन्निकर्ष' इति सूत्रे भाष्यम्–

---

१ 'त्वतलोः । अत्र संज्ञा-जाति-क्रिया-ऽभाव-व्यतिरिक्तो धर्मो गुणः । 'वोत' इत्यादौ तथा निर्णीतत्वात् । तेन क्रियाशब्दा न पुंवत् । अत एव 'इग्यण' इति सूत्रे 'उभयसंज्ञात्वस्ये'ति भाष्ये प्रयुक्तम् ।

अत एव 'एकतद्धिते चे'ति सूत्रे 'एकत्वमि'त्युदाहृत्य, 'पुंवत्त्वेन सिद्धमि'त्याशङ्क्य, भाष्ये उक्तम्–'उक्तमेतत्'त्वतलोर्गुणवचनस्ये'ति । 'एक-शब्दस्य सङ्ख्यायां गुणवचनत्वेऽप्यसहायवाचिनोऽतथात्वादि'ति च कैयटः । 'असहायत्वं च सजातीयद्वितीयाऽभावः' इति केचित् । आ कडारसूत्रे भाष्ये तु 'संज्ञा-जाति-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-सङ्ख्याशब्दाऽति-रिक्तः शब्दो गुणवचनः' इत्युक्तम् । तत्कथमेकशब्दस्य सङ्ख्यावाचिनोऽपि गुणवचनत्वमि'ति चिन्त्यम् । एवं च बह्वीशब्दात्त्वतलोः 'बह्वीत्वमि'त्या-द्येवेत्यपरे' इति ख, पाठः ।

'एकैकवर्णवर्त्तित्वाद्वाच' इति। तत्तु 'सामान्योपक्रमात्क्लीप्रत्ययाऽभाव' इति पदसंस्कारपक्षे कैयटेन योजितमेव। एतेन 'नेष्टं पुरो द्वारवतीत्व-मासीदि'ति व्याख्यातम्। 'द्वारवती'तिसंज्ञाऽपि नेष्टा, किमु तदीयोऽर्थ' इति व्याख्यातृभिर्वर्णितत्वेन, संज्ञाशब्दत्वेन, तद्धितान्तत्वेन चाऽगुण-वचनतयाऽदोषात्। 'त्वे चे'ति ह्रस्वस्तु च्छन्दस्येवेत्याहुः।

[1]कर्त्रीत्वमिति। 'सखीत्वं सखि! रक्षणीयमि'ति त्वमाध्वेव। 'न कोपधाया' इत्यत्र 'ने'ति योगविभागेन क्वचित्पुंवत्त्वस्याऽनित्यत्वात् साध्वेवे'ति दुर्घटादयः।

शरद इति। 'कृताऽर्थ'शब्दस्य क्रियाशब्दत्वात्पुंवत्त्वाऽप्राप्तिरिति भावः। पदसंस्कारपक्षे विशेष्यसन्निधानात्पूर्वं सामान्ये नपुंसकत्वमित्यु-त्तरम्। हास्तिकमिति। 'अचित्तहस्ती'ति ठक्। न चाऽत्र 'यस्येति'लोपेन निर्वाहः। तस्याऽऽभीयत्वेनाऽसिद्धत्वात्, स्थानिवत्त्वाच्च 'नस्तद्धिते' इति-टिलोपोऽनापत्तेः। न च 'ठक्छसोश्चे'ति सिद्धिः। छसा सहचरितस्य भवतष्ठक एव तत्र ग्रहणात्। अत एव 'भस्याऽढे'इत्यस्य 'हास्तिकमि'त्यु-दाहरणं भाष्ये दत्तम्। रौहिणेय इति। 'रोहित'शब्दात् 'वर्णादनुदात्ता-दि'ति ङीप्-नकारौ। [2]सति तु पुंवत्त्वे 'सिद्धश्च प्रत्ययविधावि'त्युक्त्या प्रत्ययोत्पत्तेः पूर्वमेव तयोर्निवृत्ताविञि 'रौहितिरि'ति स्यादिति भावः।

---

१ 'कर्त्रीत्वमिति। कृञ उत्पत्त्यनुकूलव्यापारोऽर्थः। एतेन 'कृतेर्गुणत्वेनाऽयं गुणवचन' इत्यपास्तम्। धातुप्रतिपाद्यतया तस्या अपि क्रियात्वाच्च' इति ख. पाठः।

२ इतोऽग्रे—'सति तु पुंवत्त्वे तयोर्निवृत्तौ, 'रौहितेय' इति स्यादिति कैयटा-दयः। ननु 'भस्याऽढे' इत्यत्र 'सिद्धश्च (तत्र) प्रत्ययविधाविति वक्तव्यम्'। स्पष्टं चेदम् 'अणिञोरनार्षयोः' 'बहुपूगगण' 'भिक्षादिभ्योऽण्' 'ङ्याप्प्राति-पदिकादि'त्यादिसूत्रस्थभाष्यादौ। एवं च प्रत्ययोत्पत्तेः पूर्वं पुंवत्त्वे, 'स्त्रीभ्यो ढगि'त्यस्याऽप्रवृत्तौ, कथं 'रौहितेय' इत्यापादानमिति चेन्न। 'सिद्धश्च

स्त्रीभ्य इति । व्याख्यानं चाऽत्र मूलम् ।

अग्नायीति । नन्वस्य पुंसि प्रवृत्तावग्नित्वं निमित्तं, स्त्रियां त्वग्निसम्बन्ध इति, प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाऽभावात्कथं पुंवत्त्वम् । 'न कोपधायाः' इति सूत्रभाष्येऽत्रापि तत्सम्बन्धस्योक्तत्वादिति चेन्न । 'अग्नि'शब्देन स्वसम्बन्धाद्यदा पुंस्यर्थे स्तम्भादौ वृत्तिस्तदा सम्बन्धरूपप्रवृत्तिनिमित्तेऽपि भाषितपुंस्कत्वसत्त्वात् । 'आरोपितशक्यताऽवच्छेदकप्रकारकेतराऽर्थबोधे एव लक्षणे'ति सिद्धान्ते दोषाऽभावाच्च । 'गङ्गा'दिशब्दास्तु लक्ष्यमपि शास्त्रीयस्त्रीत्वविशिष्टमेव प्रत्याययन्तीति, न कदाचिदपि ते भाषितपुंस्का इति बोध्यम् ।

शत्रुपर्यायादिति । 'व्यन् सपत्ने' इति निर्देशोऽत्र लिङ्गम् । 'रिपौ वैरिसपत्नाऽरिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । अयं भाषितपुंस्कः ।

विवाहेति । तज्जन्यसंस्कारविशिष्टे रूढमित्यर्थः । अयं च रूढः ।

---

प्रत्ययविधावि'त्यंशस्य भाष्यकारीयत्वेऽपि, यथाश्रुतवार्त्तिकरीत्या तथाऽऽपादनाच्च दोषः । 'रोहितिरि'त्येवाऽऽपत्तिरित्यन्ये' इति ख. पाठः ।

१ इतोऽग्रे—'तादृशेषु प्रत्ययस्यैव लक्षणे'ति सिद्धान्ते दोषाऽभावाच्च । यत्तु 'न पदान्त'सूत्रे कैयटे 'लुक् न स्थानिवदि'त्यस्योदाहरणे पञ्चेन्द्रे 'समानायामाकृतौ भाषितपुंस्कत्वाऽभावान्न पुंवत्त्वमि'ति । तच्चिन्त्यम् । न चाऽत्र 'भाषितपुंस्कादि'ति न सम्बध्यते । ध्वनितं चेदं 'न पदान्त'सूत्रे भाष्ये इति वाच्यम् । प्रकरणप्राप्तत्यागे मानाऽभावात् । 'न कोपधायाः' इति सूत्रभाष्येऽत्राऽपि तत्सम्बन्धस्योक्तत्वात् । 'न पदान्त'सूत्रस्थभाष्यमप्येवंपरतया नेतुं शक्यमिति दिक्' इति ख. पाठः ।

२ 'अयं च शत्रुभूतस्त्रीमात्रे रूढो भाषितपुंस्कः' इति ख. पाठः ।

३ 'तन्निबन्धनसंस्कारविशिष्टे रूढमित्यर्थः' इति ख. पाठः ।

४ 'अयं च स्वविवाहितपति-विवाहित-स्त्रीमात्रबोधको रूढ एव, रूढपतिशब्दघटितत्वात् । अस्य च 'नित्यं सपत्न्यादिष्वि'ति साधुत्वम् । तदेवाह—नित्यस्त्रीलिङ्ग इति' इति ख. पाठः ।

रूढपतिशब्दघटितत्वात्। तदेवाऽऽह—नित्यस्त्रीलिङ्ग इति। अयं च

१ ( नित्यस्त्रीलिङ्ग इति)। 'स्वामिपर्यायेति'।। अयं च एकस्वामिकस्त्रीमात्र-बोधकः केवलयौगिकः। रक्षणकर्तृत्वरूपयोगपुरस्कारेणैव पतिशब्दस्य स्वामिबोधकत्वात्। रक्षणकर्तृत्वस्वामित्वयोः समनियतत्वात्। अस्याऽपि 'नित्यं सपत्न्यादिषु'ति साधुत्वम्। अत्र समानशब्दः साधारणपर्यायः।

आद्ययोरिति। रूढत्वात्, प्रसिद्धत्वाच्चेत्यर्थः। न च द्वितीये लिङ्ग-विशिष्टपरिभाषया पत्युत्तरपदण्यः स्यादिति वाच्यम्। परत्वेन शिवाद्यण एव प्राप्तेः। तस्याऽणपवादत्वाऽभावेन विप्रतिषेधाऽप्राप्तेः। 'आदित्य'-साहचर्येण केवलयौगिकस्यैव पत्युत्तरपदस्य ग्रहणाच्च। अत एव 'सापत्नो भ्राते'ति सङ्गच्छते। न च आद्यादण्न प्राप्नोति। अतिप्रसिद्धत्वेन द्वितीय-'सपत्नी'शब्दस्यैव शिवादिपठित-'सपत्नी'शब्देन ग्रहणौचित्यात्। किञ्चा-ऽस्मादण्विवक्षायां पूर्वमेव पुंवत्त्वे, 'सपत्नी'शब्दाऽभावादणभावेऽकारान्त-त्वादिञ एव प्राप्तेरिति वाच्यम्। शिवादौ सपत्नीशब्दयोर्द्वयोः पाठेना-ऽदोषात्। तत्र पुंवद्भावेऽपि, पाठसामर्थ्याद्भूतपूर्व'सपत्नी'शब्दत्वमादाय अण्। एवं च द्विःसपत्नीशब्दपाठसामर्थ्यादपि न द्वितीयात्पत्युत्तरपदण्यः।

लिङ्गविशिष्टेति। अन्यथा तस्य विवक्षायां पुंवत्त्वमेव न स्यात्। परिभाषाऽऽश्रयणे तु 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्ध-मि'ति ण्य एव। एतेन 'प्रत्ययविवक्षायां पूर्वमेव पुंवत्त्वाल्लिङ्गविशिष्टपरि-भाषोपन्यासो न युक्त' इत्यपास्तम्।

ननु शिवादित्वादण एव विवक्षा स्यादत आह—न त्वणिति। रूढ-योरिति। रूढ-युक्तयोः सपत्नीशब्दयोरित्यर्थः। 'अभिव्यक्तपदार्था ये' इति न्यायादिति भावः। सापत्य इति। भाषितपुंस्कत्वात्पुंवत्त्वे 'यस्ये'ति लोपः।

अपरे तु भाष्यकैयटस्वरसादन्यथा वदन्ति। [1]माधवाद्यनुरोधेनोक्तो विवाहनिबन्धनपतिशब्दघटितो नास्त्येव। अत एव 'भस्याऽढे' इत्यत्र'अढे' इत्युच्यते, सापत्ने पुंवत्त्व प्राप्नोति। सापत्नो न सिद्ध्यति। किन्तु 'सापत' इति प्राप्नोति' इति भाष्यकैयटयोरुक्तम्। विवाहनिबन्धनपतिशब्दघटितस्य

1 'माधवाद्यनुक्तः' इति ख. ग. घ. पाठः।

'पा रक्षणे' इतिधातुस्थमाधवाऽनुरोधेनोक्तः। तत्र हि 'भावकर्मणोः पत्यन्तलक्षणे यकि 'सापत्न्यम्' । अभाषितपुंस्कत्वात्पुंवत्त्वं न । 'नित्यं सपत्न्यादिष्वि'ति साधुत्वमि'ति तेनोक्तम् ।

वस्तुतस्तु अयं नास्त्येव । अत एव 'भस्याऽढे' इत्यत्र 'अढे' इत्युच्यते । सापत्ने पुंवत्त्वं प्राप्नोति । सपत्नीशब्दादणि 'सापत' इति प्राप्नोति । 'सापत्नः प्रकृत्यन्तरत्वात्' । 'सपत्न'शब्दः प्रकृत्यन्तरमस्ति, ततः शार्ङ्गरवादित्वान्ङीनि, अणि, पुंवत्त्वे, सापत्नसिद्धिरि'ति भाष्यकैयटयोरुक्तम् । विवाहनिबन्धनपतिशब्दघटितस्य सत्त्वे, तस्याऽभाषितपुंस्कत्वात्पुंवत्त्वाऽभावेन, तमादायाऽपि 'सापत्न'सिद्धेस्तदनुक्त्या, न्यूनताऽऽपत्तिः स्पष्टैव ।

न च 'पतिर्ना धवे, त्रिष्वीशे' इति कोशाद्विवाहनिबन्धनपतिशब्दसत्त्वेन तद्घटितो वारयितुमशक्य इति वाच्यम् । यज्ञफलस्वामित्वेनैव ततो बोधात् ।

अयं भावः—स्वामित्वेनैव बोधकः पतिशब्दः । स्वामित्वं च यदा प्रकरणाऽऽदिना यज्ञफलनिरूपितं बुध्यते, तदा पुमानेव पतिशब्दः स्त्रियां, 'पत्नी'तिरूपात् । विवाहनिबन्धनसंस्कारविशिष्टे पतिशब्दस्य[1] रूढौ[2] तु न मानम् । ध्वनितं चेदं सर्वं 'विवाहनिबन्धनपतिशब्दमाश्रित्ये'त्युक्त्या मूले । 'स्वीकृत्ये'ति तस्याऽर्थः ।

---

सत्त्वे तस्य अभाषितपुंस्कत्वात्पुंवत्त्वाऽभावेन, तमादाय'सापत्न'सिद्धेस्तदसङ्गतिः स्पष्टैव । न च 'पतिर्ना धवे, त्रिष्वीशे' इति कोशात्' इति ख. घ. पाठः ।

१ इतोऽग्रे —'सपत्नी'शब्दघटक'पति'शब्दस्तु न कदाऽपि यज्ञफलप्रतियोगिकस्वामित्वबोधकः, ज्येष्ठाया एव यज्ञादावधिकारेण, उभयनिरूपितयज्ञफलप्रतियोगिकस्वामित्वस्यैकत्राऽभावात्' इति ख. घ. पाठः ।

२ 'रूढौ तु न मानम् । सूत्रभाष्याऽसंमतेः । तस्मादभाषितपुंस्क एव सपत्नीशब्दः, समानस्वामिकत्वेन प्रवृत्तिनिमित्तेन पुंसोऽप्युक्तेः । न च 'सापत्न' एव न सिद्ध्यति, 'सापत' इत्यपि प्राप्नोती'ति भाष्याऽर्थः । त्वद्रीत्या द्वितीयसत्त्वे,

स्वामिपर्यायेति। अस्य च योगाऽर्थप्रवृत्तिनिमित्तकस्य, ङ्यन्तस्य,

रूढत्वेन तस्यैव शिवादौ ग्रहणे, तृतीयादणः प्राप्त्यभावेन, 'सापत'प्राप्ते-र्दुरुपपादतया कैयटाऽसङ्गतेः। तस्मात्तदभावमादायैव पूर्वपक्षस्योपपादनीय-त्वेन, तदभावकल्पनैवोचिता। पूर्वपक्षिणस्तदज्ञानस्याऽपि कल्पनाऽपेक्षया, तदभावकल्पनस्यैवौचित्यात्। किञ्च शत्रुरूढसपत्नशब्दमादाय 'सापत्न'-सिद्धिरि'ति सिद्धान्तोऽप्यसङ्गतः। त्वदुक्तविवाहनिबन्धनघटितेऽभाषित पुंस्कत्वात्पुंवत्त्वाऽभावे, चरितार्थस्य शिवाद्यणो, भाष्योक्त'सपत्नी'शब्दे प्रत्ययोत्पत्तेः प्रागेव पुंवत्त्वे[1], 'सपत्नी'शब्दत्वाऽभावेनाऽप्राप्तेः। सपत्नी-शब्दद्वयस्य शिवादौ पाठे च न मानम्। तस्मात्स्वामिपर्यायपतिशब्द-घटितस्यैव योगाऽर्थप्रवृत्तिनिमित्तकस्य, ङ्यन्तस्य, 'नित्यं सपत्न्यादिष्वि'ति-समुदायोच्चारणेन, लोकव्यवहारेण वा स्त्रीविशेषे रूढिरित्येवोचितम्। अत एव प्रयोगाऽतिप्रसङ्गो न। भवतस्तु स दुर्वारः। समानस्वामिकदास्योरपि सपत्नी-त्वेन व्यवहाराऽऽपत्तेः। क्वचित्तथा व्यवहारस्तु गौणः। योगाऽर्थमादाय च भाषितपुंस्कत्वम्। पुंसि तु 'सपतिरि'तीत्येवोचितम्। सपत्नप्रकृतिकसपत्नी-शब्दस्याऽपि शत्रुत्वोपचारेण स्वविवाहितपति-विवाहित-स्त्र्यन्तरेऽपि वृत्तेः, तदपत्येऽपि 'सापत्न'सिद्धिरप्रत्यूहा। पुंवत्त्वेऽपि सामर्थ्योद्भूतपूर्वसपत्नी-शब्दत्वमादायाऽण् बोध्यः। स्वामिपर्यायपतिशब्दघटितसपत्नीशब्दात्तु नाऽण्, केवलरूढस्य सपत्नप्रकृतिकसपत्नीशब्दस्यैव शिवादौ ग्रहणात्। न चाऽयमपि सपत्नीव सपत्न इति इवार्थे 'ङ्यन्सपत्ने' इति निर्देशाद्णिति वृत्त्यादा-वुक्तत्वेन यौगिक एव, एवं चाऽविशेषादुभयोरपि ग्रहणाऽऽपत्तिरिति वाच्यम्। व्युत्पादनमात्रं तत्। वस्तुतः केवल रूढ एवाऽयमिति न दोषः। यदपि तृतीयस्य लिङ्गविशिष्टपरिभाषया पत्युत्तरपदण्ये 'सापत्य' इत्युक्तम्। तत्र यदि दैतेयाऽऽदितेययोः सिद्धये लिङ्गविशिष्टपरिभाषाऽभावस्य' इति ख.पाठः।

1 'स्वामिपर्यायस्येति' इति सर्वत्र पाठः।

1 'पुंवत्त्वे सपत्नशब्दत्वेन सपत्नीशब्दत्वाऽभावेन चाऽप्राप्तेः' ख. पाठः

'नित्यं सपत्न्यादिष्वि'ति समुदायोच्चारणेन, लोकव्यवहारेण च स्त्रीविशेषे रूढिः । अत एव प्रयोगाऽतिप्रसङ्गो न । समानस्वामिकदास्योः सपत्नीत्वेन व्यवहाराऽभावात् । क्वचित्तथा व्यवहारस्तु गौणः । योगाऽर्थमादाय च भाषितपुंस्कत्वम् । पुंसि तु 'सपतिरिती'त्येवोचितम् । आद्य'सपत्नो'-शब्दस्याऽपि स्त्रीविशेषे एव रूढिः ।

आद्ययोरिति । आद्यसपत्नीशब्द-तत्प्रकृतिभूतसपत्नशब्दयोरित्यर्थः । यथा चैतत्तथाऽनुपदमेवोपपादयिष्यते ।

लिङ्गविशिष्टेति । अन्यथा ढस्य विवक्षायां पुंवत्त्वमेव न स्यात् । परिभाषाऽऽश्रयणे तु 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेन' इति ण्य एवेति भावः । तत्र यदि दैतेयाऽऽदितेययोः सिद्धये लिङ्गविशिष्ट-परिभाषाऽभावस्याऽऽकरे उक्तत्वेन, तत्साहचर्यात्पत्युत्तरपदांऽशेऽपि तद-प्रवृत्तिस्तदा 'सापत्नेयः', अन्यथा मूलोक्तम् । अत्र निर्णयं बहुदर्शिनः कुर्वन्तु ।

शिवाद्यणिति । न च 'नित्यं सपत्न्ये'तिशास्त्रसिद्धतया स्त्रीविशेष-रूढतयाऽस्याऽप्यभिव्यक्तपदार्थकत्वेन शिवादौ ग्रहणस्यौचित्येन, अण् प्राप्नोत्येवेति वाच्यम् । शिवादौ न 'सपत्नी'शब्दस्य पाठः, किन्तु 'सपत्न'-स्यैवेति, तस्मादणः प्राप्तिरेव नेत्याशयात् ।

तथा च सिद्धान्तभाष्यम्–'सापत्नः प्रकृत्यन्तरत्वात् । सपत्नशब्दः प्रकृत्यन्तरमस्ती'ति । तत्र पूर्वपक्षाऽऽशयस्तु 'सपत्न'प्रकृतिकादणि 'सापत्न'-सिद्धावपि, तृतीयादणि सापतोऽपि स्यादिति । पूर्वपक्षिणो गणपाठा-ऽज्ञाने मानाऽभावात् । उत्तराऽर्थस्तु अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरः, तत्त्वादित्यर्थः । प्रकृत्यन्तरमेवाऽऽह—सपत्नशब्द इति । अत्राऽण्निरूपित-

---

१　'तत्र यदि तु' इति ग. पाठः ।

२　'शिवादौ ग्रहणस्यौचित्येन 'सापतः' प्राप्नोत्येवेति वाच्यम् । भाष्यप्रामाण्या-देव तस्मान्नाऽणिति माधवोक्तेः । वस्तुतः 'शिवादौ न सपत्नी'शब्द-पाठ' इति ख. पाठः ।

भिन्नप्रकृतित्वमेव 'सपत्न'शब्दस्य शब्दमर्यादया लभ्यते, न तु ङीन्-निरूपितम्। लक्षणया तथा व्याख्याने च न मानम्। एवं च 'सपत्नो'ति-गणपाठमाश्रित्य पूर्वपक्षः। 'त्वदीया प्रकृतिर्गणे न पठ्यते, किन्तु भिन्नः 'सपत्न'शब्द' इत्युत्तराऽऽशय इति न कश्चिद्दोषः।

'सपत्ने'ति पाठेऽपि लिङ्गविशिष्टपरिभाषया ङीनन्तादप्यण्। न च परत्वादस्मात् 'स्त्रीभ्य' इति ढगेव स्यात्, शिवादिपाठस्तु मध्येऽपवाद-न्यायेन नाऽस्य बाधक इति वाच्यम्। तत्र बाध्यसामान्यचिन्ता-ऽऽश्रयणात्। तदाह—शिवादौ रूढयोरिति। सपत्न-तत्प्रकृतिकसपत्नी-शब्दयोरित्यर्थः। लिङ्गविशिष्टपरिभाषया ङीनन्तस्याऽपि ग्रहात्। ये तु 'मूलोक्तत्रयाणां मध्ये आद्ययोरि'त्यर्थं व्याचक्षते, तेषां तृतीयस्याऽपि रूढेर्मनोरमानुकूलत्वेन, द्वितीयस्याऽनतिप्रसक्तत्वाद्रूढौ मानाऽभावेन चाऽयुक्तम्। एवं च 'सपत्नस्याऽपत्यमि'त्यर्थेऽपि 'सापत्न' एव। त्वत्पक्षे तु 'सापत्निः' स्यात्। यदि तु सोऽपीष्ट इत्याग्रहस्तदा बाह्वादित्वात्साध्यः। 'सापत्न्यमि'त्यपि सपत्नप्रकृतिकादेव ब्राह्मणादित्वात् ष्यञि बोध्यः। अस्मात्तु पत्यन्तलक्षणे यकि 'सापत्यमि'त्येव। पुंवत्त्वे 'यस्ये'ति लोपः। एवं सापत्ये ण्यन्तेऽपि' इति दिक्।

---

१ इतोऽग्रे—'एवं च 'पा रक्षणे' इति धातौ यन्माधवेनोक्तं 'भावकर्मणोः पत्यन्तलक्षणे यकि 'सापत्न्यम्'। 'अभाषितपुंस्कत्वात्पुंवत्त्वं ने'ति। तच्चि-न्त्यम्। 'सापत्न्यमि'ति प्रयोगस्तु सपत्नप्रकृतिकादेव ब्राह्मणादित्वात्ष्यञि बोध्यः। अस्मात्तु पत्यन्तलक्षणे 'सापत्यमि'त्येव। मूलोक्तद्वितीयसपत्नी-शब्दाऽङ्गीकारेऽपि तद्दुर्वारमेव।

यत्तु न्यासकृता-'नित्यं सपत्न्यादिष्वि'तिसमुदायोच्चारणादस्य पुंवत्त्वं ने'त्युक्तम्। तन्न। 'स'भावार्थे, रूढ्यर्थे च निपातनाऽऽवश्यकत्वात्। अन्यथा सम्बुद्धिह्रस्वादीनामपि बाधाऽऽपत्तिः, प्रकृतवार्त्तिकस्थभाष्यविरोधाच्चेति दिक्'—इति ख. घ. पाठः।

ठक्छसोश्च । अभत्वाऽर्थमिदम् । भावत्का इति । ठाऽवस्थायामेव पुंवत्त्वे इकादेशं बाधित्वा तान्तलक्षणः कादेशः । अत एव न 'भस्याऽढे' इत्यनेन सिद्धिः । भत्वस्याऽभावित्वात् । छसि सित्त्वेन पदत्वाच्च । न च इकादेशे भत्वात्प्रत्ययोत्पत्तेः पूर्वमेव 'भस्याऽढे' इति पुंवत्त्वे, ततष्ठकि, कादेशस्य परत्वेऽपि, तस्मिन्पुंवत्त्वस्य निवृत्त्यापत्तौ इकादेशे, पुनः कादेशे रूपसिद्धिरिति वाच्यम् । ठादिष्वकारस्योच्चारणाऽर्थत्वेनाऽल्विधित्वेन स्थानिवत्त्वाऽयोगात् । सन्निपातपरिभाषया च 'माथितिक'वत्कादेशाऽप्राप्तेरिति स्पष्टं भाष्ये । 'पुंवत्त्वनिवृत्तेरेवमप्यवारणादि'त्यप्याहुः ।

भाष्यकारेष्टयेति । अष्टाध्याय्यामपाठात्, अन्यवार्त्तिकानामिवाऽस्मिन् प्रकरणे पाठाच्च, भाष्यादावन्यकर्त्तृकत्वाऽनुक्तेश्च, भाष्यकारीयत्वमेव कल्प्यत इति भावः । इदं च 'दक्षिणोत्तराभ्यामतसुच्' 'दिङ्नामान्यन्तराले' इतिसूत्रयोर्भाष्ये पठितम् । अनेन सूत्रवार्त्तिकयोरुक्तिसम्भवाप्युक्तः । उत्तरं दृष्ट्वा पूर्वस्याऽप्रवृत्तेः ।

गतार्थत्वादिति । अत्रेदं बोध्यम्—'एक तद्धिते चे'ति न गताऽर्थम् । एकशब्दादकचि, त्वतलोः परत 'एकिकत्वमि'त्यादौ पुंवत्त्वे, इकारो न श्रूयेत, 'पाचकजातीये'त्यादिवत् । ह्रस्वे तु भवति श्रवणम्, 'प्राप्तजीविक' इतिवत् । न च 'एके'त्यविभक्तिकनिर्देशात्तादृशस्वरूपविवक्षेति वाच्यम् । निर्देशे भारं दत्त्वा सम्पूर्णसूत्रवैयर्थ्योपपादनाऽपेक्षया, सम्पूर्णसूत्रसार्थक्याऽनुरोधेन लाघवायाऽविभक्तिकनिर्देशो 'नलोपः प्रातिपदिकान्तस्ये'तिवदिति कल्पनमेवोचितमिति, इदं चिन्त्यमेव । भाष्यन्तु प्रयोजनोपलक्षणं बोध्यम् । केचित्तु 'तादृशप्रयोगाणामनभिधानमि'त्याहुः ।

यत्तु 'एक तद्धिते चे'ति नियमाऽर्थम्–'तद्धितोत्तरपदयोरेवैकशब्दस्ये'ति । तन्न । ह्रस्वप्रकरणे पाठेन पुंवत्त्वनियमस्याऽसङ्गतत्वात् । किमुदाह-

१ 'तन्न । पुंवद्भावनियामकत्वे ह्रस्वप्रकरणे पाठस्याऽसङ्गतताऽऽपत्तेः' इति ख. पाठः ।

रणम् ?। एकत्वम्, एकता। पुंवत्त्वादप्येतत्सिद्धम्। न सिद्ध्यति। उक्तमेतत्-'त्वतल्रोर्गुणवचनस्ये'त्यादिशङ्कासमाधानपरभाष्यविरोधाच्च।

यत्तु 'ठक्छसोरि'ति नियमाऽर्थमि'ति। तन्न। 'भवत एवे'ति नियमे 'द्वास्तिकमि'तिभाष्योदाहरणविरोधाऽऽपत्तेः। छस्सहचरितठकोऽन्यस्मादविधानाच्च। 'भवत' इति पदस्याऽनुपात्तत्वाच्च। एतेन 'भवतष्ठक्छसोरेवे'ति नियम' इति परास्तम्। 'भवन्मयो ध्यायति नाऽवनीपतिरि'तिमहाकविप्रयोगविरोधाच्चेति दिक्।

इष्टेरुदाहरणान्याह-सर्वमय इत्यादि। 'तत आगत' इत्यर्थे मयट्। अत्यन्तंस्वार्थिको वा।तसिलादिषु मयटोऽपरिगणितत्वान्न सूत्रेण गताऽर्थता।

सर्वैकभार्य इति। न च 'स्त्रियाः पुंवदि'ति सिद्धिः। 'न कोपधाया' इतिनिषेधात्। अस्य तु न निषेधः। 'अनन्तरस्ये'ति न्यायेन एतत्प्रकरणोक्तस्यैव निषेधात्। अस्या इष्टेरत्र प्रकरणेऽसमाविष्टत्वात्। इदमेवाऽभिप्रेत्येयमिष्टिर्भाष्ये प्रकरणाऽन्तरे पठिता। न च वृत्त्यन्तर्गतस्याऽस्य गौणत्वात्सर्वनामत्वाऽभावः। 'मात्र'ग्रहणेन वृत्तेः प्राक् क्वचित्सर्वनामत्वेन दृष्टस्य, संप्रति तदभावेऽपि तदभ्युपगमात्। 'मात्र'शब्दः कार्त्स्न्ये। तत्सामर्थ्यात्साम्प्रतिकं, भौतपूर्विकं च सर्वनामत्वं निमित्तत्वेनाऽऽश्रीयते इति तत्त्वम्। अत एव 'उत्तरपूर्वायै' इत्यादि भाष्योदाहृतं सङ्गच्छते। 'वृत्तेः प्रागि'त्युपलक्षणम्। मात्रग्रहणात् 'यस्य क्वचित्सर्वनामत्वं दृष्टं, तस्य वृत्तौ पुंवत्त्वमि'त्यर्थात् 'प्रथमद्वितीयकक्ष्ययोरि'त्यादिसिद्धिः। 'तृतीया-

१ इतोऽग्रे-'विधित्वे एव सूत्रतात्पर्यात्। नियमफलस्य दुर्वचत्वाच्च। 'एकशब्दस्यैवे'ति नियमस्त्वनाशङ्क्य एव, ह्रस्व-पुंवद्भावप्रकरणवैयर्थ्याऽऽपत्तेः' ख. पाठः।

२ 'अत्यन्तस्वार्थिको वा' इति क. ग. पाठः। ख. नास्ति।

३ इतोऽग्रे—'प्रथमद्वितीयकक्ष्ययोरि'त्यादिप्रयोगास्तु पदसंस्कारपक्षे सामान्ये नपुंसकत्वमाश्रित्य समाधेयाः। केचित्तु मात्रग्रहणात् 'यस्य क्वचित् सर्वनामत्वं दृष्टम्' इति ख. पाठः।

सप्तम्योरि'त्यादौ तु संज्ञात्वात्कदाऽपि तत्त्वं न दृष्टमिति न दोषः । तेन 'अतिसर्वापुत्र' इत्यादौ, संज्ञाभूत'सर्वा'घटित-'सर्वापुत्र' इत्यादौ च न । तद्वृत्तौ, तद्वृत्तेः प्राग्वा, अन्यत्र वा, अस्य क्वचिदपि सर्वनामत्वाऽभावादित्याहुः ।

नन्वेवं 'तदितरे'त्यादावपि पुंवत्त्वं स्यादत आह—पूर्वस्यैवेति । 'वृत्तिघटकाऽनेकभागमध्ये यत्किञ्चिदपेक्षया पूर्वस्ये'त्यर्थः । वृत्तिघटकत्वं च प्रकृतिप्रत्यययोः, पदयोर्वा । लिङ्गादिति । अन्यथा-'एषा' 'द्वा' एतयोः कात्पूर्वस्याऽपि विधीयमानमित्त्वं निर्विषयं स्यादिति भावः ।

तेनाऽकचीत्यादि । उपलक्षणमेतत् 'तदितरे'त्यादेः ।

एतायत इति । कर्त्तुः क्यङि, पुंवत्त्वे 'अकृत्सार्वे'ति दीर्घः । 'मानिन्'-ग्रहणमसमानाधिकरणाऽर्थम्, अस्त्र्यर्थं चेति यथाक्रममुदाहरति-स्वभिन्नामिति । 'मन' इति णिनिः । नान्तत्वान्ङीप् । या त्वात्मानमेव दर्शनीयां मन्यते, तत्र एकस्या एव रूपभेदेन कर्मत्व-कर्त्तृत्वयोः सत्त्वेऽपि, वास्तवाऽभेदेन सामानाधिकरण्यमाश्रित्य 'स्त्रिया' इति सूत्रेणैव सिद्धमिति भावः ।

न कोपधा । सौत्रोपसङ्ख्यानिकपुंवद्भावमात्रस्य निषेधोऽयम् । अत एव 'विलेपिकाया धर्म्यं वैलेपिकमि'त्यादौ 'भस्याऽढे' इतिपुंवत्त्वं न । इष्टेस्तु न निषेध इत्युक्तम् । उत्तरनिषेधास्तु सौत्रमात्रविषयका इति स्पष्टमत्र भाष्ये[1] । पाचिकेति । ण्वुलकादेशटाबित्त्वानि । रसिकेति । 'अत इनिठनावि'ति ठन् । मद्रकेति । 'मद्रवृज्योः कन्' ।

तद्धितवुग्रहणेति । द्वन्द्वाऽन्ते श्रुतस्य प्रत्येकं सम्बन्धात्तद्धितग्रहणं, वुग्रहणं चेत्यर्थः । पाकेति । 'अभक-पृथुक-पाका वयसी'त्युणादि-'क' प्रत्ययान्तः । अजादिपाठाट्टाप् । पाका = बाला । पञ्चमीपाशेति । 'याप्ये पाशप्' । 'तसिलादिष्वि'ति प्राप्तिः ।

---

१ 'तदितरेत्यादेः, बहुसर्वादेश्चेत्याहुः' इति ख. पाठः ।

वृद्धिशब्देनेति। 'वृद्धि'शब्द आवर्त्तते, तेनोक्ताऽर्थलाभ इति भावः।

स्रौग्घ्नीति। स्रुग्घ्नाद्भवार्थेऽणि, ङीप्। मध्यमेति। भवाऽर्थे 'मध्यान्मः'। काण्डलावेति। 'कर्मण्यण्'। कृदयम्। तावदिति। तत्परिमाणमस्यास्तावती। 'यत्तदेतेभ्य' इति वतुपि, 'आ सर्वनाम्न' इत्याकारो न 'वृद्धि'शब्देन विहित इति भावः। काषायीति। 'कषायेन रक्ते'त्यर्थेऽणि, ङीप्। हैमीति। हेम्नो विकारे 'अनुदात्तादेश्चे'त्यञ्।

फलोपधेति। इदं च 'प्रवाहणस्य ढे' इति सूत्रे भाष्ये ध्वनितम्। तत्र हि 'प्रवाहणस्ये'ति 'परस्य वृद्धिर्ने'त्यनुवृत्तौ 'प्रवाहणेयीभार्य' इत्यत्र 'वृद्धिनिमित्तस्ये'ति पुंवत्त्वप्रतिषेधो न प्राप्नोति। मा भूदेवम्, 'जातेरि'त्येवं भविष्यती'त्युक्तम्। 'प्रवाहणस्य परस्य वृद्धिर्न, पूर्वस्य तु वे'ति 'प्रवाहणस्ये'ति सूत्रस्याऽर्थः। अत एव 'अर्द्धप्रस्थिकी भार्या यस्ये'तिविग्रहे 'अर्द्धप्रस्थिकभार्य' इत्यत्र निषेधो न। अत्र हि 'नाऽतः परस्ये'त्यनेनोत्तरपदवृद्धिनिषेधात्, पूर्वस्य वैकल्पिकत्वेनाऽभावाच्च। अत एव 'निमित्त'ग्रहणं चरिताऽर्थम्। अन्यथा 'वृद्धेस्तद्धितस्ये'त्येव ब्रूयात्। वृद्धिशब्दविहितवृद्धिरूपतद्धिताऽसम्भवेन 'तन्निमित्त' इत्यर्थसम्भवात्। यद्यपि भाष्ये निमित्तग्रहणसामर्थ्याद्वृद्धीनां निमित्तमिति, वृद्धेर्निमित्तं यस्मिन्निति वाऽर्थाऽऽश्रयणेन, 'निमित्त'ग्रहणसामर्थ्यादेव व्यपदेशिवद्भावाऽप्रवृत्त्या तावद्भार्ये दोषपरिहार उक्तः, तथाऽपि 'वृद्धीनां तद्धितस्ये'त्येव, 'ञिणित्वित्तद्धितस्ये'त्येव(वा)सिद्धे निमित्तग्रहणमेतदर्थमितिबोध्यम्।

---

इतोऽग्रे—न च ( दण्डः प्रहरणमस्यां क्रीडायामित्यर्थे 'दाण्डा'इत्यादौ, ) अर्शआशब्दान्मत्वर्थीयेऽचि, स्त्रियां टापा सहैकादेशे, 'अर्शसाभार्य' इत्यादौ च वृद्धिरूपतद्धितसम्भव इति वाच्यम्। 'अविकारे' इति पर्युदासेन वृद्धिरूपतद्धिताऽग्रहणात्। न हि विकारे वृद्धिरूपस्तद्धितोऽस्ति। वक्ष्यमाणभाष्यप्रामाण्येनेदृशानामभिधानाच्च' इति क. कुण्डलितः ख. (ग.) पाठः।

निमित्तत्वं च 'यावद्वृद्धिजननयोग्यत्वे सति, यत्किञ्चित्फलोपहितत्वम्'। शब्दव्यापाराऽऽश्रयणेऽपि यत्किञ्चित्फलोपहितत्वमेव तत् । अत एव 'पारिषद्याभार्य' इत्यत्र न पुंवत् । अन्यथा परिषदो ण्यस्य यावद्वृद्धि-फलोपधानाऽभावेन दोषः स्यात् । अत एव 'फाण्टाहृते'तिसूत्रभाष्ये फाण्टाहृताभार्ये पुंवत्त्वप्रतिषेध उक्तः ।

वैयाकरणभार्य इति । न च ऐचौ प्रति फलोपधानमस्त्येवेति वाच्यम् । तयोर्वृद्धिशब्देनाऽविधानात् । किञ्च ऐचौ प्रति न तद्धितो निमित्तम् । निषेधसन्नियोगशिष्टतयैवाऽतिप्रसङ्गभङ्गात् । स्पष्टश्चाऽयं प्रयोगो 'न य्वा-भ्यामि'ति सूत्रे कैयटे । दाविकी भार्या यस्येत्याद्यर्थे 'दाविकीभार्य' इत्यादौ 'देविकाशिंशपे'त्यात्त्वे, पुंवत्त्वं न भवत्येव । तत्र 'वृद्धि'पदमनुवर्त्य वृद्धिशब्देन तद्विधानसत्त्वात्। अत एव भाष्ये 'देविके'त्यस्य प्रथमाध्याय-पाठेन एषामाकारस्य वृद्धिसंज्ञां विधाय, 'तद्धितेष्वचामादेरि'त्यनेनैव तद्विधानमि'ति पक्षाऽन्तरमुक्तम् । सूत्रभेददूषणमात्रेण च दूषितम् ।

यत्तु 'न य्वाभ्यामि'तिसूत्रे 'नित्यत्वादैचि यद्यपि वृद्धिस्तथाऽपि तयो-रेव स्यादिति, तन्निषेधो व्यर्थ' इति शङ्कित्वा, 'विषयाऽर्थमि'ति भाष्ये उक्तत्वेनाऽत्र पुंवत्त्वनिषेध' इति । तन्न । अपवादत्वेन वृद्धिबाधस्यैव युक्त-त्वेन, 'यद्यपी'तिशब्देन भगवता तथैव ध्वनितत्वेन च, वृद्ध्यप्राप्त्यैव निषेधवैयर्थ्ये भाष्यतात्पर्येण, तद्विरोधाऽभावादि'ति नव्याः ।

केचित्तु–'भाष्ये तावद्भार्ये दोषवारणाय शब्दव्यापारस्याऽनुक्ते-स्तदाश्रयणे न मानम् । ऐचौ प्रति च तद्धितस्य निमित्तत्वमस्त्येव, अधि-कारप्राप्तत्यागे मानाऽभावात् । किञ्चैच्सूत्रे वृद्धिपदाऽनुवृत्त्या ऐचोरपि वृद्धिशब्देन विधानमस्ति । एवं च 'वैयाकरणीभार्य' इत्येव । एतेन वृद्धिरादैच्सूत्रे भाष्ये 'तद्भावितानामेव संज्ञे'ति पक्षेऽत्र पुंवत्त्वप्रतिषेधा-ऽप्राप्तिरूपदोषाऽनुद्भावनेनाऽत्र तन्निषेधोऽनिष्ट एवे'त्यपास्तम् । किञ्च

१　'आद्ये निमित्तत्वम' इति ख. पाठः ।

आदैच्मात्रग्रहणपक्षे 'वैयाकरणीभार्ये' 'तावद्भार्ये' इव निषेधाऽनापादनेन, तत्र तत्प्रवृत्तेरिष्टत्वमनुमीयते। किञ्चैवं सति शब्दव्यापाराऽऽश्रयणस्याऽऽवश्यकत्वे, तावद्भार्ये दोषवारणाय व्यधिकरणबहुव्रीह्यादिपर्यन्तं भाष्यकृतो धावनं विफलं स्यादि'त्याहुः।

स्वाङ्गाच्चेतः। सूत्रे 'ईत' इति प्रथमाबहुवचनम्। तदन्ता ङीति। जातावेकवचनम्। सुकेशीति। 'स्वाङ्गाच्चे'ति ङीष्। अकेशेति। 'सहनञ्वि'ति निषेधः। जातेः पर इति। अत एव 'दारदिके'त्यत्र नाऽयं निषेधः। यत्तु 'जातेः परः प्रत्ययः प्रतिपदोक्तत्वात् 'जातेरि'ति ङीषेवे'ति। तन्न। 'न कोपधाया' इतिसूत्रभाष्ये 'हास्तिकमि'त्युदाहरणेऽनेन निषेधमाशङ्क्य 'औपसङ्ख्यानिकस्य नाऽयं निषेध' इत्युक्तेः। न हि 'हस्तिनी'-शब्दात् 'जातेरि'ति ङीष्। अदन्तत्वाऽभावात्। न च स्वाङ्गानां केशादीनामप्याकृतिग्रहणत्वेन जातित्वादनेनैव सिद्धे पूर्वसूत्रं व्यर्थमिति वाच्यम्। प्रत्यासत्त्या जातिवाचकाऽन्वितस्त्रीत्वोऽर्थस्त्रीप्रत्ययस्यैव ग्रहणात्।

---

१ 'स्त्रीत्वार्थप्रत्ययस्यैव ग्रहणात्। विशिष्टस्य स्त्रीत्वविशिष्टजातिबोधकत्वाच्च। 'अन्त्याऽवयववृत्तिजातेरेवैतच्छास्त्रे 'जाति'ग्रहणेन ग्रहणमि'त्यपि कश्चित्। अन्ये तु 'जातेरि'ति षष्ठी। 'स्त्रीत्वविशिष्टजातिबोधकशब्दस्ये'त्येवाऽर्थः। अत एव 'इडबिडोऽपत्यं स्त्री इडबिट्। सा भार्या यस्य 'इडबिड्भार्य' इत्यादौ पुंवत्त्वनिषेधसिद्धिः। अत एव भाष्ये 'अनूङ्' इत्यस्य पर्युदासत्वे 'ऐडबिडवृन्दारिके'ति 'पुंवत्कर्मधारये'तिसूत्रविषये उदाहरणं दत्तमित्याहुः।

परे तु सूत्रद्वयस्याऽप्येकरूपाऽर्थकत्वबोधनाय, तत्राऽप्यस्याऽनुवृत्तिबोधनाय च सूत्रद्वयसाधारणमुदाहरणं दत्तं भाष्ये। न हि कर्मधारयेऽस्याऽप्रवृत्तौ बीजमस्ति। अत एव 'प्रतिषिद्धाऽर्थं पुंवदि'ति सूत्रमि'त्युक्तमाकरे। तस्मान्नेदं भाष्यं तत्र पुंवत्त्वाऽभावे मानम्। एवं च इडबिड् भार्या यस्येत्यर्थे यदि समासस्याऽभिधानं, तदा 'ऐडबिडभार्य' इत्याद्येव साधु। 'जातेश्चे'ति निषेधस्याऽनित्यत्वेन ईदृशे विषयेऽप्रवृत्तेरित्याहुः' इति ख. पाठः।

सौत्रस्यैवाऽयमिति । 'न कोपधाया' इति सूत्रव्यतिरिक्तः सर्वोऽपि निषेध इत्यर्थः । स्पष्टं चेदं 'न कोपधाया' इति सूत्रे भाष्ये ।

यत्तु 'अत्राऽपि सूत्रे 'अमानिनी'त्येव, 'कठमानिनी'ति वृत्तावुक्तम्, तत्तु भाष्येऽनुपलम्भान्मूलकृतोपेक्षितम् ।

सङ्ख्यया । 'दशसमीपवर्त्तिन' इत्यर्थे सामानाधिकरण्यस्य, अन्यपदार्थे वृत्तेश्च विरहात्पूर्वेणाऽप्राप्तौ वचनम् । यत्तु-'अनेकमन्यपदार्थे'

---

१ इतोऽग्रे—'अत एव 'गार्गी जाल्म' इत्यादौ 'भस्याऽढे' इति पुंवत्त्वमि'त्याकरः सङ्गच्छते । 'दारदिके'ति पुंवत्त्वोदाहरणं च भाष्योक्तं सङ्गच्छते । विप्रतिषेधवार्त्तिकबलादेव कप्रत्यये पुंवत्त्वोक्तयनेन तस्याऽसौत्रत्वादिति केचित् । परे तु—तसिलादिसूत्रे परिगणनस्य वार्त्तिककृतैवोक्तेः काऽपि निषेधो न स्यात् । यदि वार्त्तिकोक्तत्वेऽपि, सौत्रत्वमप्यस्ति, तर्हि 'क'स्याऽपि विप्रतिषेधवार्त्तिकबलेन तसिलादिषु ग्रहणाऽनुमानेन सौत्रत्वमस्त्येव । न च तद्बलेन 'क'विषये स्वतन्त्रमेव वचनमनुमीयते, न तसिलादिषु ग्रहणमिति वाच्यम् । गौरवात् । 'दारदक' इति भाष्योदाहरणेन 'जातेश्चे'ति निषेधाऽनित्यत्वकल्पनेनाऽदोषादिति वदन्ति' इति ख. पाठः ।

'न च 'पुंवदि'तिसूत्रे 'के ह्रस्वात्पुंवत्त्वं विप्रतिषेधेन' । के ह्रस्वाऽवकाशो 'नर्त्तकिका' । के पुंवत्त्वाऽवकाशो-'दारदिका' । 'पट्विके'त्यत्र उभयप्राप्तौ ह्रस्व'इत्युक्तं भाष्ये । तत्र 'दारदिके' त्यत्र कथं पुंवत्त्वम् । अनेन निषेधाऽऽपत्तेरिति वाच्यम् । दरदोऽगोत्रत्वेनाऽजातित्वात् । अनेन हि विप्रतिषेधेन तसिलादिषु कप्रत्ययस्याऽपि परिगणनं बोध्यम् । ये त्वपत्यमात्रं जातिरिति वदन्ति, तेषां तद्बलेन कविषये स्वतन्त्रमेव वचनमनुमीयते, न तसिलादिषु ग्रहणमिति, न दोषः । अत एव सूत्रतात्पर्यकथनपरे परिगणनेऽस्याऽपाठः सङ्गच्छते । एवञ्चाऽसौत्रत्वान्नाऽनेन तत्र निषेध इति बोध्यम्' इति च अत्र ख. पाठस्थाने क. कुण्डलितः पाठः ।

२ 'यत्त' इति क, ख. ग, घ. ङ. नास्ति ।

इति सूत्रे एव 'शेष'ग्रहणाऽनुवृत्त्या, शेषाऽधिकारस्थत्वाऽभावात् इतः कबभावाऽर्थमि'त्याकरे फलाऽन्तरं दर्शितं, तत्तु शेषादि'ति सूत्रे 'बहुव्रीहौ सक्थ्यक्ष्णोरि'त्याद्यपेक्ष एव शेषो गृह्यते' इति भाष्योक्तेः साध्वेव।

समीपे ये सन्तीति। समीपद्योतकेनोपेन बहुव्रीहिरिति भावः। समीपद्योतकता चाऽस्याऽत्रैव भाष्ये स्पष्टा। समीपाऽर्थेन त्वव्ययीभाव एव।

उपदशा इति। 'दशसमीपवर्त्तिन' इति बोधः। 'स्ववृत्तिदशत्वसमीपसङ्ख्यावत्त्व'सम्बन्धेन चाऽन्वयः। तदाह-नवैकादश वेत्यर्थ इति। अत एव दशानां वृक्षादीनां समीपे ये गवादयस्ते 'उपदशाः' इति न भवति, अनभिधानादित्याहुः। एवं च नित्यबहुवचनान्तोऽयम्। तिशब्दस्येति। सूत्रे 'ती'ति लुप्तषष्ठीकमिति भावः। तिलोपे च पररूपम्। पदभिन्नस्य समुदायस्याऽन्ते विद्यमानत्वात्। 'यस्ये'ति लोपस्तु न। [1]आभीयत्वेन तिलोपस्याऽसिद्धेरिति बोध्यम्। द्वौ वेति[2]। संशयविषयो हि नियमेन परस्परप्रतिक्षेपकः। अत एव परस्परप्रतिक्षेपकाऽनेकधर्मवत्त्वं धर्मिणि गृह्यते। तदेव विषयनिष्ठं 'वा'ऽर्थः। 'अयं स्थाणुर्न वा' 'व्रीहिभिर्यवैर्वे'-त्यादौ च संशयाऽऽत्मक एव बोधः। स च 'परस्परप्रतिक्षेपकतत्तद्वस्तुमानि'त्याकारः। तत्र क्वचिद्बलवत्प्रमाणेन एका कोटिर्बाध्यैव। यत्र तु न तथा बाधकं, तत्र क्वचिदैच्छिकं पाक्षिकाऽनुष्ठानम्। क्वचिद्व्यवस्थितम्।

---

१ 'भाष्यरीत्या साध्वेव। नव्यमते 'उपबहव' इत्यभिप्रायेण योज्यम्' इति ख. पाठः।

२ 'द्वौ वेति। संशयविषयत्वं 'वा'ऽर्थः। 'संशयविषयद्वित्व-त्रित्ववन्त' इति बोधः। अत एव नित्यं बहुवचनाऽन्त इति केचित्। 'विकल्प एव वाऽर्थः। स च परस्परप्रतिक्षेपकत्वम्। तथा च-क्रियानिरूपितपरस्परप्रतिक्षेपक-द्वित्व-त्रित्व-वन्त' इति बोधः। एवञ्च नियमतः पञ्चाऽस्मात्' इति ख. घ. पाठः।

एवं च नियमतः पञ्चाऽस्मादुपतिष्ठन्ते इति बहुवचनम् । उक्तं च 'सैषा पञ्चाऽधिष्ठाना वागि'ति[२] ।

द्विरावृत्ता इति । शब्दशक्तिस्वभावात्सुजर्थाऽन्तर्भावेणैकाऽर्थीभावाऽऽश्रयणात्सुचोऽप्रयोगः । एवं च 'द्वित्वसङ्ख्योत्पत्तिकाऽऽवृत्तिविषया[३] दशे'ति बोधः । स्पष्टं चेदमत्र भाष्ये । नन्वत्र वाऽर्थः, सुजर्थश्चाऽन्यपदार्थ इति पूर्वेणैव सिद्धम् । न च मत्वर्थे पूर्वयोगः, अमत्वर्थोऽर्थं चेदमिति वाच्यम् । प्राप्तोदकादिषु मत्वर्थं विनाऽपि तत्स्वीकारादिति चेन्न । सुजर्थस्याऽन्यपदाऽर्थत्वाऽभावात् । कबभावाऽर्थमस्याऽऽवश्यकत्वाच्च । डज्विषये पूर्वसूत्रेण समासे पाक्षिककप इष्टत्वस्य वक्ष्यमाणत्वादित्याहुः ।

निरादीनां गताद्यर्थे वृत्तौ नाऽयं समासः । अनभिधानात् । किन्तु तत्पुरुष एव । अत एव च 'सङ्ख्यायास्तत्पुरुषस्य डज्वाच्यो, निस्त्रिंशाद्यर्थमि'ति वार्त्तिकं सङ्गच्छते । अन्यथा निस्त्रिंशादौ परत्वादनेन बहुव्रीहेरेवाऽऽपत्तौ, तदसङ्गतिः स्पष्टैवेत्याहुः । सङ्ख्ययेति किम् ? । 'चत्वारो विप्राः' । अव्ययेत्यादि किम् ? । 'विप्राः पञ्च' । सङ्ख्येये इति किम् ? । 'अधिका विंशतेर्गवां सङ्ख्ये'ति ।

अन्तराल इति । अत्राऽन्तरालशब्देन दिगेव प्रत्यासत्त्या गृह्यते । अत एवैतद्विहितसमासस्य नित्यस्त्रीलिङ्गताऽमरोक्ता सङ्गच्छते[४] ।

---

१ धातु-सूत्र-गण-उणादि-वार्त्तिकेति पञ्चाधिष्ठानेत्यर्थः ।

२ इतोऽग्रे—'कार्याऽन्वये हि विकल्पो, न त्वेतज्जन्यबोधविषयत्वेऽपी'त्यन्ये । संशये स्वाऽभावसमानाधिकरणत्वरूपो विरोधो धर्मयोः, विकल्पे तु धर्मिणोरिति संशयविकल्पयोर्भेद इति बोध्यम्' इति ख. ग. पाठः ।

३ 'द्वित्वसङ्ख्योत्पत्तिविशिष्टाऽऽवृत्तिविषया दश' इति ख. ग. पाठः ।

४ इतोऽग्रे–'यत्तु 'नवेति विभाषे'ति सूत्रे भाष्यं-'दक्षिणपूर्वस्यामचिरकृतायां शालायां संप्रत्ययः स्यादि'ति । तत्तु लक्षणयाऽपि नेतुं शक्यमित्याहुः' इति ख. ग. पाठः ।

इदं सूत्रमसमानाधिकरणाऽर्थं[1], 'विभाषा दिक्समासे' इत्यत्र प्रतिपदोक्तस्याऽस्यैव ग्रहणाऽर्थं, कबभावार्थं च।

दक्षिणपूर्वेति। 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वम्।

तत्र तेनेदम्। 'सप्तम्यन्ते ग्रहणविषये' इत्यादीनि प्रथमाद्विवचनान्तानि[2]। ( 'ग्रहणविषये' इत्यादेः ) 'ग्रहणक्रियाद्यन्तर्भावेण एकार्थीभावमापन्ने' इत्यर्थः[3]।

इदं युद्धमित्यर्थे इति। तत्र विशेष्ये इत्यर्थः। अत एव 'मृधं किमच्छत्रकदण्डताण्डवं भुजाभुजि क्षोणिभृतां दिदृक्षसे' इत्यादौ युद्धादिवाचकपदोपादानं सङ्गच्छते। यत्र तु तदनुपादानं, तत्र तदध्याहारेणाऽन्वयः। इदं च कैयटाद्यनुरोधेनोक्तम्। वस्तुतः क्रियामात्रेऽयं साधुः। अत एव भाष्ये 'क्रियाऽभिधानादि'त्युक्तम्। 'ग्रहणप्रहरणे'त्यप्येवमेव। अत एव 'कर्णाकर्णि प्रथितमयशो बन्धुवर्गैरभाणि', 'हस्ताहस्ति मिषात् स्पृशन्कुचतटीमि'त्यादिप्रयोगाः सङ्गच्छन्ते इत्याहुः। अयं विषयविशेष इति। 'इति'शब्दश्चाऽत्र प्रकाशे। तत्त्वं च लोकप्रसिद्धत्वम्। निदर्शने वा। निदर्शनं च लोकप्रसिद्धानामेव। तदेतदुच्यते-'इतिशब्दो लौकिकीं विवक्षामनुसारयती'ति[4]। ग्रहणप्रहरणरूपः, अन्यपदार्थभूतक्रियारूपः, कर्मव्यतिहाररूपश्चेत्यर्थः। कर्मव्यतिहारः=परस्परग्रहणाऽऽदि। अत एव 'इच् कर्मव्यतिहारे' इति समासान्तस्यैतद्विषयता[5]। कर्मव्यतिहार-

---

१ 'इदं च सूत्रम्' इति ख. पाठः।

२ इतोऽग्रे-'गृह्यतेऽस्मिन्निति ग्रहणम्=केशादि। प्रहरणं=दण्डादि। तद्वाचके इत्यर्थः' इति कश्चित्' इति ख. घ. पाठः।

३ 'आपन्ने इत्यर्थ इत्यन्ये' इति ख. पाठः। 'ग्रहणक्रियायामन्विते' इत्यादिरर्थ इत्यन्ये' इति घ. पाठः। 'वृत्तिमापन्ने' इति तु लघुशेखरे पाठः।

४ 'अयं विषयविशेष' इत्यस्याऽयमर्थ इति बोध्यम्।

५ 'अत एव 'इच्कर्मव्यतिहारे' इति सङ्गच्छते' इति ख. पाठः।

बहुव्रीहाविति—प्रकृताऽभिप्रायम् । 'तुराषाडि'त्यादेरप्यनेनैव साधनात् ।

इच् समासान्त इति । 'इच् कर्मव्यतिहारे' इत्यनेन ।

तिष्ठद्गु इति । ननु 'केशाकेशी'त्यस्याऽव्ययत्वे न मानम् । क्वचिद्भाष्ये निर्विभक्तिक-'केशाकेशो'तिप्रयोगस्तु नपुंसकमादायोपपद्यते । अव्ययीभावत्वे तु सुतरां न मानमिति चेन्न । वृत्त्यादिप्रामाण्येन तत्राऽङ्गीकारात् । अत एव 'केशाकेशि कुर्वन्नि'त्यादौ पराऽङ्गवत्त्वं भवत्येव । 'अव्ययानां ने'ति निषेधस्तु नाऽव्ययीभावस्येति स्पष्टं भाष्ये । द्विदण्ड्यादिपठिते 'उभाभ्यां हस्ताभ्यामि'त्यर्थके 'उभयाहस्ती'त्यादौ विभक्त्यश्रवणार्थं चाऽव्ययत्वमावश्यकम् । नन्वेवमव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात्समासस्वरेणैवोदात्तत्वे सिद्धे, किमिचश्चित्त्वेन ? ।

न च उपजीव्यविरोधस्याऽन्याय्यत्वेन संज्ञयोः समावेश एवोचित इति वाच्यम् । समावेशेऽपि सतिशिष्टन्यायमूलकान्निमित्तस्वराऽपेक्षया निमित्तिस्वरस्य बलवत्त्वादव्ययीभावत्वप्रयुक्तसमासाऽन्तोदात्तस्वरेणैव सिद्धेश्चित्त्ववैयर्थ्यस्य तदवस्थत्वात् । निमित्तस्वरबलवत्त्वं च समर्थसूत्रे भाष्ये स्पष्टम् । समावेशफलस्य दुर्वचत्वाच्चेति चेन्न । विशेषणाऽर्थं 'च'स्य सत्त्वात् । तिष्ठद्गुप्रभृतिष्विकारपाठे हि 'सुगन्धिरि'त्यादावतिव्याप्तिः स्यात् । समावेशफलं त्विच्प्रत्ययाऽव्ययत्वयोः सिद्धिः ।

ननु 'तत्र तेनेदमि'त्यव्ययीभावप्रकरणे एवं पाठ्यम् । इजपि तत्समासान्तप्रकरणे एव पाठ्यः । एवं च तिष्ठद्गुप्रभृतिषु पाठस्याऽनावश्यकतया इचंश्चोऽपि व्यर्थ इति चेन्न । 'द्विदण्ड्यादिभ्यश्चे'ति सूत्रे इच्पदाऽनुवृत्त्यर्थमत्र पाठस्याऽऽवश्यकत्वात् । किञ्च 'धनुषा धनुषा चेदं प्रवृत्तं युद्धमि'त्याद्यर्थविवक्षायाम् अनङाद्यनापत्तिः । सिद्धान्ते त्वेषु परत्वादनङेवेष्यते इत्याहुः ।

१ 'उभाभ्यां सहस्ताभ्याम्' इति क. पाठः ।

२ 'विभक्त्यश्रवणार्थत्वाच्च तत्त्वमावश्यकम्' इति ख. पाठः ।

गृहीत्वेति—'क्त्वा'प्रत्ययोऽध्याहृतस्थित्यादिक्रियामादाय बोध्यः। 'केशेषु केशेषु गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमि'त्यर्थात्। ग्रहणकर्मत्वं प्रत्यासत्त्या केशादिविशिष्टपुरुषाणां बोध्यम्। युद्धस्याऽनेककर्तृकत्वात्, केशाऽऽदिपदद्वयप्रयोगात्समासाच्च कर्मव्यतीहारस्य लब्धत्वेन 'व्यती'ति नोक्तम्। इदं सूत्रं वैयधिकरण्याऽर्थम्, अप्रथमार्थाऽर्थम्, एकशेषबाधनार्थं[1] च। एकत्र[2] ग्रहणप्रहरणादावन्वयेन सहविवक्षासत्त्वात्सरूपत्वाच्चैकशेषः प्राप्तः, सुबन्तद्वयं विना समासाऽभावादनवकाशेनाऽनेन[3] बाध्यत इत्याहुः।

मुष्टीमुष्टीति। यत्तु 'दृशि'ग्रहणादनदन्तपूर्वपदस्य आत्वमि'त्यर्वाचीनैरुक्तं, तद्भाष्यविरोधादुपेक्ष्यम्। एवं चेद्दृशेऽर्थे न दृशिग्रहण-तात्पर्यं कल्प्यमिति प्रामाणिकाः[4]।

ओरोदितीति। न च 'ओरप्' इत्येव सूत्र्यतामिति वाच्यम्। इष्टा-ऽऽपत्तेः[5]। मूत्रमुपलक्षणम्। संज्ञापूर्वेति। विधेयकोटौ संज्ञापूर्वक इत्यर्थः। तेन 'ओरोदि'ति न्यासेऽपि 'भस्य' 'तद्धिते' इति संज्ञापूर्वकत्वमस्त्येवेति न वाच्यम्। 'ओदि'ति तपरत्वात्संज्ञेति न शङ्क्यम्[6]। फलाऽभावेन तपर-सूत्राऽप्रवृत्तेः। न च 'स्वं रूपमि'ति संज्ञात्वम्। 'स्वं रूपमि'त्यस्य[7]

---

१ बाधनार्थं चेत्याहुः' ग. पाठः।

२ 'एकत्र' इत्यारभ्य 'प्रामाणिकाः' इत्यन्तः पाठो ग. नास्ति।

३ 'अनवकाशत्वेनाऽनेन' इति ख. पाठः।

४ तेन 'मुष्टामुष्टी'ति रूपमिति तदाशयः।

५ इतोऽग्रे—'अचि श्नुधात्विति सूत्रोक्तरीत्या वर्णग्रहणे निर्दिश्यमानस्येति-परिभाषाऽनुपस्थित्या सर्वादेशतापत्तेः। भूधातोः क्विपि उगवादिभ्यो यति, 'भोयमि'त्याद्यसिद्धयापत्तेश्च। अत्र यथा नाऽवादेशस्तथा 'धातोस्तन्निमि-त्तस्ये'त्यत्र व्युत्पादितम्' इति ग. पाठः।

६ इतोऽग्रे—'तकारस्योच्चारणाऽर्थत्वात्। शब्दमर्यादया तत्कालव्यावृत्तिरूप-प्रयोजने एव तपरसूत्रप्रवृत्तेश्च' इति ग. पाठः।

७ 'तक्रकौण्डिन्यन्यायेन गुणे स्वं रूपसूत्राऽप्रवृत्तेः' इति ग. पाठः।

प्रत्याख्यानात्[1] । तस्या विशिष्टरूपोपादानविषयत्वाच्च । 'गुण'ग्रहण-सामर्थ्येनाऽस्या[2] अग्रहणाच्चेत्याहुः ।

यत्त्वेवं सति 'श्वादेरिञी'ति सूत्रे 'शौवादंष्ट्रो मणिरि'त्यत्र संज्ञापूर्वक-विधेरनित्यत्वाच्छो ने'ति कैयटाद्युक्तमसङ्गतं स्यादि'ति । तन्न । 'वृद्धाच्छ' इति सूत्रे 'प्रत्यय' इत्यनुवृत्त्या प्रत्ययत्वविशिष्टच्छप्रत्ययविधानेन, विधेय-कोटौ संज्ञाया अपि प्रवेशात् । यत्तु 'छादीनामसतां संज्ञाऽनुपपत्तेर्वाक्य-भेदेन संज्ञा विधेये'ति । तन्न । संज्ञाविशिष्टस्यैकवाक्यतयैव विधिसम्भ-वात् । न हि 'उद्भिदा यजेते'त्यादौ नामधेयत्वलाभाय विध्यावृत्ति मन्वते न्यायविदः[3] । 'असतां संज्ञाऽनुपपत्तेरि'त्यस्य च 'असतां संज्ञया व्यवहाराऽनुपपत्तेरि'त्यर्थेन विशिष्टविधाने बाधकाऽभावात् । अत एव 'सावर्णिको नाम मनुर्भवान्भुवि भविष्यती'त्याद्युपपद्यते इत्याहुः ।

स्वायम्भुवमिति । 'स्वयम्भुव इदमि'त्यर्थेऽण् । 'इदं भाष्ये न दृश्यते । तस्मात्स्वायम्भुवस्य लोके साधुत्वं चिन्त्यम् । भाष्याऽनुक्तज्ञापिताऽर्थस्य साधुतानियामकत्वे मानाऽभावात् । भाष्याऽविचारितप्रयोजनकसौत्राऽक्ष-राणां पारायणादावदृष्टमात्राऽर्थकत्वकल्पनौचित्यात् । अन्यथाऽतिप्रसङ्गात् । 'शौवादंष्ट्रे' श्वदंष्ट्राशब्द एव प्रकृतिः । ततोऽणि दीर्घ' इति परे । एवमेव 'आगमशास्त्रमनित्यम्' 'नञ्घटितमनित्यम्' 'आतिदेशिकमनित्यम्' 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलिवानि'त्यादि भाष्याऽनुक्तं बोध्यम् । तद्धिते किम् ? । पट्वी ।

---

१ 'प्रत्याख्यानाच्च' इति ग. पाठः ।

२ 'ईदृशसंज्ञानामग्रहणाच्चेत्याहुः' इति ख. ग. घ. पाठस्तु क. पुस्तके मसीलेपेन निस्सारितः ।

३ इतोऽग्रे—'किञ्च न्यायसाम्येनाऽसतो देशविधानाऽसम्भवेन वाक्यभेदेनैव परत्वविधानम् । छप्रत्ययमात्रविधौ वृद्धादि'त्यादिपञ्चम्यन्तानामनन्वयापत्ते-रित्याहुः । 'भाष्यप्रयोगादेव तत्र छो नेत्यपरे' इति ग. पाठः ।

तेन सहेति । 'तुल्ययोगः-एकेन=गमनादिना योगः, तद्द्योतकं 'सहे'त्येतदि'त्यर्थः ।

वोपस । 'उपसर्जनस्ये'ति न सहस्य विशेषणम् । अव्यभिचारात् । असत्त्ववाचितया द्वन्द्वाऽसम्भवात् । ननु 'पूर्वाह्णस्य सादृश्यम् सहपूर्वाऽह्णमि'त्यादौ व्यभिचारोऽस्त्येव । 'अकाले' इत्युक्तः-'अव्ययीभावे चे'-त्यस्याऽप्यप्राप्तेरिति चेन्न । तस्याऽप्यव्ययमितिप्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् । अतो व्यभिचारात्, व्याख्यानाच्च, तत् उत्तरपदेन सन्निधापितस्य समासस्याऽवयवद्वारकं विशेषणम् । समासस्योपसर्जनत्वाऽसम्भवात् । न च 'सहकृत्वप्रिय' इत्यादौ सम्भवत्येव समास उपसर्जनम् । एवं तर्हि लक्ष्याऽनुरोधादेवोपसर्जनस्येति मत्वर्थीयाऽच्प्रत्ययान्तं बोध्यम् । सर्वत्र च कश्चिदवयव उपसर्जनमेवेति, विशेषणसामर्थ्यात् 'उपसर्जनसर्वाऽवयवकस्ये'त्यर्थः । तादृशश्च बहुव्रीहिरेव । व्याख्यानाच्चोपसर्जनपदेन लौकिकं, शास्त्रीयं चोपसर्जनत्वमत्र गृह्यते । तेन 'सपुत्र' इत्यादेरप्युपसर्जनसर्वाऽवयवकत्वमस्त्येवेत्याशयेनाऽऽह-बहुव्रीहेरिति । व्यधिकरणा षष्ठीति भावः । तेनेह न-'सहकृत्वा' 'सहयुध्वा' । अत्र 'राजनि युधि कृञः' 'सहे चे'ति क्वनिप् । उपपदसमासः । 'सहकृत्वप्रिय' इत्यत्रापि न । उपसर्जनसर्वाऽवयवके बहुव्रीहौ यदुत्तरपदं, सहशब्दस्य तत्परत्वाऽभावात् । 'सपुत्र' इत्युदाहरणे 'पुत्र(प्रतियोगिक)साहित्यवानि'ति बोधात् पुत्रस्य साहित्ये विशे-

---

१ 'एकया गमनादिक्रियया' इति ख. ग. पाठः ।

२ 'द्वन्द्वस्याऽसम्भवाच्च' इति ख. ग. पाठः ।

३ 'उपसर्जनसंज्ञाया अभावात्' इति ग. पाठः ।

४ 'व्यधिकरणे च षष्ठ्यौ' इति ख. पाठः ।

५ इतोऽग्रे—'प्रतिपदोक्तत्वात् 'तेन सहे'तिसूत्रविहितसमासस्यैव ग्रहणसम्भवेनोपसर्जनग्रहणं चिन्त्यप्रयोजनमि'ति कश्चित्' इति ग. पाठः ।

६ 'पुत्रस्य प्रतियोगितया साहित्ये विशेषणत्वेन' इति ख. ग. पाठः ।

षणत्वेनाऽसामानाधिकरण्यात्पूर्वेणाऽप्राप्तौ वचनम्। कबभावार्थं चेत्याहुः।

सपुत्र इति। 'सप्तमीविशेषणे' इति पुत्रस्य न पूर्वनिपातः। 'प्रथमानिर्दिष्टमि'त्यनेनोपसर्जनत्वात्। यत्र पूर्वनिपाताऽनियमप्रसक्तिस्तत्रैवाऽस्य प्रवृत्तेरित्याहुः।

प्रायिकमिति। लौकिकविवक्षातात्पर्यग्राहकेतिशब्दादिदं लब्धम्।

सकर्मक इति। स्वार्थे कः। अत एव 'अर्थेन सह निवृत्त' इत्यर्थकः 'साऽर्थको निवृत्त' इति द्वन्द्वसूत्रस्थभाष्यप्रयोगः सङ्गच्छते। ननु 'सकर्मक' इत्यादौ सहाऽर्थो यदि विद्यमानत्वं, तदा 'कर्मनिष्ठविद्यमानत्वमि'ति बोधः स्यात्। न च तथाऽनुभवः। तस्माद्विद्यमानत्वविशिष्टवाची कर्मादिसमानाधिकरणो वाच्यः। तत्र च षष्ठ्यपवादतृतीयाया दुर्लभत्वेन, नाऽनेन समासप्रसक्तिः। 'सहैव पुत्रैर्दशभिर्भारं वहति गर्दभी'त्यादौ तु 'दशानां पुत्राणां विद्यमानत्वेऽपी'त्यर्थान्न दोषः। 'दशसु पुत्रेषु विद्यमानेषु' इत्यर्थकथनन्तु फलिताऽर्थकथनपरतया कथञ्चिन्नेयम्।

---

१ इतोऽग्रे—'तुल्ययोगे' इतिस्ववयुस्याऽनुवाद इत्याहुः' इति ख. घ. पाठः।

२ 'यत्तु 'सकर्मक' इत्यादौ वृत्तिविषये 'सह'शब्दो विशिष्टधर्मिवाचीत्यनेकमन्यपदार्थे इत्येव सिद्धमि'ति। तन्न। प्रतिपदोक्तपरिभाषयैव तद्बहुव्रीहिसमासे एव सत्वप्रवृत्त्या 'सकर्मक' इत्यादौ वैकल्पिकसत्वाऽनापत्तेः। किञ्च 'सपूर्वाया' इत्यादौ 'सर्वनामसङ्ख्ययोरुपसङ्ख्यानमि'ति पूर्वादीनां पूर्वनिपाताऽऽपत्तिः। अनेन समासे तु न तत्प्रवृत्तिः। 'सप्तमीविशेषणे' इत्यत्रोपसङ्ख्यातत्वेन, तत्साहचर्येण च 'प्रथमानिर्दिष्टमि'त्यनेनोपसर्जनत्वाद्यत्राऽनियमप्रसक्तिस्तत्रैवाऽस्य प्रवृत्तेः। अनेन समासे तु सहस्यैवोपसर्जनत्वम्। अत एव 'सपुत्र' इत्यादौ 'सप्तमीविशेषणे' इत्यस्याऽप्रवृत्तिः। अन्यथा पुत्रस्य विशेषणत्वात्तस्यैव पूर्वनिपाताऽऽपत्तिः। अत एव 'सपूर्वायाः प्रथमाया' इत्यादि निर्देशाः सङ्गच्छन्ते। उदाहरणेषु स्वार्थिकः कः। तेन समासे हि कपि अन्ताऽनुदात्तस्याऽप्यापत्तिरिति बोध्यम्' इति ग. पाठः।

किन्तु 'अनेकमन्यपदार्थे' इत्यनेनैव सादेऽशोऽपि 'सपूर्वाया' इत्यादि-निर्देशैः, प्रतिपदोक्तपरिभाषाया 'वोपसर्जनस्ये'त्यत्राऽप्रवृत्त्या सुलभ एव। अत एव 'संहितशफे'तिसूत्रे कैयटादिभिः 'सहोरूरि'त्यस्य विद्यमानावूरू यस्या इति विग्रहप्रदर्शनं कृतम्। 'तपर' इत्यादाविव 'सपूर्वे'त्यादौ 'सर्वनामसङ्ख्ययोरि'त्यस्याऽप्रवृत्तिरपि सूपपादा, अनित्यत्वादिति चेत्। चिन्त्यमेवेदं प्रायिकत्वम्। भाष्याऽनुक्तत्वाच्चेति दिक्।

प्रकृत्याशिषि। 'ने'त्येव सिद्धे 'प्रकृत्ये'ति चिन्त्यप्रयोजनम्। कथं तर्हि 'यजमानस्य सपुत्रस्य ऐश्वर्योऽभिवृद्धिरस्त्वि'त्यादिप्रयोगा इति चेन्न। 'ऐश्वर्योऽभिवृद्धिरस्त्वि'ति भवन्तोऽनुगृह्णन्तु' इति प्रार्थनावाक्यं, नाऽऽशीर्वचनम्। यत्राऽऽशीर्वचनं 'तथास्त्वि'ति, तत्र 'सपुत्रस्ये'त्यादि न प्रयुज्यते एवेत्याहुः।

बहुव्रीहौ सङ्ख्येये। 'सङ्ख्येये वर्त्तमानसङ्ख्याशब्दाऽन्तो बहुव्रीहिरि'-त्यर्थः। पञ्चम्यर्थे सप्तमीत्याह—तस्मादिति। 'उपगणा' इत्यत्र डचि सति, असति वा, रूपे विशेषो नास्तीत्यत आह—स्वरे विशेष इति। डचि सति 'चित' इत्यन्तोदात्तत्वम्, असति तु प्रकृतिस्वरेणाऽऽद्यु-दात्तत्वम्[1]। 'अत्र बहुगणयोरनियतप्रचयवचनयोरपि यदा विशिष्टेष्वेव दशादिषु वृत्तिस्तदा. तत्समीपभूतनवादीनामपि बहुत्वाद्बहुवचनमि'ति हरदत्तः।

सङ्ख्याया इति। 'सङ्ख्याऽन्तस्य तत्पुरुषस्य समासान्तो डच्'-इत्यर्थः। 'एकाऽधिका विंशतिः एकविंशतिरि'त्यादौ, 'गोत्रिंशतिरि'त्यादौ च[2] न। 'अव्ययादेरि'ति, अन्यत्राऽधिकलोपादि'ति च वार्त्तिकशेषात्। 'निस्त्रिं-शाद्यर्थमि'ति वार्त्तिकशेषे 'आदि'शब्दस्य प्रकारवाचितया, यत्र डित्व-

---

१ आद्युदात्तत्वमित्याहुः। अत एव डचश्चित्त्वं चरितार्थम्' इति ग. पाठः।

२ 'इत्यादौ तु न' इति ग. पाठः।

फलसम्भावना तत्रैवेदम् । अत एव 'अतिद्विरि'त्यादौ न । 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति प्रकरणे एव त्विदं न सूत्रितम् । तथा सति प्रतिपदोक्त-परिभाषया 'द्वौ त्रयो येषामि'ति—'अनेक'मि'ति समासे न स्यात् । पृथक्करणसामर्थ्यात्तु तदप्रवृत्तिः । अत एव तादृशविग्रहे पक्षे कबपि । भाष्येऽनन्तरबहुव्रीह्यपेक्षया शेषविज्ञानस्योक्तत्वात् । एतच्चाऽग्रे व्युत्पाद-यिष्यते । ध्वनिता चाऽत्र प्रतिपदोक्तपरिभाषाऽप्रवृत्तिः 'सङ्ख्यये'-त्यादिसूत्रप्रत्याख्यानवार्त्तिकेन-'अशिष्यः सङ्ख्योत्तरपदः, सङ्ख्यय-'वा'ऽर्थाऽभिधायित्वादि'त्यनेन । कबभावार्थमस्याऽऽवश्यकत्वेन भाष्ये प्रत्याख्यातं वार्त्तिकमित्यन्यत् ।

व्यत्ययेन षष्ठीति । सप्तम्यप्येवमेव । तदाह–बहुव्रीहेरिति । ननु 'तदन्तस्य बहुव्रीहेः समासस्याऽन्त' इति व्याख्यानसम्भवेन, षष्ठ्यंशे व्यत्ययोऽनुचितः, अवश्यकल्प्यसप्तमीव्यत्ययस्य षष्ठ्यर्थे कल्पनेनैवोप-पत्तेरिति चेन्न । 'स्वाङ्गादि'ति पञ्चम्या अनन्वयाऽऽपत्तेः । तस्या अपि व्यत्ययकल्पने, 'बहुव्रीहौ'पदसाहचर्येण षष्ठ्या एव व्यत्यय उचितः । पञ्चम्यपि प्रत्ययविधावन्वययोग्यैवेत्याहुः । 'सप्तमीपञ्चम्योः षष्ठ्यर्थे व्यत्यय' इत्यन्ये ।

स्वाङ्गं चेह 'अद्रवं मूर्त्तिमदि'त्यादिलक्षणलक्षितम् । षचः षो ङीषर्थः । तदुदाहरति–जलजाऽक्षीति । चित्त्वमन्तोदात्ताऽर्थम् । तत्सामर्थ्यात् पूर्वपदप्रकृतिस्वरो नेति । स्थूलाक्षेति । अक्ष्यत्र–पर्वग्रन्थिः । षचि हि ङीष् स्यात् । अङ्गुलीसदृशेति । दारुणोऽप्राणितया मुख्याऽङ्गुल्य-सम्भवादिति भावः ।

---

१ 'वस्तुतो 'बहुव्रीहौ सङ्ख्येये' इत्यस्य लाघवात् 'बहुव्रीहौ सक्थ्यक्ष्णोरि'ति-प्रकरणे एव वक्तव्यत्वेऽत्रोक्तिर्वाक्यभेदाऽर्था । तत्र च 'तत्पुरुषाद्दि'-त्यनुवर्त्तते, 'विभाषे'ति च । 'सङ्ख्येये वर्त्तमानसङ्ख्यान्ततत्पुरुषात् डज्वे'-त्यर्थः । सा च व्यवस्थितविभाषेति सर्वेष्टसिद्धिरित्याहुः'इति ख. घ. पाठः । उपरिमुद्रित'न सूत्रितमि'त्यादिक.पाठे त्वस्य खण्डनमेव दृश्यते ।

द्व्यङ्गुलेति। मात्रचो, द्वयसचो वा 'द्विगोर्नित्यमि'ति लुक्। न चाऽत्र बहुव्रीहिपदाऽभावेऽपि तत्पुरुषे विशेषविहितोऽजेव भविष्यति। अनवकाशत्वे एव विशेषविहितत्वस्य बाधकत्वप्रयोजकत्वात्[1]। अदारुणि तस्य चारितार्थ्यात्। न चैवमपि 'दारुणी'त्यस्याऽङ्गुलिविशेषणतयैवाऽत्राऽनतिप्रसङ्गः। 'पञ्चाऽङ्गुलिसदृशानि काष्ठानि यस्य पुरुषस्य पञ्चाऽङ्गुलिरि'त्यादावव्याप्तेः। एवं द्वन्द्वाऽव्ययीभावव्यावृत्तिरपि फलम्।

द्वित्रिभ्यां ष। षचि प्रकृते 'ष'विधानं 'द्विमूर्ध' इत्यादौ 'द्वित्रिभ्यां पाद्दन्मूर्धस्वि'ति पाक्षिकाऽन्तोदात्तत्वाऽभावे, पूर्वपदप्रकृतिस्वराऽर्थम्। षचि हि चित्त्वान्नित्यमन्तोदात्तत्वं स्यात्। चित्स्वरो हि चित्त्वसामर्थ्यात् पूर्वपदकृतिस्वरं बाधते, इति स्पष्टमेव। न च 'द्वित्रिभ्यामि'ति विकल्पः सामर्थ्याच्चित्स्वरं बाधिष्यते। तथा च षच्यपि स्वरद्वयसिद्धिरिति वाच्यम्। समासान्ताऽभावे तस्य चारितार्थ्यात्। तदभावश्चाऽनित्यत्वात्[2]। अन्यथा तद्वैयर्थ्यं स्पष्टमेव। न च समासान्ते मूर्धन्शब्दान्तबहुव्रीहेरभावात्कथं स्वर इति वाच्यम्। समासान्तानां समासाऽवयवत्वेऽपि[3], मूर्धन्नुत्तरपदकबहुव्रीहेः सत्त्वेनाऽदोषात्[4]। नेतुरिति। 'नक्षत्रे[5] यो 'नेतृ'[6]-शब्दस्तदुत्तरपदबहुव्रीहेरि'त्यर्थः। नेता-नायकः। 'नेतृ'शब्दस्य 'नक्षत्र-

१ 'बलवत्त्वप्रयोजकत्वात्' इति ख. पाठः।

२ इतोऽग्रे—अनित्यत्वे च षविधानमेव ज्ञापकम्' इति ग. घ. पाठः।

३ 'समासाऽवयवत्वेन' इति ग. पाठः।

४ इतोऽग्रे—'उत्तरपदावयवत्वन्तु न सार्वत्रिकम्। यद्वा तत्पक्षे 'मूर्धन्शब्दान्तबहुव्रीहेरि'ति व्याख्येयमित्याहुः' इति ग. घ. पाठः।

५ 'नक्षत्रे यो नेतृशब्दस्तत्प्रकृतिकसुबन्तोत्तरपदकबहुव्रीहेरित्यर्थः। एतेन समासान्तानामलौकिके एव प्रवृत्तेर्नेतृशब्दान्तत्वं तद्दशायां दुर्लभमित्यपास्तम्' इति ग. पाठः।

६ 'नक्षत्रे वृत्तित्वं च' इति ख. पाठः।

वृत्तित्वं च तत्सामानाधिकरण्याद्बोध्यम् । 'नक्षत्रे' इत्यनेन नेतुर्विशेषणात् नेह, 'चन्द्रो नेता यस्य स चन्द्रनेता मृग' इति । अत्र हि नेतृशब्दाऽन्तो बहुव्रीहिर्नक्षत्रे वर्त्तते, न नेतृशब्द इति । अत्र भाष्ये-'मासाद्भृतिप्रत्यय-पूर्वपदाट्ठञ्वक्तव्यः'। 'पञ्चकमासिकः'। 'पञ्च भृतिरस्य-पञ्चको मासः'। 'सोऽस्यांशवस्नभृतय' इति सङ्ख्यायाः कन् । 'पञ्चको मासोऽस्येति विग्रह' इत्युक्तम् ।

न तु स्थूलपूर्वादिति । 'बहुव्रीहेरि'ति शेषः । 'अह्नोऽदन्तादि'त्यन्त-ग्रहणेन ज्ञापितमेतत्-'अत्र प्रकरणे वर्णग्रहणे तदन्तग्रहणं नास्ती'त्याशये-नाऽऽह पूर्वपदस्थादिति । 'समानपदे' इत्यस्य 'अखण्डपदे' इत्यर्थात्समासे-ऽप्राप्ते विध्यर्थमिदम् । भाष्ये इति । 'प्रागयनम्' 'ऋग्भवनमि'त्यादीनां त्वनभिधानं बोध्यम् । रघुनाथादिशब्दे तु क्षुभ्नादिपाठाण्णत्वाऽभावः । णत्वे संज्ञात्वभङ्गाऽऽपत्तेर्वा ।

खुरखराभ्यां वा नसिति । 'नासिकाया' इत्यपेक्ष्यते । केवलाऽऽदेश-वचनं प्रत्ययनिवृत्त्यर्थम् । न चाऽत्र 'शेषाद्विभाषे'ति कप् शङ्क्यः । आदेशस्यैव स्थानिद्वारा समासान्तत्वेनाऽशेषत्वादित्याहुः ।

पक्षेऽजपीति । भाष्ये त्वेतन्न दृश्यते । काशकृत्स्नाद्युक्तमपि मुनि-त्रयाऽनुक्तमिदानीं न गृह्यते । दृश्यन्ते हि नियतकालाः स्मृतयः । यथा 'कलौ पाराशरी स्मृतिरि'ति । एतच्च'शताच्च ठन्यतावि'ति सूत्रकैयटादौ स्पष्टम् । एवं तदनुक्तमपि मुनित्रयोक्तमादरणीयमेव । तदुक्तं पराशर-पुराणे—

'पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किञ्चन' । इति ।

---

१ 'उक्तमि'त्यस्य 'कैयटेने'त्यादिः ।

'इत्युक्तम्' इत्यस्याग्रे च—'इदं छान्दसमिति केचित्' इति ग. पाठः ।

२ इतोऽग्रे—अत्राऽऽहुरिस्तु 'प्रागयनम्' 'ऋग्भवनमि'त्याद्यर्थं प्रतिषेध आवश्यक इति केचित्' इति ग. पाठः ।

'शितिना अर्चना अहिना' इति नैगमा' इत्यपि भाष्ये दृश्यते ।

उपसर्गाच्च । नासिकाशब्दस्याऽक्रियाऽर्थत्वात्तं प्रत्युपसर्गत्वाऽयोगेन उपसर्गग्रहणं प्राद्युपलक्षणम् । स्पष्टं चेदं 'गतिश्चे'त्यत्र भाष्ये इत्याह— प्रादेरिति ।

उपर्गादनो । अनोत्किम् ? । 'प्र नो मुञ्चतमि'त्यत्र णत्वं मा भूदि'ति । तद्भङ्क्त्वेति । 'अनोत्पर' इत्यपनीय, 'बहुल'ग्रहणं कृत्वेत्यर्थः । अन्यथा 'प्र णो नये'त्यादावव्याप्तिः, 'प्र नः पूषे'त्यादावतिव्याप्तिश्च स्यादिति भावः । अत्राऽप्युपसर्गग्रहणं प्राग्वदेवेति, तत्रैव भाष्ये स्पष्टम् । प्रणस इति । प्रगता नासिका यस्येति विग्रहः । विगतया नासिकयेति । तत्र च 'पद्दन्नि'ति नसादेश इति भावः । केचित्तु-'नसा नासा च नासिके'ति-कोशात्स्वतन्त्र'नसा'शब्दघटितस्यैव प्रथमाऽन्तमिदं रूपमित्याहुः ।[1]

शोभनं प्रातरस्येति । 'प्रातः'शब्देन तात्कालिकं[2] कर्म लक्ष्यते । अन्यथा प्रातःशब्दस्याऽधिकरणशक्तिप्रधानत्वेन सामानाधिकरण्याऽसम्भवः । यद्यपि 'प्रातःकल्पमि'त्यादाविव वृत्तौ शक्तिमत्प्रधानत्वं सम्भवति, तथाऽपि प्रातःकाले स्वरूपतः शोभनत्वस्य निरूपयितुमशक्यत्वात्, कर्मपर्यन्तं लक्षणाऽऽवश्यकीति भावः । 'अव्ययानां भमात्रे' इति टिलोपः ।

शारिकुक्ष इति । 'यस्ये'ति लोपः । सूत्रे 'शारिकुक्षि' इति इकारान्तपाठस्त्वपपाठः, अच्प्रत्ययप्रकरणविरोधात् । चतुरश्रेति । तालव्यमध्यः । एणीपदादिषु पद्भावो, निपातनात् । अहल इति । नन्वदन्त'हल'शब्दमादाय 'अहल' इत्यादिसिद्धौ, 'हलि'ग्रहणं व्यर्थमिति[3] चेन्न । महद्धलं

---

१ इतोऽग्रे 'नश्च धातुस्थोरुषुभ्य' इतिसूत्रान्नसिग्यनुवर्त्तते । 'नसि'त्यस्मदादेशस्य, नासिकादेशस्य च ग्रहणमिति व्याख्यातारः' इति ग. घ. पाठः ।

२ 'तत्स्थं कर्म लक्ष्यते' इति ग. घ. पाठः ।

३ 'व्यर्थम् । न च महद्धलं हलिः' इति ख. घ. पाठः ।

हलिस्तद्रहिते 'अहल' इत्यस्य साधुत्वाऽर्थं तद्ग्रहणात् । 'दुर्हल' इत्यादावन्तोदात्ताऽर्थं तस्याऽऽवश्यकत्वाच्च । 'अहलः' 'सुहल' इत्यादौ तु 'नञ्सुभ्यामि'त्यन्तोदात्तत्वसिद्धेः । 'हलि'शब्देन समासे कपो निवृत्त्यर्थं तद्ग्रहणं च । वैकल्पिकत्वेऽप्यनुक्तसमासान्तत्वाऽभावेन सिद्धान्ते तदप्राप्तिरिति हरदत्तादयः । शक्त्योरिति । (आचार्येणोभयथा च्छात्राः पाठिता इति भावः) । हरदत्तस्तु 'हलिशुक्त्योरि'ति पाठाऽन्तरम् । अस्थिपर्यायः शुक्तिशब्दः' इत्याह ।

नित्यमसिच् । चसेव तु न कृतः, सस्येत्त्वं मा भूदिति । अकारोच्चारणेन 'सुप्रजसावि'त्यादिसिद्धिः । अस्वरितत्वादेवाऽन्यतरस्याङ्ग्रहणनिवृत्तौ, नित्यग्रहणमन्यतोऽपि विधानाऽर्थम् । तेन 'अल्पमेधसः' इति सिद्ध्यती'ति वृत्तिकृदादयः । नैतद्भाष्ये दृष्टम् ।

धर्मादनिच् । 'केवलादि'ति बहुव्रीहिसमासाऽऽक्षिप्तपूर्वपदविशेषणमित्याह—केवलात्पूर्वपदादिति । अनिचोऽकारस्तु नकारात्पूर्वमवग्रहाऽभावायेत्याहुः । केवलात्किमिति । बहुव्रीहिणा पूर्वपदाऽऽक्षेपे, तस्य च

---

१ 'अहल' इत्यतो 'महद्धलरहित' इत्यर्थाऽप्रतीतेः, प्रकरणादिना तात्पर्यवशाल्लक्षणयोपपत्तेश्चेति चेन्न' इति ग. पाठः ।

२ 'तद्ग्रहणात् । प्रकरणादिना तात्पर्यवशाल्लक्षणयोपपत्तेरिति चेन्न । 'दुर्हल' इत्यादावन्तोदात्ताऽर्थं तस्याऽऽवश्यकत्वात्' इति ख. घ. पाठः ।

३ 'तदप्राप्तेरिति' इति ग. पाठः ।

४ इतोऽग्रे—'प्रकरणादिनाऽपि महत्त्वप्रतीतौ हलिशब्दस्यैव प्रयोगाऽऽपत्तेर्न तद्वैयर्थ्यमित्यप्याहुः' इति ग. पाठः ।

५ ग. घ. पाठोऽयम् ।

६ 'अकारोच्चारणं मत्वाय । तेन 'सुप्रजसावि'त्यादौ यस्येतिलोपः' ग. घ. पाठः ।

७ 'अनिचोऽकारस्तु धर्मशब्दादाचक्षाणाणिचि, क्विपि परमो धर्मः यस्येत्यर्थे 'परम र्मे'ति सिद्ध्यर्थमित्याहुः' इति ग. पाठः ।

समासप्रथमाऽवयवे रूढत्वेन, ततः परत्वाऽभावेनैव त्रिपदबहुव्रीहौ न दोष इति प्रश्नः। उत्तरन्तु 'पूर्वपद'शब्दस्य समासाद्याऽवयवे रूढौ न मानम्।[1] तदाह—आपेक्षिकमिति। 'परमस्वधर्मेत्यत्र' 'स्व'शब्दस्य 'सर्वनामसङ्ख्ययोरि'ति पूर्वनिपातो न, आहिताग्न्यादेराकृतिगणत्वादि'ति हरदत्तमाधवौ।[2] एतेन 'जहत्स्वार्थे'ति व्याख्यातम्। ('राजदन्तादित्वमि'त्यन्ये)[3]।

कर्मधारयपूर्वपदविति। न च 'केवलादि'त्यस्य 'समासाऽनात्मकादि'त्यर्थेन नाऽत्र केवलत्वमिति वाच्यम्। 'केवल'पदस्य लोके, 'न सुदुभ्यां केवलाभ्यामि'त्यादौ शास्त्रे च सजातीयाऽन्याऽभावे प्रयोगेण, त्वदुक्ताऽर्थे मानाऽभावात्। इदं च 'इजादेरि'ति सूत्रे भाष्ये स्पष्टम्[4]।

कृतसमासान्तेति। स चाऽनिजेत्र, उपस्थितत्वात्।

दक्षिणेर्मा। लुब्धो–व्याधः। तद्योगादेव ईर्मनिष्पत्ताविदं निपातनम्।

---

१ इतोऽग्रे—'उत्तरन्तु 'केवलादि'त्यस्याऽभावे आक्षेप एव न स्यादिति, तत्तात्पर्यग्राहकतया [1]सार्थक्यमिति। परमः स्वो धर्मो यस्येति। इह स्वशब्दस्य' इति ख. घ. पाठः।

२ इतोऽग्रे—'यत्तु 'केवलादि'ति धर्मस्याऽपि विशेषणमि'ति। तन्न। फलाऽभावात्। धर्मशब्दाऽन्तस्योत्तरपदत्वे तु धर्मशब्दस्य बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वाऽभावान्न दोषः' इति क. कुण्डलितः, ख. घ. पाठः।

३ ग. पाठोऽयम्।

४ इतोऽग्रे–'एतेन 'साध्यो धर्मो यस्य साध्यधर्मा', 'सन्दिग्धश्चाऽसौ स चे'ति विग्रहः। स च सन्देहः साध्यधर्मद्वारक एव पर्यवस्यती'ति वृथा क्लेशः परास्तः। उक्तरीत्या साध्यस्य साक्षात्सन्दिग्धत्वलाभात्' इति मनोरमास्थत्वात् क. कुण्डलितः ख. घ. पाठः।

---

1 इतोऽग्रे—'इदमेव च ज्ञापकमन्यत्र तात्पर्यग्राहकाऽभावे समासान्तप्रकरणे पूर्वपदाऽनाक्षेपस्येत्याहुः' इति ग. घ. पाठः।

'व्रणेऽस्त्रियामीर्ममरुरि'त्यमरः। 'बाली हेमाऽब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा'इत्यादौ तु रूपकं बोध्यम्। तादर्थ्येति। अत एव विषयविशेषे एव इच्, न 'द्विदण्डा शाले'त्यादौ। (समुदायनिपातनस्य विषयविशेषपरिग्रहाऽर्थत्वाच्च)। तद्ध्वनयन्नाह—द्वौ दण्डाविति। (समुदायस्य यत्र प्रसिद्धिस्तत्रैवेदं निपातनमिति भावः)। उभाहस्तीति। निपातनादेवाऽयजभावः। उभयाहस्तीति। 'उभयाहस्त्याभरे'ति मन्त्रे 'उभाभ्यां हस्ताभ्याम् आभरे'ति वेदभाष्यम्। बहुव्रीह्यधिकारेऽपि, समुदायनिपातनादेव तत्पुरुषादप्ययम्। अव्ययत्वात् भ्यामो लुक्। 'उभाबाहु' 'उभयाबाहु' इत्यादौ निपातनादिच्प्रत्ययलोपे, प्रत्ययलक्षणेनाऽव्ययीभावत्वम्। निकुच्यकर्णि। 'निकुच्य कर्णौ धावतो'त्याद्यर्थे मयूरव्यंसकादित्वात् समासः।

प्रसंभ्याम्। ज्ञोरादेशत्वं बोधयितुं स्थानषष्ठीत्वप्रकटनायोपपदद्वित्वमारोप्य 'जानुनोरि'ति द्विवचननिर्देशः। अन्यथा पञ्चमीसन्देहे ज्ञोरपि प्रत्ययत्वं सम्भाव्येतेति व्याचष्टे—ज्ञुरादेश इति।

धनुषश्च। 'ज्ञु'साहचर्यान्ङित्करणाच्चाऽस्याऽऽदेशत्वं निश्चित्याऽऽह अनङादेश इति। 'धृतधनुषमि'त्यादौ तु समासाऽन्तविधेरनित्यत्वान्न दोषः। अत एव 'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्ताऽर्थमंश्वादिगणे'राजन्'-शब्दपाठश्चरिताऽर्थः। 'राजाऽह' इति टचो नित्यत्वे तु तद्वैयर्थ्यं स्पष्टमेव।

---

१ 'व्रणोऽस्त्रियाम्' इति ग. पाठः।

२ अयं ग. पाठः। ३ अयं ग. पाठः। ४ 'वेदभाष्यं च' ख. पाठः।

५ इतोऽग्रे—'इति प्राचां ग्रन्था व्याख्याताः। द्विदण्डि, द्विमुसलि, उभाञ्जलि, उभयाञ्जलि, उभादन्ति, उभयादन्ति, उभाकर्णि, उभयाकर्णि, उभाहस्ति, उभयाहस्ति, उभापाणि, उभयापाणि, उभाबाहु, उभयाबाहु, एकपदि, प्रोष्ठपदि, आढ्यपदि, सपदि, निकुच्यकर्णि, संहतपुच्छि' इति ग. पाठः।

६ 'निकुच्य कर्णौ धावति' इति क. घ. पाठः।

लोपो व्योः। यत्तु 'वलादौ प्रत्यये' इति व्याख्यातम्। तन्न। प्रत्ययस्याऽप्रकृतत्वात्। 'गौधेर' इत्यादावव्याप्तेश्चेत्याहुः। पूर्वोत्तरसाहचर्यादिकार आदेशः। 'समासाऽन्ता' इत्यधिकारात् 'आदेः परस्ये'ति न प्रवर्त्तते, इत्याशयेनाऽऽह—अन्तादेश इति।

गन्धस्येत्त्वे इति। यत्तु 'सूत्रे 'गन्धस्ये'त्येकवचननिर्देशादत्र गुणवचनो 'गन्ध'शब्दो गृह्यते, न द्रव्यवचनः। तस्य बहुवचनाऽन्तत्वात्। 'पिनष्टि गन्धानि'त्यादौ तथा दर्शनात्। 'गन्धस्तु सौरभे, भृत्ये, गन्धके, गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति कोशाच्चेति। तन्न। सूत्रे शब्दपरत्वादित्याशयेनाऽऽह—अविभागेनेति। 'एकदेश इवे'-त्यस्य विवरणमिदम्। 'अन्यपदार्थेन सह'त्यर्थः। अवयवाऽवयविनोरविभागलक्षणतादात्म्यस्यैव सम्बन्धत्वाऽङ्गीकारादिति भावः। तदाह—सुगन्धिर्वायुरिति। गन्धस्य वायुगुणत्वाऽभावेऽपि, गन्धाऽऽश्रयाऽणूनां वायुसंसृष्टानां[2] तेनाऽविभागापन्नानामेव ग्रहणान्न दोष इत्यर्थः[3][4]। एवं कुङ्कुमाद्यनुलेपनमपि देवदत्तादेरविभागाऽऽपन्नं निलीनं यदि विवक्षितं, तदा 'सुगन्धिर्देवदत्त' इति, विभागेनाऽवस्थाने तु 'सुगन्ध' इति। स्पष्टं चेदं भाष्ये। (एवं च 'गुणवचनस्यैवेह ग्रहणम्, न द्रव्यवाचिनो ग्रहणम्,'तदेकान्ते'ति वार्त्तिकादि'ति नव्योक्तिश्चिन्त्या)। एतेन 'आघ्रायि वान्[5] गन्धवहः सुगन्ध' इतिभट्टिप्रयोगः, 'एकाऽन्तशब्देन स्वाभाविकत्वं विवक्षितं,

---

१ इतोऽग्रे—'अत एव तकारस्य नेत्त्वम्। फलाऽभावात्। स्वरितविधौ प्रत्ययग्रहणात्। किन्तूच्चारणार्थन्तत्' इति ग. पाठः।

२ 'वायुसंसृष्टानां सौगन्ध्यमि'ति पक्षेऽपि तेनाऽविभागाऽऽपन्नस्यैव ग्रहणान्न दोषः' इति ख. पाठः।

३ इतोऽग्रे—'अविभागाऽऽपन्नत्व तज्ज्ञानाऽसमानकालिकज्ञानाऽविषयत्वम्' इति ग. पाठः।

४ अयं ख. पाठः क. ग. नास्ति।

५ 'वान् = वहन्' इत्यर्थः।

तेनाऽऽगन्तुकस्य ने'ति व्याख्यानं, 'भग्नबालसहकारसुगन्धावि'त्यादीनां दुर्घटोक्तं प्रामादिकत्वं च परास्तम् ।

अल्पाख्या । 'अल्प'शब्दोऽल्पत्वपरः । तथा च लेशवाचिनो गन्ध-शब्दस्य ग्रहणमित्याशयेनाऽऽह—सूपस्य गन्धो लेश इति । अत एव ज्ञापकाद्वैयधिकरण्येऽपि समासः । ननु गन्धशब्दं लेशवत् धर्मिपर-माश्रित्य, समानाधिकरण एव बहुव्रीहिरस्त्वित्यत आह—गन्धो गन्धक इति । धर्मपरतायां कोशवद्धर्मिपरत्वे न किञ्चिन्मानमिति भावः । किञ्चैवं 'गन्ध'शब्दस्य परनिपाताय ज्ञापकाऽऽश्रयणमावश्यकम्, लक्षणा चाऽधि-केति दिक् । पादशब्दस्येति । तदन्तस्येत्यर्थः । न च 'आदेः परस्ये'त्यस्य प्राप्तिः । 'समासान्ता' इत्यधिकारात् । नन्वभावस्य कथं समासान्त-त्वमत आह—स्थानिद्वारेणेति । वचनबलादौपचारिकमवयवत्वमिति[1] भावः । समासान्त इति । अत एव न कबित्याहुः । 'पादस्य पादि'ति तु न सूत्रितम् । प्रतिपदोक्तत्वेन 'पादः पदि'त्यत्राऽस्यैव ग्रहणाऽऽपत्तौ, पादयतेः क्विपि 'पद्' इत्यादौ तदनापत्तेरित्याहुः[2] ।

कुम्भपदीषु । बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाऽऽद्यर्थोऽवगतिः । इह गणे 'कुम्भपदी'त्यादिसमुदाया एव पठ्यन्ते । तत्प्रयोजनं विषय-विशेषपरिग्रहस्तदाह—स्त्रियामिति[3] । यच्चेहोपमानपूर्वं, सङ्ख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे, नित्यं ङीबर्थं वचनमित्याहुः[4] । 'अयमाकृतिगण'

---

१ 'अभावस्य साक्षाच्चरमावयवत्वाऽसम्भवेऽपि, वचनबलादौपचारिकमवयव-त्वमिति भावः' इति ग. पाठः ।

२ इतोऽग्रे—'हस्तिन्, कपोत, ( कुद्दाल ) कटोल, गण्डोल, गन्धोल, गन्धोलक, महेला, ( महिला ), कुङ्कुम, ( अज ), दासी, गणिका, कुसूल । वृत्' इति ग. पाठः ।

३ इतोऽग्रे—'तत्राऽपि ङीप्येवेति बोध्यम्' इति ग. पाठः ।

४ इतोऽग्रे—'कुम्भपदी, जालपदी, स्थूलपदी, शतपदी, एकपदी, सूत्रपदी, गोधापदी, कलशीपदी, द्विजपदी, ( घृतपदी ), दासीपदी, शुपदी,

इति गणरत्नकृत् । 'अष्टापदी'त्यत्र अष्टनो निपातनाद्दीर्घत्वम् । 'अष्टनः संज्ञायामि'ति वा आकारः । द्विदन्निति । शिशुत्वाऽवस्था प्रत्याय्यते । षोडन्निति । 'षष उत्त्वं दतृदशे'त्यनेनोत्व-ष्टुत्वे । सुदन्निति । 'शोभना दन्ता अस्याः समस्ता जाता' इति विशिष्टा वयोऽवस्था प्रतीयते । एतेनाऽसंज्ञात्वेऽपि 'सा दक्षरोषात्सुदती ससर्जे'ति व्याख्यातम् ।

एतेन 'सङ्ख्याग्रहणमेव वयोऽर्थम् । 'सु'ग्रहणन्त्ववयोऽर्थम् । न हि तेन वयो गम्यते' इत्यपास्तम् । 'सुदन्तो लाट' इत्यसिद्ध्यापत्तेरित्याहुः ।

समदन्तीति । 'नासिकोदरे'त्यादिना ङीष् । श्यावः = श्यामकपिशः । अरोकः—अदीप्तिः । 'रुच दीप्तौ' । रोचनं रोकः, स न विद्यते यस्ये'त्यर्थात् । 'अरोकोऽछिद्र इत्यर्थ' इति कश्चित् ।

अग्रान्त । अनुक्तसमुच्चयाऽर्थचकारेण'मूषिकदन्' इति सिद्धमिति वृत्तिः । नैतद्भाष्ये दृष्टम् ।

ककुदस्या । काला-ऽऽहारादिकृता अवयवोपचयादयो वस्तुधर्मा 'अवस्थे'त्युच्यन्ते । अजातककुत्त्वेन बाल्यं, पूर्णककुत्त्वेन तारुण्यं गम्यते । अवस्थायां किम् ? । 'श्वेतककुदः'। संज्ञेषेति । निपातनाल्लभ्यते ।

निष्पदी, अतिपदी, ( गुणपदी ), कुणपदी, ( कुणिपदी ), कृष्णपदी, द्रोणपदी, सूकरपदी, शकृत्पदी, अष्टापदी, ( शुचिपदी ), सूचीपदी, (मालापदी, मुनिपदी, गोपदी, सूपपदी, पञ्चपदी, अर्धपदी, एकपदी, अपदी, कलहंसपदी, द्विपदी, आर्द्रपदी, ) वृत्' । इति ग. पाठः । क. ख. घ. ङ. नास्ति ।

१ 'अस्य जाताः' इति ग. पाठः ।

२ 'कुमाराद्यवस्था' इति ग. पाठः ।

३ 'अवयोऽर्थमपि' इति ख. घ. पाठः ।

४ 'सुदन्तो दाक्षिणात्यः' इति वृत्तिपाठः ।

५ 'श्यावः = कपिशः' इति ग. पाठः ।

एवं च पर्वते इत्यस्य—तद्विशेषे इत्यर्थः। ('संज्ञायामि'ति वा मण्डूकप्लुत्याऽनुवर्त्तनीयमित्याहुः)।

सुहृद्दुर्हृदौ। हृच्छब्देनाऽपि सिद्धे, मित्राऽमित्रयोर्हृदयशब्दनिवृत्त्यर्थं वचनम्। व्यूढं—विशालम्। तद्धितत्वात्कस्य नेत्वम्। 'सोऽपदादावि'ति सः। प्रियसर्पिष्के—'इणः षः'।

एकवचनान्तौ इति। तथा च एकवचनाऽन्ताऽवयवकबहुव्रीहावेव नित्यं कबित्यर्थः। सर्वत्र गणेऽविभक्तिकोच्चारणस्यैव दृष्टत्वेन, क्वचित्केषाञ्चित्सविभक्तिकानां पाठस्तद्विवक्षाऽर्थ इति भावः। तदाह—द्विवचनेत्यादीति। लक्ष्मीशब्दे तु 'नद्यृतश्चे'ति सिद्धे, 'एकवचनाऽन्ततदुत्तरपदकसमासादेवे'ति नियमाऽर्थ एव पाठः। अत एव 'अकृशमकृशलक्ष्मीश्चेतसा' इति सिद्धम्। बहुवचनाऽन्तेन विग्रहात्।

शेषादिति। सुबन्तपाठस्य नियमाऽर्थत्वेन तेषामपि शेषत्वादिति भावः। उरस्, सर्पिष्, उपानत्, पुमान्, अनड्वान, पयः, नौः, दधि,

---

१ अयं ग. घ. पाठः।

२ 'वचनमित्याहुः। कबभावाऽर्थं च' इति ग. पाठः।

३ 'एकवचनान्तानीति' इति ख. घ. पाठः। मुद्रितकौमुद्यामपि 'एकवचनान्तानि' इति पाठो दृश्यते।

४ 'लक्ष्मीशब्दे तु पाठसामर्थ्यात् 'नद्यृतश्चे'त्यस्यापि नियमः' इति ग. पाठः।

५ 'एवेह पाठः' इति ख. पाठः।

६ इतोऽग्रे—'बह्वी लक्ष्मीर्यस्ये'ति विग्रहे 'नद्यृतश्च' इति कब्भवत्येव। अत्रत्यपाठस्य त्वितरनिवृत्तिमात्रफलकत्वात्तदुपन्यास एव युक्त इति बोध्यम्' इति ख. पाठः।

७ इतोऽग्रे—'एवञ्च सङ्ख्यावाचिबहुशब्देन लक्ष्म्यादीनां समासे, वैकल्पिक एव कप्। वैपुल्यवाचिना समासे तु नियमानां विधिमुखेन प्रवृत्तावुरःप्रभृतित्वात्, निषेधमुखेन प्रवृत्तौ 'नद्यृतश्चेतो'ति दिक्' इति ग. घ. पाठः।

मधु, शालि, लक्ष्मीः । 'अर्थान्नञः' । वृन् ।

शेषा द्विभाषा)। अनुक्तेति । 'यत्तु भाष्ये 'नैव कबपेक्षं शेषग्रहणं, नाऽपि समासान्ताऽपेक्षम । किन्तर्हि ? । अनन्तरो यो बहुव्रीह्यधिकारः, सोऽपेक्ष्यते' इत्युक्तम् , तत्प्रौढिवादः । 'समासान्ता' इति सूत्रेऽन्तग्रहणप्रयोजनकथनाऽवसरे-'बहुव्रीहिसंज्ञा च प्रयोजनम् , उच्चधुरः', 'नीचधुर' इति भाष्यविरोधाऽऽपत्तेः । अन्यथा 'ऋक्पूरि'त्यादीनां समासाऽन्तरे चरिताऽर्थतया, परेण कपा बाधाऽऽपत्तिः । उपक्रमे समासान्ताऽपेक्षया शेषस्यैव भाष्ये उक्तत्वाच्चे'ति वृत्ति-कैयट-हरदत्तादयः । तद्रीत्या प्रत्युदाहरति—प्रियपथ इति । अपरे तु-'उपक्रमे सामान्यत उक्तस्याऽर्थस्य, विशेषव्यवस्थापकप्रागुक्तभाष्यादनन्तरबहुव्रीह्यधिकाराऽपेक्षयैव शेषत्वविज्ञानमुचितम् ।

न च 'समासान्ता' इति सूत्रस्थभाष्यविरोधः । कपो वैकल्पिकत्वेन, तदभावे तत्प्रयोगोपपत्तेः । न चाऽत्र पक्षे प्रतिपदोक्तसमासान्तानां स्व-स्वविषये बाधकत्वेनैवोपपत्तौ, शेषग्रहणवैयर्थ्याऽऽपत्तिरिति वाच्यम् । न हि प्रतिपदोक्तत्वमेव बाधकत्वे बीजम् । किन्तर्हि ? । अनवकाशत्वम्[3] । समासान्ताश्च कबभावे सावकाशा, इति न दोषः । स्पष्टं चेदमत्रैव भाष्ये ।

एवं च 'प्रियपथ' इत्यादिविषये पक्षे 'प्रियपथिक' इत्यपि भवति ।

---

१ इतोऽग्रे—'अर्थवतेति । 'सुपथी नगरी'त्यत्र तु 'युवोरनाकावि'तिसूत्रस्थभाष्यप्रामाण्येन समासान्तविधेरनित्यत्वान्न कबिति बोध्यम्' इति क. कुण्डलितः, ख. घ. पाठः ।

२ इतोऽग्रे—'यत्तु 'यस्य हल' इति सूत्रे भाष्ये उक्तं-'यस्येति सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषः । यदा लोपस्तदा सर्वस्य लोपः स्यात् । तथा च 'समिध्यिते'ति न सिध्येत् । 'यस्य हल' इति चाऽतो लोपापवाद' इति । तत्प्रौढिवादः । 'द्वितीयतृतीयचतुर्थे'त्यादिसूत्रस्थभाष्यविरोधात्' इति ग. पाठः ।

३ 'किन्त्वनवकाशत्वम्' इति ख. पाठः ।

अत एव 'बहुव्रीहौ सक्थ्यक्ष्णो' इत्यस्य भिन्नत्वेन पाठः सार्थक' इत्युक्तम् ।

न चैवमपि 'ऋक्पूरि'त्यादेः समाससामान्याऽपेक्षत्वेन, बहुव्रीहि-रूपविशेषाऽपेक्षकबपेक्षयाऽन्तरङ्गत्वात्कपो बाधे, कथं स इति वाच्यम् । 'ऋक्पूरि'त्यादेः प्रकृतिविशेषाऽपेक्षत्वेन समत्वात् । तादृशाऽन्तरङ्गत्वस्या-ऽसार्वत्रिकत्वाच्च । न च समासान्तमात्राऽपेक्षशेषत्वपक्षे अनृचकाऽऽदे-रसिद्धिवत्, 'प्रियपथिका'द्यसिद्धिरूपदोषाऽनुद्भावनेन, तेषामनिष्टत्वमिति वाच्यम् । उदाहरणपरतद्भाष्यस्योपलक्षणत्वात्[1] । न च 'बहुव्रीहौ सक्थ्य-क्ष्णो'रित्यतः पूर्वमेव कप्प्रकरणपाठेन, विशेषविधिभिः परत्वाद्बाधेनैव सिद्धौ, तदर्थक'शेष'ग्रहणं व्यर्थम् । 'विभाषा श्यावे'त्यादिसूत्रविषये पक्षे कबापत्तेः । मम त्वनुक्तसमासान्तबहुव्रीहित्वाऽभावान्न दोषः[3] । अत एव 'अकृतसमासान्तादि'ति नोक्तमित्याहुः[4] । शेषाऽधिकारेति । इदं च बहुव्रीहिप्रकरणे 'सङ्ख्यये'त्यादौ पुनः पुनः 'कबभावाऽर्थं चे'ति भाष्योक्ते-र्ज्ञायते । 'शेषो बहुव्रीहि'सूत्रस्थ'शेष'ग्रहणप्रत्याख्याने, 'सङ्ख्यये'त्यादि-विषये कबभावोऽनभिधानादिति बोध्यम् । ननु सकृदुच्चारित'शेष'शब्दात्

---

१ इतोऽग्रे—'अत एव भाष्ये 'अनन्तरबहुव्रीह्यधिकारे'त्यनन्तरपदमुपात्तम्' इति ख. पाठः ।

२ इतोऽग्रे—'अत एव 'अनृचो माणवे, बह्वृचश्चरणाख्यायामि'ति विशेषवचनेन संभवदपि तत्समाधानं भाष्ये न कृतम्' इति ग. घ. पाठः ।

३ इतोऽग्रे—'एतेन 'वैकल्पिकसमासान्ताऽभावे कबिष्टः । वैकल्पिकाऽपवादा-ऽभावे उत्सर्गप्रवृत्तेरन्यत्र दृष्टत्वात् । 'तनादिकृञ्भ्य' इति सूत्रे भाष्यकैय-टाभ्यां स्पष्टमुक्तत्वाच्चे'त्यपास्तम्' इति ग. घ. पाठः ।

४ इतोऽग्रे—अत एव 'सङ्ख्ययाऽव्यये'ति सूत्रे 'कबभावार्थंचे'ति भाष्योक्तं सङ्ग-च्छते इत्याहुः । यत्तु 'तत्र तेनेदमि'ति सूत्रभाष्ये-'कबभावार्थं चेदमि'त्युक्तम्, यच्च कैयटेन-'शेषाऽधिकारो गृह्यते, न उपयुक्तादन्य' इति, तदुभयमपि प्रकृतसूत्रस्थभाष्यविरोधादुपेक्ष्यम्' इति ख. घ. पाठः ।

५ इतोऽग्रे—'यत्त्वनेकमिति सूत्रशेषे 'अनभिधानाद्व्यधिकरणानां न समास इति

कथमर्थद्वयलाभ इत्यत आह—[1]तन्त्रादिनेति । उच्चारयित्रा तन्त्रेणोच्चारितम्, बोद्धुरावृत्त्या बोध इति सा 'आदि'पदार्थः ।

आपोऽन्य । 'न कपी'त्यतः 'कपी'त्यनुवर्त्तते ।

**न संज्ञायाम्** । 'अनन्तरस्ये'ति न्यायाच्छेषादित्यस्यैवाऽयं निषेधः । 'उरःप्रभृतिभ्य' इत्यादेस्तु संज्ञाविषयेऽपि प्रवृत्तिः । तदाह—शेषादितीति ।

विश्व इति । विश्वाऽऽख्यदेवगणविशेष इत्यर्थः । उद्भूतावयवभेदत्वाद्बहुवचनं विग्रहे । विश्वदेव इति । 'विश्वेदेव' इति क्वाचित्कोऽपपाठः ।

**ईयसश्च** । 'न संज्ञेयसारि'ति वक्तव्ये, योगविभागसामर्थ्याद्व्यवहितस्य 'नद्यृतश्चे'त्यस्याऽप्ययं निषेध इत्याशयेनाऽऽह—[2]न कबिति ।

'ईयसो बहुव्रीहौ पुंवदि'ति वचनमर्थतः पठति-[3]बहुव्रीहेर्नेति । 'ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य, पुंवत्=पुंविषयेकारस्य यथा न ह्रस्वस्तथाऽस्याऽपी'ति तदर्थः । अत्र सूत्रे 'ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यमि'ति भाष्ये पठित्वा, 'पुंवद्वचनात्सिद्धमि'त्युक्तेरनेन नपुंसकह्रस्वत्वस्याऽपि निवृत्तिः । अन्यथा वचनेन वचनप्रत्याख्यानाऽसङ्गतिः । मम तु नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदित्याशयेन प्रत्याख्यानमित्याहुः । बहुश्रेयसीति । लिङ्गविशिष्टपरिभाषया निषेधः । 'नद्यृतश्चे'ति नित्यं प्राप्तः कप् । अभिवादन-स्तुति-रूपोभयाऽर्थक'वदि'धातुना उभयसाधारणपूजा लक्ष्यते इत्यभिप्रेत्याऽऽह—पूजित इति । एतेन 'वन्दितः-

---

शेषग्रहणं न कार्यमि'त्युक्तं, तत्तु तदुत्तरभाष्ये एव 'अथैतस्मिन्सत्यभिधाने' इत्यादिना ततः ( = 'सङ्ख्यये'त्यादिबोधितसमासेभ्यः ) कप्व्यावर्त्तकोपायस्याऽवश्यकर्त्तव्यत्वप्रतिपादनादकिञ्चित्करम्' इति ग. घ. पाठः ।

१ 'तन्त्रादिनेति । आदिनाऽऽवृत्त्येकशेषौ । न चैकशेषे एकवचनाऽनुपपत्तिः । समाहारद्वन्द्वविषयेऽप्येकशेषाऽङ्गीकारादित्याहुः.' इति ख. ग. पाठः ।

२ 'पुंवत्त्वेऽपि शिशीनुमादीनां न प्रतिषेधः, किन्तु ह्रस्वस्यैवेति ध्वनयन् 'बहुव्रीहौ न पुंवदि'ति वचनमर्थतः पठति–बहुव्रीहेर्नेति' इति ग. घ. पाठः ।

३ इतोऽग्रे—'अत्र यद्वक्तव्यं तदजन्तनपुंसकशेषे उक्तम्' इति ख. पाठः ।

स्तुत' इति वृत्त्युक्तिः, 'व्याख्यानात्स्तुत्यर्थकस्यैव ग्रहणं, तेन 'अभिवन्दित-भ्रातृक' इत्यत्र कबि'ति हरदत्तोक्तिश्च[1] निर्बीजेति सूचितम् ।

सुभ्रातेति । 'नद्यृतश्चे'ति कप् प्राप्तः । बहुनाडिरिति । उपसर्जनह्रस्वः । स्त्रीप्रत्ययान्तत्वाऽभावादिति । 'अर्वितॄस्तॄतन्त्रिभ्य ईरि'त्यौणादिकत्वादिति भावः । ल्युडिति । प्रोयतेऽस्यामित्यधिकरणे इति भावः । समाप्तवान इति । समाप्तं वानं = वयनक्रिया यस्येत्यर्थः । कण्ठेकाल इति । 'कण्ठे' इत्यस्य कारकत्वात्कर्तृद्वारकसम्बन्धेनाऽस्तिक्रियायामन्वयेन, यथाकथञ्चित्सामर्थ्यमादाय समासप्रवृत्तिः । वस्तुतोऽधिकरणकारकस्य कर्त्राद्यन्वय-द्वारैव क्रियाऽन्वय इत्यस्त्येव सामर्थ्यमिति निरूपितं कारके । अत्र वैयधि-करण्येऽपि ज्ञापकात्समास इति बोध्यम्[2][3] । न च विशेषणत्वेनैव सिद्धम् । चित्रग्वादौ साक्षाद्विशेषणे चरितार्थशास्त्रस्याऽत्राऽप्रवृत्त्यापत्तेः। अस्य प्राचां

---

१ 'हरदत्तोक्तिश्च परास्ता' इति ख. पाठः ।

२ 'अत्र वैयधिकरण्येऽपि, स्वारसिकसामर्थ्याऽभावेऽपि, ज्ञापकात्समास इति बोध्यम्' इति ख. पाठः ।

३ इतोऽग्रे—'ध्वनितं चेदं 'वर्णो वर्णेने'त्यत्र भाष्ये । एतेन 'विशेषणत्वेनैव सिद्धम् । न च चित्रग्वादौ साक्षाद्विशेषणे चरितार्थं शास्त्रमत्र न प्रवर्त्तेत । अस्य क्रियाविशेषणत्वेऽपि कालाऽविशेषणत्वादिति वाच्यम् । तावताऽपि विशेषणत्वाऽक्षतेः । न ह्युत्तरपदार्थविशेषणत्वमेवाऽत्र निविष्टमित्यत्र मानमस्ति । कालीय-देशव्यावर्त्तकतयोत्तरपदार्थविशेषणत्वस्याऽक्षतेश्च । अन्यपदार्थविशेषणत्वं स्वव्यावर्त्तकत्वान्न गृह्यते'[1] इति परास्तम् । असामर्थ्ये, वैयधिकरण्ये च समासज्ञापनार्थं सप्तमीपदस्याऽऽवश्यकत्वात्' इति ख. घ. पाठः ।

---

1 'गृह्यते इति चेन्न । कालस्यापि सत्ताविशेषणत्वेन पूर्वनिपाताऽसिद्धेः सप्तमी-ग्रहणस्यावश्यकत्वात् । विशेषणत्वं च किञ्चिन्निरूपितविशेष्यताऽनाश्रयत्वे सति प्रकारताश्रयत्वम् । अतो 'वीराः पुरुषा यस्मिन्सन्ती'त्यादौ वीरस्यैव पूर्वनिपात इत्याहुः' इति ग. पाठः ।

रीत्या क्रियाविशेषणत्वेऽप्युत्तरपदार्थकालाऽविशेषणत्वात्। नव्यरीत्या तु वैयधिकरण्ये समासज्ञापनाऽर्थमिदम्। विशेषणपदं च गोबलीवर्दन्यायेन तदतिरिक्तविशेषणपरमिति, ज्ञापितेऽस्य चारितार्थ्यं बोध्यम्।

यत्तु 'सप्तमी'ग्रहणसामर्थ्येन विशेषणपदस्य परिच्छेदकमात्रपरत्वम्। एवं च 'यदा कण्ठे किञ्चिदस्ती'ति निर्ज्ञाते, 'काल' इति प्रयुज्यते, तदा तस्याऽपि विशेषणत्वेन, पूर्वनिपातवारणायेदमि'ति[1]। तन्न। यदा 'अस्य चित्राः सन्ती'ति निर्ज्ञातं, तत्परिच्छेदाय च 'गाव' इति प्रयुक्तं, तदा 'गोचित्र' इत्यस्याऽप्यापत्तेः।

चित्रगुरिति। यद्यप्यत्रोपसर्जनत्वस्याऽप्रधानत्वसमानाधिकरणस्यैव ग्रहणमिति 'उपसर्जनं पूर्वमि'त्येव सिद्धं, तथाऽप्यन्यपदार्थाऽपेक्षयोभयोरप्यप्रधानत्वसत्त्वादनियमे प्राप्ते 'विशेषण'ग्रहणम्। तत्सामर्थ्याच्च प्रकृतसूत्रे उत्तरपदार्थविशेषणत्वमेव गृह्यते इति, न दोषः। 'प्रथमानिर्दिष्टमि'तिसूत्रे हि 'समासशास्त्रे प्रथमानिर्दिष्टं, सति सम्भवे प्रत्यासत्त्या तत्समासाऽर्थं प्रत्यप्रधानं, तदुपसर्जनमि'त्येव लभ्यते, न तूत्तरपदार्थनिरूपितं तत्। ये तु नाऽन्वर्थत्वं तस्याः, अत एव अर्द्धपिप्पल्यादिसिद्धिरिति वदन्ति, तेषान्तु स्पष्टमेव तत्सार्थक्यम्।

सर्वनामसङ्ख्ययोरिति। श्वेत-शुक्लयोरुदाहरणे विशेषणत्वे इदम्। 'हस्तदक्षिण' इत्यत्र 'षष्ठी स्थाने' इतिसूत्रस्थभाष्यप्रयोगाद्राजदन्तादित्वात्[2] परनिपातः[3]। एवं 'जहत्स्वार्था वृत्तिरि'त्यपि 'जहत् स्वं पदं यं, सः[4]

---

१ इतोऽग्रे—'बहुव्रीहौ सप्तमी'त्युक्ते तक्रकौण्डिन्यन्यायेनोपसर्जनपूर्वत्वं बहुव्रीहौ बाध्येत, अतो विशेषणग्रहणमि'ति केचित्' इति ख. घ. पाठः।

२ 'राजदन्तादित्वाद्वा' इति ख. घ. पाठः।

३ इतोऽग्रे—'एतेन 'वन्येतरा' इति व्याख्यातम्। केचित्तु 'तपर' इत्यादिनिर्देशादस्याऽनित्यत्वमाहुः' इति ग. पाठः।

४ 'जहत् स्वं पदं यं, यस्य वा, सः' इति ख. पाठः।

'जहत्स्वः', सोऽर्थो यत्रे'ति बहुव्रीहिगर्भो बहुव्रीहिः । 'जहति स्वार्थं पदानि यत्रेत्यर्थ' इत्यन्ये । एतेन 'तपर' इति व्याख्यातम् । 'वन्येतरा' इत्यादि च राजदन्तादित्वात्साधु ।

सर्वश्वेत इति । वचनसामर्थ्याद्गुनपूर्वगत्या सर्वादेः सर्वनामत्व बोध्यम् । मिथोऽनयोरिति । इदं 'न बहुव्रीहावि'तिसूत्रे भाष्ये सूचितम् । अत एव वार्त्तिकेऽल्पाचोऽपि परनिपातः ।[2] सङ्ख्याया इति । 'सङ्ख्यावाचकयोः (परस्परं)[3] समासेऽल्पार्थवाचिकाया' इत्यर्थः । न चाऽस्य 'अल्पाच्तरमि'ति सूत्रे भाष्ये पठितत्वेन द्वन्द्वविषयमेवेदमिति वाच्यम् । 'सङ्ख्ययाऽव्ययासन्ने'ति सूत्रे 'द्वित्राः' 'त्रिचतुरा' इत्यादिभाष्यप्रयोगात्, 'तदस्मिन्नधिकमि'तिसूत्रे 'सहस्राणां शतमि'त्यर्थेऽपि 'शतसहस्रमि'ति भाष्यप्रयोगाच्चाऽन्यत्राऽपि प्रवृत्तेः ।[4] मध्यमपदलोपितत्पुरुषेऽपि 'एकादश' 'द्वादशे'त्येव प्रयोगस्वीकाराच्च । अत एव कैयटो 'द्वन्द्वाऽद्वन्द्वसाधारणमिदमि'त्याह ।

द्वन्द्वेऽपीति । अपिना—तत्पुरुषेऽपि । तेन 'दशाऽधिकौ द्वौ—दशद्वे' इति न[5] ।

वा प्रियस्येति । इदं च बहुव्रीहावेव । 'तेन सहे'त्येतद्विषये तु नेदं प्रवर्त्तते[1] । 'वे'तिव्यवस्थितविभाषाऽऽश्रयणात् । तेन 'प्रियसहे'ति नेत्याहुः ।

गङ्वादेः । गङ्वादिराकृतिगणः । आहिताग्न्यादिरप्येवम् । अत्र

---

१ इतोऽग्रे—'इदं च प्रकरणं 'तेन सहे'त्येतद्विषये नेति प्रागुक्तं न विस्मर्त्तव्यम्' इति ग. पाठः ।

२ 'अल्पाचोऽपि संख्याशब्दस्य पूर्वनिपातो न कृत इत्याहुः' इति ग. पाठः ।

३ अयं ग. पाठः ।

४ इतोऽग्रे—'अन्यथा गणनायां त्रिशब्दस्य परनिपातनिषेधाद्व्यादीनामेव पूर्वनिपाताऽऽपत्तेः' इति ग. पाठः ।

५ 'इति नेत्याहुः । अन्ये तु 'उपसर्जनं पूर्व'मित्यनेन यत्राऽनियमप्रसक्तिस्तत्रैवेदम् । तेन 'दशद्वे' इति प्रयोगो भवत्येवेत्याहुः' इति ग. पाठः ।

'वा प्रियस्ये'त्यतो 'वे'त्यनुवर्त्तते। सा च व्यवस्थितविभाषेत्याशयेनाऽऽह-क्वचिन्नेति। इदं च प्रयोगदर्शनाद्वृत्त्यादिस्वरसाच्चोक्तम्।

कृतकृत्य इति। कृत-कृत्ययोः क्रियाशब्दत्वादनियतविशेषण-विशेष्यत्वादनियमे प्राप्ते, नियमाऽर्थमिदम्। 'चारुस्मिते'त्यादि त्वाहिताग्न्यादित्वात्साधु।

जातिकालेति। एतच्च 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्ना' इत्यनेन बहुव्रीहावन्तोदात्तविधायकेन ज्ञापितम्।

सारङ्गजग्धीति। 'अस्वाङ्गपूर्वपदाद्वे'ति ङीष्। ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्, 'वा'ग्रहणाऽनुवृत्तेश्चाऽऽह-प्रायिकमिति।

क्वचिन्नेति। इदमपि 'वा'ग्रहणाऽनुवृत्तेर्लभ्यते।

इति बहुव्रीहिः।

---

## अथ द्वन्द्वसमासप्रकरणम्।

चाऽर्थे। अनेकमन्यपदार्थे' इत्यतोऽनेकमित्यनुवर्त्तते। तत्फलं च यथायथं समासान्तस्याऽऽनङश्च[3] प्रवृत्तिरप्रवृत्तिश्च। चार्था इति। 'च'द्योत्या इत्यर्थः। परस्परनिरपेक्षस्येति। तत्त्वं च एकस्य क्रियाऽन्वयोत्तरमपरस्याऽऽवृत्त्या तदन्वयाद्बोध्यम्। अनेकस्येति। तेन एकस्य साऽपेक्षत्वेऽपि न दोष इति भावः। 'न्यग्रोधो दृश्यतामि'त्युपक्रम्य 'प्लक्षश्चे'त्युक्ते गम्यते एतत्-न्यग्रोधश्चेती'ति भाष्यात्। एकस्मिन्निति। एकधर्माऽवच्छिन्ने

---

१ इतोऽग्रे-'कृतं किञ्चिदनेने'ति निर्ज्ञाते यदा 'कृत्यमि'ति प्रयुज्यते, तदा कृत्यस्य विशेषणत्वात्पूर्वनिपाते प्राप्ते इदम्। अत्र निष्ठाशब्दविहितनिष्ठाया ग्रहणम्। तेन नपुंसके भावे क्तस्य योगे 'चारुस्मिते'त्यादौ न दोष इत्याहुः' इति ग. घ. पाठः।

२ इतोऽग्रे—'आहिताग्न्यादित्वात्सिद्धमिति कश्चित्' इति ख. पाठः।

३ 'समासान्ताऽऽनङोः' इति ख. पाठः। 'समासान्त-पुंवद्भावस्वराऽऽनङां प्रवृत्तिरप्रवृत्तिश्च' इति ग. घ. पाठः।

इत्यर्थः । अन्वय इति । स च विशेष्यतया, विशेषणतया वेत्यन्यदेतत् । अत्रेदं बोध्यं समुच्चये 'च'शब्देन स्वसमभिव्याहृतपदार्थे इतरसाहित्यं बुध्यते, इतरस्मिंस्तु न । अत एव इतरेतरयोगाद्भेदः । अत एव तत्र 'च'-द्वयप्रयोगः, अत्र एकस्यैव । मूले-'यत्र तत्रे'ति पूरणीयम् , न त्वन्वय एव समुच्चय इति भ्रमितव्यम् । 'अहरहर्नयमानो गामश्वमि'त्यादौ तु न समासः । 'अहरहः'पदेन साहित्यस्य तत्र गम्यत्वेऽपि, तस्य चकाराऽवाच्यत्वात् । तच्च विनिगमनाविरहात्परस्परमेव बुध्यते । अत एव भगवता तत्र समासमाशङ्क्य 'चेन कृतस्याऽर्थस्याऽभावान्न समास' इत्युक्तम् । यत्र विग्रहे चेन द्योत्यं साहित्यं, तत्रैव समासः, न चाऽत्र तथेति तद्भावः ।

यत्तु 'गामश्वमि'त्यादौ समुच्चय' इति कैयटादयः । तन्न । समुच्चये वक्ष्यमाणरीत्या समासप्राप्तेरभावेन, तत्र समासाऽऽपत्तिपरभाष्यविरोधादिति भाष्यप्रदीपोद्द्योते विस्तरः । साहित्यबलादेव सति तात्पर्ये समभिव्याहृतक्रियायामेककालिकत्वादि गम्यते । 'एकधर्मावच्छिन्ने' इत्युक्तेर्वस्तुतो भजनस्य भिन्नत्वेऽपि न दोषः । ( काले एकत्वं च बुद्धिविशेषविषयत्वमित्येककाले द्वयोर्भजनाऽसम्भव इति न वाच्यम् ) । विशेष्यतयाऽन्वयश्च 'देवदत्तः पचति, हसति चे'त्यादौ क्रियासमुच्चये द्रष्टव्यः । समुच्चये च

---

१ इतोऽग्रे—'अत्र चेश्वरकर्मकं, गुरुकर्मकमेककालिकं भजनमिति बोधः । समभिव्याहृतक्रियायामेककालिकत्वं 'च'शब्दद्योत्यम् । एवं च संनियोगशिष्टपरिभाषा न्यायसिद्धा । 'एकधर्मावच्छिन्ने' इत्युक्तेर्वस्तुतो भजनस्य भिन्नत्वेऽपि न दोषः । काले एकत्वं च बुद्धिविशेषविषयत्वमित्येककाले द्वयोर्भजनाऽसम्भव इति न वाच्यम्' इति ग. पाठः ।

२ 'स्वस्मिंस्तु न' इति घ. पाठः ।

३ 'कृतार्थाऽभावान्न' इति ख. घ. पाठः । ४ अयं ग. पाठः ।

५ इतोऽग्रे—'अत्र चोभयोरपि प्राधान्यम् । अत एव सम्यगर्थादिबोधकोपसर्गोपादानम्' इति ग. पाठः ।

समभिव्याहृतस्य किञ्चिदप्राधान्यं प्रतीयते। अत एव समकक्षयोर्मध्ये एकस्य समुच्चेयत्वे दुःखादि दृश्यते।

आनुषङ्गिकत्वे इति। [1]तच्चाऽनुद्देश्यत्वम्। 'अन्वाचये—'प्लक्षश्चे'त्युक्ते गम्यते एतत्-साऽपेक्षोयमि'ति भाष्यात्, 'एकस्य प्राधान्यम्, अपरस्य तदनुरोधेन क्रियासम्बन्ध' इति कैयटाच्च। अत्र प्राधान्यं तत्सम्बन्धिक्रियाया अवश्यकर्त्तव्यत्वरूपम्। अत्र च [2]व्याप्यत्वादिकमधिकं भासते। [3]आनुषङ्गिकत्वमिदं च 'च'द्योत्यम्। तथा हि–अदर्शनादनाप्नुवन्नपि गाम्, अटत्येव भिक्षाम्। अनटंस्तु भिक्षां, न गामानयति। अटन्नपि नाऽन्विष्याऽऽनयति। स्पष्टं चेदं 'कर्त्तुः क्यङ् सलोपश्चे'ति सूत्रे भाष्ये। एवं च 'आनुषङ्गिकं भिक्षाऽटनव्याप्यं गवानयनमि'ति बोधः।

मिलितानामिति। 'परस्परनिरूपितसाहित्यवतामि'त्यर्थः। ( [5]स्वविशेष्ये एकविशेष्यतानिरूपकताऽवच्छेदकधर्मवतामिति यावत् )।

अन्वय इति। 'एकधर्माऽवच्छिन्नेनाऽन्वय' इत्यर्थः। 'इतरेतरयोगे प्लक्षश्च, न्यग्रोधश्चे'त्युक्ते गम्यत एतत्—'प्लक्षोऽपि न्यग्रोधसहायो, न्यग्रोधोऽपि प्लक्षसहायः' इति भाष्यात्। अत एवाऽत्राऽनेकचकारप्रयोगः।

साहित्यं चाऽखण्डोपाधिः। 'नी'धातोः संयोगजनकव्यापाराऽनुकूलव्यापारवाचकत्वेन द्विकर्मत्वेऽपि, 'अजां ग्रामं नयती'त्यादौ न चकारप्रयोगो, नाऽपि समासः। एकधर्मावच्छिन्नेऽन्वयाऽभावात्। अत्र साहित्यं विशेषणम्। 'सहितधवखदिरकर्मकं छेदनमि'ति बोधः। [4]एतदर्थमेवाऽत्र एकार्थीभावः।

---

१ 'तच्चाऽन्यनिष्पादकयत्ननिष्पाद्यत्वम्' इति ग. घ. पाठः।

२ 'व्याप्यत्वादिकमप्यधिकं भासते' इति ग. पाठः।

३ 'आनुषङ्गिकत्वमिदं च 'च'द्योत्यम्' इति ख. ग. घ. पाठः।

४ इतोऽग्रे—'एतदर्थमेवाऽत्र पश्चादर्थकाऽन्वाद्युच्चारणम्' इति ग. घ. पाठः।

५ अयं घ. पाठः। क. ख. ग. नास्ति।

समूह इति ( परस्परं सापेक्षाणाम्— ) तिरोहिताऽवयवभेदः समूह इत्यर्थः । 'अयमेवाऽत्र विशेष्य' इत्येके । साहित्यमेव समूहः, स उभयत्रापि विशेष्य एव । तस्य समाहारे उद्भूताऽवयवभेदत्वाऽभावः । इतरेतरयोगे विपरीतमि'ति परे[1] । एवमेव 'चाऽर्थे' इतिसूत्रस्थभाष्यस्वरसः ।

'अर्थचतुष्टयाऽनुस्यूतं साहित्यं 'च'शब्दाऽर्थ' इति वृद्धाः । तत्रेतरेतरयोगे उद्भूताऽवयवभेदस्यैव समूहस्य प्रतीत्या, प्रत्येकवृत्तिधर्मद्वयमेव प्रवृत्तिनिमित्तमिति फलति । समूहस्य तदनतिरेकेणैव भानात् । समाहारे तु अतिरिक्तत्वेनैव समूहस्य भानात्तद्वृत्तिसमाहारत्वमेव प्रवृत्तिनिमित्तमिति तद्भेदो बोध्य इति दिक् ।

अत्राऽऽश्रयोर्न समासः । अनेकसुबन्तानां चाऽर्थे वृत्त्यभावेन एकाऽर्थीभावरूपसामर्थ्याऽभावात् । किञ्च तत्र चाऽर्थो विशेषणम् । 'समुच्चितं गुरुमि'ति बोधः । समासस्त्वन्यपदार्थप्राधान्ये इव, चाऽर्थप्राधान्ये एव । इतोऽपीतरेतरयोगे साहित्यं विशेषणमित्यसङ्गतमेव । चार्थस्य द्वन्द्वेनोक्तत्वाच्चशब्दस्याऽप्रयोगः ।

( किञ्च[3] 'चे द्वन्द्व' इत्येव पदानां चकारे वृत्त्यभावात्तदर्थे लब्धे, सूत्रेऽर्थग्रहणसामर्थ्यात्कृत्स्नाऽर्थग्रहणम् । कृत्स्नत्वं च कृत्स्नसमस्यमानपदार्थाऽन्वयिबोधकत्वमेव । तच्चाऽन्त्ययोरेवेति न दोषः । यैत्तु[4] कैयटादिभिः—'एकक्रियान्वयित्वरूपं सामर्थ्यं दध्योदनादिवदत्राऽस्त्येवे'त्युक्तम् । तन्न । 'कृतः सर्वो मृत्तिकये'त्यादौ समासाऽऽपत्तेः । अन्वाचये त्वदुक्तसामर्थ्यस्याऽप्यभावाच्च । तत्रोद्देश्यक्रियासाहित्यस्याऽनुद्देश्यक्रियायां प्रतीतावपि, गोभिक्षयोः साहित्याऽभानात् । किञ्चाऽन्त्ययोः परस्परसाहित्यनिरूपकतया, साक्षादेकार्थीभावसामर्थ्ये चरितार्थस्य शास्त्रस्य, बहिरङ्गक्रियाघटितसामर्थ्येऽप्रवृत्तेश्च[5] । दध्योदनादौ त्वगत्या

---

१ अयं ग. पाठः । २ 'परे' इति ख. पाठः ।
३ 'न दोष' इत्यन्तोऽयं ग. पाठः । ४ 'अप्रयोगः' इत्यन्तोऽयं ख. घ. पाठः ।
५ 'अप्रवृत्तेरित्याहुः' इति ख. पाठः ।

गौणमपि तदाश्रीयते इत्याहुः। किञ्च बहुव्रीहिघटकपदानां कर्माद्यन्तर्भावेणेव, द्वन्द्वघटकपदानां चाऽर्थान्तर्भावेणैकार्थीभाव आवश्यकः। 'समर्थ' इति परिभाषणात्, 'चार्थे द्वन्द्व' इत्युक्तेश्च। अत एव चाऽर्थस्य द्वन्द्वेनोक्तत्वाच्चशब्दस्याऽप्रयोगः)।

किञ्च समासे समुच्चयादेरुक्तिसम्भवोऽपि नाऽस्ति। 'पुष्पवन्तावि'त्यादावित्यैकशक्तिविषयाणां समप्रधानानां परस्परं विहाय इतराऽन्वयस्याऽयोग्यत्वात्। अत्र समप्राधान्यं परस्पराऽविशेषणत्वमेव। अत एव 'राजपुरुषं पश्ये'त्यादौ न तथाऽन्वय इति दिक्।

ननु 'नीलोत्पलमि'त्यादौ 'नीलं च तदुत्पलं चे'ति 'च'शब्दाऽन्तर्भावेण विग्रहदर्शनात्तदर्थाऽन्तर्भावेणैकार्थीभावसत्त्वेन द्वन्द्वो दुर्वारः। तत्र हि साहित्यं चाऽर्थः। एवं च 'नीलत्वसहितोत्पलत्ववदुत्पलं नीलमि'ति बोधः।

अत एव 'याज्ञिकश्चाऽयं बह्वृचश्चे'त्यादौ द्वन्द्वः शङ्कितः भाष्यकृता। ईदृशबोधश्च वाक्ये 'च'शब्दबलात्, समासे एकार्थीभावबलादिति चेन्न।

सामानाधिकरण्ये विशेषविहितया 'विशेषणं विशेष्येणे'ति तत्पुरुषसंज्ञया बाधात्। ('प्रधानाऽप्रधानयोरि'ति न्यायेन चाऽर्थस्य समास-

---

१ 'न च[1] समासे समुच्चयादेरुक्तिसम्भवोऽप्यस्ति। तुल्यसामर्थ्यामितराऽन्वये मानाऽभावाद्विनिगमकाऽभावात्, 'पुष्पवन्ता'वित्यादौ तथैव क्लृप्तत्वाच्च। एकशक्तिविषयाणां समप्रधानानां परस्परं विहाय इतराऽन्वयस्याऽयोग्यत्वात्' इति ग. पाठः।

२ 'नीलाऽभिन्नं नीलत्वसहितोत्पलत्ववदुत्पलमि'ति बोधः' इति ख. घ. पाठः।

३ इतोऽग्रे—'अत एव पाठकतादशायां पाचकत्वाऽभाववति न 'पाचकपाठक' इति प्रयोगः। साहित्यस्यैककालिकत्वादिसमनियतत्वादिति चेन्न' इति ग. घ. पाठः। ४ अयं ख. ग. घ. पाठः।

---

1 'एवञ्च समासे समुच्चयादेरुक्तिसम्भवोऽपि नास्ति' इति ख. घ. पाठः।

घटकपदबोध्यप्रधानाऽर्थाऽन्वये एव द्वन्द्वप्रवृत्तेश्च ) । इदमेवाऽभिप्रेत्य— 'पदाऽर्थभेदे द्वन्द्वः, पदार्थताऽवच्छेदकभेदे कर्मधारय' इति प्रवादः ।

'कर्मधारयसंज्ञया बाध' इति तु न युक्तम् । तस्या एकसंज्ञाऽधिकार-बहिर्भूतत्वात् । सामानाधिकरण्याऽविवक्षायां तु द्वन्द्वे इष्टापत्तिः ।

अत एव 'शिवरामयोरभेद' इति, 'आशंसासम्भावनयोरविशेष' इति-भाष्यप्रयोगश्च सङ्गच्छते । अभेदादिपदाऽन्वये सामानाधिकरण्यस्य प्रतीता-

१ इतोऽग्रे–'अन्ये तु कर्मधारये चार्थाऽन्तर्भावेण एकार्थीभावे सूत्रादेस्तात्पर्यग्राहकस्याऽभावात् 'नीलाऽभिन्नमुत्पलमि'त्येव बोधः[1] । कर्मधारयविग्रहे 'च तदि'त्यादिप्रयोगस्तु सामानाधिकरण्यस्य स्पष्टं बोधनायेति च वदन्ति' इति ख.घ. पाठः । 'एवं चात्र चार्थान्तर्भावेण एकार्थीभावे' इति तु ग. पाठः ।

२ 'द्वन्द्वे इष्टापत्तिरिति दिक् । न चैवम् 'शिवरामयोरभेद' इत्यत्र, 'आशंसासम्भावनयोरविशेष' इति भाष्यप्रयोगे च, 'नीलघटयोरैक्यमि'त्यत्र च द्वन्द्वाऽनापत्तिः, सामानाधिकरण्यादिति वाच्यम् । 'ऐक्य'पदाऽन्वये सामानाधिकरण्यस्य प्रतीतावपि, द्वन्द्वरूपपदसंस्कारवेलायां तदविवक्षणात् । पदार्थभेदस्यापि विवक्षणाच्च । विवक्षैव च तत्र तत्र साधुत्वे बीजम् । न च द्वितीये 'त्यदादीनि सर्वैरि'ति सूत्रे 'सामान्यविशेषवाचिनोर्न द्वन्द्व' इति भाष्ये पठितत्वेन कथं द्वन्द्व इति वाच्यम् । 'प्राच्यभरतेष्वि'तिनिर्देशेन तस्याऽनित्यत्वात्[2] । [3]अत एव 'गोबलीवर्दमि'त्यादिसिद्धिः । 'बलीवर्द'-

1 इतोऽग्रे--'समानाधिकरणेने'त्यत्र विनिगमनाविरहाद्देशघटितं, कालघटितं, च सामानाधिकरण्यं गृह्यते, अतो न प्रागुक्तप्रयोगः । न चैवं 'नीलघटयोरैक्य'मित्यत्र द्वन्द्वाऽनापत्तिः, सामानाधिकरण्याच्चेति वाच्यम् । ऐक्यपदान्वये सामानाधिकरण्यस्य विवक्षितत्वेऽपि, द्वन्द्वरूपपदसंस्कारवेलायाम्' इति ग. घ. पाठः ।

2 'अत एव 'आशंसासंभावनयोरविशेष' इति भाष्यवार्त्तिकादिप्रयोगः संगच्छते' इति ग. घ. पाठः ।

3 इतोग्रे'यत्तु कर्मधारयेऽभेदश्चार्थ'इति । तन्न । संसर्गमर्यादयैव तस्य लाभात् ।

वपि द्वन्द्वरूपपदसंस्कारवेलायां तदविवक्षणात् । विवक्षैव च तत्र तत्र साधुत्वे बीजम् । न च 'त्यदादीनि सर्वैरि'तिसूत्रे 'सामान्यविशेषवाचिनोर्न द्वन्द्व' इति भाष्ये पठितत्वेन 'गोबलीवर्दमि'त्यादौ कथं द्वन्द्व इति वाच्यम् । 'प्राच्यभरतेष्वि'ति निर्देशेन तस्याऽनित्यत्वात् । 'बलीवर्द'पदसमभिव्याहारात् स्त्रीणामेव 'गो'पदेन बोध इति, 'विशेषपरत्वात् द्वन्द्व' इत्युक्तम् ।

होतृपोतृ इति । अनयोरुत्तरपदपरत्वाऽभावान्नाऽऽनङ् ।

राजदन्तादिषु । यद्यपीदं षष्ठीसमासकर्मधारयादावपि प्राप्नोति, तथाऽपि द्वन्द्वीयपूर्वनिपातप्रकरणस्याऽपीदं बाधकम्, 'उलूखलमुसलमि'-त्यादिद्वन्द्वानामपि केषाञ्चित्पाठादिति ध्वनयितुमत्रोल्लेखः ।

धर्मादिष्विति । द्वन्द्वे एवेदम् । भाष्ये 'अल्पाच्तर'सूत्रे पठितत्वात् । जम्पतीति । अभ्यर्हितत्वात्पत्युः पूर्वनिपातः प्राप्तः । निपात्यत इति । राजदन्तादिगणे पाठेनेत्यर्थः । अयमिति । राजदन्तादिरित्यर्थः ।

अनेकप्राप्ताविति । इदं यद्यपि 'अल्पाच्तरमि'ति सूत्रे भाष्ये पठितं, तथाऽपि 'पटु-मृदु-शुक्ला' इति भाष्ये उदाहरणादन्यविषयमपीति भावः ।

---

समभिव्याहारात् स्त्रीणामेव गोपदेन बोध इत्यन्यत् । तत्रैव भाष्ये त्वनया-रीत्या विशेषपरत्वात् द्वन्द्व इत्युक्तम्' इति ख. ग. घ. पाठः ।

१ 'द्वन्द्वीयपूर्वपदे एवेदम्' ग. पाठः ।

२ 'अयं = राजदन्तादिः, धर्मादिश्चेत्यर्थः' इति ख. पाठः ।

---

'च'शब्दस्य तत्र शक्तौ मानाऽभावाच्च । चार्थप्रतिपादकप्रकृतसूत्रस्थभाष्य-विरोधाच्चेति दिक् । नन्वलौकिकवाक्ये एवैकार्थीभावकल्पनाद्विशिष्टस्यै-वाऽर्थवत्त्वेन 'रामकृष्णावि'त्यादौ विशिष्टादेव सुबुत्पत्तिः स्यात्, 'एकाच्-द्विर्वचन'न्यायात् । तथा च द्वन्द्वो दुर्लभः । अनेकसुबन्ताऽभावात् । समु-दायादुत्पन्नयाऽप्यवयवे संख्यान्वयरूपाऽनुग्रहसम्भवादिति चेन्न । संख्या-न्वयानुग्रहसम्भवेऽपि पूर्वस्य पदत्वाऽननुग्रहेण प्रत्येकमपि तस्य दुर्वारत्वात् । अत एव पूर्वपदे नलोपादिकम् । 'चार्थे द्वन्द्व' इत्यस्योक्तिसम्भवश्च' इति ग. पाठः ।

अल्पाच्तरम् । अस्मादेव निर्देशात्स्वार्थे तरप्, कुत्वचुत्वयोरभावश्च । तेन 'धवखदिरपलाशा' इत्यपि सिद्धम् । अत्राऽपि बहुष्वनियमः । आनुपूर्व्येणेति । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं, नक्षत्राणां तूदयकृतं बोध्यम् ।

अनित्यमिदं प्रकरणम्, 'समुद्राऽभ्राद्घः' 'लक्षणहेत्वोरि'त्यादिनिर्देशात् । तेन 'ससौष्ठवौदार्यविशेषशालिनीम्' 'मृदङ्गशङ्खतूणवाः पृथक् नदन्ति संसदी'त्यादि सिद्धम् । अजाद्यदन्ताच्च 'अल्पाच्तरम्, 'लघ्वक्षरम्, 'ऋतुनक्षत्राणामि'ति, 'अभ्यर्हितं चे'ति, 'भ्रातुर्ज्यायस' इति च विप्रतिषेधेनेति बोध्यम् । सर्वतोऽप्यभ्यर्हितं पूर्वम् । अत एव 'वासुदेवाऽर्जुनाभ्यामि'त्यादि निर्देशाः सङ्गच्छन्ते । इदमप्यनित्यम् । 'श्वयुवे'ति निर्देशात् ।

द्वन्द्वश्च प्राणि । अत्र 'तूर्याऽङ्ग'शब्देन वादका एव गृह्यन्ते इति 'अल्पाच्तरमि'तिसूत्रस्थभाष्यस्वरसः । तत्र 'मृदङ्गशङ्खतूणवा' इत्युदाहृतम् । ( नैचात्र 'जातिरप्राणिनामि'त्यस्य प्राप्तिः । व्यक्तिपरत्वात् ) । 'अङ्ग'शब्दश्चाऽऽद्यन्तवाक्ययोरवयवपरः । मध्यमे तूपकारकपरः । 'अङ्ग'-शब्दस्य च प्रत्येकमन्वयः । तच्च वाक्यत्रयम् । तत्रैकप्राण्यङ्गकादेर्द्वन्द्वत्वाऽभावेनाऽन्यग्रहणस्याऽऽवश्यकत्वे, प्रत्यासत्त्या तद्वाक्योपस्थितप्राण्यङ्गाद्येव द्वितीयं गृह्यते । तेन 'मार्दङ्गिकाऽश्वारोहावि'त्यादि सिद्धम् । एवमेव 'अध्वर्युक्रतुरि'त्यादौ बोध्यम् ।

'एकवचनमि'ति च 'एकं वक्ती'ति व्युत्पत्त्या एकत्वविशिष्टबोधकपरमित्याशयेन फलितमाह—एकवदिति । 'एकबोधकपदवदि'त्यर्थः ।

पाणिपादमिति । यद्यपि 'जातिरप्राणिनामि'त्येव सिद्धं, तथाऽपि

१ अयं ग. पाठः ।

२ 'सिद्धमित्याहुः । तात्पर्यवशाल्लक्ष्याऽनुरोधाच्च प्रत्यासत्त्या बहुवचनाऽन्ताऽङ्गशब्दस्य प्रत्येकं सम्बन्धात्प्राण्यङ्गादिवाचकसर्वाऽवयवकद्वन्द्वपरिग्रह इति, न प्रागुक्तदोषः । 'अत एव सूत्रे बहुवचननिर्देश' इति तु कैयटादयः । अत्रापि पक्षे 'अध्वर्युक्रतुरि'त्यादौ प्रागुक्तरीतिरेव शरणम् । साहचर्याद्वा न दोषः' इति ख. ग. घ. पाठः ।

व्यक्तिविवक्षायामेकवद्भावाऽर्थं, व्यतिकरनिरासाऽर्थं चेदम् । एकत्वादिति । 'चाऽर्थे' इत्यनेन समाहारे द्वन्द्वे इत्यर्थः । ( ननु 'चाऽर्थे द्वन्द्व' इत्यनेन सिद्धमत आह–) नियमाऽर्थमिति । अयं भावः–नाऽनेन प्राण्यङ्गादीनां द्वन्द्वमनूद्य एकवत्त्वं विधीयते[3] । नियमतः समाहारनिमित्तनपुंसकत्वाऽऽदिकार्याऽसिद्धेः[4] । किं त्वेकवचनद्वन्द्वमनूद्य प्राण्यङ्गाऽऽदिसम्बन्धो बोध्यते[5] । स[6] च नियमाऽर्थ इति 'एकवचनो द्वन्द्व एव प्राण्यङ्गादीनामि'ति फलति[7] । स्पष्टं चेदं 'विभाषा वृक्षे'ति सूत्रे भाष्य-

---

१ इतोऽग्रे—'अत्र शास्त्रे जातिपदेनाऽन्त्याऽवयविवृत्तेरवयवाऽवयविवृत्तेर्जातेर्ग्रहणम् । अत एव 'परकाषी'त्यादौ 'सुप्यजातावि'ति णिनिर्हरदत्तेनोक्त इत्यन्ये' इति ख. पाठः ।

२ अयं ग. पाठः ।

३ इतोऽग्रे—'उद्देश्यमध्ये विधेयबोधक'च' शब्दाऽनुपपत्तेः' इति ग. पाठः ।

४ 'कार्याऽसिद्धेश्च' इति ग. पाठः ।

५ 'विधीयते' इति ग. पाठः ।

६ 'चशब्द एवाऽर्थः' इति ग. पाठः ।

७ इतोऽग्रे—'यत्तु 'प्राण्यङ्गानां प्राण्यङ्गैरेवे'ति नियमाऽर्थमिदमि'ति । तन्न । प्रथमोपस्थितद्वन्द्वसङ्कोचाऽऽपत्तेः । एवाऽर्थकचस्य द्वन्द्वपदोत्तरमेव श्रवणाच्च । अत एव 'विभाषा वृक्षे'ति सूत्रे-'एकवचनप्रकरणमनर्थकम् । समाहारैकत्वात्सिद्धमि'त्याशङ्क्य, 'पूर्वत्र नित्याऽर्थम्, उत्तरत्र व्यभिचारार्थमि'ति भाष्योक्तम् । 'पूर्वत्रेति । 'प्राण्यङ्गादीनां समाहार एवे'त्येवमर्थमित्यर्थः । उत्तरत्रेति । क्वचित् 'जातिरप्राणिनामि'तिप्राप्तेर्विभाषा, मृगादीनां तु व्यतिकरनिरासार्थमि'ति कैयटोक्तं च सङ्गच्छते । एतेन 'चार्थे द्वन्द्व' इति सूत्रशेषभाष्ये 'द्वन्द्वैकवद्भावो न वक्तव्य' इति भाष्योक्तेरिदं चिन्त्यमि'त्यपास्तम् । एतद्भाष्यविरोधेन तद्भाष्यस्य प्रौढिवादपरत्वादिति दिक् ।' इति ग. पाठः ।

कैयटयोः । 'समाहारः प्राण्यङ्गादीनामेवे'ति नियमस्तु न, व्याख्यानात् । किञ्चैवं नियमेऽन्यत्र समाहारद्वन्द्ववारणेऽपि, एषु उभयद्वन्द्वस्य प्राप्त्या 'विभाषा वृक्षे'तिसूत्रे येऽप्राणिजातिवाचिनस्तेषां ग्रहणवैयर्थ्याऽऽपत्तेः । 'तिष्यपुनर्वस्वोरि'ति सूत्रे बहुवचनग्रहणाच्च । तद्धि समाहारैकवचनस्य मा भूदिति कृतम् । 'तिष्यपुनर्वस्वि'ति यथा ।

अनुवादे । यदा प्रतिपन्ना प्रमाणाऽन्तराऽवगतमप्यर्थं कार्याऽन्तराऽर्थं प्रयोक्त्रा प्रतिपाद्यते, तदाऽनुवादः । तदाह—सिद्धस्येति । प्रकृते चोदय-प्रतिष्ठयोरनुवादः । अनुवादे किम् ? । अज्ञातज्ञापने 'उदगुः कठकालापा' इत्यपि । चरणशब्दोऽत्र शाखाऽध्येतृवाची । स्थेणोरिति । लुङन्तयोस्थेणोः प्रयोगे सतीत्यर्थः । उदगादिति । इह यदा 'कठेषु, कलापेषु चोद्गतेषु, प्रतिष्ठितेषु चाऽऽवाभ्यां तत्र गन्तव्यमि'ति संवादं कृत्वा, तं च विस्मृत्य कश्चिदास्ते, तं प्रतीदमुच्यते । कठेन, कलापिना (च) प्रोक्तमधीयते इति विग्रहः । कठाद्वैशम्पायनाऽन्तेवासित्वाण्णिनिः । 'कठचरकाल्लुक्' । अध्येत्रणः 'प्रोक्ताल्लुक्' । 'कलापिनोऽण्' । 'सब्रह्मचारी'त्याद्युपसङ्ख्याना-ट्टिलोपः ।

अध्वर्युक्रतु । 'अध्वर्यु'शब्द ऋत्विग्विशेषे रूढः । तेन च क्रतोः सम्बन्धाऽव्यभिचारादध्वर्युपदं तदध्येयं यजुर्वेदं लक्षयतीत्याह—यजुर्वेद

---

१ 'समाहारः प्राण्यङ्गादीनामेवे'ति नियमस्तु न । 'तिष्यपुनर्वस्वोरि'तिसूत्रे बहुवचनग्रहणादि'त्युक्तम् । कथं तर्हि 'पातितै रथनागाश्वैरि'ति । मध्यम-पदलोपी समासः । यद्वा कृतद्वन्द्वानामेकशेषः । अत एव 'तिङ्क्षीणो'ति सूत्रे भाष्यं-'कृतद्वन्द्वानामेकशेषः । कृतैकशेषाणां द्वन्द्वो वा । उभयं हीष्यते-'बहूनि शष्किकिटकानि' । 'बहु शष्किकिटकमि'ति । 'जातिरप्राणिनामि'त्यस्य प्राप्तिः । बहुशब्दो वैपुल्यवाची'ति इति ग. पाठः ।

२ इतोऽग्रे–'शाखावाचिनां तु 'जातिरप्राणिनामि'त्येव सिद्धमिति हरदत्तादयः' इति ख. ग. पाठः ।

इति । क्रतुरिति । षष्ठ्यर्थे प्रथमा बोध्या । 'विप्रकृष्टाऽऽख्यानामध्ययनत' इत्येव सिद्धे गुरूक्तिः 'अविप्रकृष्टे'ति च्छेदाऽर्था । तदाह—प्रत्यासन्ना इति । अध्ययनगता प्रत्यासत्तिरध्येये, तद्द्वारा तदध्येतरि चाऽऽरोप्यत इति भावः[1] ।

पदकक्रमकमिति । 'पदान्यधीत्य क्रमोऽध्येतव्य' इति स्पष्टा प्रत्यासत्तिः । पदान्यधीते-'पदकः' । 'क्रमादिभ्यो वुन्' । एवं—'क्रमकः' । पदक्रमशब्दयोस्तु जातित्वादेव सिद्धमिति, तदध्येतृपुरुषवाचकेऽस्य प्रवृत्तिः । (ऐवं[2] 'क्रमकवार्त्तिकम्' । वृत्तिः = संहिता, तामधीते = वार्त्तिकः । उक्थादित्वाट्ठक् । संहितामनधीत्य क्रमोऽध्येतुं न शक्यते इत्येवाऽत्र प्रत्यासत्तिः ) । अध्ययनतः किम् ? । पितापुत्रौ । अविप्रकृष्टेति किम् ? । याज्ञिक-वैयाकरणौ ।

जाति । षष्ठ्यर्थे प्रथमा । तदाह—जातिवाचिनामिति । धानाशष्कुलीति । 'षण्णां रसानां कुलमि'ति गौरादिषु निपातनात्साधुः । विट्शूद्रा इति । 'जात्याख्यायामि'ति बहुवचनम् । द्रव्येति । 'अप्राणिनामि'तिपर्युदासादेतल्लभ्यते । अत्र 'प्राणि'शब्देन लोकप्रसिद्धा मनुष्यादय एव गृह्यन्ते,न तु वृक्षादय इति 'विभाषा वृक्षे'ति सूत्रस्थभाष्यस्वरसः । क्षतप्ररोहणाऽऽदिना तेषामपि प्राणित्वाऽङ्गीकारादिति बोध्यम् । जातिः किम् ? । 'नन्दकपाञ्चजन्यौ' । हरेः खड्गो-नन्दकः । शङ्खश्च पाञ्चजन्यः । एकव्यक्तिवृत्तित्वान्न जातिः । जातिप्राधान्येति । अत एव 'मृदङ्गशङ्खतूणवा' इति 'अल्पाच्तरमि'तिसूत्रस्थभाष्यप्रयोगः, 'क्षीरोदके संपृक्ते गृह्येते' इति 'अन्तादिवच्चे'तिसूत्रस्थभाष्यप्रयागः, 'वृक्षपर्णयोरि'ति शतृविधायक-

---

१ इतोऽग्रे—'अत एव 'संनिकृष्टाख्यानामि'ति नोक्तम्, परम्परया संनिकर्षग्रहणार्थम्' इति ग. पाठः ।

२ अयं ख. ग. पाठः ।

सूत्रस्थभाष्यप्रयोगश्च सङ्गच्छेते । ('अत एव जातिग्रहणं चरितार्थम् । अन्यथा पर्युदासेनैव सिद्धे, तद्वैयर्थ्यं स्पष्टमेव) । जातेः प्राधान्यं च विशेष्यत्वम् । तदा द्रव्यं विशेषणम् । वाहदोहाद्यन्वयो व्यक्तिद्वारकपरम्परया जातावेव । तत्र तात्पर्यग्राहकं चैकवद्भावादि, एकवचनादि चेत्यादि बोध्यम् । अत एव वक्ष्यति–'द्रव्यविशेषे'ति । कथं तर्हि 'रञ्जिता नु विविधास्तरुशैलाः' इति ? । न च व्यक्तिप्राधान्यविवक्षया निर्वाहः । सकलतरुशैलरञ्जनस्य विवक्षितत्वादिति चेन्न । 'तरुसहिताः शैला' इति व्याख्येयम् ।

बदरामलकानीति । फलत्वव्याप्यजातिविशिष्टवचनावेतौ ।

विशिष्टलिङ्गो । 'नदी' 'देश' इति द्वे पदे । इतरेतरयोगे द्विवचनाऽऽपत्तेः, समाहारे नपुंसकाऽऽपत्तेः । अवयवद्वारकाणि चत्वार्यपि द्वन्द्वविशेषणानि । 'अग्रामा' इति पर्युदासो, लाघवात् । 'ग्रामभिन्नसर्वाऽवयवको

---

१ इतोऽग्रे—'जातेः प्राधान्यं चैतदेव यत्तदाश्रयाऽनियतसङ्ख्यबुद्धिस्थ-सकलव्यक्तिप्रतीतिः, न तु विशेष्यत्वम् । असम्भवात् । अत एव वक्ष्यति–द्रव्यविशेषे'ति । प्रकरणादिसहकारेण च नियतसङ्ख्य-तद्विशेषप्रतीतिरिति बोध्यम्' इति ख. ग. पाठः ।

२ अयं ग. पाठः ।

३ 'व्याख्येयमिति केचित् । अन्ये तूक्तभाष्यप्रयोगादिदमनित्यम् । 'विभाषे'त्यत्र वृक्षाऽऽदिग्रहणं त्वस्यैवाऽवयुत्याऽनुवादः । तेषु निर्विचिकित्सं विकल्पः, अन्येषु तु यथाप्रयोगमित्याहुः' इति ख. पाठः ।

४ 'ग्रामभिन्नसर्वाऽवयवको यो द्वन्द्व इत्यर्थः । अत्र विभिन्नलिङ्गत्वाऽग्रामत्वयोर्नदीदेशविशेषणत्वम् । तयोरेव साक्षाद् द्वन्द्वविशेषणत्वमित्यपि सुवचम् । देशपदेन मनुष्यवासयोग्यजनपदनगराणामेव ग्रहणम् । अतः पर्वतानां न—'कैलासगन्धमादने' । अत एव 'नदी'ग्रहणम् । नद्याः प्रागुक्तदेशत्वाऽभावात्' इति ख. पाठः ।

यो द्वन्द्व' इत्यर्थः। यद्यपि 'ग्रामे नाऽध्येयमि'त्यादौ,'उदीच्यग्रामाच्चे'त्यादौ च 'ग्राम'पदेन नगरमपि गृह्यते, तथाऽपीह न, व्याख्यानात्। इदमेवाऽभिप्रेत्य भाष्ये 'अग्रामा' इत्यत्र 'अनगराणामिति वक्तव्यमि'त्युक्तम्। अत एव 'मथुरापाटलिपुत्रमि'त्येव भवति।

यत्तु 'प्राचां ग्रामनगराणामि'ति सूत्रे 'नगर'पदोपादानेन 'ग्राम'ग्रहणेन नगरस्याऽग्रहणमित्यर्थज्ञापनान्न दोष' इति। तन्न। 'नगराणामि'त्युत्तरपदविशेषणं, 'ग्रामाणामि'त्यङ्गविशेषणमि'ति तत्प्रयोजनस्य वृत्त्यादौ स्पष्टमेव दर्शितत्वात्। त्वदुक्ताऽर्थस्य भाष्ये स्पष्टमेव तत्सूत्रे प्रत्याख्यातत्वाच्च।

इह नदीदेशविषये द्वे वाक्ये। तत्र प्रागुक्तरीत्या नद्यादिसर्वाऽवयवकस्यैव ग्रहणम्[3]। अत एव 'गङ्गापाटलिपुत्रे' इत्यादौ न। स्पष्टं चेदं 'नद्यां मतुबि'ति सूत्रे कैयटे। तदाह–ग्रामवर्जेत्यादि। 'नदी'ग्रहणेन नदस्याऽपि ग्रहणम्। अन्यत्र भिन्नलिङ्गत्वाऽसम्भवात्। 'कृत्रिमाऽकृत्रिम'न्यायस्तु

---

१ इतोऽग्रे–'बहुवचनं तु विशेषाऽभिप्रायेण। अत एव 'देश'पदेन मनुष्यवासयोग्यजनपदग्रामनगराणामेव ग्रहणम्। अतः पर्वतानां न–'कैलासगन्धमादने'। अत एव नदीग्रहणम्। नद्याः प्रागुक्तदेशत्वाऽभावात्। एतेन 'अग्रामा' इति विभज्य पर्युदासादेव देशलाभे देशग्रहणं व्यर्थमि'त्यपास्तम्। गृहादिसंनिवेशविशिष्टस्यैव ग्रहणे जनपदस्याऽसङ्ग्रहापत्तेश्च' इति ग. पाठः।

२ इतोऽग्रे–'अत एव भाष्ये'अग्रामा' इत्यत्राऽनगराणामिति वक्तव्य'मित्युक्तम्। बहुवचनेन नानाग्रामशब्दैर्नगरत्वाऽनाक्रान्तस्यैव ग्रहणादि'त्यप्याहुः। अत एव 'मथुरापाटलिपुत्रमि'त्येव भवति' इति ग. पाठः।

३ इतोऽग्रे—'किञ्च विभिन्नलिङ्गत्वाऽर्थकं विशिष्टलिङ्गग्रहणं न द्वन्द्वस्य साक्षाद्विशेषणम्। सर्वस्याऽपि किञ्चिदपेक्षया भिन्नलिङ्गत्वेनाऽव्यभिचारात्। किन्तु द्वन्द्वाऽवयवाऽन्तराऽपेक्षयैव। एवञ्च भिन्नलिङ्गत्वस्य सर्वावयवेषु फलितत्वेन तत्साहचर्यादपि तथा ग्रहणम्। अतो 'गङ्गापाटलिपुत्रे' इत्यादौ नदीजनपदवाचकयोर्द्वन्द्वे नाऽस्य प्रवृत्तिः' इति ग. पाठः।

न प्रवर्त्तते। देशसाहचर्यात् । जाम्बवशालूकिन्याविति । ग्रामभिन्नसर्वाऽवयवकत्वाऽभावादिति भावः । ये त्वग्रामा इति प्रसज्यप्रतिषेधमाहुस्तेषां ग्रामसर्वावयवके एव निषेधः स्यादिति, प्रकृते निषेधाऽसिद्धिरिति दिक् ।

येषां च । शश्वच्छब्दस्त्रैकाल्ये वर्त्तते । ततो भवार्थे निपातनाट्ठञि, टिलोपकाऽऽदेशयोरभावः । अत एव ट्युट्युलौ न । अस्य सन्धिवेलादिगणे पाठात् शाश्वतमपि । ध्वनितं चेदं 'नस्तद्धिते' इति सूत्रे भाष्यकैयटयोः । तेन स्वाभाविक इत्यर्थः ।

परत्वादिति। पशुशकुनिद्वन्द्वाऽवकाशो गो-महिष-हंस-चक्रवाकादिः। अस्याऽवकाशो ऽहि-नकुल-मार्जार-मूषकादिः । चकारेणेति । पुनर्विधानाऽर्थेनेत्यर्थः । अत्र विरोधो वैरम् । न तु सहाऽनवस्थितिः । व्याख्यानात् । तेन 'छायाऽऽतपावि'ति सिद्धमित्याहुः । देवाऽसुराणां च न नित्यो विरोधः, अमृतमथनात्प्रागसत्त्वात् । अतो 'देवाऽसुरैरि'त्यादि सिद्धम् ।

शूद्राणाम् । शूद्रोऽत्र त्रैवर्णिकेतरः, न शूद्रत्वजातिमान् । निरवसितेषु तदभावात् । पात्रादिति । यैर्भुक्ते 'भस्मना शुध्यते कांस्यमि'त्यादिस्मृत्युक्तसंस्कारेणाऽपि पात्रं न शुध्यति, तेषामित्यर्थः । यवनो–न पात्राद्बहिष्कृतः, 'शकयवनमि'ति भाष्योदाहरणादित्याहुः ।

यथोच्चारितानीति । कृताऽवङाद्यादेशानीत्यर्थः । गणपाठे रूपमेषां विवक्षितम्, न तु पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमिति भावः । तथा च वार्त्तिकं–'गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तमि'ति । तेन पररूपाऽऽदिपक्षे 'गोऽश्वम्' गोऽश्वा' इति भवतीत्याहुः । दासीदासमिति । अत एव निपातनात् 'पुमान् स्त्रिये'त्येकशेषो न । गवाश्वे-पशुद्वन्द्वविभाषा प्राप्ता । केषाञ्चिदबहुप्रकृत्यर्थः पाठः । केषाञ्चित्सामान्यतः प्राप्ते नियमः ।

---

१ एतत्स्थाने—'क्षुद्रजन्तव' इत्यत एकदेशे स्वरितत्वप्रतिज्ञया 'जन्तु'पदमनुवर्त्त्य, षष्ठ्या विपरिणमय्य, तेन विरोधस्य विशेषणात्' इति ग. पाठः ।

२ 'अप्राणिजातिवाचिनामबहुप्रकृत्यर्थम्' इति ग. पाठः ।

( 'गवाश्वम्, गवाविकम्, गवैडकम्, अजाविकम्, अजैडकम्, कुब्जवामनम्, कुब्जकैरातम, पुत्रपौत्रम्, श्वचण्डालम्, स्त्रीकुमारम्, दासीमाणवकम्, शाटीप्रच्छदम्, उष्ट्रखरम्, उष्ट्रशशम्, मूत्रशकृत्, मूत्रयकृत, यकृन्मेदः, मूत्रपुरीषम, मांसशोणितम्, दर्भशरम्, दर्भपूतीकम्, अर्जुनशिरीषम, तृणोलपम्, दासीदासम्, कुटीकुटम्, कुडी-कुडम[1], भागवतीभागवतम् । वृत् )।

वृक्षादौ विशेषाणामेवेति । व्याख्यानादिति भावः । स्पष्टं चेदं 'स्वं रूपं'सूत्रे[2] भाष्ये।

यत्तु 'अन्यत्र द्वन्द्वाऽसम्भवाद्विशेषाणामेवे'ति । तन्न । 'प्राच्यभरतेष्वि'तिनिर्देशेन सामान्य-विशेषयोर्द्वन्द्वनिषेधस्याऽनित्यतया, वृक्षप्लक्षादौ सम्भवादित्याहुः । आदिना मृगादिषट्कम् । प्रागुक्तरीत्या[3] मृगादिसर्वाऽवयवकद्वन्द्वे एवैतद्बोधिततत्तद्वाक्यप्रवृत्तिः । अत एव 'व्रीहिकुशप्लक्षमि'-त्यादौ जातित्वान्नित्यमेव ।

फलसेनेति । बहुप्रकृतिः = बहुवचनाऽन्तप्रकृतिक इत्यर्थः[4] । अत्र

---

१ अयं ग. पाठः । तत्र 'कुडो बालः, कुडी बालिका' ।

२ 'स्वं रूपसूत्रे' इति ख. पाठः ।

३ 'अत्रापि प्रागुक्तरीत्या' इति ग. पाठः ।

४ इतोऽग्रे—'बदराणि चे'त्यादौ 'जात्याख्ये'ति बहुत्वम् । यद्वा बहुत्वमङ्ख्यायुक्ता वर्त्तिपदार्थाः (प्रकृतयः = ) कारणानि यस्येत्यर्थः । जात्याश्रयसकलव्यक्तिप्रतीतेर्जातिप्राधान्येऽपि तत्त्वमक्षतमेव । इदं च प्रकरणशेषभूतम् । अत एव फलाऽऽदिग्रहणं चरितार्थम् । यद्यपि वार्त्तिकव्याख्यानभाष्ये विकल्पः पठितः, 'बदरामलकानि' 'यूकालिक्षा' इत्युदाहृतं च, किन्तु नाऽसौ वाचनिकः, किन्तु 'विभाषा वृक्षे'तिसूत्रप्राप्तविषयाऽनुवादकः । अन्यथा फलाऽऽदिषु विकल्पविधानेन चारितार्थ्यं नियामकताऽनापत्तौ, 'अविशेषेणैकवद्भावोऽपि नियम्यते' इत्युत्तरभाष्यविरोधाऽऽपत्तिः । किञ्चांऽशे विधायकत्वे, अंशे नियामकत्वे, विधेवैरूप्याऽऽपत्तिः । अपि च प्रकरणस्य नियाम-

'वनस्पति'शब्देन 'वृक्ष'ग्रहणम् । इदं च प्रकरणशेषभूतम्—'एकवचनद्वन्द्वविषयं यद्यच्छास्त्रं प्राप्नोति तद्बहुप्रकृतेरेव' । एतदेवाऽभिप्रेत्य 'अविशेषेण द्वन्द्वप्राप्तिरनेन नियम्यते' इति भाष्ये उक्तम् । तेनाऽबहुप्रकृतेरितरेतरयोग एव । एतेन 'प्लक्षन्यग्रोधावि'त्यत्र 'विभाषे'त्यस्य नियमेऽपि, 'जातिरप्राणिनामि'ति स्यात् । 'बदराऽमलके' इत्यत्र 'जातिरि'त्यस्याऽप्रवृत्तावपि, 'चाऽर्थे' इति विभाषा स्यादि'त्यपास्तम् । यद्यपि वार्त्तिकव्याख्यानभाष्ये फलादिसाधारण्येन 'एषां द्वन्द्वो विभाषैकवद्भवतीति, स च बहुप्रकृतिरेवे'त्युक्तम्, 'बदरामलकम्', 'बदरामलकानी'त्युदाहृतं च, तथाऽपि 'विभाषा वृक्षे'तिसूत्रप्राप्तिविषयाऽनुवाद एव तत्, न तु फलाद्यंशेऽपि विकल्पबोधकम् ।' अत एव 'बहुप्रकृतिरेव तत्र यथा स्या'दित्येव वार्त्तिकप्रयोजनं भाष्ये उक्तम्, न तु फलाद्यंशे विकल्पोऽपि प्रयोजनत्वेनोक्तः । 'बदराऽमलकानी'ति तु 'इत्येवमपि प्राप्ते, नित्यमेकवत्त्वमि'ति कैयटेन व्याख्यातम् । तदाह—जातिरिति नित्यं प्राप्ते इति । 'विकल्पाऽर्थमि'त्यनुषज्यते । स्पष्टं चेदं कैयटे । 'गोमहिषमि'त्युदाहरणं तु प्राप्तिमात्राऽभिप्रायेण । 'चाऽर्थ द्वन्द्व' इत्येव सिद्धेरिति दिक्[1] ।

नन्वेवं 'मृगशकुनि'ग्रहणं व्यर्थम् ।[1] 'चाऽर्थे' इत्यनेन सिद्धत्वात् ।

---

कत्वेन तदन्तर्गतवार्त्तिकस्याऽपि तत्त्वमेवोचितम् । अत एव 'बदरामलके तिष्ठत' इति भाष्यं सङ्गच्छते । भाष्योदाहरणानि तु "'बदरामलकानी'त्यादि प्राप्तो जातिलक्षणो नित्य एकवद्भाव' इत्यर्थपरतया व्याख्येयानीत्याशयेनाह—'जातिरिति' इति ग. पाठः ।

१ इतोऽग्रे—परे त्वेवं भाष्यव्याख्यायाः क्लिष्टत्वं मत्वाऽन्यथा व्याचक्षते—'भाष्यकारः—फलसेनाक्षुद्रजन्तुषु सूत्रकृता नित्यमुक्तोऽप्येकवद्भावो 'विभाषा वृक्षे'ति सूत्रे सूत्रकारेण पठनीय' इत्यभिप्रायेण 'एषां विभाषैकवदि'त्याह । अग्रे तथैव चोदाहृतवान् । 'न बहुव्रीहावि'त्यादिविषये यथोक्तं मुनीनां प्रामाण्येन सूत्रसंमतलक्ष्याऽसाधुत्वकल्पनवदत्रत्यभाष्येङ्गितेन सूत्रसंमता-

---

1 'चाऽर्थे' इत्यनेन उभयोः सिद्धत्वात्' इति ग. पाठः ।

( न च 'एषां द्वन्द्वद्वयमेवे'ति नियमेन वाक्यनिवृत्त्यर्थमिति वाच्यम्। तस्याऽशास्त्रीयत्वेन, विजातीयत्वेन च वारयितुमशक्यत्वात्। न च 'एषामेव द्वन्द्वद्वयमि'ति नियमः। 'चाऽर्थे' इत्यस्य वैयर्थ्यापत्तेः)। अत आह—मृगाणां मृगैरेवेति। 'तेषां तैरेव विभाषितैकवचनो द्वन्द्व' इति

ऽसाधोर्लक्ष्यस्य साधुत्वकल्पने बाधकाऽभावः। किञ्च[1] 'सेनाऽङ्ग'शब्देन सूत्रे तूर्याऽङ्गसाहचर्येण रथिकादीनामेव ग्रहणम्। इह तु रथहस्त्यश्वादीनां ग्रहणम्। 'हस्त्यश्वम्' 'हस्त्यश्वा' इत्येव भाष्ये उदाहरणात्। अत एव 'येन विधिरि'तिसूत्रस्थः 'सङ्ग्रामं हस्त्यश्वरथपदातिभिरि'ति भाष्यप्रयोगोऽप्युपपन्नः। 'पातितै रथनागाश्वैरि'ति च। अन्यथा तत्र मध्यमपदलोपिसमास आश्रयणीयः स्यात्[2]। अन्यच्च 'जातिप्राधान्ये एव 'जातिरि'त्येकवत्त्वम्, द्रव्यप्राधान्ये तु ने'त्यसङ्गतम्। वृक्षांऽशे 'बहुप्रकृतिरि'त्यनेन 'विभाषे'त्यस्यैव नियमे 'प्लक्षन्यग्रोधावि'त्यत्र 'जातिरि'ति नित्यः समाहारः प्राप्नोती'ति भाष्यविरोधात्। द्रव्यप्राधान्ये तदप्रवृत्तौ, तदाऽस्य प्रयोगस्योपपत्तेः। किञ्चैवं 'जातेरि'ति ङीषपि जातिप्राधान्ये एव स्यात्। व्यक्तिप्राधान्यविवक्षायां 'ब्राह्मणे'त्यत्र टापोऽप्यापत्तिः। एवमन्यत्राऽपि जातिकार्येषूह्यम्। तस्माज्जातिप्रवृत्तिनिमित्तकेऽस्य प्रवृत्तिः।

'मृदङ्गशङ्ख'त्यादौ तु न दोषः। 'अप्राणी'तिपर्युदासेन स्थावरचेतनजातेरेव ग्रहणम्। वृक्षाऽऽदीनां, फलानां च क्षतप्ररोहाऽङ्कुराद्युत्पत्त्या चैतन्यं स्पष्टमेव। पर्णस्याऽचेतनत्वात् 'वृक्षपर्णयो'ति प्रयोगोऽप्युपपन्नः। 'घटपटावि'त्यादि च स्वारस्येनैवोपपद्यते इत्याहुः' इति क. कुण्डलितः ख. पाठः।

१ अयं ग. घ. पाठः।

1 'यद्वा सेनाङ्गशब्देन' इति ख. पाठः।

2 इतोऽग्रे—'अन्यच्च वृक्षांऽशे 'बहुप्रकृतिरि'त्यनेनाऽपि भाष्यशङ्का न सामञ्जस्येनोपपन्ना। नाऽपि सूत्रे वृक्षाऽऽदिग्रहणम्' इति ख. पाठः।

नियम इति भावः । तत्फलितमाह—अन्यैस्त्विति । 'समाहार एवे'ति तु न । 'विभाषा वृक्षे'तिसूत्रस्थ'विभाषा'पदेन प्रकरणात्समाहारद्वन्द्वस्यैवाऽभावबोधनेनाऽनेन नियमेनाऽपि तदभावबोधनस्यैव न्याय्यत्वात् ।

यद्वा–'तेषां तैरेवैकवचनो द्वन्द्वो, नाऽन्यैः, स च विभाषे'तिवचनव्यक्तिरिति भावः । एवमिति । 'पूर्वाऽपरशब्दयोरधरोत्तरयोः परस्परं समासे एवैकवत्त्वं, तच्च वा, अन्यैस्त्वितरेतरयोग एवे'त्यर्थः ।

नपुंसकत्वार्थमिति । पशुत्वादेव विकल्पे सिद्धे 'अश्ववडव'ग्रहणं 'स नपुंसकमि'त्यस्य प्रतिपदविधानत्वाऽर्थम् । तेन 'अश्ववडवमि'त्यत्र परमपि 'पूर्ववदश्वे'ति बाधित्वा 'स नपुंसकमि'त्येव । 'त'च्छब्देन विनिगमनाविरहाद्यावदेकवद्भावभाजः परामृश्य, विधीयमानं नपुंसकत्वमेकवद्भाववदेव प्रतिपदविहितम्, अनवकाशं चेति भावः । 'पूर्ववदश्वे'ति त्वेकवद्भावविरहपक्षे साऽवकाशमिति बोध्यम् । न चाऽश्ववडवग्रहणमपि 'परस्परमेवाऽनयोर्द्वन्द्वो विभाषा, अन्येन त्वितरेतरयोग एवे'त्यर्थमेवाऽस्तु, मृगादिसाहचर्यात्, गवाश्वे तु 'गवाश्वप्रभृती'त्याद्यारम्भसामर्थ्यान्न दोष इति वाच्यम् । विधिनियमसम्भवे विधेरेव ज्यायस्त्वेन

---

१ 'न च 'अन्यैः सह समाहारद्वन्द्व' इत्येवास्त्विति वाच्यम् । 'विभाषा वृक्षेति'-सूत्रस्थविभाषापदेन' इति ग. पाठः ।

२ इतोऽग्रे—'किञ्च 'फलसेने'त्यनेनापि 'बहुप्रकृतिकवनस्पतीनामेव द्वन्द्वो विभाषयैकवत् । अन्यप्रकृतिकानां तु नित्यैकवचनान्त एवे'ति नियमाऽऽपत्तौ प्रकृतसूत्रस्थः, 'चाऽर्थ' इति सूत्रस्थश्च 'प्लक्षन्यग्रोधावि'ति भाष्यप्रयोगोऽनुपपन्नः स्यात् । तस्मान्मूलोक्तमेव साधु' इति ग. पाठः ।

३ इतोऽग्रे—'न चैवं तच्छब्दस्य चारितार्थ्यात्प्रकरणान्तरस्थचार्थेद्वन्द्वसूत्रविहितसमाहारद्वन्द्वस्य नपुंसकत्वाऽनापत्तौ, 'संज्ञापरिभाषमि'ति प्रयोगानुपपत्तिरिति वाच्यम् । 'द्विगुरेकवचनमि'त्युत्तरं विध्यधिकारोभय'नपुंसकमि'तिसूत्रेणैव सिद्धे, तच्छब्देन तस्यापि संग्रहादित्याहुः' इति ग. पाठः ।

मूलोक्तस्यैव न्याय्यत्वात्। तेन 'गोऽश्वम्' गोऽश्वा' इति सिद्ध्यतीत्याहुः।

विप्रतिषिद्धं च। विरोधोऽत्र सहाऽनवस्थानलक्षणः। अद्रव्याणां[1] तस्यैव सम्भवात्। अधिकरणं = द्रव्यम्। चो विभाषाऽनुकर्षणाऽर्थः। तदाह—वैकल्पिक इति। वृत्तावपि 'द्वन्द्व एकवद्वा स्यादि'त्येव पाठः।

अद्रव्येति। 'अद्रव्यवाचिनां चेद्विरुद्धार्थानामेवे'ति विपरीतनियमस्तु न। सौत्राऽनुपूर्वीस्वरसभङ्गाऽऽपत्तेः। 'आगन्तूनामन्ते निवेश' इति-न्यायेन एवकारस्य तेनैव सम्बन्धात्। 'शीतोष्णे उदके स्त' इत्यत्र 'चाऽर्थे द्वन्द्व' इत्यनेन पाक्षिकैकवद्भावाऽऽपत्तेश्च। उभयतो नियमस्तु न, मानाऽभावात्, गौरवाच्च।

तेन[3] द्रव्येति। केचित्तु इदमुपलक्षणम्—अभाववचनस्याऽपि। 'अद्रव्ये'ति पर्युदासेन 'द्रव्यभिन्नभाववाचिनामेवे'ति नियमात्। तेन 'गमनाऽऽगमने' इत्यादावितरेतरयोग एव। अत एव 'न विप्रतिषिद्ध-मधिकरणवाचि' 'दधिपयआदीनि' इति लघुभूतं नाऽसूत्रि। ( तद्भुनय-न्नुदाहरति—शीतोष्णे इति )। तमसोऽपि भावपदार्थत्वात् 'प्रकाशतमसी' इत्यादौ पाक्षिकः समाहारो भवत्येवेत्याहुः।

इतरेतरयोग एवेति। 'समाहार एवे'ति तु न, यतोऽत्र 'विभाषे'ति,

---

१ 'अद्रव्यवाचिनाम्' इति ख. ग. पाठः।

२ इतोऽग्र—'किञ्च मध्ये विधेयबोधकचशब्दपाठेन तत्पूर्वभागस्योद्देश्यत्वमेव युक्तम्' इति ग. पाठः।

३ 'तेन द्रव्येति। गुणोपसर्जनद्रव्यवाचिनामित्यर्थः। 'अनधिकरणवाची'त्यस्य पर्युदासत्वेन गुणवाचकस्यैव ग्रहणात्। नियमस्य सजातीयाऽपेक्षत्वेन गुणोपसर्जनद्रव्यवाचके एव समाहारद्वन्द्वनिषेधाच्च। अत एव 'तेजश्च तमश्चे'-त्यादौ पाक्षिकसमाहारद्वन्द्वो भवत्येव। अत एव 'न विप्रतिषिद्धमधिकरण-वाचि' 'दधिपयआदीनि' इति लघुभूत नाऽसूत्रि' इति ग. पाठः।

४ 'फलसेनावनस्पती'तिसाहचर्यात्समाहारे एवेति नाऽऽशङ्क्यम' इति ग. पाठः।

'एकवचनमि'ति चाऽनुवर्त्तते । तत्र 'यो वैकल्पिक एकवचनद्वन्द्वः, स विरुद्धाऽर्थानां चेद् द्रव्यवाचिनामेवे'त्यत्र 'एव'कारबोध्याऽन्ययोगव्यवच्छेदस्य विशेष्यभूतैकवचनद्वन्द्वे एव स्वरसतः प्रतीतेः ।

भवत्येवेति । 'विप्रतिषिद्ध'ग्रहणाऽभावे तु स न स्यात् । सामान्यतः 'अद्रव्यवाचिनामेवे'ति नियमादिति भावः । सूत्रोदाहरणन्तु 'शीतोष्णम्' 'सुखदुःखम्' 'शीतोष्णे' 'सुखदुःखे' इत्यादि ।

'विप्रतिषिद्ध'मित्येतावन्मात्रोक्तौ 'शीतोष्णे जले' इत्यत्राऽतिव्याप्तिः, 'नन्दकपाञ्चजन्यम्' 'नन्दकपाञ्चजन्यावि'त्यादावव्याप्तिश्चेति भावः ।

न दधिपय । नियमप्रक्रमेऽपि नाऽनेन नियमस्यैव निषेधः । गणपठितब्रह्मप्रजापत्यादिषु नियमस्याऽप्राप्तेः । तत्साहचर्यात्, प्रकरणाच्च 'चाऽर्थे द्वन्द्व' इतिसूत्रविहितसमाहारद्वन्द्वस्य, नियममात्रस्य चाऽनेन निषेधः । गणे द्विवचनान्तानामेवैषां पाठः । एतेन 'दधिपयसी' इत्यादौ

---

१ 'एकवचनद्वन्द्वे एवाऽन्वय उचितः । त्वद्रीत्या तु विशेषणे वैकल्पिकत्वे स आपततीति भावः' इति ख. पाठः ।

२ इतोऽग्रे–'एतेन वृत्तौ यत्प्रत्युदाहृतं—'कामक्रोधमि'ति, तत्परास्तम् । कामक्रोधयोर्विरोधाऽभावेऽपि, द्रव्यवाचित्वाऽभावेन, नियमस्यावश्यंकोटाव-प्रवेशेन, 'शीतोष्णम्' 'सुखदुःखमि'त्यादाविव पाक्षिकैकवद्भावस्य दुर्वारत्वात् । इष्टत्वाच्च । 'नियमाऽर्थं इदमि'ति स्थितेः । 'विपरीतनियमस्तु ने' त्युक्तमेव । अत एव 'अनधिकरणेति किम् ? । शीतोष्णे उदके' इति वृत्तिः सङ्गच्छते । विपरीतनियमेऽत्र पाक्षिकैकवद्भावस्येष्टत्वेन, तदसङ्गतिः स्पष्टैव । यत्तु 'कामक्रोधवद्वयोर्द्रव्ये लक्षणे'ति । तन्न । निषिद्धलक्षणाऽऽपत्तेः । अन्यथा गन्धादीनामपि तद्वति द्रव्ये लक्षणया प्रयोगोपपत्तौ 'पूरणगुणे'ति-सूत्रस्थभाष्यविरोधाऽऽपत्तिः' इति ख. ग. पाठः ।

३ इतोऽग्रे 'कामक्रोधम्' इति ग. पाठः ।

४ 'अत एव गणे' इति ख. पाठः ।

'अनन्तरस्ये'[illegible]नप्रयुक्तविकल्पस्य निषेधेऽपि, 'जातिरप्राणिनामि'ति नित्यः स दुर्वारः' इति परास्तम् । तदाह—नैकवदिति ।

( दधिपयसी[2], सर्पिर्मधुनी, मधुसर्पिषी, ब्रह्मप्रजापती, शिववैश्रवणौ, स्कन्दविशाखौ, परिव्राजककौशिकौ, प्रवर्ग्योपसदौ, शुक्लकृष्णे, दीक्षातपसी, मेधातपसी, अध्ययनतपसी, उलूखलमुसले, आद्यवसाने, श्रद्धामेधे । मूलोक्ताश्च—इध्माबर्हिषी, ऋक्सामे, वाङ्मनसे । वृत् ) ।

'अयमाकृतिगण' इति गणरत्नकृत् । न च 'स्कन्दविशाखावि'त्यत्र एकशेषाऽऽपत्तिः । 'स्कन्दश्चैव विशाखश्च द्वौ पुत्रौ सम्बभूवतुरि'ति-भारतस्वरसेनाऽपर्यायत्वनिर्णयात्[3] ।

---

१ इतोग्रे—'देवदत्तहन्तृन्यायेन सिद्धेश्च । नियममात्रनिषेधाच्च । एतेन 'चार्थे द्वन्द्व' इति दुर्वारमित्यप्यपास्तम्' इति ग. पाठः । २ अयं ग. पाठः ।

३ इतोऽग्रे—'ननु नियमसूत्राणां[1] निषेधे तात्पर्यात् 'जातिप्राणिनामि'त्येतदितरेतरयोगनिषेधकम् । एवं चाऽनेन समाहारद्वन्द्वनिषेधे, तेन चेतरेतरयोगनिषेधे, 'दधिपयसी' इत्यादौ द्वन्द्व एव न स्यात् । '[2]तात्पर्यविषयनिषेधस्यैवाऽयं निषेध' इत्यङ्गीकारे तु 'चाऽर्थे द्वन्द्व' इति सूत्रेणोभयं [3]स्यादिति चेन्न । द्विवचनाऽन्तगणपाठसामर्थ्यादेतद्विषये एकवचनद्वन्द्वविषयं यच्छास्त्रं प्राप्तं विधायकं, नियामकं वा, तस्य सर्वस्यैव निषेधाऽङ्गीकारेणाऽदोषादित्याहुः' इति ख. पाठः, क. कुण्डलितः ।

---

1 'निषेधमुखेन प्रवृत्तौ' इति ख. पाठः ।

2 'कल्प्यमाननिषेधस्यैवाऽयं निषेधः' इति ख. पाठः ।

3 'उभयं स्यात् । क्वचिन्निषेधस्य निषेधः, 'ब्रह्मप्रजापती' इत्यादौ क्वचित्समाहारस्येति वैरूप्यापत्तिश्चेति चेन्न । विधिमुखेन प्रवृत्तिः, सामान्यशास्त्रसङ्कोचकता चेति पक्षस्यैवाऽत्र लक्ष्यानुरोधेन स्वीकारात् । एवञ्च सङ्कोचकाऽप्रवृत्त्याचेतद्विषये सामान्यशास्त्रसङ्कोचाऽभावादितरेतरयोगो भवत्येवेति दिक्' इति ग. पाठः ।

अधिकरणैता । समासाऽर्थस्य अधिकरणम् = वर्त्तिपदार्थरूपं द्रव्यम्, तस्य एतावत्त्वम् = परिमाणनियमः । स चेह सङ्ख्याकृत एव, व्याख्यानादिति व्याचष्टे—द्रव्यसङ्ख्येति । नियमो नेति । पूर्वसूत्रवत् सामान्यतो निषेधे मानाऽभावात्, नियमप्रकरणाच्च नियमस्यैव निषेध इति भावः । किञ्च समाहारद्वन्द्वनिषेधे 'दश दन्तोष्ठा' इति न स्यात् । अनेन समाहारद्वन्द्वस्य, 'प्राण्यङ्गानां समाहार एवे'त्यनेन इतरेतरयोगस्य च निषेधेन, वाक्यस्यैवाऽऽपत्तेः । किञ्च वर्त्तिपदार्थस्य सङ्ख्याविशेषे बोधनीये, सापेक्षत्वेनाऽसामर्थ्यात्समाहारे द्वन्द्वस्य प्राप्तिरेव नेति, तन्निषेधो व्यर्थः ।

न च 'दश पञ्चपूल्य' इति समाहारे, द्विगुवत्प्रधानभूते समाहारे दशत्वाऽन्वयविवक्षायां प्राप्तसमाहारद्वन्द्वस्य निषेधोऽस्त्विति वाच्यम् । द्रव्यसङ्ख्याऽनवगमेन (तत्र) एतत्सूत्रोऽप्राप्तेः[2] । न चोक्तन्यायेनेतरेतरयोगद्वन्द्वोऽपि न स्यात् । तत्र प्रधानस्य साऽपेक्षत्वेनाऽदोषात् । मम तु प्राण्यङ्गादिषु 'द्वन्द्वश्चे'ति नियमादितरेतरयोगस्याऽप्राप्तौ, तद्विधानेन

---

१　इतोऽग्रे—'एवं च 'ये च त्विहाऽऽस्याकूत्रिकरेष्वभिख्या भिक्षाऽधुना माधुकरी सदक्षा' इत्याद्यसाधु स्यात्' इति ख. घ. पाठः ।

२　इतोऽग्रे—'परम्परासम्बन्धेन यथाकथञ्चिद् द्रव्यसङ्ख्याऽवगमे च सूत्रप्रवृत्तौ न किञ्चिन्मानम् । न च तथापि सूत्रवैयर्थ्यम्, समाहारे द्वन्द्वस्यैव प्राप्तेरिति वाच्यम् । प्राण्यङ्गादिषु 'द्वन्द्वश्चे'ति नियमात्तस्याऽप्यप्राप्तौ, तद्विधानेन चारितार्थ्यात् । न च नियमेन समाहारद्वन्द्वप्राप्तिविषये एव तन्निषेधबोधनात्कथमत्र 'द्वन्द्वश्चे'त्यस्य प्राप्तिरिति वाच्यम् । 'पाणिपादमि'त्यत्राऽपि समाहारस्य विशेष्यत्वेन इतरेतरयोगस्याऽप्राप्तौ, प्रकरणस्य नियामकताऽनापत्तेः । यदि तु प्रकरणसामर्थ्यादवान्तरभेदमनादृत्य प्राण्यङ्गत्वादिरूपोपाध्याश्रयणेन 'प्राण्यङ्गादीनां यदि द्वन्द्वस्तर्हि समाहार एवे'ति वचनव्यक्त्या इतरेतरयोगस्यावृत्तिस्तर्हि प्रकृतेऽपि न दोषः' इति ख. ग. पाठः ।

चारितार्थ्यं स्पष्टमेव। न च नियमनिषेधे उभयोरापत्तिः। असामर्थ्येन समाहारे तदप्राप्तेः।

दश दन्तोष्ठा इति। समाहारे दशत्वस्याऽन्वयविवक्षायां 'दश दन्तोष्ठानी'त्यपि भवत्येवेति बोध्यम्। केचित्तु[1] दन्तोष्ठद्वारकसम्बन्धेन दशत्वस्य समाहारेऽन्वयविवक्षायामस्त्येव समाहारे द्वन्द्वप्राप्तिः। तस्मात्पूर्वसूत्रवदयमप्युभयोर्निषेधः। अत एवोत्तरसूत्रविषये समाहारद्वन्द्वसिद्धिः। सामर्थ्येनाऽसामर्थ्ये समासकल्पनाऽपेक्षया एवमन्वयकल्पनस्यैवौचित्यात्। किञ्च यदा 'इतरेतरयोगेऽप्युद्भूताऽवयवभेदः समूह एव समासाऽर्थः, स चाऽवयवलिङ्गादिभिस्तद्वानि'ति मतम्, तदा सापेक्षत्वात्तस्याऽप्यप्राप्तिरिति, मदुक्तमेव शरणम्। अपि च नियमेन समाहारद्वन्द्वप्राप्तिविषये एवेतरेतरयोगनिवृत्तिबोधनादत्र 'द्वन्द्वश्चे'त्यादेः प्राप्तेरेवाऽभावेन, कस्याऽनेन निषेधः स्यादित्याहुः।[2]

सामीप्येन परिच्छेद इति। सौत्रसमीपशब्दः सामीप्येन परिच्छेदे[3] लाक्षणिक इति भावः। यद्यपीह 'समाहारद्वन्द्वो वे'ति व्याख्यानेऽपि न क्षतिस्तथाऽपि प्रक्रममनुरुद्ध्याऽऽह—नियमो वा[4] स्यादिति।

---

१ इतोऽग्रे—'यत्तु 'समाहारद्वन्द्वविषये सापेक्षत्वेऽपि, नाऽसामर्थ्य'मिति। तन्न। धवे एव देवदत्ताऽन्वयविवक्षायां 'देवदत्तस्य धवखदिरमि'ति प्रयोगापत्तेः। मानाऽभावाच्च। एतत्सूत्रसार्थक्यं तूक्तमेवेति दिक्' इति ख. पाठः।

२ 'न चैवं 'विभाषा समीपे' इत्युत्तरसूत्रं व्यर्थम्, विवक्षाभेदेन प्रयोगद्वयस्योपपत्तेरिति वाच्यम्। वर्त्तिपदार्थेषु सङ्ख्यान्वयेऽसामर्थ्यादप्राप्तसमाहारद्वन्द्वप्राप्त्यर्थत्वात्। पूर्वसूत्रविषये तथाकल्पने न किञ्चिन्मानम्। वैयर्थ्यस्याऽत्रैवोपस्थितत्वात्' इति ग. पाठः।

३ इतोऽग्रे—'सामीप्यवत्सङ्ख्यया परिच्छेदे इत्यर्थः' इति ग. पाठः।

४ इतोऽग्रे—'दशत्वसङ्ख्यासमीपसङ्ख्यावद्दन्तोष्ठसमाहार इत्यर्थः' इति ग. पाठः।

उपदशं दन्तोष्ठमिति । 'दशसमीपदन्तोष्ठसमाहार' इत्यर्थः । दश-सामीप्यं च-तद्वृत्तिसङ्ख्यासमीपसङ्ख्यावत्त्वेनेति बोध्यम् । इतरेतरयोगे तु बहुव्रीहेरेवाऽनुप्रयोगः । तस्य समीपिप्रधानत्वात् । तत्राऽव्ययीभावा-ऽनुप्रयोगस्तु न । समानलिङ्गवचनत्वेन बहुव्रीह्यनुप्रयोगस्यैव न्याय्य-त्वात् । अत एव समारद्वन्द्वे न बहुव्रीह्यनुप्रयोगः, किन्त्वव्ययीभाव-स्यैवेति । यद्यपि केचिन्मतरीत्या समाहारे बहुव्रीह्यनुप्रयोगेऽपि, तस्य अवयवद्वारकसम्बन्धेन समुदायाऽर्थेऽन्वयेन, द्वन्द्वाऽर्थे भेदेनाऽन्वयात्, द्वन्द्वाऽर्थस्यैकवद्भावादेकवत्त्वे 'उपदशमि'ति सिद्ध्यति, तथाऽपि षष्ठ्येक-वचनादौ 'उपदशस्य पाणिपादस्ये'त्यपि स्यात् । 'उपदशं पाणिपादस्ये'-त्येवेष्यते । अव्ययीभावाऽनुप्रयोगे त्वव्ययतया न दोषः । समाहारे दशसामीप्याऽन्वयविवक्षायान्तु 'उपदशं दन्तोष्ठानी'ति बोध्यम् । अव्ययी-भावाऽनुप्रयोगे सामानाधिकरण्यन्तु समीप-समीपिनोरभेदविवक्षयेति स्पष्टं भाष्ये इति दिक् ।

आनङ् । 'ऋतो विद्यायोनी'त्यतो 'विद्यायोनी'त्याद्यनुवर्त्तते । न चैवम् 'ऋत' इत्यस्याऽप्यनुवृत्त्यैव सिद्धौ, किम् 'ऋत' इत्यनेनेति वाच्यम् । तस्य हि स्थानित्वेनैव सम्बन्धः स्यात् । इदं तु सामर्थ्यात् द्वन्द्व-विशेषणम् । तेन पितृपितामहाऽऽदौ नाऽऽनङ् । नकारोच्चारणम्

---

१ इतोऽग्रे—न च 'नामार्थयोरभेदाऽन्वय' इति व्युत्पत्तिविरोधः । नामजन्य-प्रतीतिविशेष्ययोरेवाऽन्वये तथा व्युत्पत्तेः । 'उपदश'मित्यस्याऽव्ययत्वाच्च । अत एव समाहारद्वन्द्वपक्षेऽव्ययीभावस्यैवाऽनुप्रयोगः । समासान्तर्गतदन्तो-ष्ठस्याऽसङ्ख्येयत्वेन तथाऽनुप्रयोगस्यैव न्याय्यत्वात् । इतरेतरयोगे तु बहुव्रीहेरेवाऽनुप्रयोगः । तस्य समीपिप्रधानत्वात् । तत्राऽव्ययीभावा-ऽनुप्रयोगे तु 'नामार्थयोरि'तिव्युत्पत्तिविरोधः स्यादिति दिक्' इति ग. पाठः ।

२ इतोऽग्रे—'वर्त्तिपदाऽर्थेषु सामीप्याऽन्वयेनाऽसामर्थ्येऽप्येतत्सामर्थ्यादेव समाहारद्वन्द्वः । केचिन्मते तु शङ्कैव न' इति ख. पाठः ।

'उरण्रपर'व्यावृत्त्यर्थम्। अत्र ऋकारस्य निर्दिश्यमानत्वेऽपि, ङकारो 'मित्रावरुणावि'त्यादौ देवताद्वन्द्वविषयेऽन्त्याऽऽदेशाऽर्थः। 'उत्तरपदे' इति चाऽधिकारः। होतेति। एषां विद्याद्वारकैकयज्ञर्त्विक्त्वकृतः सम्बन्धः। मातेति। अत्र योनिकृतः।

मण्डूकेति। अत एव मध्ये न सम्बन्धः। तच्च वाक्यभेदेन सम्बध्यते। 'ऋत' इत्यनुवर्त्तते। 'ऋदन्तस्य पुत्रशब्दे परे आनङि'-त्यर्थः। तेन 'तातपुत्रावि'त्यादौ न।

देवतेति। अनुकाराऽर्थम, अविद्यादिसम्बन्धाऽर्थं च वचनम्।

प्रसिद्धेति। 'द्वन्द्वं रहस्ये'ति सूत्रेऽभिव्यक्तिग्रहणेनाऽत्यन्तसहचरित-युगले 'द्वन्द्व'शब्दस्य निपातनादिति भावः। प्रसिद्धिस्त्वेकहविर्भागित्वेन, प्रसिद्धसाहचर्यतया वा। तत्राऽऽद्या प्रसिद्धिस्तु कल्पसूत्रवेदयोर्ग्राह्या।

इत्यादाविति। 'स्कन्दविशाखौ' 'शिववैश्रवणावि'त्याद्यर्थः।

ईदग्नेः। देवताद्वन्द्व इत्येवेति। ज्योतिर्लताविषयः 'अग्नीषोमौ प्रणेष्यामी'त्याश्वलायनप्रयोगस्तु तयोर्देवतात्वाऽऽरोपेण बोध्यः।

अग्नेः स्तुत्। 'सात्पदाद्योरि'त्यस्याऽपवादः।

अग्निष्टुत्—क्रतुविशेषः। सम्पदादित्वादधिकरणे क्विप्।

अग्निष्टोम इति। सोमयागस्याऽऽद्या संस्थोच्यते।

---

१ इतोऽग्रे—न च 'ऋत' इत्यनुवर्त्यं तस्यैव स्थानित्वान्ङित्त्वं व्यर्थम्, उत्तरपदेन पूर्वपदाऽनाक्षेपाच्च तदन्तविधिरिति वाच्यम्। 'मित्रावरुणावि'-त्यादावन्त्याऽऽदेशाऽर्थत्वात्' इति ग. पाठः।

२ तुः क. नास्ति।

३ 'प्रयोगस्त्वार्षः' इति ख. पाठः। 'छान्दसत्वाद् बोध्यः' इति ग. पाठः।

४ इतोऽग्रे—'दीर्घात्सोमस्ये'तिवार्त्तिकोदाहरणे देवताद्वन्द्वाऽभावात्षत्वा-ऽभावः। अत एव 'अग्निसोमौ तिष्ठत' इत्येव। 'ज्योतिर्मत्तयाऽग्नि-शब्दसाहचर्यात्सोमो देवतैव गृह्यते' इति केचित्। भाष्ये तु 'दीर्घात्-

इद्वृद्धौ । ( तकार उच्चारणाऽर्थः ) । 'वृद्धि'शब्देन च तद्वत् लक्ष्यते । तद्रूपोत्तरपदाऽसम्भवात् । तदाह—वृद्धिमतीति । नन्वन्तरङ्गत्वात्पूर्वमानङीत्त्वे स्याताम्[2] । अकृतव्यूहपरिभाषा तु समर्थग्रहणात्तद्धितविषये नेत्यत आह—अलौकिक इति । तद्धितविषयसमासाऽलौकिके इत्यर्थः । वृद्धिमत्त्वं चोत्तरपदस्य भाव्येव निमित्तम् । आग्नावैष्णवमिति । ह्रस्वाऽभावादानङेव । द्यावाक्षामेति । 'द्यावाक्षामा रुक्मोऽन्तर्विभाती'त्यत्रत्यमिदम् । तत्रैकं पदम् । द्वन्द्वसमासः । 'दिवो द्यावे'ति द्यावाऽऽदेशः । 'सुपां सुलुगि'ति षष्ठ्या डादेशः । 'देवताद्वन्द्वे चे'ति पूर्वोत्तरपदयोः प्रकृतिस्वर इति वेदभाष्ये स्पष्टम्[3] । अकारोच्चारणमिति । स[4] चेत्संज्ञः । तेन प्रयोगे विकाराऽभावोऽनुमीयते इति भावः । द्यावा चिदस्मै इति ।

---

सोमस्ये'ति च गौणमुख्यन्यायमाश्रित्य प्रत्याख्यातम् । तद्रीत्या त्वत्र षत्वं भवत्येवेति प्रतीमः' इति ग. पाठः ।

1 अयं ग. पाठः । तत्त्वबोधिन्यादावपि च दृश्यते ।

2 'यद्यप्यन्तरङ्गत्वं तयोः, तथाप्युपजनिष्यमाणोऽप्यपवाद इति न्यायाद्य तौ' इति ग. पाठः ।

3 इतोऽग्रे—'यत्तु सरूपसूत्रे, 'चाऽर्थे द्वन्द्व' इति सूत्रे च 'द्यावा ह क्षामे'त्युदाहृतं युगपदधिकरणवचनतासाधकत्वेन । तत 'द्यावा ह क्षामा प्रथमे ऋतेने'ति मन्त्रस्थम् । तत्रेतरेतराऽपेक्षयोभयत्राऽपि द्विवचनम् । 'द्यो'शब्दाद् द्विवचने, 'गोतो णिदि'ति णित्वे, 'सुपां सुलुगि'त्याकारः । प्रथमे = प्रथाने, दिवस्पृथिव्यौ इति तदर्थः । 'ह'शब्दोऽसमासद्योतकः' इति क. कुण्डलितः ख. घ. पाठः ।

4 'स चोच्चारणार्थो, नेत्सञ्ज्ञः । फलाऽभावात् । अनुनासिकत्वे मानाऽभावाच्च । नाऽपि विवक्षितः । प्रयोगेऽश्रवणात् । तदुच्चारणं हि सूत्रे सान्तस्य श्रवणं यथा स्यादिति । तदपि श्रूयमाणसकारान्तादेशस्य विधानं यथा स्यादिति । तेन प्रयोगे विकाराऽभावोऽनुमीयते इति भावः' इति ग. पाठः ।

'द्यावा चिदस्मै पृथिवी संनमेते' इत्यत्रत्यमिदम्। 'चिदस्मै' इत्यनेन व्यवधानात्समासाऽभावनिर्णयः। तत्र समासाऽभावेऽपि द्यावादेशः। इतरेतराऽपेक्षया द्विवचनम्, 'प्रमित्रयोर्वरुणयोरि'तिवत्। अत एव पदकाले 'पृथिवी इनी'ति प्रगृह्यं पठन्ति। अत एव 'संनमेते' इत्यनेन सामानाधिकरण्यमित्यर्थः। तत्र 'वा छन्दसी'ति पूर्वसवर्णः। अपरे तु 'द्यो'शब्दस्यैव द्विर्वचने 'गोत' इति णित्त्वे 'सुपां सुलुगि'त्याकारः। ध्वनितं चेदं 'चाऽर्थे द्वन्द्व' इत्यत्र कैयटे इत्याहुः। विसर्गमिति। तेन 'क्वचिद्विकारो ने'त्येवाऽनुमेयम्, लक्ष्याऽनुरोधादिति भावः।

मातरपितरौ। मातृशब्दस्याऽरङादेशो निपात्यते। उत्तरखण्डे तु 'ऋतो ङी'त्येव सिद्धम्। एकशेषस्य वैकल्पिकत्वात्, द्वन्द्वः। इदं च वृत्तिकैयटयोः स्पष्टम्। यद्यपि भाष्ये 'पितरामातरा च छन्दसी'ति सूत्रम्, इदं सूत्रं च धृत्वा 'पूर्वोत्तरपदयोररराऽरौ निपात्येते' इत्युक्तम्,

१ 'द्योशब्दस्यैवाऽत्राऽपि 'द्यावावि'ति पूर्ववत्। इतरत्समानम्' इति ख. घ. पाठः।

२ 'यत्तु भाष्ये 'मातरपितरावुदीचाम्'। 'पितरामातरा च छन्दसि'। किं निपात्यते?। पूर्वोत्तरपदयोर्ऋकारस्याऽराऽरौ। 'मातरपितरौ भोजय'। 'आ मा गन्तां पितरामातरा चे'ति। 'पूर्वोत्तरपदयोरि'त्युक्तत्वेनोत्तरपदेऽप्यरङादेश-निपातनाद्भ्यामादौ 'मातरपितराभ्यामि'त्यादि भवती'ति। तत्तु भाष्यानव-बोधात्। उभयत्र निपातनस्योत्तरसूत्रविषयत्वात्। तत्र हि चकारेण व्यस्य-स्तानुपूर्व्या अपि बोधनेन, 'मातरापितरा नू चिदिष्टावि'ति प्रयोगसत्त्वेन च, मातृशब्देऽपि निपातनावश्यकत्वात्। 'पूर्वोत्तरपदयोरि'त्यस्य च 'पूर्वोत्तर-सूत्रोपात्तपदयोः परत' इत्यर्थः। सप्तम्यन्तं चैतत्। 'अराऽरावि'त्यत्रैकशेषस्तु न। उत्तरसूत्रविषये 'अरा'शब्दस्यादेशस्य विधानात्। किञ्च 'औ'रूप-द्विवचनाऽविवक्षायां मानाऽभावेनाऽन्यत्र निपातनस्याऽभाव एव। अत एव 'मातरापितरा उदीचामि'ति नाऽसूत्रि, 'मातरपितरमि'ति वा। तेनेतरे-तरयोगविषय एव निपातनम्। अपि चोत्तरसूत्रोदाहरणविषये भ्यामादेः

तथाऽपि तत्र 'पूर्वोत्तरपदयोरि'ति सप्तमी । 'तयोः सतोः पूर्वपदस्येत्यर्थ' इति कैयटः । अत एव 'उत्तरपदे' इत्यधिकृतस्य न बाधः । विस्तरस्तु भाष्यप्रदीपोद्द्योते द्रष्टव्यः ।

द्वन्द्वाच्चु । 'चु' इति वर्गग्रहणम् । तत्फलं 'त्वक्स्रजम्' । यद्यपि 'वाक्त्वचमि'ति प्रयोगे 'त्वक्'शब्दो लघ्वक्षरम्, तथाऽपि समर्थसूत्रस्थभाष्यप्रामाण्यात्परनिपाताऽस्येत्याहुः । बहूनां द्वन्द्वे-'वाक्स्रक्त्वचम्' । द्वन्द्वगर्भद्वन्द्वे तु-'वाक्स्रजत्वचम्' ।

इति द्वन्द्वः ।



'सुपां सुलुगि'त्याकारे, उत्तरखण्डेऽप्यरादेशनिपातनमावश्यकम् । ध्वनितं चेदं वृत्तिकैयटादिष्विवत्याहुः' इति ग. पाठः ।

## अथ एकशेषप्रकरणम् ।

अपवादसङ्गत्याऽऽह—अथेति ।

विरूपाणाम् । सौत्र'सरूप'शब्दस्य रूप्यते = बोध्यते इति व्युत्पत्त्याऽर्थपरतयाऽपि व्याख्यानादिदं सिद्धमित्याहुः[1] ।

वृद्धो यूना । 'वृद्धमि'ति पाणिन्युक्तगोत्रसंज्ञस्य प्राचां संज्ञा । 'अपत्यमन्तर्हितं वृद्धमि'ति तदुक्तेः । तस्यैव चेह ग्रहणम्, न तु 'वृद्धिर्यस्ये'त्यादेः । अपत्यवाचकेन कृत्रिमेण यूना साहचर्यात् । व्याख्यानाच्च । तदाह—गोत्रमिति[2] । युवप्रत्ययमात्रेति । 'गोत्रे[3]-युवत्वप्रतीतिमात्रे'त्यर्थः[4] ।

कृत्स्नमिति । आर्थम्, शाब्दं चेत्यर्थः । एतद्द्वयमप्येवकारलभ्यम्, 'तत्कृत एव विशेषश्चेत्, न तु तत्कृताऽतिरिक्तो विशेषश्चेदि'त्यर्थात्[5] ।

भार्गवित्तीति । गोत्राऽपत्ये 'अत इञ्' । यूनि तदन्तात् 'वृद्धाट्ठक् सौवीरेष्वि'ति कुत्सायां ठक् । अत्र कुत्सा, सौवीरगोत्रं चाऽधिकमपेक्ष्यते,

---

१ इतोऽग्रे—'सरूपत्वं चाऽन्यूनाऽनधिकाऽर्थकत्वम् । तेन 'अश्वश्च सैन्धवश्चे'त्यत्र नैकशेषः । सूत्रे 'सरूपाण्येवे'ति नियमाऽऽश्रयणात्' इति ग. घ. पाठः ।

२ 'गोत्रे'ति ख. घ. पाठः, लघुशेखरे च । क. नास्ति ।

३ इतोऽग्रे–'गोत्रं यूने'त्येव तु नोक्तम् । अपत्याऽधिकारादन्यत्राऽपत्यमात्ररूपलौकिकगोत्रग्रहणस्य वक्ष्यमाणत्वात्तस्य ग्रहणापत्तौ, 'औपगवोऽनन्तरः, औपगविश्च युवे'त्यत्रैकशेषाऽऽपत्तेरित्येके' इति ग. पाठः ।

४ इतोऽग्रे—'एवकारलभ्योऽयमर्थः' इति ख. ग. पाठः ।

५ इतोऽग्रे—'इदं 'सरूप'ग्रहणाऽनुवृत्तेर्लभ्यते । सारूप्यं तदुपात्तविशेषाऽतिरेकेण ग्राह्यम् । 'तल्लक्षण एवे'ति वचनव्यक्त्या यावद्विशेषस्य तल्लक्षणत्वलाभेन तल्लाभः' इति ख. घ. पाठः, क. कुण्डलितः ।

न तु युवत्वमात्रकृतं वैलक्षण्यमिति भावः । गार्ग्यवात्स्यायनाविति । इह प्रकृत्यंशवैरूप्यं, न गोत्राऽऽदिकृतमित्यर्थः ।

स्त्रीपुम् । स्त्रीत्वस्य वैरूप्यकारणस्याऽऽधिक्यात्पूर्वेणाऽप्राप्तौ वचनम् । 'तल्लक्षणश्चेदेव विशेष' इतीहाऽपि सम्बध्यते । तेन 'गार्गी च वात्स्यायनश्च', 'भागवित्ती च भागवित्तिकश्चे'त्यादौ नाऽतिप्रसङ्गः । पुंवत्त्वकृतवैलक्षण्यं स्फुटीकर्त्तुं द्विवचनाऽन्तेन विग्रहमाह-गार्ग्यायणौ चेति ।

अर्थाऽतिदेशस्य फलमाह—अनुवर्त्तमाने इति । 'तद्राजस्य बहुष्वि'-त्यतः । रूपाद्यतिदेशे स्त्रीत्वस्याऽनिवर्त्तनाल्लुक् न स्यादिति भावः ।

पुमान् । अत्र 'सरूपाणामि'ति वर्त्तते । तेन 'हंसश्च वरटा चे'त्यत्र हंसत्वजातिसाम्ये, शब्दवैलक्षण्यस्य स्त्रीत्व पुंस्त्वमात्रप्रयुक्तत्वेऽपि, नाऽतिप्रसङ्गः । सारूप्ये सति, तल्लक्षणविशेषे एवैतत्प्रवृत्तेः । अत एव 'भ्रातृपुत्रावि'ति चरितार्थम् । तदुक्तं भाष्ये-'यत्रोर्द्ध्वं[1] प्रकृतेस्तल्लक्षण एव विशेषः, तत्रैकशेषो भवती'ति । प्रकृतिश्चैकशेषविधौ साक्षादर्थद्वारा वोपात्तप्रत्ययस्यैव ग्राह्या । एवञ्च 'वृद्धो' 'यूने'त्यनयोरपि तस्योपरञ्जकतया सम्बन्ध इति न मण्डूकाऽनुवृत्तिः । सारूप्यञ्च तत्तत्कृतविशेषाऽतिरेकेण बोध्यम् । तल्लक्षण एवेति किम् ? । इन्द्रेन्द्राण्यौ । अत्र पुंयोगकृतोऽपि विशेषः ।

ननु गौरेष, गौश्चैषा, तयोः सहोक्तौ 'एतौ गावावि'ति नियमतो न स्यात् । तल्लक्षणविशेषाऽभावादेतत्सूत्राऽप्राप्तेः । 'सरूपाणामि'त्येकशेषे तु पक्षे स्त्रीवाचकस्याऽपि शेषाऽऽपत्तिः । न च 'गावावि'त्यत्र रूपे विशेषाऽभावेन, अनुप्रयोगे च 'त्यदादीनी'त्येकशेषे 'त्यदादितः शेषे पुंनपुंसकत' इत्युक्तेः 'एतावि'त्यस्य नियमेन सिद्धिरिति वाच्यम् । 'अद्वन्द्वतत्पुरुषविशेषणानामि'त्यत्र 'द्वन्द्व'पदेन तदपवादैकशेषस्याऽप्युप-

---

१ इतोऽग्रे—'अन्तरङ्गत्वाद्विभक्त्युपत्तेः पूर्वमेव प्रातिपदिकानामेकशेषेण, तेषु तल्लक्षणविशेषाऽभावात्' इति ग. पाठः ।

लक्षणात्तदप्राप्तेरिति वक्ष्यते। न च 'एते गावावि'त्यत्रेष्टाऽऽपत्तिरेव अस्त्विति वाच्यम्। कैयटादिविरोधात्। तर्हि 'पुमान्स्त्रिये'ति तत्रैकशेष उक्त इति चेन्न। 'चे'देव'शब्दोपादानसामर्थ्यात् 'विशेषश्चेत्तल्लक्षण एवे'त्यन्वयेन तदितरकृतविशेषविरहरूपे विशिष्टाऽभावे तात्पर्यान्न दोषः। स चेह विशेष्याऽभावादस्त्येव।

अत्र विभक्ताविव्यनुवर्त्तने 'विभक्तौ तदितरकृतविशेषविरहश्चेदि'-त्यर्थः। अत एव जननी-परिच्छेत्तृवाचकमातृशब्दयोर्नैकशेषः।

हंसाविति। ननु शिष्यमाणस्य लुप्यमानाऽर्थोऽभिधायित्वात्स्त्र्यर्थ-स्याऽप्युक्तत्वेन स्त्रीप्रत्ययो दुर्वार इति चेन्न। हंसत्वेनैव तत्स्त्र्युक्तेरपि स्त्रीत्वाऽनालिङ्गनेन बोधेनाऽदोषात्।

'ब्राह्मणीवत्सश्च ब्राह्मणवत्सा चे'त्यत्र नैकशेषः। यत्र प्रधानगतस्त्रीत्व-पुंस्त्वकृत एव विशेषस्तत्रैवैकशेषप्रवृत्तेः। इह चाऽप्रधानगत-तत्कृत-विशेषस्याऽपि सत्त्वात्। यतः स्त्रीपुंसयोः सहविवक्षायामेवैकशेषः। सहविवक्षा च प्रधानयोरेवेति, 'तल्लक्षणश्चेदेवे'त्यनुवृत्तघटक-'त'च्छब्देन तयोरेव परामर्श इत्याहुः।

**नपुंसकमन**। 'अन्यतरस्यामि'ति 'एकवच्चे'त्यनेनैव सम्बध्यते।

---

१ इतोऽग्रे—'त्यदादीनां, त्यदादिभिन्नानां च सहविवक्षायां, यत्रैकशेषेण त्यदादिभिन्नानां निवृत्तिः, त्यदादीनां च यत्र स्थितिस्तत्रैव तत्प्रवृत्तेश्च' इति ग. पाठः।

२ स्त्रीलिङ्गस्य शेषे स्त्रियां प्रथमाद्विवचने 'एते' इति रूपमिति बोध्यम्।

३ 'स्त्रीप्रत्ययो दुर्वार इति चेन्न। 'स्त्रीपुंसयोरि'ति वक्तव्ये, वैरूप्येण निर्देशात् 'शिष्यमाणतो लिङ्गम्, न तु लुप्यमानतोऽपी'त्यर्थज्ञापनेऽदोषादित्याहुः' इति ख. घ. पाठः।

४ 'यत्र प्रधानयोरेव स्त्रीपुंसयोर्विशेषप्रयोजकता, तत्रैवैकशेषप्रवृत्तेः। इह चा-ऽप्रधानकृतविशेषस्याऽपि सत्त्वात्' इति ग. पाठः।

आनन्तर्यात् । त्वर्थ-'च'शब्दाच्चेत्याह—तच्च वेति । अनपुंसकेनेति किम् ? । शुक्लं च शुक्लं च शुक्ले । अत्रैकवत्त्वं न । 'अस्य'ग्रहणमस्यैव एकवद्भाव इति बोधनाऽर्थम् । अन्यथोत्तरत्राऽप्यनुवृत्तिः सम्भाव्येतेत्याहुः । समाहारद्वन्द्वविषये एकशेषाऽभावज्ञापनाय चाऽत्र 'एकवच्चे'ति । 'घटघटमि'त्यादि त्वनभिधानान्न । एवञ्चाऽनभिधानस्याऽऽवश्यकत्वेन, द्वन्द्वमात्रस्य तदाश्रित्य, अनेकार्थेऽप्येकशब्दस्य तदर्थकत्वेन प्रयोगसिद्धिमाश्रित्य, एकशेषप्रकरणं भाष्ये प्रत्याख्यातम् । अन्यथा एकशेषारम्भेऽपि 'गार्ग्यावि'त्यादितो 'गार्ग्य-गार्ग्यायण'बोधो न स्यात् । तस्य तदर्थकत्वाऽभावादिति दिक् ।

गुणे शुक्लाऽऽदिपदानां पुंस्त्वाद्गुणिपरतां स्फोरयितुं पटाऽऽदिपदोपादानम् । एवं च गुणपरतायां 'नीलो रूपमि'त्याद्येव प्रयोगः ।

गुणिपरत्वे तु विशेष्यलिङ्गता । तदुक्तम्—

'गुणे शुक्लादयः पुंसि, गुणिलिङ्गास्तु तद्वति' । इति ।

तथा 'स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।

गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः' ॥

यादृशैः = यल्लिङ्गकैः, स्त्रीदाराद्यैः पदैः, यत् = अर्थरूपं, विशेष्यत्वेन

---

१ इतोऽग्रे—'ननु समाहारद्वन्द्वविषयेऽप्येकशेषस्योपपादनात् 'एकवच्चे'त्यादि व्यर्थमिति चेन्न । विशेषसूत्राणां तद्विषयेऽप्रवृत्तिज्ञापनाऽर्थत्वात् । अत एव 'गार्ग्यश्च गार्ग्यायणश्चे'ति विग्रहे 'गार्ग्यायणम्'[1] इति न साधु । वस्तुतस्तु जातिव्यक्त्यन्यतरपदार्थाऽऽश्रयेण वचनद्वयस्य सिद्धिमाश्रित्य भाष्ये प्रत्याख्यानात्स्पष्टाऽर्थमेवैतत् । अनभिधानमन्यत्र भाष्यमते इत्याहुः' इति क. कुण्डलितः ख. घ. पाठः ।

---

1 'गार्ग्यायण'इति साधु । 'अत एव वा 'अस्य'ग्रहणं चरितार्थम् । अन्यत्रैकवद्भावप्रयोजकीभूतैकशेषाऽभावबोधनार्थं हि तत् । अननुवृत्तिस्त्वस्वरितत्वादपि सिद्धा' इति ग. घ. पाठः ।

प्रस्तुतं, तस्य गुणद्रव्यक्रियाशब्दाः, तथा = तल्लिङ्गाः सन्तो, भेदकाः = विशेषणानीत्यर्थः । गौरी स्त्री, गौरा दाराः, गौरं कलत्रम् । दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम् । पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रमित्युदाहरणानि । 'नमयति धनुरैशं यस्तदारोपणेन त्रिभुवनजयलक्ष्मीमैथिली तस्य दाराः' इति हनुमन्नाटकपद्ये तु 'दाराः' इत्यस्यैव विशेषणत्वान्न दोष इति बहवः । न च 'गुणे शुक्लादयः पुंसी'ति विशेष्याऽनुपादाने प्राप्तस्य सामान्ये नपुंसकस्यैवाऽपवाद इति वाच्यम् । विनिगमनाविरहात् । तल्लक्षण एवेति किम् ? । हिमहिमान्यौ । अत्र महत्त्वादिकृतोऽपि विशेष इत्याहुः ।

पिता मात्रा । श्वशुरः श्वश्र्वा । इदं सूत्रद्वयं न एकशेषाऽर्थम्, मातरि पितृत्वाऽऽरोपेणाऽपि 'पितरावि'त्यादिसिद्धेः । नाऽपि द्वन्द्वनिवृत्त्यर्थम्, अस्य वैकल्पिकत्वेन पक्षे तस्याऽपीष्टत्वात् । किन्तु 'मातरावि'त्यादेस्तादृगर्थेऽसाधुत्वबोधनाय ।

मातापितराविति । 'पितुर्दशगुणं माता गौरवेणाऽतिरिच्यते' इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः । 'ऋत' इत्यानङ् । 'श्वश्रूः, पूर्वजपत्नी च मातृतुल्या प्रकीर्त्तिता' इति स्मृतेः श्वश्र्वा अप्यभ्यर्हितत्वम् ।

त्यदादीनि सर्वैः । सर्वैः = त्यदादिभिः, अन्यैश्चेत्यर्थः । अन्यथा प्रत्यासत्त्या 'त्यदादिभिः सहोक्तावि'त्येवाऽर्थः स्यात् । यत्परमिति ।

---

१ 'सुकृतिनी स्त्री, सुकृतिनो दाराः, सुकृति कलत्रम्' इति घ. पाठः ।

२ इतोऽग्रे—'अमरव्याख्यातारस्तु 'गुणे शुक्लादयः पुंसी'ति विशेष्याऽनुपादाने प्राप्तस्य 'सामान्ये नपुंसक'स्याऽपवादः । तेन 'नीलं रूप'मित्याद्येवेत्याहुः' इति ख. घ. पाठः ।

३ 'विवक्षितार्थलक्षणयाऽपि' इति ख. ग. घ. पाठः ।

४ इतोग्रे 'गणीयशब्दपरविप्रतिषेधादिति भावः' इति ग. पाठः । 'पूर्वोपस्थितत्वरूपान्तरङ्गत्वेन व्यवस्थाया बाधाय वाचनिकमेवेदमितिकश्चित्'इति घ. पाठः ।

गणीयमत्र परत्वम् । पूर्वशेषोऽपीति । अत एव 'अहं च, भवांश्च, आवामि'ति सिद्ध्यति । अत्र 'द्विपर्यन्तानामि'ति नियमाऽभावात् । स्पष्टं चेदं सर्वनामसंज्ञाप्रकरणे भाष्ये ।

त्यदादित इति । आद्यादित्वात्तसिः । 'त्यदादीनां शेषे' इत्यर्थः । 'पुंनपुंसकत' इत्यत्राऽप्येवमेव । स्त्रीशेषेऽपि पुंस्त्वादिप्रयुक्तमेव लिङ्गं भवतीति भावः । पुंनपुंसकयोस्त्विति । 'तयोः सहोक्तौ नपुसकं शिष्यते' इत्यन्वयः । परत्वं च 'पुंनपुंसकत' इति वचने । इदं च कैयटादौ स्पष्टम् ।

अस्याऽपवादमाह—अद्वन्द्वेति । न्यायसिद्धं चेदम् । 'अन्तरङ्गस्वार्थलिङ्गबाधनेन चरितार्थस्य, बहिरङ्ग-विशेष्य सम्बन्धप्राप्तलिङ्गबाधकत्वे मानाऽभावादि'ति कैयटः । अत एव एकशेषविशेषणेऽपि 'त्यदादित' इत्यस्याऽप्रवृत्तिः । अत एव पुंस्त्रीसङ्घे स्त्रीशेषे 'गाव इमाश्चरन्ती'ति भाष्यप्रयोगः सङ्गच्छते । 'इमा' इत्यत्र हि अनेनैव एकशेषः ।

कुक्कुटमयूर्याविति । द्वन्द्वतत्पुरुषयोः परपदलिङ्गत्वेन, तदधीनतैव विशेषणस्येति बोध्यम् । तत्पुरुषे उदाहरति—तच्चेति । पिप्पल्या अर्द्धम् । सा चेति । अर्द्धपिप्पली । अर्द्धपिप्पल्यौ ते इति । इदमुपलक्षणम्—

१ 'अत्र 'द्विपर्यन्तानामि'ति नियमाऽभावात् 'देवदत्तश्च भवांश्च भवन्तावि'ति सिध्यति' इति ग. घ. पाठः ।

'यच्छिष्यते तन्नपुंसकमित्यन्वयः' इति ख. घ. पाठः ।

३ इतोऽग्रे—'लिङ्गसर्वनामत्वेन नपुंसकस्य व्यापकतया प्राधान्यात्तस्यैव लिङ्गमिति 'नपुंसकमनपुंसकेने'तिसूत्रभाष्योक्तरीत्याऽपीदं साधयितुं शक्यमिति बोध्यम्' इति घ. पाठः ।

४ 'अनेनैव एकशेषः । एवञ्च विशेष्यसंनिधानाऽभावे 'तच्च, सा च, स च, तानि', 'स च, सा च, तावि'त्यादौ पुंनपुंसकत एव लिङ्गमित्याहुः' इति घ. पाठः ।

'अर्द्धपिप्पल्यस्ता' इत्यत्र विशेषो बोध्यः। 'अविद्यातक्षितोर्योगः', 'मत्स्यादौ तद्विशेषयोरि'त्यादौ तु 'तदि'ति विभक्तिप्रतिरूपकमव्ययम्[2]। अत्र च सूत्रे परस्परसाहचर्येण अनव्ययस्यैव ग्रहणमित्याहुः। द्विशब्दैकशब्दयोस्तु 'द्व्येकयोरि'ति निर्देशादेकशेषो न।

ग्राम्यपशु। अत्र[3] 'अनपुंसकेने'त्यनुवर्त्तते। तद्ध्वनयन्नाह— पुमानिति। स्पष्टं चेदं वृत्तौ। एतौ गावाविति। 'सङ्घ'शब्दश्च बहूनां समुदाये शक्त इति भावः। वत्सा इति। न च नाऽयं तरुणवाची, 'पुत्रादौ तर्णके वत्सः' इति त्रिकाण्डशेषात्, 'तर्णकं सद्योजातगवापत्यमि'ति तद्व्याख्यातारः, 'शकृत्करिस्तु वत्सः स्यादि'त्यमराच्च, 'अन्तर्वदि'ति सूत्रे भाष्ये 'पतिवती तरुणवत्से'त्यादौ वत्सस्य 'तरुण'पदेन विशेषणाच्चेति वाच्यम्। 'वत्सं क्लीबे तु वक्षसी'ति कोशाद्वक्षोवाचकात् प्राशस्त्येऽर्शआद्यचि, 'प्रशस्तवक्षोवन्न' इत्यर्थे तरुणस्यैव प्रतीतेः।

प्रकरणादिना च यदा गावो विशेष्यत्वेन ज्ञातास्तदेदमुदाहरणम्। (ध्वनितं चेदं वृत्तावित्याहुः)[5]। यद्वा वत्सशब्दस्याऽपत्यमात्रवाचिनः, प्रकरणादिना तरुणपरत्वे इदं प्रत्युदाहरणम्। (ध्वनितं चेदम् 'अन्तर्वत्'-

---

१ 'न चेदं सूत्रं व्यर्थम्, त्यदादीनां सामान्यवाचित्वेन तस्यैव प्रयोगसम्भवात्। न च द्वन्द्वनिवृत्त्यर्थम्। सामान्यविशेषवाचिनोस्तदभावादिति वाच्यम्। क्वचित्तयोरपि द्वन्द्वज्ञापनार्थत्वात्। तेन 'गोबलीवर्दम्' 'प्रमाणप्रमेये' इत्यादि च सिद्धम्। अत एव 'प्राच्यभरतेष्वि'तिनिर्देशः सङ्गच्छते। प्रकरणादिना तच्छब्दस्याऽपि विशेषपरतायां, द्वन्द्वनिवृत्त्यर्थमस्याऽऽवश्यकत्वाच्च' इति ग. घ. पाठः। 'न चैवं सूत्रे 'सर्वैरि'ति व्यर्थम्' इति घ. पाठः।

२ इतोऽग्रे—'चादिपठितं वा, आकृतिगणत्वात्' इति ख. पाठः।

३ 'सङ्घग्रहणसामर्थ्याच्चाऽत्राऽनपुंसकेनेत्यनुवर्त्तते' इति ग. पाठः।

४ इतोऽग्रे—'सङ्घग्रहणसामर्थ्याच्च' इति घ. पाठः।

५ अयं ख. घ. पाठः। क. ग. नास्ति। ६ अयं ख. घ. पाठः। क. ग. नास्ति।

इति सूत्रे भाष्ये )। 'बर्करका इमे' इत्यपि प्रत्युदाहरणम्। 'बर्करस्तरुणः पशुः'।

अनेकशफेष्विति। 'उष्ट्राणां त्वारण्यत्वात्स्त्रीशेषाऽभाव' इति कैयटादयः। ('तेषामखुरत्वान्ने'त्यन्ये)। एकशेषे कृते इति। 'विभक्त्यनपेक्षत्वेनाऽन्तरङ्गत्वात्तदुत्पत्तेः पूर्वमि'त्यर्थः। 'द्वन्द्वाऽपवाद एकशेष' इति व्यवहारस्तु तार्किकीं प्राप्तिमादाय बोध्यः। एनेन 'कृतद्वन्द्वानामेकशेष' इति निरस्तम्। फलेऽपि विशेषमाह— तेनेति। समासत्वद्वन्द्वत्वाऽभावेनेत्यर्थः। एकवदिति। 'तन्नियम' इत्यर्थः। समाहारद्वन्द्वविषये एकशेषाऽप्रवृत्तौ स्वर-समासान्ताऽभावावेव प्रयोजनम्। तदाह— पन्थानाविति। 'इतोऽत्सर्वनामस्थाने' इति सूत्रं तु 'पन्था' इत्यत्र, मथिआदौ च चरितार्थम्।[1] समासान्तो नेति। कृतद्वन्द्वानामेकशेषे हि द्वन्द्वाऽलौकिकविग्रहवाक्ये 'ऋक्पूरि'त्यनेन तत्प्राप्तिर्दुर्वारा स्यादिति भावः।[2]

इत्येकशेषः।

---

१ अयं ख. घ. पाठः। क. ग. नास्ति,

२ इतोऽग्रे—'नन्वितरनिवृत्तौ द्वन्द्वत्वादीनामेकदेशविकृतन्यायेन प्रवृत्तिर्वाच्या। एवञ्च समासान्तप्राप्तिरेव न। 'समासाच्च तद्विषयादि'त्यतः समासादित्यप्यनुवर्त्य मुख्यसमासे एव तत्प्रवृत्तिरित्यष्टमे सिद्धान्तितत्वात्। अत एव 'पथि-पथि-पथाः' इत्यादौ 'कर्मधारयवदुत्तरेष्वि'ति द्विर्वचने न समासान्त इति चेन्न। सर्वत्र सुब्लोपे एकदेशविकृतन्यायेनैव समासत्वादीदृशातिदेशिकसमासस्य तेनाऽव्यावृत्तेः। अत एव 'सर्वे' इत्यादौ 'विभाषा जसी'ति न। अत एव 'जसः शी'त्येव सिद्धे 'विभाषा जसी'ति चरितार्थम्। 'प्रथमचरमे'त्याद्यर्थं 'विभाषा जसी'त्यस्यावश्यकत्वाच्च' इति ग. घ. पाठः।

## अथ सर्वसमासशेषप्रकरणम् ।

प्रसङ्गादाह—कृदिति । परार्थाभिधानमिति—करणे ल्युट् । 'परे[1]स्याऽर्थेनाऽन्वितो यः स्वार्थः, तदभिधानम् = अभिधाभिस्तदुपस्थितिः, तत्करणमि'त्यर्थः । 'इतराऽर्थाऽन्वितस्यैव स्वाऽर्थस्योपस्थितिर्यद्वृत्तैरि'ति फलितम् । सा च समुदायशक्तिसाध्या । परोऽर्थाऽभिधानमेव[2] चैकाऽर्थीभावः । एतदुक्तं भवति—न केवलया क्लृप्तयाऽवयवशक्त्या सर्वत्र निर्वाहः, किन्तु विशिष्टाऽर्थविषयकं शक्त्यन्तरं[3] स्वीकर्त्तव्यम् । अत एव वृत्तौ विशेषणस्य पदाऽर्थैकदेशत्वान्न विशेषणसम्बन्धः, द्वन्द्वे 'च'स्याऽप्रयोगः, बहुव्रीहौ यच्छब्दादेरित्यन्यत्र[4] विस्तरः । परश्च प्रत्यासत्त्या तत्तद्वृत्तिविधायकसूत्रादितात्पर्यविषय एव । 'द्वित्रा' इत्यादौ सुजर्थादीनामपि व्याख्याना[5]त्त्वं बोध्यम् । वृत्तिरिति । समुदायस्य वृत्त्याश्रयत्वेनौपचारिकोऽयं प्राचां व्यवहारो निरूढः पञ्चस्विति बोध्यम् । तत्र तद्धित-समासयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वेन, मानाऽन्तरसिद्धैकार्थीभावस्य च सत्त्वेन, परिभाषाप्रवृत्तिः स्पष्टैव । कृतामप्युपपदनिमित्तकानां(कर्मण्यणि'त्यादीनां) पदविधित्वं स्पष्टमेव[6] । तत्साहचर्याच्चाऽन्यत्राऽपि । अत एव पाचकादीनां क्रियाकारक-

---

१ 'परपदस्यार्थेनाऽन्वितो यः स्वार्थस्तदभिधानकरणमित्यर्थः । इतरार्थान्वितस्यैव स्वार्थस्योपस्थितिर्येनेति फलितः । परश्च प्रत्यासत्त्या तत्तद्वृत्तिविधायकसूत्रोपात्तयोरेव । एकार्थीभावोऽपि पदविधावुपात्तयोरेव । प्रत्यासत्तेः' इति ग. घ. पाठः । २ 'अयमेव चैकार्थीभावः' इति ख. घ. पाठः ।

३ 'शक्त्यन्तरमेव' इति ख. घ. पाठः ।

४ इतोऽग्रे—'किञ्च बहुव्रीहेरन्यपदाऽर्थे शक्तिरपि अवयवशक्तिमात्रवादिनां न सिद्ध्येत् । न च निरूढलक्षणया निर्वाहः । शक्तावेव पर्यवसानादित्यन्यत्र विस्तरः । शक्त्यभावे लक्षणाया दुरुपपादत्वाच्च । न च चरमपदे सा । पङ्कजादौ समुदायशक्त्युच्छेदाऽऽपत्तेः । न चेष्टाऽऽपत्तिः । अपसिद्धान्तादिति दिक्' इति ख. पाठः । ५ 'व्याख्यानात्सूत्रोपात्तत्वं बोध्यम्' इति ग. पाठः ।

६ इतोऽग्रे—'न च तत्र नित्यसमासः । तत्त्वं चैकार्थीभाव एव भविष्यति ।

भावसम्बन्धप्रवृत्तिनिमित्तकत्वव्यवहारः, तन्मूलकः 'क्रियाशब्दत्व'व्यवहारश्च । अत एव 'पाचक' इत्यादौ नोद्देश्यविधेयभावेनाऽन्वयः । एतदर्थे एव तत्र विशिष्टशक्तिस्वीकारः । अत एव 'आद्यपाकक्रियाकर्त्ते'त्यर्थे 'आदिः पाचक' इति न । स च सोपपदेऽपि प्रकृतिप्रत्यययोरेव । उपपदेन तु समासनिबन्धनः । अत एव 'तृतीयाप्रभृतीनी'त्यत्र 'अन्यतरस्याम्'ग्रहणं चरितार्थम् । फले त्वेकदेशेऽपि विशेषणाऽन्वयो भवत्येव । अत एव समस्ता'ऽध्यापक'शब्दैकदेशे 'दारुणमि'त्यादिक्रियाविशेषणानामन्वयः 'पूजनात्पूजितमि'त्यत्र भाष्ये दर्शितः ।

कृत्-कृदन्तः । 'तद्धित'शब्दस्तद्घटितसमुदायपरः । अत एव बहुकचोर्न दोषः । एकशेषेऽपि 'द्वन्द्व'इत्यनुवृत्त्या तद्विषये एतद्विधानेन एकार्थीभाव आवश्यकः । तत्र 'चा'ऽर्थान्तर्भावेण बोधाऽर्थं स इत्यभिमानः ।

वस्तुत • एकशेषे परार्थाऽन्वितस्वार्थोपस्थापकत्वाऽभावाद्वृत्तित्वे न मानम् । नाऽपि फलमस्ति । अत एव समर्थसूत्रस्याऽधिकारत्वपक्षे एकशेषाऽसङ्ग्रहो भाष्ये नोक्त इत्यलम् ।

सनाद्यन्तेष्वपि 'सुप आत्मनः क्यजि'त्यादौ पदविधित्वं स्पष्टमेव । सन्नन्ते तु यद्यपि सन्विधेर्न पदविधित्वं, तथाऽपि 'सुप आत्मन' इत्यादौ ततः 'कर्मण' 'इच्छायामि'त्यनुवृत्तेरर्थाऽधिकाराऽनुरोधात्, साहचर्याच्च

'मूलकेनोपदंशमि'त्यादावसमासेऽपि तदावश्यकत्वात् । 'शोभनं यथा तथा कुम्भं करोती'तिवत् 'शोभनं कुम्भकार' इत्येतद्वृत्त्यर्थं तदावश्यकत्वाच्च । विशेष्ये विशेषणान्वयेऽप्यत्र समासस्वीकारात् । 'शोभनं पाचक' इति तु भवत्येव । तत्रैकार्थीभावाऽभावात् । 'महान्तं कुम्भं करोती'त्यर्थेऽसामर्थ्यात् समासाऽप्राप्तावपयवकुदुपपत्तेर्दुर्वारत्वाच्च । कृत्तद्धितशब्दौ च तद्घटितसमुदायपरौ' इति ग. पाठः ।

१ 'अर्थाधिकारानुरोधात्सा । अत एव 'लिङ्गुत्तमाद्वा सन् वक्तव्य' इतिवार्त्तिकन्यासेन न विरोधः । तन्मते हि पदविधित्वस्य स्पष्टत्वेन समर्थपरिभाषा दुर्वारा । अत एव भाष्यकृता' इति ग. पाठः ।

परिभाषाप्रवृत्तिः। अत एव भाष्यकृता वावचनं प्रत्याख्यातम्—'स्वभावत एव वृत्त्यवृत्त्योः सिद्धत्वादि'ति। प्रातिपदिकप्रकृतिकक्विपोऽपि 'कर्त्तुः क्यङि'-ति सूत्रे उपसङ्ख्यातत्वेन, तत्साहचर्यादेकार्थीभावे एव प्रवृत्तिः।

'प्रातिपदिकादि'ति णिचस्तु प्रातिपदिकादुत्पत्तावपि, साहचर्यादेकार्थीभाव एव प्रवृत्तिः। अत एव 'मुण्डयति माणवकमि'त्यत्र 'वृत्त्यैवाऽत्र न भवितव्यम्, सापेक्षत्वेनाऽसामर्थ्यादि'ति शङ्कितम्। न चैवं 'व्याकरणस्य सूत्रं करोती'त्यर्थे 'सूत्र'शब्दस्य सविशेषणत्वाण्णिजनापत्तौ, 'व्याकरणं सूत्रयती'ति 'हेतुमति चे'तिसूत्रभाष्योक्तप्रयोगाऽनुपपत्तिरिति वाच्यम्।

वृत्तौ सूत्रेर्धातुतया, सूत्रशब्दस्य सूत्रणक्रियावचनत्वेन, तन्निरूपित-कर्मत्वस्योपजननेन, कारकांऽशे क्रियाया नित्यसापेक्षत्वेनाऽदोषात्। अत एव षष्ठी न, अशेषत्वात्। 'कर्त्तृकर्मणोरि'ति षष्ठी तु न। कृत्प्रकृत्यर्थक्रिया-ऽन्वयिनोस्तयोरेव तेन षष्ठीविधानात्। अत्र तु कृदन्ताऽर्थः सा, न तु तत्प्रकृत्यर्थः। किञ्च ण्यन्ताऽर्थः सा, न तु तदर्थ इति न दोषः। एवं 'माणवकं मुण्डयती'त्यत्र मौण्ड्यपरान्मुण्डशब्दात्प्रत्ययः। तस्य च साध्य-त्वेन प्रतीयमानतया क्रियात्वात्कारकैर्नित्यसाकाङ्क्षत्वान्न[2] दोषः। स च वृत्तिविषय एव। सत्त्वप्रधानेन[3] विग्रहकरणमिति तत्त्वम्। मौण्ड्याऽर्थ-कादिच्छाक्यच् तु न। अनभिधानात्। धर्म्यर्थकात्तु न। साऽपेक्षत्वात्।

वृत्त्यर्थबोधकमिति। 'एकार्थीभावकृतविशेषराहित्येन वृत्त्यर्थबोधक-मि'त्यर्थः। तेन 'प्राप्तोदकमि'त्यादेर्विग्रहभूते 'प्राप्तमुदकं यमि'त्यादौ

---

१ 'प्रातिपदिकप्रकृतिकणिच्यपि, सुबन्तप्रकृतिकणिच्साहचर्यात्। कण्ड्वादि-यगाद्यन्ते तु न वृत्तित्वम्। स्वार्थिकत्वेन विजातीयार्थवद्द्वितीयाऽभावेनैका-ऽर्थीभावस्य निरूपयितुमशक्यत्वात्। पदविधित्वाऽभावाच्च' इति ग. पाठः।

२ 'न दोषः। न च तदर्थकस्याऽप्रातिपदिकत्वात्केन णिच्?। गणे पाठाऽभावात्, साध्याऽर्थकस्याऽपि 'शमितव्या'दिवत्प्रातिपदिकत्वाऽक्षतेः' इति ख. पाठः।

३ 'अत एव सत्त्वप्रधानेन विग्रहकरणमिति तत्त्वम्' इति ख. पाठः।

न व्यभिचार इति केचित्।

अन्ये तु 'वृत्तिविग्रहयोः समानार्थत्वमि'त्युपपादितं प्रागित्याहुः।[1]

वाक्यमिति । 'तत्तत्समासघटकपदानां, तत्तत्समासप्रवृत्तियोग्यविभक्त्यन्तानां, पृथक् प्रयोगविषयमि'त्यर्थः। अत एव संज्ञादिविषयसमासे वाक्येन संज्ञाऽनवगमेऽपि, वृत्तिघटकपदस्वरूपबोधनाय समस्यमानपदाऽर्थबोधकवाक्यप्रयोगो भवत्येव। अत एव 'वाप्यामश्वो वाप्यश्वः', 'संज्ञायामि'ति समास' इति कैयटाद्युक्तं सङ्गच्छते।[2] न चैवं 'वाक्येन संज्ञाऽनवगमादिह नित्यसमास' इत्यादिग्रन्थाऽसङ्गतिः। वृत्तिसमानार्थकत्वाऽभावेन गौणनित्यत्वव्यवहारात्। न चैतादृशनित्यत्वस्य सर्वत्रैव सत्त्वेनाऽव्यावर्त्तकत्वम्। अन्यत्र वृत्तौ भासमाना यावन्तः पदार्थास्तेषां यथाकथञ्चिद्वाक्येऽपि भानमस्ति, अत्र तु न तदपीति, वैषम्यात्। नित्याऽधिकारीयसमासे तु[3] तेन समासघटकपदानां व्यपेक्षाया अभावस्यैव बोधनान्न वाक्यप्रयोगः। तदाह—अविग्रह इति। 'लौकिकविग्रहरहित' इत्यर्थः। एवं च वृत्तिवैकल्पिकत्वबोधनं, वृत्तिघटकपदस्वरूपबोधनं, तदर्थबोधनं च विग्रहप्रदर्शनफलं बोध्यम्।

अस्वपदेति। 'समस्यमानयावत्पदाऽघटित' इत्यर्थः। अतो बहुव्रीह्यादेर्नैतादृशनित्यत्वम्। अलौकिकस्य विग्रहत्वं तु सादृश्येन। तच्च व्यस्तोच्चारणविषयत्वेन बोध्यम्। द्वित्रा इति। 'वा'रूपाऽन्यपदार्थसत्त्वेऽपि तत्प्राधान्यस्याऽभाव इति भावः। यदि त्वन्यतरत्ववान्वाऽर्थः,[4]

---

१ इतोऽग्रे—'एतेन 'वां काल इवे'ति फलितोऽर्थः, 'वः कालो यस्ये'ति विग्रह' इति ग्रन्था व्याख्याताः' इति ख. पाठः।

२ 'अत एव 'वाक्येन संज्ञाऽनवगमादिह नित्यसमास' इत्यादि सङ्गच्छते। तत्रापि वृत्तिटकपदस्वरूपबोधनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव। अत एव वाप्यामश्वो वाप्यश्वः' इति ग. पाठः।

३ इतोऽग्रे—'अत एव तत्र नित्यत्वं वृत्त्यर्थाऽबोधकत्वमेव। ईदृशनित्यत्वस्य प्रासादकादावपीष्टापत्तिरेव। नित्याधिकारीयसमासे तु' इति ग. पाठः।

४ 'केचित्तु इति ख. पाठः।

'द्वित्र्यन्यतरा' इति च बोधः, एवं च तत्प्राधान्यमस्त्येव, तदा 'द्विरावृत्तास्त्रय' इत्यर्थकमिदमिति भावः। दन्तोष्ठमिति। समाहारस्य प्रधानत्वात्, इतरेतरयोगे समूहस्य प्राधान्येऽपि, तस्योद्भूतावयवभेदस्यैव भानात्, उभयपदार्थप्रधानत्वमिति भावः।

अनेकेति। ङ्याादीत्यर्थः। द्वन्द्वेति। 'अनेकमि'त्यनुवृत्तेः।

क्वचिदिति। अह जाताऽऽदौ।

समासविभाजकोपाधिगणनाऽऽवश्यकी चेत्तत्राऽऽह—सुपां सुपेति। 'सुपामि'ति सर्वत्र सम्बध्यते, 'तिङामि'ति यावत्। कटप्रूः, अजस्रमिति। 'क्विब्वची'ति वार्त्तिके, 'नमिकम्पी'तिसूत्रे च 'कटप्रु' 'अजस्' इति समस्ताऽनुवादेन, तत्र तिङन्ताऽर्थं कृतेन 'सहे'ति योगविभागेन च समासः। स च योगविभागस्येष्टसिद्ध्यर्थत्वात्प्रत्ययसंनियोगेनैवेति भावः।

अत्रेदं चिन्त्यम्—'सुपां तिङे'त्यनेनैव 'तिङा सुबन्तेने'त्यस्य सङ्ग्रहात् षड्विधत्वं चिन्त्यम्, पञ्चविधत्वमेव युक्तमिति। उभयत्राऽपि सुप्तिङ्घटितत्वस्याऽविशिष्टत्वादि'ति।

वृत्तय इमा अभिधानलक्षणा बोध्याः। तत्र तत्र भाष्ये बहुशः 'अनभिधानादि'त्युक्तेः, 'अकर्त्तरि चे'ति सूत्रे 'अभिधानलक्षणाः कृत्तद्धितसमासा' इति भाष्योक्तेश्चेत्याहुः।

इति सर्वसमासशेषः।

---

१ 'तत्प्राधान्यमस्त्येव। एवं चेदं चिन्त्यमित्याहुः' इति ख. पाठः।

२ 'द्विरावृत्तास्त्रय इत्यर्थकमिदमित्यन्ये' ख. पाठः।

३ 'अजस्' इति समस्ताऽनुवादेन तत्रैव निपातनाद्धातुना समासे इति भावः। अयं च तत्तत्प्रत्ययसन्नियोगशिष्ट एवेत्याहुः। 'तिङन्ताऽर्थं कृतेन 'सहे'ति योगविभागेनाऽत्र समासः। स च योगविभागस्येष्टसिद्ध्यर्थत्वात्प्रत्ययसन्नियोगेनैवेत्यन्ये' इति ख. पाठः।

## अथ समासान्तप्रकरणम् ।

अ इति । लुप्तविभक्तिकः सौत्रो निर्देश इति भावः ।

अक्षे या धूरिति । 'अक्षसम्बन्धिनी या धूरि'त्यर्थः । सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी सूत्रे इति बोध्यम् । तदन्तस्येति । 'तद्वाचकधूःशब्दाऽन्तस्ये'त्यर्थः । 'अक्षे पूर्वपदे धुरो न', 'अक्षे समासाऽर्थे ने'ति वा न व्याख्यातम् । 'दृढधूरक्षः' 'अक्षधूरि'त्युभयाऽसिद्ध्यापत्तेरित्याहुः ।

अर्द्धर्चे इति । 'अर्द्धर्चो' इति पुंस्त्वम् । अध्येतर्येवेति । 'अध्येतृत्वयोग्यतावती'त्यर्थः । अध्ययनं चोपस्थितत्वादृक्सम्बन्ध्येव ।

अनृक्सामेति । (अनुक्तसमासान्तत्वात्) पक्षे कबपि, 'अनृच्कं साम' 'बह्वृक्कं सूक्तमि'ति ।

विष्णुपुरमिति । यद्यप्यदन्त'पुर'शब्देन समासे एतत्सिद्धं, तथाऽपि 'विष्णुपूरि'ति प्रयोगनिवृत्त्यर्थं सूत्रे 'पू'र्ग्रहणम् । कृतसमासान्तस्येति । 'येन विधिरि'तिसूत्रे 'स्वापस्तिष्ठन्ती'ति भाष्यप्रयोगादिति भावः । अन्तरीपमिति । अन्तर्गताः, प्रतिकूलाः, सङ्गताश्च आपो यस्मिन्निति विग्रहः । ('अन्तः'शब्देन 'सप्तमी शौण्डैरि'ति सप्तमीसमासो वा । न च

---

१ 'अविभक्तिकः सौत्रो निर्देशः' इति ग. पाठः ।

२ इतोऽग्रे—'तत्र अनृचः-अनध्येतरीति बोध्यम् । 'अध्येतरी'त्यस्याऽनन्वयात्' इति क. कुण्डलितः ख. पाठः ।

३ इतोऽग्रे—'अत एव 'गोष्पदं सेविताऽसेविते'त्यत्राऽसेविते नञ्पूर्वगोष्पदशब्द उदाह्रियते । अत एव 'अनृचो माणवे, बह्वृचोऽध्येतरी'ति 'शेषाद्विभाषे'तिसूत्रस्थभाष्येण न विरोध इत्याहुः । अल्पार्थे नञ् । भाष्येऽपि माणवो बह्वृचसाहचर्यादध्येतैवे'त्यन्ये' इति ग. पाठः ।

४ अयं ग. पाठः, क. ख. घ. नास्ति ।

५ अयं ख. पाठः । अन्यत्र नास्ति ।

६ 'न च' इत्यादिः 'इत्याहुः' इत्यन्तोऽयं ग. पाठः । ख. घ. ङ. नास्ति ।

वाक्येन संज्ञाऽनवगमादस्य नित्यसमासत्वेन विग्रहो नोचितः, प्रतीपादयो हि संज्ञाशब्दा इति वाच्यम्। संज्ञानिमित्तसमासाऽभावात्। यत्र हि तन्निमित्तसमासस्तत्र तत्समानार्थकं वाक्यं न। वाक्ये समासनिमित्ताऽभावात्। प्रकृते समासनिमित्तं हि सुबन्तसहितः षष्ठ्यन्तः। स च विग्रहेऽप्यस्ति। अतो विकल्पो वक्तुं शक्य एव। अत एव रथन्तरादिशब्दानां 'रथेन तरती'त्यादिविग्रहकथनं सङ्गच्छते। एतेषां निरूढलाक्षणिकत्वमिति मते दोषशङ्कैव नेत्याहुः)। 'उपसर्गग्रहणं प्राद्युपलक्षणमि'ति 'गतिश्चे'त्यत्र भाष्ये स्फुटम्[१]। समाप इति। पुंस्त्वं लोकात्। देवयजनं– 'देवा इज्यन्तेऽस्मिन्नि'ति व्युत्पत्त्या यज्ञभूः। भाष्ये तु 'समापं नाम देवयजनमि'ति क्लीबपाठो दृश्यते।

समा आप इति। तथा चाऽप्रादित्वान्नेत्त्वमिति भावः[२]। ('समाप ईत्त्वप्रतिषेध'वचनारम्भवादिमते दीर्घाऽर्थं यत्नान्तरमास्थेयमिति गौरवम्)[३]। स्वबिति। 'न पूजनादि'ति समासान्ताऽभावः।

अवर्णान्ताद्वेति। 'द्व्यन्तरि'ति सूत्रे 'ईत्त्वमनवर्णाद्वक्तव्यम्'। 'प्रापम्', 'परापम्', 'उपसर्गादृती'ति सूत्रे, 'गतिश्चे'ति सूत्रे च 'प्रेपं' 'परेपमि'ति भाष्योक्तश्चेदं लभ्यते।

ऊदनो। 'दीर्घोच्चारणमवग्रहार्थमि'ति भाष्यकृतः। (बह्वृचैस्तु अनूपे, गोमानित्यादौ नाऽवगृह्यते)[४]। 'अनुगता आपोऽस्मिन्नि'ति अनूपो देशः। 'जलप्रायमनूपं स्यादि'त्यमरः। प्रतिसामादिषु–अव्ययीभाव-प्रादिसमास-बहुव्रीह्यन्यतमः। कृष्णभूमादिषु च[५] बहुव्रीहिः। 'कृष्णोदक्पाण्डु' इति, 'सङ्ख्याया' इति च भाष्ये काऽस्तीति बहुदर्शिनो विचारयन्तु।

१ 'स्पष्टम्' इति ख. पाठः।

२ 'तथा चाऽनुपसर्गत्वान्नेत्त्वमिति भावः' इति ग. पाठः।

३ अयं ख. ग. पाठः।

४ अयं ख. ग. घ. पाठः।

५ चकारः क. नास्ति।

'भू'धातौ माधवग्रन्थे तु–श्लोकवार्त्तिकमिदमि'त्युक्तम् । 'द्विगोर्लुगि' तिसूत्रे कैयटेन तु 'पञ्चनदमि'ति प्रतीकमुपादाय 'कृष्णोदक्पाण्डुसङ्ख्या-पूर्वाया' इति अजि'त्युक्तम् । वक्ष्यमाणयोगविभागसिद्धाऽभियुक्तोक्तिरिति तु तत्त्वम् । सङ्ख्याया इति । इदं च 'नदीभिश्चे'ति सूत्रविहितसमासे एवे'ति 'नदीभिश्चे'तिसूत्रभाष्यध्वनिः । पद्मनाभ इति । 'पद्माऽऽश्रय-त्वेन तदाकारा नाभिर्यस्ये'ति गौण पद्म'शब्देन समानाधिकरणबहुव्रीहिः । यद्वा 'पद्मं नाभौ यस्ये'तिसमासे, गड्वादित्वात्सप्तम्याः परनिपातः ।

एवम्-ऊर्णनाभोऽपि । तत्र 'ङ्यापोः संज्ञाच्छन्दसोरि'ति ह्रस्वो विशेषः ।

अक्ष्णः । करणल्युडन्त—दर्शन'शब्दो योग-रूढिभ्यां चक्षुःपरः । तत्पर्युदासेऽक्षिसदृशवृत्तेर्भाक्तस्येह ग्रहणम्, व्याख्यानादित्याशयेनाऽऽह-गवामक्षीवेति । गावोऽत्र किरणाः । गवाक्षः-अक्षिसदृशं रन्ध्रम् ।

निपात्यन्त इति । तत्फलं च समासविशेषनियमः, टिलोपादिकं चेत्याह—आद्या इति । तेन नञ्तत्पुरुषेऽचत्वार इत्येवेति भावः ।

अविद्यमानानीति । 'अदृश्यानीति विग्रह' इति भाष्यस्वरसः ।

त्रिचतुरा इति । 'सङ्ख्ययाऽव्यये'ति बहुव्रीहिः । डचोऽपवादोऽच् । धेन्वनडुहाविति । समाहारे तु 'द्वन्द्वाच्चुदषहे'ति टचैव सिद्धमिति भावः । क्वचित्तु 'धेन्वनडुहमि'ति पाठः । स तु 'प्रतिपदोक्तत्वात्तत्राऽप्य-नेनाऽजेवे'त्यभिप्रेत्येत्याहुः । अक्षिभ्रुवमिति । प्राण्यङ्गत्वादेकवद्भावः ।

---

१ इतोऽग्रे—'योगविभागादिति । अत एव विधेयस्य पूर्वनिर्देशः । तेन दीर्घरात्रादिसिद्धिः' इति ख. ङ. पाठः ।

२ 'पद्माऽऽकारा' इति घ. पाठः ।

३ 'एवम् ऊर्णनाभेऽपि' इति घ. पाठः ।

४ 'योगरूढिभ्यां, व्याख्यानाद्वा' इति ख. पाठः ।

५ 'अनेनैवाऽजिति' इति घ. पाठः ।

ऊर्ध्वग्रीवमिति। 'सक्थि क्लीबे, पुमानूरूरि'त्यमरः। 'जानूरुपर्वाऽष्ठीवद्स्त्रियामि'ति च। द्वन्द्वो निपात्यत इति। 'विरूपाणामपी'त्येकशेषं बाधित्वेति भावः। सरजसमिति। 'अव्ययीभावे चे'ति सहस्य सः।

सरजः पङ्कजमिति। 'सरजसमपहाय केतकीनां प्रसवमि'ति तु पुँल्लिङ्गपुष्पवाचिप्रसवविशेषणत्वेन द्वितीयान्तं साधु। यदि तु तद्वाचि-'प्रसव'शब्दस्य नपुंसकत्वमेव, तदा प्रमाद इति बोध्यम्। 'सरजसमकरन्दनिर्भरास्वि'ति तु प्रमाद एवेति बोध्यम्।

तत्पुरुषे एवेति। 'उत्तरपदाऽर्थप्रधाने' इत्यादिः। निःश्रेयानिति। बहुव्रीहिः। कप् तु न, 'ईयसश्चे'ति निषेधात्। 'निष्क्रान्तः श्रेयस' इति तत्पुरुषो वा। पुरुषस्येति। षष्ठीसमास एवेदम्।

शुन इति। अव्ययीभाव एवेदम्। गोष्ठे इति। सप्तमीतत्पुरुषे एवेदम्। तेन षष्ठीतत्पुरुषे 'गोष्ठश्वा' इत्येव।

ब्रह्मवर्चसमित्यादौ षष्ठीतत्पुरुषौ। वर्चो—दीप्तिः। पल्येति। पल्यो—मांसभाजी। अवतमसमित्यादि। अवहीनम्, सन्ततञ्च तम इति विग्रहः। सन्ततम्—सर्वतो व्याप्तम्। अन्धयतीति। 'अन्ध दृष्ट्युपघाते' चुरादिः। अन्धं-गाढम्।[2] वसुशब्द इति। एतेन 'अवसीय' इति पदच्छेदः। अवस्शब्दादीयसुन्' इत्यपास्तम्। तथा च श्रूयते—'यः कामयेत वसीयान् स्यामि'ति। उत्तरपदार्थप्रशंसामिति—कर्मधारयः। 'श्रेयः'-शब्दोऽपि प्रशस्याऽर्थ[3] एव। आशीर्विषयमिति—षष्ठीतत्पुरुषः। 'विषय'-शब्दस्याऽजहल्लिङ्गत्वात्पुँल्लिङ्गनिर्देशः। एतच्चैतद्वृत्तिविषयम्। अन्यत्र तु कालवाच्येव। एवं च आशीर्विषयताद्योतकोऽयम्। तेनाऽऽशीर्लिङन्त-

१ इतोऽग्रे—'निश्चितमिति। 'निष्क्रान्तः श्रेयस' इति विग्रहेऽपि 'निःश्रेयस' इत्येव। तदाह—तत्पुरुष एवेति' इति ग. पाठः।

२ 'वसुशब्द' इत्यारभ्य 'स्यामिति' इत्यन्तः ख. ङ. पाठः। क. कुण्डलितः।

३ 'प्रशंसाऽर्थ एव' इति ख. ङ. पाठः।

प्रयोगे एवाऽस्य साधुत्वं बोध्यम् । एतच्च वृत्तौ स्पष्टम् । अन्ये तु—'अथं[1] परपदस्येह श्वःशब्दः कालवाच्यपि । अभिधत्ते, स्वभावेन, तेनेमौ मङ्गलाऽर्थकौ'। इति वदन्ति । तप्तरहसमिति । 'रह' इत्यप्रकाशमुच्यते । तप्तमिव तप्तम् । (परेणोऽनधिगम्यम्)। 'परेणाऽनधिगम्यं हि यद्रहो वह्नितप्तवत् । तप्तं च तद्रहश्चेति तत्तप्तरहसं विदुः'। पूर्वयोः—अनुगतम् , अवहीनं च रह इति प्रादिसमासः । 'तादृग्रहो यस्मिन्नि'ति बहुव्रीहिर्वा ।

प्रतेरु । 'सप्तमीस्थादि'त्यस्य सप्तम्यर्थवृत्तेरित्यर्थः । सप्तमीस्थात्किम्? । 'प्रतिगतमुरः प्रत्युरः' ।

अनुगवमा । 'अनुगु'शब्दात्प्रत्ययविधानेनैव सिद्धे, निपातनं प्रसिद्ध्युपसङ्ग्रहाऽर्थम् । तेन[2] गोभिर्वाह्ये[3] एव भवति । ( वाह्यमाने[4] च गवां लक्षणत्वं निर्विघ्नमेवेति 'यस्य चायाम' इति समासः )। दीर्घत्वे इति । ( इदं[5] च प्रवृत्तिनिमित्तम् )। 'गोदैर्घ्यसदृशदैर्घ्यवत् यानमि'ति बोधः ।

द्विस्तावा[6]। निपात्यत इति। 'द्विरावृत्ता तावती'त्यर्थे सुच्। 'द्विरावृत्ता

---

१ इतोऽग्रे—'श्वःशब्दो निरर्थक एव, उत्तरपदार्थमात्रवृत्तित्वादित्यन्ये' इति घ. पाठः ।

२ अयं ग. पाठः ।

३ 'गवां वाह्ये' इति ग. पाठः ।

४ अयं ग. पाठः । 'वाहे च गवां लक्षणत्वम्' इति घ. पाठः ।

५ अयं ग. पाठः ।

६ 'द्विस्तावा । समभिव्याहृतभवत्यादिक्रियाभ्यावृत्तौ सुच् । वेदिपदं च वेद्यवयवपरम् । अतोऽसामर्थ्यात्समासाऽप्राप्तेराह—समासश्च निपात्यत इति । एवं रीत्या सुचः साधुत्वं च तावच्छब्दसमभिव्याहृतद्वित्रिभ्यामेव । सूत्रप्रामाण्यात् । तेन 'द्विगुणो घट' इत्यर्थे 'द्विर्घट' इति नाऽऽपाद्यमित्याहुः ।' इति ग. पाठः ।

दश द्विर्दशेऽनिवत्। आवृत्तिक्रियाजन्मगणने हि तत्र सुच्। समास-निपातनस्य फलमाह—यावती प्रकृताविति। यत्र सकलाऽङ्गोपदेशः सा-प्रकृतिः। आवृत्तिक्रियाऽन्तर्भावेण एकार्थीभावः, 'द्विर्दशा' इनिवत्। 'द्विगुणे'ति तु फलिताऽर्थकथनम्। 'द्विगुणे'त्यर्थाऽन्तर्भावेणैकार्थीभावो, निपातनबलात्सुच्, तद्धितश्चे[1]त्यपि केचित्। 'द्विस्तावोऽग्निरि'ति तु वेदीस्थत्वेन औपचारिकं बोध्यम्। प्रत्युदाहरणे 'द्विः' 'तावती'ति भिन्ने पदे।

**उपसर्गात्**। 'अध्व'शब्दस्याऽक्रियावाचित्वात् 'उपसर्गादि'ति प्राद्युपलक्षणम्। इत्यतः प्रागिति। 'प्राग्बहुव्रीहिग्रहणं कर्त्तव्यमि'ति भाष्योक्तेः[2]। 'बहुव्रीहौ सङ्ख्येये' इत्यतः प्राक् समासान्तविधेरभावादस्यैव तत्र[3] ग्रहणमिति भावः।

**किमः क्षेपे**। 'प्रतिपदोक्तत्वात् 'किं क्षेपे' इति समासस्यैवाऽत्र ग्रहणात् 'क्षेपे' इति व्यर्थमि'ति भाष्यकृतः।

**किंराज इति**। किमत्र प्रश्ने। कर्मधारयः, षष्ठीसमासो वा।

**नञस्त**। 'नञ' इति पञ्चमी। 'नञः परं यत्तदन्तात्तत्पुरुषादि'त्यर्थः। यद्वा षष्ठी। 'नञवयवकादि'त्यर्थः। अपथमिति। 'नस्तद्धिते' इति टिलोपः। 'अपथं नपुंसकमि'ति क्लीबत्वम्। अपथं वर्त्तत इति। अर्थाऽभावेऽव्ययीभावः। 'ऋक्पूरि'ति नित्यं समासान्तः॥

इति सकलसमाससाधारणाः समासान्ताः।

---

१ 'तद्धितश्च' इति क. नास्ति, ख. ग. ङ. पाठः।

२ 'भाष्योक्तेरिति भावः' इति ख. पाठः।

३ 'तत्र ग्रहणमित्याहुः। तेन 'सुध्नी' 'अत्यूध्नी' त्यादि सिद्धम्' इति ख. ङ. पाठः।

# अथ अलुक्समासप्रकरणम् ।

उत्तरपदे इति । स च समासचरमाऽवयवरूढ[1] एवेह गृह्यते, न यौगिकः, 'पदे' इत्येव सिद्धे 'उत्तर'ग्रहणात् । तेन[2] 'महान्सुन्दर' इत्यादावात्त्वादिकं न । अयं च न विधिः । 'पञ्चम्याः स्तोकादिभ्य' इत्याद्यारम्भसामर्थ्यात् । न च तानि नियमाऽर्थानि । नियम-विधिसम्भवे विधेरेव ज्यायस्त्वात् । तदाह—अधिकार[3] इति ।

स्तोकान्मुक्त इति । वृत्तावभेदैकत्वसङ्ख्याया औत्सर्गिकत्वादेक-वचनान्तेनैव समासः । 'विभक्ति[4]श्रवणे द्वित्वाद्यवगतावपि, द्विवचनाऽन्तादिभिर्न समासः, अनभिधानादि'ति भाष्यकृतः । अत्र समासफलम् ऐकपद्यादि, विशेषणाऽनन्वयाऽऽदि च । किञ्च 'स्तोकान्मुक्तस्याऽपत्यं स्तौकान्मुक्तिरि'ति विशिष्टात्तद्धितः । नन्वत्र समासनिमित्त-प्रातिपदिकत्व-निमित्त[5]लुको 'येन नाप्राप्ति'न्यायेन निवृत्तावपि, तद्धिताऽन्तनिमित्त-तन्निमित्तलुको निवारणे मानाऽभाव इति चेन्न । 'निषेधाश्च बलीयांस' इति न्यायेन तस्याऽपि बाधात्[6] । इह चोत्तरपदाऽऽक्षिप्तः समासः प्रति-

---

१ 'समासाऽवयवरूढ एवेह' इति ग. पाठः । 'समासचरमावयवरूप एव' इति क. घ. पाठः ।

२ 'तेन 'हे अग्ने सोमस्तिष्ठती'त्यादावीद्ग्नेरितीत्त्वं न । 'इहोत्तरपदाधिकारेऽसिद्धपरिभाषा नोपतिष्ठत इतीच एकाच इति सूत्रे भाष्ये स्पष्टम्' इति ग. घ. पाठः ।

३ इतोऽग्रे—'अलुक् स्यादिति । प्रसज्यप्रतिषेधोऽयम् । पर्युदास एव वा । अलुग्विधानसामर्थ्याद्येननाप्राप्तिन्यायेन लुको बाध इत्याहुः' इति ग. घ. पाठः ।

४ 'प्रकरणादिना द्वित्वाद्यवगतावपि' इति ग. घ. पाठः ।

५ 'निमित्तलुकोऽन्तरङ्गत्वात्, येन नाऽप्राप्तिन्यायाच्च' इति ग. घ. पाठः ।

६ इतोऽग्रे—'किञ्च 'सुपो धातुप्रातिपदिकयोर्लुक्' 'उत्तरपदे' 'इन्सिद्धबध्नातिषु सप्तम्याः', 'स्थे च भाषायाम्' 'हलदन्तात्स संज्ञायाम्' 'कारनाम्नि च प्राचां

पदोक्तत्वात् 'स्तोकान्तिकदूराऽर्थे'त्येव गृह्यते। एवं च तत्सूत्रपठितानामेव स्तोकाऽऽदीनां ग्रहणं, न 'करणे च स्तोकाऽल्पे'ति सूत्रपठितानामित्याशयेनाह—एवमन्तिकेत्यादि।

'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाऽभिधानं स्तोत्रम्। अप्रगीतमन्त्रसाध्यं तच्छस्त्रमि'ति याज्ञिकव्यवहारः। पञ्चमी चेयं द्वितीयाऽर्थे। अस्मादेव निपातनात्समासोऽपि। तत एव 'सुप्सुपे'ति वा। तदाह—शस्त्राणीति। केचित्तु-'ब्राह्मणादाहृत्य शंसती'ति ल्यप्लोपे पञ्चमीयमित्याहुः। स्पष्टं चेदं पक्षद्वयमपि भाष्ये।

ओजसाकृतमिति।'कर्त्तृकरणे कृते'ति समासः।'सततनैशतमोवृतमि'ति तु 'वृत'शब्देन भावक्तान्तेन 'नैशतमस्'शब्दस्य 'नपुंसके भावे क्तस्ये'ति

हलादौ' 'मध्याद्गुरौ' 'अमूर्द्धमस्तकात्स्वाङ्गादकामे' 'बन्धेचविभाषा' 'तत्पुरुषे कृति बहुलम्' 'प्रावृट्छरत्कालदिवांजे' 'विभाषा वर्षक्षरशरवरात्' 'घकालतनेषु कालनाम्नः' 'शयवासवासिष्वकालात्' 'पञ्चम्याः स्तोकादिभ्यः' 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' 'मनसः संज्ञायाम्' 'आज्ञायिनिच' 'आत्मनश्च' 'वैयाकरणाख्यायां चतुर्थ्याः' 'परस्यच' 'षष्ठ्या आक्रोशे' इतिपाठेनैव सिद्धे असंनिहितद्वितीयाऽध्याये लुकः पाठेन बहिर्भूतलुकोऽपि बाध इत्यर्थबोधनात्। एवञ्च 'स्तोकान्मुक्तीयती'त्यादौ धात्ववयवत्वप्रयुक्तोपि लुक् न। एतेन 'सुपो धातुप्रातिपदिकयोः' 'अव्ययात्' 'आपः' इति न्यासेनैव सिद्धे, 'अव्ययादाप्सुप' इतिसूत्रे सुब्ग्रहणं व्यर्थमि'त्यपास्तम्[1]। 'अव्ययादि'ति सूत्रेऽनुवृत्त्यर्थं 'सुपो धात्वि'त्यस्य तत्र पाठाऽऽवश्यकत्वेऽलुकारदवैयर्थ्याऽनापत्तावुक्तार्थाऽसिद्धेः। यत्तु 'स्तोकमुक्त' इति प्रयोगनिवृत्त्यर्थमलुगि'ति। तन्न। तृतीयासमासेन तादृशप्रयोगस्य दुर्वारत्वादित्याहुः' इति ग. घ. पाठः।

१ 'मिति तु घञर्थे कप्रत्ययान्तवृतशब्देन 'नैशतमस्'शब्दस्य षष्ठीसमासे, ततः सततशब्देन बहुव्रीहौ साधु' इति ग. घ. पाठः।

1 'इति चेन्न। सुपो धातु' इति ग. पाठः।

शेषषष्ठ्यन्तस्य षष्ठीसमासे, ततः 'सतत'शब्देन बहुव्रीहौ साधु ।

परे त्वोजःप्रभृतीनामुत्तरपदाक्षिप्तपूर्वपदं प्रति विशेष्यत्वमेवेति, तदन्तपूर्वपदे न दोषः । न च तन्नियमार्थमेव 'पदाङ्गाऽधिकारे' इत्यारम्भः । तत्र च 'पदाधिकार'शब्देनोत्तरपदाऽधिकारोऽपि, भाष्ये 'पङ्केष्टकचितमि'ति तदुदाहरणादिति वाच्यम् । तदारम्भेऽपि 'पादस्य पदे'तिसूत्रेण 'दिग्धपादोपहतमि'त्यादौ 'पदे'त्यादेशवारणाय विशेषणविशेष्यभाववैपरीत्यस्य तत्र सूत्रे भाष्ये एवाऽऽश्रयणेनाऽत्राऽपि तथाऽऽश्रयणे बाधकाऽभावादित्याहुः ।

पुंसाऽनुज इति । 'यस्य पुमानग्रजः स पुंसा हेतुनाऽनुज' इत्यर्थः । जनुषाऽन्ध इति । 'जनुर्जननजन्मानी'त्यमरः ।

आत्मनश्च । इदं वार्त्तिकम् , 'आज्ञायिनि च', 'आत्मनश्च पूरणे', 'आत्मनश्च पूरणे उपसङ्ख्यानं कर्त्तव्यमि'ति भाष्यात् । न चैवं 'वैयाकरणाख्यायामि'तिसूत्रे 'आत्मन' इत्यनुवृत्तिर्न लभ्येतेति वाच्यम् । 'सोऽपदादावि'त्यत्रोपसङ्ख्यात-'काम्ये रो'रित्यस्य 'इणः ष' इत्यत्राऽनुवृत्तेरिवाऽत्राऽपि वार्त्तिकैकदेशाऽनुवृत्तिसम्भवात् । यद्वा 'परस्य चे'ति

---

१ इतोऽग्रे—यत्तु 'ओजःप्रभृतीनामुत्तरपदाऽऽक्षिप्तपूर्वपदविशेष्यत्वमेवेति, तदन्तपूर्वपदे न दोष' इति । तन्न । तन्नियमाऽर्थमेव 'पदाऽङ्गाऽधिकारे' इत्यस्यारम्भात् । तत्र च 'पदाऽधिकार'शब्देनोत्तरपदाऽधिकारोऽपि । भाष्ये 'पङ्केष्टकचितमि'ति तदुदाहरणात्' इति ख. ग. घ. पाठः ।

इतोऽग्रे 'अपरे तु–तदारम्भेऽपि 'पादस्य पदे'तिसूत्रेण 'दिग्धपादोपहतम्' इत्यादौ 'पदे'त्यादेशवारणाय विशेषणविशेष्यभाववैपरीत्यस्य तत्र सूत्रे भाष्य एवाऽऽश्रयणेनाऽत्रापि तथाऽऽश्रयणे बाधकाऽभाव इत्याहुः' इति ख. घ. पाठः ।

२ इतोऽग्रे—'परस्य चेति सूत्रमेवाऽस्य वार्त्तिकत्वज्ञापकम् । स्पष्टं चेदम् पदमञ्जर्याम्' इति घ. पाठः ।

चेन परशब्दप्रतिद्वन्द्वितया, व्याख्यानेन चाऽऽत्मशब्दस्य ग्रहणम्। तदुभयं चैकसूत्रम्। स्पष्टं चेदं परमञ्जर्यादौ।

केचित्तु[1]—'आत्मनश्चे'ति सूत्रे 'आज्ञायिनि चे'त्यनुवृत्तिप्रदर्शनाऽर्थं भाष्ये सूत्रद्वयं धृतम्—'आत्मनाज्ञायी'तिसिद्ध्यर्थम्। अत एव 'आत्मनश्चे'त्यत्र चकारः साऽर्थकः। वार्त्तिकव्याख्यानभाष्ये 'आत्मनश्चे'-त्युल्लेखस्तु वार्त्तिकस्य 'आज्ञायिनि चे'त्येतत्साधारणत्वभ्रमव्यावृत्तये। 'पूरणे' इत्येव वार्त्तिकमित्याहुः[2]। तन्मताऽवष्टम्भेनाऽत्रत्यं मूलमिति दिक्।

'पूरणे' इति वार्त्तिके स्वरितत्वप्रतिज्ञाबलात्तदधिकारविहितप्रत्यय-ग्रहणम्, न स्वरूपग्रहणम्। यद्यप्युत्तरपदाऽधिकारे प्रत्यय[3]ग्रहणे तदन्ता-ऽग्रहणं 'हृदयस्य हृल्लेखे'त्यत्र ज्ञापयिष्यते, तथाऽपीहाऽऽत्मनशब्दात् पू[4]रणे प्रत्ययाऽसम्भवेन तदन्तग्रहणमित्याह—पूरणप्रत्ययान्त इति।

आत्मनापञ्चम इति, हेतौ तृतीया। प्रकृत्यादित्वाद्वा। 'सुप्सुपे'ति[5] समासः। बहुव्रीहिरिति। एकस्याऽप्यात्मत्वेन समस्यमानपदार्थता, जनार्दनत्वेनाऽन्यपदार्थता न विरुद्धेति भावः।

वैयाकरणा। व्याकरणे भवा वैयाकरणी। 'ऋगयनादिभ्य' इत्यण्। सा चाऽसावा[6]ख्येति समासः। आत्मनेभाषा इति। यद्यपीयमाख्या

---

१ 'वस्तुतः' इति ग. पाठः।

२ इतोऽग्रे—'अत एव 'परस्य चे'ति सूत्रस्योक्तिसम्भवोऽपि। न च तदभावे 'तेभ्यो हितास्तद्धिता' इत्यत्राऽप्यलुगापत्तिः। निपातनात्सिद्धेरित्याहुः' इति ग. घ. पाठः।

३ 'प्रत्ययग्रहणे' इति ग. पाठः।

४ 'पूरणप्रत्ययाऽसम्भवेन' इति ग. पाठः।

५ 'योगविभागात्तृतीयासमासः' इति ग. पाठः।

६ इताऽग्रे—'वैयाकरणानामाख्येति वेत्यर्थः। आख्याऽत्र व्यवहारमात्रं, न संज्ञा। अत एवात्मनेभाषा' इति सिद्धम्' इति ग. पाठ।

अष्टाध्याय्यां न दृष्टा, तथाऽपि वैयाकरणी भवत्येव । 'धातु-सूत्र-गणोणादि-वाक्याऽऽत्मकं पञ्चप्रस्थानं व्याकरणमि'ति स्वीकारात् । अस्याश्च धातुपाठे दृष्टत्वात् ।

योगविभागेति । अत एवाऽलुग्विधिसार्थक्यम् । एतेन 'प्रकृतिविकृतिभावविरहाच्चतुर्थीसमासो दुर्लभ' इत्यपास्तम् ।

'सुप्सुपे'ति समास' इत्यन्ये ।

गवियुधि । 'स्थिर'शब्द औणादिक'किरच्'प्रत्ययान्तः । 'सात्पदाद्योरि'ति निषेधे प्राप्ते इदम् । 'अन्तरङ्गानपी'तिन्यायेनाऽवादितः पूर्वं लुक्प्राप्त्या, 'हलदन्तादि'त्यस्याऽप्राप्तेराह–वचनादेवेति । हृद्दिस्पृगिति । 'ग्रामे गच्छती'तिवत्कर्मणोऽधिकरणत्वविवक्षया सप्तमी । भाष्ये तु 'कर्मण्येव सप्तमी'त्युक्तम् । अलुग्विधिरेव ज्ञापक इति तदाशयः । इदमेव युक्तम् । विनाऽधिकरणत्वं कर्मत्वाऽभावात्, विना च कर्मत्वमधिकरणत्वाऽसम्भवात् । ईदृशे विषये कर्मसंज्ञाया अधिकरणसंज्ञाबाधकत्वात् । अत एवाऽऽकडारसूत्रे भाष्ये उक्तम्—'अधिकरणसंज्ञां कर्मसंज्ञा बाधते, 'गेहं प्रविशती'ति । एतेन 'अत्र 'अमूर्धमस्तकादि'त्येव सिद्धमि'त्यपास्तम् । विभक्तिज्ञापनाऽर्थमावश्यकत्वात् । तत्र 'संज्ञायामि'त्यनुवृत्तश्च ।

कारनाम्नि । 'नाम'ग्रहणं स्पष्टाऽर्थम् । 'संज्ञायामि'त्यनुवृत्त्यैव सिद्धेः ।

---

१ 'अन्तरङ्गानपीति पूर्वं लुकि, अवाद्यभावे, हलदन्तादित्यस्याऽप्राप्तेराह' इति ग. पाठः ।

२ इतोऽग्रे—'इदं च क्वावेव, 'हृद्द्युभ्यां ङेरि'ति भाष्यात् । न चाऽत्र 'अमूर्द्धमस्तकादि'त्येव सिद्धम् । तत्र पर्युदासादेव स्वाङ्गत्वे लब्धे, पुनः स्वाङ्गग्रहणं नियतस्वाङ्गवाचित्वलाभाऽर्थम् । न चाऽयं तथा । 'शास्त्रहृदयमि'त्याद्यस्वाङ्गेऽपि प्रयोगात् । अत एव 'तुल्यास्य'सूत्रभाष्ये 'आस्ये प्रयत्न' इति विग्रहेऽलुक् न कृतः । तद्धितान्ताऽऽस्यशब्दस्य नियतस्वाङ्गवाचित्वाऽभावादिति दिक्' इति ग. पाठः ।

३ 'कर्मत्वाऽसम्भवात्' इति ख. व. पाठः ।

कारनाम्न्येवेति । 'प्राग्देशनाम्नि चेत् कारनाम्न्येवे'ति । इदं वृत्त्यनुसारेण । भाष्ये त्वयं नियमो नोक्तः । अभ्याहितपश्वादेः संज्ञात्वमेव नेति, 'कारनाम्नी'ति स्पष्टार्थमिति तदाशयः । अविकटिति । 'अवि'शब्दात्सङ्घाते कटच् । उरणो–मेषः । नद्यामिति । 'गवां नद्युत्तारणे तात्कालिकदोहः कार' इत्यर्थः । वणिग्भ्यः, पशुपालेभ्यः, कर्षकेभ्यश्च राजग्राह्यो भागः 'करः' । स एव 'कारः' । प्रज्ञाद्यणिति बोध्यम् ।

हलादावित्यादिग्रहणं स्पष्टाऽर्थम् । 'तत्र यूथपश्वादय उदग्देशे काराः । हले[1] द्विपदिकाऽऽदयः प्राग्देशे । अविकटोरणाऽऽदयः प्रागुदक् चे'ति कैयटः[2] । तत्र 'हलादावेवे'ति नियमेनाऽस्य भाष्ये वारणात्प्राक्कारत्वलाभेऽपि, उदक्कारत्वे भाष्याऽऽरूढं मानं चिन्त्यम् ।

अमूर्द्ध । अत्राऽपि 'संज्ञायामि'त्यनुवर्त्तते । अत एव 'तुल्यास्य'सूत्रे भाष्ये-'आस्ये प्रयत्न' इति विग्रहे अलुक् न कृतः ।

बन्धे च । उत्तरसूत्रस्थतत्पुरुषपदमिहाऽपकृष्यते । 'बन्ध' इति घञन्तम् । हस्तेबन्ध[3] इति । तथा च भाष्यम्—'तत्पुरुषे कृती'ति प्राप्ते

---

१ इतोऽग्रे—'यद्यप्यग्रिमनियमद्वयमेव भाष्याल्लभ्यते, नायम् , तथापि वृत्तिप्रामाण्यादयमप्युक्तः । भाष्यमते तु 'अभ्याहितपशुरि'त्यादौ 'पुरुषोत्तम'वदलुग्वारणीयः । यद्यपीदं सूत्रमप्राप्तविभाषेति भाष्ये उक्तं, तथापि तत्पक्षेपि व्यवस्थितविभाषाया आवश्यकत्वेन, नियमपक्षेऽपि लक्ष्यभेदेन, भावाऽभावयोः सत्त्वेनाऽत्रापि तादृशविकल्पाऽक्षतेः, 'प्राचामि'त्यस्य देशपरतया नियमार्थत्वमेव व्याख्यातमित्याहुः' इति ग. पाठः ।

२ इतोऽग्रे—'अत एव 'प्राचामेवे'त्यनेनाऽविकटोरणव्यावृत्तिर्भाष्ये दर्शिता । प्राग्देशीय एव यः कारस्तत्रैवाऽलुगिति तद्भावः' इति ख. घ. पाठः ।

३ 'हस्तेबन्ध इति । व्यधिकरणबहुव्रीहिः । तत्पुरुषेऽपि 'नेन्सिद्धे'ति परं, 'निषेधाश्च बलीयांस' इति न्यायेन बलीयांसं च [1]निषेधं बाधित्वा, येननाप्राप्तिन्यायेनेदमेव' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

---

1 'इति निषेधं बाधित्वा पूर्वविप्रतिषेधेनेदमेव' इति ग. पाठः ।

'नेन्सिद्धे'ति प्रतिषेध आरभ्यते । तस्मिन्नित्यं प्राप्ते इयं विभाषाऽऽरभ्यते' इति । 'घञन्ते विभाषा, अन्यत्र प्रतिषेध' इति च । 'स्वाङ्गादि'ति चाऽत्र न सम्बध्यते । तेन 'चक्रे बन्धश्चक्रबन्ध' इत्यादि सिद्धम्[1] । बहुव्रीहावप्यस्य प्रवृत्तिं स्वीकुर्वतां, तत्पुरुषे पूर्वविप्रतिषेधेनाऽस्य निषेधबाधकतां स्वीकुर्वतां वृत्तिकारादीनामाश्रयश्चिन्त्य[2] इति बोध्यम् ।

तत्पुरुषे कृति । 'बहुल'ग्रहणेनैव सिद्धत्वात् 'हलदन्तादि'त्यनुवृत्तिर्व्यर्थेति ध्वनयन्नुदाहरति—कुरुचर इति । एवं मद्रचरोऽपि बोध्यः । अत एव 'गोषुचर' इति सिद्धम्[3] ।

विभाषा वर्ष । लिङ्गविशिष्टग्रहणात् वर्षासुजोऽपि । स्पष्टं चेदम् 'अलुगुत्तरपदे' इति सूत्रे भाष्ये ।

घकाल । 'घ'शब्देन तरतमौ । 'काले'ति स्वरूपग्रहणम् । तनः-सतुट्क-ट्यु ट्युलौ । पूर्वाह्णेतरे इति । प्रकृत्यर्थप्रकर्षविवक्षायां द्रव्यप्रकर्ष-सत्त्वादाम्न कृतः । अत्राऽपि 'हलदन्तादि'ति वर्त्तत इत्याहुः । 'सायंचिरमि'-तिसूत्रस्थभाष्यप्रामाण्यादेवाऽत्र[4] वृत्तिकारोक्ता विकल्पाऽनुवृत्तिश्चिन्त्येति तत्रैव निरूपयिष्यामः । 'विभाषा पूर्वाह्णे'तिसूत्रस्थभाष्यप्रामाण्याच्च 'हल-दन्तादि'त्यपि नाऽनुवर्त्तते । अतिप्रसङ्गस्त्वनभिधानान्नेत्याहुः[5] । अप्सव्य

१ इतोऽग्रे—'उत्तरसूत्रस्थतत्पुरुषपदमिहाऽपकृष्यते इति तद्भावः' इति क. कुण्डलितः ख. घ. पाठः ।

२ 'आशयश्चिन्त्य इति बोध्यम्' इति ख. पाठः ।

३ इतोऽग्रे—'नचैवं 'तत्पुरुषे' इति व्यर्थम् । 'प्रावृट्शरत्काले'त्यादिवत्प्रपञ्चार्थत्वादिति दिक्' इति क. कुण्डलितः ख. घ. पाठः ।

४ 'ध्वनितं चेदं 'सायंचिरमि'त्यत्र भाष्ये । तत्रत्यभाष्यप्रामाण्यादेव' ख. ग. घ. पाठः ।

५ इतोऽग्रे—'शयवास । बहुलग्रहणलभ्यमर्थमाह—हलदन्तादित्येवेति' इति ग. घ. पाठः ।

इति। शिगादित्वाद्यति, ओर्गुणेऽव्। यत्त्वत्र 'यत्'स्थाने 'जं' पठन्ति, तदाकरविरुद्धम्। अप्सुमन्ताविति। यद्यप्याधुनिकभाष्यपुस्तकेषु, 'हलोऽनन्तरा' इति सूत्रे 'हरि'ग्रन्थे च 'मितिष्वि'ति पाठः, 'अप्सुमतिरि'त्युदाहरणं च दृश्यते, तथाऽपि सोऽपपाठः, हरदत्ताऽऽदिग्रन्थविरोधात्। कारीर्यामाज्यभागयोः 'अप्स्वग्ने सधिष्टव' 'अप्सु मे सोमोऽब्रवी'दित्यनुवाक्ये। तत्र चाऽप्सुशब्दोऽस्ति। न च मतुग्रहणं[2] व्यर्थम्। 'प्रकृतिवदि'त्यतिदेशस्याऽनित्यतामाश्रित्य प्रथमान्तत्वनिमित्तकमतुपः प्राप्तेरिव, लुकोऽप्राप्तेरेव वक्तुं शक्यत्वादिति वाच्यम्। तन्न्याय-तदनित्यत्वयोर्ज्ञापनाऽर्थत्वसम्भवात्। स्पष्टं चेदम् 'ऋत्यक्'सूत्रे कौस्तुभे इत्याहुः।

'एकवचने'त्यस्याऽतिप्रसङ्गव्याजेनाऽप्सुजाऽप्सुचरादिवत् भाष्ये इदमुपन्यस्तम्। न हि 'अप्सुमन्तावि'त्यत्र तस्य प्रसङ्गोऽस्ति। शब्दपरस्य तस्यैकत्वमात्राऽर्थकत्वात्। उक्तयुक्त्या 'अस्यवामीयमि'त्यादाविव लुकोऽप्राप्त्या, तस्य सिद्धेरस्य फलमपि तदा मन्दमेवेति, 'मतिरि'त्येव पाठो युक्तः[3]। ( इत्यन्ये )।

चक्रबद्ध इति। निष्ठान्तेन 'सप्तमी'ति योगविभागात्समासः। अजन्तेन समासेऽपि 'चक्रबन्ध' इत्येव। 'बन्धे चे'त्यत्र 'घञन्तस्यैव ग्रहणमि'ति भाष्योक्तेः।

स्थे च। अयं च निषेधः 'अनन्तरस्ये'ति न्यायात् 'तत्पुरुषे कृती'-

१ इतोऽग्रे—'अप्सुजाऽप्सुचर' इतिवत् 'अप्सुमतिरि'त्यत्र 'तत्पुरुषे कृती'त्येव सिद्धत्वाच्च' इति ग. पाठः।

२ 'मतुप्ग्रहणम्' इति ख. ङ. पाठः। 'मतुप्ग्रहणमपि' इति ग. घ. पाठः।

३ 'युक्त इत्यन्ये। यत्तु मनोरमायाम्—'अप्सुज' इत्यत्र 'हलदन्तादि'त्येव सिद्धमि'ति। तन्न। यद्यपि परत्वात्, असंज्ञात्वाच्च 'तत्पुरुषे कृती'त्येवोचितं, तथाऽपि 'हलदन्तादि'ति सूत्रे 'बहुल'ग्रहणं कृत्वा संज्ञाग्रहणं, 'तत्पुरुषे कृती'त्यादि च प्रत्याख्येयमित्यभिप्रायः' इति ख. घ. पाठः, क. कुण्डलितः।

त्यस्यैव । अत एव 'कण्ठेऽस्थः कालो यस्ये'ति 'अनेकमन्यपदार्थे'इतिसूत्रस्थ-भाष्यप्रयोगः सङ्गच्छते । तत्र हि 'अमूर्द्धमस्तकादि'त्यलुक् । एतेन 'पाव-कोत्थशिखया हृदिस्थये'ति व्याख्यातम् । तत्र 'हृद्द्युभ्यां चे'ति अलुक् । पश्यतोहर इति । पश्यन्तं जनमनादृत्येत्यर्थः । 'षष्ठी चाऽनादरे' इति षष्ठी ।

देवानामिति । मूर्खत्वं ब्रह्मज्ञानरहितत्वम् । तद्रहिता हि यज्ञाद्य-नुष्ठानैर्देवानां प्रीतिं जनयन्ति, यतस्ते देवपशवः = पशुवद्देवनियम्या इत्याहुः।

'देव'शब्दो मूर्खवाची । मूर्खश्च मूर्खप्रिय एवेति 'अजेर्वी'तिसूत्रे कैयटः[2] । शुनःशेपाऽऽदयो बहुव्रीहयः । ऋषिविशेषाणामेताः संज्ञाः । अत एव भाष्ये 'संज्ञायामुपसङ्ख्यानमि'त्युक्तम् । शेपो—लिङ्गम् । 'शेप'शब्द औणादिक-'प'प्रत्ययान्ताऽकारान्तोऽपि, 'यस्यामुशन्तः प्रहराम शेपमि'ति दर्शनात् । असंज्ञायान्तु 'श्वापुच्छः' । 'शुनो दन्दंतष्ट्रे'ति दीर्घः । 'श्वपुच्छमि'ति वा ।

पुत्रेऽन्यतै । निन्दायामिति । 'आक्रोशे' इत्यनुवृत्तेरिदं लब्धम् । स्पष्टं चेदम 'आनङ् ऋत' इति सूत्रे भाष्य-कैयटयोः । एवं चाऽऽरम्भसामर्थ्या-देव विकल्पे सिद्धे, 'अन्यतरस्यामि'ति स्पष्टाऽर्थम्[3] ।

---

१ 'पश्यतो जनाननादृत्य' इति ग. पाठः ।

२ इतोऽग्रे—'आक्रोशे' इत्यनुवृत्तेरिदं लब्धम्' इति घ. पाठः । 'यद्यपि 'मूर्ख' इति भाष्ये न दृश्यते, तथापि तत्रैव प्रचुरप्रयोगदर्शनादिदमुक्तम्' इति ग. पाठः ।

३ 'नन्वाक्रोशे इत्यनुवृत्तावारम्भसामर्थ्यादेव विकल्पे सिद्धे, 'अन्यतरस्यामि'ति व्यर्थम् । न च 'षष्ठ्या आक्रोशे' इत्यत्र विकल्पकल्पनाऽऽपत्तिः । असञ्जात-विरोधित्वन्यायेनोत्तरत्रैव तत्कल्पनाया उचितत्वात् । किञ्चाऽस्यामाक्रोशे इत्यनुवृत्ति-निवृत्ति-पूर्वविप्रतिषेधैः संशयत्रयस्योपपादयितुं शक्यत्वेन, त्रिसंशय-प्राप्तविभाषासु 'नवे'तिसूत्रभाष्येऽगणने बीजाऽनापत्तिरिति चेन्न । 'आनङ् ऋत' इत्यत्र 'पुत्रे'इत्यनुवर्त्य, पुत्रशब्दे(ऽपि) परत आनङं विधाय, 'यद्यनुवर्त्तते, 'विभाषा स्वस्त्रि'ति अनाक्रोशे ऋदन्तपूर्वपदे भ्रातुःपुत्रादौ पुत्रेऽपि विभाषा प्राप्नोति । नैष दोषः । सम्बन्धमनुवर्त्तते । 'षष्ठ्या आक्रोशे' । 'ऋतो विद्यायोनिसम्बन्धेभ्यः' । 'पुत्रेऽन्यतरस्याम्' । 'षष्ठ्या आक्रोशे' ।

पितुःपुत्र इति । 'प्रख्यातात्पितुरुत्पन्न' इत्यर्थः । तत्पूर्वेति । 'विद्यायोनिसम्बन्धवाचकाऽन्यतरपूर्वोत्तरपदक' इत्यर्थः । तेन 'होतुःपुत्र' इत्यादिसिद्धिः । तद्ध्वनयन्नाह-होतृधनमिति ।

विभाषा स्वसृ । यत्त्वत्र 'स्वसृ'ग्रहणं व्यर्थम् । 'मातृपितृभ्यां स्वसा', 'मातुःपितुर्भ्यामि'ति च समासे षत्वविधानबलेनैवाऽलुग्विकल्पसिद्धे-रि'ति । तन्न । 'मातुःपितुर्भ्यामि'ति सूत्रस्य 'समासे' इति निवृत्त्याऽपि सुसङ्गतत्वेन, लुक्शास्त्रबाधे मानाऽभावात् ।

( मातुःपितुर्भ्यामिति[1] ) । 'मातुः पितुर्भ्यामि'ति रान्तस्याऽनुकरणम् । विसर्गादावेकदेशविकृतन्यायेनैतत्त्वं बोध्यम् । 'मातुःपितुर्भ्यामि'तिसूत्रे-ऽनुवृत्त'समास'ग्रहणकृत्यमाह—असमासे त्विति । तथा च पाक्षिकमपि षत्वं नेत्यर्थः[2] । नित्यस्य तु प्राप्तिरेव न, व्यवधानात् ।

इत्यलुक्समासः ।

---

'पुत्रेन्यतरस्याम्' । 'षष्ठ्या आक्रोशे' । 'विभाषा स्वसृपत्योः' । 'पुत्रेन्यतरस्याम्'।'षष्ठ्या आक्रोशे'।'आनङ् ऋतो द्वन्द्वे'। 'पुत्रे'ग्रहणमनुवर्त्तते, 'षष्ठ्या' इति निवृत्तमि'ति आनङ्सूत्रस्थभाष्येणाऽनाक्रोशसम्बन्धबोधनात् यत्तु । 'पुत्रेऽपि विभाषा प्राप्नोती'ति भाष्यमुपादाय कैयटो व्याख्यत्—'अनाक्रोशेऽपि भ्रातुःपुत्रादावित्यभिप्राय' इति । तन्न । आक्रोशे 'ऋतो विद्ये'त्यनेन परत्वेन विकल्पस्य बाधात् । तत्रापि विकल्पस्यापाद्यत्वेन सङ्कोचेन भाष्यव्याख्याया अनुचितत्वात् । •'नवे'ति सूत्रस्थभाष्यन्तूदाहरणमात्रं, न परिगणनम् । अन्यतरस्याङ्ग्रहणं तु स्पष्टार्थम् । एतद्भाष्यप्रामाण्यादाक्रोशविषये भ्रातुः-पुत्रादौ पूर्वविप्रतिषेधेन 'ऋतो योनी'ति बाधित्वाऽनेन विकल्प एवेति बोध्यमित्याहुः' इति ग. घ. पाठः ।

१ 'मातुःपितुर्भ्यामिति । सान्तस्याऽनुकरणम् , रेफाऽन्तस्यैव वा । आद्ये विसर्गान्तस्य एकदेशविकृतन्यायेन । 'वा शरी'ति पाक्षिकसत्त्वे, उपदेशेनैव षत्वम् । अन्त्ये उभयत्राऽप्येकदेशविकृतन्यायेनैवेति बोध्यम्' इति ख. ग. घ. पाठः ।

२ इतोऽग्रे—वस्तुतो 'मातुरि'त्यस्य पूर्वान्तवत्त्वेन मातृशब्दस्वाश्रित्यस्याऽपि समासग्रहणादेवाऽभावः' इति ख. ग. घ. पाठः ।

# अथ समासाश्रयप्रकरणम् ।

घरूप । 'घ'शब्देन तरप्तमपौ । प्रत्ययेष्विति । 'लेख'ग्रहणेनोत्तरपदाऽधिकारे क्वचित्प्रत्ययग्रहणे तदन्ताऽग्रहणं ज्ञापयिष्यते इति भावः । 'चिल वसने' इति धातोश्चेलडिति पचादौ पठ्यते । टित्त्वं ङीबर्थम् ।

ब्राह्मणितरेति । 'तसिलादिष्वि'ति पुंवत्त्वं तु न । 'जातेश्चे'तिनिषेधात् । 'सुन्दरितरे'त्यादौ तु पुंवत्त्वात् परत्वाद्ध्रस्व इति बोध्यम् ।

आमलकीति । वृक्षे नित्यस्त्रीलिङ्गोऽयमिति वृत्ति-हरदत्तादौ स्पष्टम् । 'वृक्षजातिः स्त्रियामि'ति लिङ्गानुशासनसूत्रात्, 'आम्र' इत्यादिप्रयोगदर्शनात्काचित्कमिदमित्यभिमानः । ननु 'बिम्बी-बदरी-आमलक्यादयो भाषितपुंस्का' इति 'न पदान्त'सूत्रभाष्याल्लभ्यते । तत्रत्यकैयटस्य तु प्रमादः । अत एव 'शौनकश्चाऽरलस्तिष्यफला त्वामलकी त्रिष्वि'त्यमरः, इत्यरुचेराह—कुवलीति (—इत्याहुः) ।

नद्याः शे । पूर्वसूत्रे श्रुतादन्यः शेषः । स च द्विधेत्याह—अङ्यन्तेति । 'भाषितपुंस्कादि'त्यपीह न सम्बध्यते । तद्ध्वनयन्नुदाहरति—स्त्रीतरेति । अत एव 'कृन्नद्या ने'त्यस्य 'लक्ष्मीतरे'त्युदाहरणं भाष्ये दत्तम् ।

---

१ 'पद्वितरेत्यादौ तु पुंवत्त्वेन परत्वात्' इति ग. पाठः । लघुशेखरे च ।

२ 'पुंवत्त्वात्' इति क. घ. नास्ति ।

३ 'काचित्कमिदमित्यन्यदेतत् । 'शौनकश्चाऽरलस्तिष्यफला त्वामलकी त्रिषु' इत्यमरस्य तु प्रमाद एव । वृत्तिकैयटहरदत्ताऽऽदिप्रामाण्यात् । अमरे त्वामलकीति पाठ इत्यन्ये । अन्ये तु बिम्बीबदरीआमलक्यादयो भाषितपुंस्काः' इति ख. ग. घ. ङ. पाठः ।

४ 'इत्यरुचेराह—कुवलीति । 'कोशगत'तु'शब्दस्य स्वारस्येन आमलकी द्विविधा, तिष्यफला, अन्या च । तत्र 'तिष्यफला त्रिष्वि'त्युक्त्याऽन्या नित्यस्त्रीलिङ्गेति लभ्यते' इति भाष्यवृत्तिकोशानां न विरोध' इत्यपि केचित्' इति ख. घ. ङ. पाठः । ५ अयं ख. ग. घ. ङ. पाठः । क. नास्ति ।

उगितः परेति। 'विहिते'ति शेषः। अत एव इषुमतोऽपत्यं स्त्री ऐषुमती। ततस्तरपि 'ऐषुमतितरे'त्यादौ नित्यह्रस्व एव। अणन्तादेषा विहिता, न तूगितः। एतच्च 'युवोरनाकावि'ति सूत्रे भाष्ये स्पष्टम्।

यत्तु 'उगिच्छब्देन विहिते'ति। तन्न। 'भोगवतितरा' 'भोगवतीतरा'इत्यादौ विकल्पाऽनापत्तेः। तत्र हि 'भोगवद्गौरिमतोः संज्ञायामि'ति शार्ङ्गरवादित्वान्ङीन्। न च 'विद्वत्तरे'तिवत् 'भोगवतीतरे'त्यत्र ह्रस्वाऽभावे 'तसिलादिष्वि'ति पुंवत्त्वाऽऽपत्तिः[1]। 'संज्ञापूरण्योश्चे'ति निषेधात्।

निर्मूलमिति[2]। न हि स्वयमप्रवर्त्तमानोऽपि ह्रस्वः पूर्वं बाधते इति न्याय्यम्[3]। अत एव 'स्यसिच्'सूत्रे 'सीयुटि 'वध'भावाच्चिण्वदिट् विप्रतिषेधेन। घानिषीष्टे'त्युक्त्वा 'एकाच उपदेशे' इति सूत्रे 'वधादेशे आद्युदात्तनिपातनं करिष्यते। वधिषीष्टे'ति। (अत्र[4] निपातनस्वरं प्रत्ययस्वरो बाधिष्यते। आर्द्धधातुकीयाः सामान्येन भवन्ती'ति) भाष्यं सङ्गच्छते। चिण्वद्भावाऽभावे हि तद्रूपम्। न[5] चैवं घिनुण्सूत्रस्थ'शमिनितरा' 'शमिनीतरे'ति भाष्यविरोधः। ताच्छीलिकानां प्रायेण रूढिशब्दत्वात् संज्ञाशब्दतया 'संज्ञापूरण्योश्चे'ति निषेधात्।

---

१ 'पुंवत्त्वाऽऽपत्तिः। 'भोगवद्गौरिमतोरि'ति शार्ङ्गरवादिपाठसामर्थ्येन तद्भावस्य तत्रैवोपपादितत्वात्। न च ह्रस्वस्यैव बाधाऽऽपत्तिः। 'अनन्तरस्ये'तिन्यायेन पुंवत्त्वस्यैव बाधात्। निर्मूलमिति' इति ग. घ. पाठः।

२ इतोऽग्रे—अत एव 'पुंवदि'ति सूत्रे ह्रस्वत्व-पुंवत्त्वयोर्विप्रतिषेधो भाष्योक्तः सङ्गच्छते' इति ग. पाठः।

३ इतोग्रे 'एतेन विप्रतिषेधे, सकृद्गतिन्यायाश्रयणेन तदभावेऽपि न पुंवत्त्वमित्यपास्तम्' इति ग. पाठः।

४ अयं ग. घ. पाठः। क. ख. नास्ति।

५ 'नचैवं वधादेशस्याऽन्तरङ्गत्वात्स्यसिच्सूत्रोक्तविप्रतिषेधाऽनुपपत्तिः। अत्राऽप्युपदेशग्रहणेन भावकर्मवाचकतशब्दपर-स्यादि-विषये उपदेश एव चिणी-

'तत्र भाष्यप्रयोगादेव पुंवत्त्वबाध' इत्यपि केश्चिन ।

अणन्तस्येति । अत एव 'लेख'ग्रहणस्य उत्तरपदाऽधिकारे प्रत्ययग्रहणे तदन्ताऽग्रहणज्ञापकता भाष्योक्ता सङ्गच्छते । तदेवाऽऽह—ज्ञापकमिति । उत्तरपदं विशेष्यं कृत्वा तदन्तविधिर्नेत्यर्थः । एवं चाऽस्मादेव ज्ञापकादुत्तरपदे इत्यस्य तदंशेऽसम्बन्ध इति तात्पर्यम् । हृच्छब्देनैव सिद्धे 'हृदयलेख' इत्यादिनिवृत्त्यर्थमिदम् । सौहार्द्यमिति । ब्राह्मणादित्वात्ष्यञ् । 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः । प्रपञ्चार्थमिति । 'प्रयोग-

---

वाऽङ्गकार्यातिदेश इत्यभिप्रायेणाऽदोषात् । तद्विषयसंनियोगेनैव च स्यादीनामिडागमविधानेन तत्राऽप्यदोषाच्चेति दिक्' इति ग. घ. पाठः । क. नास्ति ।

१ इतोऽग्रे 'अत्र वृत्तौ 'पुंवद्भावोऽत्र पक्षे वक्तव्यः' । श्रेयस्तरा । विद्वत्तरा । प्रकर्षयोगात्प्राक् स्त्रीत्वस्याऽविवक्षितत्वात्सिद्धमि'ति । तस्याऽयमाशयः,-'विदुषीतरे'ति रूपमसङ्गतमि'ति शङ्कते,-पुंवद्भावोऽत्रेति । पक्षे इति । ह्रस्वाऽभावपक्षे इत्यर्थः । तत्पक्षेऽपि पुंवद्भाव एवोदाहर्त्तुमुचितो, न तु दीर्घ इति भावः । समाधत्ते--प्रकर्षयोगादिति । एवं च तथाविवक्षयैव 'विद्वत्तरे'त्यादेः सिद्धौ, ह्रस्वविकल्पविधानसामर्थ्यात्पक्षे दीर्घश्रवणम् । तरप्प्रत्ययेऽतिशयविशिष्टे तु पश्चात्स्त्रीत्वविवक्षा, पूर्वन्तु 'सामान्ये नपुंसकम्' । विवक्षितत्वात्तल्लिङ्गादेव तरप्[1] । क्वचित्तु-'पुंवद्भावोऽप्यत्रे'त्यपिघटितः पाठः । तदाऽप्यपिसंग्राह्यदीर्घ उपसंख्येय इत्येव तात्पर्यम् । उत्तरस्य तूक्त एवाऽऽशय इति । एवञ्चानया रीत्या 'मदुत्तरे'त्यपि साध्वेव । पुंवत्वह्रस्वयोर्विप्रतिषेधविचारस्तु 'पट्वितरे'त्यस्यापि साधुत्वायेति । परन्त्वेतद्भाष्ये न दृष्टमित्यलम्' इति क. कुण्डलितः, ख. घ. ङ. पाठः ।

२ 'न च 'प्रयोगद्वयमेष्वेव, अन्यत्र हृदयशब्द एवे'ति व्यवस्थार्थमस्त्विति

---

1 इतोऽग्रे—'एवञ्च स्वार्थद्रव्यलिङ्गाद्यनन्तरमेव प्रकर्षकुत्सादिविवक्षेति, कुत्सितसूत्रस्थभाष्येणापि न विरोध इति' इति घ. पाठः ।

द्वयमेऽवेव, अन्यत्र 'हृदय'शब्द एवे'ति व्यवस्थाऽर्थमिति भावः।

पादस्य। अत्र सूत्रे, उत्तरसूत्रे च 'पाद'शब्देन न तदन्तग्रहणम्। (पादस्य विशेषणत्वाऽऽश्रयणात्)। अत एव 'दिग्धपादेन उपहतम् दिग्धपादोपहतम्' 'परमपादकाषी'त्यादौ न पद्भावः। 'परमपत्काषी'ति तु 'परमश्चासौ पत्काषी'ति विग्रहेण समाधेयमिति 'येन विधिरि'त्यत्र भाष्यकैयटयोः। उत्तरसूत्रे 'पद'ग्रहणात् 'पदे'त्यदन्तं लुप्तविभक्तिकमित्याऽऽशयेनाह—अदन्त इति। अयं चाऽत्राऽन्तोदात्तो निपात्यते। 'पाद'शब्दो हि 'स्वाङ्गशिटामि'त्याद्युदात्तः।

पद्या इति। 'विध्यत्यधनुषे'ति यत्। पाद्यमिति। 'पादाऽर्घाभ्यां चे'ति यत्। पूर्वसूत्रे आज्यात्यादिषु प्राण्यङ्गस्यैव करणत्वसम्भवेन, तस्यैव ग्रहणादिहाऽप्यर्थाऽधिकारात्स एव गृह्यते। तेन 'द्वाभ्यां पादाभ्यां क्रीतमि'त्यर्थे 'पणपादमाषे'ति यति, पदादेशो न। 'पाद'शब्दोऽत्र रूपकचतुर्थांऽशे वर्त्तते। स्पष्टं चेदं वृत्तिपदमञ्जर्योः।

इके इति। पर्पादिषु 'पादः पच्चे'ति त्वनार्षम्।

पत्काषीति। 'सुप्यजातावि'ति णिनिः। पद्धतिरिति। कर्मणि क्तिन्।

ऋचः। अत्राऽन्यस्याऽसम्भवाच्चतुर्थांऽशवाचि'पाद'शब्दग्रहणम्। पच्छ इति। लोमादिषु पादशब्दपाठाऽभावादनर्थकस्याऽपि शस्प्रत्ययैकदेशस्य ग्रहणमिति भावः। 'संख्यैकवचनादि'ति शस्।

उदमेघ इति। (पुरुषविशेषस्य संज्ञेयम्)। अत्रोदकपर्याय 'उद'शब्दो-

---

वाच्यम्। 'पद्दन्नोमासूहृदि'त्यस्य वैयर्थ्यापत्तेः। तत्र हि प्रभृतिग्रहणं शब्दमात्रग्रहणार्थम्। तेनैव सिद्धेऽस्य प्रपञ्चार्थताया एवौचित्याच्च' इति ग. घ. पाठः।

१ अयं पाठः क. नास्ति।

२ 'द्वाभ्यां पादाभ्यां = तत्परिमिताभ्यां क्रीतमित्यर्थे' इति ख. घ. पाठः।

३ अयं पाठः क. घ. नास्ति। 'साऽद्वयाच्चेयं पुरुषविशेषस्य संज्ञा' इति घ. पाठः।

ऽप्यस्ति । अत एव 'प्रसन्नोदं सर' इत्यसंज्ञायामपि प्रयुज्यते । इदन्तु संज्ञायामुदकशब्दनिवृत्त्यर्थम् । 'एकहलादावि'ति तु प्रपञ्चार्थम् ।[1]

उदपेषमिति । 'स्नेहने पिष' इति णमुल् । उदधिर्घट इति । 'उदकं धीयते अत्रे'त्यर्थः । 'कर्मण्यधिकरणे चे'ति 'कि'प्रत्ययः । समुद्रेति । संज्ञात्वादिति भावः ।

एकहलादौ । संज्ञायान्तु पूर्वविप्रतिषेधेन नित्यमेवेति 'नवे'ति सूत्रे भाष्ये स्पष्टम् । 'एक'शब्दश्चाऽसहायवाची । सहायश्च तुल्यजातीयो हलेव व्यवच्छिद्यते इति बोध्यम् । पूरयितव्यम् = पूरणार्हम् ।[2]

मन्थौदन । द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः । उदमन्थ इति । 'सुप्सुपे'ति समासः । ( 'तृतीये'ति योगविभागादि'त्यन्ये ) ।

इको ह्रस्वो । 'ग्रामणिब्रुवे'त्यादावप्ययं ह्रस्वः । ( परत्वात्[3] ) । शुक्लीभाव इति । 'ऊर्यादिच्वी'ति निपातत्वेऽव्ययत्वम् । 'नुनुदे तनुकण्डुपण्डितः' इति तु कण्ड्वादीनां प्रातिपदिकानामियङुवङ्भावित्वाऽभावेन सिद्धम् । ( 'अतनुकण्डु' इति क्रियाविशेषणमित्यप्याहुः ) ।[4]

'इयङुवङ्भाविनामि'तिनिषेधनिषेधमाह—अभ्रू[5] इति ।

एक त । 'अच' इत्युपस्थितस्यैकविशेषणत्वात् 'अजन्तस्य एकशब्दस्याऽन्त्यस्य ह्रस्व' इत्यर्थः । तत्र पुंनपुंसकयोर्ह्रस्वत्वे विशेषाऽभावादाह— एकस्या इति । अत्र यद्वक्तव्यं तत् 'सर्वनाम्नो वृत्तिमात्रे' इत्यत्रोक्तम् ।

रेवतिपुत्र इति । कस्य चित्संज्ञा । छन्दस्याह—अजक्षीरमिति । तथा च प्रयोगः 'अजक्षीरेण जुहोती'ति ।

---

१ 'प्रसन्नोदमित्यसाध्वेव । उदकपर्यायोदशब्दाऽङ्गीकारे तु 'एकहलादावि'त्यस्य वैयर्थ्यम्' इति तु लघुशेखरे पाठः ।

२ अयं ख. पाठः ।

३ 'परत्वात्' इति ग. घ. पाठः । क. ख. नास्ति ।

४ अयं ग. घ. पाठः ।　　५ 'अभ्रू' इति लघुशेखरे पाठः ।

त्वे च। अत्राऽपि 'संज्ञाच्छन्दसोरि'ति वर्त्तते। तत्र संज्ञाया असम्भवाच्छन्दस्येवेदमिति वृत्तिः। अनुत्तरपदाऽर्थं वचनम्। बहुलग्रहणस्यैव प्रपञ्चः।

ष्यङः सम्प्र। अनुबन्धद्वयोच्चारणं पाशादिभ्यो यस्य, ष्यञो, 'वृद्धेदि'ति ञ्यङश्च व्यावृत्त्यर्थम्। तत्पुरुष'पदेन पूर्वपदोत्तरपदे आक्षिप्येते। तत्र पूर्वपदं ष्यङो विशेष्यम्। तेन ष्यङन्तग्रहणम्। ष्यङ्मात्रस्य पूर्वपदत्वाऽभावात्। उत्तरपदं च पुत्रपत्योर्विशेषणम्। तेन 'कारीषगन्ध्यापरमपुत्र' इत्यत्र नेत्याहुः।

सम्प्रसारणस्य। 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्त्तते। 'उत्तरपदे' इत्यधिक्रियते। न च 'कारीषगन्धीपुत्र' इत्यादौ 'हल' इत्येव दीर्घसिद्धात्रिदं सूत्रं व्यर्थमिति वाच्यम्। अङ्गाऽऽक्षिप्तप्रत्ययपरत्वाऽभावात्।

कौमुदेति। 'कुमुदगन्धेरपत्यं स्त्री'त्यर्थे 'अणिञोरनार्षयोरि'त्यणः ष्यङि, 'यङश्चाप्'। पूर्वाऽन्तवत्त्वेन ष्यङन्तत्वम्। सम्प्रसारणे, पूर्वत्वे च, दीर्घविधानसामर्थ्यादल्विधित्वेऽपि स्थानिवत्त्वेन सम्प्रसारणत्वाद्दीर्घः।

ह्रस्वो नेति। 'इको ह्रस्वोऽङ्यः' इत्यनेने'ति शेषः। 'अतिकारीष' इति–

१ इतोऽग्रे—अत एव 'इग्यण' इति सूत्रे 'उभयसञ्ज्ञात्वस्ये'ति भाष्यप्रयोगः सङ्गच्छते' इति ग. घ. पाठः।

२ इतोऽग्रे—'यद्यप्यत्र इशा सिद्धं, तथापि 'वचिस्वपी'त्याद्युत्तरार्थं सम्प्रसारणग्रहणात्' इति ग. घ. पाठः।

३ 'पूर्वपदत्वाऽभावाच्च' इति ग. घ. पाठः।

४ इतोऽग्रे—'संप्रसारणाऽङ्गाऽऽक्षिप्तयोरेकत्वे एव तत्प्रवृत्तेः' इति ख. पाठः।

५ 'प्रत्ययपरत्वाऽभावाच्च। 'हल' इत्यस्योत्तरपदाऽनिमित्तकत्वेन, उत्तरपदनिमित्तसंप्रसारणाऽसिद्धत्वेन तदप्रवृत्तेश्च' इति ख. घ. पाठः।

६ 'ष्यङन्तत्वे' इति ख. पाठः।

'अत्यादय' इति समासे[1] षष्ठीतत्पुरुषः। अत्र ष्यङन्तं न पूर्वपदमिति भावः[2]।

मातजादेश इति। स च कब्भावपक्षे एव। ननु 'नद्युतश्चे'ति नित्यं कप्विधानात्तदभावपक्षो दुर्लभोऽत आह—कप्विकल्पश्चेति। नच[3] 'मातुर्मातच्पुत्राऽर्थमर्हते' इत्यनेन सम्बुद्धौ सिद्धमातजनुवादेन सम्प्रसारणमात्रं विकल्प्यताम्, किं मातजादेशनिपातनेनेति वाच्यम्। मातजित्यंशस्य 'कारीषगन्धीमातरि'ति भाष्योदाहरणे सम्बुद्धिविषयाऽभावात्।

बहुव्रीहावेवेति। अत एव भाष्ये तद्विग्रहप्रदर्शनपूर्वकमुदाहरणानि दत्तानि। चिन्त्वेति। 'मातच' इति शेषः।

इष्टकेषी। 'भारिष्वि'ति पाठः। असंज्ञाच्छन्दोऽर्थं वचनम्। उत्तरपदाऽऽक्षिप्तपूर्वपदं विशेष्यीकृत्य तदन्तविधिमभिप्रेत्याऽऽह—तदन्तानामिति। 'येन विधिरि'ति सूत्रे भाष्ये स्फुटमेतत्।

इष्टकचितमिति। 'कर्तृकरणे' इति समासः। मालभारीति। 'मालां बिभर्त्ती'ति 'सुप्यजातावि'ति ताच्छील्ये णिनिः। 'हारिष्वि'ति केचित् पठन्ति।

कारे सत्या। 'अरुर्द्विषदि'त्यतो मुमनुवर्त्तते। सत्यङ्कारः = शपथकरणम्, तत्कर्त्ता च। अशपथेऽपि डाचं बाधित्वा परत्वात्कारशब्दे मुमेव भवति। 'अगदङ्कारो-विषप्रतिपक्षद्रव्यकरणमि'ति कैयट-हरदत्तौ। 'वैद्य' इत्यन्ये। 'अस्तु'इति तिङन्ताऽनुकरणेन समासः। 'तत्प्रतिरूपकाऽव्ययेने'त्यन्ये। अस्तुङ्कारः = अभ्युपगमः, तत्कर्त्ता च।

धेनुम्भव्येति। 'भविष्यन्ती धेनुरि'त्यर्थः। 'भव्यगेये'ति भविष्यति काले कर्त्तरि यत्। 'धेनुश्चाऽसौ भव्ये'ति विग्रहः। गौतमस्मृतौ-'अधेनुं

---

१ 'समासे, गोस्त्रियोरिति ह्रस्वत्वे, षष्ठीतत्पुरुषः' इति ग. पाठः।

२ इतोऽग्रे—'एवं 'कारीषगन्ध्यापुत्रकुलमि'त्यत्राऽपि न। पुत्ररूपोत्तरपदाऽभावात्' इति ग. घ. पाठः।

३ इतोऽग्रे—'मात्रा पुत्रस्यश्लाघ्यत्वद्योतनाऽभावाच्च' इति ग. घ. पाठः।

'धेनुभव्ये'ति ब्रूयादि'ति प्रयुक्तम्। तत्राऽऽर्षत्वान्मुम्नेति तद्व्याख्यायां हरदत्तः। मयूरव्यंसकादित्वात्समासः। एतेन 'विशेषणमि'ति समासे, 'कृत्यतुल्याख्या' इति वा समासे, 'भव्या' शब्दस्य पूर्वनिपातः स्यादि'त्यपास्तम्। पृण इति। 'पृणतिः पूरणाऽर्थे' इति कैयटः। 'प्रीणनाऽर्थ' इत्यन्ये।

नन्विगुपधलक्षणं कं बाधित्वा 'लोकं पृणती'ति विग्रहे 'कर्मण्यण्' स्यादत आह–मूलविभुजादित्वादिति। 'पृणतीति पृणः। इगुपधलक्षणः कः। लोकस्य पृण' इति केचित्। इत्य इति। कर्मणि 'एतिस्तुशास्वृ' इति क्यप्। अभ्याशम् = समीपम्, तद्विरुद्धम–अनभ्याशम् = दूरम्।

भ्राष्ट्रमिन्ध इति। कर्मण्यणि उपपदसमासः। घञन्तेन वा षष्ठीसमासः। तिमिङ्गिल इति। मत्स्यविशेषः। गिरतेर्मूलविभुजादित्वात्कः। 'अचि विभाषे'ति लत्वम्। गिलगिले चेति। 'गिलं गिलतीति-गिलगिलः। तिमीनां गिलगिल' इति विग्रहे इदमारब्धम्।

रात्रेः कृति। अत्र प्रकरणे तदन्तविध्यभावेऽपि, रात्रेः कृतोऽसम्भवात्कृदन्ते इत्यर्थः। (यद्यप्याचारक्विबन्ताण्वुलादिः[1] सम्भवति, तथाप्यभिव्यक्तपदार्था ये इति तस्येहाऽग्रहणमित्याहुः)। ध्वनितं चेदमत्रैव भाष्ये। नित्यमेवेति। तथा च प्रकृतसूत्रे भाष्यम्—'रात्रेरप्राप्ते विभाषा, प्राप्ते नित्यो विधिरि'ति। 'प्राप्ते नित्य इति। पूर्वविप्रतिषेधेनेति भाव' इति कैयटः[2]। रात्रिंमन्य इति। 'आत्ममाने' इति खश्। श्यन्।

सहस्य। 'सादेशो निपातनादुदात्तः। अन्यथा उदात्ताऽनुदात्तवतः स्थाने स्वरितः स्यादि'ति भाष्यम्। (अत[3] एव) 'सपुत्र' इत्यादिबहुव्रीहौ

१ अय ग. घ. पाठः।

२ इतोऽग्रे—'न च 'खिती'त्यनुवर्त्त्य प्राप्तविभाषात्वमेवाऽस्तु। 'कृती'त्यस्य वैयर्थ्यापत्तेरिति दिक्' इति ग. घ. पाठः।

३ 'अत एव' इति क. नास्ति।

स्वरात्परत्वादस्मिन्नादेशेऽपि पुनः प्रसङ्गविज्ञानात्पूर्वपदप्रकृतिस्वरे आद्युदात्तत्वम्।[1] ( सांम्नी'त्यादि- ) अव्ययीभावे तु परत्वात्सादेशे, ततः समासान्तोदात्तत्वे, सतिशिष्टत्वादन्तोदात्तस्यैव श्रवणमिति स्पष्टमाकरे[2]।

सहयुध्वेति। 'सहे चे'ति क्वनिपि, उपपदसमासः। समुहूर्त्तमिति। अन्तवचनेऽव्ययीभावः। न चाऽत्र 'अव्ययीभावे चाऽकाले' इत्येव सिद्धम्। 'मुहूर्त्तादिशब्दानां कालवाचिनामेव तत्प्रतिपादकग्रन्थे कालत्वाऽऽरोपेण[3] प्रवृत्तेः 'अकाले' इति निषेधादि'ति भाष्यकृतः।

ज्यौतिषमिति पाठे—ज्योतिष इदमित्यर्थः।

द्वितीये चानु। उपाख्यम्–प्रत्यक्षम्, तद्भिन्ने = अनुमेये इत्यर्थः। तदाह–अनुमेये इति। उत्तरपदे इत्यर्थः। द्वितीयशब्देन साहित्यप्रतियोगी। 'अप्रधाने[4] सहाये 'द्वितीय'इति लोकव्यवहारादि'ति हरदत्तोक्तेः। अनुमापकश्च साहित्याऽनुयोग्येव प्रायः। सराक्षसीकेति–बहुव्रीहिः। 'नद्यृतश्चे'ति कप्। योगो विभज्यत इति। छान्दसमपीह एतदर्थमेवोपन्यस्तम्। अत्र च 'नित्यं सपत्न्यादिष्वि'ति निर्देशो ज्ञापकः। अत्र 'वोपसर्जनस्ये'त्यतो 'वे'त्यनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन 'समानजातीय' इत्याद्यपि[5]। सदृशवचन इति। अयं च वृत्तिविषय एव। तद्ध्वनयन्नाह—अस्वपद इति। बहुव्रीहिरिति[6]। तेन 'वोपसर्जनस्ये'ति

---

१ 'साम्नीत्यादि' इति ग. पाठः। क. ख. नास्ति।

२ इतोऽग्रे—'साम्नीत्याद्यव्ययीभावेऽन्तोदात्तत्वं च सिद्ध्यति' इति ग. पाठः।

३ 'उपचाराद्वृत्तेः' इति ख. पाठः। 'कालत्वारोपेण' इति ग. पाठः।

४ 'अप्रधानो यः सहायः स द्वितीय इति लोकप्रसिद्धमिति हरदत्तादयः' इति ग. घ. पाठः।

५ इतोऽग्रे—'इति केचित्। अत एव वक्ष्यमाणपक्षान्तरेण न फलभेदः' इति घ. पाठः।

६ 'बहुव्रीहिरिति। अव्ययार्थप्राधान्यस्याऽविवक्षणान्नाऽव्ययीभाव इति बोध्यम्' इति घ. पाठः।

'स'भावः। सज्योतिरिति। 'समानं ज्योतिरस्ये'तिविग्रहः। यत्र ज्योतिषि आदित्ये, नक्षत्रे वा, सञ्जातमाशौचं, तदस्तमयपर्यन्तमनुवर्त्तते, तत् 'सज्योतिः'। इह 'समानमध्यमध्यमे'ति प्रतिपदोक्त एव समासो न गृह्यते, 'सरूपाणामि'त्यादिनिर्देशादि'ति हरदत्तः।[1]

'समानस्य च्छन्दसि' 'ज्योतिरि'ति च बहुव्रीहिविषयमेवेत्याहुः।

ब्रह्मचारीति। 'व्रते' इति, 'सुप्यजाताविति' वा णिनिः। ब्रह्मचारिणः समानत्वं ब्रह्मणः समानत्वात्। अध्येतृभेदाद्वेदभेदं, व्रतभेदं वा परिकल्प्य समानत्वम्। तेन समानवेदाऽध्ययननिमित्तब्रह्मचारीत्यर्थः।[2] 'समानपूर्वे ब्रह्मण्युपपदे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्चे'ति तु भाष्ये। 'व्रतलोपश्चे'-त्यनेन 'ब्रह्म'शब्दो व्रतलाक्षणिक इत्युक्तम्। अस्मात्तु 'ब्रह्मचारि'घटक-'ब्रह्म'शब्दे उत्तरपदे परे समानस्य स' इति सूत्राऽर्थः प्रतीयते।[3] 'समानं व्रतं चरती'त्युदाहरणाऽर्थः। मूलरीत्या तु 'समानो ब्रह्मचारी'ति।

तीर्थे ये[4]। 'ये विवक्षिते' इत्यर्थः। स च प्रत्यय एव संभवतीति

---

१ इतोऽग्रे—'अत एव पूर्वसूत्रे प्रभृत्यादिपर्युदासश्चरितार्थः' इति ग. पाठः।

२ 'व्रतचारीत्यर्थः' इति ग. पाठः।

३ इतोऽग्रे—'तदुक्तं समानपूर्वे' इति ख. ग. घ. ङ. पाठः।

४ 'तीर्थे ये। अकार [1]उच्चारणार्थः। अत एव तदादिविधिः। 'ये' [2]इति विवक्षितसप्तमी। उत्तरत्र तथा निर्णयेनाऽर्थाधिकाराऽनुरोधात्[3]। 'ये विवक्षिते' इति तदर्थः। स च प्रत्यय एव संभवतीति तदुध्वनयन्नाह—यादावित्यादि' इति ख. घ. पाठः। 'अकारोऽत्र विवक्षितः। 'यशब्दे विवक्षिते' इत्यर्थः' इति लघुशेखरपाठः।

---

1 'अकारो न विवक्षितः' इति ग. घ. पाठः।

2 'अभ्यर्हिताऽर्थाधिकारलाभार्थं च 'ये' इति विवक्षितसप्तमी' इति ग. पाठः।

3 इतोऽग्रे—'तदाह—यादावित्यादि। 'प्रत्यये' इति व्याख्यानाल्लब्धम्। वस्तुतोऽकाराऽविवक्षायां न मानम्, नाऽपि फलम्। 'यरूपे प्रत्यये' इत्येवोचितम्। प्रत्ययाऽप्रत्ययपरिभाषया च प्रत्यय एव लभ्यते इत्याहुः। 'उत्तरपदे' इत्यस्याऽसम्बन्धश्च व्याख्यानादेव' इति ख. ग. घ. पाठः।

ध्वनयन्नाह-यादावित्यादि । समानतीर्थे इति । सादेशेऽप्येकदेशविकृत-न्यायेन 'समानतीर्थ'शब्दत्वं बोध्यम् । एवं च 'सतीर्थ्य' इत्यादौ सादेशीयनिपातनस्वरं बाधित्वा, सतिशिष्टत्वाद्यत्स्वर एवेति ध्येयम् । एतदर्थमेव 'विवक्षिते' इति व्याख्यातम् ।

विभाषोदरे । अत्र 'ये' इति वर्त्तते । वृत्त्यादिप्रामाण्यात् । सा[2] च विवक्षितसप्तमी । 'सोदराद्य' इतिसूत्रस्य 'सोदरादि'त्यनुवादसामर्थ्येन 'समानोदरे शयित इत्यर्थे प्रथमोच्चारिताद्यो भवति, स च सोदरात्पर' इत्यर्थात् । 'समानोदरे शयित' इत्यस्य तत्राऽनुवृत्तेः । ([3] समर्थविभक्ति-रत एव सप्तमी )। एवं चाऽत्रापि सादेशस्वराऽपेक्षया सतिशिष्टत्वात् प्रत्ययस्वर एव । अत एव 'सोदराद्य' इति चरिताऽर्थम् । 'ये' इत्यस्य पर-सप्तमीत्वे तु सतिशिष्टतया सादेशस्वरस्यैवाऽऽपत्तौ, तद्वैयर्थ्यं स्पष्टमेव ।

---

१ इतोऽग्रे—नन्वत्र 'ये' इति नाऽनुवर्त्तते, 'सोदरोऽपि विमुञ्चती'ति प्रयोगादिति चेन्न । 'प्रकृत्याशिषी'त्युत्तरमेव 'समानस्योदरे ये' इति न्यासेन, 'ज्योति-र्जनपदे'त्यत्रैवोदरग्रहणेन सिद्धे, पृथक्सूत्रकरणसामर्थ्याद्वोपसर्जनस्येत्यतो मण्डूकप्लुत्या च वाग्रहणानुवृत्त्या सिद्धे, विभाषाग्रहणं व्यर्थम् । 'प्रकृत्या-शिषी'त्यत्र तु 'वे'ति न सम्बध्यते, सूत्रस्य वैयर्थ्यापत्तेः । 'समानस्ये'ति सूत्रे च न 'प्रकृत्ये'त्यस्य सम्बन्धः, आदेशाऽप्राप्त्या वैयर्थ्यापत्तेः । मूर्धादि-ष्वेवोदरशब्दपाठेन सिद्धेश्च । एवञ्च पुनर्विभाषाग्रहणं 'ये' इत्यस्य सम्बन्ध-ज्ञापनार्थमिति न दोषः' इति ग. पाठः ।

२ 'सा च विवक्षितसप्तमी । 'सोदराद्य' इति सूत्रे 'सोदरादि'त्यनुवाद-सामर्थ्यात् । तेन हि 'समानोदरे शयित' इत्यर्थे यति विवक्षिते सादेशे कृते 'सोदराद्य'इति यः । 'समानोदरशब्दात्सप्तम्यन्ताद्यो भवति, स च सोदरात्पर' इति तदर्थः' इति ग. पाठः । 'समानोदरशब्दात्प्रथमोच्चारिताद्यो भवति' इति घ. पाठः ।

३ अयं ख. घ. ङ. पाठः । क. ग. नास्ति ।

स्रादेशाऽभावे तु 'समानोदरे शयित' इति यत्। समानोदर्यः। 'सोदरोपी'ति प्रयोगस्तु 'समानमुदरं यस्ये'ति विग्रहे 'सपक्ष'वत्सभावे बोध्यः। एवं समानपर्याय'सह'शब्देन बहुव्रीहौ 'वोपसर्जनस्ये'ति विकल्पात्-'यत्र भ्राता सहोदर' इत्यपि सिद्धम्। नन्वेवं कर्मधारये सोदराद्ये सोदर्यस्य सिद्धेः, समानोदरात्तस्मिन्समानोदर्यस्य च सिद्धेरिदं सूत्रमेव व्यर्थमिति चेन्न। 'समानस्ये'त्यादेर्बहुव्रीहावेव प्रवृत्तिरित्यर्थज्ञापकत्वात्।

नन्वेवमपि 'विभाषा'ग्रहणं व्यर्थम्। 'समानोदरे शयितः' 'सोदराद्य' इति सूत्रद्वयाऽऽरम्भसामर्थ्येनैव विकल्पसिद्धेरिति चेन्न। आनुमानिकवचनकल्पने लाघवाऽभावादिति सूत्राऽऽशयः।

दृक्षे चेति। इदं छान्दसम्। 'सदृक्षास' इति भाष्योदाहरणात्। 'क्सोऽप्येवमि'ति केचित्। तन्मतेऽपि सन्दर्भशुद्ध्यर्थमत्र लेखः। 'त्यदादिषु दृशोऽनालोचने कञ्च' 'समानाऽन्ययोश्च' 'दृशेः क्स' इति दृशेः कञ्-क्विन्-क्साः। दीर्घ इति। अदसः अन्त्यस्याऽऽत्वे कृते सवर्णदीर्घ इत्यर्थः। इदं च पूर्वपराऽन्वयि।

---

१ 'यस्येति विग्रहे 'वोपसर्जनस्ये'ति सभावो बोध्यः। अत एव 'यत्र भ्राता सहोदर' इति सिद्धम्' इति ग. पाठः।

२ 'समानस्ये'ति योगविभागस्याऽसार्वत्रिकत्वज्ञापनाऽर्थत्वात्' इति ख. पाठः।

३ इतोऽग्रे—'अयं च सभावो लक्षणप्रतिपदोक्तपरिभाषया समानोदरपूर्वपदोत्तरपदकसमुदायमुद्दिश्य विहितयादिप्रत्यये एव प्रवर्त्तत इत्याहुः' इति ग. घ. पाठः।

४ इतोऽग्रे—'ये' इति किम्?। 'समानमुदरमि'त्यर्थे 'समानोदरमि'त्येव यथा स्यात्। 'ये' इत्यस्य परसप्तमीत्वपरवृत्त्यादिग्रन्थास्तु चिन्त्या एव। उक्तयुक्तेरिति मूलकृदाशयः। दृक्षे चेति' इति घ. पाठः।

५ 'अदस' इति ग. घ. पाठः। क. ख. नास्ति।

६ 'आत्वे कृते मुत्वस्याऽसिद्धत्वात्सवर्णदीर्घः' इति ग. घ. पाठः।

अमूद्दगिति । 'अः सेरि'ति व्याख्यानेऽप्येवमेव । अकारेण आकारस्याऽपि ग्रहणात् । अङ्गुलेः सङ्ग इति । एकदेशविकृतन्यायेनाऽङ्गुलिशब्दत्वात्, 'नुम्विसर्जनीये'त्यधिकाराच्च प्रा[1]प्तिः ।

(भीरोः । 'समा[2]सेऽङ्गुलिभीरुभ्यां सङ्गस्थाने' इत्युक्तावर्द्धमात्राऽधिक्यायोगविभाग इत्याहुः) । षष्ठ्यर्थे च 'सङ्गः' 'स्थानमि'त्यादिप्रथमा बोध्या ।

ज्योतिरा । ननु 'अग्नेः स्तुत्सोमौ' 'स्तोमः' 'ज्योतिरायुष' इत्येव सूत्रणीयम् । 'स्तोम' इति सूत्रे 'अग्नेरि'त्यनुवृत्त्या, 'ज्योतिरि'त्यत्र 'स्तोम'-मात्राऽनुवृत्त्या च सर्वेष्टसिद्धिरिति चेन्न । पुनः स्तोमग्रहणस्य व्यवहिताऽव्यवहितसाधारणस्तोमग्रहणाऽर्थत्वात् । तेन '[3]आयुषष्टोम' इत्यत्र 'षष्ठ्या आक्रोशे' इत्यलुकि, षत्वं भवत्येव[4] । तद्ध्वनयन्प्रत्युदाहरति—ज्योतिषस्तोम इती'ति केचित् । 'पश्य ज्योतिः, स्तोमस्तिष्ठती'ति प्रत्युदाहरणमि'त्यन्ये ।[5] सुषामाद्यन्तर्गणसूत्रमाह—एतीति । नक्षत्राद्वेति च । सुषामादिराकृतिगणः ।

अषष्ठ्यतृतीयेति—न[6]ञ्द्वयोपादानं स्पष्टाऽर्थम् । ('अ[7]न्यदाशी'-रादयो विशेषणसमासाः) । कारके छे चेति । स्पष्टं चेदं भाष्ये ।

---

१ इतोऽग्रे—'अङ्गुले' इति सम्बुध्यन्तपाठः क्वचित्' इति ग. घ. पाठः ।

२ अयं ग. घ. पाठः । ३ 'ज्योतिषष्टोम' इत्यत्र' इति घ. पाठः ।

४ इतोऽग्रे—'सूत्रे 'ज्योतिरायुष' इत्युपस्थितषष्ठ्यतिरिक्तविभक्तिग्रहणे मानाऽभावादन्यत्राऽलुक्यपि न । सा च 'इण' इत्यपेक्षयाऽवयवषष्ठी । एवञ्च स्तोमग्रहणसामर्थ्याद्व्यवहितमपीण्परत्वं गृह्यते' इति ग. पाठः ।

'सूत्रे 'ज्योतिरायुष' इत्युपस्थितषष्ठ्येकवचनातिरिक्तः' इति क्वचित् पाठः ।

५ इतोऽग्रे—'तेन निःषेधदुःष्ठुप्रभृतयः साधवः' इति घ. पाठः ।

६ 'नञ्द्वयोपादानं नञ्घटितस्याऽनित्यत्वज्ञापनार्थमित्याहुः' इति ग. पाठः ।

'अषष्ठी'त्यंशस्य क्वाचित्कत्वबोधनाऽर्थम्' इति घ. पाठः ।

७ अयं क. कुण्डलितः ख. ग. पाठः ।

कुप्ट्र इति। बहुव्रीहिः। उदाहरणेषु 'कुगती'ति समासः। इदमेव तत्पुरुषग्रहणमस्मिन्प्रकरणेऽप्रतिपदोक्तसमासस्याऽपि ग्रहणे ज्ञापकमित्याहुः। त्रौ चेति। 'कत्र्यादिभ्यो ढकञि'ति निर्देशात्सिद्धमिदम्। भाष्ये तु 'कत्त्रौ'तिसूत्रे 'के वा त्रयो न बिभृयुरि'ति विग्रह उक्तः[1]। आक्षेपाऽर्थक'किम्'शब्देन समास' इति कैयटः।

कापथमिति। 'कुगती'ति समासः। 'ऋक्पूरि'ति समासान्तः। 'पथः सङ्ख्ये'ति नपुंसकत्वम्। अनीषदर्थमिदम्।

पूर्वविप्रतिषेधादिति। भाष्येऽदृष्टमपि वृत्त्यादिप्रामाण्यादाहृतम्।

पृषोदरा। 'आदि'शब्दो न व्यवस्थावाची, 'यथोपदिष्ट'पदवैयर्थ्यापत्तेः। तदाह—प्रकाराणीति। 'उपदिष्टमि'ति क्तः[2] कर्मणि। उपदेशः= उच्चारणम्। तस्य कर्त्राकाङ्क्षायां 'शिष्टैरि'त्यध्याहारलभ्यम्। 'शिष्टाश्च[3]-शब्दतत्त्वसाक्षात्कारवन्त' इति भाष्यम्। पदार्थाऽनतिवृत्तावव्ययीभावः। समासपदविषयमिदम्। उत्तरपदाऽधिकारात्। नैरुक्ताऽसमस्तानामुणादयो बहुलमित्येव सिद्धेश्च। 'हंस' इति, 'सिंह' इति च-दृष्टान्ताऽर्थम्। यथा हंससिंहयोरुणादित्वात्साधुत्वम्, एवं गूढोत्मादेः पृषोदरादित्वादित्यर्थः। हन्तेरचि, सगागमे 'हंसः'। हिंसेरचि, हिकारसकारयोः स्थानव्यत्यये-'सिंहः'। अस्य तद्धितविषयत्वमपीति सर्वादिसूत्रे कैयटे स्पष्टम्। तत्र हि 'पुराणशब्देऽनेन 'त'लोप' इत्युक्तम्। एवं जीवनस्य=जलस्य, मूतो= भाजनम्-'जीमूतः'। वनशब्दलोपः। दृडाशाऽऽदौ रेफस्योत्त्वे, सवर्णदीर्घः। 'समस्ताऽसमस्तसर्वविषयमिदमि'त्यन्ये। आतश्चेति क इति। इदं च वृत्तिकैयटाद्यनुरोधेनोक्तम्। अन्ये त्वागन्तुनाऽकारेण धीशब्दस्या-

---

१ 'ध्वनितं चेदं 'के वा त्रयो न बिभृयुरि'तिविग्रहप्रदर्शनेन भाष्ये' इति ख. ग. पाठः।

२ 'भावे क्तः। कर्मणि वा' इति ख. पाठः।

३ 'शिष्टाश्चार्यावर्त्तनिवासिनः पूज्या इति भाष्यम्' इति ग. पाठः।

ऽयं वार्त्तिके निर्देशः । अत एव 'मा नः समस्य दूढ्य' इति सिद्धम् । 'सर्वस्य दुर्बुद्धेरंहतिः = उपद्रवो, नोऽस्मान्मा वधीदि'त्यन्वयः । 'दुष्टं ध्यायती'ति विग्रहे कारकपूर्वत्वाद्यण् । न चैतच्छ्रुतावपि कप्रत्ययान्तमिति भ्रमितव्यम् । अन्तस्वरिताऽसङ्गतेरित्याहुः । इदं च 'नदी'संज्ञासूत्रे कौस्तुभे स्पष्टम् । 'कृन्मेजन्त'सूत्रकैयटे च ध्वनितम् । तन्त्रेणोभयोरपि निर्देश इति तत्त्वम् । आकृतीति । तेन—

'लुम्पेदवश्यमः कृत्ये, तुङ्काममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि युट्घञोः' ॥

—इत्यपि सिद्धम् । अत्र आद्यचरणत्रयम् 'अपरस्परा' इति सूत्रे भाष्ये स्पष्टम् । मध्यचरणे 'तुमि'ति समोऽप्युपलक्षणम् । भाष्ये तथोक्तेः ।

'लुम्पेदि'त्यस्य पुमान् कर्त्ता बोध्यः । 'अन्तमि'ति कर्मपदमध्याहार्यम् । 'कृत्याऽन्ते उत्तरपदे 'अवश्यम्'शब्दस्याऽन्तं पुमान् लुम्पेदि'त्यन्वयः । एवमग्रेऽपि । 'तुमि'ति षष्ठ्यर्थे प्रथमा । 'युट्-घञोर्यः पच्धातुस्तत्र परे मांसस्याऽन्तं लुम्पेदि'त्यर्थः । अवश्यसेव्यः । गन्तुकामः । गन्तुमनाः । सकामः । समनाः । सहितः । संहितः । सततः । सन्ततः । मांस्पचनम् । मांस्पाकः । अत्र संयोगान्तलोपाऽभावोऽपि पृषोदरादित्वादेव । समास एवेदम् । तेन 'अवश्यङ्कर्त्तव्यमि'त्यादिसिद्धिः । 'मांसस्ये'त्याद्यंशस्तु 'पद्दन्नि'ति सूत्रस्थेन 'मांसपृतने'त्यादिवार्त्तिकेणाऽपि सूपपाद इत्युक्तं प्राक् । 'क्रियासातत्ये' इति निपातनात्सान्तत्यमित्यसाध्वि'ति केचित् । तत्र मानं चिन्त्यम् । निपातनस्य बाधकत्वे हि 'सन्ततमि'त्यपि न स्यात् । निपातनेनैकदेशानुमतिद्वारा प्राचीनोक्तपरिभाषाया एव ज्ञापितत्वाच्च । अत एवाऽनभिधानात्

---

१ 'कृन्मेजन्तसूत्रे कैयटे च 'सर्वस्य दुर्धियो नोऽस्मानित्यर्थ उक्तः' इति ग. पाठः ।

२ 'भ्रमितव्यम् । अर्थाऽसङ्गतेः । अन्तस्वरिताऽसङ्गतेश्चेत्याहुः' इति ग. पाठः ।

३ 'न चाऽवश्यमोऽव्ययत्वादव्ययमिति योगविभागान्नित्यमेव समास इति भ्रमितव्यम् । अव्ययार्थोऽप्राधान्यात्' इति ग. ब. पाठः ।

'सान्तत्यमि'त्यसाध्वि'ति सर्वादिसूत्रे कैयटः। अत एव भाष्ये 'निपातनान्मलोपे 'सन्ततमि'ति न सिद्ध्यती'त्युक्तम्, न तु सूत्रोच्चारितसजातीयं 'सान्तत्यमि'ति न सिद्ध्यती'त्युक्तमित्याहुः।

संहितायाम्। एतत्प्रयोजनं 'द्व्यचस्तिङन्तस्याऽतो दीर्घः स्यादि'त्यर्थकेन 'द्व्यचोऽतस्तिङ'इत्यनेन 'विद्मा हि त्वा गोपतिं शूर गोनामि'त्यत्र संहितायामिव, 'विद्म हि त्वे'ति पदकाले न दीर्घः (इत्याहुः)।

एतदधिकारस्थाऽन्यशास्त्राणामुत्तरपदाऽधिकारात्समासे एव प्रवृत्त्या, तत्र[1] च संहिताया नित्यत्वादन्यत्र न फलमिति बोध्यम्।

कर्णे लक्षणस्य। 'यत्पशूनां स्वामिविशेषसम्बन्धज्ञानाऽर्थं दात्राऽऽकारादि चिह्नं क्रियते, तदिह लक्षणमि'ति वृत्तिः। अत एव 'विष्टादिपर्युदासः सङ्गच्छते' इति हरदत्तः। अत एव 'लम्बकर्ण' इत्यादिसिद्धिः। 'अष्टकर्ण' इत्यादेरष्टसङ्ख्याचिह्नकर्ण इत्यादिक्रमेणाऽर्थः।

क्विबन्तेष्विति। उत्तरपदेष्वित्यर्थः। णहेः संपदादित्वात्कर्मणि क्विप्। उपनह्यते इति-उपानत्। निवर्त्तते-नीवृत्। प्रवर्षतीति-प्रावृट्। मर्माणि विध्यतीति-मर्मावित्। व्यधेः 'ग्रहिज्ये'ति संप्रसारणम्। 'रुच दीप्तौ'। निरोचत इति नीरुक्। ऋतीषडिति। ऋतिं सहत इत्यर्थः। 'पूर्वपदा दि'ति, सुषामादित्वाद्वा षत्वम्। परितनोतीति-परीतत्। 'गमेः क्वावि' त्यत्र 'गमादीनाम्'(इष्यते') इति वचनादनुनासिकलोपः।

विभाषानुवर्त्तत इति। एतच्च प्रचुरलक्ष्यदर्शनादास्थितम्। 'ऋतस्य वर्द्धयितारावि'त्यर्थे-अन्तर्भावितण्यर्थाद्वृधेः क्विपि सिद्धे—'ऋतेन मित्रावरुणावि'ति मन्त्रार्थे 'ऋतावृधावि'तिप्रयोगे-'अन्येषामपी'ति दीर्घः। यत्त्वनेन दीर्घ इति। तन्न। वृधेरत्राऽनुपादानात्।

---

१ इतोऽग्रे-'अवग्रहे तु 'अष्टाबन्धुर' इत्यादौ दीर्घो दृश्यत एवेति न तत्फलम्' इति ग. घ. पाठः। २ अयं ख. ङ. पाठः।

३ इतोऽग्रे—'व्यधिस्थाने वृधीत्येव पाठ इत्यन्ये' इति घ. पाठः।

**वनं पुरगा**। व्यत्ययेन षष्ठ्याः स्थाने प्रथमा। तदाह—**वनशब्दस्येति** । **एभ्य एवेति**। कृतदीर्घेभ्य इत्यर्थः। **कृतदीर्घेति** । न च तत्सामर्थ्यादेव दीर्घे सिद्धे 'वनगिर्योरि'त्यत्र कोटरादिग्रहणं व्यर्थम् । आनुमानिकवचनकल्पने गौरवात् । टाबन्तनिर्देशसम्भावनाऽऽपत्तेश्च । अत एव विपरीतनियमो न । अन्योत्तरपदे एषां दीर्घान्तत्वाऽसम्भवात् ।

**नियमार्थ इति**। 'पूर्वपदात्संज्ञायामि'त्येव सिद्धेः। दीर्घस्य संज्ञायामेव विधानेनाऽस्य णत्वस्य संज्ञायामेव प्रवृत्तेः । ननु 'पुरगा'शब्दे गकारव्यवधानेन 'अग' इति प्रतिषेधात्कथं प्राप्तिरिति चेन्न । 'अग' इत्यस्य पूर्वपदविशेषणत्वेनाऽगकारान्तपूर्वपदादित्यर्थेनाऽदोषात् । स्पष्टं चेदं 'पूर्वपदादि'त्यत्र भाष्ये । **विध्यर्थ इति** । असंज्ञात्वादिति भावः । **असिपत्रवनमिति** । नरकविशेषस्य संज्ञेयम् । असंज्ञात्वात् 'हलदन्तादि'त्यस्याऽप्राप्तेराह—**निपातनादिति** ।[1]

**प्रातिपदिकार्थेति**। सप्तम्यर्थस्य प्रातिपदिकाऽर्थेऽन्तर्भावादिति भावः।[2] **वलप्रत्यय इति**। उत्तरसूत्रस्थमतुपा साहचर्यादिति भावः। तेन वलधातावजन्ते परे दीर्घो न। 'अण' इत्येव। नेह 'भ्रातृवलः'। 'रजःकृषी'त्यत्र'अन्येभ्योऽपि दृश्यते' इत्युक्तेः प्रत्ययः। **कृषीवल इति** । 'रजःकृष्यासुती'त्यादिना मत्वर्थे वलच् । प्रकृतिप्रत्ययनिमित्तत्वेऽप्येषामुपन्यासः सन्दर्भशुद्धये, 'पुत्रवल' 'उत्सङ्गवल' इत्यादिव्यावृत्तये, 'संज्ञायामि'त्यनुवृत्तिबोधनाय चेत्याहुः। स्पष्टं चेदं 'रजःकृष्यासुती'त्यत्र कैयटे[3] ।

१ इतोऽग्रे—अत एव 'अणृगयनादिभ्य' इति निर्देशमाश्रित्याऽग इति प्रत्याख्यातं भाष्ये' इति ग. पाठः ।

२ इतोग्रे 'किंशुलुक । शाल्वक । नड । अञ्जन । भञ्जन । लोहित । कुक्कुट । इति किंशुलुकादिः' इति ग. पाठः ।

३ इतोऽग्रे—'अमरावतीति । 'संज्ञायामि'ति वत्वम् । 'मादुपधाया' इत्यपेक्षया परत्वात्तस्यैव न्याय्यत्वादिति बोध्यम् । वलयवतीति । अत्र 'मादुपधाया'

शरादीनाम । शरादिराकृतिगणः । तेन 'पद्मावती' 'मृगावती' 'भोगावती'त्यादि । 'मतौ बह्वचः' 'शरादीनां चे'ति सूत्रद्वयं चातुरर्थिके मतावेवे'ति 'नाममन्यतरस्यामि'ति सूत्रे हरदत्तः । 'संज्ञायामि'ति वर्त्तते इति तद्भावः । तन्मते पद्मावत्यादिषु 'अन्येषामपो'ति दीर्घः ।

इको वहेः । वहेः पचाद्यच् । दारुवहमिति । एवं 'रुचिवहम्' ।

उपसर्गस्य । उपसर्गाद्घञोऽसम्भवेन तदन्तविधिरित्याशयेनाऽऽह–घञन्त इति । प्रसेव-प्रसार-प्रहाराणां बाहुलकान्न । प्रासाद-प्राकारयोः कृत्रिमे एव । नेह–प्रसादः । प्रकारः । निषादः पुलिन्दो मनुष्यजातिः । 'निषीदन्त्यस्मिन्पापमि'ति 'हलश्चे'त्यधिकरणे घञ् ।

'अमनुष्ये' इत्यपि बहुलम् । तेन 'प्रतीहार' इति दौवारिके सिद्धम् । 'प्रतीहारो—द्वारम्, 'तात्स्थ्यात्ताच्छब्द्यमि'ति वा ।

इकः काशे । पचाद्यजन्तार्थमिदम् । घञन्ते पूर्वेणैव सिद्धम् । एकचितीके शैषिकः कप् । 'अन्येषामपी'ति सूत्रं 'नारक-पूरुष-तुराषाट्-केशाकेशी'त्याद्यर्थम् । तस्यैवाऽभियुक्तोक्तं प्रपञ्चमाह—शुनो दन्तेति । 'द्रंष्ट्रा' इति दीर्घपाठे बहुव्रीहावेकदेशविकृतन्यायेन–'श्वादंष्ट्रः' । तत्पुरुषेपि

इति वस्वम् । अजिर । खदिर । पुलिन । हंस । कारण्डव । चक्रवाक । इत्यजिरादयः' इति ग. पाठः ।

१ इतोऽग्रे—'शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । वृत्' इति ग. पाठः ।

२ 'तन्मते पद्मावत्यादयश्छिन्त्याः । अन्येषामपी'ति वा दीर्घः' इति ख. पाठः ।

३ इतोऽग्रे—'ऋषीवहादयः षष्ठीसमासाः' इति ख. घ. ङ. पाठः ।

४ 'चारुवहम्' इति ख. घ. ङ. पाठः ।

५ 'घञोऽसम्भवेन उत्तरपदाऽधिकारेऽपि तदन्तविधिः' इति ख. घ. पाठः ।

६ इतोऽग्रे—'प्रतिवेशप्रतीकारादौ वेति बोध्यम्' इति ख. घ. पाठः ।

७ 'दंष्ट्रे'ति दीर्घपाठे तु बहुव्रीहावेकदेशविकृतन्यायेन । 'श्वादंष्ट्रः' । तत्पुरुषेपि —'श्वादंष्ट्रा' ।

केचित्तु ह्रस्वान्तं पठित्वा बहुव्रीहावेवायं दीर्घ इत्याहुः । अत एव

'श्वादंष्ट्रा' । केचित्तु 'ह्रस्वान्तं पठित्वा बहुव्रीहावेवाऽयं दीर्घ' इत्याहुः ।

'श्वा च वराहश्चेति-श्वावराहम्' । 'येषां च विरोध' इत्येकवत् । 'श्वपुच्छमवनामितमि'त्यादौ-'अन्येषामपि दृश्यते' इत्येतत्प्रपञ्चत्वादस्य नरक-नारकवत्साधुत्वं बोध्यम्[1] ।

**प्रनिरन्तः** । 'प्रनिरन्तः'शब्दविषये संज्ञायां 'वनं पुरगे'ति नियमाद्-प्राप्ते वचनम् । असंज्ञायान्तु 'पूर्वपदात्संज्ञायामि'त्युक्तेरप्राप्तिः । शरेक्ष्वा-दीनामौषधिवनस्पत्यन्यतरत्वादुत्तरेण विकल्पे प्राप्ते वचनम् । 'संज्ञाया-मि'त्यधिकारात् 'असंज्ञायामपी'त्युक्तम् । इतः 'संज्ञायामि'ति नाऽनुवर्त्तते इति तात्पर्यम् । इह षादिति । 'काश्यें'ति तालव्यपाठस्त्वनार्षः ।

**विभाषौषधि**[2] । 'ओषध्यः-फलपाकाऽन्ताः' । पुष्पैर्विना फलवान् वनस्पतिः । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिरि'त्यमरात् । उभये[3]-ऽपि वृक्षत्वेन व्यवहार्याः । इह तु 'वनस्पति'ग्रहणेन वृक्षमात्रग्रहणम् । तद्ध्वनयन्नुदाहरति—**शिरीषवणमिति** । शिरीषा हि पुष्पफलोभयवान् । अत एव 'लुपि युक्तवदि'ति सूत्रे-'व्यक्तिवचने इति किम्? । शिरीषाणाम्

---

'श्वादेरिञि' इति सूत्रस्थं 'शौवादंष्ट्रो मणिरि'ति सिद्धम् । तत्र हि तत्पुरुषः । तत्राऽपि दीर्घे वृद्धाच्छः स्यादित्याहुः' इति ख. पाठः ।

'दंष्ट्रा इति दीर्घपाठः । बहुव्रीहावप्येकदेशविकृतन्यायात् । तेन श्वादंष्ट्रः । ह्रस्वपाठेऽपि दंष्ट्रान्तसमाहारद्वन्द्वपूर्वकद्वन्द्वाश्रयणेन सर्वत्र प्रवृत्तिरित्याहुः' इति ग. पाठः ।

१ इतोऽग्रे—'वस्तुतस्तु तत्प्रपञ्चत्वादेव तत्पुरुषे नेदं प्रवर्त्तत इत्याहुः' इति ख. घ. ङ. पाठः ।

२ इतोऽग्रे—इह 'असंज्ञायामपी'त्यनुवर्त्तते । 'नाऽनुवर्त्तते' इति केचित्' इति ग. घ. पाठः ।

३ 'उभयवन्तश्च वृक्षत्वेनैव व्यवहार्याः । वनस्पतिरपि वृक्षो भवत्येव' इति ग. घ. पाठः । क. कुण्डलितः ।

अदूरभवो ग्रामः-शिरीषाः। तस्य वनं 'शिरीषवनम्'। वनस्पतित्वमतिदिश्येत। ततश्च णत्वं स्यादि'ति भाष्यं सङ्गच्छते[1]।

द्व्यच्त्र्यज्भ्यामिति। यद्यपि भाष्ये 'द्व्यक्षरत्र्यक्षरेभ्य एवे'त्युक्तम्, तथाऽपि तत्राऽक्षरपदेनाऽच्सहितं व्यञ्जनमेव विवक्षितम्। अत[2] एव इरिकादिप्रतिषेधः साऽर्थक इत्याहुः। मिरिकेति। भाष्यवृत्त्योस्तु 'तिमिरवनमि'ति दृश्यते। ओषधित्वात्प्राप्तिः।

आरोप्य यदुह्यते इति। सूत्रे भूतकालोऽविवक्षितः[3]। तेन वाह्यं यदाऽनारोपितं सन्निहितमात्रं, तदाऽपि भवतीति भावः। 'आरोप्ये'त्यनेन वाह्यस्याऽचेतनत्वं, तत्तुल्यत्वं वा बोधितम्[4]।

उशीनरा इति। देशशक्तस्तद्वासिषु गौणोऽयम्। एतावतैव देशस्य गम्यत्वं बोध्यम्। कर्मणि ल्युडिति। बाहुलकादिति बोध्यम्। देशे किम्?। दाक्षीणां पानं दाक्षिपानम्। क्षीरपानमिति। नपुंसके भावे, करणे वा ल्युट्। 'सर्पिष्पानमि'त्यादौ तु न, 'षात्पदान्तादि'ति निषेधात्। तस्य हि 'पदे परतोऽन्तो यः षकारस्ततः परस्य नस्य णो ने'त्यर्थः, 'अन्त'ग्रहणसामर्थ्यात्। तेन 'सुसर्पिष्केणे'त्यादौ[5] णत्वं भवत्येव।

१ 'भाष्यं सङ्गच्छते' इति वृत्तिहरदत्तग्रन्थयोः स्पष्टम्' इति ख. पाठः। इतोग्रे 'केचित्तु शिरीषस्याऽवनस्पतित्वेऽपि तत्कार्यलाभोऽस्तु, तद्भाष्यप्रामाण्यात्। सूत्रस्थवनस्पतिशब्दस्य वृक्षलक्षकत्वे न मानम्। 'वृक्ष' इत्येव वक्तव्ये 'वनस्पती'त्यस्य वैयर्थ्यापत्तेश्चेत्याहुः' इति ग. घ. पाठः।

२ इतोऽग्रे—'अत एव 'देवदारुवनमि'ति प्रत्युदाहृतम्' इति ग. पाठः।

३ इतोऽग्रे—'स्वस्वामिभावनिवृत्तिपरत्वात्' इति ग. घ. पाठः।

४ इतोऽग्रे—'इन्द्रस्वामिकमिति। वाह्यत्वेन विवक्षायामिन्द्रवाहणमिति भवत्येवेत्याहुः' इति ग. घ. पाठः।

५ 'सुसर्पिष्पानमित्यादौ' इति ख. ङ. पाठः।

गिरिनद्येति—वार्त्तिकम् । संज्ञायां प्राप्तेऽसंज्ञायामप्राप्ते वचनम् । गिरिनद्यादिराकृतिगणः ।

माषवापिणाविति । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । व्रीहिवापाणीति । कर्मण्यण् । घञन्तेन बहुव्रीहिर्वा । जसः शिः । अदन्तत्वान्नुम् ।

अत एवेति । पूर्वपदाऽऽक्षिप्तोत्तरपदेन प्रातिपदिकस्य विशेषणादेवे-त्यर्थः । 'उत्तरपद'शब्दः समासचरमाऽवयवे रूढः । तेन 'माषवापिणावि'-त्यादावुत्तरस्य पदत्वं नेति न शङ्क्यम् ।

वस्तुतः प्राचीनोक्तं ज्ञापकं शिथिलमित्याह—किञ्चेति । न च नुमः पूर्वनिपातयोग्यस्य परनिपातान्नुमंशेऽपि प्रातिपदिकाऽन्तसम्बन्धेन, 'प्रातिपदिकाऽन्तस्यैव नुमो णत्वं, न मध्यवर्त्तिन' इति,—अत्र णत्वं नेष्टमेव । बहुवचननिर्देशाच्च प्रातिपदिकान्तस्य पृथग् निमित्तत्वमपीति वाच्यम् । 'पूर्वपदाऽऽक्षिप्तसमासरूपप्रातिपदिकान्तस्ये'ति व्याख्याय, नुम्ग्रहणस्य भाष्ये प्रत्याख्यानाऽकरणेनाऽत्र तस्येष्टत्वाऽनुमानात् । एतेन 'प्रेन्वन-मि'त्यादाविव क्षुभ्नादित्वाण्णत्वाऽभाव' इत्यपास्तम् । 'अट्कु' इति सूत्रे—'नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधो वक्तव्यः' । 'प्रेन्वनम्', 'प्रेन्वनीयमि'ति भाष्ये मध्यनकारेऽपि दन्त्यपाठेन, तत्र तत्कल्पनेऽपि, प्रकृते तत्कल्पने मानाऽभावात्[2] । वस्तुतस्तु भाष्ये 'समासरूपप्रातिपदिका-

---

१ इतोऽग्रे—'गर्गाणां भगिनीति । 'गर्गाणां भगोऽस्या अस्ती'ति विग्रहे णत्वं भवत्येवेति ध्वनयितुं विग्रहविशेषोपन्यासः' इति ग. पाठः ।

२ 'मानाऽभावाच्च' इति ख. ग. घ. पाठः ।

इतोऽग्रे 'किञ्च प्राचां मते ज्ञापितेऽपि नुम्ग्रहणवैयर्थ्यं दुर्वारम् । अस्म-दुक्तरीत्या 'माषवापाणी'त्यादावखण्डपदत्वसत्त्वेन 'रषाभ्यामि'त्येव सिद्धेः । मूलोदाहरणन्तु 'परत्वादिदमेव युक्तमि'त्यभिप्रायेण । ध्वनितं चेदं 'मिदचोऽन्त्यादि'ति सूत्रे भाष्ये—'अभक्तत्वपक्षे—णत्वं माषवापाणीति । अत्र न सिद्ध्यति । नुमो ग्रहणं कर्त्तव्यं भवती'त्युक्त्वा, न कर्त्तव्यं, क्रियते न्यास एवे'ति ग्रन्थेनेति दिक्' इति ग. पाठः ।

ऽन्तस्ये'त्यर्थकरणात् 'अङ्गस्ये'त्यादि-तदुपपादनग्रन्थोऽपि चिन्त्य एव। एवं च 'प्रहिण्वन्' इत्यर्थमेव नुम्ग्रहणमिति तत्त्वम्।

प्रेन्वनमिति। 'धातुमध्यवर्त्तिनुमो नस्ये'त्यर्थः। क्षुभ्नादौ 'इन्वि' इत्येव पठ्यते। समुदायपाठकल्पने हि तत एव कृन्नकारस्याऽपि निषेधसिद्धौ, 'अट्कुप्वाङि'तिसूत्रस्थाऽनुपदोक्तवार्त्तिकं व्यर्थं स्यात्। तेन 'परेन्वनमि'त्यादिसिद्धिः।

युवादेरिति। 'समस्ताः शब्दा युवादिषु, असमस्ताः क्षुभ्नादिष्वि'-ति वार्त्तिकाशयः। 'युवादेरि'त्यस्य—'युवाऽन्ताऽऽदेरि'त्यर्थः। उभा-वप्याकृतिगणौ। परिपक्वानीति। 'कुमति चे'ति प्राप्तिः।

वृत्रहणाविति। 'वृत्रं हतवन्तावि'त्यर्थे 'ब्रह्मभ्रूणे'ति क्विप्। हरि-माणीति। मनेर्ण्यन्तात्क्विप्। 'गतिकारके'ति सुबुत्पत्तेः पूर्वं समासे, नान्तस्योत्तरपदत्वम्। ततो 'ऋन्नेभ्य' इति ङीप्। क्षीरपेणेति। पिबतेः कर्मण्युपपदे 'आतोऽनुपसर्गे' इति कः। 'आतो लोपः'।

रम्यविणेति। 'रम्यश्चाऽसौ विश्चे'ति विग्रहे 'आङो ना'। नन्वन्त-र्वर्त्तिनीं विभक्तिमाश्रित्य 'वि'शब्दस्य पदत्वात् 'पदव्यवायेऽपी'ति निषेधः स्यात्। न च 'उत्तरपदत्वे चाऽपदादिविधावि'ति निषेधः। प्रत्यासत्त्या उत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेः। 'अपदादिविधौ' इति पर्यु-दासेन पदान्तविधावेव तत्प्रवृत्तेश्च। एतेन 'माषकुम्भस्य वापः',

---

१ इतोऽग्रे—'यचि भमि'त्यादौ 'सुबन्तमि'त्यनुवर्त्य, 'यस्मात्प्रत्ययविधिस्तदादि भसञ्ज्ञकं, मध्ये चेत्सुबन्तं, तदपि भसञ्ज्ञकमि'त्याश्रित्योक्तवचनस्य भाष्ये प्रत्याख्यानात्। 'अपदादिविधावि'तिपर्युदासेन पदान्तविधावेव निषेध-प्रवृत्तेश्च। ध्वनितं चेदं 'न लुमते' त्यत्र भाष्ये। नचैवं 'पदान्तविधावि'त्येव वदेत्। वार्त्तिकाक्षरेषु लाघवगौरवविचाराऽभावस्य तत्र तत्र भाष्ये ध्वनित-त्वात्। इकन्तनपुंसके प्रत्याख्यानैकवाक्यत्वायाऽस्यार्थस्य स्थापितत्वाच्च'इति ग. घ. पाठः। २ 'प्रवृत्तेश्च' ग. पाठः। ३ 'माषकुम्भेन वपति'इति ग. पाठः।

'चत्वार्यङ्गानि यस्य, तेन योग' इति विग्रहे—'उत्तरपदत्वे चे'ति निषेधात् अङ्गकुम्भशब्दयोः पदत्वं दुर्लभमि'ति 'पदव्यवायेऽपी'ति निषेधो न स्यादि-त्यपास्तम्[1]। न च[2] 'वाप'शब्दयोगे 'माषकुम्भस्ये'ति कर्मणि षष्ठी, तथाच 'गतिकारकोपपदानामि'ति सुबुत्पत्तेः प्राक्समासे, वापस्य पदत्वं दुर्लभमिति वाच्यम्। तस्या[3]ऽनित्यत्वेन अत्र सुबुत्पत्त्यनन्तरमेव समासादिति चेन्न। सप्तमीसमासे दोषस्यैवाऽभावाच्च। 'अतद्धिते' इति वार्त्तिकस्याऽपि 'तद्धित-भिन्ने परतः पदेन व्यवाये ने'त्यर्थ इति न दोषः। 'व्यवधायकपदस्य तद्धितभिन्नपरत्वे' इति यावत्।

१ इतोऽग्रे—'अत एव 'पदे व्यवाये' इति सप्तमीसमासमाश्रित्य 'अतद्धिते' इति वार्त्तिकप्रत्याख्यानं भाष्योक्तं सङ्गच्छते। अन्यथा 'अङ्गानां योगोऽङ्गयोगः, चतुर्णामङ्गयोग' इति विग्रहे 'योग'शब्दस्य पदत्वनिषेधाऽऽपत्तौ, भाष्या-ऽसङ्गतिः स्पष्टैव' इति क. कुण्डलितः ख. ग. घ. ङ. पाठः।

२ 'न चैवमपि माषकुम्भस्येत्यादेर्वापादिनिरूपितकारकत्वात् 'गतिकारकोपपदा-नामि'त्यनेन वापादिभ्यः सुबुत्पत्तेः प्राक् समासे तेषां पदत्वं दुर्लभमिति' इति लघुशेखरपाठः। स च शोभनः।

३ 'तस्याऽनित्यत्वेनाऽत्र सुबुत्पत्त्यनन्तरमेव समासात्। न च प्रकृते[1] सप्तमी-समासादेवाऽदोषः। 'अतद्धिते' इति कुर्वतो वार्त्तिककृतो मते दोषतादव-स्थ्यादिति चेन्न। फलभेदे सप्तमीसमासेन 'अतद्धिते' इत्यस्य प्रत्या-ख्यानाऽसम्भवेन, वार्त्तिकमतेऽपीदृशे विषये नञ्घटिताऽनित्यत्वेन, निषेधा-ऽप्रवृत्तिकल्पनात्' इति ख. घ. पाठः।

---

1 'न च प्रकृते तत एवाऽदोषः। 'अतद्धिते' इति कुर्वतो वार्त्तिककृतो मते दोष-तादवस्थ्यात्। फलभेदे प्रत्याख्यानाऽसम्भवाच्चेति चेन्न। व्यवधायकपदस्य तद्धितभिन्नपरत्वे एव तत्प्रवृत्तेः। पर्युदासस्यौचित्यात्। किञ्च प्रातिपदिकान्त-सूत्रस्थविभक्तिग्रहणसामर्थ्येन विभक्तेस्तत्प्रकृतिभूतसमासोत्तरपदव्यवधानेऽपि निषेधाऽप्रवृत्तेरङ्गीकारान्न दोषः। अत एव इनादेशतत्प्रत्याख्यानयोः, 'अत-द्धिते' इतिवार्त्तिक-तत्प्रत्याख्यानयोश्च फलैक्यं सङ्गच्छते' इति ग. घ. पाठः।

कुमति च। 'कादावि'त्यर्थभिया 'कावि'ति नोक्तम्। अनेकाजुत्तर-पदार्थमिदम्। अत्र 'कवर्गवदुत्तर'पदेन स्वघटिताऽऽक्षिप्तसमासस्य, विभक्त्याक्षिप्तप्रकृतेश्च प्रत्यासत्तिन्यायेन एकत्वाऽऽश्रयणेऽपि, 'चित्रगवीणामि'त्यादौ णत्वं भवत्येव। लिङ्गविशिष्टपरिभाषया विभक्तिप्रकृतेः समासत्वसत्त्वात्। अत एव 'कुण्डोध्नी'त्यत्र ङीषुत्तरं 'नद्यृतश्चे'ति कपं नद्यन्तसमाससत्त्वादाशङ्क्य, 'नद्यन्तानां यः समास' इत्याश्रित्य ( स ) परिहृतो 'बहुव्रीहेरूधस' इत्यत्र भाष्ये। एतेन एकशेषप्रकरणस्थ-'स्त्रीगवीणामि'ति कैयटप्रयोगः समर्थितः (भवति)। तत्र णत्वरहितपाठस्तु लेखकप्रमादादि'त्याहुः।

पदेनेति। 'निमित्तनिमित्तिनोर्मध्ये उत्तरपदाऽतिरिक्तपदव्यवधाने' इत्यर्थः। पदेनेति किम्?। चतुर्बहुयोगेण। बहुजयं प्रत्ययः।

माषकुम्भवापेनेति। यत्तु 'कुमति चे'ति सूत्रे भाष्ये—'अथेह कथं भवितव्यम्—माषकुम्भवापेण?। किं नित्यं णत्वम्, आहोस्विद्विभाषा' इत्युक्त्वा, 'षष्ठीतत्पुरुषोत्तरपदक-षष्ठीतत्पुरुषे 'कुमति चे'ति नित्यं णत्वेन भवितव्यम्, षष्ठीतत्पुरुषपूर्वपदक-षष्ठीतत्पुरुषे 'प्रातिपदिकान्ते'ति विभाषा' इत्युक्तत्वेन अयं निषेधः 'उपसर्गादसमासेऽपी'त्यादेरेव। तेन 'प्रावनद्धम्' 'पर्यवनद्धमि'त्युदाहार्य'मिति। तन्न। 'उपसर्गादि'त्यस्यैव

---

१ 'प्रत्यासत्याश्रयणादेकत्वाश्रयणात्' इति ग. पाठः।

२ 'प्रत्यासत्तिन्यायेन एकत्वाऽऽश्रयणात् 'चित्रगवीनामि'त्यादौ न णत्वम्। एतेन एकशेषप्रकरणस्थ-'स्त्रीगवीनामि'ति कैयटप्रयोगः समर्थित इत्याहुः। केचित्त्वेवं सति 'कुमदेकाचोत्तरपदे ण' इत्येकमेव योगं कुर्यात्। तदा हि समासस्याऽन्यपदार्थतया लाभेनाऽऽक्षेपाऽनपेक्षणेन लाघवं भवति। 'कुमदे-काचमि'ति समाहारद्वन्द्वे टजन्तं, परस्परं विशेषणभावेनान्वयशङ्कावारणाया-तस्माद्योगविभाग ईदृशप्रत्यासत्त्यग्रहणाय। णत्वरहितपाठस्तु लेखकप्रमादा-दित्याहुः। वस्तुतो लिङ्गविशिष्टपरिभाषया समासग्रहणेन तदन्तस्यापि ग्रहा-ण्णत्वं भवत्येव। णत्वरहितपाठस्तु लेखकप्रमादादित्याहुः' इति ख. घ. पाठः।

निषेधे 'अतद्धिते' इति वार्त्तिकस्य 'आर्द्रगोमयेणे'त्यादिभाष्योक्तोदाहरणाऽनुपपत्तेः। 'कुमति चे'ति सूत्रस्थभाष्यन्तु कस्याऽत्र प्राप्तिरित्येतत्परम् । भूधातुः सर्वत्र प्राप्त्यर्थः । कैयटस्वरसोऽप्यत्रैवेति दिक् ।

अतद्धित इति । 'व्यवधायकस्य पदस्य तद्धितपरत्वे न निषेध' इत्यर्थः ।

---

१ इतोऽग्रे 'किञ्च 'अतद्धिते' इति वार्त्तिकं व्यर्थं स्यात् । न च 'प्राऽवणद्रुमयमि'त्यादौ णत्वार्थं तत् । व्यवधायकस्य पदस्य तद्धितपरत्वाऽभावात् । नस्य 'अतद्धिते' इति विशेषणमित्यप्ययुक्तम् । 'आर्द्रगोमयेणे'तिभाष्योक्तोदाहरणस्याऽसम्भवदुक्तिकताऽऽपत्तेः[1] । 'कुमति चे'ति सूत्रस्थभाष्यन्त्वेकदेश्युक्तिरित्यकम् । अपरे तु—एतद्भाष्यप्रामाण्याञ्चघटिताऽनित्यत्वमाश्रित्य, 'माषकुम्भवापेणे'त्यत्रैतज्जातीयेऽन्यत्र च 'पदव्यवायेऽपी'त्यस्य न प्रवृत्तिः । एतद्बोधनाऽर्थमेव चाऽस्य विचार [2]इत्याहुः' इति क. कुण्डलितः ख. घ. पाठः ।

२ 'अतद्धित इति । 'व्यवधायकस्य पदस्य तद्धितभिन्नपरत्वं चेदि'त्यर्थः । नचैवं

---

1 एतदग्रे—'त्वदुदाहरणे 'नद्रमय'शब्देन व्यवायात् । अपि च सप्तमीसमासेन तत्प्रत्याख्यानपरभाष्यविरोधः । न च 'उत्तरपदत्वे चे'ति निषेधेन नद्रस्याऽपदत्वेन, पदे व्यवायाऽभावान्न निषेध इति वाच्यम् । प्रागुक्तभाष्योक्ततत्प्रत्याख्याने पदत्वस्य सत्वात् । किञ्चैवं 'प्राऽवनद्रुमि'त्यत्रापि समासे निषेधाऽनापत्तिरिति, फलभेदे प्रत्याख्यानाऽसम्भवः । किञ्चैवं विग्रहद्वयेनाऽर्थभेदाद्रूपद्वयसिद्धौ च विकल्पस्यैव समर्थनेनाऽस्य विचारस्य निष्प्रयोजनत्वात् , 'पदव्यवायेऽपी'ति निषेधस्य दुर्वारत्वाच्च, 'कुमति चे'तिसूत्रस्थभाष्यस्य प्रौढिवादपरत्वाऽवश्यकत्वात् । 'न भाभूपूकमी'त्यत्र विधेयस्य निषेधस्य पूर्वपाठकरणेन निषेधे व्यवस्थापकन्यायाऽप्रवृत्तिबोधनेन णत्वमात्रस्य निषेधबोधनाच्चेत्यलं क्षुद्रपीडनेन' इति ग. घ. पाठः ।

2 किञ्च 'पदे व्यवाय' इति सप्तमीसमासपक्षे कारकाणामुत्तरपदेन सुबुत्पत्तेः प्राक् समासे निषेधाऽप्रवृत्त्या, 'पदेन व्यवाये' इत्यर्थेऽपि तेन व्यवाये निषेधाऽप्रवृत्तिरेवोचिता । 'पदव्यवायेऽपी'त्युदाहरणन्तु 'माषकुम्भयुगेने'त्यादीत्याहुः' इति घ. पाठः ।

'आर्द्रगोमयेणे'त्यत्र गोशब्दः पदम् ।

सूत्रे नपुंसकनिर्देशात् 'कुस्तुम्बुरुरि'त्यनुपपन्नमत आह—अतश्च-मिति । बहुत्वं चैवम् ।

गोष्पदम् । असेविते सामर्थ्यान्नञ्पूर्वकमुदाहरति–अगोष्पदानीति । यद्यप्येतन्नञा 'गोष्पद'शब्दस्य समासे सिद्ध्यति, तथाऽपि गवां सञ्चारो यत्र नैव कदाचित्तत्रैवं नञ्पूर्वे सुडर्थमसेवितग्रहणम् । 'अविद्यमान-सेवित' इति बहुव्रीह्याश्रयणात् । ये तूभयत्राऽपि अगोष्पदशब्दप्रयोग-मिच्छन्ति, सेवितप्रसङ्गेऽत्यन्ताऽसेविते चेति, तेषां भाष्यविरोधः । भाष्यकृता बहुव्रीहेरेवोक्तत्वात् । किञ्चैवं सति 'असेवित'ग्रहणं व्यर्थमेव स्यात् । तदभावेऽपि 'अगोष्पद'शब्दतो नञ्तत्पुरुष-बहुव्रीहिभ्यामुभया-ऽर्थप्रतीतिसम्भवात् । स्पष्टं चेदं भाष्ये ।

गोष्पदं क्षेत्रमिति । अल्पत्वरूपं क्षेत्रप्रमाणमनेन बोध्यते । तेन क्षेत्रस्य गोष्पदादधिकत्वेऽपि न क्षतिरिति बोध्यम् । आत्मयापनं = प्राण-धारणम् । शरीररक्षणमिति यावत् । ('कालक्षेप' इत्यपि कश्चित्) । यथा 'आस्पदमनेन लब्धम्' । शरीररक्षणाय स्थानं लब्धमित्यर्थः । अद्भुतेति । अनित्यत्वेन कादाचित्कयाऽद्भुतत्वं लक्ष्यत इति भावः । ध्वनितं चेदं भाष्ये ।

---

सति सविशेषणत्वात्पदव्यवाये इति समासाऽनुपपत्तिः । भाष्यप्रामाण्येन सविशेषणत्वेऽपि वृत्त्यङ्गीकारात् । 'न च नस्यैव विशेषणम् । 'आर्द्रगोमये-णे'ति भाष्योक्तोदाहरणाऽसङ्गतेः' इति ग. घ. पाठः ।

१ 'तत्रापि सुडर्थमसेवितग्रहणम् । स्पष्टं चेदं भाष्ये । निषेधार्थक 'न'-शब्देन समासे 'नगोष्पदानी'ति तु न । 'असेवित'शब्द उपस्थितनञमादा-यैव निपातनस्य चारितार्थ्येनाऽन्यत्र प्रवृत्तौ मानाऽभावात् । अत एव 'आदराऽनादरयोः सदसती' इति सूत्रस्थाऽसद्ग्रहणप्रत्याख्यानपरं भाष्यं सङ्गच्छते इत्याहुः' इति ग. पाठः ।

२ 'शरीरधारणम्' इति ख. पाठः । लघुशेखरे च । ३ ख. ग. घ. ङ. पाठोऽयम् ।

४ इतोऽग्रे—'प्रकरणाद्विसर्गस्थाने एव तेन सत्वविधानञ्च' इति ग. पाठः ।

विकिरग्रहणमिति । 'विष्किरः शकुनौ, विकिरो वे'ति तन्मते सूत्रपाठः । भाष्यविरोधादिति । (तत्र[1] हि 'विकिरो वे'ति वार्त्तिकं प्रत्याख्यातम्) । तथा च प्रकृतसूत्रे भाष्यम्—'शकुनौ विकिरो वे'ति वाच्यम् । 'विष्किरः शकुनौ वे'त्युच्यमाने शकुनौ वा स्यात्' । 'अन्यत्राऽपि नित्यम्' । शकुनौ तत्तुल्यजातीयेऽन्यत्र वाऽर्थे उभयत्राऽपि नित्यं प्राप्नोति । सिद्धशब्दस्य विकल्पाऽयोगेनाऽधिकरणविकल्पप्रतीतेः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । न वावचनेन शकुनिरभिसम्बध्यते-'विष्किर इत्येतन्निपातनं, शकुनौ वे'ति । किन्तर्हि ? । शकुनौ सुड्विकल्प्यते' इति । एवञ्चाऽन्यत्र विकिरस्येष्टत्वं स्पष्टमेव लभ्यते । 'विष्किर' इत्यत्र 'कॄ विक्षेपे' इत्यस्मात् 'इगुपधज्ञाप्रीकिरः क' इति केऽनेन सुट् । 'परिनिविभ्य' इत्यनेन षत्वमित्याहुः ।

कशेरेव कशेति । 'कश'धातोरेव 'कशा'शब्द इत्यर्थः । इह च 'यत्क्रियायुक्ता' इति न्यायेन गमेः प्रतिरुपसर्गो, न कशेरिति भावः ।

अमन्त्रार्थमिति । मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इत्येव सिद्धमिति भावः । हरिश्चन्द्रो-राजर्षिः ।

सुडिति । वेणौ । इनिश्चेति । परिव्राजके । चात्सुडपि । वृत्त्यनुसारेणेदम् । 'माङुपपदात्कृञ इनिर्माङो ह्रस्वः, सुट् च निपात्यते परिव्राजके । 'मा कृत कर्माणि, मा कृत कर्माणि, शान्तिर्वः श्रेयसी'त्याहाऽतो मस्करी परिव्राजक' इति भाष्यकृतः । 'अयं नाऽकरोत्, अयं माऽकरोदि'त्युपक्रम्य, 'उपशान्तितः काम्यकर्मपरिहानिर्युष्माकं श्रेयसी'त्युपदेष्टा 'मस्करी'त्युच्यते' इति कैयटः । कातीरमिति । 'ईषदर्थे चे'ति कोः काऽऽदेशः । कारस्कर इति । 'दिवाविभे'ति टः ।

केचित्त्विति । अत्राऽरुचिबीजन्तु भाष्ये पारस्करादिषु प्रत्यक्षतो दर्शनम्, प्रकरणाद्विसर्गस्थाने एव तेन सत्वविधानं च[2] । तस्मात् 'पारस्करादिष्विदं पठन्ती'ति पाठ उचितः । पारस्करेति । 'पारं करोती'ति विग्रहे

१ अयं ख. घ. पाठः ।

२ इतोऽग्रे—'तस्मादस्य सूत्रत्वोक्तिर्भ्रान्त्यैव' इति ख. पाठः ।

'कृञो हेतु' इति टः। पारस्करो-देशो, नगरं च।

किष्किन्धेति। 'किं किं दधाती'ति 'आतोऽनुपसर्गे कः', पूर्वस्य किमोऽन्त्यलोपः। सुट्, षत्वं च निपातनात्। रूढिशब्दाश्चैते, कथञ्चिद् व्युत्पाद्याः।

तद्बृहतोरिति, प्रायस्येति च,-गणसूत्रे। तादिति। 'तलोपश्चे'त्यत्रेति भावः। चर्त्त्वेनेति। 'झरो झरी'ति लोपेने'त्यन्ये। तद्बृहतोर्यथासङ्ख्यं दकारतकारयोर्लोपो बोध्यः। यत्तु-'तयोः सकारोऽन्तादेशोऽस्तु, माऽस्तु च सुट्, माऽस्तु च लोप' इति। तन्न। प्रकरणविरोधात्। यथोद्देशपक्षे बहिरङ्गाऽसिद्धत्वाऽप्रवृत्तौ रुत्वादिप्रसङ्गाच्च।

बृहस्पतिरिति। 'बृहत्याः पति'रिति विग्रहे 'कुक्कुट्यादीनामण्डादिषु' इति पुंवत्त्वम्। 'वाग्वै बृहती, तस्या एष पतिरि'ति श्रुतिदर्शनात्।

प्रायस्येति। 'प्रायस्ये'ति भाष्यात् 'प्राय'शब्दोऽकारान्तः पुँल्लिङ्गस्तपोवाची, पापवाची वा। 'प्रायो नाम तपः प्रोक्तं, चित्तं निश्चय उच्यते' इति, 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनमि'ति च स्मृतेः।[1]

आकृतीति।[2] तेन 'किं करोती'ति विग्रहे कृञो'डु'प्रत्यये-'किष्कुः'। शतात्पराणि-'परःशतानि'। 'सुप्सुपे'[3]ति समासे, राजदन्तादित्वात्परनिपातः। 'परश्शता जनता' इत्यादौ 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्। लोकाऽऽश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्नता।[4] अनेन सुडिति सर्वेष्टसिद्धिः।

इति समासाश्रयविधयः।

[ इति श्रीनागेशभट्टविरचिते बृहच्छब्देन्दुशेखरे समासप्रकरणम् ]।

---

१ 'इति स्मृतेः 'प्रायस्ये'ति भाष्याच्च' इति ग. घ. पाठः।

२ इतः पूर्वम् 'अत्र केचिदसुडादेशमाहुः। 'तद्बृहतोरि'ति, प्रायस्य चे'ति वार्त्तिके इति' इति ग. पाठः।

३ 'पञ्चमीति योगविभागात्सुप्सुपेति वा समासे' इति ग. घ. पाठः।

४ 'तत्र पञ्चमीसमासे लोकाश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्नता स्यात्। अन्त्ये तु सम्यगेव। तत्पुरुषत्वाऽभावाद्। इति सर्वेष्टसिद्धिः' इति ग. घ. पाठः।

श्रीमन्महागणपतये नमः ।

अथ तद्धिताः ।

## अथ साधारणतद्धितप्रत्ययप्रकरणम् ।

अपवादसङ्गत्या तद्धितान् विवक्षुस्तदीयमधिकारसूत्रमाह—**समर्थानाम्** । पदत्रयमिति । अनेन प्रत्येकं पदानां स्वरितत्वं बोधितम् । अत एव 'वे'त्यस्य 'प्राग्दिश' इत्युत्तरमप्यनुवृत्तिर्भवत्येवे[1] । इदमवधिप्रदर्शनं त्रिशिष्टस्येति, न दोषः । अत्र सामर्थ्यं न एकार्थीभावः, 'समर्थः पदविधि-रि'ति गताऽर्थत्वात् । 'घकालतनेषु' 'आमुष्यायणे'त्यादिप्रामाण्यात्स्वार्थे परिपूर्णस्यैव पदोऽन्तरसम्बन्धेन[2] सुबन्तात्तद्धितोत्पत्तेः, पदविधित्वस्य स्पष्टत्वात् । अत आह—सामर्थ्यमिति । शक्तपर्यायः 'समर्थ'शब्दः । पदस्य शक्तत्वं त्वर्थप्रतिपादकत्वमेव । तच्च परिनिष्ठितस्यैव । परिनिष्ठितत्वमेव दर्शयति—कृतसन्धीति । तदुक्तं भाष्ये—किं पुनः समर्थम् ? । अभिधाने यच्छक्तम् । किं पुनस्तत् ? । कृतवर्णाऽनुपूर्वीकम्,—'सौत्थितिरि'ति[3] ।

सूत्रे 'समर्थानामि'ति निर्धारणे षष्ठी । 'समर्थानां मध्ये प्रथमादि'-त्यर्थः । तत्तत्सूत्रेषु प्रथमोच्चारितशब्दप्रतिपाद्यत्वं च प्रथमत्वम् । एवं चाऽनेकसमर्थसम्भवे एवाऽस्य सम्बन्धः । 'शेष' इत्यत्रापि समर्थविभक्त्यन्त-विशिष्टोऽर्थ एव 'शेष' इत्यनेकसमर्थसम्भवोऽस्त्येव । अत एव 'प्राग्दिश' इत्युत्तरं नाऽस्य सम्बन्धः । तेषां स्वार्थिकत्वेनाऽनेकसमर्थाऽसम्भवात् । इदमेव ध्वनयितुं 'समर्थादि'ति नाऽसूत्रि ।

महोत्सर्गानाह—प्राग्दीव्यतो । 'तेन दीव्यती'ति सूत्रैकदेश'दीव्यत्' शब्दस्याऽनुकरणम् । तेन च (लक्षणया)[4] 'दीव्यति'शब्द उपस्थाप्यते ।

---

१ 'भवत्येवेत्याहुः' इति ख. ग. घ. पाठः ।

२ 'पदार्थोऽन्तरसम्बन्धे' इति ख. पाठः ।

३ इतोऽग्रे—'सन्धी'त्युपलक्षणम्—प्रकृत्यंशे परिनिष्ठितत्वप्रयोजककार्यस्येत्याहुः' इति ग. पाठः ।

४ अयं ख. ग. घ. ङ पाठः ।

तस्य चाऽर्थबोधकत्वादर्थस्याऽवधित्वं बोध्यम् । यद्वा 'दीव्यदि'ति शत्रन्तम् । तेन देवनकर्त्ताऽर्थ एवाऽवधिरिति बोध्यम् । अत एवाऽवधिमन्तोऽप्यर्था एव । अवध्यवधिमतोः साजात्यात् । अत एव 'अत इञ्' इत्यादौ नाऽस्य सम्बन्धः ।

प्राग्दीव्यतीयेष्विति । 'दीव्यतः प्रागि'ति 'अपपरी'त्यव्ययीभावः । ततो भवाऽर्थे छः । त्यप्तु न, 'अमेहे'त्यादिपरिगणनात् । छे 'अव्ययानां भमात्रे' इति टिलोपस्तु न । अनित्यत्वात् । [1] ( 'टजन्ताच्छे न दोषः' इत्यन्ये ) [2] ।

'अचामि'ति निर्धारणषष्ठीबललब्धमर्थमाह–अच इति । 'अचोञ्णिती'-त्यतस्तदनुवृत्तिर्वा । निर्दिष्टस्थानिकत्वाच्च इक्परिभाषाया न प्रवृत्तिः ।

प्रामादिकमेवेति । गणपतिक्षेत्रपत्यादीनामश्वपत्यादिषु पाठात् । [3] चातुर्वर्ण्यादित्वकल्पने तु नपुंसकत्वाऽऽपत्तिरिति भावः । 'क्षैत्रपत्यं चरुं निर्वपेदि'त्यादिप्रयोगाणां चातुर्वर्ण्यादित्वात्साधुत्वं बोध्यम् , छान्दसत्वाद्वा ।

केचित्तु 'गणपतिर्देवताऽस्य तद्गाणपतं कर्म । 'तत्र साधुरि'ति यति, गाणपत्यादयः साधवः । एवमेव 'याम्या ऋगि'त्यपीत्याहुः ।

'पत्युत्तरपद'शब्देन द्वन्द्व इत्याशयेन व्याचष्टे-दित्यादिभ्य इति । बहुच्पूर्वऽतिव्याप्तिवारणाय—उत्तरपदेति । किञ्च तदभावे 'परमप्रजापति'-शब्दादपि स्यात् । उत्तरपदग्रहणे तु यं समासरूपप्रातिपदिकं प्रति 'पति'-शब्द उत्तरपदं, [4] तस्यैवाऽन्यपदार्थत्वान्न दोषः [5] । प्रत्ययविधौ तदन्तविधि-

१ इतोऽग्रे—'अव्ययीभावस्याऽव्ययत्वे लुङ्मुखस्वरोपचारा' इति परिगणनान्ने'त्येके । 'टजन्ताच्छे तदप्राप्तिरि'त्यन्ये । 'अय' इति टजनित्य एवेत्यपि मताऽन्तरमव्ययीभावान्ते निरूपितम्' इति ग. पाठः ।

२ अयं ख. पाठः ।

३ 'चातुर्वर्ण्यादित्वकल्पने मानाऽभाव इति भावः' इति ग. पाठः ।

४ 'तस्यैव ग्रहणान्न दोषः' इति लघुशेखरे पाठः ।

५ इतोऽग्रे–'प्रजापतिशब्दस्य तत्त्वेऽपि परमार्थेऽनैकार्थीभूतत्वान्निष्कृष्याऽपत्यादिभिः सम्बन्धाऽभावान्नैव प्रत्ययः' इति ग. पाठः ।

प्रतिषेधात् 'परमाऽदिति'शब्दान्न । अत एवाऽदितिग्रहणं चरितार्थम् ।

दैत्य इति । यद्यपि देवताद्यर्थे सावकाशं ण्यं बाधित्वाऽपत्ये परत्वात् 'इतश्चाऽनिञ' इति ढक् प्राप्नोति, तथाऽपि 'ण्यादयोऽर्थविशेषलक्षणादण-पवादात्पूर्वविप्रतिषेधेने'ति वार्त्तिकाददोषः । 'अर्थविशेषे'ति किम् ? । औष्ट्रपतम् । उष्ट्रपतिर्नाम पञ्चम् । 'तस्येदम्', 'पञ्चाऽध्वर्युपरिषदश्चे'त्यञ्[1] ।

आदित्यशब्दाण्ण्ये, 'यस्ये'तिलोपे, 'पूर्वत्राऽसिद्धे ने'त्यल्लोपस्य स्थानि-वत्त्वाऽभावे 'हलो यमामि'ति 'य'लोपः । कथं तर्हि 'आदितेया दिविषदः', 'दैतेयदानवा' इति । अत्राहुः—दित्यदितिभ्यां क्तिजन्ताभ्यां 'कृदिकारा-दि'ति ङीषि 'स्त्रीभ्यो ढक्' । ण्यस्तु न । अनित्यत्वेन लिङ्गविशिष्ट-परिभाषाया अत्राऽप्रवृत्तेरिति ।

काशिकायामिति । नैतद्भाष्ये दृष्टम् । ('याम्याः पुनर्यातना' इत्यादि[2] चिन्त्यमेव । [3]'याम्यः पुनरि'त्येव युक्तः पाठः । यत्तु स्वार्थिकष्यञि 'याम्या' इति प्रयोग' इति । तन्न । तदन्तस्य प्रायेण नपुंसकत्वात् । षित्त्व-प्रयुक्तङीषो दुर्वारत्वाच्च[4]) ।

बहिषष्टीति । इदमेव 'अव्ययानां भमात्रे' इत्यस्याऽनित्यत्वं ज्ञापयति । तेन 'आरातीय' इत्यादिसिद्धिः । ण्येन सिद्धे यञ् आद्युदात्ताऽर्थः । अश्वेति । 'अश्वस्येव स्थाम बलं यस्ये'ति विग्रहः । पृषोदरादित्वात्सस्य तः । प्रत्ययविधावपि भाष्योदाहरणबलात्तदन्तस्यैव ग्रहणम् । वचनन्तु बल-

---

१ इतोऽग्रे—'न चाऽयमपि 'पञ्चाद्वाह्ये' इत्युक्तेरर्थविशेषलक्षणः । तस्य नियमा-ऽर्थत्वेन वाह्यभिन्ने निवृत्तिमात्रफलकत्वादित्याहुः' इति ख. ग. ङ. पाठः ।

२ 'याम्या ऋक्' 'याम्याः पुनर्यातनाः' इत्यादिप्रयोगास्तु षित्त्वप्रयुक्तङीषो-ऽनित्यत्वमाश्रित्य स्वार्थिकष्यञा निर्वाह्या इत्याहुः' इति ग. पाठः ।

३ ग. पाठखण्डनमेतत् ।

४ 'याम्याः' इत्यारभ्य 'दुर्वारत्वाच्च' इत्यन्तोऽयं ख. ङ. पाठः । क. नास्ति ।

वाचिनः 'स्थामन्' शब्दस्य केवलस्याऽपत्येन योगाऽभावेऽपि, [1]'शेषेऽर्थे साव-काशमिति बोध्यम् । भवार्थे तिन्नि । इदं च 'अन्तःपूर्वपदादि' त्यत्र भाष्ये स्पष्टम् । लोम्न इति । केवललोम्नोऽपत्येन योगाऽभावात् तदन्तविधिः ।

'अभिव्यक्तपदार्था ये' इति संज्ञाभूतस्य न ग्रहणम् । अपत्याऽर्थस्याऽपि 'स्थाम्नोऽकार' इत्यकाराऽनुवृत्त्यनुरोधेन साधारणप्रत्ययेषु कथनं बोध्यम् ।

गोरजादीति । सर्वेषु प्राग्दीव्यतीयेष्विदम् । वस्तुतः प्राग्दीव्यतीयेभ्योऽन्यत्रापि । तेन 'गवा चरति गव्यः' । अत एव भाष्ये 'सर्वत्र गोरजादी' ति पठितम् । गव्यमिति । गवि भवम्, गोरिम्, गौर्देवताऽस्ये-त्यादिरर्थः । गोरूप्यमिति । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' 'मयट्चे' ति रूप्य–मयटौ ।

उत्सा । अणपवादोऽयम् । तदपवादेञादीनां च 'ण्यादयोऽर्थविशे-षणलक्षणादि' ति पूर्वविप्रतिषेधेन बाधक इति बोध्यम् ।

अत्र गणे 'बष्कयाऽसे' इति पठ्यते । असे इति । असमासे इत्यर्थः । पूर्वाऽऽचार्यसंज्ञेयम् । बाष्कयः । असे किम्? । गौवष्कयिः । 'असे' इत्येतदत्र तदन्तविधिं ज्ञापयति । तेन 'अधेनूनां समूह आधेनवमि' ति सिद्ध्यति । धेनुशब्दस्येह पाठात् । 'धैनुकम्', 'गौधेनुकमि' त्यादि तु समूहे 'अचित्तहस्तिधेनोष्ठगि' ति सिद्धम् । तत्र च तदन्तविधिरुपपाद-यिष्यते । नञ्पूर्वे तु न ठक्, 'धेनुरनञ इकमुत्पादयती' ति आपिशलि-वचनस्य खण्डिकादिसूत्रे भाष्ये पठितत्वात् ।

अग्निकलिभ्यामिति । एवं च देवताऽधिकारे 'अग्नेर्ढगि' ति [2]सूत्रम्, 'दृष्टं सामे' त्यधिकारे [3]'कलेर्ढगि' ति च वार्त्तिकं न कार्यम् । न च 'यत्

---

१ 'जाताद्यर्थं सावकाशम्' इति ख. ग. ङ. पाठः ।

२ 'सूत्रम्' इति क. पाठः, ख. ग. घ. ङ. नास्ति ।

३ 'कलेर्ढ' गिति च सूत्रं न कार्यम् । न च 'कलेर्ढगि' ति वार्त्तिकं, न सूत्रमिति वाच्यम् । 'विधानलक्षणसूत्राऽन्ता' दिति वार्त्तिके 'वार्त्तिकसूत्रिक' इति

अकालयत्तत्कालेयस्य कालेयत्वमि'ति श्रुतिविरुद्धं वार्त्तिकं 'कलेर्ढगि'ति । एकस्मिन्कलिदृष्टत्वस्य, कालयितृत्वस्य चाऽविरोधेन श्रुतिविरोधाऽभावात् । अत एव 'अहीनो वा प्रकरणादि'त्यधिकरणेऽहीनस्य खप्रत्ययस्वरेणाऽहर्गणसाध्यत्वं मीमांसकैर्व्याख्यातम् । अन्यथा 'यदेनं सर्वे नाऽहासिषुस्तदहीनस्याऽहीनत्वमि'ति श्रुत्या बाधाऽऽपत्तेः । एतेन 'वामदेवादि'ति सूत्रं 'वामं वा इदं देवेभ्यः समजनि, तद्वामदेवस्य वामदेव्यत्वमि'ति श्रुतिविरुद्धमित्यपास्तमि'ति दिक् । इति साधारणाः प्रत्ययाः ।

## अथ अपत्याधिकारप्रकरणम् ।

स्त्रीपुंसाभ्याम् । 'प्रागि'त्यस्याऽनुवृत्तिमभिप्रेत्याऽऽह–प्रागर्थेष्विति । नञेव तु न कृतः, संयोगान्तलोपे पौंस्नस्याऽसिद्ध्यापत्तेः । स्यादेतत्—प्रकृतोऽञेवाऽस्तु । तत्सन्नियोगेनाऽकारसहित-नगागम एवाऽस्तु । 'नस्तद्धिते' इति टिलोपवारणाय 'अकारसहिते'ति । एवं चाऽञन्तत्वादेव ङीपि सिद्धे 'नञ्स्नञीकगि'ति वार्त्तिके नञ्स्नञ्ग्रहणं न कार्यम् ।

---

भाष्योदाहरणात्, 'सूत्राच्च कोपधादि'ति सूत्रे-'सङ्ख्याप्रकृतेः सूत्रवाचकादिति वाच्यम्' । यथा 'अष्टकाः' (पाणिनीयाः) इति, नेह 'माहावार्त्तिकाः' इति-भाष्याच्च, स्वतल्प्रकरणस्थभाष्यप्रामाण्याच्च वार्त्तिकेऽपि सूत्रत्वाऽकीकारादित्याहुः' इति ख. ग. पाठः ।

१ इतोऽग्रे—'किञ्च प्रत्यक्षश्रुतिविरुद्धस्मृतेर्न सर्वथाऽप्रामाण्यम् । किन्तु तन्मूलभूतश्रुतिदर्शनं यावदननुष्ठापकत्वलक्षणमेव । अपि चाऽर्थवादानां स्वार्थे तात्पर्यविरहात्तत्परस्य व्याकरणस्य न बाधस्तैः । तथात्वे वा 'अहीनो वा प्रकरणादि'त्यधिकरणे कथं खप्रत्ययस्वरेणाऽहर्गणसाध्यत्वं मीमांसकैर्व्याख्यातम् । यदेनं सर्वे नाऽहासिषुः' इति ग. पाठः ।

२ इतोऽग्रे—'अपत्यविवक्षायां तु परत्वाज्जातिलक्षणङीष् सर्वेषामिष्टः । न च तत्र ततोऽपि परत्वाच्छार्ङ्गरवादिङीनापत्तिः । भाष्यप्रामाण्येनाऽकाररूपाऽञ एवेति व्याख्यानेन नकाराऽसंयुक्ताऽञ एव तत्र ग्रहणात् । न च

न च 'द्वयोः स्त्रियोरपत्यं द्वैस्त्रीण' इत्यादौ 'द्विगोर्लुगनपत्ये' इति लुगापत्तिः। प्रत्ययविधौ तदन्तविध्यभावात्तादृशप्रयोगस्यैव दुर्लभत्वात्। न च 'स्त्रैणा' इत्यत्र बहुत्वे 'यञञोश्चे'ति लुक्, 'स्त्रैणानां सङ्घ' इत्यत्र 'सङ्घाऽङ्कलक्षणेष्वञ्'त्यण्च स्यादिति वाच्यम्। उभयत्राऽपि 'गोत्रे'इत्यनुवृत्तेः। ऋष्यपत्यस्यैव गोत्रस्य तत्र ग्रहणात्। न च गोत्रस्त्रीविवक्षायां'जातेरि'ति ङीष स्यात्। इष्टाऽऽपत्तावञ्पक्षे ततोऽपि परत्वात् 'शार्ङ्गरवाद्यञ' इति ङीन्-प्रसङ्ग इति वाच्यम्। पूर्वविप्रतिषेधेन ङीप एवेष्टः। अत्र चाऽत्रत्यं भाष्यमेव मानम्। जातिलक्षणेऽपि ऋष्यपत्यगोत्रस्यैव ग्रहणे तु न दोषशङ्का। यत्र त्वन्यत्रापि जातिकार्यमिष्यते, तत्र तदारोपेण साध्यमिति चेन्न। स्पष्टार्थं तथोक्तत्वात्।

एतेन 'स्त्रिया नञ् भवनात्' 'पुंसो भञ्चे'ति कार्यम्, 'नञ्भवनादि'ति वर्त्तते' इति न दोष' इति परास्तम्। ज्ञापकादिति। 'स्त्रीपुंसाभ्यामि'ति

---

'यस्ये'तिलोपे 'नस्तद्धिते' इति टिलोपाऽऽपत्तिः। अल्लोपस्य स्थानिवत्त्वात्। न च द्वयोः स्त्रियोरपत्यम्' इति ग. पाठः।

१ इतोऽग्रे—'तत्र 'वे'त्यनुवर्त्य व्यवस्थितविभाषाऽऽश्रयणाददोषः। सा च तत्राऽऽवश्यकेति वक्ष्यते। वस्तुतः प्रत्ययविधौ तदन्तविध्यभावात्' ग. पाठः।

२ 'दुर्लभत्वान्न दोषः' इति ग. पाठः।

३ 'ग्रहणमिति स्पष्टं भाष्ये इति चेन्न। स्पष्टार्थं तथोक्तत्वात्' इति ग. पाठः।

४ 'एतेन' इति ख. पाठः।

५ 'इत्यञ्प्रसङ्ग इत्यपास्तम्। जातिलक्षणेऽपि लौकिकस्य प्रवराऽध्याय-प्रसिद्धस्य गोत्रस्यैव ग्रहणादिति स्पष्टं भाष्ये इति चेन्न। स्पष्टाऽर्थं तथोक्त-त्वात्' इति ख. पाठः।

६ इतोऽग्रे—'अस्याऽऽकारस्यत्वाऽभावेन पदत्वेन समावेशापत्तेः। अङ्गत्व-स्यापि बाधापत्तेश्च' इति ग. पाठः।

योगाऽपेक्षादिति भावः । स्पष्टं चेदम् 'उपसर्गाच्छन्दसि धात्वर्थे' इति-सूत्रे भाष्ये । त्वतलौ तु 'आ च त्वादि'ति चकाराद्भवत एवेति वक्ष्यते ।

द्विगोर्लुगन । 'द्विगोरि'ति षष्ठी । सा च न स्थानसम्बन्धे, प्रत्ययाऽदर्शनस्यैव लुक्त्वात् । नाऽप्यानन्तर्यसम्बन्धे, 'पञ्चकपालस्य पुरोडाशस्येदं-पाञ्चकपालमि'त्यादावतिप्रसङ्गात्[1] । किन्तु हेतुत्वरूपसम्बन्धे । स च भाविनोऽपि, बुद्ध्याऽध्यवसायात्[2] । तदाह—द्विगोर्निमित्तमिति । 'पञ्चानां कपालानां समाहारः पञ्चकपाली', तस्यां संस्कृतमि'त्यर्थे तु प्रत्ययो[3] न भवति । अनभिधानात् । तेन तथाविग्रहे 'पाञ्चकपाल' इति नाऽऽपाद्यमिति स्पष्टं भाष्ये ।

अजादिरिति । एतच्चोत्तरसूत्रादचीत्यपकर्षणाल्लभ्यते । 'तिस्रो विद्या अधीते' इत्यर्थे 'त्रैविद्य' इति तु 'त्र्यवयवा विद्ये'ति मध्यमपदलोपिसमासात्तद्धितोत्पत्त्या साध्यम । द्विगोस्तु नाऽण् । अनभिधानादिति कैयटः । एवं[4] पाञ्चनदषाट्कुलावपि । वस्तुतोऽजादिरिति प्रायिकम । 'द्विरथ' इत्यत्र 'तस्येदमि'त्यधिकारविहितयतोऽपि लुको 'येन विधिरि'ति-'तद्वहति-रथे'तिसूत्रस्थभाष्यादिसंमतत्वात् । तस्मा[5]दचीत्यपकृष्य वाक्यभेदन

---

१ इतोऽग्रे—'न च पञ्चानां कपालानां समाहारः 'पञ्चकपाली' । तस्यां संस्कृतमित्यर्थे 'पाञ्चकपाल' इति स्यात् । 'पञ्चकपाल' इत्येवेष्यते इति चेत् । 'अव्यविक'न्यायेन ततस्तद्धितस्यैवाऽनुत्पत्तेः । ध्वनितं चेदं भाष्ये । किन्तु हेतुत्वरूपसम्बन्धे' इति ग. पाठः ।

२ इतोऽग्रे—'स च 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाऽग्रान्ग्रहान् गृह्णीयादि'त्यादौ रथन्तरसामत्वादेरिव भाविनोऽपि बुद्ध्या' इति ख. ग. पाठः ।

३ 'प्रत्ययो न भवति । 'अव्यविक'न्यायात्' इति ख. ङ. पाठः ।

४ 'एवं पाञ्चनद–षाट्कुलावपि समाहारद्विगोर्भवादौ तद्धिते सूपपादौ' इति ग. पाठः ।

५ 'तस्माद्वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादतिप्रसङ्गपरिहार इत्येव सारम्' इति ग. पाठः ।

व्याख्येयम्—'अजादे र्द्विगुनिमित्तस्य लुगि'ति । तेन हलादेः कस्य चिदेव लोप इत्येव सारम् ।[1]

गोत्रेऽलुग । 'मध्येऽपवाद'न्यायेन, 'तद्राजस्य बहुष्वि'तिप्रकरण-विहितलुक एवाऽयमलुक्[2]। अत एव[3] भाष्ये अलुकः पूर्वमन्तरङ्गत्वाल्लुक-माशङ्क्य, 'यदयं भूम्नि प्राप्तस्य लुकोऽजादौ तद्धितेऽलुकं शास्ति, तज्ज्ञा-पयत्याचार्यः-'समानकालावलुग्लुकावि'त्युक्तम् । विषयसप्तम्याश्रयणीयेति तद्भावः । अत एव 'गर्गाणां छात्रा' इत्यर्थविवक्षायां वृद्धत्वनिमित्तप्रत्यय-सिद्धिः[4]। यत्तूक्तम 'गोत्रस्त्रियाः' इति सूत्रे 'णस्य णित्त्वं किमर्थम् ?'। 'वत-ण्डस्य गोत्राऽपत्यं स्त्री वतण्डी'। 'वतण्डाच्चे'ति विहितयञो 'लुक् स्त्रिया-मि'ति लुकि, शार्ङ्गरवादित्वान्ङीन् । तस्या अपत्यं युवा 'वातण्डो जाल्म' इत्यादौ वृद्ध्यर्थमि'त्युक्त्वा, नैतदस्ति, 'भस्याऽढे' इति पुंवद्भावेन ङीनो निवृत्तौ, 'गोत्रेऽलुगची'त्यलुका वृद्धिसिद्धेरि'त्युक्त्वा, 'ग्लौचुकायनो जाल्म' इति फिञन्ताण्णे वृद्ध्यर्थमिती'ति भाष्ये,[5] तत्त्वेकदेश्युक्तिः ।

---

१ इतोऽग्रे—'एवञ्च त्रैविद्यादावपि न दोष इत्याहुः' इति ग. पाठः ।

२ 'मध्येऽपवादन्यायेन, लक्षणप्रतिपदोक्तपरिभाषया च 'यस्कादिभ्यो गोत्रे' इतिप्रकरणविहितलुक एवाऽयमलुक्' इति ख. पाठः ।

३ 'अत एव सूत्रे 'गोत्रे' इति चरितार्थम् । तेन कुवल्याः फलं कुवलम् । तत्-सम्बन्ध्यवयव इत्यर्थे 'कौवलमि'त्यादौ फलेलुकोऽलुक् न । अन्यथा मयट् स्यात्' इति ग. पाठः । ४ 'भाष्यादौ' इति ख. ग. घ. ङ. पाठः ।

५ 'तत्प्रौढिवादपरं बोध्यम् । 'भूम्नि प्राप्तस्य लुकः' इति प्रकृतसूत्रस्थभाष्य-विरोधात् । पुंवत्त्वेन ङीनो निवृत्तेरिव, स्त्रियां विहितस्य लुकोऽपि निवृत्तेः सूपपादत्वेनाऽलुगन्वेषणस्य व्यर्थत्वाच्च । 'भस्याऽढे' इति पुंवत्त्वं च 'प्रत्ययविधौ सिद्धमि'ति स्पष्टमेव प्रकृतभाष्यस्याप्यत्रैव तात्पर्यमित्यपि वक्तुम् । ध्वनितं च कैयटेन । एतेन 'वान्यस्मिन्सपिण्डे' इति सूत्रे गोत्रयुव-संज्ञयोः समावेशो' इति ग. ङ. पाठः ।

पुंवद्भावेन ङीन इव, लुकोऽपि निवृत्तेः । ध्वनितं च कैयटेन ।

यत्तु 'वाऽन्यस्मिन्सपिण्डे' इति सूत्रे 'गोत्रयुवसंज्ञयोः समावेशे, 'पीलाया अपत्यं पैलः', 'पीलाया वे'त्यण् । तस्याऽपत्यं युवा । 'अणो द्व्यच' इति फिञ् । तस्य 'पैलादिभ्यश्चे'ति लुक् । ततः 'पैलस्य च्छात्राः पैलीयाः'[1] इतीष्यते । अत्राऽपि 'गोत्रेऽलुगि'ति फिञोऽलुक्प्रसङ्गः । न च परत्वाद्यूनि लुक् । ततोऽपि परत्वेन 'फक्फिञोरि'ति विकल्पाऽऽपत्तौ, पक्षे फिञः श्रवणाऽऽपत्तिः । असमावेशे तु 'गोत्रेऽलुगि'त्यस्याऽप्राप्तौ, अन्तरङ्गत्वात्पैलादिलुकीष्टं सिद्ध्यती'त्युक्तम् । तत्तु[2] 'भूम्नि प्राप्तस्ये'त्यर्थस्य मूलमेव । अन्यथा समावेशे मध्येऽपवादन्यायेन द्वितीयाध्यायलुग्मात्रस्याऽयमलुक्स्यात् । असमावेशे तु युवलुको विषयेऽस्याऽप्राप्तौ, ईदृशाऽर्थोऽलाभ[3] इति तद्भावः ।

अत्र सूत्रे 'यूनि लुगि'ति सूत्रस्थयुवसाहचर्याद्गोत्रं पारिभाषिकमेवेति बोध्यम । नन्वेवं द्वितीये एव सूत्रं कर्त्तव्यमिति चेन्न । 'प्राग्दीव्यतीय' इति विषयलाभार्थमत्र पाठात् ।

आपत्यस्य । 'सूर्यतिष्ये'त्यतो 'य' इत्यनुवर्त्तते, 'हलस्तद्धितस्ये'त्यतो 'हल' इति च । तदाह—हलः परस्येत्यादि । आभीयत्वेन[4] 'यस्येति चे'त्यल्लोपाऽसिद्धत्वेऽपि, आरम्भसामर्थ्यादेकवर्णव्यवहिते प्रवृत्तिस्तद्बाधो वा ।

आपत्यस्येति किम् ? । साङ्काश्यकः । सङ्काशादिभ्यो भवाद्यर्थे ण्यः ।

---

१ 'पैलीयाः, 'पैलाः' इतीष्यते' इति ग. पाठः ।

२ 'तदपि प्रौढिवाद एव बोध्यम् । 'भूम्नि प्राप्तस्य लुगि'तिप्रकृतसूत्रस्थभाष्यविरोधात् । अस्यापत्याधिकारबहिर्भूतत्वेपि 'यूनि लुगि'ति सूत्रे युवग्रहणेन तत्कौण्डिन्यन्यायाद्युवाऽतिरिक्ताऽपत्यरूपगोत्रस्यैव 'गोत्रेऽलुगची'त्यत्र ग्रहणाच्च । नन्वेवं द्वितीये एव' ग. पाठः ।

३ 'ईदृशाऽर्थलाभ एव न स्यादिति तद्भावः' इति ख. पाठः ।

४ 'आभीयत्वेपि यस्येतिचेत्यल्लोपो नाऽसिद्धः । आरम्भसामर्थ्यात्' इति ग.पाठः ।

ततो योपधत्वाद्वुञ्। तद्धिते किम्?। 'गार्ग्यौ'। अनाती'ति किम्?। 'गार्ग्यायणः'। गर्गीयमिति। 'प्राक्क्रीताच्छः'।

यूनि लुक्। विवक्षिते इति। न चाऽत्र 'परे' इत्येव वक्तुमुचितम्। 'ग्लौचुकायन' इत्यत्र छस्याऽऽपत्तेः। अकृतव्यूहपरिभाषा तु नास्त्येवेति निरूपितम्।

वक्ष्यमाण इति। 'प्राचामवृद्धादि'त्यनेने'ति शेषः। अजादौ किम्?। 'ग्लौचुकायनरूप्यम्'। प्राग्दीव्यतीये किम्?। 'ग्लौचुकायनीयम्'। हिते छः।

पैलादि। 'ण्यक्षत्रियार्ष'त्यतो 'यूनि लुगि'त्यनुवर्त्तते। तदाह—एभ्यो युवेति।

इञः प्राचाम्। इञन्ताद्युवप्रत्ययस्य गोत्राऽर्थकादेव सम्भव इत्याशयेनाऽऽह—गोत्रे य इति। तच्चेदिति। 'प्राचाम्'ग्रहणं न विकल्पाऽर्थम्, व्याख्यानादिति भावः।

न तौल्वलि। तौल्वल्यादय इञन्ताः।

फक्फि। 'अनन्तरस्ये'ति न्यायात् पैलादिलुको नाऽयं बाधक इत्याशयेनाह—यूनि लुगितीति। न च वेत्यधिकारादेव सिद्धेऽन्यतरस्याङ्ग्रहणं व्यर्थम्। 'यूनि लुगि'त्यत्र तदनुपस्थितिज्ञापनाऽर्थत्वात्।

---

१ 'तद्धितेति किम्?। गार्ग्ययोः' इति ग. घ. पाठः।

२ 'नचैवं 'ग्लौचुकायन' इत्यत्र छस्य प्राप्तिः। वृद्धत्वस्य विनाशोन्मुखत्वादिति वाच्यम्। अर्थाधिकारस्योचितत्वादित्याहुः' इति ग. घ. पाठः।

३ इतोऽग्रे—'न च वृद्धत्वस्य विनाशोन्मुखत्वान्न दोषः। स्वकृतनिमित्तविघातस्य स्वप्रवृत्त्यविघातकत्वादित्याहुः' इति ख. पाठः।

४ इतोऽग्रे—इह 'द्विगोर्लुगनपत्ये' 'अचि यूनि' 'फक्फिञोरन्यतरस्याम्' 'गोत्रे ने'ति सूत्रयितुमुचितम्। तथा च लुगलुक्ग्रहणं न कार्यमि'त्याहुः। अत्र वदन्ति 'एवं हि 'द्विरथ' इत्यत्र यतो लुगनापत्तिरिति' इति ख. ग. पाठः।

५ 'द्विगोर्लुगित्यादौ तदसम्बन्धज्ञापनार्थम्' इति लघुशेखरे पाठः। 'लुगलुग्विधौ तदनुपस्थितिज्ञापनार्थत्वात्' इति ख. ग. पाठः।

कात्यायनस्येति । 'कत'शब्दात् गर्गादियञन्तात् 'यञिञोश्चे'तिफक् । कातीया इति । 'आपत्यस्ये'ति यलोपः ।

तस्याऽपत्यम् । 'तत्सम्बन्धि अपत्यमि'त्यर्थे प्रातिपदिकादणादय' इति वाच्योऽर्थः । तत्र 'कस्मात्प्रत्यय' इत्यपेक्षायां 'समर्थानां मध्ये सूत्रे प्रथमोच्चारितादि'त्युपतिष्ठते । 'घकालतनेष्वि'ति ज्ञापकेन स्वाऽर्थे परिसमाप्तस्यैव चाऽर्थान्तराऽन्वयेन, सुबन्तात्तद्धितोत्पत्तेः, प्रातिपदिकादिपदं तत्प्रकृतिके लाक्षणिकम् । व्यवहितं वा ततः परत्वम् , सामर्थ्यात् । सुप् च 'तस्ये'तिपदे उपस्थितषष्ठ्येव । तत्फलितमाह—षष्ठ्यन्तादिति । 'तस्ये'तिसामान्यशब्दोऽपि सर्वविशेषप्रकृतिबोधक इत्युपग्वादिभ्य उत्पत्तिर्न विरुद्धेति भावः । एवमन्यत्राऽप्यूह्यम । स्पष्टा चेयं रीतिः 'तेन तुल्यमि'त्यत्र कैयटे ।

ननु 'उपगु-अ' इति स्थिते ओर्गुणात्परत्वात् 'अचो ञ्णिती'ति वृद्धिः स्यात् । 'पिचव्या'दौ गुणः साऽवकाशः । गुणाऽवादेशयोरुपधावृद्धिप्रसङ्गाच्चेत्यत आह—आदिवृद्धिरिति । परत्वादिति भावः ।

अन्त्योपधावृद्ध्योरवकाशः—'गौः' 'पाचकः' । आदिवृद्धेरवकाशः—सुश्रुत्–'सौश्रुतः' । औपगव–जागतादावुभयप्रसङ्गे परत्वादादिवृद्धिरेव । न च पुनःप्रसङ्गविज्ञानम् । सकृद्गतिन्यायाऽऽश्रयणात् ।

अत्र च ज्ञापकम्–अनुशतिकादिषु पुष्करसच्छब्दपाठः । स चोभयपदवृद्ध्यर्थः । अन्यथा उपधावृद्ध्या सिद्धे,[1] तद्वैयर्थ्यं स्पष्टमेव । न च समानकालप्राप्तिकोपधावृद्धिबाधेऽपि, गुणे कृते उत्तरकालप्राप्तोपधावृद्धेर्बाधे न मानम् । 'अङ्गकार्ये कृते पुनर्नाऽङ्गकार्यमि'ति निषेधेन गुणे कृते उपधावृद्ध्यप्राप्तेः । न च 'पुष्करसदा चरती'त्यर्थे ठकि 'पौष्करसादिकः' इत्येतदर्थमनुशतिकाऽऽदिपाठः । न च तत्रोपधावृद्धिः, ञ्णित्येव प्रवृत्तेरिति वाच्यम् । अनभिधानाट्ठक एवाऽनुत्पत्तेरि'ति कैयटः ।

---

१ इतोग्रे—'सामान्याऽपेक्षज्ञापनाद्वा' इति ग. घ. पाठः ।

[1]परे तु 'द्वयोः सावकाशयोरेकत्र 'वृक्षेभ्य' इत्यादौ दीर्घैत्वयोरिव एकस्य द्विकार्ययोगाऽसम्भवे एव विप्रतिषेध' इति 'इको गुणवृद्धी'इत्यादि-भाष्येषु स्पष्टम्। एवञ्च प्रकृते न तस्य विषयः। अत एवाऽत्र भाष्ये 'पुष्कर-सच्छब्दपाठः 'अचामादिवृद्धिविषयेऽन्त्योपधावृद्धिर्न भवती'त्यर्थे ज्ञापक इत्युक्तम्। 'विषये' इत्युक्ते 'व्यसोर्भावा वैयसवम्' 'व्यापदि भवं वैयापदम्' इत्यादौ न दोषः। तत्राऽपि वृद्धिप्राप्त्या तद्विषयसत्त्वात्। ऐज्विधायकेन निषेध इत्यन्यत्। किञ्च न हि परत्वेन शास्त्रप्रवृत्तौ, तत्र सकृद्गतिन्याया-ऽऽश्रयणे वा ज्ञापकाऽपेक्षेति, तदुपन्यासो भाष्यकृतोऽसङ्गतः स्यात्। न हि 'तिसृणामि'त्यत्र त्रयाऽऽदेशं बाधित्वा परत्वात्तिस्रादेशे, सकृद्गति-न्यायात्पुनरप्रवृत्तिरि'त्युक्त्वा, तत्र ज्ञापकमुपन्यस्तं भाष्यकृतेत्याहुः।

तस्येदमिति। सामान्ये सर्वविशेषाऽन्तर्भावादपत्येऽपि 'तस्येदमि'त्येव सिद्धत्वात्, 'तस्यापत्यमत इञि'त्येकयोग एव कार्यः, किमर्थो योगविभाग' इति प्रश्नः। परिहरति—बाधनार्थमिति। 'भानवाऽऽदौ छप्रत्ययस्ये'ति शेषः। नन्वपत्यादिचतुरर्थीपर्यन्ताऽन्यरूपे शेषे विहितश्छः कथमपत्ये स्यादित्यत आह–उत्सर्ग इति। योगविभागाऽभावे प्रकृतिविशेषसम्बद्धा-ऽन्याऽपत्याऽर्थस्य शेषत्वमित्यर्थः। योगविभागे तु अणादिविधावपत्यत्वेना-ऽपत्यस्योपयोगान्न शेषत्वमिति, छस्याऽप्राप्तिरेवाऽत्र बाधः। इदन्त्वेना-ऽपत्यन्तु शेष एवेति, तेन रूपेण बाधे 'दाशरथाये'त्यादावणभवत्येवेति भावः। प्रयोजनमाह–वृद्धानीति।[2]

कृतसन्धेः किमिति। अन्तरङ्गत्वात्सन्ध्युत्तरमेव प्रत्ययो भविष्यतीति, अधिकारसूत्रस्थं 'समर्थ'ग्रहणं किमर्थमिति प्रश्नः। [3]अकृतव्यूहपरिभाषया-

---

१ 'परे तु' इत्यारभ्य 'भाष्यकृतेत्याहुः' इत्यन्तः क. पाठः, ख. ग. घ. ङ. नास्ति।

२ 'वृद्धानीति। न च शाब्दबोधे विशेषस्य स्पष्टत्वेनाऽप्रयोजकोऽयं विचार इति वाच्यम्, शब्दाऽनुशासने शब्दकृतविशेषस्याऽऽवश्यकत्वात्, त्यदादीनां तत्तत्प्रकारकबोधजनकत्वमिति दोषाऽभावाच्च' इति ख. ग. घ. ङ. पाठः।

३ 'अन्तरङ्गपरिभाषाऽपवादकाऽकृतव्यूहपरिभाषया' इति ग. घ. पाठः।

ऽकृतसन्धेरेव स्यादित्याह—[1]अकृतेति । अस्ति चाऽत्र दीर्घस्य वृद्धौ, सवर्णत्वरूपस्य दीर्घनिमित्तस्य विनाशः । अकृतव्यूहपरिभाषायाश्च 'समर्थ'ग्रहणमेव [2]ज्ञापकमित्यभिमानः ।

वस्तुतोऽन्तरङ्गन्यायलब्धार्थोऽनुवाद एव सूत्रे 'समर्थ'ग्रहणम् । पदस्य विभज्याऽन्वाख्याने 'सु-उत्थित इ सु' इति स्थिते परत्वादादिवृद्धावनिष्टवारणाऽर्थं हि तत् । एतदेवाऽभिप्रेत्य विप्रतिषेधसूत्रे भाष्ये 'अन्तरङ्गं बलीय' इत्यस्य 'वैक्षमाणिरि'त्युदाहरणमुक्तम् ।

यद्वा वार्णपरिभाषया वृद्धिः प्राप्ता, तद्वारणाय तत् ।

'विषुण' इत्यादावकृतसन्धेरपि प्रत्ययदर्शनेऽन्यत्रापि तथेति शङ्कावारणायेदमि'त्यन्ये । समर्थत्वं च ङ्याप्प्रातिपदिकाऽऽदिरूपविभक्तिप्राग्भागे एव । ननु ङ्याबंशे एकादेशाऽऽदिप्रवृत्तावप्रवृत्तौ च को विशेष इति चेत्, शालीयादावेकादेशाऽप्रवृत्तौ आकारलोपे, अकारस्य श्रवणप्रसङ्गः । न च 'श्रविष्ठासु जातः श्रविष्ठ' इत्यादौ कृतैकाऽऽदेशस्य

---

१ 'अकृतेति । न चाऽत्रैकाऽऽदेशप्रवृत्तिसमये वृद्धेरप्राप्तत्वेन, एकादेशे कृते, आदेशे वृद्धेः प्राप्तत्वेऽपि, तन्निमित्तविनाशाऽभावेन, कथमत्र सेति वाच्यम्, निमित्तविनाशसम्भावनाया एव परिभाषाप्रवृत्तौ निमित्तत्वात् । सा चाऽत्रास्त्येव, 'यदि दीर्घो न स्यात्तदा वृद्ध्या निमित्तविघातः स्यादिती'त्याहुः ।

'अन्तरङ्गानपी'ति न्यायस्त्वकृतव्यूहपरिभाषान्तर्गत एवेत्युक्तं प्राक् । प्रत्यासत्त्या लुकूस्थानिभूतप्रत्ययनिमित्ताऽन्तरङ्गाणामेव तया बाधेनेहाऽप्रवृत्तेश्च । अकृतव्यूहपरिभाषायां च समर्थग्रहणमेव ज्ञापकम्' इति ख. ग. घ. ङ. पाठः ।

२ 'ज्ञापकम् । अत एव धर्मिग्राहकमानादस्या बहिरङ्गकृतनिमित्तविनाशे एव प्रवृत्तिः । सामर्थ्यं च परिनिष्ठितत्वम् । तच्च नित्यविध्युद्देश्यतावच्छेदकाऽनाक्रान्तत्वम् । 'कृतसन्धेरि'ति सन्धिपदं तु प्रकृताभिप्रायेण । परिनिष्ठितत्वं च ङ्याप्प्रातिपदिकादिरूपविभक्तिप्राग्भागे एवं । ननु ङ्याबंशे' इति ग. घ. पाठः ।

टापः पराऽऽदिवद्भावेन 'लुक्तद्धिते'ति लुकि, हलन्तत्वत्त्रणाऽऽपत्तिः। 'अन्तरङ्गानपी'तिन्यायेनाऽदोषात् । तद्धितोऽपि तद्बलादेव तद्विषये परिनिष्ठितत्वाऽनपेक्ष इत्याहुः ।

न तु सुब्विशिष्टे तत्त्वम्[2] । 'अश्विमानणि'त्यादौ 'अश्वीमानि'-त्याद्यापत्तेः । अत एव 'ङ्याप्प्रातिपदिकादि'त्यधिकारश्चरिताऽर्थः ।

वस्त्रमुपगोरिति । यद्यपीदं 'तत्सम्बन्ध्यपत्यमि'त्यर्थे प्रत्यय' इत्यर्थेन प्रत्यासत्त्या[3] वारयितुं शक्यम्, तथाऽपि 'ऋद्धस्य औपगवः' 'औपगवो देवदत्तस्य चे'त्यादिवारणाय समर्थपरिभाषाप्रवृत्तिरावश्यकीति तत्त्वम्[4] ।

षष्ठ्यर्थे इति । 'उपगुरपत्यमस्य देवदत्तस्य' इत्यर्थे-'औपगवो देवदत्त' इति मा भूदित्यर्थः[5] । ननु यत्रोत्सर्गाऽपवादौ महाविभाषया विकल्प्येते, तत्राऽपवादेन मुक्ते उत्सर्गाऽप्रवृत्तेः 'पारेमध्ये'इतिसूत्रस्थ—'वा'ग्रहणेन ज्ञापितत्वात्समासस्य नित्यं तद्धितो बाधकः स्यात् । न च 'षष्ठी'ति-

१ इतोऽग्रे—[1]तद्धितकृतनिमित्तविनाशेन प्राप्ताऽकृतव्यूहा इत्यादेः 'समर्थ'ग्रहणेन प्रत्यासत्तिन्यायाद्बाधेऽपि, स्त्रीप्रत्ययस्थानिकलुक्कृतनिमित्तविनाशेन[2] प्राप्ता-ऽकृते'त्यादीनां बाधे मानाऽभावेन, एकादेशाऽप्रवृत्तेः । न च लुक्यपि स्थानिवत्त्वेन निमित्तस्य सत्त्वान्न निमित्तविनाशः । पूर्वस्यैव विधौ स्थानि-वत्त्वादित्याहुः' इति ख. ग. घ. ङ. पाठः ।

२ 'परिनिष्ठितत्वम्' इति ग. घ. पाठः ।

३ 'प्रत्यासत्तिन्यायेन' इति ख. ग. घ. ङ. पाठः ।

४ 'अवश्यिकेति तत्त्वम्' इति ख. ग. घ. ङ. पाठः ।

५ इतोऽग्रे—'सामर्थ्यं च प्रकृतिप्रत्ययाऽर्थयोः परस्परं बोध्यम्' इति ग. घ. पाठः ।

1 'तद्धितनिमित्तप्राप्ताऽकृतव्यूहा इत्यादेः' इति ग. पाठः ।

2 'लुङ्निमित्तप्राप्ताऽकृतेत्यादीनाम्' इति ग. पाठः ।

समासविधानं व्यर्थम्, अन्ततस्तद्विषये 'तस्येदमि'त्यस्य प्राप्तेरिति[1] वाच्यम् । अनन्तराऽऽदिपदैस्तस्य चारितार्थ्यात्[2] । अनभिधानेन हि तत्र तद्धिताऽभावस्य भाष्ये स्पष्टमुक्तत्वादित्यत आह—दैवयज्ञीति । इदं च 'द्वितीयतृतीये'ति सूत्रे भाष्ये स्पष्टम् । ( जातित्वादिति । अत्र यद्वक्तव्यं 'तज्जातेरस्त्री'त्यत्रोक्तम् ) । 'तस्याऽपत्यमि'त्यादौ लिङ्गवचने अविवक्षिते इति बोध्यम् । औत्स इति । उत्सः-प्रस्रवणम् । तस्याऽपत्येन योगस्तु 'गाङ्गेयो भीष्म'इतिवदित्याहुः ।

अपत्यम् । यद्यपि[3] ऋष्यपत्यमात्रं लोके गोत्रम्, तथाऽपि प्रवराऽध्याया-ऽप्रसिद्धस्याऽपि संज्ञाऽर्थमिदम् ।

नन्वपत्यग्रहणं व्यर्थम्, पौत्रादेरपत्यत्वाऽव्यभिचारादत आह—अपत्यत्वेन विवक्षितमिति । तेन पौत्रप्रभृतेस्तत्तद्रूपेण, इदन्त्वेन वा विवक्षायां न गोत्रसंज्ञा । 'पौत्रप्रभृती'[4]ति तद्भिन्नवारणाऽर्थम् ।

पौत्राऽपत्यशब्दयोः ससम्बन्धिकतया यदीयं पौत्रप्रभृत्यपत्यं, तं प्रत्येव तस्य गोत्रत्वमित्यङ्गिरसः पौत्रे गर्गस्याऽनन्तरे वाच्ये न गर्गशब्दाद्यञ् ।

---

१ 'प्राप्तेरिति वाच्यम् । बोधे विशेषात्' इति ग. घ. पाठः ।

२ 'चारितार्थ्याच्च' इति ग. घ. पाठः ।

३ 'यद्यपि ऋष्यपत्यमात्रं लोके गोत्रं, तथापि नियमार्थेतत्सूत्रम्—'अस्मच्छास्त्रे इदमेव गोत्रत्वेन व्यवहार्य'मिति'.इति क. कुण्डलितः ख. पाठः ।

४ 'पौत्रप्रभृतिग्रहणन्तु पौत्रप्रभृतिभिन्नवारणाऽर्थम्' इति ख. ग. घ. ङ. पाठः ।

इतोऽग्रे—'न चैवमपि अङ्गिरस. पौत्रे गर्गस्यानन्तरेऽतिप्रसङ्गः । एवं च तस्मिन् गर्गशब्दाद्यञ् स्यादिति वाच्यम् । पौत्रशब्दस्य[1] ससम्बन्धिकतया यदीयं पौत्रप्रभृति अपत्यं, तं प्रत्येव तस्य गोत्रसंज्ञकत्वात् ।

नचैवमपि 'तस्यापत्यमि'त्यपत्यशब्दाऽनुवृत्त्यैव सिद्धे पुनरपत्य-ग्रहणवैयर्थ्यम् । उत्तरसूत्रे पौत्रप्रभृतेर्यदपत्यमिति षष्ठ्या विपरिणामो यथा स्यादित्यर्थं तत्सत्त्वादित्याहुः ।

---

1 'पौत्रशब्दस्य तद्भिन्नवारणार्थत्वात्' इति ख. पाठः ।

नन्वेवं पौत्रपर-गर्गोऽपत्यादिशब्द-वाच्यस्याऽपि गोत्रसंज्ञाऽऽपत्तौ ततो

ननु प्रथमाऽध्याये संज्ञाप्रकरणे एव सूत्रे कर्त्तव्येऽत्र पाठोऽपत्याऽधिकार-विहितप्रत्ययवाच्यस्यैव संज्ञाऽर्थः। अत एव 'गर्गोऽपत्यस्य तृतीयादेर-पत्यमि'ति विवक्षायां 'गर्गापत्य'शब्दान्न यूनि प्रत्ययः[1]। तेन तद्रूपेण, इदन्तया वा विवक्षायां न संज्ञेति व्यर्थमपत्यग्रहणमिति चेन्न। उत्तरसूत्रे 'पौत्रप्रभृतेर्यदपत्यमि'त्यर्थलाभाऽर्थं तदावश्यकत्वात्। न चेदमपि 'तस्या-ऽपत्यमि'त्यपत्यशब्दाऽनुवृत्त्या सिद्धम्। तावताऽपि सामानाधिकरण्यस्यैवा-ऽऽपत्तेः। प्रत्ययवाच्यता चाऽपत्यत्वेन, गोत्रत्वेन च। 'गोत्रे कुञ्जादिभ्य' इत्यादावपि 'तस्याऽपत्यमि'त्येतस्य सम्बन्धात्, 'गोत्रे तत्सम्बन्ध्यपत्यत्वेन विवक्षिते प्रत्यय' इत्येवार्थात्। अपत्यत्वेन विवक्षितस्यैव गोत्रसंज्ञया 'गोत्रे' इत्यनेन तद्रूपेण बोधे एव साधुत्वोक्तेश्च। ध्वनितं चेदम् 'एको गोत्रे' इत्यत्र भाष्ये। अत एव 'गर्गस्याऽपत्यं गोत्रमि'त्यर्थप्रदर्शनं कुर्वन्ति वृद्धाः। एवं चाऽपत्यत्वेन, गोत्रत्वेन च पौत्रप्रभृत्यपत्यभानं शास्त्रवासना-वतामिति बोध्यम्' इति क. कुण्डलितः, ख. ग. घ. ङ. पाठः।

---

1 इतोऽग्रे—'न च 'ते तद्राजा' इत्यत्र तच्छब्देनाऽञादीनामेव परामर्शाऽर्थं मध्ये एतत्काण्डमिति वाच्यम्। 'तद्राजा' इत्यधिकारसूत्रेणेवेष्टसिद्धेः। प्रत्यय-वाच्यता चाऽपत्यत्वेनैव। 'गोत्रे कुञ्जादिभ्य' इत्यादावपि 'तस्याऽपत्य-मि'त्येतस्य सम्बन्धात् 'गोत्रे तत्सम्बन्ध्यपत्यत्वेन विवक्षिते प्रत्यय' इत्ये-वाऽर्थात्। ध्वनितं चेदं 'यूनि लुक्'सूत्रे भाष्ये। अत एव समर्थविभक्ति-लाभः। अग्रे मण्डूकाऽनुवृत्तिश्च न। एवञ्चाऽपत्यग्रहणानुवृत्तिसामर्थ्यादेवोत्तरत्र विभक्तिविपरिणामे सिद्धे व्यर्थमपत्यग्रहणमिति चेन्न। अपत्याऽधिकारादन्यत्रा-ऽनुपस्थित्यर्थं तत्। 'यत्राऽपत्यशब्दसहितो गोत्रशब्दस्तत्र तदुपस्थितिरि'-त्यर्थात्। तेनाऽन्यत्र लौकिकगोत्रग्रहणमिति वदन्ति।

लौकिकगोत्रत्वं च लोकेऽपत्यत्वेन बोधजनकप्रत्ययान्तत्वम्। अत एव मनुष्यशब्दात् 'गोत्रचरणादि'ति वुञ् न। तस्य जातिप्रकारकबोधजनकत्वात्। पौत्रप्रभृतीति। व्यवहिताऽपत्योपलक्षणम्' इति ग. पाठः।

यूनि प्रत्ययाऽऽपत्तिः। 'प्रत्ययवाच्यतया विवक्षितस्यैव गोत्रसञ्ज्ञे' त्यर्थस्तु न शब्दमर्यादालभ्य इति चेन्न। प्रथमाध्याये संज्ञाप्रकरणे एव सूत्रे कर्त्तव्येऽत्र करणेन 'समर्थानां प्रथमादि'त्यनुवर्त्य, विभक्तिविपरिणामेन 'समर्थानां प्रथमस्य यत्पौत्रप्रभृति, तद्गोत्रमि'त्यर्थः। समर्थानां प्रथमश्च प्रत्ययप्रकृतिरिति, 'प्रत्ययवाच्यत्वेन विवक्षितमेव गोत्रमि'त्यर्थलाभात्। प्रत्ययश्च प्रकरणादपत्याऽधिकारस्थ एवेति न दोषः। स्पष्टं चेदं भाष्ये।

न चाऽत्र करणं 'ते तद्राजा'इत्यत्राऽञादीनामेव परामर्शाऽर्थमिति वाच्यम्। 'तद्राजे'ति महासञ्ज्ञया तत्र तेषामेव सम्बन्धात्, व्याख्यानाच्च।

न च तत्तद्रूपेण, इदन्तया वा तस्याऽपत्याधिकारस्थप्रत्ययवाच्यत्वाऽभावेन, तत्त्वेन विवक्षायां सञ्ज्ञाऽभावे सिद्धेऽपत्यग्रहणं व्यर्थमिति वाच्यम्। 'गोत्रप्रत्ययान्तेभ्योऽप्यपत्यत्वेनैव बोध' इति ध्वननाऽर्थं तत्सत्त्वात्। 'गोत्रे कुञ्जादिभ्य' इत्यादेरपि 'गोत्रेऽपत्यत्वेन विवक्षिते प्रत्यय' इत्यर्थं 'तस्याऽपत्य'मित्यस्य सम्बन्धात्। अपत्यत्वेन विवक्षितस्यैव गोत्रत्वाच्च। अत एव 'गर्गस्याऽपत्यं गोत्रमि'त्यर्थप्रदर्शनं कुर्वन्ति वृद्धाः। 'अपत्यत्वेन विवक्षितं पौत्रप्रभृती'ति तदर्थः। ध्वनितं चेदम् 'एको गोत्रे' इत्यत्र भाष्ये। 'पौत्रप्रभृती'तिव्यवहिताऽपत्योपलक्षणम्, तेन 'पौत्रीप्रभृत्यपत्यानामपि गोत्रत्वमि'ति स्पष्टं 'गोत्रस्त्रिया' इति सूत्रे भाष्यकैयटयोः।

जीवति तु। पित्रादिरुत्पादकप्रबन्धो वंशः। तत्र[1] भवो-वंश्यः। दिगादित्वाद्यत्। अत एव पितृव्यमातुलादीनां न वंश्यत्वम्, अपत्योत्पादकप्रबन्धेऽप्रवेशात्। तदाह—पित्रादाविति। 'पौत्रप्रभृती'त्यनुवृत्तं षष्ठ्या विपरिणम्यते,[2] व्याख्यानादित्याह—पौत्रादेरिति। 'तु'शब्दो 'युवे'त्यनन्तरम्, एवकाराऽर्थो बोध्यः। तदाह—युवसंज्ञमेवेति। समावेशो तु 'औपगवस्य गोत्रस्यापत्यमौपगविरि'त्यादौ 'एको गोत्रे' इतिनियमादिव्

---

१ 'तत्र भवं वंश्यम्' इति ख. ङ. पाठः।

२ 'विपरिणम्यते। उक्तयुक्तेः, व्याख्यानाच्चं' इति ख. ग. घ. ङ. पाठः।

न स्यात्। न च 'गोत्राद्यूनी'त्यनेनाऽप्राप्तविधानान्न दोषः। एवमपि गर्गस्य चतुर्थे जीवद्वंश्ये विवक्षिते 'गार्ग्य' इत्यस्याऽप्यापत्तेः। 'गार्ग्यायण' इत्येवेष्यते। न च 'गोत्राद्यूनी'त्यावर्त्त्य नियमोऽपि व्याख्येय इति न दोषः। 'तु'शब्दस्यैव लघुत्वात्।

भ्रातरि च। इदं भ्रातुरवंश्यत्वादारब्धम्। बहुषु पुत्रेष्वेतदुपपन्नं भवति,-'अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयानि'त्याद्यन्तवत्सूत्रस्थ-भाष्यप्रयोगे बहूनां निर्धारणेऽपि ईयसुन्दर्शनाद्विभागमात्रमीयसुनादि-निमित्तम्। द्वित्वबहुत्वादि तु सूत्रेऽविवक्षितम्। एतदेव ध्वनयन् वृत्ता-विष्ठनं प्रयुङ्क्ते—ज्येष्ठे भ्रातरीति। अत एव बहुष्वपि पुत्रेषु, मृतेऽपि पित्रादौ, अग्रजस्य जीवनात् 'द्वौ गार्ग्यायणावि'ति प्रयोगोपपत्तिः। 'गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् गार्ग्यायण' इति चोपपद्यते।

---

१ 'यूनि लु'गिति आद्ययुवप्रत्ययलुकि, अणन्तादिञेवेति, न युवमालायां प्रत्ययमालेति वाच्यम्। तुशब्दस्यैव लघुत्वात्' इति ग. पाठः।

२ इतोऽग्रे-'ननु 'ज्यायसो'त्यत्र ईयसुनो द्वयोर्मध्ये विभागविवक्षायामेव विधानाद्यत्र गार्ग्यस्य त्रयः पुत्रास्तत्र तृतीयस्य न युवत्वं, बहुषु विभागविवक्षायाम्! तत्राऽपि द्वयोरेव तद्विवक्षायान्तु भवत्येवेति, विकल्पः फलितः। पुत्रद्वये तु नित्यमेव संज्ञा। अत एव वृत्तिकृतोक्तं-'गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् गार्ग्यायणो, मृतेऽपि गार्ग्यादावि'ति। एवञ्च वृत्तौ 'ज्येष्ठे भ्रातरी'तीष्ठनः प्रयोगोऽयुक्तः। इष्ठनो बहूनां निर्धारणे एव प्रवृत्तेः। न चाऽत्र विभागमात्रं विवक्षितं, न द्वित्वबहुत्वादिकमिति वाच्यम्। एवमपि क्वचिदिष्ठनः, क्वचिदीयसुनः प्रयोगे बीजाऽनापत्तेरिति चेन्न। 'बहुषु पुत्रेष्वेतदुपपन्नं भवत्ययं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयानि'त्याद्यन्तवत्सूत्रस्थभाष्यप्रयोगवदुपपत्तेः। अत एवैतत्पुत्रेषु, मृते पित्रादौ, अग्रजस्य जीवनात् 'द्वौ गार्ग्यायणावि'ति प्रयोगोपपत्तिः। एवञ्च सूत्रवृत्त्योः 'तरप्तमपौ घ' इति ज्ञापकसिद्धौ, अत्यन्तस्वार्थिकाविष्ठन्नीयसुनावित्याहुः' इति ग. घ. पाठः।

वाऽन्यस्मिन्सपिण्डे । येषां जनने, मरणे च दशाऽहं कुलाऽन्नं न भुज्यते, दानप्रतिग्रहादयश्च निवर्त्तन्ते, ते सपिण्डाः । ते च सप्तपुरुषाऽवधयः । यद्यपि मातृवंशेऽपि पञ्चपुरुषं सापिण्ड्यं विवाहाऽऽदिप्रतिबन्धकं, तथाऽपि 'भ्रातुरन्यस्मिन्त्सपिण्डे' इति पर्युदासात्पूर्वमेव गृह्यते । स्पष्टं चेदं वृत्तौ । 'मातृसापिण्ड्यमपि गृह्यते' इत्यन्ये । अन्यस्मिन्निति किम् ?। भ्रातृरूपसपिण्डे जीवति, जीवतः परत्वाद्विकल्पः स्यात्, स मा भूदिति ।

ननु भ्रातुः स्थानत उत्कृष्टत्वाऽभावात्स्थविरतर इत्यनेनैव व्यावृत्तिसिद्धावन्यस्मिन्निति व्यर्थमिति चेन्न । अन्यस्मिन्नेव सपिण्डे यथा स्यात् । तेन भ्रातृसहितेऽन्यसपिण्डेऽपि जीवति, जीवतः पूर्वेण नित्यमेव यथा स्यादिति तत् । ध्वनितं चेदं भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम् ।

'जीवती'त्यनुवर्त्तमाने 'जीवती'ति व्यर्थमित्यत आह—एकमिति । तिङन्तं तदिति भावः । द्वितीयमिति । 'जीवती'ति शत्रन्तात्सप्तमीति भावः । ननु 'ज्यायसी'त्यनुवृत्त्यैव सिद्धे तरबन्तं व्यर्थमत आह—तरप्निर्देश इति । तरबन्तनिर्देश इत्यर्थः । उभयोरिति । स्थानवयसोरित्यर्थः । स्थानम् = पदम्, पितृव्यत्वादिकम् । तत्तद्रूपेणैव तेषां पूज्यत्वात् ।

---

१ इतोऽग्रे—'अन्यस्मिन्नि'त्यस्याऽभावे हि 'भ्रातरी'त्यनुवृत्तौ प्राप्तविभाषेयं स्यात् । पूर्वसूत्रन्तु अस्थविरतरार्थे, मृतस्य नित्यसंज्ञार्थं च स्यात् । स्थविरतरत्वं चाऽत्र विद्यादिकृतोत्कर्षरूपं स्यात् । न च सपिण्डग्रहणसामर्थ्यादेव 'भ्रातरी'त्यस्य निवृत्तिः सिद्धेति वाच्यम् । एवमपि भ्रातृरूपसपिण्डे जीवति, जीवतः परत्वाद्विकल्पः स्यात्स माभूदिति तत् । ननु भ्रातुः स्थानत उत्कृष्टत्वाऽभावात्स्थविरतर इत्यनेनैव व्यावृत्तिसिद्धावन्यस्मिन्निति व्यर्थमिति चेन्न । अन्यस्मिन्नेव सपिण्डे यथा स्यात् । तेन भ्रातृसहितेऽन्यसपिण्डेऽपि जीवति, जीवतः पूर्वेण नित्यमेव यथा स्यादिति तत्' इति ग. घ. पाठः ।

२ 'एकमिति । जीवतीति शत्रन्तात्सप्तमीति भावः । द्वितीयमिति । तिङन्तं तदिति भावः' इति ग. घ. पाठः ।

तदाह-स्थानेन, वयसा चोत्कृष्ट इति। तथा च भाष्यम्-'स्थविरतर-ग्रहणं किमर्थम्। उभयतो विशिष्टे यथा स्यात्, स्थानतो, वयस्तश्चे'ति। ननु 'ज्यायसी'त्यनुवृत्त्यैवाऽर्थाधिकाराद्वयःप्रकर्षलाभे, स्थविरग्रहणमेव उभय-प्रकर्षलाभाऽर्थं भविष्यति, किं तरप्निर्देशेनेति चेन्न[1]। स्पष्टाऽर्थत्वात्।

मातामहभ्रातरीति। 'अविशेषान्मातृसापिण्ड्यमपि गृह्यते' इति मते इदम्। क्वचित्तु 'पितामहभ्रातरी'ति पाठः[2]। स्थानवयोन्यूने इति। स्थानन्यूनः-स्वज्येष्ठो भ्रातृपुत्रादिः। जीवतीति किमिति। सूत्रोपात्तम्, अनुवर्त्तमानं च किमर्थमिति प्रश्नः। मृते। सपिण्डे। मृतः। चतुर्थाऽऽदिः[3]। अन्यत्वे भ्रातुरेव प्रतियोगित्वेन ग्रहणाद्वंश्ये पित्रादौ जीवति, जीवत-श्चतुर्थादेः परत्वाद्विकल्पेनैव संज्ञा।

'वृद्धस्य चे'ति वार्त्तिकं 'जीवति तु वंश्ये युवे'ति सूत्रे भाष्ये पठितम्। 'यूनश्चे'ति तु 'अपत्यं पौत्रप्रभृती'त्यत्र। तत्र भवानिति। अनेन पूजा गम्यते। युवसंज्ञका हि प्रायेणाऽल्पवयसो[4], जीवद्वंश्यत्वेन तदधीनत्वादेव सुखिनश्चेत्यादि प्रसिद्धम्। तेन गोत्रभूतस्तृतीयोऽपि युवत्वेन पूजां मन्यते। तत्र युवसंज्ञाविधानसामर्थ्यात्स्वार्थे युवप्रत्यय एतद्विषये बोध्यः।

जाल्म इति। जीवद्वंश्येन हि वृद्धाऽधीनतया स्थेयम्। यस्तु वृद्धान-नादृत्य स्वातन्त्र्यं कुरुते, स एवमुच्यते।

एको गोत्रे। एकशब्दः सङ्ख्यावाची, प्रथमवाची वा। विशेष्योऽधि-

---

१ 'इति चेन्न। 'ज्यायसी'तिवत्स्वार्थे तरपः सत्त्वादित्याहुः' इति ख. ग. घ. ङ. पाठः।

२ इतोऽग्रे—'केवलभ्रातरी'ति पाठस्त्वपपाठः। संनिहितत्वात्पितामहभ्रातरीति वा तदर्थः' इति ग. घ. ङ. पाठः।

३ इतोऽग्रे—'अवंश्ये पितृव्यमातुलादौ जीवती'ति शेष' इति ग. घ. ङ. पाठः।

४ 'अल्पवयसो वृद्धनियन्त्रणात्समर्यादास्तदधीनत्वादेव' इति ग. घ. ङ. पाठः।

कारलब्धाऽपत्यप्रत्ययः, प्रकृतिभूतशब्दो वा। आद्ये-'एक एव प्रत्यय' इत्यर्थः। अन्त्ये-एकः = प्रथमः प्रकृतिभूतशब्द एव प्रत्ययं लभते इत्यर्थः। गोत्रे इति। अभिधित्सिते इत्यर्थः। एक एवेति। अत एवाऽनन्तराऽपत्यप्रत्ययान्तान्नाऽपत्यप्रत्ययः। तथा सति तादृगेक एव न कृतः स्यादिति। अपत्यग्रहणाऽनुवृत्तिस्तु अनन्तराऽपत्यप्रत्ययाऽन्तात् गोत्रप्रत्ययवारणाय। अन्यथा नियमस्य तुल्यजातीयताऽऽपत्त्या गोत्रप्रत्ययाऽन्तादेव गोत्रप्रत्ययो वार्येत।

औपगव इत्यादि। उपगोः अण्। गर्गादिभ्यो यञ्। नडादिभ्यः फक्। तत्तत्पितृनिरूपितमेवाऽपत्यत्वम्। 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे' इत्यमरात्। 'अपत्यं पौत्रप्रभृती'ति सामानाधिकरण्यन्तु गौणं यथा कथञ्चिन्नेयम्।

एवं चोपगोस्तृतीये वाच्ये औपगवादिञि, प्रत्ययद्वयपरम्पराऽनिष्टा प्राप्नोति, न तु कदा चिदपि 'औपगव' इत्यणप्रत्ययमात्रविशिष्टमिष्टं सिद्ध्यतीत्यस्याऽऽरम्भः। यद्यपि गर्गाऽपेक्षया तृतीये वाच्ये 'गर्गादिभ्यो यञि'त्यादेरारम्भसामर्थ्यात्परम्परयाऽप्यपत्याऽपत्यवत्सम्बन्धे प्रवृत्तिरिति, 'गर्गादिभ्यो यञि'त्यादिविषये इष्टं सिद्ध्यति, तथाऽपि गर्गादिञि, ततः प्रत्ययाऽन्तरे, द्वयोः प्रत्यययोः प्रयोगे, अनिष्टं प्राप्नोत्येव।

तदुक्तं भाष्ये—'पितर्यपत्ययुक्ते प्रत्ययान्तात्प्रतिषेधो वाच्यः। परमप्रकृतेश्चोत्पत्तिर्वक्तव्ये'ति। नन्वेवमपि मूलप्रकृत्युपगोस्तृतीये वाच्ये अप्राप्ताऽण्विध्यर्थमेवेदं स्यात्, न तु नियमाऽर्थमिति, कथमनेन प्रत्ययमालावारणमिति चेन्न। अस्य विधिमात्राऽर्थत्वे एकग्रहणवैयर्थ्याऽऽपत्तेः।

---

१ 'शब्द एव प्रत्ययं लभते इत्यर्थः। अत्र केचित्, तत्तत्पितृनिरूपितमेवाऽपत्यत्वमिति' इति ख. ग. घ. ङ. पाठः।

२ 'परम्परैवाऽनिष्टा' इति ख. ग. घ. ङ. पाठः।

३ 'कथमनेन प्रत्ययमालावारणम्। किञ्च नियमो वक्तमशक्यः। न च

'गोत्रे' इत्युक्त्यैव उपग्वादिभ्योऽणादिविधानेन त्वदिष्टसिद्धेः।

तस्मादत्र 'च्छत्रि'न्यायात् 'गोत्र'पदेन गोत्राऽगोत्रसमुदायस्य विवक्षा। तत्र युवा न गृह्यते। 'गोत्र'ग्रहणात्। 'एक'पदं च सामर्थ्यात् सावधारणम्। एवं च पुत्र एकः, पौत्रेऽपरः, तदपत्ये चाऽपर इति गोत्राऽगोत्रसमुदाये बहूनां प्रत्ययानां प्राप्तौ, एक एवाऽपत्यप्रत्यय' इति नियमेन, एकाऽभ्यनुज्ञाद्वारा परमप्रकृतेर्विधिरपि परम्पराऽपत्याऽपत्यवत्सम्बन्धे प्रवर्त्तत इत्यनुमीयते।

तथा च भाष्यम्—

'अपत्यं समुदायश्चेन्नियमोऽत्र समीक्षितः।
तस्मिन् सुबहवः प्राप्ता, नियमोऽस्य भविष्यति'॥ इति।

'अपत्यमि'त्यनेन सर्वमुपग्वादिपितृकम् अपत्यं समीक्षितमि'ति च।

यदि तु 'गोत्रे' इत्यनेन एकमेव गृह्यते, तदोत्पादयितुरेव एव प्रत्ययः प्राप्नोतीति, नियन्तव्याऽभावात्, यन्निरूपितं गोत्रत्वं ततः प्राप्त्यभावाच्च, नियमो नोपपद्यते इति, अपत्यपरम्परायां प्रत्ययमालाप्रसङ्गदोषः स्यादेव। न च 'गर्गादिभ्यो यञि'त्यादिविषय एव नियमः स्यात्। एवं हि 'गोत्रे कुञ्जादिभ्य' इत्युत्तरमेव 'एकश्चे'ति स्वरितत्वयुक्तं पठेत्। तस्मादत्र गुरुतरकरणसामर्थ्यात् 'तस्याऽपत्यमि'त्यस्याऽपि नियमः। स चोक्तरीत्येति तात्पर्यम्। यत्तु कैयटे 'गोत्र'पदेन गोत्रसमुदाय उच्यते' इति। तन्न। एवं हि

---

गोत्रापत्ये एक एवाऽपत्यप्रत्ययो, नाऽनेक इति नियमः। स्वपितृवाचकादेकस्मादेकस्मिन्नपत्ये एकप्रत्ययस्यैव प्रसङ्गेन, व्यावर्त्त्याऽभावादिति चेन्न' इति ग. घ. ङ. पाठः।

१ 'इत्युक्त्यैव प्रथमादित्यनुवृत्त्या उपग्वादिभ्योऽणादि' इति ग. घ. पाठः।

२ 'समुदायो विवक्षितः' इति ग. घ. पाठः।

३ 'बहूनां प्रत्ययानां प्राप्तौ गोत्राऽगोत्रसमुदाये एक एवाऽपत्यप्रत्ययः' इति ग. घ. पाठः।

गोत्रसमुदाये नानाप्रत्ययनिवारणेपि, तृतीये एकस्मिन्गोत्रेऽभिधेये प्रत्ययद्वयं न निवारितं स्यात्। न चैवम् 'एक' इति सूत्रमेवाऽस्तु। 'अपत्यमित्यर्थे षष्ठ्यन्तात्प्रत्ययो भवति, स च एक एव। अर्थात्समुदाये प्रतिपाद्ये' इत्यर्थः सामर्थ्यादेव [1]भविष्यतीति वाच्यम्। एवं हि गार्ग्यायणाऽसिद्ध्या 'गोत्राद्यूनी'त्यस्य विधित्वाऽऽपत्तौ, 'उपगोर्युवाऽपत्यमि'त्यर्थे 'औपगव' [2]इत्यस्य दुर्वारताऽऽपत्तेः। तदाह—गोत्रे स्वैकेति।

१ 'भविष्यति। स्पष्टं चेदं सूत्रशेषे भाष्ये' इति ख. ग. घ. ङ. पाठः।

२ 'औपगव' इत्यस्य दुर्वारताऽऽपत्तेः। इदमेवाऽभिप्रेत्य 'अथाऽपि गोत्रग्रहणं क्रियते' इत्युक्तं भाष्ये[1] इति वदन्ति। अपरे तु-'पङ्क्तिविंशती'ति सूत्रे भाष्यकृद्दर्शितया 'न पतन्त्यनेने'तिव्युत्पत्त्या पितामहाऽऽदिनिरूपितमपि अपत्यत्वम्। व्यवहितोऽपि पितामहादीनामुद्धर्तेति स्पष्टं जरत्कार्वाद्युपाख्यानेषु। 'अपत्यं पौत्रप्रभृती'ति सूत्रस्वरसाच्च, प्रकृतसूत्रभाष्याच्च। अत्र पक्षे उपगोरणा औपगवस्येष्टस्य सिद्धावपि, औपगवादिष्वपि स्यादतो नियमाऽर्थमेवेदम्।

अत्र 'गोत्र'शब्देन एकमेवोच्यते, न समुदाये लक्षणा। न च[2] चतुर्थे गोत्रे गार्ग्यशब्दादिनि अपि, तस्मिन्गोत्रे एक एव कृतो, न द्वौ, यन्तु तृतीये, न चतुर्थे इति [3]वाच्यम्। चतुर्थेन गार्ग्यस्येव गर्गस्यापि सम्बन्धेन, तन्मूलत्वात्तद्घटिताऽनेकप्रत्ययान्तप्रयोगप्राप्तौ सामर्थ्यान्नियमेन तद्वारणादित्याहुः। ('गोत्रे[4] बुबोधयिषिते एकाऽपत्यप्रत्ययघटित एव प्रयोगः साधु'रित्यर्थेनाऽदोषात्)। गोत्रे इति। अभिधित्सिते इत्यर्थः। एक एवेति। अत एवाऽनन्तराऽपत्यप्रत्ययान्तान्नाऽपत्यप्रत्ययः। तथा हि सति तादृगेक एव

1 इतोऽग्रे—'गोत्रपदेन युवापत्यं न गृह्यते इति, तस्य नियमार्थत्वमेवेति न दोषः। एतदर्थमेव च गोत्रग्रहणम्' इति ग. घ. पाठः।

2 'न च' इत्यस्य स्थाने 'एतेन' इति क. पाठः।

3 'वाच्यम्' इत्यस्य स्थाने 'परास्तम्' इति क. पाठः।

4 अयं पाठः क. ग. घ. नास्ति।

स्वम् = गोत्रम्। तदपेक्षया एकोनेत्यर्थः। यथा उपगोस्तृतीये वाच्येऽणिञौ। चतुर्थेऽण्-इञ्-फकस्त्रय इत्यादीत्याशयः। तत्र यद्यपि अण् इष्ट एव, तथाऽप्यनिष्टघटकत्वात्सोऽप्यनिष्टः। 'परम्परे'त्यस्य 'प्रसज्यते' इत्यनेनाऽन्वयः। परम्परैवेत्यर्थः। न तु औपगवादाविष्टसिद्धिरिति भावः।

ननु 'पङ्क्तिविंशती'तिसूत्रे 'न पतन्त्यनेने'ति व्युत्पत्त्या पितामहादिनिरूपितमपि अपत्यत्वम्। व्यवहितोऽपि पितामहादीनामुद्धर्त्तेति स्पष्टं जरत्कार्वाद्युपाख्यानेषु। 'अपत्यं पौत्रप्रभृती'ति सूत्रस्वरसाच्च। प्रकृतसूत्रभाष्याच्च। एकग्रहणसामर्थ्येन एकाऽभ्यनुज्ञाद्वारा विधेः परम्पराऽपत्याऽपत्यवत्सम्बन्धे प्रवृत्त्यनुमानाऽपेक्षया, 'पितामहादीनामप्यपत्यमि'त्यनुमानस्यैव युक्तत्वाच्च। किञ्च विधित्वे प्रत्ययान्तात्प्रत्ययप्रतिषेधो वक्तव्यः, नियमे उत्पत्तिर्वक्तव्या। एकेन वाक्येनोभयन्त्वलभ्यम्। किञ्च 'एकोऽपत्यप्रत्यये गोत्रो भवति, गोत्रसमुदाये वाच्ये, न तु तद्विषये गोत्रप्रत्यय' इत्येवाऽर्थः स्यादित्येकाऽभ्यनुज्ञैव दुर्लभा। एतदेवाऽभिप्रेत्य नियमोपपादनोत्तरम्–'इहोत्पादयितर्यपत्ययुक्ते गोत्रे प्रत्ययान्तात्प्रतिषेधो वक्तव्यः। परमप्रकृतेश्चोत्पत्तिर्वक्तव्ये'ति भाष्ये उक्तमित्यरुचेराह—यद्वेति।

---

न कृतः स्यादिति बोध्यम्। अपत्यग्रहणाऽनुवृत्तिस्त्वनन्तराऽपत्यप्रत्ययान्ताद्गोत्रप्रत्ययवारणाय। अन्यथा नियमस्य तुल्यजातीयताऽऽपत्त्या गोत्रप्रत्ययाऽन्तादेव गोत्रप्रत्ययो वार्येतेत्याहुः। औपगव इत्यादि। उपगोरण्। गर्गादिभ्यो यञ्। नडादिभ्यः फक्। प्रागुक्तमतद्वयाऽर्थं श्लोकाभ्यां सङ्गृह्णाति—गोत्रे स्वैकेति। स्वं = गोत्रं, तदपेक्षया एकोनेत्यर्थः। यथा उपगोस्तृतीये वाच्येऽणिञौ, चतुर्थेऽणिञ्फकस्त्रय इत्यादीत्याशयः। तत्र यद्यपि अण् इष्ट एव, तथाऽप्यनिष्टघटकत्वात्सोऽप्यनिष्ट इति बोध्यम्।

'परम्परे'त्यस्य 'प्रसज्यते' इत्यनेनाऽऽन्वयः। परम्परैवेत्यर्थः। न त्वौपगवादाविष्टसिद्धिरिति भावः। द्वितीयमते आह—यद्वेति। स्वव्यूनेति'। इति क. कुण्डलितः ख. ग. घ. ङ. पाठः।

स्वद्व्यूनेति । स्वम्=गोत्रं, तदपेक्षया द्व्यूनेत्यर्थः । यथोपगोस्तृतीये वाच्ये एकस्मादौपगवादिञ् अनिष्टः प्राप्नोति, चतुर्थे द्वाभ्यामित्यादि बोध्यम् । अनिष्टोत्पत्तिः=तन्मात्रम्, न त्विष्टाऽसिद्धिरित्यर्थः ।

अत्र[1] पक्षे उपगोरणा इष्टसिद्धावपि, औपगवादिञपि स्यादिति नियमार्थमिदम् । 'गोत्र'शब्दश्च जाताविति नियमोपपत्तिः । एतेन 'चतुर्थे 'गार्ग्य'शब्दादिञि अपि, तस्मिन्गोत्रे एक एव कृतो, न द्वौ, यञ्तु तृतीये, न चतुर्थे' इत्यपास्तम् । 'गोत्र'पदस्य जातिपरत्वात् । नन्वेवमप्यनन्तराऽपत्यप्रत्ययान्ताद्गोत्रे प्रत्ययो दुर्वारः । गोत्रे एकस्यैव कृतत्वेन, नियमाऽबाधात् । एतदभिप्रायेणैव 'सर्वेष्वपत्ययुक्तेष्वि'ति पक्षे नियमाऽर्थत्वमुपपाद्य, पुनरुक्तं भाष्ये—'सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्य' इति । न च गोत्रपदेनाऽपत्यसमुदायो लक्ष्यते, तेन परमप्रकृतेरेव भविष्यतीति वाच्यम् । 'अपत्यमि'त्यनुवृत्त्यैव सिद्धे, 'गोत्र'ग्रहणवैयर्थ्याऽऽपत्तेरिति चेन्न । इष्टाऽऽपत्तेः ।

यद्वा 'एक एवाऽपत्यप्रत्यय' इत्यस्य अर्थ आद्यचा 'एक एव शब्दोऽपत्यप्रत्ययवान् भवती'त्यर्थः । एकशब्दश्च प्रथमवाची । स्पष्टं चेदं सर्वं सूत्रशेषे भाष्ये । 'अपत्यं तोकं तयोः समे' इत्यमरस्य त्वयमर्थः—'तयोः=तद्घटितसन्तानपरम्परयोरि'ति ।

पितामहोत्सङ्गे स्थितस्य दारकस्य विषये 'कस्याऽपत्यमिदमि'तिप्रश्नो जनकविषये एवेति, तत्र 'पितृ'व्यपदेशेनोत्तरस्य नाऽसङ्गतिरिति दिक् ।

तद्वान्ये[2] । आद्ये प्रत्ययमालानिवृत्तये, अन्त्येऽनिष्टोत्पत्तिमात्रनिवृत्तये । तृतीये इति । तृतीयत्वं च मूलपुरुषाऽपेक्षया । 'यजमानपञ्चमा इडां

---

१ 'अत्र पक्षे' इत्यारभ्य 'नाऽसङ्गतिरिति दिक्' इति क. पाठः । ख. ग. घ. ङ. तु नास्ति ।

२ इतोऽग्रे—'इदमेव ध्वनयितुं भाष्ये 'प्रत्ययपरम्परे'त्युक्तम्, द्वितीये 'अनिष्टोत्पत्तिरि'त्युक्तम्' इति ख. ङ. पाठः ।

भक्षयन्ति' 'मनः षष्ठानीन्द्रियाणी'त्यादौ च विजातीयेनाऽपि सङ्ख्यापूरण-दर्शनात्। औपगवादिति। तस्मादेवेत्यर्थः। न तूपगोरण्, तृतीयस्य तं प्रत्यपत्यत्वाऽभावादिति भावः।

एवमुत्तरेति। 'अपत्यं पितुरेवे'ति मते पञ्चमे यूनि विवक्षिते, चतुर्था-त्प्रत्ययाऽन्तादेव प्रत्ययः स्यादित्यनिष्टं प्राप्नोति। तृतीयादिष्टा चोत्पत्तिर्न सिद्ध्यति। 'पितामहादीनामि'ति पक्षे तु तृतीयादुत्पत्तौ 'गार्ग्यायण' इतीष्टे सिद्धेऽपि, मूलप्रकृत्यनन्तराऽपत्ययुवाऽपत्य-प्रत्ययाऽन्तादनिष्टो-त्पत्तिरपि प्राप्नोतीति, 'यूनि गोत्रादेवे'ति नियमाऽर्थत्वमित्यर्थः[1]।

गोत्रप्रत्ययान्तादेवेति। 'मूलप्रकृत्यनन्तराऽपत्ययुवाऽपत्यप्रत्यया-ऽन्तेभ्यो ने'त्यर्थः। एतत्सूत्रविषये द्वितीय एव पक्षो न्याय्यः। आद्यपक्षे तु विधित्वमेव स्यान्न नियमत्वमिति तत्त्वम्[2]।

ननु 'अस्त्रियामि'त्यस्य 'स्त्रीभिन्ने यूनि गोत्रादेवे'ति नाऽर्थः। युवसंज्ञा-विषयासु स्त्रीषु प्रत्ययमालाप्रसङ्गात्। 'एको गोत्रे' इत्यस्य तु न प्रवृत्तिः, युवसंज्ञया गोत्रसंज्ञाया बाधात्। न च 'स्त्रियां यूनि न प्रत्यय' इति वाक्यभेदेन सम्बन्धः। एवमपि गोत्रप्रत्ययेन युवतेर्नाऽभिधानं स्यात्, किं तर्हि, वाक्यमेव स्यादत आह—स्त्रियां त्विति। 'अस्त्रियामि'ति योगो विभज्यते। 'यूनी'ति शब्दपरमनुवर्त्तते। तच्च प्रथमया विपरिणम्यते।

---

१ इतोऽग्रे—'आद्ये पक्षेऽस्य नियमत्वन्तु 'एको गोत्रे' इति साहचर्याद् बोध्यम्। 'युव'पदं च पूर्वोक्तरीत्यैव युवघटिताऽपत्यसमुदायपरम्। विध्यभ्यनुज्ञानं च प्राग्वत्। गोत्रप्रत्ययान्तादेवेति। न तु युवप्रत्ययान्तादित्याद्यपक्षेऽर्थः। द्वितीयपक्षे तु 'मूलप्रकृत्यनन्तराऽपत्यप्रत्ययान्तेभ्यो ने'त्यर्थः' इति ख. ग. घ. ङ. पाठः। मनोरमादिस्थत्वात् क. नास्ति

२ इतोऽग्रे—'न च 'गोत्राद्यून्येवे'ति विपरीतनियमोऽस्तु. शैषिकाश्च व्यावर्त्या इति वाच्यम्। व्याख्यानात्। 'एको गोत्रे' इति नियमेन गोत्रप्रत्ययान्तात् गोत्रप्रत्ययाऽभावेन, तदन्ताद्यून्येव प्रत्यय इति बोध्यम्' इति ग. घ. पाठः।

परिभाषा चेयम् । 'यत्र युवसंज्ञाविधानं तत्र 'अस्त्रियामि'त्युपतिष्ठते' इत्यर्थः । युवसंज्ञासूत्रे एव 'अस्त्रियामि'ति वक्तुमुचितम् ।

अत इति, अधिकृतप्रातिपदिकविशेषणम् । तेन तदन्तविधिरित्याह- अदन्तमिति । तपरः किम् ? । 'विश्वपोऽपत्यं वैश्वपः' । 'दाशरथाये'त्यादौ तु 'तस्येदमि'त्यण् । अपत्यत्वेन विवक्षायां त्विञेव । अत एव 'आपत्यं वा गोत्रमि'ति वार्त्तिकप्रयोगः सङ्गच्छते । अत्र 'अपत्यस्येदम् आपत्यम् = पौत्रप्रभृती'त्यर्थः । 'अस्याऽपत्यम् इरि'त्यादौ व्यपदेशिवद्भावात् 'अत इञ्' बोध्यः ।

बाहविरिति । 'बाहुरि'ति कस्य चिदृषेः संज्ञा । 'जानन्ति-बाहवी'-त्याश्वलायनप्रयोगात्त, 'बाहविरि'ति भाष्यवृत्त्यादिषूदाहरणाच्च ।

एतेन 'केवलस्य बाहोरपत्येनाऽयोगात्सामर्थ्येन तदन्तविधिः, सौबाहविरि'ति 'बाधृ लोडने' इति धातौ माधवोक्तमपास्तम् ।

अत्र 'शिरस्' 'लोमन्'शब्दौ पठ्येते, ताभ्यां सामर्थ्यात्तदन्तविधिः । तदाह-औडुलोमिरिति । 'उडूनीव लोमानि यस्ये'ति विग्रहः । 'हस्तिशिरसोऽपत्यं हास्तिशीर्षिः' । 'अचि शीर्षः' । 'अजादौ तद्धिते शिरसः शीर्षादेश' इति तदर्थः । यद्यपि अजादौ तद्धिते विधीयमानः तत्प्रकृतेरेवोचितः, तथाऽपि सामर्थ्यादिहाऽवयवस्याऽप्यादेशः । केवलशिरसोऽजादि-तद्धितस्य प्रतिपदोक्तस्याऽभावात् । तदन्तविधिस्त्वत्र दुर्लभः । विशेष्याऽसन्निधानात् । सत्यपि वा तस्मिन्, सम्पूर्णस्याऽऽदेशः स्यात् । निर्दिश्य-मानस्य कस्याऽप्यभावात् । शिरसोऽप्याक्षेपादिति बोध्यम् ।

इह प्रतिपदविधाने याः पुराणादिप्रसिद्धाः संज्ञाः, ताभ्य एव प्रत्ययः । प्रसिद्धतरत्वेन शीघ्रोपस्थिताभिस्ताभिरेव विधेर्निराकाङ्क्षत्वात् ।

---

१ इतोऽग्रे—'तस्याऽपत्यमि'त्यादिभिरपत्यशब्दवदपत्यत्वविशिष्टबोधे एव इञादीनां साधुत्वात्, तदादीनां तत्तद्रूपेण बोधकत्वेऽपि न दोषः', इति ख. ङ पाठः ।

तेन इदानीन्तनो यो 'बाहुः,' तदपत्ये 'बाहव' एव। उक्तं च—

'अभिव्यक्तपदार्था ये, स्वतन्त्रा, लोकविश्रुताः।

शास्त्राऽर्थस्तेषु कर्त्तव्यः शब्देषु, न तदुक्तिषु'॥ इति।

तत्र 'अभिव्यक्तपदाऽर्थका' इत्यनेन अनर्थकाऽप्रसिद्धार्थकयोर्व्यावृत्तिः। अत एव च संज्ञाश्वशुराऽपत्ये 'श्वाशुरि'रित्यादौ 'राजश्वशुराद्यत्' न।

'मिमीते-माता', तस्य स्वसा-'मातृस्वसे'त्यादौ 'मातृपितृभ्यां स्वसे'-ति षत्वं च नेत्यादि बोध्यम्।

तुल्यन्यायात्, नामधातुप्रकृतिकप्रातिपदिकानामप्यप्रसिद्धाऽर्थकत्वम्। शास्त्रबोधितत्वेऽपि, लोके प्रकरणाऽऽदिनिरपेक्षतया प्रतीत्यभावात्। स्वतन्त्राः—तद्वृत्तिगुणयोगाऽऽदिकमनपेक्ष्य प्रवर्त्तमानाः। तेन गौणव्यावृत्तिः। गौणमेव च 'सन्दिग्धाऽर्थ'पदेन प्राचीनैर्व्यवहृतम्। अत एव 'महद्भूत' इत्यादौ नाऽऽत्वम्। इदं च विशिष्टरूपोपादाने पदकार्ये एव। अत एव सर्वादिसूत्रे संज्ञाप्रतिषेधो वार्त्तिककृतोक्तः। अत एव 'महद्भूता ब्राह्मणी'त्यादौ पुंवत्त्वम्, 'अमहान् महानि'त्यादौ दीर्घश्च सिद्ध्यति। आद्ये विशिष्टरूपोपादानाऽभावात्, अन्त्ये पदकार्यत्वाऽभावात्। लोकविश्रुताः = लोकप्रसिद्धाः। तेन प्रसिद्धार्थकाऽप्रयुक्तव्यावृत्तिः। तेन वचन्त्यादीनामसाधुत्वं बोधितम्। अत एव च 'अभिधानलक्षणाः कृत्तद्धितसमासा' इत्यादि सङ्गच्छते। तदुक्तिषु। तत्सदृशेष्वित्यर्थः। अत एव 'समानशब्दानां प्रतिषेधो वक्तव्य' इति भाष्यादिग्रन्थाः सङ्गच्छन्ते।

---

१ 'अनर्थकाऽप्रसिद्धार्थक-संज्ञाशब्दयोः' इति ग. घ. पाठः।

२ इतोग्रे 'इदं चार्थोपस्थापकरूपोपादाने पदकार्ये एव। तत्रैवार्थोपस्थितेः सत्त्वात्। अत एव सर्वादिसूत्रे संज्ञाप्रतिषेधो वार्त्तिककृतोक्तः। स्वतन्त्राः = तद्वृत्तिगुणयोगादिकमनपेक्ष्य प्रवर्त्तमानाः' इति ग. घ. पाठः।

३ 'अन्त्येऽन्यपदार्थनिमित्तकत्वात्' इति ग. घ. पाठः।

४ इतोऽग्रे—'आरगुदीचाम्' 'युवोरनाकौ' 'वामदेवाड्ड्यड्ड्यौ' 'शिवादिभ्यो-

व्यासवरुड । व्यासोऽत्र वेदव्यास एव । अत एव 'वैयासकिः शुक' इति भाष्ये उदाहृतम् । वरुडाऽऽदयश्च जातिविशेषाः ।

[1]न य्वाभ्याम् । यत्र य्वाभ्यां परस्य प्रसक्ताया वृद्धेर्निषेधस्तत्रैव[2] ऐचौ । तेन 'दाध्यश्विरि'त्यादौ नैच् । न च द्व्याशीतिके दोषः । 'मध्येऽपवाद'-न्यायेन, 'येन नाऽप्राप्ति'न्यायेन चाऽस्य निषेधस्य 'तद्धितेष्वचामादेरि'ति-वृद्धिबाधकत्वेऽपि, 'सङ्ख्यायाः संवत्सरे'त्यनेन वृद्धि[3]सिद्धेः । न च 'प्राचां ग्रामनगराणामि'त्यस्य विषयभूते पूर्वत्रैयलिन्दे न स्यात् । तत्र एतस्या-ऽनुवृत्तिं कृत्वा वाक्यभेदेन व्याख्यानाददोषः । 'सङ्ख्यायाः संवत्सरे'-त्यादौ नाऽनुवृत्तिः, मानाऽभावादित्यादि स्पष्टं[4] भाष्ये ।

पदान्ताभ्यां किम् ? । 'एतीति यन्', तस्य छात्रा 'याता' इत्यादौ मा भूत् । पूर्वौ । पूर्वाऽवयवावित्यर्थः । 'अभक्तत्वे हि इश्च अजश्च–यजम्, तस्मात् 'तत्र भव' इत्यणन्ताच्छो न स्यात् । प्रातिपदिकस्याऽवृद्धत्वादि'ति हरदत्तः ।

गोत्रे[5] कुञ्जा । च्फञि ञो वृद्ध्यर्थः—'कौञ्जायनाः' । चकारो

---

ऽणि'त्यादिसूत्रस्थभाष्यप्रामाण्यात् विशिष्टरूपोपादाननिमित्तकः प्रत्ययो नामधातोः क्विब्विचोः कृतयोर्नेति बोध्यम् । शब्दपरत्वे तु न कस्यापि शास्त्रीयकार्यस्य प्रवृत्तिः । 'युष्मद्युपपदे' इत्यादिनिर्देशात्' इति ग. घ. पाठः ।

१ 'न य्वाभ्याम् । वृद्धिविषयेऽस्याऽऽरम्भादपवादत्वेनैव वृद्धिबाधे सिद्धे, निषेधोक्तिरैचो विषयप्रदर्शनाय, यत्र य्वाभ्यां परस्य' इति ग. घ. पाठः ।

२ 'तत्रैव ऐचौ यथा स्यातामिति' इति ग. घ. पाठः ।

३ 'वृद्धेर्ज्ञायमानत्वात्' इति ग. घ. पाठः ।

४ इतोऽग्रे—'उपस्थितत्वात्तयोरेवाऽवधित्वे सिद्धे, 'ताभ्यामि'ति चिन्त्यप्रयोजनम्' इति ख. ग. घ. ङ. पाठः ।

५ 'गोत्रे कुञ्जा । इतः प्रागेको गोत्रे इत्यादिसूत्रद्वयं पठित्वाऽत्र गोत्रग्रहणं त्यक्तुं शक्यम्' इति ग. घ. पाठः ।

'व्रातच्फञोरि'त्यत्र विशेषणोऽर्थः।

व्रातच्फञो। 'पूगाञ्ञ्योऽग्रामणी'त्यतो ञ्योऽनुवर्त्तते। व्राते उदाहरिष्यते। तद्राजत्वादिति। 'ञ्यादयस्तद्राजा' इत्यनेन। लुगिति। 'तद्राजस्य बहुष्वि'ति 'ञ्यस्ये'ति शेषः।[2]

जातित्वादिति। ञ्यप्रत्यये हि योपधत्वात्स[3] न स्यात्, टाप् च स्यादिति 'अस्त्रियामि'त्युक्तमिति भावः।

[4]नडादिभ्यः। 'शलङ्कु शलङ्कं च'। बाह्वादित्वात्-शालङ्किरपि। पैलादिश्चाऽयम्। एवं च फगिञोर्गोत्रे ऐच्छिको विकल्पः। शालङ्केर्गोत्रत्वं विना ततो युवप्रत्ययाऽसम्भवात्। 'कौशिककगोत्रे एव फक्, अन्यत्र इञिति व्यवस्थे'ति वृत्तिः। 'अग्निशर्मन् वृषगणे'। 'वृषगणमि'ति गोत्रविशेषस्य संज्ञा। आग्निशर्मिरन्यः। बाह्वादित्वादिञ्। अत एव गहादौ 'आग्निशर्मी'ति इञन्तं पठ्यते। 'आग्निशर्मोऽन्य'इति तु हरदत्तादीनां प्रमादः।

---

१ इतोऽग्रे—'नन्वेवं ञकारचकारयोरुभयोरपि चरितार्थत्वे 'कौञ्जायना' इत्यादौ ञ्यस्य लुकि, परत्वेन, ( सतिशिष्टत्वेन च ) ञित्स्वर आद्युदात्तः प्राप्नोतीति चेन्न। 'चित' इत्युत्तरं 'तद्धितस्य कित' इति सूत्रे 'तद्धितस्ये'ति योगं विभज्य, चितस्तद्धितस्याऽन्तोदात्तत्वविधानसामर्थ्येन, पर(स्य, सतिशिष्ट)स्याऽपि ञित्स्वरस्य बाधात्। एकपदस्वरे लुका लुप्ते प्रत्ययलक्षणप्रतिषेधात्, नाऽत्र ञ्यप्रत्ययनिमित्तं सतिशिष्टमप्याद्युदात्तत्वम्। न च फगेवाऽस्तु कुञ्जादिभ्यः। तथा सति नाडायनादिभ्योऽपि ञ्यः स्यात्। स्पष्टं चेदं भाष्ये। यदि तु च्फक् प्रत्ययः क्रियते, तदा स्वरविधायके शक्योऽकर्त्तुं योगविभागः' इति क. कुण्डलितः ख. ग. घ. ङ. पाठः।

२ 'वक्ष्यत इति। व्राते विहितस्य ञ्यस्येति शेषः' इति ख. ग. घ. पाठः।

३ 'सः = जातिलक्षणो ङीष्।

४ इतोऽग्रे—'नड, चर, बक, मुञ्ज, इतिक, इतिश, उपक, लमक' इति ग. घ. पाठः।

'कृष्ण-रणौ ब्राह्मण-वासिष्ठौ चेत्'। 'क्रोष्टु क्रोष्टं च'। 'पञ्चालो ब्राह्मणगोत्रे' इत्यादि।

यञिञोः। अधिकृतं 'गोत्रे' इति, यञिञोर्विशेषणम्, व्याख्यानात्[1]। हरिताऽऽदिसूत्रस्थमूलोक्तयुक्त्या फक्रो विशेषणाऽसम्भवाच्च। प्रत्ययस्तु यूनि। गोत्रे किम्?। सुतङ्गमादिभ्य इञि, सौतङ्गमेरपत्ये मा भूत्। द्वैप्याच्च सूत्रमते व्यावृत्त्यर्थम्। 'यञश्चे'तिसूत्रस्थभाष्यरीत्या तु अकारप्रश्लेषादेव न द्वैप्ये दोषः।

शरद्वच्छुनक। भृगु-वत्सपदे तद्वंशोत्पन्नलाक्षणिके। अन्यथा भृगुवत्सयोः शरद्वच्छुनकपूर्वभावित्वादसङ्गतिः स्पष्टैव। ('यञञोश्चे'[2]ति-लुगन्तो वेति 'तद्राजस्ये'ति सूत्रे वक्ष्यते)। तदाह—भार्गवश्चेदिति। अन्यः। कृत्रिमपुत्रादिः। आग्रायणश्चेदिति। नडादिफगन्तोऽयम्। दार्भिरिति। यद्यस्य ऋषित्वं, तदा बाह्वादित्वादिञ् बोध्यः। शरद्वच्छुनकौ-विदादी, ताभ्यां फक्रोऽभावेऽञ्। अनादिरिति। अश्रूयमाणाऽऽदिकाल इत्यर्थः। अनन्तरे त्विति। भारतप्रसिद्धद्रोणस्याऽनन्तरापत्यभूते इत्यर्थः। उपचारादिति। श्रुतिसामान्यात्तद्द्रोणगोत्राऽपत्यत्वाऽऽरोपोऽस्मिन्निति भावः। 'अनादित्वं पुराणप्रसिद्धत्वमेवे'[3]त्यन्ये।

अनृष्या। 'अनृषो'ति लुप्तपञ्चम्यन्तम्। आनन्तर्ये। अनन्तराऽपत्ये। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। इदं वृत्त्यनुसारेण। भाष्ये तु 'ऋषिभ्योऽनन्तरे ने'त्यर्थोऽसमर्थसमासेन दर्शितः। 'येऽनृषयः पठ्यन्ते, तेभ्योऽनन्तरेऽपि वृत्तिर्भवती'ति चोक्तम्। तत्र निषेधसामर्थ्यादेवाऽत्र सूत्रे 'गोत्रे' इति न सम्बध्यते। युवाऽपत्ये तु न दोषः। 'गोत्राद्यूनी'ति

---

१ 'व्याख्यानात्, श्रुतत्वाच्च' इति ग. घ. पाठः।

२ अयं ख. ग. घ. ङ. पाठः। क. नास्ति।

३ 'पुराणप्रसिद्धत्वमेवेत्यत आह—'अनृष्या इति' इति ख. ङ. पाठः।

नियमात् । एवं चाऽनृषिभ्योऽनन्तरे, व्यवहिते च प्रत्यय इति लभ्यते[1] ।

'बैदिरि'त्यत्र ऋष्यणमाशङ्क्याऽऽह—बाह्वादेरिति । एवं 'गार्गिरि'-त्यत्रा[2]ऽपि । 'परस्त्री परशुं च' इति पठ्यते । 'आपद्यते' इति शेषः । अत्र 'परस्त्री'ति कर्मधारयः । ब्राह्मणात्तदूढायां शूद्रायामुत्पन्नः–'पारशवः'। सा च जात्यन्तरयोगात्परस्त्री ।

'विप्रान्मूर्द्धाऽवसिक्तो हि क्षत्रियायां, विशः स्त्रियाम् ।
अम्बष्ठः, शूद्र्यां निषादो जातः, [3]पारशवोऽपि च' ॥

–इति स्मृतौ 'शूद्रस्य कन्ये'ति पुंयोगे ङीष् । अत्र हि अव्यभिचारोत्पन्नाऽनुलोमप्रस्तावात्पारशवप्रकृतिः कर्मधारय इति गम्यते ।

न चाऽस्य स्थानिवद्भावेन 'परस्त्री'शब्दत्वात्तस्य चाऽनुशतिकादौ पाठादुभयपदवृद्धिः स्यादिति वाच्यम् । पूर्वोत्तरपदसंमोहात् । अत एव गणे 'परास्त्री शुं चे'ति नोक्तम् ।

गर्गादिभ्यो । गर्ग । वत्स । 'वाजाऽसे' इत्यादि । असे । असमासे इत्यर्थः । तेन[4] सुवाजान्न । 'ग्रहणवते'त्यस्याऽनित्यत्वज्ञापनायेदमित्याहुः ।

'रामो जामदग्न्यः', 'पाराशर्यो व्यास' इति, अनन्तरे गोत्रत्वाऽऽरोपाद्बोध्यम् ।

यञञोः । 'ण्यक्षत्रिये'त्यतो 'लुगि'ति, 'तद्राजस्ये'ति सूत्रात् 'बहुषु तेनैवाऽस्त्रियामि'ति, 'यस्कादिभ्यो' इत्यतो 'गोत्रे' इति चाऽनुवर्त्तते । तदाह—गोत्रे इत्यादि । प्रवराऽध्यायप्रसिद्धगोत्रवाचित्वं केवलयञञोर्नास्तीत्यत आह—यञन्तमिति । 'निर्दिश्यमानस्ये'ति परिभाषालब्धं, लुक्संज्ञालब्धं चा[5]ऽर्थमाह–तदवयवयोरिति ।

---

१ 'इति लभ्यते इत्याहुः' इति ख. घ. ङ. पाठः ।

२ 'रित्यपि' इति ख. ग. घ. ङ. पाठः ।

३ 'पारशवेऽपि च' इति क. ग. घ. पाठः ।

४ 'तेन सौवाजिः' इति ग. घ. पाठः । ५ 'चाऽर्थमाह' इति ग. घ. पाठः ।

प्रवरेति[1]। 'तादृशमपत्यप्रत्ययाऽन्तमि'त्यर्थः। इदं च 'स्त्रीपुंसाभ्यामि'ति सूत्रे भाष्ये ध्वनितम्, 'अपत्याऽधिकारादन्यत्र लौकिकं गोत्रमि'ति 'यूनि लुक्'सूत्रभाष्ये[2] चोक्तम्। प्रवराऽध्यायप्रसिद्धत्वमेव च लौकिकत्वम्[3]। तदुक्तं 'गोत्रावयवादि'ति सूत्रे भाष्ये–'अगस्त्याऽष्टमर्षीणां यदपत्यं, तानि गोत्राणी'ति। 'तानि गोत्रत्वेन लोके प्रसिद्धानी'त्यर्थः। 'पञ्चभिर्गार्गीभिः क्रीतः पट' इत्यत्राऽऽर्हीयस्य ठकः'अध्यर्धे'ति लुक्, 'लुक्तद्धिते'ति स्त्रीप्रत्ययलुक्, 'यञञोश्चे'ति यञो लुक्, 'पञ्चगर्ग' इत्येवे'ति, 'तद्राजस्य बहुष्वि'त्यत्र भाष्ये स्पष्टम्। 'अस्त्रियामि'ति निषेधस्तु अर्थाऽन्तराऽनुपसङ्क्रान्तस्त्रीवाचकस्यैवेति तद्भावः।

'षष्ठीतत्पुरुषेऽबहुत्वेऽपि यञञोर्वा लुक् वक्तव्यः। 'गार्ग्यस्य, गार्ग्ययोर्वा कुलम्—गर्गकुलम्, गार्ग्यकुल वा। अबहुत्वे किम्?। 'गर्गाणां कुलम्–गर्गकुलमि'त्येव। षष्ठाति किम्?। 'परमगार्ग्यः', 'उपगार्ग्यमि'ति।

यञञिञामिति किम्?। आङ्गस्य कुलम्–आङ्गकुलम्। अत्र हि 'द्व्यञ्मगधे'त्यण्। स्पष्टं चेदं भाष्ये।

लोहितादिकार्यमिति। स्त्रियां ष्फ इत्यर्थः। गणे एव 'बभ्रुः कौशिके' इति पठितुं युक्तम्।

कपिबो। कपेर्लोहिताऽऽदिकार्यायाऽऽवश्यकेन गर्गादिपाठेन सिद्धे[4],

---

१ 'नन्वपत्याधिकारादन्यत्र लौकिकं' गोत्रमिति सिद्धान्तः। लौकिकं च गोत्रं लोकेऽपत्यत्वेन प्रतीतिजनकप्रत्ययान्तत्वम्। 'तद्राजस्य बहुष्वि'त्यादिसूत्रस्थभाष्यकैयटादिषु स्फुटमेतत्। एवं च 'पौत्रा' इत्यत्राऽतिप्रसङ्गोऽत आह—प्रवरेति। इदं च ऋष्यपत्योपलक्षणम्। 'स्त्रीपुंसाभ्यामि'तिसूत्रस्थकैयटस्वरसात्। तादृशमपत्यप्रत्ययान्तमित्यर्थः' इति ग. पाठः।

२ 'भाष्योक्तेः' इति ख. ग. पाठः।

३ 'लौकिकत्वमिति भावः' इति ख. ब. क. पाठः।

४ 'आवश्यकगर्गादिपाठेन सिद्धे' इति ग. घ. पाठः।

'आङ्गिरसे एवे'ति नियमाऽर्थमिदम् । कापेय इति । 'इतश्चाऽनिञ' इति ढक् । बौधिरिति । अस्य ऋषित्वे तु बाह्वादीञ् बोध्यः ।

वतण्डाच्च । ननु गर्गादिपाठाद्यञ् सिद्धः, किमनेन ? । न च प्राग्वत् 'आङ्गिरसे एवे'ति नियमाऽर्थम् । गर्गादिपाठस्य वैयर्थ्याऽऽपत्तेः ।

न च लोहिताऽऽदित्वाऽर्थः । स्त्रियां लुकः सत्त्वेन यञन्तत्वाऽभावेन, ष्फाऽप्राप्तेः । न च प्रत्ययलक्षणम् । 'यञ् योऽकार' इति व्याख्यानेन वर्णाऽऽश्रयत्वात् । शार्ङ्गरवाऽऽदिपाठेन परत्वान्ङीना बाधाच्च । तदुक्तं भाष्ये-'न गर्गादिभ्यो यञि'त्येव सिद्धमिती'ति चेन्न ।

शिवादिपाठात् अणि अपि प्राप्ते, 'आङ्गिरसे यञेवे'ति नियमाऽर्थत्वात् । न चाऽनन्तराऽपत्ये शिवादिपाठस्य चरिताऽर्थत्वेन, गोत्रे गर्गादियञा तस्य बाधो दुर्वार इति वाच्यम् । ऋषित्वादेव सिद्धे, शिवादिपाठस्य यञा समावेशाऽर्थत्वात् । एवं चाऽनाङ्गिरसे गोत्रे द्वावपि भवतः । भाष्यनये तत्राऽपि 'गोत्रे' इत्यस्य सम्बन्धाच्च । न च शिवाऽऽदिपाठे मानाऽभावः । 'वतण्डाच्चे'ति योगविभागस्यैव मानत्वात् । अन्यथा 'लुक् स्त्रियामि'त्यनेन संयुज्यैव पठेदित्याहुः ।

विहितस्येति[1] । अनन्तरस्ये'ति न्यायेनेदं लब्धम् । वक्ष्यमाण इति । 'अणिञोरि'तिसूत्रेणेत्यर्थः । न च तत्राऽऽर्षग्रहणेन प्रतिपदोक्त-'ऋष्यन्धके'त्यण एव ग्रहणमिति वाच्यम् । एवं हि शिवाऽऽदिपाठस्य चारितार्थ्येन, गोत्रयञा बाधाऽऽपत्तौ, नियमस्य वैयर्थ्याऽऽपत्त्या, 'वतण्डाच्चे'ति योगविभागस्य वैयर्थ्याऽऽपत्तेः । तस्माद्योगविभागसामर्थ्यान्न तत्र लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिरित्याहुः कैयटाद्यनुसारिणः ।

---

१ 'विहितस्येति । 'परिशेषितस्य वे'ति बोध्यम् । 'आङ्गिरसे' इत्यनुवृत्त्येदं लभ्यते । न चाऽनन्तरस्येति न्यायेन निर्वाहेऽनुवृत्तिर्निःफलेति वाच्यम् । नियमानां निषेधमुखेन प्रवृत्तौ 'अनन्तरस्ये'ति न्यायाऽप्राप्तेरित्याहुः' इति ख. ग. घ. ङ. पाठः ।

अत्र केचित्—योगविभागस्य गर्गादिगणे पाठाऽभावकल्पनेन विध्यर्थत्वे सम्भवति, शिवादिगणे पाठकल्पनेन नियमाऽर्थत्वकल्पनमनुचितम्। तस्माद्गणद्वयेऽप्यस्य न पाठः। 'वतण्डाच्चे'ति सूत्रमाङ्गिरसे एव यञर्थम्। गणे पाठे हि अनाङ्गिरसेऽपि ऋष्यणं बाधित्वा स स्यात्। सूत्रकरणे तु अनाङ्गिरसे ऋषित्वादणेव। भाष्यं त्वित्थं योज्यम्–'गर्गादिगणे एव वतण्डशब्दः पाठ्यः। मधुबभ्रुकपिबोधेष्विव, विशेषाऽनुक्तः। कपिबोधाभ्यां योगविभागेन 'आङ्गिरसे' इत्यस्याऽसम्बन्धं मत्वा शङ्कते—'न गर्गादिभ्यो यञि'त्येव सिद्धमि'ति। उत्तरयति–'लुक् स्त्रियामि'ति वक्ष्यामी'ति। 'अत्र वतण्डशब्दाऽनुवृत्त्यर्थमि'त्यर्थः। 'यदि पुनर्गणे एव 'वतण्डे'त्यनन्तरं तदुच्येत, तदा 'आङ्गिरस'ग्रहणं विच्छिद्येते'ति। 'वतण्डशब्दे' इति शेषः। एवञ्चाऽनाङ्गिरसे यञि स्त्रियां 'वातण्ड्यायनी'-त्यादि चिन्त्यमेवेत्याहुः।

अश्वादिभ्यः फञ्। 'शाय आत्रेये'। अन्यत्र-'शायिः'। 'आत्रेय भारद्वाजे'। अन्यत्र अत इञो 'ण्यक्षत्रिये'ति लुक्। 'भरद्वाजादात्रेये'। अन्यो 'भारद्वाजः'। विदादित्वादञ्। इत्यादि। गोत्र इति। वैल्य-आनडुह्य-आत्रेयेभ्यो गोत्रप्रत्याऽन्तेभ्यः सामर्थ्याद्यूनि बोध्यः। विलिर्नाम राजर्षिः। ततो 'वृद्धादि'ति ञ्यङ्। आनडुह्यो-गर्गादियञन्तः। आत्रेयो ढगन्तः। 'पुंसि जाते' इति–गणसूत्रम्। 'जाते' इति पञ्चम्यर्थे सप्तमी।

प्रकृतीति। जातशब्दरूपेत्यर्थः। जाताया इति। लिङ्गविशिष्टग्रहणात्, एकादेशस्य पूर्वान्तवत्त्वाद्वा प्राप्तिः।

---

१ 'वक्ष्यामीति। तदर्थं योगविभागस्याऽऽवश्यकत्वेन 'आङ्गिरसे' इत्यस्याऽसम्बन्धे मानाऽभावेन, विशेषबोधनाऽर्थं सूत्रम्। न चाऽयं विशेषो गणपाठेन लभ्यत इति भावः। एतदाशयमजानान इतर आह—'यदि पुनस्तत्रैवोच्येते'ति। स्वाशयं प्रकटयति-'नैवं शक्यम्, आङ्गिरसग्रहणं विच्छिद्येतेती'त्याहुः' इति ख. ङ. पाठः।

शिवादिभ्योऽण् । नन्वत्राऽणूग्रहणं व्यर्थम्, 'शिवादिभ्यो यथा-विहितमि'त्येव सिद्धेः। न चैवमिञेव स्यात्। पुनर्वचनस्य वैयर्थ्याऽऽपत्तेः । न च पुनर्वचनं बाधकबाधनाऽर्थम् । तस्यैवाऽभावात्। न च एभ्यः 'प्राचामवृद्धादि'ति फिनः प्राप्तत्वेन, कथं बाधकस्याऽभाव इति वाच्यम्। भाष्यप्रामाण्येन बहुलग्रहणात्तस्येदृशे विषयेऽप्रवृत्तेः। न च तदभावे फञोऽनुवृत्त्यापत्तिः। एवं हि शिवादीन् अश्वादिष्वेव पठेत्। नचैवमपि 'शिवादिभ्यो गोत्रे एवेञ्, नाऽन्यत्रे'ति नियमेन चारितार्थ्यादणूग्रहणं विना कथमण्विधिरिति वाच्यम्। 'गोत्रे' इत्यस्य निवृत्तेरिति चेन्न।

अत्र गणे पठितात् 'ऋष्टिषेण'शब्दात्सेनान्तलक्षणण्यस्य बाधकस्य सत्त्वात्। एवं च त[2]त्र अण् यथा स्यात्, इञ् मा भूदित्यर्थं त[3]त्। स्पष्टं चेदं भाष्ये। तदाह--गोत्रे इति।

निवृत्तमिति। स्पष्टं चेदं वृत्तिकैयटादौ। [5]अपरे तु--नियमविधि-

१ इतोऽग्रे--'किञ्चाऽणूग्रहणाऽभावे यञ्ग्रहणस्य, लुको वाऽनुवृत्त्यापत्तिरिति वाच्यम्। भाष्यप्रामाण्येन बहुलग्रहणात्तस्य ( =फिनः ) ईदृशे विषये अप्रवृत्तेः। लुग्यञोस्तु [1]विच्छिन्नत्वादेवाऽननुवृत्तेश्च' इति ख. ग. घ. ङ. पाठः।

२ 'तत्रेञेव स्यात्। अण् यथा स्यात्' इति ग. घ. पाठः।

३ 'इत्यर्थं तत्सत्त्वात्' इति ख. घ. ङ. पाठः।

४ इतोऽग्रे--'न चैवमपि प्राग्दीव्यतीयाऽधिकारेणैवाऽणूप्रत्यये सिद्धे, अण्ग्रहणं व्यर्थमेवेति वाच्यम्। अर्थस्याऽवधित्वाऽऽश्रयणेनाऽर्थबोधकवाक्ये एव तेन अणसम्बन्धबोधनात्। निवृत्तमिति। प्रागुक्तपूर्वपक्षसिद्धान्तपरभाष्यप्रामाण्यादिति भावः' इति ख. ग. घ. ङ. पाठः।

५ 'अपरे तु द्रौणायनिवदनन्तराऽपत्ये आरोपेण गाङ्गेयादिप्रयोगाणां सिद्धत्वादिष्टत्वाच्च नियमो वक्तुमशक्यः, निःफलश्चेति गोत्रग्रहणानुवृत्तावपि न क्षतिः।' इति ग. घ. पाठः।

1 'स्वरितत्वाऽभावादेव' इति ख. घ. पाठः।

सम्भवे विधेरेव ज्यायस्त्वेन, विधित्वाऽनुरोधेन अण एव विधानमित्युक्तभाष्याऽऽशयसत्त्वेन, नैतद्भाष्यं तन्निवृत्तौ मानम्। अनन्तराऽपत्ये शैव-गाङ्गेयादीनां द्रौणायनिवदारोपेण साधुत्वम् ।

न चैवमनन्तराऽपत्येऽप्युपचारेण 'गार्ग्य' इति प्रयोगस्याऽऽपत्तिः। 'आरोपे सति निमित्ताऽनुसरणमि'ति न्यायेन समाधानात्।

न च 'गार्गी'प्रभृतिभ्यो यूनि ढक् न स्यात्। यूनो गोत्रत्वाऽभावात्। सूत्रन्तु 'दाँत्तेयी'त्यादौ चरिताऽर्थमिति वाच्यम्। 'उदीचां वृद्धादि'तिसूत्रे 'अगोत्रादि'त्युक्तिसामर्थ्येन, 'इतश्चे'ति सूत्रे 'अनिञ' इत्युक्तिसामर्थ्येन च गोत्रप्रत्ययाऽन्तप्रकृतिभ्योऽपि एषां विशिष्य विधानेन तत्सामर्थ्यात् 'यञञोश्चे'त्यादिवत् यूनि उत्पत्तिसिद्धेः। अत एव 'यूनि लुक्'-सूत्रभाष्ये 'अपत्याऽधिकारादन्यत्रापि शास्त्रीयगोत्रग्रहणे, गार्ग्यायणाऽऽदियुवप्रत्ययाऽन्तेभ्यः समूहाऽऽदौ गोत्रत्वप्रयुक्तवुञ्न स्यादि'त्याशङ्क्य, 'अपत्याऽधिकारादन्यत्र लौकिकगोत्रग्रहणे 'गोत्रोक्षोष्ट्रोरभ्रे'तिसूत्रे 'राजन्यमनुष्य'ग्रहणं ज्ञापकमि'त्युक्तम्। 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राऽधिकार' इति च कैयटेन व्याख्यातं सङ्गच्छते ।

---

१ इतोऽग्रे—'अनन्तराऽपत्ये शैवगाङ्गेयादयोऽसाधव एव। 'द्रौणायनि'-'बादरायण'वत्क्वचिदस्तु साधुत्वम्' इति ख. क. पाठः।

२ 'गार्ग्य' इति प्रयोगस्याऽऽपत्तिः।' इष्टापत्तेः। न च 'गोत्रे' इति व्यर्थम्। आरोपेणाऽनन्तराऽपत्यवाचकेऽपि गोत्रत्वप्रयुक्तकार्याऽर्थं तत्सत्त्वात्, वक्ष्यमाणशास्त्रीयगोत्रत्वाऽक्षतेः। 'तस्यापत्यम्' 'अत इञि'त्यादिविहिताऽणिञन्ताऽनन्तराऽपत्यवाचके तु न गोत्रत्वप्रयुक्तकार्यमिति विशेषात्। न च गार्गीप्रभृतिभ्यो यूनि पुंसि ढक्' इति ग. घ. पाठः।

३ 'यूनि पुंसि ढक् न स्यात्। गोत्रत्वाऽऽरोपे 'एको गोत्रे' इति नियमात्। अनारोपे तु गोत्रत्वाऽभावात्' इति ख. ग. पाठः। ('ठक्' इति क्वचित् पाठः)।

४ 'दात्तेयी' 'वैनतेय' इत्यादौ' इति ग. घ. पाठः।

शास्त्रीयगोत्रत्वं च युवत्वाऽनाक्रान्तपौत्रप्रभृत्यपत्यत्वम्[1]। तदर्थकत्वं च शब्दानां वास्तवम्, शास्त्रप्रक्रियानिर्वाहाय शास्त्रकल्पितं वा।[2] शास्त्रप्रक्रियायाः शास्त्रकल्पितेनैव निर्वाह्यत्वात्। अन्यत्राऽपि न सर्वत्र लौकिकग्रहणं, किन्तु यत्र शास्त्रीयग्रहणे गमकाऽभावः, तत्रैव। अत एव 'गोत्रेऽलुगची'त्यत्र, 'कण्वादिभ्यो गोत्रे' इत्यत्र च शास्त्रीयस्यैव ग्रहणम्।

गोत्र[3]संज्ञासूत्रपर्यन्तं गोत्राऽधिकारादेव 'राजन्य''भ्रातृव्या'दिभ्य 'उदीचां वृद्धादगोत्रादि'ति फिञ् न। 'राजश्वशुराद्यत्' इत्यादेर्गोत्राऽधिकारे पाठात्तयोरपि शास्त्रीयगोत्राऽर्थकत्वात्। यद्यपि लोके ताभ्यां जातिप्रकारक एव बोधः, तथाऽपि प्रक्रियादशायां परेषामपत्यरूपाऽर्थवत्, आरोपिततादृशाऽर्थमादाय शास्त्रेण रथन्तरादिवत्साधुत्वाऽन्वाख्यानात् न दोषः। एवं च शास्त्रीयगोत्रग्रहणे, गोत्रग्रहणेनैव सिद्धेः, 'गोत्रोक्षे'ति-

---

१ 'शास्त्री ' गोत्रं च युवत्वाऽनाक्रान्तपौत्रप्रभृत्यर्थे विहितप्रत्ययान्तत्वम्। शास्त्रवासनागम्यत्वाच्चास्य शास्त्रीयत्वम्। 'तस्यापत्यम्' 'अत इञा'देरपि 'एको गोत्रे' इति नियमशास्त्रस्य विधिमुखेन प्रवृत्तेस्तथाविहितत्वमस्त्येव। अत एव 'गोत्राद्यूनि' 'गोत्रस्त्रियाः कुत्सने' 'उदीचां वृद्धादगोत्रादि'त्यादौ तथैव बोधः। 'गोत्रे कुञ्जादिभ्य'इत्यादौ स्वपत्यप्रत्ययाऽभाववत्प्रकृतिभ्य एव प्रत्ययविधानात्प्रत्ययान्तत्वांऽशमपहाय पौत्रप्रभृतिरूपार्थस्यैव ग्रहणम्। अत एव 'मनुषीशब्दात्' इति ग. घ. पाठः।

२ इतोऽग्रे—'यद्वा शास्त्रीयत्वं गोत्राऽधिकारस्थशास्त्रविहितप्रत्ययान्तत्वम्' इति ख. घ. पाठः।

३ 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राऽधिकारादेव 'मनुषी'शब्दात् 'कुत्सितमपत्यमि'त्यर्थविवक्षायां 'मानुषो जाल्म' इति णप्रत्ययेऽन्तोदात्तप्रयोगसिद्धिः। राजन्यभ्रातृव्यादिभ्यश्च 'उदीचां वृद्धादगोत्रादि'दिति फिञ् न। 'राजश्वशुराद्यत्' 'मनोर्जातौ' इत्यादेर्गोत्राऽधिकारे पाठात्तयोरपि शास्त्रीयगोत्राऽर्थकत्वात्' इति ख. ग. घ. ङ. पाठः। ( 'शास्त्रीयगोत्रत्वात्' इति ग. घ. पाठः )।

सूत्रे तद्ग्रहणवैयर्थ्यं स्पष्टमेव । लौकिकञ्च गोत्रं प्रवराऽध्यायप्रसिद्धम् । लोके तत्रैव 'गोत्र'व्यवहारात् । (लोकशब्देन भाष्ये 'स्मृति'ग्रहणस्य तत्र तत्र दृष्टत्वात्)। 'अणिञोः' 'स्त्रीपुंसाभ्यामि'तिसूत्रस्थभाष्यस्वरसाच्च ।

तत्र शास्त्रीयगोत्रस्य प्रत्ययान्तवाच्यत्वात्, लौकिकमप्यपत्यप्रत्ययाऽन्तं प्रवराऽध्यायप्रसिद्धमेव । क्वचित्तु भाष्यप्रामाण्यादपत्यत्वेन लोके प्रतीति-जनकप्रत्ययान्तमात्रम् । यथा 'गोत्रोक्षे'ति सूत्रे । 'खण्डिका'दिसूत्रे क्षुद्रक-मालवात्–'जनपदशब्दात्क्षत्रियादि'त्यधिकारस्थप्रत्ययाऽन्तादेतस्य वुञो भाष्ये करणात् । इतरत्र सर्वत्र प्रवराऽध्यायप्रसिद्धाऽपत्यप्रत्ययान्तमेव ।

१ इतोऽग्रे 'शिवादिभ्य इत्यत्रैव 'गोत्रे' इति निवृत्तमितिवृत्त्यादिमते तु शास्त्रीयं गोत्रं पौत्रप्रभृतिविषयकशाब्दबोधजनकप्रत्ययान्तत्वं वाच्यम् । तथा च मनुषी-शब्दाण्णो न स्यात् । राजन्यशब्दाच्च फिञ्स्यात् । तस्माद्वृत्त्याद्याशयश्चिन्त्यः । लौकिकं च गोत्रं लोकेऽपत्यत्वप्रकारकप्रतीतिजनकप्रत्ययान्तत्वम् । यद्यपि लोके प्रवराध्यायप्रसिद्धेष्वेव गोत्रत्वव्यवहारस्तथापि'अवन्ती'त्यादावितो मनुष्येति-ङीष्सिद्धये भाष्यप्रामाण्यादस्यापि लौकिकत्वम् । अत एवोक्तं भाष्ये— 'युवा च लोके 'गोत्रमि'त्युपचर्यते'। 'किं गोत्रोसि माणवक' ? । 'गार्ग्यायण' इति । इदमनन्तरापत्यस्याऽप्युपलक्षणम् । न चैवं राजन्यमनुष्यशब्दौ । तयो-र्लोके जातिमात्रप्रकारेण बोधकत्वात् । अत एव राजन्यमनुष्यादिभ्यो 'गोत्र-चरणादि'ति शैषिको वुञ्न । यदि तु राजन्यशब्दो जातिविशिष्टाऽपत्यत्वेन बोधको योगरूढया, तदाऽपत्यत्व-तद्व्याप्यधर्माऽतिरिक्तधर्माऽप्रकारकप्रतीति-जनकत्वं तत् । सा जातिश्च न तथा । मूलप्रकृत्यर्थेपि तत्सत्त्वात् । परन्त्वयं पक्षश्चिन्त्यः । सूत्रद्वयेऽपि जातिग्रहणेनाऽपत्यसम्बन्धबाधात् । प्रक्रिया-कल्पितमेव वा तादृशार्थकत्वम् । लोके तु जातिप्रकारक एव बोध इत्याहुः । विपाट्शब्दोऽत्र पठ्यते' इति ग. घ. पाठः ।

२ अयं ख. घ. ङ. पाठः । क. ग. नास्ति ।

३ इतोऽग्रे 'यथा जातिलक्षणे उक्तम् । यथा च गोत्रोक्षेति' इति ख. ङ. पाठः ।

४ इतोऽग्रे 'जातिलक्षणे यथाऽपत्यमात्रस्य ग्रहणं तदुक्तं प्राक्' इति ख. ङ. पाठः ।

अत एवोक्तं भाष्ये-'युवा च लोके गोत्रमि'त्युपचर्यते। किं गोत्रोऽसि माणवक' ?। 'गार्ग्यायण इति'। 'युवा चे'ति चेनाऽनन्तराऽपत्यसङ्ग्रहः। न चैवं राजन्यमनुष्यशब्दौ। (तेयोर्लोके जातिमात्रप्रकारेण बोधकत्वात्)।

अत एव राजन्यमनुष्यादिभ्यो 'गोत्रचरणादि'ति शैषिको वुञ् न। यद्यप्यत्र भाष्ये 'अपत्याऽधिकारात्परं लौकिकं गोत्रमि'त्युक्तम्, 'तदुत्तरमि'ति च कैयटेनोक्तम्, तथाऽपि भाष्ये 'पर'शब्दोऽन्यपर्याय एव। ततः पूर्वस्मिन् 'यञञोश्चे'ति लुग्विधायके भाष्यकृता लौकिकगोत्रग्रहणस्योक्तत्वात्। कैयटस्य तु प्रमाद इत्याहुः।

'विपाट्'शब्दोऽत्र पठ्यते। (तस्य) कुञ्जादिष्वपि पाठात्पक्षे च्फञ्। 'वैपाशायन्यः'। 'जरत्कारु'शब्दश्च। ततः शुभ्रादित्वाड्ढगपि। 'ढे लोप' इत्युलोपः। 'जारत्कारवः'। जारत्कारेयः'। 'विश्रवण''रवण'शब्दौ च। तौ विश्रवःशब्दादेशौ। प्रकृत्यन्तरे एव वा तत्समानाऽर्थे। 'वैश्रवणः। रावणः'।

'द्वयचो नद्याः'। 'त्रिवेणी त्रिवणं च'। 'आकृतिगणोऽयमि'ति गणरत्नकृत्। अत्र 'तक्षन्'शब्दपाठोऽनार्ष इति 'उदीचामि'ति सूत्रे वक्ष्यते। तत्र द्व्यच्कनदीवाचकेभ्यो 'द्व्यच' इति ढक् प्राप्तः।

'अवृद्धाभ्य' इत्यादेर्विशेष्यम्-'प्रकृतिभ्य' इति। 'नदीमानुषीभ्य' इत्यप्यथद्वारकं तद्विशेषणम्। तत्फलितमाह—अवृद्धेभ्यो नदीमानुषीनामभ्य इति।

---

१ एतत्स्थाने 'इदमनन्तराऽपत्यस्याऽप्युपलक्षणम्' इति ख. घ. ङ. पाठः।

२ अयं ख. ग. घ. ङ. पाठः। क. नास्ति।

३ 'यञञोश्चे'ति लुग्विधायके, 'अणिञोरि'तिसूत्रे च' इति क. कुण्डलितः, ख. घ. पाठः।

४ इतोऽग्रे—'इञ् अतो यथाविहित' इति भाष्ये इञ्ग्रहणं बाधकोपलक्षणमित्याहुः' इति ग. घ. पाठः।

५ इतोऽग्रे-'अवृद्धेभ्यो नदीमानुषीनामभ्य' इति वक्तुमुचितम्' इति ग. घ. पाठः।

ऋष्यन्धक । अन्धकादयस्त्रयो वंशाः । ऋषयो मन्त्रद्रष्टारः ।[1]

मातुरुत् । अर्थगतस्त्रीत्वस्य शब्दे आरोपात् 'पूर्वाया' इति निर्देशः । जननीवाचिन एव ग्रहणम्, अभिव्यक्तपदाऽर्थकत्वात्, न 'मिमीते माता', तस्य ग्रहणम्[2] । द्वैमातुर इति । 'द्वयोर्मात्रोरपत्यमि'ति 'तद्धितार्थे'ति समासः । तेन[3] धान्येति । इदं चिन्त्यम् । तादृशस्त्रीवारणायाऽभिव्यक्ते-त्यस्याऽऽवश्यकत्वात् । लिङ्गविशिष्टपरिभाषया प्राप्तिः । वैमात्रेय इति । एवं च 'विमातृ'शब्दो न प्रत्युदाहार्य इति भावः ।

अनूढाया एवेति । न त्वक्षतयोनित्वं कन्यात्वमिति भावः ।

विकर्ण । वत्सादीनां मूलपुरुषत्वाद्विकर्णादीन्प्रत्यपत्यत्वाऽसम्भवात्, वत्सादयः शब्दास्तद्वंशजे[4] आरोपितस्वप्रवृत्तिनिमित्तका इत्याशयेनाह— वात्स्यश्चेदिति । पक्षे इञिति । पूर्वसूत्राद्वाग्रहणाऽनुवृत्तेरिति भावः ।

स्त्रीभ्यो । 'स्त्री'शब्दः स्वर्यते, तेनाऽधिकाऽर्थाऽवगतिरित्याशयेनाह— स्त्रीप्रत्ययेति । 'तदन्तप्रातिपदिके'त्यर्थः । तदन्तस्य प्रातिपदिकत्वं च लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादीनां तद्विशिष्टे बोधनादक्षतम् । ते च टाबादय एव, न क्तिनादयः, व्यवहितत्वात् । तेन बहुवचननिर्देशात् स्वरूपग्रहणे निरस्तेऽप्यर्थग्रहणप्रयुक्तो 'दरदोऽपत्यं दारद'इत्यत्र न ढक् । 'लेखाभ्रेयः' 'वैमात्रेय' इति तु शुभ्रादित्वाद्बोध्यम् । अणसम्बद्धढको निवृत्तये पुनर्ढक्ग्रहणम् । 'चानुकृष्टं नोत्तरत्रे'ति तु 'इत एवाऽनित्यमिति बोध्यम् । यदि 'मण्डूकात्' 'ढक्' इति सूत्रद्वयं क्रियते, तदाऽत्रत्यं ढक्ग्रहणं सुत्यजम् ।

---

१ 'ऋषयो मन्त्रद्रष्टार' इति हरदत्तः' इति ख. ग. घ. ङ. पाठः ।

२ 'अत एव जननीवाचिन एव ग्रहणं, न 'मिमीते माता', तस्या ग्रहणम्' इति ख. ग. घ. ङ. पाठः ।

३ 'तेन धान्येति । अस्मादेव स्त्रीलिङ्गनिर्देशात् 'अभिव्यक्ते'त्यनित्यम्' इति ग. घ. पाठः ।  ४ 'तद्वंशजे लाक्षणिकाः' इति ख. ग. घ. ङ. पाठः ।

सापत्न इति। न च 'सापत्नः प्रकृत्यन्तरत्वात्'। 'सपत्नशब्दः प्रकृत्यन्तरमस्ती'ति 'भस्याऽढे' इत्यत्रत्यभाष्ये 'कस्य प्रकृत्यन्तरमि'त्याकाङ्क्षायां, सापत्नस्यैवोपस्थिततयाऽन्वयेन, 'सपत्न'शब्दस्यैव शिवादिषु पाठ इति लभ्यते इति, कथं 'सपत्नी'शब्दादणिति वाच्यम्। लिङ्गविशिष्टपरिभाषया प्राप्तेः। न च परत्वाड्ढक् दुर्वारः, अयं तु मध्येऽपवादन्यायेन पूर्वस्यैव बाधक इति वाच्यम्। लक्ष्याऽनुसारेण, भाष्यप्रामाण्येन च बाध्यसामान्यचिन्ताया अत्राऽऽश्रयणादित्यादि 'भस्याऽढे' इत्यत्र विस्तरेण निरूपितम्।

अत्र वार्त्तिकम् 'वडवाया वृषे'। 'वाडवेयो वृषः'। अपत्ये तु 'वाडव' इत्येव। अत्र गृहीताऽश्वारूपसूर्यस्त्रिया देवताया वाची 'वडवा'शब्दो गृह्यते। तेनाऽपत्ये 'चतुष्पाद्भ्यो ढञि'ति न भवति। वृषो बीजाऽश्वः। स चाऽत्र गृहीताऽश्वाऽऽकारस्तत्पुमानेव। तेनाऽश्वावाचिनोऽपत्ये ढञेव– 'वाडवेय' इति। ब्राह्मणीवाचि'वडवा'शब्दात्तु ढकोऽपवादे 'अवृद्धाभ्य' इत्यणि, ब्राह्मणवाची 'वाडवः' साधुः। केचित्तु 'वडवाऽश्वाकुम्भदास्योरि'ति कोशसिद्धस्य कुम्भदासीवाचि'वडवा'शब्दस्याऽत्र ग्रहणम्[3]। कुम्भदासी च यस्या गमने श्रोत्रियगृहे जलकुम्भदानेन शुद्धिः, सा[4]।

---

१ इतोऽग्रे—'सपत्नी'ति वृत्त्यादिपाठस्तु चिन्त्यः। भाष्यविरोधात्। उभयप्रामाण्याद् द्वयोरपि पाठोऽस्तु। अत एव भाष्ये 'प्रकृत्यन्तरमि'त्युक्तमिति चेन्न। फलाऽभावात्। 'नित्यं सपत्न्यादिषु' इति सिद्धसपत्नीशब्दार्थमिति चेत्। तस्य 'सापत' इत्यापत्तौ, तत्सूत्रस्थभाष्याऽसङ्गतिरित्यादि 'भस्याढे' इत्यत्र विस्तरेण निरूपितम्' इति ग. घ. पाठः।

२ 'वडवाया वृषेऽर्थे ढक्' इति ग. घ. पाठः।

३ 'अत्र ग्रहणम्। तद्वृषस्य = तत्कामुकस्य, बीजाऽश्वत्वम्। अनियतत्वेन तत्सादृश्यात्' इति ग. पाठः।

४ 'सेत्याहुः। अत्र पक्षे देवतावाचिवडवाशब्दात् शिवादिषु पाठं परिकल्प्य अणि वडवाऽनले वाडवः साधुः' इति ग. घ. पाठः।

वडवाऽनले—'वाडवः' 'तस्येदमि'त्यर्थे साधुरित्याहुः ।[1]

[2]'कुञ्चा-कोकिलाभ्यामण्' । 'क्रौञ्चः' 'कौकिलः' । अपत्ये ढकोऽपवादः । तत्र द्वितीयं शिवादिपाठेन गतार्थं कर्त्तुं शक्यम् ।

तस्येदमिति । 'शिवादिपाठं कृत्वाऽपत्येऽपी'ति कश्चित्[3] ।

इतश्च । द्व्यचः किम् ? । उदधेः औदधः । यत्तु काशिकायां–'मरीचेर्मारीच' इति प्रत्युदाहृतम् । तन्न । 'मरीचि'शब्दो बाह्वादिष्वि'ति 'मिदचोऽन्त्यात्'सूत्रस्थभाष्यादिञ्प्रसङ्गात् । अनिञः किम् ? । दाक्षायणः । इतः किम् ? । दाक्षिः ।

शुभ्रादि । अयमाकृतिगणः । तेन मार्कण्डेयादि सिद्धम् । मृकण्डशब्दश्चाऽदन्तः, 'मृकण्डस्य मुनेस्तीर्थमि'ति प्रयोगात् । 'उकारान्त'इत्यन्ये । तदा 'ढे लोप' इत्युलोपः । 'पाण्डव'शब्दस्य-पाण्डवेयः । 'गङ्गा'शब्दोऽत्र, शिवादौ चेति 'उपसर्गाद्दती'त्यत्र भाष्ये स्पष्टम् ।

प्रवाहणस्य । 'उत्तरपदस्ये'त्यधिक्रियते । 'अर्द्धात्परिमाणस्ये'त्यतः 'पूर्वस्य तु वे'ति च । तदाह—शब्दस्योत्तरपदेति । 'शब्दस्ये'त्यवयवषष्ठी । 'प्रवाहण'शब्दः शुभ्रादिः । उत्तरपदस्य वृद्धिमत्त्वेऽपि, तद्विधानन्तु पूर्वपदवृद्ध्यभावेऽपि 'वृद्धिनिमित्तस्ये'ति पुंवत्त्वप्रतिषेधार्थम् । 'जातेश्चे'ति निषेधस्त्वस्मादेव ज्ञापकादनित्य' इति[4] हरदत्तादयः ।[5]

---

१ 'वडवाऽनले वाडवः साधुः । तस्येदमित्यर्थे वेति बोध्यम्' इति ग. घ. पाठः ।

२ 'वडवाया वृषे वाच्ये', 'अण् क्रुञ्चाकोकिलात्स्मृतः' इति 'स्त्रीभ्यो ढगि'त्यत्र भाष्ये श्लोकवार्त्तिकमिति बोध्यम् ।

३ लघुशेखरे त्वयमेव पक्ष उचित इत्युक्तम् ।

४ 'इति बोध्यम्' इति ग. घ. पाठः ।

५ इतोऽग्रे—'अत एव 'दारदक' इति पुंवत्त्वोदाहरणं भाष्ये दत्तम् । अन्यथा 'जातेश्चे'ति निषेधो दुर्वारः स्यादित्याहुः' इति क. कुण्डलितः ख. ग. घ. ङ. पाठः ।

तत्प्रत्य । तच्छब्देन ढः परामृश्यते । 'प्रवाहणस्ये'ति च वर्त्तते । तदाह–ढान्तस्येति । वाह्यति । स च इञ् । इत उत्तरम्–'विकर्णे'त्यादिः 'भ्रौवेय' इत्यन्तो ग्रन्थः । विपरीतलेखस्तु लेखकप्रमादात् ।

कल्याण्यादी । 'परस्त्री'शब्दोऽत्र पठ्यते । 'पारस्त्रैणेयः' । अनुशतिकादित्वादुभयपदवृद्धिः । परभार्यायामुत्पन्न इत्यर्थः । इह स्त्रीप्रत्ययान्तानां ग्रहणं ढकि सिद्धेऽपीनङर्थम् । ढक्तु नित्य इति । अत्र च वृत्त्यादिव्याख्यानमेव शरणम् । पूर्वेण । 'स्त्रीभ्य' इत्यनेन । कल्याण्यादित्वाद्वा ।

अत्र । इनङ्विधौ । व्याख्यानादिति भावः । पक्षे इति । तदभावे ढगित्यर्थः । तदुक्तममरेण--

'अथ बान्धकिनेयः स्याद्बन्धुलश्चाऽसतीसुतः ।
कौलटेरः कौलटेयो, भिक्षुकी तु सती यदि ।
तदा कौलटिनेयोऽस्याः, कौलटेयोऽपि चाऽऽत्मजः' । इति ।

केचित्तूभयोरप्यत्र 'कुलटा'शब्देन ग्रहणमिति, क्षुद्राया अपि इनङा तृतीयं रूपमाहुः । यत्तु 'परत्वात् क्षुद्राभ्यो ढ्रकाऽस्य बाध' इति । तन्न । वैकल्पिकत्वेन पक्षे ढकि, इनङो दुर्वारत्वात् ।

हृद्भग । चात्–उत्तरपदस्य । 'महते सौभगाये'त्यादौ तु उद्गात्रादित्वादञि, च्छान्दसत्वान्नोत्तरपदवृद्धिः । स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादत आह–चटकस्येति । एवं च सूत्रे 'चटका'ग्रहणं व्यर्थमित्याह–लिङ्गविशिष्टेति । लुगिति । तस्मिन्हि जातिलक्षणो ङीष् स्यादत आह–अजादित्वादिति[3] ।

---

१ इतोऽग्रे—'शुभ्रादिगणे प्रवाहणशब्दपाठात्' इति लिखितप्राचीनपुस्तके टिप्पणी ।

२ 'तस्मिन्हि 'लुक्तद्धिते'ति टापो लुकि, जातिलक्षणो ङीष् स्यात्' इति ग. घ. पाठः ।

३ इतोऽग्रे—'चटकशब्दद्वयं तत्र पठ्यते' इति भावः । यद्वा सामान्येन द्वयोरनुकरणम्' इति ग. घ. पाठः ।

सामान्येन द्वयोरनुकरणम्, व्याख्यानादिति भावः।

गोधायाः। 'अयं ढ्रक् गोधाभर्त्तयपी'ति 'स्त्रीभ्यो ढगि'ति सूत्रे भाष्ये स्पष्टम्। 'पुमपत्य एवेति तद्भाष्याऽर्थ' इत्यन्ये।

[3]आरगुदी। 'उदीचामि'ति पूजाऽर्थमि'ति प्राञ्चः। 'आकारोच्चारण-सामर्थ्याज्जड-पण्डाभ्यामारकाऽत इञो बाधा मा भूदित्यर्थं विकल्पाऽर्थक-मेव तदि'त्यन्ये। अरक् तु न कृतः। 'यस्येति चे'त्यकारलोपे गोधारे-ऽनिष्टाऽऽपत्तेः। अन्यत इति। 'अनाकारान्तादि'त्यर्थः। न चाऽऽख्यान-ण्यन्तात्क्विपि 'गोधा'शब्दस्यैवाऽनाकारान्तत्वसम्भवेनाऽन्यतः प्रवृत्तौ न मानम्। 'अभिव्यक्तपदार्था ये' इति न्यायेन तत्राऽस्याऽप्रवृत्तेः। शास्त्रबोधितत्वेऽपीदृशोऽर्थस्य लोकेऽत्यन्तप्रसिद्धत्वाऽभावात्।

'जल घातने'। डलयोरभेदात् 'जडः'। 'पडि गतौ'। 'पण्डः'। पण्ड-स्याऽपत्यं च दत्रिमादि बोध्यम्। गोधातोऽपि विधीयमान आरक् अन्यतः स्त्रीवाचकात् 'तस्याः पुमानि'त्यर्थे भवति। यथा 'मूषिकायाः पुमान्' 'मृग्याः पुमान्' 'मूषिकारः' 'मार्गार' इति 'स्त्रीभ्य' इत्यत्र भाष्ये स्पष्टम्।

क्षुद्राभ्यः। अर्थनिर्देशोऽयम्। तदभिधायिप्रकृतिभ्यश्चाऽयं प्रत्ययः। शीलहीना इति। 'अनियतपुंस्का'इत्यर्थः। तादृश्यश्च दासीप्रभृतयः। अङ्गहीना.-काणादयः। स्पष्टं चेदं भाष्ये।

अत एवेति। शुभ्रादिपाठकल्पनद्वारेति भावः।

---

१ इतोऽग्रे--'स्पष्टं चेदं सर्वं भाष्ये' इति ग. घ. पाठः।

२ इतोऽग्रे—'गौधेर इति। न च एयादेशस्य बहिरङ्गत्वाड्ढकि लोपो दुर्लभः। उपदेशिवद्वचनेन तस्याप्यन्तरङ्गत्वात्। 'उपदेशिवद्वचनं स्वरसिद्ध्यर्थमि'ति तूपलक्षणम्' इति ग. घ. पाठः।

३ 'आरगुदी। वचनादेव ढ्रक्-ढक्-आरकां पर्याये सिद्धे,'उदीचामि'तिपूजार्थ-मिति प्राञ्चः' इति ख. ग. पाठः।

४ 'ईदृशाऽर्थस्याऽनभिव्यक्तत्वे इदमेव भाष्यं मानमित्याहुः' इति ग. घ. पाठः।

मातृष्व । चात् 'पितृष्वसुरि'त्यनुकृष्यते इत्याशयेनाऽऽह-पितृष्वसुरिति । एतेन 'अनन्तरस्ये'तिन्यायात् 'ढकि लोप' एव विधीयते' इति परास्तम् ।

गृष्ट्यादिभ्यः । 'गृष्टि'शब्दः शुभ्रादौ । अत एव 'सङ्गार्ष्टेयो वृषभ' इत्यन्तोदात्तं प्रयुज्यते । आद्युदात्तार्थं त्विह ग्रहणम् । एतेन 'गृष्टिः सकृत्प्रसूता गौरि'तिकोशबलेन तस्य चतुष्पाज्जातिवाचित्वात्पूर्वेणैव सिद्धमि'त्यपास्तम् । अन्ये तु 'सकृत्प्रसूता सर्वाऽपि गृष्टिरि'ति वदन्ति ।

ढकोरिति । हृष्टि-हल्यादिभ्य 'इतश्चाऽनिञ' इति ढक् प्राप्तः ।

ढञिति । गृष्ट्यादित्वात् ।

केकयमित्रयु । 'केकयाऽपत्यं स्त्री—कैकेयी' । 'जनपदशब्दादि'ति अञ् । मित्रयूनां भावो-'मैत्रेयिका'[1] । 'गोत्रचरणाच्छ्लाघे'ति वुञ् । 'तत्र[3] हि लौकिकं गोत्रं गृह्यते । लोके च ऋषिशब्दो [4]गोत्रमिति प्रसिद्ध' इति काशिका । एतच्च यदा मित्रयुशब्दोऽभेदोपचारात्तदपत्यसन्ताने वर्त्तते तदा बोध्यम । यदा तु गृष्ट्यादित्वात् ढञो, यस्कादित्वाद्बहुषु लुक्, तदा पारिभाषिकगोत्रग्रहणेऽपि न क्षतिरि'ति मनोरमा ।

तच्चिन्त्यम् । अपत्याऽधिकारादन्यत्वेन, परिभाषिकग्रहणाऽसङ्गतेः । काशिका च स्वरूपकथनपरा । एतेन 'एतच्चे'त्याद्यपास्तम्[6] ।

प्रलयादागतम्-'प्रालेयम्' । इयादेशेन वृद्धिर्न बाध्यते । विषयभेदात् । अचामादेर्वृद्धिः, यादेरियादेशः । अङ्गं तूभयोर्विशेषणमित्याहुः ।

---

१ 'मित्रयूनां भावेन मैत्रेयिकया श्लाघते' इति काशिकादिपाठः ।

२ 'मित्रयुशब्दस्याऽभेदोपचारात्तदपत्यसन्ताने वृत्तेर्बहुवचनम्' इति ग. घ. पाठः ।

३ 'तत्र हि ऋषिबोधकशब्दरूपं लौकिकं गोत्रं गृह्यते' इति ग. घ. पाठः ।

४ 'गोत्रमित्यभिधीयते' इति काशिकायां पाठः ।

५ 'अपत्यप्रत्ययान्तरूपगोत्रग्रहणेऽपि' इति ग. घ. पाठः ।

६ 'तत्र हि' इत्यारभ्य 'अपास्तम्' इत्यन्तः पाठः क. नास्ति । मनोरमादिस्थत्वात् ।

'दाण्डिनायन । 'दण्डिन्-हस्तिन्'शब्दौ नडादी। निपातनाट्टिलोपाऽभावः। (तत्राऽपठतां मते तु निपातनादेव फगपि)। 'अथर्व'शब्दस्तत्प्रोक्ते भाक्तः। ततोऽधीते इत्यर्थे वसन्तादित्वाट्ठक्। प्रकाराऽन्तरमप्यग्रे वक्ष्यामः। 'जिह्माशिन्'-शुभ्रादिः। 'वाशिन्'शब्दात् 'उदीचामि'ति फिञ्।

'भ्रूणहन्-धीवन्'शब्दयोर्भावकर्मणोः ष्यञि तत्वं निपातनात्। हन्तेः 'हनस्त' इत्येव सिद्धे पुनर्निपातनं 'धातोः कार्यमुच्यमानं तत्प्रत्यये' इति ज्ञापनाऽर्थम्। अत एव भ्रौणहत्ये कुत्वं न, वार्त्रघ्ने तत्वं च न। स्पष्टं चेदं भाष्ये। न च कुत्वाऽभावार्थमेव निपातनमस्तु। 'भाष्यप्रामाण्येन तत्वनिपातनमपि सूत्रतात्पर्यविषयीभूतमि'त्यङ्गीकारात्। भाष्यकृता हि 'मृजेर्वृद्धिरि'तिसूत्रेऽस्य तत्वनिपातनस्योक्तपरिभाषाज्ञापकत्वमुक्तम्।

'सरयू'शब्दादणि 'यू'इत्यस्य वो निपात्यते। 'देविकायां, सरय्वां च भवे दाविक-सारवौ' इत्यमरः। दाविके 'देविकाशिंशपे'त्यचामादेराकारः।

'ऐक्ष्वाकः' 'जनपदशब्दादि'त्यपत्याऽञन्तः, भवाऽर्थे कोपधाऽणन्तश्च। प्रकृते च द्वयोरपि ग्रहणम्। तत्राऽऽद्यस्य बहुत्वे लुक्—'इक्ष्वाकूणां दुरापेऽर्थे' इति। द्वितीयस्य बहुत्वेऽपि न लुक्—'ऐक्ष्वाकेषु च, मैथिलेषु च फलमि'ति। न च सूत्रे द्वन्द्वेन निर्देशः। तत्र तदलौकिकविग्रहवाक्ये विरुद्धस्वरकतया द्वयोः प्रवेशाऽसम्भवात्। अन्यतरप्रवेशे कथं द्वयोर्ग्रहणमिति वाच्यम्। एकश्रुतियुक्तस्यैव प्रवेशात्। ध्वनितं चेदमत्रैव भाष्ये। 'हिरण्य'शब्दान्मयटि यादिलोपः।

इति युलोप इति। 'ढे लोप' इति उलोपस्य परेण इयादेशेन बाधादप्राप्तेरित्याहुः।

---

१ अयं ख. ग. घ. ङ. पाठः। क. नास्ति।

२ इतोऽग्रे—'तस्मिंश्च सति, तस्याऽसिद्धत्वात् 'यस्ये'ति लोपाऽभावे 'अतो गुणे' इति पररूपमि'ति कैयटः। अस्याऽपि एये परतो जायमानत्वेन समानाऽऽश्रयत्वं बोध्यम्। न च 'ढे लोप' इत्युलोपस्य सिद्धत्वाद्यलोपनिपातनमेव

यस्कादिभ्यो गोत्रे। 'अपत्याऽधिकारादन्यत्र लौकिकं गोत्रमि'ति 'यूनि लुक्'सूत्रभाष्यादौ सिद्धान्तितम्। (तत्र लौकिकं प्रवराऽध्यायप्रसिद्धम्। तस्यैव लोके गोत्रत्वेन प्रसिद्धेः)। तदाह—अपत्यप्रत्ययस्येति। न चैवं यस्कस्याऽपत्यं यास्कः। शिवाद्यण्। तदन्ताद्यूनि 'अणो द्व्यच' इति फिञि, 'यास्कायनय'इत्यत्र यूनि जातस्य फिञोऽपि लुक् प्रसज्येतेति वाच्यम्। विहितपञ्चम्याश्रयणेनाऽदोषात्।

भाष्ये तु 'ण्यक्षत्रिये'त्यतो 'यूनी'ति, 'न तौल्वलिभ्य' इत्यतो 'ने'ति चाऽनुवर्त्त्य, वाक्यभेदेन 'यूनि ने'ति व्याख्यानेन दोषो वारितः।

'तद्राजस्ये'ति सूत्रात् 'बहुष्वि'त्यादि वर्त्तते। तदाह—तत्कृते इति। तत्कृतेति किम्?। 'प्रिययास्काः'। बहुत्वे किम्?। 'यास्कः'।

अत्रि। अत्रिशब्दात् 'इतश्चे'ति ढक्। अन्येभ्य ऋष्यणिति बोध्यम्। बहुत्वे इति। 'तत्कृते, न तु स्त्रियामि'त्यपि बोध्यम्। एवमग्रेऽपि।

युधिष्ठिरा इति। (कुर्वादिण्यं बाधित्वा) बाह्वादित्वादिञ्। भरतानां

---

युक्तम्। तस्याऽसिद्धत्वात्, स्थानिवत्त्वाद्वा 'यस्ये'ति लोपाभावेऽपि पररूपेणेष्टसिद्धिरिति वाच्यम्। उलोपस्य परत्वेन इयादेशेन बाधात्तदप्राप्तेरित्याहुः' इति ख. ग. घ. पाठः।

१ इतोऽग्रे—'तत्र लौकिकशब्देनाऽपत्यमात्रम्। सूत्रकारोक्तसकलांऽशत्यागे मानाऽभावात्। अत एवाऽस्यापि 'केकयमित्रयुवि'तिसूत्रमनोरमायां पारिभाषिकत्वेन व्यवहारः कृतः। तदाह—अपत्यप्रत्ययस्येति। न च 'यूनि लुक्'सूत्रभाष्यादौ 'लौकिकम् परं गोत्रमि'त्युक्तम्। 'परमि'ति। 'अपत्याधिकारादुत्तरमि'ति च कैयटेन व्याख्यातम्। तत्कथमत्र ततः पूर्वस्मिन् लौकिकगोत्रग्रहणमिति वाच्यम्। 'अवन्ती' 'कुन्ती'त्यादावितो मनुष्यजातेरिति ङीषनापत्तेः। तत्र हि 'गोत्रं च चरणैः सहे'ति जातित्वम्। तच्च इतः पूर्वमेव। तस्मात्परशब्दोऽन्यपर्याय इत्येव तत्त्वम्' इति ग. घ. पाठः।

२ अ' ख. घ. ङ. पाठः। क. ग. नास्ति।

प्राच्यत्वादेव सिद्धे, पुनरुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणाऽर्थम्। तेन 'इञः प्राचामि'ति लुक् भरतयूनो न 'यौधिष्ठिरिः पिता', 'यौधिष्ठिरायणः पुत्र' इति। [1]अन्तर्गण इति। गोपवनादयश्च विदादौ प्राग् हरिताद्बोध्याः।

तिककितवादि। अत्र पूर्वोत्तरपदयोरुभयत्राऽपि लुक्। अविशेषात्। तद्दर्शयति—तैकायनय इत्यादिना।

उपकादिभ्यो। सूत्रे 'अद्वन्द्वे' इत्यस्य 'द्वन्द्वे इति नाऽनुवर्त्तते' इत्यर्थ इत्याशयेनाह—द्वन्द्वे चाऽद्वन्द्वे इति। 'उपक-लमक' 'कृष्णाऽजिन-कृष्णसुन्दर' इति द्वौ द्वन्द्वौ तिककितवादिषु पठ्येते, इति तयोर्द्वन्द्वे नित्यमेव लुक्। इह पाठस्त्वद्वन्द्वाऽर्थः। शेषाणान्तु द्वन्द्वेऽपि विकल्पः।

यत्तु वृत्तौ-'भ्राष्ट्रककपिष्ठलोऽपि तत्र पठ्यते' इत्युक्तम्, तत्तु 'भ्राष्ट्रकिकापिष्ठलय' इतिभाष्योदाहरणादयुक्तमि'ति कैयटः। इत्याशयेनोदाहरति भ्राष्ट्रकिकापिष्ठलय इति।

आगस्त्य। 'अगस्त्य'शब्दादृष्यण्-इति 'सूर्यतिष्ये'ति सूत्रे कैयटे स्पष्टम्। 'कुण्डिनी'शब्दात् गर्गादियञि, 'भस्याऽढे' इति पुंवत्त्वे प्राप्ते, अत एव निपातनात्पुंवत्त्वाऽभावः। स्पष्ट चेदं 'भस्याऽढे' इति सूत्रे भाष्ये। चित्त्वं तु मध्योदात्त'कुण्डिनी'शब्दस्य तदनुरूपाऽऽदेशवारणाऽर्थम्। [2]

'अगस्ति'शब्दप्रकृतिकगर्गादियञन्तन्तु सूत्रे न गृह्यते, 'यञञोश्चे'ति लुका सिद्धत्वात्। 'वसिष्ठमित्रावरुणौ, कुण्डिनश्च महातपाः' इति प्रवरा-[3]

---

१ 'अन्तर्गण इति। 'गर्गभार्गविका'शब्दोऽत्र पठ्यते इति 'तद्राजस्य बहुष्वि'ति सूत्रे भाष्ये स्पष्टम्। गर्गाद्यञ्। तस्य लुक्। भृगोर्ऋष्यण्। ततो यूनि 'अत इञ्'। तस्य लुक्। 'गर्गभृगूणां मैथुनिके'ति-वुन्। अत्र 'अत्रिभृगिव'-ति प्राप्तलुकोऽनेन निषेधः' इति ग. घ. पाठः।

२ इतोऽग्रे—'अगस्त्यशब्दस्तु गर्गादिषु नास्त्येवेति 'सूर्यतिष्ये'ति सूत्रे भाष्य-कैयटयोः स्पष्टम्। अत एव वसिष्ठमित्रावरुणौ' इति ख. ग. घ. पाठः।

३ 'इति प्रवराऽध्याय-मत्स्यपुराणात्, 'वासिष्ठ-मैत्रावरुण-कौण्डिन्येति होते'ति

ऽध्याय-मत्स्यपुराण-प्रसिद्ध-कुण्डिनात्तु न गर्गादियञ् । 'कुण्डिनी'त्येव तत्र पाठात् । तत्पर्याय-नान्तकुण्डिन्-शब्दात्तस्य भार्येत्यर्थे 'कुण्डिनी' । 'गर्गादौ 'कुण्डिने'तिपाठादुभाभ्यामपि यञ् । उभयोश्चाऽत्र ग्रहणमि'ति तु न युक्तम् । कुण्डिनशब्दात्तु नाऽपत्ये प्रत्ययः । अनभिधानात् । 'अत एव निपातनात्कौण्डिन्ये पुंवत्त्वाऽभाव' इति भाष्यमत एव सङ्गच्छते । तव तु तदसङ्गतिः स्पष्टैव ।

ननु आदेशविधानेनैव सिद्धौ, लुग्विधानं व्यर्थम् । लुगनुवृत्तावपि 'कुण्डिनानां छात्रा' इत्यर्थविवक्षायां 'गोत्रे' इत्यलुकि, सन्नियोगशिष्टन्यायादादेशेऽपि निवृत्ते, कौण्डिन्यशब्दत्वात् 'कण्वादिभ्यो गोत्रे' इत्यणि, 'आपत्यस्ये'ति यलोपे, 'कौण्डिना' इत्यस्यैव इष्टत्वात् । [1]आदेशेऽप्यौत्सर्गिकेऽणि तथैव । एवं 'कुण्डिनानामपत्यानी'त्यर्थविवक्षायामादेशपक्षे स्थानिवत्त्वेन यञन्तत्वात्फक्, लुगनुवृत्तावपि 'गोत्रेऽलुगची'त्यलुका यञन्तत्वात्फगेवेति, न विशेष इति चेन्न । 'आगस्तीयाश्छात्रा' इत्यनापत्तेः । लुकि सति तु, तस्मिन् 'गोत्रे लुगची'ति-प्रतिषिद्धे, तत्सन्नियोगशिष्टाऽऽदेशनिवृत्तौ, वृद्धत्वाच्छः सिद्ध्यति । यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति, तथाऽऽप्यादिवृद्धिदुर्लभेति बोध्यम् । [2]जातावेवेति । अपत्यत्वं नैव बुध्यते, किन्तु जातिरेव । अपत्ये विधानन्तु कल्पिताऽर्थेन साधुत्वाऽन्वाख्यानमात्रं, [3]रथन्तरादिवदिति भावः ।

बौधायनसूत्राच्च अवश्यस्वीकार्य'लघावन्ते' इत्याद्युदात्त कुण्डिने'त्यकारान्त-प्रकृतिकगर्गादियञन्त'कौण्डिन्य'स्याऽप्यत्र ग्रहणम् । गर्गादौ कण्वादिमध्ये 'कुण्डिने'ति, 'कुण्डिनी'ति च पठन्ति' इति ख. ग. घ. ङ. पाठः ।

१ 'आदेशेऽपि स्थानिवत्त्वेन कौण्डिन्यशब्दत्वात्तथैव' इति ख. ग. घ. ङ. पाठः ।

२ 'जातावेवेति । जातिविशिष्टाऽपत्य एवेत्यर्थः । न त्वपत्यमात्रे इति भावः । क्षत्रियत्वजातिविशिष्टे योगरूढोऽयम् । अन्यत्र 'राजनः' इति ग. घ. पाठः ।

३ 'रथन्तरादिवदित्यपरे' इति ग. घ. पाठः ।

ये चा । 'प्रकृत्यैकाजि'त्यतः 'प्रकृत्ये'त्यनुवर्त्तते । तत्र 'ने'ति वक्तव्ये, 'प्रकृत्ये'त्युक्तेः, 'अन्तरस्ये'ति न्यायं बाधित्वा 'अल्लोपोऽन' इति लोपोऽप्यनेन निवर्त्त्यते । इदं च 'षपूर्वे'तिसूत्रे भाष्ये स्पष्टम् । तदाह—राजन्य इति । शूद्रादाविति । 'शूद्रत्वजातिविशिष्टस्त्रियामि'त्यर्थः ।

टिलोप इति । 'नस्तद्धिते' इत्यनेन । अल्लोपस्याऽप्युपलक्षणमेतत् । राज्यमिति । पुरोहितादित्वाद्यक् ।

संयोगादिश्च । 'इनण्यनपत्ये' इत्यत 'इनणी'ति वर्त्तते । 'अनपत्ये' इति च निवृत्तम् । तदाह—इनिति ।

ब्राह्मो । एकयोगत्वे ब्राह्मणो न सिद्ध्येत् । 'अन्' इति तु 'न मपूर्व' इति निषिद्धमत आह—योगविभाग इति । निपातनस्याऽसाधारणं क्व प्रयोजनमित्यत आह—अनपत्ये इति । 'ब्राह्मो नारद' इत्यादावपत्ये तु 'न मपूर्व' इति प्रकृतिभावनिषेधाट्टिलोपः सिद्धः । न्याय्यस्तु परत्वादयमेव । उदाहृतश्च कैयटेन । एवं चाऽत्र निपातनसामर्थ्यात् 'अपत्ये' इति न सम्बध्यते इति तत्त्वम् । ध्वनितं चेदं भाष्ये । 'अजातौ' । 'अ' इति पृथक् पदम् । अत्र मण्डूकप्लुत्या 'अपत्ये' इति सम्बध्यते । तदाह—अपत्ये जाताविति । जातौ किम् ? । 'ब्राह्मो नारदः' । औक्ष्ण इति ।

ननु प्रकृतिभावादल्लोपोऽपि न स्यादत आह—षपूर्वेति । ताक्ष्ण इति । 'तक्ष्णोऽण उपसङ्ख्यानमि'त्यण् । ताक्ष्ण्य इति । कारिलक्षणो ण्यः ।

क्षत्राद्घः । 'घ' इति स्वरूपग्रहणम्, न तरप्तमपोः, व्याख्यानादित्याहुः[2] । लिङ्गादिति । अन्यथा प्रत्ययविधौ तदन्तविधिनिषेधात्तद्व्यर्थं स्यादितिभावः ।

आढ्यकुलीन इति । तथा च ईकार उदात्तः, कुले च आढ्यत्वप्रतीतिः । 'कुलीन'शब्देन समासे तु तदप्रतीतिरिति भावः ।

बहुकुल्य इति । बहुच्प्रत्ययः । पक्षे ख इति । तेनाऽऽदिवृद्धिरहितमपि[1]

---

१ इतोऽग्रे—'शिवादित्वात्तस्येदमिति वाऽण्' इति ग. घ. पाठः ।

२ इतोऽग्रे—'जातावेव । क्षात्रिरन्यः' इति ग. घ. पाठः ।

[1]शत्रुरिति। 'अपत्ये' इति तु कल्पितार्थेनाऽन्वाख्यानमात्रमिति भावः। पाप्मा-पापम्। तस्य[2] चेतनधर्मशत्रुत्वाऽसम्भवादाह—उपचारादिति। स्वस्रीय-श्वशुर्य-भ्रातृव्येषु अनन्तरेष्वपि गोत्रत्वाऽऽरोपो बोध्यो भाष्यनये। 'सपत्न'शब्दोऽव्युत्पन्नं प्रातिपदिकं शत्रुपर्यायः[3]। स च 'लघावन्ते' इत्यनेन मध्योदात्तः। 'सपत्ना-अयते' इत्यादौ 'सपत्ना' इति 'स'शब्देऽवग्रहस्तु पदत्वाऽभावेऽपि, सम्प्रदायाऽनुरोधात्। अत एव 'इन्द्राग्नी पपिवांसमि'-त्यत्र 'पपी'त्यवगृह्णन्ति। 'पदाऽवयवपदस्यैवाऽवग्रह' इत्युत्सर्गः।

यत्तु 'सपत्नीशब्दादिवार्थेऽलप्रत्ययः, अत एव निपातनात्। लित्स्वरेण मध्योदात्तः। नान्ते तु नाऽवग्रहः। अलमाश्रित्य भत्वादि'त्याहुः। तन्न। 'लघावन्ते' इत्येव सिद्धे, लित्त्वस्य फलाऽभावात्। 'भस्याऽढे' इत्यत्र 'सपत्न'प्रकृतिकतायाः 'सपत्नी'शब्देऽङ्गीकाराच्च। तेन रूपेण ततो बोधाऽभावाच्च। 'सह युद्धाय पतती'ति विग्रहे पतेर्नल्प्रत्ययः, सहस्य सादेशश्चे'त्यपि वक्तुं शक्यत्वाच्च। 'अङ्गस्ये'त्यनुवृत्तं पञ्चम्या विपरिणम्यते। तदाह—अङ्गादिति। ठस्येति। अत एवाऽठचष्टुस्य न। स्थानिषु

१ 'भ्रात्रपत्यत्वविशिष्टशत्रुरित्यर्थः' इति ग. घ. पाठः।

२ 'तस्याऽपत्यत्वाऽसम्भवात्' इति ग. घ. पाठः।

३ 'ननु शत्रुमात्रं 'भ्रातृव्य'पदेनोच्यते, न च सर्वोऽपि भ्रात्रपत्यमिति चेन्न। प्रकृतेः केवलसाधुत्वार्थत्वात्, 'रैपोषं पुष्णाती'तिवत्। अत एव प्रकृति-प्रत्यययोरुभयोरनर्थकत्वम्। 'अपत्यमि'ति तु नैव सम्बध्यते। 'समुदायाऽर्थः सपत्न' इति भाष्ये पक्षाऽन्तरमुक्तम्। न च 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राऽधिकार' इति पक्षे स्वस्रीयभ्रातृव्ययोरर्थाऽसङ्गतिः, ताभ्यामनन्तराऽपत्यस्याऽप्यभिधानादिति वाच्यम्। गोत्रत्वाऽऽरोपेणाऽक्षतेः। अत एव 'भ्रातृव्य'-शब्दादिभ्योऽनन्तराऽपत्यवाचकेभ्योऽपि यूनि प्रत्ययो भवति। 'उदीचां वृद्धादि'ति च नेत्याहुः। स्पष्टं चेदं भाष्ये। सपत्नशब्दोऽव्युत्पन्नं प्रातिपदिकं शत्रुपर्यायः' इति ग. घ. पाठः।

अकारोऽविवक्षितः, आदेशे च विवक्षित एवेति निरूपितं 'रषाभ्यामि'ति सूत्रे । 'अङ्गस्य निमित्तं यष्ठ' इति त्वाकरे व्याख्यातम् ।

गोत्र स्त्रियाः । 'गोत्रे'ति लुप्तपञ्चम्यन्तं पृथक्पदम् । अत एवोत्तरसूत्रे तावत एवानुवृत्तिः सङ्गच्छते । अस्याऽपत्याधिकारस्थत्वादत्र पारिभाषिकं गोत्रम् । गार्ग्या इति । पितुरज्ञाने मात्रा व्यपदेशात्कुत्सा । पुंवद्भावादिति । 'भस्याऽढे' इति भावः । अत एव 'गार्ग्यायण्या अपत्यमि'ति ष्फाऽन्तेन विग्रहेऽपि न दोषः । 'वृद्धिनिमित्तस्ये'त्यादिनिषेधस्तु सौत्रस्यैव । न 'भस्याऽढे' इत्यस्येति भावः । पुंवद्भावश्च प्रत्ययोत्पत्तेः प्रागेवेति ध्वनयन्नाह—गार्ग्यशब्दादिति । णस्य णित्त्वं तु 'ग्लुचुकायन्या अपत्यं ग्लौचुकायन' इत्यादौ वृद्ध्यर्थं बोध्यम् । न च 'ग्लुचुकायनी'शब्दात् 'फेश्छ चे'ति शङ्क्यम् । 'वृद्धादि'त्यनुवृत्त्या फिञ एव तत्र ग्रहणात् । असौवीरत्वाच्च । तथा च 'शेषे' इति सूत्रे भाष्यम्—'न च फिञन्तं सौवीरगोत्रमस्ती'ति ।

स्त्रियाः किम् ? । औपगवस्याऽपत्यं युवा औपगविः । प्रकरणादिगम्याऽत्र कुत्सा । गोत्रेति किम् ? । कारिकेयः । कुत्सने किम् । गार्गेयः ।

वृद्धाट्ठक् । 'सौवीरेष्वि'ति प्रकृतिविशेषणम् । इदं च 'यूनि लुक्'-सूत्रे भाष्ये स्पष्टम् । तत्र हि तत्सूत्रप्रयोजनकथनाऽवसरे 'सौवीरगोत्रेभ्यो ण-ठक्-छाः प्रयोजनमि'त्युक्तम् । अत्र 'गोत्रे'त्येवाऽनुवर्त्तते, न तु 'स्त्रिया' इति । व्याख्यानात् । 'वृद्धादि'ति चिन्त्यप्रयोजनम् । न च फिञन्तव्यावृत्त्यर्थं तत् । असौवीरत्वात् । भागवृत्ति-तार्णबिन्दवा-ऽऽकशापेयेभ्योऽन्यत्राऽस्य ठको बाहुलकेन वृत्तिकारैरप्रवृत्तिकथनाच्च । एतेन 'वृद्धसंज्ञासूत्रमिहैवोपन्यसितुं युक्तमि'त्यपास्तम् ।

फेश्छ च । फिञन्तस्य सौवीरगोत्रस्याऽभावादाह—[२]फिञन्तादिति । तैकायनिरिति । असौवीरो ह्ययम्, सौवीरश्च । तेनाऽत्र प्रत्युदाहरणत्वं,

---

१　इतोऽग्रे—'इत्याशयेनाह-वृद्धात्सौवीरगोत्रादिति' इति ग. घ. पाठः ।

२　'फिञन्तादिति । स्पष्टं चेदं 'शेषे' इतिसूत्रे भाष्ये' इति ग. घ. पाठः ।

'तैकायनीय' इति भाष्योदाहृतं च सङ्गच्छते। यत्तु 'यामुन्दायनि-सुयामायनि-वार्ष्यायणिभ्यस्त्रिभ्य एव फिञन्तेभ्यश्छ' इति वृत्तिकृत्, तत्तु 'यूनि लुक्'सूत्रेभाष्ये 'तैकायनि'शब्दादप्यस्य छस्योदाहृतत्वादयुक्तम्।

फाण्टाहृतिमिमता। अत्राऽपि 'सौवीरगोत्रे'इति सम्बध्यते। तथा च 'वृद्धाट्ठक् सौवीरेषु' इति सूत्रे भाष्यम्–'गोत्रस्त्रिया' 'वृद्धाट्ठक्', 'फेश्छ च' 'फाण्टाहृति' इमे चत्वारो योगाः। एषां त्रयः कुत्सने, त्रयः सौवीरगोत्रे। आद्यः कुत्सने एव, अन्त्यः सौवीरगोत्रे एवे'ति। तस्य च फाण्टाहृतिनैव सम्बन्धो, न मिमतेन, बाधात्। अत एवाऽल्पाच्तरस्याऽपि मिमतस्य न पूर्वनिपातः[1]। वृत्तिरिति। अत्राऽरुचिबीजन्तु परनिपातस्याऽन्याऽर्थत्वम्। किञ्च भाष्यविरोधोऽपीत्याह—भाष्ये त्विति।

न च एतन्मते णस्य णित्त्वं व्यर्थम्, वृद्धेः स्वत एव सत्त्वात्। 'फाण्टाहृताभार्य'स्तु नाऽस्त्येव। स्त्रियां युवसंज्ञाऽभावात्। 'एको गोत्रे' इति नियमाच्च स्त्रियां णप्रत्ययस्यैवाऽभावादिति वाच्यम्। भाष्ये एव स्पष्टं प्रत्याख्यातत्वेनेष्टाऽऽपत्तेः[2]।

कुर्वा। वक्ष्यमाण'कुरुनादिभ्य' इति तद्राज-ण्याद्विशेषं दर्शयति—कौरव्या इति। तस्य हि बहुत्वे लुक् स्यादिति भावः। किञ्च तत्र 'क्षत्रियादि'त्यधिकृतम्, ( कुरवः[3] क्षत्रिया इति )। तद्ध्वनयन्नाह—ब्राह्मणा इति। वावदूक्य इति। 'वदेर्यङन्तादूकः, अत्र गणे 'वावदूके'ति पाठसामर्थ्यादि'ति माधवः। 'उलूकादयश्चे'त्युणादिसूत्रेणे'त्यन्ये।

१ इतोऽग्रे—'द्वन्द्वस्तु सौत्रत्वाद् बोध्यः' इति ग. घ. पाठः।

२ इतोऽग्रे—'यदि तु णित्वसामर्थ्यादेवैको गोत्रे इत्यस्य बाधः, तद्धितान्तात्तद्धिते यूनि जातिकार्योऽभावश्च, अत एव 'जातेश्चे'त्यनेन न सिद्धिः, अत एव फाण्टाहृतायां न ङीषिति, तदाऽस्तु तदर्थं णित्वं, यदि भाष्यानुग्रह' इति ग. घ. पाठः।

३ अयं ग. घ. पाठः। मनोरमायां च दृश्यते।

सम्राज इति—गणसूत्रम् । कुर्वादिराकृतिगणः । अत्र वार्त्तिकम्,- 'वामरथ्यस्य कण्वादिवत्स्वरवर्जं कार्यमि'ति । 'ण्यान्तवामरथस्य यञन्तकण्वादेरिव कार्यं स्यात्, आद्युदात्तस्वरं विने'ति तदर्थः । तेन वामरथ्यस्य च्छात्रा वामरथाः । 'कण्वादिभ्य' इत्यण् । 'वामरथा' इति बहुषु लुक् । इत्यादि सिद्ध्यतीतिदिक् । हारिषेण्य इति । षत्वणत्वयोरसिद्धत्वात्सेनान्तोऽयम् । प्राग्देशीयोऽऽचार्यमतेनेदम्[1] उदीचान्तु अवृद्धेभ्य इञ्, वृद्धेभ्यस्तु-परत्वात् 'उदीचां वृद्धादगोत्रादि'ति फिञिति बोध्यम्[2] ।

तक्ष्णोऽण इति । 'उदीचामि'त्येव । इञोऽपवादः । अस्मादुपसङ्ख्यानाच्छिवादिषु 'तक्षन्'शब्दपाठो वृत्तिकारादीनामनार्ष इत्याहुः ।

यदपि[3] वृत्तावुक्तं-'तक्षनः शिवाद्यण् कारिलक्षणमुदीचामिञं बाधते । ण्यस्य तु बाधा नेष्यते' इति । तन्न । बाध्यसामान्यचिन्तायां सर्वबाधाऽऽपत्तेः । विशेषचिन्तायान्तु 'पुरस्तादि'ति न्यायेन ण्यस्यैव बाधाऽऽपत्तेरित्याहुः । 'षपूर्वे'त्यलोपः । पक्षे इति । प्राचां मते इत्यर्थः ।

तिकादि । 'अयमाकृतिगण' इति गणरत्नकृत् । 'तिक आस्कन्दने' । 'तिक्नोतीति तिकः' । इगुपधत्वात्कः । परमप्रकृतेरिति । कोशलशब्दात्, कमारशब्दाच्चेत्यर्थः । विकृतनिर्देशस्तर्हि व्यर्थः स्यादत आह—प्रत्ययेति ।

सूत्रे 'कौशल्यकार्मार्ये'ति कौशाल्यायन्यादिप्रयोगे श्रूयमाणप्रकृतिभागाऽनुकरणमिति बोध्यम् । आयन्नादेशोत्तरं प्रत्ययस्य युडागमो

---

१ 'प्राचां मतेनेदम्' इति ग. घ. पाठः ।

२ 'फिञिति वक्ष्यते । 'ऋष्याद्यणो जातोग्रविष्वक्भीमेभ्यः सेनान्ताण्ण्यो भवति विप्रतिषेधेने'ति 'ऋष्यन्धके'त्यत्र भाष्यम् । 'जातसेन्यः' 'औग्रसेन्यः' 'वैष्वक्सेन्यः' 'भैमसैन्यः । उदीचां त्विञ् एभ्यः' इति क. कुण्डलितः, ख. ग. घ. ङ. पाठः ।

३ 'यदपि वृत्तावुक्तम्' इत्यारभ्य 'षपूर्वेत्यल्लोपः' इत्यन्तः ख. घ. पाठो मनोरमास्थत्वात् क. कुण्डलितः ।

निपात्यते । अन्यथा प्रत्ययादित्वाऽभावात्स न स्यादिति बोध्यम्[1] । स्पष्टं चेदं भाष्ये ।

कौशलस्याऽपत्यमिति । 'कुशलस्याऽपत्यमि'ति तु क्वाचित्कोऽपपाठः । 'सूत्रे दन्त्यपाठ' इत्यन्ये । छागेति । अपिना दगोरपि । तेषामपि प्रत्यय-सन्नियोगेन छाग्य वृष्य-दगव्या बोध्याः । स्पष्टं चेदं भाष्ये ।

कथन्तर्हि 'कौशल्यायनिवल्लभामि'ति भट्टिः । न हि रामः कोशलस्या-ऽपत्यम् । अत्राहुः—'इतो मनुष्ये'ति ङीषन्तात् 'कौशल्यायनी'शब्दाद्यूनि ढक् । तस्य 'अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम्' (२-४-५८) इति लुक् । 'लुक्तद्धितलुकी'ति ङीषो लुगिति । कार्त्रायनिरिति । 'कर्त्तुश्छात्रः कार्त्रः, तस्याऽपत्यमि'ति विग्रहः । यत्तु 'कर्त्तुरपत्येऽणि'ति । तन्न । 'कर्त्तृ' 'हर्त्तृ' इति कुर्वादिगणे पाठात् ।

अत्र 'त्यदादीनां वा फिञ्वाच्यः' । 'त्यादायनिः । त्याद' इति ग्रन्थः क्वचित्पुस्तके दृश्यते, सोऽग्रन्थः । 'त्यदादीनि चे'त्यनेन तेषां वृद्धत्वात्, 'उदीचां वृद्धादि'त्यनेनैव सिद्धत्वात् । 'अत इञि'ति सूत्रस्थ-भाष्यविरोधाच्च । तत्र हि वृद्धात्फिञः 'त्यादायनिरि'त्यवकाशो दर्शितः ।

दाक्षिरिति । 'दक्ष'शब्दोऽत्र प्रौढवाची केवलयौगिकः । तेन 'वा नाम-धेयस्ये'ति पक्षेऽपि न वृद्धत्वम् । नामधेयत्वे तु वृद्धात्पक्षे फिञ्भवत्येव । 'दाक्षायण्योऽश्विनीत्यादी'त्यमरः । औपगविरिति । यूनि-इञेवेति भावः ।

वाकिनादीनाम् । 'चर्मि-वर्मिणोर्नलोपश्चे'ति गणसूत्रम् । न च प्रत्ययस्य कुटेवाऽस्तु, एवं च नलोपाऽर्थं वचनमपि माऽस्त्विति चेन्न । 'चर्मिणी'प्रभृतिभ्यां लिङ्गविशिष्टपरिभाषया प्रत्यये, 'भस्याऽढे' इति पुंवद्भावाऽनापत्तेः । कादित्वेन प्रत्ययस्य, तस्मिन्भत्वाऽभावादिति कैयटः ।

यदिह वृद्धम् अगोत्रम्, ततः फिञि सिद्धे, आगमार्थमेवेदम् । अन्येषां

---

१ 'इति बोध्यमित्यन्ये' इति लघुशेखरे पाठः ।

२ इतोऽग्रे—'स्पष्टं चेदमेको गोत्रे इति सूत्रे कैयटे' इति ग. घ. पाठः ।

तूभयाऽर्थम् । 'उदीचामि'त्यनुवर्त्तते । तदाह—वेति । 'वृद्धादि'त्यनुवर्त्तते इत्याशयेनाऽऽह—वा फिञ्सिद्ध इति । अत्र मानं चिन्त्यम् ।

प्राचामवृद्धात् । 'प्राचाम्'ग्रहणं पूजाऽर्थम् । अवृद्धात्किम् ? । 'राजदन्तिः' । 'बहुल'ग्रहणान्नेह—'दाक्षिः' । स्पष्टं चेदम् 'अत इञि'ति सूत्रे भाष्ये । 'वा नामधेयस्ये'ति वृद्धत्वस्य वैकल्पिकत्वात्तदभावे प्राप्ति'रिति कैयट. । प्रौढवाचिन्यपि प्राप्तिर्बोध्या ।

मनोर्जातौ । जातौ किम् ? । मानवीप्रजा । 'कुत्सितमूढाऽपत्येऽण्, णत्वं च' । 'माणवः' । अनधीतवेदत्वान्मूढत्वम्, विहिताऽननुष्ठानाच्च कुत्सा । इदं च 'ब्राह्मणमाणवे'ति निर्देशात्सिद्धमित्याहुः । 'मानुषाः' इत्यत्र बहुत्वे 'यञञोश्चे'ति लुक्तु न । प्रवराऽध्यायप्रसिद्धगोत्रत्वाऽभावात्[1] ।

जनपद । 'जनपदवाचकः सन्, यः क्षत्रियवाचक' इत्यर्थः । जनपदेति किम् ? । द्रुह्योः–द्रौह्यवाः । अत्राऽणेव । पञ्चालादयो हि जनपदे बहुवचनान्ता एव, क्षत्रिये एकवचनाऽन्ता अपि, सर्वथाऽपि प्रातिपदिकस्योभयवाचित्वमक्षतमेव । तत्र बहुवचनान्तान्न प्रत्ययः । वृत्तावभेदैकत्वसङ्ख्याया औत्सर्गिकत्वात्[2] ।

क्षत्रियसमानेति । 'क्षत्रियवाचकशब्देन समानो यः शब्दो जनपदवाचकस्तस्मात्[3]षष्ठीसमर्थाद्राजन्यर्थेऽपत्यवत्प्रत्यय' इत्यर्थः । 'अवृद्धादपी'ति वुञोऽपवादः । पूरोरिति । स हि केवलक्षत्रियवाची । तत्राऽणि सिद्धे, तद्राजसंज्ञाऽर्थं वचनम् । जनपदवाचित्वे तु 'द्व्यञ्मगधे'त्येव सिद्धं स्यादित्याहुः । पाण्डोरिति । जनपदसमानशब्दक्षत्रियवाची, न

---

१ 'ऋष्यपत्यत्वाऽभावात्' इति ग. घ. पाठः ।

२ 'औत्सर्गिकत्वादिति वदन्ति' इति ख. ग. घ. ङ. पाठः । इतोऽग्रे च 'अत एव तत्संघवाचिभ्योपि न प्रत्ययः–'पञ्चालानामपत्यमि'ति । ध्वनितं चेदं भाष्ये' इति ग. घ. पाठः ।

३ 'यो जनपदवाचकः' इति ख. ग. घ. ङ. पाठः ।

युधिष्ठिरपित्रादिवाची, प्रकरणबाधे मानाऽभावात्। 'जनपदशब्दादि'त्यनेन हि जनपदस्वामित्वेन यः क्षत्रियवाची, प्रत्यासत्त्या तस्यैव ग्रहणात्। तेन तस्याऽपत्ये 'पाण्डव' इत्येव। णित्त्वन्तु[3] 'पाण्डयाभार्य' इत्यादौ 'वृद्धिनिमित्तस्ये'ति पुंवत्त्वप्रतिषेधार्थम्[4]।

साल्वेयं[5]। साल्वेय-साल्वौ अव्युत्पन्नौ देश-क्षत्रियोभयवचनौ, अत्र प्रकरणे सूत्रपाठात्। तद्ध्वनयन्नाह—तस्य राजन्यपीति।

वृद्धेत्। 'इदि'ति तपरकरणात् कुमार्याः—'कौमारः'। जनपदक्षत्रियोभयवाच्यम्।

कुरुना। कुरोर्ण्यल्लक्षणेऽणि[6], नादिभ्योऽञि प्राप्ते इदम्। उदुम्बरादय इति। 'उदुम्बरास्तिलखला, मद्रकारयुगन्धराः। भूलिङ्गाः, शरदण्डाश्च साल्वाऽवयवसंज्ञिताः॥' इति। 'द्व्यञ्मगधे'ति सूत्रस्थभाष्यप्रामाण्यात् बुध-अजमीढ-अजक्रन्दा अपि बोध्याः।

ते तद्रा। तच्छब्देनाऽञः प्राचीनानां न परामर्शः, व्याख्यानात्।

---

१ 'तज्जनपदस्वामित्वेन यो यत्क्षत्रियवाची' इति ख. ग. घ. ङ. पाठः।

२ इतोऽग्रे—'संज्ञाशब्दत्वेन तदपेक्षयाऽस्याऽप्रसिद्धत्वाच्च' इति ख. ग. घ. ङ. पाठः।

३ 'णित्त्वन्तु 'पाण्डो राज्ञी पाण्डया। सा भार्या यस्य पाण्डयाभार्य' इत्यादौ' इति ख. ङ. पाठः।

४ इतोऽग्रे—'अपत्ये तु 'जातेश्चे'त्येव सिद्धमि'ति केचित्। तन्न। अन्वर्थसंज्ञाबलेन राजन्येव प्रत्ययलाभो, न तु राज्ञ्याम्। 'तद्राज्ञी'शब्दादाचक्षाणणिचि पुंवत्त्वेऽपि 'तद्राजा' इति स्याण्णाऽदन्तः, तस्मात् 'जातेश्चे'तिनिषेधाऽनित्यत्वे इदमपि ज्ञापकं बोध्यम्' इति ख. ङ. पाठः।

५ इतोऽग्रे—'सलेर्वः'। सल्वा क्षत्रिया। ततो 'द्व्यच' इति ढक्। साल्वेयः। अणपीष्यते। 'साल्वावयवे'त्यादिनिर्देशात्। उभावपि देशक्षत्रियोभयवचनौ' इति ग. घ. पाठः।

६ 'इदं वचनम्' इति ख. ङ. पाठः।

गोत्र-युवसंज्ञाकाण्डेन विच्छेदाच्च, 'तद्राजा' इति महासंज्ञाकरणाच्चेत्याशयेनाह—अञादय इति । बहुष्वर्थेष्विति । 'बहुत्ववदर्थप्रतिपादकं यत् तद्राजाऽन्तं, तदवयवस्य प्रत्ययस्य लुगि'त्यर्थः । बहुत्ववत्त्वं च आश्रयतयेति बोध्यम् । तेन आङ्गश्च वाङ्गश्च कालिङ्गश्चेति विग्रहे 'अङ्गवङ्गकलिङ्गा' इत्यादौ लुक्सिद्धिः । द्वन्द्वे हि प्रत्येकमन्यसङ्ख्याप्रतिपादकविभक्त्यभावेन बहुत्ववतामेव सर्वेषां प्रतीतेः । युगपदधिकरणवचनतया समाधानन्तु चिन्त्यम् । तस्या अनङ्गीकारात् ।

तदर्थेति । 'तद्राजाऽन्तस्याऽर्थेनैव कृते' इत्यर्थः । 'तावन्मात्राऽन्वयी'ति यावत् । तत्फलम्—'आङ्ग-देवदत्त-यज्ञदत्ता' इत्यादिव्यावृत्तिः । तत्र देवदत्तादावप्यन्वयेन, बहुत्वस्य तदर्थमात्राऽन्वयित्वाऽभावात् । अत एव 'गार्ग्यकाश्यपगालवानामि'ति निर्देशः सङ्गच्छते । गालवे ऋष्यणन्तेऽप्यन्वयेन 'यञञोश्चे'ति लुकोऽप्राप्तेः । 'भृगुवत्साऽग्रायणेष्वि'ति सौत्रो निर्देशः क्वचिल्लोप्यलोपिद्वन्द्वविषये 'तेनैवे'त्यङ्गवैकल्येऽप्यस्य प्रवृत्तिज्ञापक इति भाष्ये उक्तम् । 'तद्राजाऽन्ते'ति व्याख्यानात् 'आङ्गस्याऽपत्यं माणवका अङ्गा' इत्यादौ युवप्रत्ययस्य 'ण्यक्षत्रिये'तिलुकि, युव-

---

१ 'बहुत्ववत्त्वं च न पर्याप्त्याख्यसम्बन्धेन, किन्त्वाश्रयतयेति बोध्यम्' इति ख. ग. घ. ङ. पाठः ।

२ 'भृगुवत्साग्रायणेष्विति निर्देशात्तेनैवेत्यङ्गवैकल्येऽपि क्वचित्प्रवृत्तिर्ज्ञाप्यते । यत्तु 'तेनैवे'त्यस्य 'तज्जातीयेने'त्यर्थः, अपत्यत्वेन साजात्यमिति,-अत्र न दोष' इति । तन्न । 'गार्ग्यकाश्यपगालवानामि'त्यसिद्धेः । वस्तुतस्तु 'बहुत्वे यत्तद्राजान्तमि'त्युक्तेः प्रत्यासत्त्या तद्राजान्ताऽर्थकृताऽपेक्षाबुद्धिविशेषजन्यबहुत्वस्यैव ग्रहणेन 'अङ्गदेवदत्तयज्ञदत्ता' इत्यादौ न । इदमेवाऽभिप्रेत्य भाष्ये 'तेनैवे'ति प्रत्याख्यातम् । भृग्वित्यादिनिर्देशेन क्वचिल्लोप्यलोपिद्वन्द्वविषये प्रत्यासत्तिन्यायलब्धवैकल्येऽपि प्रवृत्तिज्ञापनान्न दोषः' इति ग. घ. पाठः

बहुत्वे वर्त्तमानत्वेऽपि, तद्राजप्रत्ययस्य लुक्सिद्धिः। न च 'गोत्रेऽलुगची'-त्यलुक्[2]। गोपवनादिषु 'गर्गभार्गविका'ग्रहणेन अनेन यून्युपसङ्क्रान्ताऽर्थकस्याऽलुगभावज्ञापनान्न दोषः। तथा हि—'गर्गभार्गवाणां मैथुनिके'-त्यर्थः[3]। गर्गादियञो लुक्। भार्गवाद्वृष्यणन्ताद्युवबहुत्वे 'अत इञ्'। तस्य 'ण्यक्षत्रिये'ति लुक्। ततो भार्गवस्य युवबहुत्वे वृत्तिमाश्रित्य 'अत्रि-भृग्वि'ति प्राप्तलुको निषेधाय गोपवनादिषु पाठः। अन्यथा 'गोत्रेऽलुगची'-त्येवाऽलुक्सिद्धौ वैयर्थ्यं स्पष्टमेव।

न च 'तद्राजाऽन्तं यद्बहुष्वि'त्यर्थे 'आङ्गप्रतिकृतय आङ्गा' इत्यत्र लुगापत्तिः। एवं 'वैदस्याऽपत्यानि बहूनी'त्यर्थे 'विदा' इत्यादौ लुगर्थं 'यञन्तं यद्बहुष्वि'त्यर्थाऽऽवश्यकत्वे, 'वैदप्रतिकृतयो वैदा' इत्यत्राऽपि लुगापत्तिरिति वाच्यम्[4]। गोत्रपद-तद्राजपदोपस्थिता-ऽपत्य-तद्राजार्था-ऽन्य-

१ 'वर्त्तमानस्य' इति ग. घ. पाठः।

२ इतोऽग्रे—'ततोऽजादिप्राग्दीव्यतीयविवक्षाऽभावात्। 'यत्र वर्त्तमानत्वमाश्रित्य यस्य लुक् प्राप्तस्तद्व्यतिरिक्ते प्राग्दीव्यतीयेऽर्थे तत्प्रकृतिको योऽजादिस्तत्रे'-त्यर्थात्। अत एव गोपवनादिषु गर्गभार्गविकाग्रहणं चरितार्थम्। 'गर्गाश्च भृगवश्च गर्गभृगवः, तेषां मैथुनिके'त्यर्थः' इति ग. पाठः।

३ 'तथा हि गर्गाश्च भृगवश्च गर्गभृगवः। तेषां मैथुनिकेत्यर्थः' इति ख.ग.पाठः।

४ 'इतोऽग्रे—'न च वुनोऽजादिप्राग्दीव्यतीयस्य विवक्षामादायाऽलुक्। तस्य समुदायप्रकृतिकत्वेऽपि, भार्गवप्रकृतिकत्वाऽभावात्। यद्वा तेन यून्युप-सङ्क्रान्ताऽर्थे 'विदा' इत्यादौ लुगर्थं 'यञन्तं यद्बहुष्वि'त्यर्थाऽऽवश्यकत्वे, 'वैदप्रकृतयो वैदा' इत्यत्रापि लुगापत्तिरिति वाच्यम्। 'यस्कादिभ्य' इति सूत्रात्पूर्वसूत्रे' इति ग. पाठः। ( इतोग्रे पाठः ५ टिप्पण्यां द्रष्टव्यः )।

५ 'लुगापत्तिरिति वाच्यम्। 'यस्कादिभ्य' इति सूत्रात्पूर्वसूत्रे 'गोत्रे' इत्यप-कृष्य, उत्तरत्र चाऽनुवर्त्य, गोत्रे वर्त्तमानतद्राजाऽन्तादेरवयवस्य लुग्वि-धानान्न दोषः। एषामपत्याऽधिकारादन्यत्र सत्त्वाल्लौकिकमत्र गोत्रम्।

तरगतबहुत्वे एवाऽस्य, अपत्यबहुत्वे एव 'यञञोश्चे'त्यस्य प्रवृत्तेरदोषात्। 'तेनैवे'ति पदेन प्रतिकृतिवारणे तु तत्प्रत्याख्यानपरभाष्यविरोधः। किञ्च तस्य यथाश्रुतत्वे पूर्वोक्ता'ऽङ्गा' इत्यादौ लुगनापत्तिः। 'तज्जातीयेने'त्यर्थे तु उपस्थिततद्राजत्वेनैव सादृश्यग्रहणे, स एव दोषः। 'अपत्यत्वेन साजात्यं ग्राह्यमि'ति चेत्। तदुपस्थापकाऽभावात्तद्ग्रहणाऽसम्भवः। न हि आपत्यत्वं तद्राजानां सामान्यधर्मः, अनापत्येष्वपि ञ्यादिषु तद्राजत्वसत्त्वात्। 'गार्ग्यकाश्यपगालवानामि'त्यसिद्ध्यापत्तेश्च। एतेन वृत्यादौ 'यस्कादिभ्यो गोत्रे' इति प्रकरणविहितस्यैव लुको 'गोत्रेऽलुगची'त्यलुगि'त्युक्तेः प्रागुक्ते'अङ्गा' इत्यादौ नाऽलुक्प्राप्तिरि'ति, 'गर्गभार्गविका'शब्दस्य ज्ञापकत्ववर्णनेन तद्वारणं व्यर्थमि'त्यपास्तम्। 'भूम्नि प्राप्तस्य लुकोऽलुगि'ति

तच्चाऽन्यत्र यद्यपि प्रवराऽध्यायप्रसिद्धस्वरूपम्, तथाऽपि जातिलक्षणवत्, असम्भवात्प्रवराऽध्यायप्रसिद्धत्वस्यागेन इहाऽपत्यमात्रमिति प्रागुक्ते 'अङ्गा' इत्यादौ न दोषः[1]। न[2]चैवं 'कपोतपाका' इत्यादौ 'पूगाञ्ञ्य' इति प्रकरणविहितग्रामवाच्यादिप्रकृतिकस्वार्थिकञ्यादेर्लुगनापत्तिः, गोत्रेऽवृत्तेरिति वाच्यम्। तेषां तद्राजसंज्ञाविधानसामर्थ्येन तेषामप्यावृत्त्या वाक्यभेदेन लुग्विधानात्' इति क. कुण्डलितः ख. ग. घ. ङ. पाठः।

१ अत्र 'आपत्यत्वेन' इत्युचितः पाठः। 'अनापत्येष्वपि ञ्यादिषु' इत्यग्रे पाठात्।

२ 'न हि अपत्यत्वं तद्राजानां सामान्यधर्मः। अनापत्येषु ञ्यादिष्वपि सम्भावितत्वात्। भाष्ये तथैव ध्वनितत्वाच्च। एवञ्च 'गोत्रे' इत्यस्यानुवृत्तिस्तेनेतिपदसत्त्वेऽप्यावश्यकी। एतेन वृत्त्यादौ' इति ग. घ. पाठः।

३ इतोऽग्रे—'अत्रापि 'गोत्रे' इत्यपकर्षेणाऽस्याऽप्येतत्प्रकरणस्थत्वात्। अत एव

1 इतोऽग्रे–'उत्तरत्र ऋषिसन्तानरूपाऽपत्यपरं तत्, 'स्त्रीपुंसाभ्यामि'तिसूत्रस्थभाष्यादित्यन्यत्' इति ग. पाठः।

2 'न चैवं 'कौन्जायना' इत्यादौ ञ्यस्य लुगनापत्तिः, गोत्रे वृत्तेरिति वाच्यम्' इति ग. पाठः।

तत्सूत्रभाष्येण विरोधात् । किञ्च ततो 'बहुष्वि'त्यादेर्यस्कादिसूत्रेऽनुवृत्त्या एकप्रकरणत्वमेव । अत एव पञ्चालाऽपत्ययौगिक-'पञ्चाल'शब्दाद्बहुवचनान्तादणुवप्रत्यये एकत्वे, द्वित्वे वा-'पाञ्चालः', 'पाञ्चालावि'तिप्रयोगसिद्धिः। ध्वनितं चेदं 'जनपदशब्दादि'ति सूत्रे भाष्ये ।

न चाऽत्र 'ण्यक्षत्रिये'ति लुकः सत्त्वेनाऽजादिप्राग्दीव्यतीयाऽभावः। न च विषयसप्तमी, विषयश्च तदर्थबोधनेच्छया भाव्युच्चारणसत्त्वरूपः । लुका विषयाऽपहारात् । अत एव यङ्लुकि अजेर्वी नेति वाच्यम् । प्रत्ययलक्षणेन निर्वाहात् । न च वर्णाऽऽश्रयत्वात्तदभावः । वर्णप्राधान्यविषयकत्वात्तस्य ।

तत्सूत्रे विधिपक्षस्याऽप्यङ्गीकारात् । 'न लुमते'ति तु न । अस्य प्रत्ययोद्देश्यकत्वेऽप्यङ्गोद्देश्यकत्वाऽभावात् । विषयसप्तम्यादिविषयेऽपि प्रत्ययलक्षणप्रवृत्तौ बाधकाऽभावात् । प्रत्ययलक्षणसूत्रस्य नियमाऽर्थत्वेऽपि न दोषः । 'गोत्रेऽलुगची'त्यत्राऽचीत्यस्य हलादिभिन्नलाक्षणिकत्वेनाऽदोषात् । इदमेवाऽभिप्रेत्य भाष्ये 'हलि ने'ति वक्ष्यामो'त्युक्तम् । न च बहुत्वस्य

'भूम्नि प्राप्तस्य लुकोऽलुगि'ति तत्सूत्रभाष्येण न विरोध' इति ख. ग. घ. पाठः, क. कुण्डलितः ।

१ इतोऽग्रे—'तद्राजस्येति प्रकरणे' इत्यनुक्तिस्तु तस्य शब्दमर्यादयाऽलाभात् । 'गोत्रे' इतिपदोच्चारणेनाऽस्य शब्दमर्यादया लाभात्' इति ग. पाठः ।

२ 'अजेर्वी न । लुकि उच्चारणस्य बाधितत्वेन विषयेच्छाया अभावेन, विवक्षितसप्तम्यामपि न निस्तारः, उच्चारणेच्छाया एव विवक्षात्वादिति वाच्यम् । प्रत्ययलक्षणेन निर्वाहात्' इति ख. ग. घ. ङ. पाठः ।

३ 'गोत्रेऽलुगि'त्येव सूत्रं कार्यम् । 'अची'ति च न कार्यम् । 'वा'ग्रहणमनुवर्त्य व्यवस्थितविभाषाऽङ्गीकारेण हल्यप्रवृत्तेः । इदं च 'द्विगोर्लुगि'तिसूत्रे तवाप्यावश्यकमेव । इदमेवाभिप्रेत्य भाष्ये 'हलि नेति वक्ष्यामी'त्युक्तम् । 'फक्फिञोरि'तिसूत्रस्थाऽन्यतरस्यांग्रहणं चाऽनुवृत्तस्य व्यवस्थितविभाषात्वज्ञापकं

विशिष्य निमित्तकोटौ प्रवेशेन प्रधानीभूतस्यैव ग्रहणादेषु लुकः प्राप्तिरेव न, द्व्येकयोरेव विशेष्यत्वादिति वाच्यम् । 'अङ्गानतिक्रान्तः अत्यङ्गः', 'अतिविदः', 'गार्गकुलमि'त्यादौ लुगनापत्तेः । स्पष्टं चेदं प्रकृतसूत्रे, 'यञ-ञोश्चे'ति सूत्रे च भाष्ये । न च प्रकृतसूत्रपठितस्य 'गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुगि'त्यादेर्वार्त्तिकस्य प्रकृतसूत्रो-दाहरणभूताऽऽङ्गादित्यागेनोत्तरसूत्रोदाहरणभूतवैदादिकोदाहरणदाने किं बीजमिति वाच्यम् । विचारस्य, प्रकरणविषयत्वबोधनाऽर्थत्वात् । नैतावता आङ्गादिप्रयोगाऽभावः, तद्विषये 'गोत्रेऽलुगची'त्यस्य प्रवृत्त्यभावो वा कल्पयितुं युक्तः । प्रकृतसूत्रे वार्त्तिकपाठेन प्रकृतविषयताया, उत्तरसूत्रो-दाहरणेनोत्तरसूत्रविषयतायाश्च बोधनात् ।

अस्त्रियां किम् ? । आङ्ग्यः । एवम् 'आङ्गी च, वाङ्गश्च, सौह्मश्चे'ति विग्रहे, 'आङ्गी'शब्देन स्त्रीत्वयुक्ताऽर्थबोधनात्तदणो न लुक् । अन्यस्य तु भव-त्येव—'आङ्गी-वङ्ग-सुह्माः' इति । स्त्रीत्वं प्रधानमेव गृह्यते । तेन 'पञ्चभि-र्वाङ्गीभिः क्रीतः पटः पञ्चवङ्ग' इत्येव । क्रीताऽर्थकस्य ठको लुक् । 'लुक्त-द्धिते'ति ङीपो लुक्[1] । अनेनाऽणो लुक्[2] । स्पष्टं चेदमत्रैव भाष्यकैयटयोः ।

अत एव 'बहुष्वि'त्यत्र बहुवचनम्, 'अस्त्रियामि'त्येकवचनं च सङ्गच्छते । बहुवचनेन बह्वर्थसङ्ग्राहकेणाऽप्रधानस्याऽपि ग्रहणबोधनात् । एकवचनेन च

---

बोध्यम् । न च तक्रकौण्डिन्यन्यायेनाऽजादिप्राग्दीव्यतीयोऽपत्याधिकारविहित-भिन्न एव गृह्यते इति वाच्यम् । तद्राजसूत्रादिस्थभाष्यप्रामाण्येन तक्रकौण्डि-न्यन्यायस्येहाऽनाश्रयणात् । अत एव 'विदानामपत्यं वैद' इत्यादिसिद्धिः । न च बहुत्वस्य विशिष्य निमित्तकोटौ' इति ग. पाठः ।

१ इतोऽग्रे—'पुंवत्त्वं तु न । लुको भावित्वेन, 'न लुमते'ति निषेधात् प्रत्यय-लक्षणाऽभावेन च तदप्रवृत्तेः । ततोऽनेनाऽणो लुक्' इति ग. पाठः ।

२ 'तेनाऽणो लुक्' इति ख. ङ. पाठः ।

प्रधानस्यैवेति बोध्यते इत्यलम् ।

कथमिति । बहुत्वे लुकः प्राप्तेरिति भावः । 'अतद्राजत्वान्न लुक्' इत्युत्तरम् । कौरव्या इति । अत्र 'कुरुनादिभ्य' इति ण्यः ।[1]

रघूणामिति । रघु-यदुशब्दयोर्जनपदसमानशब्दत्वाऽभावादिति प्रश्नः ।[2]

लक्षणयेति । नन्वेवं 'बाभ्रव्य' इत्याद्यर्थे 'बभ्रुरि'त्यादीनामसाधुत्व-प्रतिपादनपरं 'परश्चे'ति सूत्रस्थं भाष्यं, कैयटश्च विरुध्येतेति चेन्न । 'लाक्षणिकत्वमनादृत्य शक्तिभ्रमप्रयुक्तेऽसाधुत्वमि'ति तदर्थात्[3] । प्रत्यया-नान्तु प्रकृत्युद्देशेनैव विधानात्केवलानां न लक्षणयाऽपि साधुत्वमित्याहुः ।

परे तु-'व्याकरणशास्त्रस्य साधुत्वबोधकत्वेन 'तस्याऽपत्यमि'त्यादिना 'तत्सम्बन्ध्यपत्यमि'त्यर्थे प्रत्ययाऽन्तस्य, अपत्यादिघटितसमासस्य च साधुत्वबोधनेन, केवलप्रकृतेस्तदर्थे लक्षणयाऽप्यसाधुत्वमेवोचितम् । 'लक्षणये'त्यस्य च रघुत्वाद्यारोपेणेत्यर्थ उचितः । एवं च रघुत्वेनैन ततो बोध इति नाऽसाधुता । 'तत्सम्बन्ध्यपत्यमि'त्यर्थे त्वसाधुतैव ।

अयमेव 'परश्चे'ति सूत्रस्थभाष्याऽऽशयः । अत एव 'पुंयोगादि'तिसूत्रे 'कथं पुमाख्या स्त्रियां वर्त्तते' इत्याशङ्क्य, 'तस्येयमित्यभिसम्बन्धादि'-त्युक्त्वा, एवं हि 'तस्येदमि'ति प्राप्तस्य लुग्वक्तव्यः, अन्यथा स[4] प्राप्नोती'ति

१ इतोऽग्रे—'एवञ्च 'पाञ्चालीरतिक्रान्तोऽतिपञ्चाल'इत्येव । 'पाञ्चालीनां कुलम् पञ्चालकुलमि'त्येव । एवं 'गार्गीरतिक्रान्तोऽतिगर्गः', 'गार्गीणां कुलम् गर्ग-कुलमि'त्येवेत्युक्तम्' इति ग. घ. पाठः ।

२ इतोऽग्रे—'तेषां शौर्याऽभावद्योतनाय तन्मूलपुरुषकुरौ अक्षत्रियत्वारोपा-दित्यपि कश्चित्' इति ग. पाठः ।

३ इतोऽग्रे-'इष्यते हि गोणीशब्दस्य गौण्या वृत्त्या साधुत्वम् । न चैवं प्रत्यय-मात्रस्यापि लक्षणया प्रयोगापत्तिः । प्रकृत्युद्देश्येनैव तेषां विधानेन, केवला-नामसाधुत्वादित्याहुः । कम्बोजात् । अबह्वर्थमिदम्' इति ग. पाठः ।

४ 'स न प्राप्नोतीति' इति ख.-ङ. पाठः ।

तद्दूषयित्वा, सोऽयमित्यभिसम्बन्धेन प्रष्ठत्वाऽऽरोपेण सोधितमित्याहुः ।

कम्बोजात् । [2]अबह्वर्थमिदम् । केरल इति । एवं यवन-मुरल-खस-जर्त्त-विड-पाप, आङ्पूर्वो धारयँ[3]श्चेति । सिन्धुतक्षेति । कम्बोजस्य सिन्ध्वादिषु पठ्यमानत्वादिति भावः । अवन्ती, कुन्ती, कुरूरिति । ञ्यङ्-ण्ययोर्लुकि 'इतो मनुष्ये'ति, 'ऊङुत' इति च ङीषूङौ । तयोस्तु न लुक्, अनुपसर्जनत्वात्, लुक्प[4]रत्वाऽभावाच्चेति 'लुक्तद्धिते'तिसूत्रे भाष्यकैयटयोः स्पष्टम् । 'अदन्ततद्राजस्ये'त्यर्थेऽवन्तोत्यादेर्वैयर्थ्यं स्यात्, 'आम्बष्ठ्या' 'कौशल्ये'ति च न सिद्ध्येदत आह—तद्राजस्याऽकारस्येति । तद्राजेनाऽकारो विशेष्यते । तेन न तदन्तविधिः । तपरकरणन्तु स्पष्टाऽर्थमिति भावः । स्त्रियामित्यस्य-'स्त्र्यपत्याऽर्थकस्ये'त्यर्थः ।

शूरसेनीति । अञो लुकि 'जातेर'ति ङीष् । [5]भर्गादित्वं वेति । 'पुंयोगलक्षणो ङीषि'त्यँ[6]न्ये । एते प्राच्या इति । प्राच्याः क्षत्रिया इत्यर्थः ।

कारूशीति । कृञ उः, 'करुः' । तं वँ[7]ष्टि । मूलविभुजादित्वात्के 'करूशः' । एतेन 'करूषे'ति मूर्धन्यपाठः प्रत्युक्तः । लुकि त्विति । 'ञ्यादयस्तद्राजा' इत्युक्तेरस्याऽञस्तद्राजत्वमिति भावः । ङीपीति । योपधत्वान्न ङीष् ।

---

१ 'साधितम् । यत्तु तत्रैव भाष्ये-'पुंयोगादाख्यायामि'त्येतत्सामर्थ्यादीदृशे विषये तद्धिताऽनुत्पत्तिरुक्ता, तत्तु नित्यबाधाऽऽपस्या कैयटेन दूषयित्वा, एतदस्वरसादेव 'सोऽयमित्यभिसम्बन्धेने'त्यवतारितमिति न दोष इति दिक्' इति ख. ङ. पाठः ।

२ 'लक्षणया इष्टे सिद्धेऽपि काम्बोजनिवृत्त्यर्थमिदम्' इति ग. घ. पाठः ।

३ 'आङ्पूर्वो धारयश्चेति बोध्यम्' इति ग. घ. पाठः ।

४ 'लुक्परत्वाऽभावाच्च, प्रातिपदिकत्वाऽभावाच्चेति' इति ख. ग. घ. ङ. पाठः ।

५ 'भर्गादित्वं वेति । भर्गादेराकृतिगणत्वाऽभावाच्चिन्त्यम्' इति ग. पाठः ।

६ 'ङीषिति तूचितम्' इति ग. पाठः ।

७ वश कान्तौ धातोरिदं रूपम् । ग्रहिज्येतिसम्प्रसारणम् । सवर्णदीर्घ इति ध्येयम् ।

'अञ् योऽकार' इति व्याख्यानाच्च न ङीनिति भावः। उदात्तनिवृत्तीति। 'अनुदात्तस्य च यत्रोदात्तलोप' इत्यनेन ङीबुदात्तः स्यादित्यर्थः। सिद्धान्ते त्वञन्तत्वान्ङीनि, आद्युदात्तम्। यौधेयादिग्रहणाज्ज्ञापकादेव पार्श्वमिकानामपि 'अतश्चे'ति लुक्। अन्यथा प्रत्यासत्त्या चातुर्थिकतद्राजानामेव स्यात्। तेन क्षत्रिय-जनपदोभयवाचिनः पर्शुशब्दाद् द्व्यचोऽणि, तस्य 'अतश्चे'ति लुकि, अनेन स्वार्थिकेऽणि, तस्याऽपि लुकि, ऊङि, 'पर्शूरि'त्यादिसिद्धिः।

[२]अणिञो। अत्र पारिभाषिकं गोत्रम्। 'गोत्रावयवादि'तिसूत्रारम्भसामर्थ्यात्। तद्धि अनन्तराऽपत्याऽर्थम्। 'को गोत्रादवयुतः?। योऽनन्तरः। 'दैवदत्त्ये'ति सिद्धान्तभाष्यात्। 'शास्त्रीयगोत्रपृथग्भूते तत्सदृशेऽनन्तराऽपत्यप्रत्ययाऽन्ते विध्यर्थमि'ति तद्भावः। अतिप्रसङ्गस्त्वनभिधानात्कैयटेन वारितः। पारिभाषिकगोत्रग्रहणफलन्तु युवाऽपत्यव्यावृत्तिः।

१ इतोऽग्रे—'ननु प्रत्यासत्त्या चातुर्थिकतद्राजानामेवाऽतश्चेति लुक्, न पार्श्वमिकानामिति, व्यर्थं यौधेयादिग्रहणमिति चेत्। पार्श्वमिकस्यापि ग्रहणज्ञापनार्थं तत्। तेन क्षत्रियजनपदोभयवाचिनः पर्शुशब्दात् द्व्यचोऽणि' इति ग. घ. पाठः।

२ 'अणिञो। अत्र लौकिकं गोत्रम्। तच्च प्रवराऽध्यायप्रसिद्धाऽपत्यप्रत्ययान्तम्। अपत्याऽधिकारादन्यत्रस्थत्वात्। अत एव 'गोत्रावयवादि'ति सूत्रे भाष्ये- 'अवयवशब्द एकदेशवाची। 'गोत्रैकदेशादि'त्यर्थः। अगस्त्याष्टमा ऋषिपुत्रा मुख्यगोत्राणि। तत्सन्तानानि च गोत्राऽवयवाः। अत्राऽर्थे च सूत्रवैयर्थ्यम्, गोत्रत्वादेव सिद्धेरि'त्युक्तम्। तत्र तत्सन्तानानां केषाञ्चिन्मन्त्रद्रष्टृत्वरूपम् ऋषित्वं, केषाञ्चिदनृषित्वमिति च कैयटेनोक्तम्। ततः 'अप्रधानगोत्रे पुणिकाद्यर्थं सूत्रमि'त्युक्त्वा, 'क्रौड्यादिपाठात्सिद्धमि'त्युक्तम्। तदन्तरं-'गोत्रात्पृथग्भूताऽनन्तराऽपत्यग्रहणार्थम्, दैवदत्त्या, याज्ञदत्त्येती'त्युक्तम्। तस्याऽयं भावः—'आरम्भसामर्थ्याच्छास्त्रीयगोत्रपृथग्भूते तत्सदृशेऽनन्तराऽपत्यप्रत्ययान्ते प्रवराऽध्यायाऽप्रसिद्धे विध्यर्थमिदमि'ति। अत एव 'दैवदत्त्ये'त्याद्युदा-

'यद्ययं ष्यङ् प्रत्ययः स्यात्, तर्हि 'औदमेघ्याया अपत्यमि'त्यर्थे ढकि, अल्लोपे, यस्याऽनापत्यत्वाल्लोपो न स्यात् । 'भस्याऽढे' इति पुंवत्त्वं तु 'अढे' इति निषिद्धम् । एवं च औदमेघेयाऽसिद्धिरि'ति भाष्ये उक्तम् ।

स्त्रीप्रत्ययानां स्वार्थे विधानेऽपि, टाबादिवत्स्त्रीत्वद्योतकत्वेनाऽपत्यार्थत्वं वक्तुमशक्यम् । 'यौधेयी'त्यादावञस्तु अत्यन्तस्वार्थिकत्वात् गोत्रत्वमस्त्येवेति, 'शार्ङ्गरवाद्यञ' इति ङीन् भवत्येव । 'आभिजितक'श्च सिद्ध्यति ।

हृतम् । अतिप्रसङ्गस्त्वनभिधानात्कैयटेन वारितः । 'अभिधानलक्षणाः कृत्तद्धितसमासा' इति भाष्योक्तेश्च । एतेन [1]'अत्र सूत्रे शास्त्रीयगोत्रग्रहणमि'त्यपास्तम् । सर्वभाष्याणामेकवाक्यत्वे सम्भवति, विरोधकल्पनाऽनौचित्यात् । न च स्त्रियो न प्रवराऽध्यायप्रसिद्धाः । एतद्भाष्यप्रामाण्येन येऽणिञन्ताः प्रवराऽध्याये प्रसिद्धास्तादृशानां तन्मूलाऽपत्यस्त्रियां वृत्तौ ष्यङित्यर्थान्न दोषः । औदमेधि-वाराहि-कारीषगन्ध्याऽऽदयश्च प्रवराऽध्यायप्रसिद्धाः ऋषिप्रजना, अनृषयश्चेत्याहुः' इति ख. पाठः ।

'अणिञो । अत्र गोत्रशब्देन शास्त्रीयमेव । 'अनार्षयोरि'तिपर्युदासादेव सिद्धे पुनर्गोत्रग्रहणात् । अत एव 'दैवयज्ञी'तिसूत्रं चरितार्थम् । यद्ययं ष्यङ् प्रत्ययः स्यात्तर्हि' इति ग. पाठः ।

१ 'अल्लोपेऽपि' इति ग. पाठः ।

२ इतोऽग्रे—'न च स्त्रियां विद्यमानात्प्रातिपदिकात्स्वार्थे टाबादय इति व्याख्यानेन स्वार्थे ष्यङो विधानान्न दोषः, इञन्तस्य स्वार्थश्चाऽपत्यमिति वाच्यम् । स्वार्थे विधानेऽपि स्त्रीत्वस्य द्योत्यस्यावश्यं सत्त्वेनाऽपत्यार्थत्वाऽभावात् ।

अत एव 'कुमारीतरे'त्यादौ तरबन्ते न ङीप् । तरपस्तद्गतप्रकर्षद्योतकत्वेन तरबन्तस्य वयोवाचकत्वाऽभावात् । 'यौधेयी'त्यादावञस्तु अत्यन्तस्वार्थिकत्वाद्गोत्रत्वमस्त्येवेति 'शार्ङ्गरवाद्यञ' इति ङीन् भवत्येव' इति ग. पाठः ।

३ 'आभिजितक इति च सिध्यति' इति ग. पाठः ।

1 ग. पाठखण्डनमेतत् ।

तत्र हि अपत्याऽणन्ताऽभिजिच्छब्दात् 'अभिजिद्विदभृदि'तिसूत्रेणाऽत्यन्तस्वार्थिके यञि, 'गोत्रचरणादि'ति वुञ्[1], 'आपत्यस्ये'ति यलोपश्च।

[2]ष्यञ आदेशत्वे तु आपत्यत्वं सुलभम्। 'अप[3]त्यस्याऽयमि'ति शैषिकोऽण्[4]। 'औदमेघ्यानां सङ्घः औदमेघः' इति अण् तु लिङ्गविशिष्टपरिभाषया सिद्ध्यति।

किञ्च 'भस्याऽढे तद्धिते' 'सिद्धश्च प्रत्ययविधावि'ति पुंवत्त्वे, इञन्तत्वादेव सः। यकारनिवृत्तिश्च पुंवत्त्वादेवेत्याशयेनाऽऽह–ष्यङादेश इति। अत एव 'अणिञोरि'ति षष्ठीनिर्देशः सङ्गच्छते। न च 'व्रीहिशाल्योरि'तिवदानन्तर्ये षष्ठी। तत्र[5] वृद्ध्याद्यर्थ[6]कित्करणात्–षष्ठी स्थाने' इत्यस्य

१ 'वुञि आपत्यस्येति यलोपः' इति ग. पाठः।

२ 'ष्यञ आदेशत्वे तु स्थानिवद्भावादापत्यत्वं सुलभम्' इति ख. पाठः। 'अत एवौदमेघेयो न सिद्ध्यतीत्यन्नत्यं भाष्यं सङ्गच्छते। आदेशत्वे तु स्थानिवद्भावादापत्यत्वं सुलभम्। अपत्यस्याऽयमिति शैषिकोऽण्। अपत्येऽर्थे शास्त्रेण विधानेन तस्यापि शास्त्रीयत्वात्। आदेशानां स्थान्यर्थेनाऽर्थवत्त्वाच्च। 'औदमेध्यानां संघ औदमेघ' इत्यण् तु 'भस्याऽढे तद्धिते,- सिद्धश्च प्रत्ययविधावि'ति पुंवद्भावे, इञन्तत्वादेव सिद्धः। तत्र यकारनिवृत्तिश्च तत एव सिद्धा। न च 'संघाङ्के'ति सूत्रे ऋषिप्रजनस्यैव गोत्रस्य ग्रहणमिति 'स्त्रीपुंसाभ्यामि'ति सूत्रे सिद्धान्तितम्, एवञ्च कथमत्र प्राप्तिरिति वाच्यम्। तादृशनियमस्य भप्रत्ययमात्रविषयकत्वेनाऽदोषादित्याशयेनाह–ष्यङादेश इति' इति ग. पाठः।

३ 'अपत्यतत्स्वार्थिकेऽयम्' इति ख. ङ. पाठः।

४ इतोऽग्रे—'आदेशानां स्थान्यर्थेनाऽर्थवत्त्वात्। अपत्येऽर्थे शास्त्रेण विधानं, तदपि 'शास्त्रीय'मिति' कश्चित्' इति ख. पाठः।

५ 'व्रीहिशाल्योरि'ति सूत्रे इत्यर्थः।

६ 'वृद्ध्यादिनिमित्तकित्करणात्' इति ग. घ. पाठः।

बाधेऽपि, अत्र तद्बाधे मानाऽभावात् । स्पष्टं चेदमत्र भाष्ये ।[1]

'ये चे तद्धिते' इतिसूत्रस्थे षाष्ठभाष्ये प्रत्ययपक्षो दृश्यते । तत्राऽपि लक्ष्यसिद्धिरप्रत्यूहे'ति मनोरमा । तस्याऽयं भावः–'आपत्यस्ये'ति सम्बन्धसामान्ये षष्ठी । तेन आपत्याऽवयवत्ववत्, आपत्योद्देश्यकाऽवयवत्वरूपसम्बन्धग्रहणेऽपि बाधकाऽभावः । ध्वनितं चेदं कैयटे इत्याहुः ।[2]

नन्वादेशपक्षे 'हस्तिशिरसोऽपत्यं हास्तिशीर्षिः' । बाह्वादित्वादिञ् । 'अचि शीर्षः' । तत इञः ष्यङ् । 'हास्तिशीर्ष्या' । अत्र स्थानिवत्त्वेन शीर्षस्य शिरस्शब्दत्वात् 'ये च तद्धिते' इति शीर्षन्नादेशः प्राप्नोति । 'ये चाऽभावकर्मणोरि'ति प्रकृतिभावाट्टिलोपो दुर्लभ इति चेन्न[3] । प्रकृतिभावविधायके 'अभावे'त्यादिपर्युदासेन प्रत्ययस्थानिकयादेरेवाऽग्रहणेनाऽदोषात्[4] । ङकारो 'यङश्चाबि'त्यादावस्याऽपि ग्रहणाऽर्थः । षकारः सामान्यग्रहणाऽविघाताऽर्थः। अन्यथैकाऽनुबन्धकत्वाद्यस्यैव ग्रहणाऽऽपत्तिः, न तु ष्यङः । न च टापा सिद्धिः । अन्तोदात्तत्वाऽनापत्तेः ।

---

१ इतोऽग्रे—'यद्यपि 'ये च तद्धिते' इतिसूत्रस्थषाष्ठभाष्ये प्रत्ययपक्षोऽपि दृश्यते, तथापि स प्रौढिवादः । प्रकृतसूत्रस्थभाष्यविरोधात् । यत्तु मनोरमायां प्रत्ययत्वपक्षेऽपि लक्ष्यसिद्धिरित्युक्तम् । तस्याऽयं भावः' इति ग. घ. पाठः ।

२ 'ये च तद्धिते' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख.घ.ङ.पाठः । क. कुण्डलितः, मनोरमाशब्दरत्नस्थत्वात् ।

३ 'इति चेन्न । शीर्षादेशसंनिपातेन जातस्य ष्यङस्तदविघातकत्वात् । अजादिप्रत्ययसंनिपातेन जातोपि शीर्षादेशस्तु संनिपातपरिभाषाया अनित्यत्वात्ष्यङादेशं प्रवर्त्तयत्येवेति हरदत्तः । पूर्वोत्तरसाहचर्येणाऽनादिष्टशिरःशब्द एव 'ये चे'त्यत्र गृह्यते' इत्यन्ये । ङकारो यङश्चाबित्यादौ' इति ग. पाठः ।

४ इतोऽग्रे—'हरदत्तस्तु-शीर्षादेशसन्निपातेन जातस्य ष्यङस्तदविघातकत्वात् । अजादिप्रत्ययसन्निपातेन जातोऽपि शीर्षादेशः सन्निपातपरिभाषया अनित्यत्वात्ष्यङादेशं प्रवर्त्तयत्येवेत्याह' इति ख. घ. पाठः ।

अणिञोः किम् ? । 'आर्त्तभागी' । ऋतभागो-बिदादिः ।

ननु ङित्त्वस्य 'यङश्चाबि'त्यादौ विशेषणाऽर्थतयाऽयं तातङ्न्यायेन सर्वाऽऽदेशः स्यादत आह—**निर्दिश्यमानस्येति** ।

कौमुद्गन्ध्येति । अणः ष्यङ् । **वाराह्यायाम्**—इञः ष्यङ् ।

गोत्राऽवय । 'अवयवशब्दोऽबन्तोऽप्रधानवाची । तेनाऽप्रधानं गोत्रं यत् कुलप्रतिष्ठाकरं तद् गृह्यते । तदाह—**गोत्राऽभिमता इति** । 'पुणिक'-'भुणिक' 'मुखरा'ऽऽदयो हि तादृशाः । तद्धि देशविशेषे प्रसिद्धं कुलनाम । पुणिकादयोऽत इञन्ताः ।

'किञ्च–'गोत्रादवयुतम् = पृथग्भूतम्, अनन्तराऽपत्यम्, तदर्थं चेदम् । 'दैवदत्त्ये'ति स्पष्टं भाष्ये । भाष्यप्रामाण्यादर्थद्वयेऽपि सूत्रतात्पर्यम् ।

'क्रौड्यादिभ्य' इति पञ्चमीनिर्देशादत्र प्रत्ययत्वमेवेत्याशयेनाऽऽह—**प्रत्यय इति** ।

**सूतेत्यादि**–गणसूत्रे । 'सूत'शब्दात्, 'भोज'शब्दाच्च प्रत्ययः । सूत्या = प्राप्तयौवना । जातौ 'सूती'त्येव । एवं चाऽक्षत्रिये 'भोजे'त्येव ।

क्रौड्यादिषु 'गौकक्ष्य'शब्दः पठ्यते, तस्य ष्यङन्तत्वेऽपि न सम्प्रसारणम् । 'गौकक्ष्यायाः प्रतिषेध' इति वचनात् । तेन 'गौकक्ष्यापुत्र' इत्येव । क्रौड्यादिराकृतिगणः ।

---

१ 'नन्वयं 'तातङ्'न्यायेय सर्वाऽऽदेशः स्यात् । 'ङिच्चे'त्यस्याऽनन्याऽर्थ-ङित्त्वेष्वनङादिषु चारिताथ्र्यात् । ष्यङो ङित्त्वस्य 'यङश्चाबि'तिविशेषणा-ऽर्थत्वादत आह—निर्दिश्यमानस्येति' इति ख. ग. घ. ङ. पाठः ।

२ 'अवयवशब्दोऽबन्तः । गोत्रादवयुतः = पृथग्भूतः । पर्युदासात्कुलप्रतिष्ठा-करम् ( तत् ) । तदाह' इति ग. घ. पाठः ।

३ इतोऽग्रे—'यदि त्वेषां क्रौड्यादिपाठात्सिद्धिः, तदा पूर्वोक्तभाष्यरीत्याऽस्य सार्थक्यं बोध्यम्' इति ख. पाठः ।

४ इतोऽग्रे—'संज्ञापूर्वकविधेरनित्यत्वात्' इति ख. ग. घ. ङ. पाठः ।

५ इतोऽग्रे—'एवं ततः ष्यङि यङश्चापं बाधित्वा लिङ्गविशिष्टपरिभाषया 'सर्वत्र'-

दैवयज्ञि । 'देवा यज्ञाः = यष्टव्या यस्य, तदपत्यमि'त्यर्थः । 'कण्ठे विद्धमस्ये'त्यत इञ् । 'काण्डेविद्धि' इति पाठान्तरम् । तत्र 'काण्डेन विद्ध' इति 'साधनं कृते'ति समासः[1] । अत एव काण्डस्य एकारः । 'सत्यम् उग्रम् अस्ये'त्यर्थे निपातनान्मुक्[2] । अगोत्राऽर्थमिदमिति[3] । पौत्रप्रभृत्यपत्यभूते प्राप्ते, अनन्तरेऽप्राप्ते, इत्युभयत्र विभाषेयमिति भावः ।

इदं च 'गोत्रावयवादि'त्यस्य पुणिकादिमात्रविषयत्वमि'तिवादिनां मते बोध्यम् । अन्यथा तु प्राप्तविभाषैवेयमिति बोध्यम् ।

इत्यपत्याऽधिकारः ।



ग्रहणाच्चापमिव ष्यङमपि बाधित्वा ष्फ एवेति बोध्यम् । 'सर्वत्र'ग्रहणात्प्राचां मते ष्फ एव । गौकक्ष्यायणीति । स्पष्टं चेदमावट्याच्चेत्यत्र भाष्ये । वस्तुतः' इति ख. ग. घ. ङ. पाठः ।

१ ततोऽपत्ये इञि, 'काण्डेविद्धि' इति रूपमिति बोध्यम् ।

२ ( 'अगोत्रार्थमिदमिति ) । 'अणिञोरि'तिसूत्रे पर्युदासादेव सिद्धे, 'गोत्र'-ग्रहणसामर्थ्यात्पारिभाषिकस्यैव ग्रहणम् । अनन्तराऽपत्यविषय-दैवदत्या-दीनां येषामिष्यते, तेषां क्रौड्यादिषु पाठः कार्यः । 'गोत्रावयवादि'त्यस्या-ऽऽवृत्त्या वा साध्यम् । ध्वनितं चेदं भाष्ये इत्याशयेनाह—अगोत्रार्थमिति । तथा चोभयत्रविभाषेति भावः । इत्यपत्याधिकारः' इति ग. घ. पाठः ।

३ इतोऽग्रे—'प्रवराऽध्यायप्रसिद्धा इमे, ततो भिन्नाश्चेत्युभयत्र विभाषेयमिति भावः । सात्यमुग्रि-शौचिवृक्षी सम्प्रति प्रवराऽध्याये उपलभ्येते । तयोः प्राप्ते, इतरयोरप्राप्ते, इत्येवमुभयत्रविभाषे'त्यन्ये' इति ख. पाठः ।

# अथ रक्ताद्यर्थप्रकरणम् ।

रज्यतेऽनेनेति । करणे घञ् । 'रागवाचकात्तत्करणकरञ्जनकर्मे'त्यर्थे प्रत्यय' इत्यर्थः । 'कौमारे'तिपर्यन्तं 'तेने'ति वर्त्तते । वर्णान्तराऽऽपादनं रञ्जेरर्थः । 'काषायौ गर्दभकर्णावि'ति तु उपमानाद्बोध्यम् ।

देवदत्तेनेति । 'रागादि'त्यस्याऽभावे कर्त्तृतृतीयाऽन्तस्याऽपि ग्रहणं स्यादिति भावः । 'कोपेन रक्तं मुखमि'त्यादौ त्वनभिधानान्ने'ति कैयटः ।

लाक्षारो । 'रोचना'शब्देन समाहारद्वन्द्वः । शकलं-रञ्जनद्रव्यविशेषः । वृत्तिकृत्तु वार्त्तिकस्थौ शकल-कर्दमावपि सूत्रे प्रचिक्षेप । आभ्यामिति । भाष्ये त्वेतन्नाऽस्ति । नील्या इति । नीली-रञ्जनद्रव्यविशेषः ।

अश्विन्यादयः केवलनक्षत्रवाचकाः, तद्युक्तचन्द्रबोधकाश्च । तत्र द्वितीयाः सङ्कल्पवाक्ये प्रसिद्धाः । प्रकृते द्वितीया गृह्यन्ते । आद्याऽर्थेन कालयोगस्याऽव्यभिचरितत्वात् । अप्राप्तिपूर्वकप्राप्तिरूपयोगस्याऽसम्भवाच्च । नक्षत्रशब्दोऽप्येवम् । 'अद्य किं नक्षत्रमि'ति व्यवहारात् । 'नक्षत्रयुक्तचन्द्रमसा युक्त' इत्यर्थे प्रथमात्प्रत्ययो भवति, यो युक्तः स चेत्काल' इति 'नक्षत्रेणे'ति सूत्रस्याऽर्थः । 'पुष्ययुक्तचन्द्र'शब्दात्तु न प्रत्ययः ।

---

१ 'बाहुलकात्करणे घञ्' इति ग. घ. पाठः ।

२ 'प्रत्ययाः' इति ग. घ. पाठः ।

३ 'सिद्धवर्णस्य वर्णाऽन्तराऽऽपादनम्' इति ग. घ. पाठः ।

४ इतोऽग्रे—'अणपवादोऽयम्' इति ग. घ. पाठः ।

५ 'नीली औषधिविशेषः' इति ग. घ. पाठः ।

६ 'तद्युक्तचन्द्रवाचकाश्च । अतः सूत्रे नक्षत्रशब्देन तद्युक्तचन्द्रमा लक्ष्यते' इति ग. घ. पाठः ।

७ 'द्वितीयः' 'प्रसिद्धः' । 'द्वितीयः' 'गृह्यते' इति ग. पाठः ।

८ 'इति सूत्राऽर्थः' इति ख. पाठः ।

अनभिधानात् । सूत्रे लाक्षणिकशब्दग्रहणेन तदर्थलाक्षणिकात्प्रसिद्धादेव प्रत्ययविधानाच्च[1] । नक्षत्रेणेति किम् ? । 'चन्द्रेण युक्ता रात्रिः' । कालः किम् ? । 'पुष्येण युक्तं[2] गगनम्' ।

पुष्येणेति । 'पुष्यसमीपस्थचन्द्रमसे'त्यर्थः ।

लुब । पूर्वसूत्रमनुवर्त्तते । तेन प्रत्यासत्त्या नक्षत्रस्य यावन्तं कालं चन्द्रमसा सम्बन्ध औत्सर्गिकस्तत्कालसम्बन्ध्येव विशेषो गृह्यते । तदाह—षष्टीति । 'तावन्तं कालं ह्येकनक्षत्रस्य चन्द्रमसा सम्बन्धः[3]' इति ज्योतिर्वित्प्रसिद्धेः । तेन 'अद्ये'त्युक्ते 'न ह्यो, न श्व' इति विशेषा[4]ऽवगतावपि, लुप् भवत्येव, तावत्कालव्याप्यविशेषाऽनुक्तेरिति भावः ।

अत्र 'समर्थानां प्रथमादि'त्यस्याऽनन्वयेन 'वे'त्यस्याऽप्यसम्बन्धः । अत एव 'फक्फिञोरि'ति सूत्रेऽन्यतरस्याङ्ग्रहणं चरिताऽर्थम् ।

अद्येति । यद्यप्यद्य वस्त्रं देयमित्यादावधिकरणशक्तिप्रधानमिदम्, तथाप्यत्र शक्तिमत्प्रधानं बोध्यम् । 'राहोः शिर' इतिवत्कल्पितभेदमादाय आधाराऽऽधेयभावोपपत्तिः । इत्थमेव 'अद्यतनमहोरात्रमि'त्यादेरुपपत्तिरि'त्यन्ये । लुपि युक्तवद्भावः ।

'अविशेष' इति प्रसज्यप्रतिषेधः । तेन 'पौषोऽहोरात्र' इत्यत्र समुदायप्रतीतावपि अवयवद्वयरूपविशेषस्याऽपि प्रतीतेर्न लुबि'ति हरदत्तः ।

पौर्णमास्यामिति । अन्यत्र तु 'पुष्यः पञ्चमी'त्याद्येव । अत[5] एवेति । अनेन च 'पौर्णमास्यां लुप् ने'ति ज्ञापिताऽर्थस्याऽनित्यत्वं ज्ञाप्यते ।

---

१ इतोऽग्रे—'सूत्रे लाक्षणिकशब्दोच्चारणात्प्रथमोच्चारितो लक्षणया तत्प्रतिपादको नक्षत्रशब्द एव गृह्यते इति नाऽतिप्रसङ्गः' इति ग. घ. पाठः ।

२ 'पुष्येण युक्तश्चन्द्र' इति ग. घ. पाठः ।

३ 'सम्बन्ध औत्सर्गिक इति ज्योतिर्वित्प्रसिद्धिः' इति ख. ङ. पाठः ।

४ इतोऽग्रे—तत्सूत्रं प्रत्याख्यास्यमानत्वादत्र नोपन्यस्तम्' इति ग. घ. पाठः ।

५ 'अत एव लुबिति । 'पौर्णमास्यामि'ति शेषः । अन्यत्र तु पूर्वसूत्रेणैव सिद्धः' इति ग. घ. पाठः ।

तेन 'श्रावणी' सिद्धा। अबाधकान्यपीति तु वृत्त्यनुरोधेन। न त्विदं युक्तम्। 'बाधकान्येव निपातनानी'ति सर्वादिसूत्रस्थभाष्यविरोधात्।

संज्ञायां श्र। उक्तज्ञापकादेव एतद्विषयेऽपि श्रवणशब्दे युक्तवद्भावाऽभावं इति, अत्र सूत्रे भाष्ये स्पष्टम्। अत एव 'श्रवणा रात्रिरि'त्यादिसिद्धिः।

द्वन्द्वाच्छः। अत्र 'अविशेषे' इति नाऽनुवर्त्तते, अस्वरितत्वात्तदाह—सत्यसतीत्यादि। विशेषे उदाहरणमाह—तिष्येत्यादि। अविशेषे तु—'अद्य तिष्यपुनर्वसवीयमि'ति। छस्य 'लुबविशेषे' इति न लुप्, पूर्वोपस्थिताऽणैव तस्य निराकाङ्क्षत्वात्। एतदेव मध्येऽपवादन्यायेऽपि बीजम्।

कलेर्ढक्। वार्त्तिकमिदम्। 'गोत्रादङ्कवदिष्यते'। 'यथाऽङ्के गोत्रप्रत्ययान्तात्प्रत्ययः, तथा दृष्टे सामन्यपी'त्यर्थः। 'औपगवकम्'–इति भाष्ये स्पष्टम्। 'गोत्रचरणाद्वुञ्'।

अतदर्थे। 'ययतोश्चाऽतदर्थे' इति सूत्रे। 'नञः परस्य य-यदन्तस्योत्तरपदस्याऽन्तोदात्तत्वमि'ति तदर्थः। एवं च अवामदेव्ये अव्ययपूर्वपदप्रकृतिस्वर एव, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य', 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'ति परिभाषयोर्ज्ञापनादिति भावः।

सः = उपात्त एवाऽनुबन्धो यस्य स–तदनुबन्धकः। स चाऽन्यश्चाऽनुबन्धो यस्य सः—अतदनुबन्धकः। तत्र आद्यायाः प्रयोजनम्–'पूरणगुणे'ति सूत्रे तव्यग्रहणेन तव्यद्ग्रहणं मा भूत्। 'दिव औदि'त्यत्र दीव्यतेर्मा भूच्चे'ति। अन्त्यायास्तु–अङ्ग्रहणे चङ्ग्रहणाऽभावः। 'श्वयतेरः', अश्वत्। नेह—अशिश्वियत्।

परिवृतो। 'तेने'ति वर्त्तते। समन्तादिति। भूयोऽवयवाऽवच्छेदेनेत्यर्थः। एवं च 'तदेकान्तग्रहणं कर्त्तव्यमि'ति वार्त्तिकं न कार्यमिति भावः।

१ इतोऽग्रे–'युक्तवदिति। एतदभावश्च सार्वत्रिकः। इदं च 'संज्ञायां श्रवणे'-सूत्रे भाष्ये स्पष्टम्' इति ग. घ. पाठः।

२ 'युक्तवद्भावाऽभावश्चेति' इति ख. घ. ङ. पाठः। क. ग. तु चकारो नास्ति।

'पुत्रैः परिवृत' इति प्रयोगस्तु उपचाराद्बोध्यः। वस्तुतो मूले 'समन्तादि'-त्यादिरग्रन्थः। नास्ति च प्राचीनपुस्तकेषु। मनोरमायां वार्त्तिकेनैव समाधानकरणात्। वार्त्तिकप्रामाण्येन 'परिवृत'शब्दस्य तथाशक्त्यभावा-ऽनुमानाच्च। द्वैपमिति। 'प्राणिरजतादिभ्योऽञ्'। ततोऽणपवादोऽञ्। स्वरे विशेषः।

अपूर्वत्वे इति। 'अपूर्व'शब्दो भावप्रधान इति भावः। तच्च प्रकृत्य-र्थगतम्। 'अपूर्वे'ति च बहुव्रीहिः। पूर्वश्च पतिरेव। रूढेः। तदाह—अपूर्वपतिमिति। अपूर्वपतिरिति च। योग्यतावशात् द्वितीयाऽन्तात्, प्रथमान्ताद्वा 'कुमारी'शब्दात्प्रत्ययः। आद्ये उपयन्तरि प्रत्ययः। द्वितीये तूपयमनविशिष्टे स्वार्थे एव। 'द्वितीयस्य–'कौमारस्य भार्ये'ति पुंयोगङीषा सिद्धिः। अतिप्रसङ्गस्त्वनभिधानाद्वारणीय' इत्यन्ये।

तत्रोद्धृ। 'तत्रे'ति 'साऽस्मिन्नि'त्यतः प्रागनुवर्त्तते। तेनेति। 'निधान-निरूपिताऽधिकरणत्वेने'त्यर्थः। उद्धरणे तु स्थाली अवधिः। भुक्ताऽवशिष्टे ह्येवमुच्यते इत्याहुः। तथा च वृत्तिः–'भुक्तोच्छिष्टो ह्येवमुच्यते' इति। उच्छि-षिश्चाऽवशेषणे वर्त्तते। 'उच्छिनष्टि। न सर्वं जुहोती'ति कल्पसूत्रव्यवहारात्।

व्रते इति। 'व्रतं शास्त्रविहितो नियमः, तस्मिन्समुदायेन गम्ये' इत्यर्थः। अष्टाकपाल इति। 'द्विगोर्लुगि'त्यणो लुक्। तस्यां संस्कृतमिति। भोजनादिरूपोपयोगफला क्रिया संस्कारोऽत्रेति, 'तत्र जात' इतिसूत्रस्थ-भाष्यस्वरसः। 'उख्योऽग्निरि'ति तु भवार्थे दिगादित्वाद्यति साधु।

दध्नेति। संस्कारश्चेह-लवणादिना। यस्तु संस्कृताऽर्थे 'प्राग्वहतेरि'ति ठक्, स तृतीयान्तात्। ततश्च दध्ना संस्कृतोऽपि 'दाधिक' एव[2]। उदकेन

---

१ 'शक्त्यभावात्, मानाऽभावाच्च' इति ख. पाठः।

'शक्त्यभावाऽनुमानाच्च' इति क. ग. ङ. पाठः।

२ इतोऽग्रे—'इसुस्। 'अन्त'ग्रहणं प्रत्ययोपदेशे तान्तकाभाऽर्थम्। तेन 'माथितिक'सिद्धिः। 'इसुसुगि'ति भिन्नं पदं लुप्तपञ्चम्यन्तम्। तेन तकारे-

श्वयतीति । क्विपि तुक् । इहैव सूत्रे निपातनात् सम्प्रसारणाऽभावः । उषेति । वसेः क्विपि सम्प्रसारणे तृतीयान्तमेतत् । न त्विति । अत्र व्याख्यानमेव शरणं वृत्त्यादीनाम् । संज्ञायामितीति । तेन सावनाऽतिरिक्त-मासाऽर्द्धमासयोरेवाऽनेन प्रत्यय इति बोध्यम् । इदं च लौकिकविवक्षाऽनुसारकेति शब्दाल्लब्धम् । वृत्तिकृता तु सूत्रे 'संज्ञायामि'ति प्रक्षिप्तम् ।

पौर्णमासीति । 'महाराजप्रोष्ठपदाट्ठञि'त्यत्र 'तदस्मिन्वर्त्तते' इत्यर्थे पूर्णमासादण उपसङ्ख्यानादण् । प्रज्ञादेरिति । 'साम्नाय्याऽनुजावरे'त्यादि पाञ्चमिकवार्त्तिकं नाऽपूर्वमिति भावः ।

ऐन्द्रमिति । प्रकृत्यर्थस्य देवतात्वमेकार्थीभावबललभ्यम् । अत एव 'यत्तत्प्रथमासमर्थं देवता चेत्से'ति वृत्तौ व्याख्यातम् ।

'देवताऽपि प्रत्ययाऽर्थ एव । प्रकृतिप्रत्ययाऽर्थयोश्चाऽभेदः संसर्ग' इति परे । सर्वमतेऽपि प्रदेये शक्तौ न विवादः । तत्र प्रत्ययात्सम्बन्धित्वेन सामान्यतो बोधेऽपि, तत्तद्विशेषरूपेण बोधाय तत्तत्पदसमभिव्याहारोऽपि आवश्यकः । एवं च 'इन्द्रदेवतासम्बन्धी'ति, 'इन्द्रसम्बन्धी'-

---

णैवाऽन्तपदसम्बन्धः । तेन 'वायुदत्त'शब्दाट्ठचि, 'दत्त'शब्दलोपे, 'वायुक' इत्यादौ कादेशः' इति क. कुण्डलितः, ख. ग. घ. ङ. पाठः ।

१ 'चान्द्रमासार्द्धमाससंवत्सरेष्वेवाऽनेन प्रत्ययः' इति ग. घ. पाठः ।

२ इतोऽग्रे—'देवतात्वं स्वरूपसन्निमित्तम् । एतन्मतमवष्टभ्यैव यत्तत्प्रथमासमर्थम्' इति ख. ङ. पाठः ।

३ 'साऽस्य । 'देवताशब्दोऽत्रैव निपातनात्स्वार्थिकतलन्तः साधुः । ऐन्द्रमिति । 'इन्द्रादिपदानां देवतायां लक्षणे'त्येके । तन्मतमवष्टभ्यैव यत्तत्प्रथमासमर्थं देवता चेत्सा' इति ग. घ. पाठः ।

४ इतोऽग्रे—'देवतात्वं संसर्ग' इत्यन्ये' इति ग. घ. पाठः ।

५ 'आवश्यकः' इति क. नास्ति ।

ति वा बोधः[1] । बहुव्रीहिवदस्यापि सम्बन्धिवाचकता । 'प्रदेये शक्तिरि'-त्युपलक्षणम् , मन्त्रस्याऽपि । तदाह—मन्त्रस्तुत्या चेति ।

एतेन 'जातिवचन'देव'शब्दात्स्वार्थे तलि, सोऽपि जातिविशेषवाचीति, 'ऋतुपित्रुषसो यदि'त्याद्यनुपपन्नम् । तेषु तज्जातेरभावादि'त्यपास्तम् । 'देवता'शब्दस्य मूलोक्ताऽर्थे रूढत्वात्[2] । 'वैश्वदेवं हविरि'त्यादौ 'विश्वेभ्यो देवेभ्यः स्वाहे'त्यादिलिङ्गाद्व्यस्तवाच्यस्यैव देवतात्वेऽपि, तद्धितवृत्तिविषये समासः साधुरिति न दोषः । एवमध्यात्मादित्वाट्ठञि 'वैश्वदेविकमि'-त्यादावपि बोध्यम्[3] । आग्नेय इति । 'अग्न्युद्देशेन ब्राह्मणत्यागाऽभाव' इति शङ्काऽऽशयः । ढगिति । 'अग्नेरयं भक्त' इत्यर्थः ।

'से'त्यनुवर्त्तमाने पुनः 'से'त्युक्तिः संज्ञाऽर्थकेति-शब्दनिवृत्त्यर्था ।

कशब्दस्येति । ब्रह्मणि रूढस्यैवाऽत्र ग्रहणम् । अत एव 'कायाऽनुब्रूही'-त्येव प्रैषः । 'कस्मा अनुब्रूही'ति तु कल्पसूत्रोक्तमार्षम्[4] । 'क-सोमात्[5] ट्यणि'ति तु न कृतम् । परत्वादादिवृद्धावपि, 'यस्ये'ति लोपाऽऽपत्तेः । सकृद्गतिन्यायाऽऽश्रये तु कर्त्तुं शक्यम् ।

श्रायमिति । इदं सप्तमे भाष्ये स्पष्टं वृद्धिप्रकरणे । प्रत्ययसन्नियोगेने-

---

१ 'वा बोधः । नन्वस्येत्यस्य प्रत्ययाऽर्थत्वे केवलः सम्बन्धो वाच्यः स्यात्, प्राधान्यात् , तत्कथं 'प्रदेये शक्तिरि'त्युक्तमिति चेन्न । 'ऐन्द्रं हविरि'त्यादौ सामानाधिकरण्यनिर्वाहाय सम्बन्धविशिष्टे एव शक्तिकल्पनात्, बहुव्रीहिवत् । 'षष्ठ्या अपि सम्बन्धी अर्थ'इतिमते तु न काचिच्छङ्का' इति ख. ग. घ. ङ. पाठः ।

२ इतोऽग्रे—अत एव 'ज्ञो देवताऽस्य स्थालीपाकस्य' इत्यातो युगितिसूत्रस्थ-भाष्यं सङ्गच्छते' इति ग. घ. पाठः ।

३ इतोऽग्रे—'उपचारादप्यस्य साधुत्वमाहुः' इति ग. घ. पाठः ।

४ 'कल्पसूत्रोक्तं चिन्त्यम् । स्पष्टं चेदं भाष्ये' इति ग. पाठः ।

५ 'क-सोमात्' इत्यारभ्य 'कर्त्तुं शक्यम्' इत्यन्तः ख. घ. ङ. पाठः । क. ग. नास्ति ।

ति। 'अपोनप्त्रे स्वाहे'त्यादि तु च्छान्दसम्।

शतरुद्रादिति-वार्त्तिकम्। 'शत'शब्दोऽनन्तवाची। विशेषणसमासः।[2]

अत्र वार्त्तिकाऽन्तरम्—'पैङ्गाक्षीपुत्रादिभ्यश्छस्योपसङ्ख्यानम्'। 'पैङ्गाक्षीपुत्रीयम्' 'तार्णबिन्दवीयमि'ति।

सौमीति। 'हलस्तद्धितस्ये'ति 'य'लोपः।

वायव्यमिति। नन्वत्र ओर्गुणं बाधित्वा परत्वात् 'अकृदि'ति-दीर्घाऽऽपत्तिरिति चेन्न। दीर्घे कृते, 'अङ्गवृत्त'परिभाषाया अनित्यत्वेन, पुनःप्रसङ्गविज्ञानाद्गुणे, 'वान्तो यी'त्यवादेशे, सिद्धेः। यत्तु 'धातुप्रत्यये एव दीर्घ' इति। तन्न। 'लोहितायते' इत्याद्यसिद्ध्यापत्तेः।[3]

एतेन 'अकृदि'त्यत्र 'किती'त्यनुवृत्तेर्न दोष' इत्यपास्तम्।[4] अत एव क्यषः ककारप्रत्याख्यानं भाष्योक्तं सङ्गच्छते इति दिक्।

---

१ 'स्वाहेति तु च्छान्दसम्' इति ख. ग. घ. ङ. पाठः।

२ 'शतशब्दोऽनन्तवाची। 'तद्धिताऽर्थे'ति समासः। न च 'बहुगणे'ति नियमादस्य सङ्ख्यासंज्ञा दुर्लभेति, द्विगुसमासो दुर्लभः, तथा च 'शतश्लोकी'त्याद्यसिद्धिरिति वाच्यम्। 'अर्थाऽन्तरवाचित्वे सति, अनियतसङ्ख्यावाचिनां चेद्भवति, बहुगणयोरेवे'ति नियमाऽङ्गीकारेणाऽदोषात्। 'शत'शब्दो नाऽर्थाऽन्तरवाची, किन्त्वनियतसङ्ख्यावाचित्वमात्रं तस्येत्याहुः' इति ख. ग. घ. ङ. पाठः। क. कुण्डलितः।

३ इतोऽग्रे—'अत एव'ज्यादादीयस'इतिसूत्रस्थमाद्ग्रहणम् 'अङ्गवृत्त'परिभाषाज्ञापकम्। अन्यथा लोपाऽनुवृत्त्या ईकारलोपेनाऽकृदिति दीर्घेण च 'ज्यायानि'त्यस्य सिद्धौ, तद्व्यर्थमेव स्यादि'ति भाष्योक्तं सङ्गच्छते' इति ख. ग. घ. ङ. पाठः। क. कुण्डलितः।

४ 'न दोष इत्यपास्तम्। फलाऽभावाच्च। 'असुने'त्यर्थे छन्दसि 'असूये'त्यत्र दीर्घस्य दर्शनेन, तवाऽपि च्छान्दसत्वाऽऽवश्यकत्वेन 'उरुये'त्यादौ तदभावस्यैव च्छान्दसत्वेन साधयितुं युक्तत्वात्। स्पष्टं चेदं 'लोहिताऽऽदि'-सूत्रे भाष्ये' इति ख. ग. घ. ङ. पाठः। क. कुण्डलितः।

रीङ् । 'अङ्गवृत्त'परिभाषया 'अकृत्सार्वे'ति, 'च्वौ चे'ति दीर्घाऽप्राप्ते-र्दीर्घोच्चारणम् । ईगागमेन यणा सिद्धौ, 'री'विधानं प्रक्रियालाघवाऽर्थम् । 'अनिर्दिश्यमानसर्वाऽऽदेशाऽर्थमि'ति भ्रमवारणाय च ङित्त्वमि'ति सम्प्रदायः ।

केचित्तु 'गम्लृ' इत्यनुकरणात्क्यचि 'गम्रीयते' इति सिद्ध्यर्थं रेफोच्चारणम् । एवं रिङ्यपि तदुच्चारणं तत एवाऽऽचारक्विपि 'गम्रियादि'ति रूपाऽर्थम् । ङित्त्वन्तु चिन्त्यप्रयोजनमेव, निर्दिश्यमानपरिभाषया सिद्धे-रि'त्याहुः । तेषामीदृशप्रयोगाऽभिधाने मानं चिन्त्यम् ।

उषस्यमिति । 'उषस्'शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां वक्ति । एतच्च 'सुपेशसं सुखमि'त्यादिमन्त्रेषु प्रसिद्धम् ।

द्यावापृ । अण्-पत्युत्तरपदण्ययोरपवादौ । शुनासीरीयमिति । 'शुनश्च सीरश्चेति द्वन्द्वः । शुनो-वायुः, सीर आदित्यः' इति वृत्तिः । अन्ये त्वेक एव 'सुनासीर' इति इन्द्रस्य गुणः । 'इन्द्र वयं शुनासीरं हवामहे' इति-मन्त्रवर्णात्, 'इन्द्रो वा शुनासीर' इत्याश्वलायनाच्चेत्याहुः ।

मरुतोऽस्य सन्तीति मरुत्वान्=इन्द्रः । अग्नीषोमीयम् । 'ईदग्नेः सोमे'-तीत्त्वम् । वास्तोष्पतौ-'तत्पुरुषे कृती'त्यत्र बहुलग्रहणादलुक् । कस्कादि-त्वात्षत्वम् । अत एव 'वाचस्पति-दिवस्पती साधू' इत्याहुः ।

'गृहमेध'शब्दोऽदन्तः । 'मरुद्भ्यो गृहमेधेभ्यः' इत्याश्वलायनोऽपि ।

कालेभ्यो । 'कालाट्ठञि'तिप्रकरणे कालविशेषवाचिभ्यो येभ्यः शब्दे-भ्यो भवेऽर्थे येनोपाधिना ये वक्ष्यन्ते ते तथैव तेभ्यः 'सास्य देवते'त्यत्रा-ऽर्थे भवन्ती'त्यर्थः । वत्करणसामर्थ्यात् । तद्ध्वनयन्नुदाहरति-मासिकमि-

१ 'दीर्घोच्चारणमित्याहुः' इति ग. घ. पाठः ।

२ 'अनिर्दिश्यमानम्' इति ख. घ. पाठः ।

३ 'इत्याश्वलायनात्' इति ग. घ. पाठः ।

४ 'ये उक्ताः' इति ग. पाठः ।

त्यादि। 'कालाट्ठञ्' 'प्रावृष एण्यः'। महाराजो-वैश्रवणः। प्रोष्ठपदात्-पूर्वेण नक्षत्राऽणि प्राप्ते वचनम्।

देवताद्वन्द्वे। 'सूक्तहविषोरेवेदमि'ति वृत्तिः। सौमेन्द्र इति। पूर्वनिपातप्रकरणं त्वनित्यमिति भावः। नन्वत्राऽन्तरङ्गत्वादाद्गुणे, पूर्वपदात्-परेन्द्रशब्दाऽभावेन निषेधाऽप्राप्तिः। अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः। 'एकदेशविकृत'न्यायेन विकारविशिष्टस्य पूर्वपदत्वेऽपि, इन्द्रस्याऽनच्कत्वाच्च दोषः। तदुक्तं भाष्ये—'इन्द्रे द्वावचौ, एको नित्येन 'यस्येति'लोपेनाऽपहृतः, पर एकादेशेन, ततोऽनच्क इन्द्रः संपन्न' इति। मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातः। 'वाय्विन्द्रावि'त्यादि-द्वन्द्वः सूक्तहविषोर्नास्त्येवेति चेन्न। अनेनैव निषेधेन पूर्वोत्तरपद-निमित्तकार्यात्पूर्वमेकादेशाऽभावज्ञापनादिति 'अन्तादिवच्चे'ति सूत्रे, विप्रतिषेधसूत्रे च भाष्ये स्पष्टम्। इदं वृद्धिविषयं सूत्रत्रयं 'साऽस्य देवते'त्युत्तरं लिखितुं युक्तम्।

पूर्णमासादिति। यद्यपि 'पूर्णो माः = चन्द्रः, तस्येयमि'ति, 'पूर्णो मासो यस्यामि'ति बहुव्रीहौ प्रज्ञाद्यणि वा 'पौर्णमासी'ति सिद्धम्, तथापि बहुव्रीहौ 'पूर्णमासा' इत्यनिष्टव्यावृत्त्यर्थमिदम्।

---

१ इतोऽग्रे—'किञ्च इन्द्रे इकारस्य आद्गुणेनाऽपहारादन्त्यस्य लोपेनाऽपहारा-दनच्कः स इति वृद्धिप्राप्त्यभावान्निषेधो व्यर्थः। न च मान्तस्यैकदेश-विकृतन्यायेन पूर्वपदत्वमाश्रित्य, एकारविशिष्टस्येन्द्रत्वेन स सार्थकः। तेन न्यायेन 'एकारान्तं पूर्वपदमि'त्यस्याऽप्यापत्तेः। अन्तवद्भावस्तूभयत आश्रयणे निषिद्धः। किञ्च 'परस्येन्द्रस्याऽचामादेरचो वृद्धिर्ने'त्यर्थे आद्यचः प्रत्या-सत्त्या इकाररूपस्यैव ग्रहणौचित्याच्च। न च मरुदादिभिरिन्द्रस्य द्वन्द्वे तत्सार्थक्यम्। तत्रेन्द्रस्यैव पूर्वनिपातात्। 'वाय्विन्द्रावि'त्यादिर्द्वन्द्वः सूक्त-हविषोर्नास्त्येवेति वाच्यम्। अनेनैव निषेधेन पूर्वपदनिमित्तकार्यात्पूर्वम्' इति ख. घ. ङ. पाठः।

२ 'लिखितुम्' इति सर्वादर्शेषु पाठः। 'लेखितुम्' इति तूचितः पाठः।

व्यनिति। 'व्यदि'ति क्वचित्पाठः। भाष्येपि तथैव सन्दिग्धम्। सूरयो विचारयन्तु। मातुरिति। 'भ्रातरि' इति वर्त्तते। डामहजिति। स्पष्टं चेदं भाष्ये। वेदे 'माते'त्यादाववग्रहस्तु सम्प्रदायाऽनुरोधाद्बोध्यः। मातरि षिच्चेति। एवं च गौरादिषु मातामह्यादिशब्दपाठोऽसाम्प्रदायिक इत्याहुः। सकारपाठेति। भाष्योदाहरणेषु तथा पाठादित्यर्थः। एतेन आद्ये 'षः प्रत्ययस्ये'तीत्संज्ञावारणेन सस्य, अन्त्ययोर्ण्यन्तात्क्विपि 'अत्रिदू-रि'त्यादौ सकारस्य चारिताऽर्थ्योदिदं चिन्त्यमि'त्यपास्तम्। षित्वे फला-ऽभावात् 'ष' इत्यस्याऽप्राप्तावाद्ये 'वार्त्तिके सकारोच्चारणसामर्थ्यादि'त्यपि वक्तुं शक्यम्। केचित्तु 'दुग्धे' इति सप्तमी स्थानिनोऽधिकरणत्व-विवक्षया। तेन दुग्धस्य स्थाने सोढादय आदेशा' इत्याहुः। तन्न। प्रत्यय-प्रकरणविरोधात्। 'प्रत्यया भवन्ती'ति भाष्यस्थवाक्यशेषविरोधाच्च। सोढदूसयोः स्वरे विशेषाच्च। अत एव मरीचसश्चित्त्वं सार्थकमित्याहुः।

तिलान्निष्फलादिति। 'निष्फलत्वबोधकात्तिलशब्दादि'त्यर्थः। प्रत्यय-स्तु स्वार्थे इति बोध्यम्। काकमिति। काकादयः 'प्राणिनां कुपूर्वाणामि'-त्याद्युदात्ताः। अतो न 'अनुदात्तादेरञि'त्यस्य प्राप्तिः। फिट्सूत्रेऽवधेर्हेतु-त्वविवक्षया 'कुना पूर्व' इति हेतुतृतीयाऽन्तेन समासः। 'तृतीयासमासे' इति सर्वनामत्वनिषेधः। 'कवर्गहेतुकपूर्वत्ववतामि'ति वाच्योऽर्थः। 'प्राणि-वाचकसम्बन्धिनां कवर्गात्पूर्वेषामादिभूतानामुदात्त' इति तदर्थः। 'अथा-ऽऽदिरि'त्यधिकारात्। अचित्तात् ठकः, अनुदात्तादेरञः, गोत्रान्ताद्वुञः, केदारादिभ्यः प्रतिपदं यञादीनां च विधानात्, चित्तवत्, अद्युदात्तम्, अगोत्रान्तं, प्रतिपदमनुक्तप्रत्ययं चेहोदाहरणम्। एवं-वृकस्य वार्कम्।

१ इतोऽग्रे—'केचित्तु 'वार्त्तिके सकारं प्रश्लिष्य 'सकारयुक्ताः सोढादय' इति व्याख्यानाञ्च षत्वम्। अयमेव च मूलाऽर्थ इत्याहुः' इति ख. ग. ङ. पाठः।

२ 'चेहोदाहरणमित्याशयः इति ग. घ. पाठः।

यत्तु 'शोकमि'त्युदाहरन्ति। तन्न। खण्डिकादिषु शुकस्य[1] पाठेन तस्याऽन्तत्वादिति दिक्।

भिक्षादि। 'भैक्षमि'त्यत्राऽचित्तठक् प्राप्तः। गार्भिणमिति। 'गर्भिन्'-शब्दोऽन्तोदात्तः। अत्राऽञ् प्राप्तः, अनुदात्तादित्वात्। तस्मिन् टिलोपाद्युदात्तत्वे स्याताम्। युवतीनामिति। अत्रौत्सर्गिकोऽण्। युवनः कनिनन्तस्य आद्युदात्ततया 'भस्याऽढे तद्धिते' 'सिद्धश्च प्रत्ययविधावि'ति पुंवत्त्वेन प्रागेव तिप्रत्ययनिवृत्तौ, अनुदात्तादित्वाऽभावादञोऽप्राप्तौ, उत्सर्गेणैव सिद्धिमाश्रित्य, भाष्ये तत्पाठप्रत्याख्यानात्। 'अन्' इति प्रकृतिभावः। एवं च 'भिक्षादिगणे 'युवति'शब्दपाठसामर्थ्यान्न पुंवत्त्वमि'ति वृत्तिश्चिन्त्या, भाष्यविरोधात्। नन्वेवं 'गार्भिणं, यौवतं गणे' इत्याद्यसङ्गतं स्यादत आह–शत्रन्तादिति। प्रत्ययस्वरेण मध्योदात्तत्वादनुदात्तादिरयम्[2]।

अपत्यमात्रमिति। एतद्बीजं शिवादिसूत्रे उक्तम्।

युवोः। 'युवोरि'ति इतरेतरयोगद्वन्द्वः। उत्तरपदे सौत्रत्वाद्वकारलोपः। ल्यु-ण्वुलादिषु उकारोऽननुनासिक एव। आदेशेनैव तयोरपहारसिद्धेः।

'ऊर्णायुरि'त्यादिव्यावृत्तये आह–[3]अनुनासिकेति। 'अनुनासिकयणो-

---

१ 'शुकस्य भाष्यवृत्त्योः पाठेन' इति ग. घ. पाठः।

२ 'मध्योदात्तत्वादनुदात्तोऽयम्। लौकिकमिति। तच्च लोकेऽपत्यत्वप्रकारकप्रतीतिजनकप्रत्ययान्तत्वम्। अत एव राजन्यमनुष्यग्रहणं चरितार्थम्। तयोर्जातिमात्रबोधकत्वात्' इति ग. घ. पाठः।

३ 'अनुनासिकेति। ल्युण्वुलादिषु यकारवकारावनुनासिकावेव। 'अङ्गस्ये'ति तु पञ्चम्या विपरिणम्योपलक्षकतयाऽन्वेति। तदुक्तं भाष्ये–'यकारवकारयोरेवेदमनुनासिकयोर्ग्रहणमि'ति। केचित्तु 'यु' इत्यत्र सूत्रे उकार उच्चारणार्थः। ल्यु-ण्वुलादिषु चोकार उच्चारणार्थः। अङ्गस्येति युवोर्विशेषणम्। निमित्तत्वं षष्ठ्यर्थः। तेनोर्णायुरित्यादौ न दोषः। यकारस्याऽङ्गत्वनिमित्तत्वाऽभावात्। अत एवाऽङ्गाधिकारे पाठश्चरितार्थः। मूलोक्तार्थे त्वङ्गाधिकारे पाठफलं

रि'त्यर्थः । ल्युप्रभृतिषु सोऽनुनासिको, नाऽन्यत्रेति भाष्ये स्पष्टम् । 'अञो वुञ् पूर्वविप्रतिषेधेन' । औपगवकम् । अत्राऽनुदात्तादित्वादञ् प्राप्तः ।

ब्राह्मणमा । यन् नित्त्वादाद्युदात्तः । न चैवं यञैव सिद्धे, प्रत्ययान्तरविधानं व्यर्थम् । योगविभागसामर्थ्याच्च ठञोऽसम्बन्धः । चाऽनुकृष्टत्वाच्च वुञः । नपुंसकत्वात्, 'यञञो'रित्यत्राऽऽपत्यग्रहणाच्च स्त्रियां न विशेषः । वृद्धत्वाच्चैषां न वृद्धयभावकृतो विशेष इति वाच्यम् । अन्यतोऽपि विधानार्थत्वात् । तदाह—पृष्ठादिति । पृष्ठं स्तोत्रविशेषाः । तत्समूहः पृष्ठ्यमित्यर्थः । 'पृष्ठ्यः षडह' इति तु छान्दस्या मत्वर्थलक्षणया साधु ।

ग्रामजन । केचित्तु 'सुर'शब्दादपि समूहे तलमिच्छन्ति । भाष्यादौ तु नैतद् दृष्टम् । अह्नः ख इति—वार्त्तिकम् । 'क्रतौ वर्त्तमानाऽहन्शब्दात् समूहे ख' इति तदर्थः । एवं च सुत्यासमूहे रूढोऽहीनशब्दः । तत्फलितमाह—अहर्गणसाध्यस्तुत्याक इति ।

अनुदात्तादेः । इह सूत्रे चित्तवन्त उदाहरणम् । अचित्तात्तु 'आपूपिकम्' 'शाष्कुलिकमि'त्यादौ परत्वाट्ठगेवेत्याशयेनाह—कापोतम्, मायूरमिति । 'लघावन्ते' इति मध्योदात्तौ कपोत-मयूरौ । 'शकुनीनां च लघुपूर्वमि'ति 'मयूर'शब्दे आद्युदात्तत्वं तु न । 'अन्त्यात्पूर्वं लघूदात्तं स्यादि'ति तदर्थात् । 'लघ्वपेक्षया पूर्वमुदात्तमित्यर्थ' इति मते तु मध्योदात्तत्वमेव तेनाऽपि विधीयते इति न दोषः । 'मादीनां च' इत्यनेन मध्योदात्तत्वस्य दुर्वारत्वाच्चेत्याहुः ।

---

चिन्त्यम् । एवञ्चाऽनुनासिकपाठे फलं चिन्त्यमित्याहुः । ध्वनितं चेदं सूत्रोपक्रमे भाष्ये' इति ग. घ. पाठः ।

१ इतोऽग्रे—'ऊर्णायायुस्' 'कंशंभ्यां बभयुसि'ति सितौ प्रत्ययौ' इति ख. ब. पाठः ।

२ 'न वुञः' इति ग. घ. पाठः ।

३ 'अर्श आद्यचा साधु' इति ख. ङ. पाठः ।

४ 'सुत्यासमूहरूपेषु क्रतुषु रूढः' इति ग. घ. पाठः ।

खण्डिकादिभ्यः। आद्युदात्ताऽर्थम्, अचित्तात् ठको बाधनाऽर्थम्, द्वन्द्वस्वरेणाऽन्तोदात्तात्क्षुद्रकमालवात्पूर्वविप्रतिषेधप्राप्तवुञ्बाधनाऽर्थं चेदम्। अत्र गणसूत्रम्-'क्षुद्रकमालवात्सेनासंज्ञायामि'ति। ननु 'क्षुद्रकमालव'-शब्दे तद्राजप्रत्यययोर्लुकि, गोत्रसमुदायस्याऽगोत्रत्वात्कथं वुञ्प्राप्तिरिति चेन्न। तदन्तविधिना प्राप्तेः। तदन्तविधौ चेदमेव ज्ञापकम्, पूर्वविप्रतिषेधे चेत्याहुः[1]।

चरणेभ्यः। 'यस्याः प्रकृतेर्यः प्रत्ययो धर्मे विधीयते, स समूहेऽपि चरणवाचिकेभ्यस्तथैवे'त्यर्थः। वुञादयो हि चरणेभ्यो[2] वक्ष्यन्ते, 'चरणाद्धर्माऽऽम्नाययोरि'ति वार्त्तिकात्। तच्चाऽनेनैवाऽतिदेशसूत्रेण ज्ञापितमित्याहुः। काठकमिति। 'गोत्रचरणादि'ति, 'छन्दोगे'ति च वुञ्-ञ्यौ।

अचित्तहस्ति। 'अचित्त'शब्देनाऽत्र वनस्पत्यादीनामपि ग्रहणमिति 'दित्यदित्ये'तिसूत्रस्थभाष्यस्वरसः। 'धेनोरनञ इति वाच्यम्'। 'आधेनवम्'। उत्सादित्वादञ्। अस्मादेव ज्ञापकात्तदन्तविधिः। तेन 'गौधेनुकमि'ति सिद्धम्। इदं च खण्डिकादिसूत्रे भाष्ये पठितम्।

यञ्छाविति। यथासङ्ख्यं बोध्यौ। ठगणाविति। केशस्याऽचित्तत्वात् ठक्, अश्वात्त्वणिति बोध्यम्।

पाशादि। 'पाश्ये'ति स्त्रीत्वं लोकात्। वात्येति। दिग्भेदेन बुद्धिकल्पितवातभेदमाश्रित्य सामूहिकः। एतेन 'पृथग्वाताऽदर्शनादयुक्तः समूहः। तस्मात् शैघ्र्ये प्रत्ययो वाच्य' इत्यपास्तम्। यद्वाऽनेकेऽवयविनो वाताः, 'वायोर्वायुसंमूर्च्छना नानात्वे लिङ्गमि'ति कणादोक्तेः।

इनित्र। एतदर्थमेव[3] खलादीनां पाशादिष्वपाठः। योगविभागो

१ 'पूर्वविप्रतिषेधे च। योगविभागेन 'सेनासंज्ञायामि'त्यंशो नियमार्थोऽपीत्याहुः' इति ग. घ. पाठः।

२ 'चरणे वक्ष्यन्ते' इति ग. घ. पाठः।

३ 'एतदर्थमेव च' इति ख. ङ. पाठः।

यथासङ्ख्याऽर्थः । स्पष्टं चेदं 'यथासङ्ख्य'सूत्रे भाष्ये ।

विषयो देशे । 'तस्ये'ति वर्त्तते । 'विषय' इत्युक्ते स्वस्वामिभावः प्रतीयते । निवासे तु न नियमेन सः । विषये च न नियमेन निवासत्वमि'ति कैयटः । वृत्तौ तु—'विषय'शब्दो ग्रामसमुदाये । यथा—'त्रिषयो लब्धः' । इन्द्रियग्राह्ये च । यथा–'चक्षुर्विषयो रूपम्' । अत्यन्तपरिशीलिते च । यथा–'देवदत्तस्य विषयोऽनुवाक' इति । अनन्यत्र भावे च । यथा–'मत्स्यानां विषयो जलमि'ति । तत्र 'देश'ग्रहणाद्ग्रामसमुदायवाचिन इह ग्रहणमि'त्युक्तम् । देशोऽत्र प्रत्ययोपाधिः । प्रकृतिप्रत्ययसमुदायशक्य इति यावत् । क्वचिद्देशपदप्रयोगस्तु नानार्थत्वात्सन्देहवारणाय । प्रयोगोपाधिस्तु न शक्य इति, ततो विशेषः। यथा 'गार्गिकया श्लाघते' इत्यादौ श्लाघाऽऽदयः । ते हि पदाऽन्तरसमभिव्याहारेण गम्यन्ते, न तु तत्पदजन्यबोधविषयाः। यथा वा 'शास्त्रे नयते' इत्यत्र शास्त्रस्थसिद्धान्तप्रापणफलत्वेन शिष्यसंमाननं मानसबोधविषयो, न शाब्दबोधविषय इति । एवंजातीयकमेव 'विशेषणमि'त्युच्यते । स्पष्टं चेदं 'प्रत्यय' इति सूत्रे, 'उपदेशेऽजनुनासिक' इति सूत्रे च कैयटे ।

ननु अङ्गानां विषयो देश इत्यर्थे 'आङ्ग' इत्यस्याऽप्यापत्तिः । इष्यते तु 'अङ्गा' इत्येव । जनपदे लुप् तु चातुरर्थिकस्यैवेति चेन्न । अनभिधानेन तेभ्योऽत्राऽर्थे प्रत्ययाऽनुत्पत्तेः । ते च अङ्गवङ्गसुह्मपुण्ड्रा भाष्ये उदाहृताः ।

---

१ इतोऽग्रे—'विषयशब्दोऽत्यन्तपरिशीलिते वर्त्तते' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

२ इतोऽग्रे—'अयमेव विशेषणमुच्यते' इति ग. घ. पाठः ।

३ इतोऽग्रे—'यथा वा 'घटत्वमि'त्यादौ प्रकृतिजन्यबोधप्रकारत्वम् । तत्र हि घटवृत्तिधर्मत्वेनाऽऽकांक्षावशात्तद्विशिष्टस्यैव भानम्, न[1] तु तत्प्रत्ययशक्यम्' इति ख. ग. घ. पाठः ।

---

1 'न तु तत्प्रकारको बोधः' इति ग. घ. पाठः ।

अन्येऽपि यथालक्षणमूह्याः । शिब्यादिभ्यस्तु विषयस्याऽपि निवासत्व-सम्भवात्, 'तस्य निवास' इति चातुरर्थिकेऽणि, 'जनपदे लुबि'ति तस्य लुपि, 'शिबयः' । अत्र शैबः'[1] । राजन्यादिभ्योऽप्येवं बोध्यम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । स्पष्टं चेदं भाष्ये ।

'राजन्यादिभ्य' इति—वार्त्तिकम् । अयमाकृतिगणः ।

भौरिक्याद्यै । आभ्यां गणाभ्यां यथासङ्ख्यमिमौ । विधाद्यन्तस्य क्लीबत्वं लोकात् ।

सोऽस्यादिः । अक्षरेयत्तानिबन्धनं पङ्क्त्यादि च्छन्दः । 'छन्दोवाचकात्प्रथमान्तादस्येत्यादिमति प्रत्ययः, यस्याऽऽदिः स प्रगाथश्चेदि'त्यर्थः । ( केचित्तु[3] ) 'प्रग्रथ्यते इति प्रगाथः' । कर्मणि घञ् । अत एव निपातनात्, पृषोदरादित्वाद्वा रेफनकारयोर्लोपः ( इत्याहुः[4] ) ।

इतिशब्दः प्रकारे । तेनाऽऽदिसदृशाऽन्तपरिग्रहः । तेन 'पङ्क्त्यन्तः-'पाङ्क्तः', 'काकुभ' इत्यादिप्रातिशाख्यं व्याख्यातम् ।

प्रगाथ इति । रूढोऽयम् । 'चतुर्थषष्ठौ पादौ बार्हते प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येदि'त्येवमादिवचनाद्यत्र द्वयोर्ऋचोस्तिस्रः क्रियन्ते, स प्रगाथः । स्वार्थे इति । स्वार्थिकस्याप्यस्य क्लीबत्वमेव, लोकात् । ( प्रथमो-[6]

---

१ अत्र 'शैब इत्यादि बोध्यम्' इति ख. ग. घ. ङ. पाठः ।

२ इतोऽग्रे—गाधातोः 'उषिकुषी'त्यादिना कर्मणि 'थन्'प्रत्यये प्रगीयते इति—प्रगाथः' इति ख. ङ. पाठः, क. कुण्डलितः ।

३ अयं ख. ङ. पाठः क. ग. नास्ति । ४ अयं ख. ङ. पाठः क. ग. नास्ति ।

५ 'इतिशब्दो लौकिकविषयविवक्षानुसारणार्थः । इतिशब्द एवमर्थे । 'एवञ्चेत् लोकस्य विवक्षा भवति तदा प्रत्यय' इत्यर्थः । तेन विवक्षावशात्क्वचिदादित्वाऽभावेपि भवति । तेन 'पंक्त्यन्तः पांक्तः, काकुभ' इत्यादि प्रातिशाख्यं व्याख्यातम्' इति ग. घ. पाठः ।

६ अयं ग. घ. पाठः, क. कुण्डलितः ।

स्वारितत्वात्सङ्ग्रामवाचिभ्य एव प्रत्ययः स्यादित्यत आह–) सोऽस्येतीति । एवञ्चार्थाधिकारात्तस्यैवाऽत्र समर्थविभक्तिलाभकरत्वम्। 'प्रयोजनयोद्धृभ्य' इति पञ्चमीनिर्देशाच्च तद्वाचकस्यैव प्रकृतित्वम्। सङ्ग्रामे' इति प्रत्ययाऽर्थविशेषणम् । अत एव तत्र सप्तमीत्याहुः । एवं च 'प्रयोजनवाचिभ्यो, योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यन्ताऽर्थे सङ्ग्रामेऽभिधेयेऽणि'ति सूत्राऽर्थः । सङ्ग्रामे इति किम् ? । 'सन्तोषः प्रयोजनमस्य भोजनस्य' । प्रयोजनेत्यादि किम् ? । 'सुभद्रा प्रेक्षिकाऽस्य सङ्ग्रामस्य' ।

तदस्याम् । 'प्रथमान्तात्प्रहरणोपाधिकात् क्रीडारूपसप्तम्यन्तार्थेऽणि'-त्यर्थः । प्रहरणं किम् ? । 'माला भूषणमस्याम्' । इतिर्लौकिकविवक्षानुसरणाय । क्रीडायां किम् ? । 'खड्गः प्रहरणमस्यां सेनायाम्' ।

घञः साऽस्याम् । घञः किम् ? । 'श्येनपतनमस्यां वर्त्तते' । क्रिया किम् ? । 'प्राकारोऽस्यां वर्त्तते' । 'तदस्यामि'ति वर्त्तमाने 'साऽस्यामि'त्युक्तिः 'क्रीडायामि'त्यस्य निवृत्त्यर्था । तद्वक्ष्यति—अस्यां तिथाविति । 'से'ति स्त्रीलिङ्गनिर्देशः क्रियाऽपेक्षः । कृद्ग्रहणादिति । तत्फलन्तु श्यैनम्पाता-दावादिवृद्धिः । ञे परे इति । ञस्य 'पात'शब्देन व्यवधानन्तु 'येन-नाव्यवधान'न्यायेन सह्यते । 'ञप्रत्याऽन्ते पातशब्दे' इति तु काचि-त्कोऽपपाठः, समुदायस्य ञान्तत्वेऽपि पातस्य तदन्तत्वाऽभावात् । इतिः प्राग्वत् । (सामर्थ्येन प्रत्ययग्रहणपरिभाषैवाऽत्र न प्रवर्त्तते इति कश्चित्)।[1]

तदधीते । शब्दपाठोऽध्ययनम्, तदर्थज्ञानं वेदनमित्युभयोपादानम् । 'द्विस्तच्छब्दोपादानं स्पष्टाऽर्थमि'ति प्राञ्चः । द्वितीयान्तात्प्रत्ययः । 'कर्त्तृ-कर्मणोरि'तिसूत्रस्थभाष्यपर्यालोचनया तद्धितार्थस्य क्रियात्वाऽभावेऽपि, अलौकिके द्वितीयान्तात्प्रत्ययविधानसामर्थ्यादेव द्वितीया । एवं 'तत्र भव' इत्यादिविषये सप्तम्याद्यपीति बोध्यम् । क्रतुविशेषेति । उक्थादौ यज्ञशब्द-पाठान्न पर्यायग्रहणम् । नाऽपि स्वरूपस्य । प्रथमोपस्थितगणे पाठेनैव

---

१ अयं ग. घ. पाठः । क. ख. ङ. नास्ति ।

सिद्धे, सूत्रे ऋतुग्रहणादिति भावः। तत्प्रतिपादकेति। उभयोः सहाऽधिकारेणोत्तरसूत्राणामर्थद्वयेऽपि प्रवृत्त्यावश्यकत्वादिति भावः।

अध्येतरीति। अध्येतर्यपीत्यर्थः।

आग्निष्टोमिक इति। संस्थाविशेषवचनस्याऽपि 'अग्निष्टोम'-शब्दस्य तत्संस्थाके क्रतौ निरूढः प्रयोगः। ग्रन्थविशेष इति। औक्थिक्याऽऽख्यं प्रातिशाख्यमित्यर्थः। लक्षणयेति। उक्थत्वाऽऽरोपेणेत्यर्थः। 'औक्थिक्य'शब्दात्तु अध्येतृवेदित्रोः प्रत्यय एव न। अनभिधानात्।

नेष्येते इति। स्पष्टं चेदं कैयटे। तत्र मुख्याऽर्थाट्ठकोऽनभिधाने भाष्यस्वरससत्त्वेऽप्यणनभिधाने किं मानमिति चिन्त्यम्।

वृत्तिम् = संहिताम्। इदं च 'अध्ययनत' इति सूत्रे कौस्तुभे।

इत्यादीनि। अनुसुः—ग्रन्थविशेषः। 'आनुसुकः'। 'इसुसि'ति कः। 'केऽण' इति ह्रस्वः। 'आकृतिगणोऽयमि'ति गणरत्नकृत्। यद्यपि भाष्ये 'विद्यालक्षणकल्पसूत्राऽन्तादकल्पादेरि'ति पठितं, तथापि तत्र 'अकल्पादेरि'ति सूत्राऽन्तस्यैव विशेषणम्। 'काल्पसूत्रिक'इति भाष्ये प्रत्युदाहरणात्। अन्यथा प्रथमोपस्थितविद्यान्ते प्रत्युदाह्रियेते'ति कैयटः।

तदाह—सूत्रान्तात्त्विति। साङ्ग्रहसूत्रिके समाहारद्वन्द्वः। 'कर्मधारय' इति कश्चित्। द्विगौ तद्धितलुक्स्यादत आह—त्रिविधेति। आख्यायिका-गद्यरूपो ग्रन्थविशेषः।

सादेरिति। अर्थवतः 'स'शब्दस्य ग्रहणम्। सर्वादेः पृथगुपादानात्।

---

१ इतोऽग्रे 'अत्र केचित्—एतदर्थमेवाऽधिकारसूत्रे द्विस्तद्ग्रहणम्। अन्यथा ऋतु-वसन्तादीनामशब्दात्मकतयाऽध्ययनाऽसम्भवेन वेदितर्येव प्रत्ययः स्यात्। द्विस्तद्ग्रहणसामर्थ्यात्तु प्रतिसूत्रमधीयाने, विदुषि च पृथग्विधानेन, लाक्षणिकेभ्योऽपि प्रत्यय इति बोध्यमित्याहुः' इति ख. ग. घ. ङ. पाठः। क. कुण्डलितः।

२ 'इसुसिति कः' इति ग. घ. पाठः। क. ख. ङ. नास्ति।

३ इतोऽग्रे—'एतदपि अर्थवत्परिभाषायां ज्ञापकं बोध्यम्' इति ग. घ. पाठः।

सवार्त्तिक इति । 'वार्त्तिकाऽन्तमधीते' इत्यर्थे अन्तवचनेऽव्ययीभावे 'अव्ययीभावे चाऽकाले' इति सहस्य सः । ततोऽणो लुक् । अस्याऽव्ययीभावत्वेऽपि अध्येत्रणि उपसर्जनत्वान्नाऽव्ययत्वम् । पदेति । 'पद'शब्द उत्तरपदं यस्य तस्मादित्यर्थः । शतषष्टेरिति । 'आभ्यां परो यः पथिन्-शब्दस्तदन्तात् षिकन्नि'त्यर्थः । षो ङीषर्थः । अत्र वृत्तौ 'बहुल'ग्रहणं कृत्वा, 'शातपथ' इति अणप्युक्तः । तद्भाष्ये न दृष्टम् । क्रमादिरिति । 'सामन्'-शब्दोऽपि काशिकायां दृश्यते । उपनिषच्छब्दो गणरत्ने पठ्यते । अणबाधानार्थमिति । भाष्ये त्वणोऽनभिधानमाश्रित्य प्रत्याख्यातमेतत् ।

वसन्तादि । 'अथर्वा' 'आथर्वण' इति शब्दद्वयमत्र पठ्यते । वसन्तादयस्तत्प्रतिपादके, तत्कालाऽध्येये वा लक्षणया यदा वर्त्तन्ते तदा तेभ्योऽध्येतरि प्रत्ययः । अथर्वाणमिति । 'अथर्वणा प्रोक्तमि'त्यर्थः । 'तेन प्रोक्तमि'ति प्रकृत्य–'ऋषिभ्यो लुग्वक्तव्यः' । वसिष्ठोऽनुवाकः, 'अथर्वणो वा', 'अथर्वा' 'आथर्वण' इति 'रैवतिकादिभ्यश्छ' इति सूत्रभाष्योक्तेः साधुः । अस्मादेव भाष्यप्रयोगात्तद्विषयता वैकल्पिकीति बोध्यम् । न च अत्र पक्षेऽध्येत्रर्थस्य प्रोक्ताल्लुक् शङ्क्यः । विधानसामर्थ्येन तदभावात् । अर्थप्रतीतेरणोऽप्युपपत्तेः । अत्र पक्षे आथर्वणमादाय आथर्वणिकस्य सिद्धत्वेऽपि, 'अथर्वणा प्रोक्तमधीते–आथर्वे'ति निवृत्त्यर्थं वसन्तादिष्वथर्वन्-शब्दस्याऽपि पाठः । 'दाण्डिनायनादि'सूत्रे निपातनं चाऽऽथर्विक-निवृत्त्यर्थमिति बोध्यम् । उक्थादिष्वेव वसन्तादयः पठितुं युक्ताः, तथा तु न कृतमित्येव । 'अथर्वप्रोक्तेऽथर्वत्वाऽऽरोप' इत्यपि कश्चित् ।

प्रोक्ताल्लुक् । स्वरितत्वात्तदधिकारस्थप्रत्ययलाभः । लिङ्गविशिष्टपरि-

---

१ 'लक्षणयाऽथर्वप्रोक्तमित्यर्थः । यद्वा तेन प्रोक्तमिति प्रकृत्य' इति ग. घ. पाठः ।

२ 'लक्षणयाऽप्युपपत्तेः' इति ग. घ. पाठः ।

३ 'आथर्वण' इति निवृत्त्यर्थम्' इति ग. घ. पाठः ।

४ 'यत्तु 'पञ्चमीनिर्देशादव्यवहितस्यैव लु'गिति । तन्न । 'काशकृत्स्निप्रोक्त-

भाषया-काशकृत्स्निप्रोक्तमीमांसाऽध्येत्री काशकृत्स्ना ब्राह्मणी'त्यत्र लुक् ।

'इनण्यनपत्ये' इत्युक्तेरापत्याऽर्थं वचनम्—गाथिविदथीति ।

ण्यक्षत्रिया । ण्यादयः सर्वे गोत्रप्रत्यया एव गृह्यन्ते । 'गोत्राद्यूनी'ति वचनात् । गोत्रप्रत्ययाऽन्तस्याऽपि क्षत्रियवाचकत्वादाह—क्षत्रियगोत्रेति । 'क्षत्रियवाचिनो गोत्रप्रत्ययान्तादि'त्यर्थः । 'अब्राह्मणगोत्रमात्राद्युवप्रत्ययमात्रस्य लुक उपसङ्ख्यानमि'ति वार्त्तिकम् । ( तत्र[१] ब्राह्मणभिन्नं सर्वमेव गृह्यते )। तेन 'श्वशुर्यः' 'स्वस्रीयः' 'मायूरिः' 'कापोतिः' 'भाण्डिजङ्घिः पिता', स एव पुत्र' इत्यादि सिद्धम् । 'तदपि पैलादिपाठात्सिद्धमि'ति वृत्तिः ।

कौरव्य इति । 'कुर्वादिभ्यो ण्यः' । ब्राह्मणगोत्रमेतत् । अत एव तिकादित्वेऽपि फिञ् न, किन्त्वणेव । तत्र क्षत्रियगोत्रस्यैव कौरव्यस्य 'कुरुनादिभ्य' इति व्युत्पन्नस्य ग्रहणादित्याहुः । श्वाफल्क इति । 'ऋष्यन्धके'त्यण् । तत इञ् । वसिष्ठात् ऋष्यण् । 'तिकादिभ्यः फिञ्' । ततो यून्यण् । वामरथ्यस्येति । वामरथः—कुर्वादिः । ततः 'कण्वादिभ्यो गोत्रे' इति च्छाऽपवादोऽण् । तस्य न लुगिति भावः ।

ऋ[२]ष्यण एवेति । 'ऋष्यण्प्रकृतिकाऽणिञोरेवे'त्यर्थः । 'पणिन्'-शब्दे त्वौत्सर्गिक एवाऽण् । यत्र हि औत्सर्गिकबाधक इञ् प्राप्नोति, तत्रैव तद्बाधनार्थम् ऋष्यणः प्रवृत्तिरिति भावः ।

---

मीमांसाऽध्येत्री काशकृत्स्ना ब्राह्मणी'त्यत्र ङीपा व्यवधानेऽपि भाष्ये लुक उक्तत्वात्' इति ख. ग. घ. ङ. पाठः ।

१ अयं ग. घ. पाठः । क. ख. ङ. नास्ति ।

२ इतोऽग्रे—अत एव सूत्रे 'आर्षे'ति तद्धितनिर्देशः । 'ऋषि'शब्देन तद्घटितं सूत्रं लक्ष्यते । तत्र भवः-आर्षः । अन्यथा क्षत्रिय(पद)वत् 'ऋषी'त्येव वदेदिति भावः । पणिन्शब्दात्तु मन्त्रद्रष्टृत्वाऽभावेनाऽनृषित्वादौत्सर्गिक एवाऽणिति बोध्यम् । न च पाणिनेरृषित्वाऽनापत्तिः । अनृष्यपत्यानामपि तपोबलेन ऋषित्वस्मरणात्' इति ख. ग. घ. ङ. पाठः, क. कुण्डलितः ।

अन्ये तु—'पणिन्'शब्दो यौगिको, न तु ऋषौ रूढः। लुग्विधौ च[1] रूढस्यैव ग्रहणम् । अत एव 'वाऽन्यस्मिन्नि'ति सूत्रे 'अत्रि'शब्दात् 'इतश्चाऽनिञ' इति ढकि, तत इञि, तस्य 'ण्यक्षत्रिये'ति लुक् भाष्यकारोक्तः सङ्गच्छते[3] इत्याहुः। वृद्धाच्छ इति । तत्र विवक्षिते इञो 'यूनि लुगि'ति लुक् । इञश्चेतीति । प्रत्ययलक्षणेनेञन्तत्वादिति भावः ।

गोत्रे इति । अपत्याऽधिकारादन्यत्वेऽपि यथा तत्र पारिभाषिकगोत्रस्य ग्रहणं तथा वक्ष्यते । स्वरे इति । असति अणो लुकि, प्रत्ययस्वरेणाऽन्तोदात्तत्वं, स्त्रियां ङीप् च स्यादिति भावः ।

सूत्राच्च । अष्टकमिति । 'तदस्य परिमाणम्' 'सङ्ख्यायाः संज्ञासङ्घसूत्राऽध्ययनेष्वि'ति 'सङ्ख्याया अतिशदन्तायाः कन्' ।

---

१ 'लुग्विधौ, अण्विधौ च' इति ख. पाठः ।

२ 'तद्विधौ तु रूढस्यैव ग्रहणम् । यद्वा पणी न ऋषिः । मन्त्रद्रष्टृत्वाऽभावात् । न च पाणिनेस्तत्त्वाऽनापत्तिः । न हि ऋष्यपत्यत्वम् ऋषित्वे प्रयोजकम् । अनृष्यपत्यानामपि तपोबलेन बहुशो ऋषित्वदर्शनात् । ऋष्यपत्यानामपि तदभावेऽनृषित्वस्मरणाच्चेत्याहुः । एवं तद्धितोऽपि चरिताऽर्थः, ऋष्यपत्यस्याऽनृषेरपि ग्रहणाऽर्थत्वात् । किञ्च पाणिनेरपि मन्त्रद्रष्टृत्वे न दृढतरं मानम्'[1] इति ख. ग. घ. ङ. पाठः ।

३ इतोऽग्रे—'तस्माल्लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिपरं मूलं चिन्त्यमेव । पणिनोऽनृषित्वे मानन्तु 'दाक्षीपुत्रस्य पाणिनेरि'त्यादिभाष्यादिप्रयोग इत्याहुः' इति ख. पाठः । 'अत एव 'दाक्षीपुत्रस्य पाणिनेरि'त्यादि भाष्यादिप्रयोगः सङ्गच्छते' इति ग. घ. पाठः ।

४ 'तदस्य परिमाणमि'त्यधिकारे सङ्घादिष्वर्थेषु सङ्ख्यायाः कन्' इत्यर्थः ।

---

1 'ऋष्यणश्च योग्यतामात्रं नियामकम्, न तु फलोपधानम् । अत एव वान्यस्मिन्निति सूत्रे' इति ग. घ. पाठः ।

संख्याप्रकृतिकादिति । 'सङ्ख्याप्रकृतिकादिति वक्तव्यमि'ति अत्र वार्त्तिकम् । 'तत्प्रकृतिकप्रत्ययान्तादि'त्यर्थः ।

छन्दोब्राह्मणानि च । चकारोऽनुक्तसमुच्चयाऽर्थः । अतः 'पुराणप्रोक्तेष्वि'ति सूत्रविषयभिन्ने कल्पे, सूत्रे च तद्विषयता । तेन 'काश्यपिनः' 'कौशिकिनः' 'पाराशरिणः' 'शैलालिनः' इति सिद्धम् । अनन्यभावे 'विषय'-शब्दः । तेन 'कठमधीते' 'महत् कठमि'त्यादिसकलप्रयोगनिवृत्तिः ।

विषयग्रहणादेव एभ्यः प्रोक्तप्रत्ययाऽन्तेभ्यः सुबुत्पत्तेः पूर्वमेवाऽध्येतृप्रत्ययः । अतः 'काश्यपिन' इत्यादौ 'उत्तरपदत्वे चे'ति वार्त्तिकमतेऽप्यवान्तरसुपा पदत्वमाश्रित्य नलोपो न[1] ।

याज्ञवल्क्यादीनां तद्विषयता न । 'याज्ञवल्क्यादिभ्यः प्रतिषेध' इति वार्त्तिकात् । 'छन्दः'पदेन गायत्र्यादिच्छन्दोयुतमन्त्रवती संहितैव गृह्यते ।

अत्र 'छन्दोब्राह्मणयोरध्येतृवेदितृभ्यामर्थाभ्यां न यथासङ्ख्यमि'ति यथासङ्ख्यसूत्रे भाष्ये स्पष्टम् ।

'प्रोक्तादि'त्यनुवृत्तं प्रथमाबहुवचनेन विपरिणम्यते इत्याशयेनाह—प्रोक्तप्रत्ययान्तानीति । 'तद्विषयाणी'त्येष तच्छब्दोऽध्येतृवेदित्रर्थकप्रत्ययपरामर्शी । अर्थमात्रपरामर्शे तु 'कठमधीते' इति वाक्यस्याऽसाधुताऽऽपत्तिः । छन्दोब्राह्मणानीति किम् ? । पाणिनीयं व्याकरणम् ।

( इति रक्षो[2]द्यर्थकाः ) ।

---

१ इतोऽग्रे—'छन्दस्त्वादेव सिद्धे 'ब्राह्मण'ग्रहणं तद्विशेषपरिग्रहार्थम् । नेह—'याज्ञवल्क्यप्रोक्तानि ब्राह्मणानि याज्ञवल्कानि' । 'कण्वादिभ्यो गोत्रे' इत्यण् । 'आपत्यस्ये'ति यलोपः । सर्वं चेदमिहैव भाष्ये स्पष्टम्' इति ख. ग. घ. पाठः ।

२ अयं पाठ आदर्शेषु नास्ति । परं योग्यत्वादत्राऽस्माभिर्निवेशितः ।

## अथ चातुरर्थिकाः ।

तदस्मिन्नस्तीति । मत्वर्थीयाऽपवादः[1] । इतिर्लोकप्रसिद्ध-देशनाम-परिग्रहार्थः[2] । 'प्रत्ययाऽन्तं चेत्प्रसिद्धदेशनामे'त्यर्थः । न चैवं 'जनपदे लुबि'ति व्यर्थम् । अङ्गादिविषये प्रत्ययाऽन्तस्य देशनामत्वाऽभावात्, प्रत्ययस्यैवाऽप्राप्तेरिति वाच्यम् । 'तदभावे हि लक्षणे कचक्षुष्को ग्राम्ये-दि'ति,-न्यायसिद्धाऽनुत्पत्त्यन्वाख्यानाऽर्थत्वाददोषः । तेनाऽऽधुनिकसङ्के-तिने नै[3] । उत्तरसूत्रत्रयेऽपि 'देशे तन्नाम्नी'ति वर्त्तते । निर्वृत्तेति । निर्वर्त्ति-तेत्यर्थः । अन्तर्भावितण्यर्थाद् वृतेः कर्मणि क्तः । 'तेने'ति कर्त्तरि तृतीया ।

अदूरभवमिति । 'अदूरम् = निकटम् । तत्र भव' इति, अत्रैव निपात-नात्समासः । त्रयोऽर्था इति । अन्यथा हि अदूरभवस्यैवोत्तरत्र सम्बन्धः स्यात् । न च चेनाऽप्यनन्तरस्यैव समुच्चयः स्यात् । योगविभागवैयर्थ्या-ऽऽपत्तेरित्याहुः । [4]चातुरर्थिकत्वमिति । चतुरवयवोऽर्थः चतुरर्थः, चतुर्णां सूत्राणामर्थो वा चतुरर्थाः । तत्र भवः-चातुरर्थिकः ।

ओरञ् । सुवास्त्वादिभ्यः प्राक् अत्राधिक्रियते ।

मत्वन्तेति । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्य-

---

१ 'मतोरपवादः' इति ग. घ. पाठः ।

२ इतोऽग्रे-'अत एव मत्वर्थीयेनिठनादीनप्ययं बाधते इत्याहुः' इति ग.घ.पाठः ।

३ इतोऽग्रे—'अभिव्यक्तेतिन्यायसिद्धार्थ एव इतिरि'त्यन्ये' इति ग. घ. पाठः ।

४ 'चातुरर्थिकत्वमिति । चतुर्णामर्थानां समाहारः 'चतुरर्थी' । तत्र भव इत्य-ध्यात्मादित्वाट्ठञ् । तद्धितार्थद्विगौ तु ठञो लुक् स्यादिति हरदत्तः । तन्न । 'अर्थविशेषाऽसंप्रत्ययेऽतन्निमित्तादपि' । 'पञ्चकपाल्यां संस्कृत' इत्यपि विगृह्य 'पञ्चकपाल' इत्येव यथा स्यादि'ति भाष्यवार्त्तिकविरोधात् । अस्यवि-कन्यायेन 'पञ्चकपाल्यां संस्कृतमि'ति वाक्यमेवेति भाष्ये तत्प्रत्याख्यातं च । तस्मात् 'चतुरवयवोऽर्थः चतुरर्थः, तत्र भव' इति वक्तुमुचितम्' इति ख. ग. घ. ङ. पाठः ।

त्वात्। व्यावर्त्त्यं तु 'स्ववानि'ति स्यात्। तथा च 'आहिमतमि'त्यादावतिप्रसङ्ग इति भावः।

अण्ग्रहणमिति। 'शिवादिभ्योऽणि'तिसूत्रभाष्योक्तन्यायेनेत्यर्थः।

रोणी। लुप्तपञ्चम्यन्तमेतत्। 'येन विधिरि'तिसूत्रस्थभाष्यबलात् प्रत्ययविधावप्यत्र तदन्तविधिरित्याह—तदन्तादिति।

वुञ्छण्। सूत्रे 'कुमुद'शब्दस्य द्विःपाठेऽप्येकशेषो न। कुमुदान्तेन, वराहान्तेन वा द्वन्द्वं विधाय, पुनः शेषेण द्वन्द्वघटित-द्वन्द्वविधानादित्यूहः।[1]

आदिशब्दः प्रत्येकमभिसम्बध्यते। तदाह—अरीहणादिभ्य इति।[2]

पथ इति। पक्षाद्यन्तर्गणसूत्रमेतत्। जनपदे वाच्य इति। अत्र 'तन्नाम्नी'त्यनुवृत्ते'लुबन्तं चेद्देशनाम तदा लुबि'ति बोध्यम्। अत एव जनपदेऽपि प्रागुदाहृतौदुम्बरादिसिद्धिः।

चातुरर्थिकस्येति। प्रकरणलब्धमिदम्।

विशेष्याऽनुरोधिवचने प्राप्ते आह—लुपीति। प्रत्ययाऽर्थेन नित्यसम्बद्धत्वात्–युक्तम्[3] = प्रकृतिः। लुपि = लुबन्तार्थे, युक्ते इव = प्रकृत्यर्थे इव, लिङ्गसङ्ख्ये भवत' इत्यर्थः। व्यक्तीत्यादि किम्?। 'शिरीषाणामदूरभवः शिरीषा ग्रामः'। वरणादित्वाल्लुप्। तस्य वनं–शिरीषवनम्। इह वनस्पतित्वमप्यतिदिश्येत, ततश्च 'विभाषौषधी'ति णत्वं स्यात्।

---

१ इतोऽग्रे—'एतेनाऽऽद्यकुमुदाऽन्तद्वन्द्व-द्वितीयकुमुदान्तद्वन्द्वयोर्द्वन्द्वकरणादेकशेषो ने'ति हरदत्तोक्तमपास्तम्। द्वन्द्वद्वयेनैवोपपत्तेः'। इति ख. पाठः। 'तयोर्द्वन्द्वयोरन्यतरेण शेषाणां द्वन्द्व इत्येव हरदत्ताऽर्थ' इत्यन्ये' इति ग. घ. पाठः।

२ इतोऽग्रे—'वस्तुतोऽत्र न सहविवक्षेति, सौत्रत्वादेव द्वन्द्व इति, नैकशेषप्राप्तिरित्यपि कश्चित्' इति ग. घ. पाठः।

३ 'युक्तम् = प्रकृतिः। लुपि सति लुबन्तस्य तद्वल्लिङ्गसंख्ये स्तः। यद्वा लुपि = लुबन्तार्थे' इति ख. ग. घ. ङ. पाठः।

षष्ठीबहुवचनन्तु न । 'पञ्चाला' इत्यादौ षष्ठ्यर्थस्य वृत्त्युक्तत्वेन प्रथमाया एव युक्तत्वात्।[1]

लिङ्गाऽतिदेशफलं-'कटुबदर्या अदूरभवो ग्रामः कटुबदरी'तिबोध्यम् ।

एवं पूर्वाऽऽचार्यकृतं[2] सूत्रं पाणिनिः प्रत्याचष्टे—तदशिष्यमिति । 'संज्ञानाम् = लोकाऽवगतीनाम्, प्रमाणत्वादि'त्यर्थः । लोकव्यवहार एव तत्र प्रमाणम्, न तु शास्त्रव्यापारस्तदंशे इति भावः । यथा 'अङ्गा' इत्यस्य तन्निवासेऽपि देशाऽन्तरेऽप्रयोगः[3], लोके तदनवगतेः, अनभिधानात् । एवम् एकवचनान्ताऽप्रयोगोऽपि तत एव भविष्यति । यथा च दारादिभिः[4] शब्दशक्तिस्वभावात् शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपाऽर्थस्य भानम्, तथा लुबन्तैरपि शास्त्रीयस्त्रीत्वविशिष्टादेरेव पुमादेरभिधानं भविष्यती'ति किं सूत्रेणेत्यर्थः ।

नन्वेवं लुब्वचनमपि व्यर्थम् । 'अङ्ग'शब्दस्यैव जनपदसंज्ञात्वेन, तत्र प्रत्ययस्यैवाऽनुत्पत्तेरिति चेत्, इष्टाऽऽपत्तिरित्याह—लुब्योगेति । योगः = अवयवाऽर्थः । प्रख्यानम् = प्रतीतिः ।

प्रत्ययस्वीकारे बाधकमप्याह—योगप्रमाणे[6] चेति । 'प्रमाणे' इति करणे ल्युट् । कर्मधारयः । 'पञ्चालादौ योगे प्रमाजनके सती'त्यर्थः । 'पदस्य

---

१ 'युक्तत्वादित्याहुः' इति ख. ङ. पाठः ।

२ 'पूर्वाचार्यानुरोधेन कृतं सूत्रम्' इति ग. घ. पाठः ।

३ 'अप्रयोगः, संज्ञात्वात्' इति ग. घ. पाठः ।

४ 'एवं यथा दारादीनाम्' इति ग. घ. पाठः ।
'यथा च दारादीनाम्' इति ख. ङ. पाठः ।

५ इतोऽग्रे—'पञ्चालादिभ्यो निवासे प्रत्ययस्त्वनभिधानान्नेति भावः' इति ग. घ. पाठः ।

६ इतोऽग्रे—'भावप्रधानो निर्देशः । 'पञ्चालादौ योगस्य प्रमाणत्वे' इत्यर्थः । 'योगाऽर्थप्रमितिजनकत्वे' इति यावत्' इति ख. ग. घ. ङ. पाठः ।

योगाऽर्थप्रमितिजनकत्वे' इति यावत्। तदभाव इति। 'क्षत्रियसम्बन्धाऽभावे, पञ्चालादीनां सम्प्रति जनपदे प्रयोगो न स्यादि'त्यर्थः। पूर्वं पाचके पाचकत्वाऽभावकाले 'पाचक' इति व्यवहाराऽभाववदिति भावः।

प्रसङ्गात्पूर्वाऽऽचार्यपरिभाषितमन्यदपि प्रत्याचष्टे-प्रधानेत्यादि। 'यत्पूर्वाऽऽचार्यैः 'प्रधानोपसर्जने प्रत्ययप्रकृत्यर्थौ' इत्येवं वचनं कृतं, तन्न कार्यमि'ति सूत्रार्थः[2]। अतीताया रात्रेः [3]पश्चार्द्धेनेति। केचित्तु 'अतीतरात्रेरन्त्ययामेन, आगामिरात्रेराद्ययामेन च सहितो दिवस' इत्यर्थः। स्पष्टं चेदं 'लुङि'ति सूत्रे भाष्यकैयटयोरित्याहुः।

विशेषणानां च। इदं सूत्रं 'लुपि युक्तवदि'त्युत्तरमेव व्याख्यातुं युक्तम्[4]। अत्र[5] 'लुपी'त्यनुवर्त्तते। तदाह—लुबर्थस्येति। 'लुबन्ताऽर्थस्ये'त्यर्थः।

यद्यपि लुबन्तार्थस्य तत्त्वाऽतिदेशात्तद्विशेषणानामपि तत्त्वं सिद्धम्,

---

१ इतोऽग्रे—'एवं च यत्र लुबन्तेऽवयवाऽर्थाप्रतीतिः, स एव न कार्यः, 'जनपदे लुप्' 'वरणादिभ्यश्चे'ति। अन्ये तु[1] कार्या इत्याहुः' इति ख. ग. घ. पाठः। क. कुण्डलितः।

२ इतोऽग्रे—'लोकत एवेति। [2]आख्याते व्यभिचाराच्चेत्यपि बोध्यम्' इति ख. ग. घ. पाठः।

३ 'अत्राऽर्द्धशब्दोऽवयववाची। तेनातीतरात्रेरन्त्ययामेन' इति ग. घ. पाठः।

४ 'यद्यपीदं सूत्रं 'लुपि युक्तवदि'त्युत्तरमेव व्याख्यातुं युक्तं, तथापि हेतुसामानाधिकरण्याय, 'तदशिष्यमि'ति सूत्रे तच्छब्देन 'लुपि युक्तवदि'त्यस्यैव परामर्श इति ध्वनयितुमत्र व्याख्यातम्। न हि लुबर्थविशेषणानां संज्ञात्वम्' इति ग. घ. पाठः।

५ 'एवञ्च' इति ख. ग. घ. ङ. पाठः।

---

1 'कार्या इत्येके। तुल्यन्यायात् विशाखादिशब्दानां चन्द्रमसीव, तद्युक्तकालेऽपि रूढिस्वीकारेण, तेऽपि न कार्या इत्यन्ये' इति ग. घ. पाठः।

2 'रामः' 'भजे'त्यादौ लिङ्गसंख्ययोर्व्यभिचाराच्चेत्यपि बोध्यम्' इति ग. घ. पाठः।

तथाऽपि जातिप्रतिषेधाऽर्थमिदम् । तेन 'पञ्चाला जनपद' इति सिद्धम् ।

तत्र 'पञ्चाला जनपदः सुभिक्ष' इति जनपदविशेषणत्वे । पञ्चालविशेषणत्वे तु 'सुभिक्षा' इत्येवेति बोध्यम् । ननु लुपोऽन्यत्राऽपीदं तुल्यम्, यथा[1] 'बदरी वृक्ष' इत्यत्र, तत्किं सूत्रेणेति चेन्न । सूत्रस्य 'गुणवचनानामाश्रयतो लिङ्गवचनानी'त्येतत्समानाऽर्थत्वात् । तत्र 'गुण'शब्देन जातिभिन्नं सर्वं गृह्यते । आश्रयतः = यच्छब्दप्रतिपाद्याऽर्थ आश्रयतयाऽन्वयः, तच्छब्दाऽर्थगतलिङ्गसङ्ख्यादिकं तस्य, गुणगुणिनोरभेदोपचारादिति तदर्थः[3] ।

पदसंस्कारपक्षे वाचनिकमिदम् । तत्र हि अर्थाऽन्तरनिरपेक्षतया नपुंसकत्वम्, एकत्वं च प्राप्तम् । वाक्यसंस्कारपक्षे तु न्यायसिद्धमिदम् । आश्रयविशेषस्य पूर्वमेव प्रक्रमेण, विशेषणानामपि तल्लिङ्गसङ्ख्यत्वमेव तत्र पक्षे न्याय्यम् । इदमेव युक्तम्, 'संस्कृतं भक्षाः' इति निर्देशात् । पदसंस्कारपक्षे हि स निर्देशः । एतच्च 'अनेकमन्यपदार्थे' इति सूत्रे भाष्ये ध्वनितम्, कैयटेन स्पष्टमुक्तमित्याहुः । अत्राऽनुवर्त्तमान'युक्तवदि'त्यस्य 'विशेष्यवदि'त्यर्थः ।

'लुपि युक्तवदि'त्यस्य विषयविवेकमाह—हरीति । व्यक्तिः । व्यक्तिरेवेत्यर्थः । 'हरीतक्यादिभ्यश्चे'ति लुप् । वचनमिति । वचनमेवेत्यर्थः । 'खलतिक'शब्दो वरणादिः ।

'विशेषणानां चे'त्यस्य प्रतिषेधमाह—मनुष्येति । चञ्चा अभिरूप इति । 'संज्ञायामि'ति कनो 'लुम्मनुष्ये' इति लुप् । न चैवं स्त्रीत्वनिषेधेऽपि, पुंस्त्वम् अभिरूपपदे न युक्तं, सामान्ये नपुंसकत्वस्य युक्तत्वादिति वाच्यम् । 'विशेषणानामि'ति प्राप्तस्य निषेधेऽपि, वस्तुतो विशेष्यस्याऽर्थस्य पुंस्त्वात्तदक्षतेः ।

---

१ इतोऽग्रे—'जात्यर्थस्यैवायं निषेध इति तद्विशेषणेऽपि न' इति ग. घ. पाठः ।

२ 'यथा 'बदरी वृक्ष'इत्यत्र 'सूक्ष्मकण्टका' 'सूक्ष्मकण्टक' इति च प्रयोगयोर्विशेष्यभेदेन व्यवस्थाऽङ्गीकारात्' इति ख. ग. घ. ङ. पाठः ।

३ 'तदर्थ इत्याहुः' ख. ग. ङ. पाठः ।

४ 'अनित्योऽयमतिदेशः । 'संस्कृतं भक्षा' इति निर्देशात्' इति ग. पाठः ।

एतेन 'भाष्योदाहरणात्पुंस्त्वमि'त्यपास्तम् ।

वरणादिभ्यश्च । वरणादिराकृतिगणः । कुमुदादाविति । ऋश्याद्यनन्तरे इत्यर्थः । वाग्रहणेति । अन्यथा तत्र पाठसामर्थ्यादेव ठच्ककोर्विकल्पेन लोपे सिद्धे, तद्वैयर्थ्यं स्पष्टमेव । षड् रूपाणीति । इदं चाऽत्रैव वृत्तौ स्पष्टम् । ये तु ऋश्यादावपि पठन्ति, तेषां मते सप्त रूपाणीत्याहुः ।

चातुरर्थिक इति । एतेन 'तदस्मिन्नि'त्यर्थे मतुपः सिद्धत्वादिदं व्यर्थमि'त्यपास्तम् । अर्थाऽन्तरे विधानाऽर्थत्वात् । नद्या अपि देशत्वेन 'तदस्मिन्नि'ति प्राप्ताऽणो बाधनाऽर्थं च । स्पष्टं चेदं भाष्ये ।

इक्षुमतीति । यत्तु 'मध्वादिष्वस्य पाठेन एतदुदाहरणं चिन्त्यमि'ति । तन्न । 'ओरञि'ति सूत्रस्थभाष्यप्रामाण्येन मध्वादिष्वेतत्पाठस्याऽप्रामाणिकत्वात् । तत्र हि 'उदुम्बरावतीरावत्योः सावकाशो मतुप् इक्षुमत्यां परत्वादोरञं बाधते' इत्युक्तम् ।

कुमुदनड । 'अयं प्रत्ययो न निर्वृत्तादिष्वि'ति 'न पदान्ते'ति सूत्रे भाष्यकैयटयोः स्पष्टम् । झय इति । नडेऽपि प्राप्तियोग्यताऽस्तीत्येवमुक्तम् । अन्त्ये त्वस्य प्राप्तियोग्यताऽपि नास्ति । वस्तुतो 'नड्वानि'त्यत्रापि 'मादुपधाया' इत्येवोचितम् । 'झय' इत्यस्याऽसिद्धत्वात् । फले विशेषाऽभावात्तु न निपुणमीक्षितं मूलकृता[2] । 'प्रकरणे प्रकरणमसिद्धमि'ति पक्षस्तु प्रागेव दूषित इति, न तमवलम्ब्याऽप्यस्य ग्रन्थस्य पुष्टिरिति दिक् ।

मादुपधेति । अवर्णोपधात्परत्वादिति भावः । पूर्वत्राऽसिद्धत्वाच्च[3] न टिलोपस्य स्थानिवत्त्वमिति नाऽवर्णान्तत्वप्रयुक्तं वत्वम् । 'वेतस्वानि'त्यत्रैकदेशविकृतन्यायेन सुबन्तत्वनिमित्तकपदत्वात् रुत्वं तु न । बहिर्भूतप्रत्ययनिमित्तकत्वेन बहिरङ्गस्य टिलोपस्याऽसिद्धत्वात् । न च षाष्ठी बहिरङ्ग-

---

१ 'भाष्योदाहरणात्पुंस्त्वमित्येके' इति ग. घ. पाठः । तत्खण्डनम् 'एतेने'ति ।

२ 'मूलकृतेत्याहुः' इति ख. ग. घ. ङ. पाठः ।

३ इतोऽग्रे—'अपूर्वविधित्वाच्च' इति ख. घ. ङ. पाठः ।

परिभाषा रुं न पश्येदिति वाच्यम् । कार्यकालपक्षाऽऽश्रयणात् ।

नन्वेवमपि टिलोपेऽवशिष्टस्य 'स्वादिष्वि'त्यनेनाऽपि[1] पदत्वाद्रुत्वं दुर्वारम् । न हि 'स्वादिष्वि'ति पदत्वं टिलोपादन्तरङ्गं, येनोक्तन्यायेन समाधिः स्यात् । न च भत्वम् । टिलोपस्य स्थानिवत्त्वेन सान्तत्वाऽभावात् । पदत्वन्तु रुविधिनैकवाक्यताऽऽपन्नमिति, तत्र कर्त्तव्ये 'पूर्वत्राऽसिद्धे ने'ति-स्थानिवत्त्वनिषेधः[2] । साक्षात्, परम्परया वा पूर्वत्राऽसिद्धीयप्रापक-प्रतिबन्धक-स्थानिवत्त्वस्य तेन निषेधात्[3] । एतेन 'पदसंज्ञायां यथोद्देशा-ऽऽश्रयणान्न दोष' इत्यपास्तमिति चेन्न[4] ।

तुल्यन्यायेन भत्वेऽपि तन्निषेधात्[5] । अत एव 'औत्सी'त्यादौ रुत्वादि-कम्, 'घटी' 'आमलकी'त्यादौ जश्त्वादिकं च न । एवं चैकदेशविकृत-न्यायेन सुबन्तत्वनिमित्तकपदत्वमपि 'वेतस्वानि'त्यत्र न । परत्वेन तस्या-ऽपि भत्वेन बाधादिति दिक्[6] ।

(नन्वत्र[7] सूत्रे प्रकृतस्य मतुपो डित्त्वमेव विधीयताम्, किमनेन प्रत्यया-ऽन्तरविधानेन । न च 'ह्रस्वनुड्भ्यां मतुबि'त्यत्र एतद्ग्रहणाऽर्थम्[8] ।

---

१ 'स्वादिष्विति पदत्वात्' इति ख. ग. पाठः ।

२ 'स्थानिवत्त्वनिषेधात्' इति ख. ग. घ. ङ. पाठः ।

३ 'तेन निषेधाच्च' इति ग. घ. पाठः ।

४ 'इति चेन्न । अन्तरङ्गत्वेनाऽत्र 'सुप्तिङन्तमि'ति पदत्वस्यैव प्राप्तेः' इति ख. ङ. पाठः ।

५ 'तन्निषेधाच्च' इति ख. ङ. पाठः ।

६ 'नेति दिक्' इति ग. घ. पाठः ।

७ 'नन्वत्र सूत्रे' इत्यारभ्य 'चिन्त्यमेतत्' इत्यन्तः ख. ग. घ. ङ. पाठः । मनोरमाशब्दरत्नधृतत्वात् क. नास्ति ।

८ 'न च 'विन्मतोर्लुगि'तिसूत्रे ऽप्यनुबन्धकत्वादस्याऽग्रहणार्थं तत् । अनुबन्धा-ऽनुच्चारणात् । वत्वादीनामनापत्तेश्च । विन्साहचर्येणाऽचातुरर्थिकस्यैव ग्रहणेन इष्टसिद्धेश्च' इति ग. घ. पाठः ।

'न गोश्वन्नि'ति निषेधसत्त्वेन फलाऽभावात्। न चाऽन्यतो विधानार्थम्, तेन 'महिष्मान्' सिद्ध्यतीति वाच्यम्। एका 'जाडार' इत्यस्य साधयितुमशक्यत्वात्; आकारोच्चारणेनाऽन्यतो विधानस्य ज्ञापयितुं शक्यत्वेऽपि, प्रकृते तदशक्यम्। मतुपाऽपि 'महिष्मानि'त्यस्य साधयितुं शक्यत्वात्। न च 'वेतस्वानि'त्यादावुदात्तनिवृत्तिस्वरस्य 'न गोश्वन्नि'ति निषेधाऽभावाय तत्। तत्र हि मतुप्ग्रहणमनुवर्त्तते। स्पष्टं चेदं 'चावि'ति सूत्रे भाष्ये इति वाच्यम्। 'कुमारी'त्यादावन्तोदात्तत्वाऽनापत्त्या तेनोदात्तनिवृत्तिस्वरस्य न निषेध इत्यस्याऽर्थस्य तत्सूत्रे एव भाष्ये स्पष्टत्वादिति चिन्त्यमेतत्[1])।

डित्त्वं टिलोपाऽर्थम्। पित्त्वन्तु नब्विषयत्वेनाऽऽद्युदात्तकुमुदशब्दे उदात्तनिवृत्तिस्वराऽप्राप्त्या मतोरनुदात्तत्वाऽर्थं बोध्यम्। प्रक्रियालाघवाय ड्मतुबेव तु न कृतः, अन्यतोऽपि विधानाऽर्थत्वात्। तत्सिद्धाऽर्थमाह—[2] महिषाच्चेति। न चाऽनिष्टेऽपि प्रसङ्गः। अनभिधानात्। एतदर्थमेव प्रकृतस्य म[3]तुपो डित्त्वं न कृतम्।

महिष्मानिति। अत्राऽनुनासिको न। षकारसवर्णाऽनुनासिकस्याऽभावात्। अनुनासिकविधौ सवर्णग्रहणाऽपकर्षण 'सवर्णोऽनुनासिक' इति वाक्याऽर्थ इति निरूपितं 'यरोऽनुनासिक' इति सूत्रे। शादो—दोपधः।

शिखाया व। 'दन्तशिखात्संज्ञायामि'ति पञ्चमे वक्ष्यते, तद्देशेऽपि 'शिखावल' इति रूपसिद्धये। इदन्तु निर्वृत्ताद्यर्थम्, देशे तन्नाम्न्यणो बाधनाऽर्थं च।

उत्करादिभ्यश्छः। 'उत्करादिराकृतिगण' इत्यन्ये।

[4]कुञ्चेत्यादि—नडाद्यन्तर्गणसूत्रे द्वे। सौत्रः षष्ठ्या लुक्।

---

१ 'तदशक्यत्वादिति चिन्त्यमेतत्' इति ग. घ. पाठः।

२ इतोऽग्रे—'प्रत्ययमात्रं पूर्वमुक्त्वा 'कुमुदनडवेतसेभ्य' इत्युत्तरसूत्रं विधाय, पूर्वस्य क्वाचित्कत्वज्ञापनेनाऽदोषादित्याहुः' इति ग. घ. पाठः।

३ 'ड्मतुपो डित्त्वम्' इति क. पाठः।

४ 'कुञ्चेत्यादि' इति ग. घ. पाठः।

एवं 'तक्षन्नि'त्यत्राऽपि । नडाद्यन्तर्गतबिल्वादय एव कृतकुगागमा, अकारेणोच्चारणाऽर्थेन सहिताः सूत्रे निर्दिष्टाः, व्याख्यानात्, कान्त-गणपाठाऽभावाच्च । तदाह–नडाद्यन्तरिति ।

**छस्य किमिति** । नडाद्यन्तर्गणबिल्वादिभ्यः कृतकुभ्यः परस्य च्छस्यैव सम्भवेन, 'हलस्तद्धितस्ये'त्यतः 'तद्धितस्ये'त्यनुवृत्त्यैव सिद्धमिति प्रश्नः ।

**संनियोगशिष्टानामिति** । 'तेषामन्यतराऽपाये उभयोरप्यपाय' इति न्यायेनेत्यर्थः । अस्य चेदमेव ज्ञापकम् । अत एव 'पञ्च इन्द्राण्यो देवता अस्य पञ्चेन्द्र' इत्यादौ ङीषो लुकि, आनुको निवृत्तिः ।

न च 'बिल्वादिभ्य' इत्येव सिद्धे, कुगनुवादसामर्थ्यादेव तदनिवृत्तिः सिद्धेति, छग्रहणं व्यर्थमेव । प्रतिपदोक्तत्वेन 'बिल्वादिभ्योऽणि'ति विकाराऽर्थस्य लुगापत्तिवारणाऽर्थं कुगनुवादचारितार्थ्यादित्याशयः । न च स्थानिवद्भावेन छोऽस्त्येवेति, कथं तन्निवृत्तिप्रसक्तिः । शास्त्रीयकार्ये एव तत्प्रवृत्तेः । न चेदानीं शास्त्रीयं किञ्चित्कर्त्तव्यमस्ति । निवृत्त्यभावस्तु न शास्त्रीय इति दिक् ।

**लुग्ग्रहणमिति** । 'ढे लोप' इत्यनुवर्त्तमाने इत्यर्थः ।

लोपग्रहणाऽनुवृत्तावुपधाया इति वर्त्तते, न वा ? । आद्ये आह— यमात्रस्येति । अन्त्ये तु 'आदेः परस्ये'ति ईकारलोपाऽऽपत्तिरिति बोध्यम् ।

इति चातुरर्थिकाः ।

---

'अनुवृत्त्यैव सिद्धम् । न च बिल्वकशब्दाद्विकारे कोपधाऽणि तस्याऽयमित्यर्थे 'बैल्वकीय' इत्यादावणो लुगभावाय तत् । 'आदि'ग्रहणेन आगमविशिष्टाना-मेव ग्रहणेनाऽस्याऽप्यागमविशिष्टस्यैव ग्रहणात् । न हि कान्तानां क्वचित् पाठोऽस्ति । गणपाठस्य शीघ्रोपस्थितिकतया 'आदि'शब्दस्य प्रकारवाचित्वा-ऽभावादिति प्रश्नः' इति ख. ग. पाठः ।

# अथ शैषिकप्रकरणम् ।

ननु ग्रहणादिषु केन प्रत्यय इत्यत आह—लक्षणञ्चेति । इदमेव विधायकमिति भावः । इदं च 'तत्र जात' इति सूत्रे भाष्ये स्पष्टम् ।

ननु लक्षणं तावद्व्यर्थम् । 'तस्येदम्' 'संस्कृतं भक्षा' इत्याभ्यां सिद्धेः। एवमधिकारोऽपि व्यर्थः[1] । न च तदभावे घादीनां स्वार्थिकत्वापत्तिः । जातादिषु घादीनामनुवृत्तेः[2] । न चाऽपत्यादि[3]चतुरर्थीपर्यन्तेष्वप्यर्थेषु घादीनां ट्युट्युलन्तानां प्रवृत्त्यापत्तिः, तेषामपि 'तस्येदमि'तीदमर्थत्वादिति वाच्यम्। आर्द्रका-शालादीनां वृद्धत्वादेव च्छे सिद्धे, उत्करादिषु पाठेन इतः प्रागर्थेषु तेषामप्रवृत्तिज्ञापनात् । ([4]तेषामिदमर्थत्वेनाऽग्रहणज्ञापनाच्च)।

यदि 'आर्द्रकादिभ्यश्छश्चतुरर्थ्यामेवे'ति नियमाऽर्थं तत्, तर्हि 'गोत्रोक्षोष्ट्रे'ति गोत्राद्[5]वुञ्विधिर्ज्ञापकः। अन्यथा समूहस्याऽपीदमर्थतया गोत्रचरणाद्वुञैव सिद्धे, किं तेन?। लिङ्गन्तु लोकादेव नपुंसकत्वं बोध्यम् । एतेन 'इदमर्थवुञन्तं त्रिलिङ्गं स्यात् । समूहे तु क्लीबमेवे'ति परास्तम्[6] ।

यत्तु 'एवं सति प्राग्दीव्यतोऽणित्यत्रैव ण्यादिभिः सह पठ्येरन् घादय' इति हरदत्तः। तन्न। 'विकारे घादिनिवृत्त्यर्थं तथा पाठ' इत्यस्याऽपि वक्तुं

---

१ इतोऽग्रे—'पूर्वोत्तरसाहचर्येणाऽर्थवत्त्वस्यैव निर्णयात् । अत एव मध्ये पाठः' इति ग. घ. पाठः ।

२ 'अनुवृत्तेश्च' इति ग. घ. पाठः । क. कुण्डलितः ।

३ 'चतुरर्थीपर्यन्तेष्वपि घादीनाम्' इति ग.घ. पाठः ।

४ अयं ख. घ. ङ. पाठः । क. ग. नास्ति ।

५ 'गोत्रोक्षोष्ट्रेति वुञ्विधिः' इति ग. घ. पाठः ।

६ इतोऽग्रे—'न च समूहत्वप्रकारकबोधार्थं तत् । त्यदादीनां बुद्धिविषयताऽवच्छेदकाऽवच्छिन्नविशेषेष्वेव शक्ततया तत्रापि तत्तद्रूपेणैव बोधात्' इति ग. घ. पाठः ।

शक्यत्वात् । अन्यथा ण्यादीनामपि निवृत्त्यापत्तिः[1] । न चैवमपि सन्निहिते जाते एव स्युर्न व्यवहितेषु भवादिष्विति, अर्थसाकल्याऽर्थः[2] शेषाऽधिकार इति वाच्यम् । व्याख्यानेन सर्वत्राऽप्यनुवृत्तिसिद्धेः । 'प्रावृष एण्यठपौ' इति सूत्रकरणलाघवाऽनुरोधेन जाताऽधिकाराऽनन्तरमेवैषां पाठे कार्ये, प्राक्पाठस्य सर्वत्र सम्बन्धे ज्ञापकस्य सत्त्वाच्चेति चेन्न । ज्ञापकसिद्धवचनकल्पनाऽपेक्षया शेषाऽधिकारस्यैव लघुत्वात् । 'शैषिकान्मतुबर्थीया'दि'त्यस्य विषयलाभाऽर्थं तदावश्यकत्वाच्च । शैषिकत्वप्रयुक्तं कार्यविशेषं ध्वनयितुं क्रियमाणः शेषाऽधिकार एव च 'शैषिकाच्छैषिको ने'त्यंशाज्ज्ञापको बोध्यः । एवं[3] च 'तत्र जात' इत्यादीनां 'शेषरूपे जाते इत्यर्थे प्रत्यय' इत्यर्थः । अत एव 'तस्य विकार' इत्यतः प्राक् शेषाधिकार' इति प्राञ्चः । एवं च स्पष्टप्रतिपत्तये विधित्वमप्युक्तमिति[4] दिक् ।

'विगृहीतादपी'त्यादि वाचनिकम् । सूत्रे तु सङ्घातस्यैव ग्रहणम् । अन्यथा वैषम्यात्सङ्ख्याताऽनुदेशो न स्यात् ।

कत्र्यादिभ्यो । सूत्रे एकश्रुत्या पाठात्तत्पुरुषबहुव्रीहिभ्यां निष्पन्नयोः

---

१ इतोऽग्रे—'प्राग्दीव्यत' इति विशिष्टाऽवधिपरिच्छिन्नत्वान्न निवृत्तिरितिचेत् । 'साऽस्मिन्नि'त्यतः 'से'त्यनुवर्त्तमाने 'साऽस्य देवते'त्यत्र पुनः 'से'त्युक्तिसामर्थ्यादितेरिव, विनिगमनाविरहेणैषामपि निवृत्तिर्मा भूदित्यर्थं पाठ इत्यपि वक्तुं शक्यम् । किञ्च लौकिकविवक्षाऽनुसारकेतेरनुवृत्तावपि न क्षतिः । सर्वत्रैव लौकिकानां देवतार्थकप्रत्ययविवक्षायाः सत्त्वादित्याहुः' इति ग. घ. पाठः ।

२ इतोऽग्रे—'समूहपदवत्समूहत्वेन बोधार्थम् गोत्रात्समूहे वुञ्विधानस्याऽऽवश्यकत्वाच्च' इति ख. ङ. पाठः । क. कुण्डलितः ।

३ 'अत एव तत्र जात इत्यादिष्वप्यस्य सम्बन्धः । शेषरूपे जाते इत्यर्थे प्रत्यय इत्यर्थात्' इति ग. घ. पाठः ।

४ 'विधित्वमप्युक्तमिति दिक् । 'चक्षुःकरणकग्रहणकर्मे'त्यर्थे 'चाक्षुषं रूपमि'त्यादेः साधुत्वाय तदावश्यकमि'त्यन्ये' इति ख. ङ. पाठः । क. कुण्डलितः ।

कञ्चिशब्दयोः, 'व त्रि'धातोरिप्रत्यये निष्पन्नस्य माधवोक्तस्य च, 'के वा त्रयो न बिभृयुरि'त्यर्थकस्य च ग्रहणं बोध्यम्।

अत्र गणसूत्रम्-'कुल्याया यलोपश्चे'ति। आजन्तमिति। अव्ययसाहचर्यात्। न तु टाबन्तो 'दक्षिणा'शब्द इति भावः। अत एव 'दाक्षिणात्य' इत्यादौ 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वं न।

यत्तु 'तद्धितभिन्ने एवाऽस्य प्रवृत्तिरि'ति। तत्तु प्रागेव दूषितम्।

[1]पाश्चात्त्य इति। कथं तर्हि 'पश्चात्तनैः कश्चन नुद्यमान' इति श्रीहर्षः। न च दिग्देशवाचिनः साऽवकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते, परत्वादिति वाच्यम्। 'अग्रादिपश्चाड्डिमजि'ति डिमचा ट्युट्युलबाधस्य दुर्वारत्वात्[2]। देशरूपाऽर्थस्यैव विवक्षितत्वाच्चेति।

सत्यम्। 'पश्चात्तन्वन्तीति-पश्चात्तना' इति कथञ्चिद्योज्यम्।

कापिश्याः। 'कापिशी'शब्दादित्यर्थः। षित्त्वफलं दर्शयति—कापिशायनीति। 'बह्वयूर्दिपर्दिभ्यश्चे'ति वक्तव्यम्'। 'अवृद्धादपी'ति वुञोऽपवादः। बाह्लायनी। और्दायनी। पार्दायनी।

रङ्कोरमनुष्ये। अत्र 'रङ्कु'शब्दाज्जनपदवाचिनः प्राग्दीव्यतोऽणप्राप्तः। तस्य 'अवृद्धादपी'ति वुञ् बाधकः, तस्य ओर्देशे ठञ्, तस्य कोपधादण्, तस्य कच्छाद्यण्। तद्बाधकौ ष्फक्-अणौ विधीयेते। 'कोपधत्वादेवाऽणि सिद्धे, कच्छादिषु 'रङ्कु'शब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानाऽर्थ'[3] इति कैयटाऽऽदयः।

'आर्देश ठञः परत्वात् 'अवृद्धादपी'ति वुञ् बाधक' इत्यन्ये।

---

१ 'पाश्चात्त्य इति' इत्यारभ्य 'कथञ्चिद्योज्यम्' इत्यन्तः ख. ग. घ. ङ. पाठो मनोरमास्थत्वात् क. नास्ति।

२ 'दुर्वारत्वाच्च' इति ग. घ. पाठः।

३ 'वुञ्बाधनार्थः' इति ख. ङ. पाठः।

राङ्कवको मनुष्य इति । 'मनुष्यतत्स्थयोरि'ति वुञ्। 'राङ्कवो मनुष्य' इति तु क्वाचित्कोऽपपाठः। नन्वेवं परत्वाद्विशेषविहितत्वाच्च वुञा ष्फगणो-र्मनुष्ये बाधसिद्धौ, अमनुष्यग्रहणं व्यर्थम् । न च 'रङ्कोर्मनुष्ये वुञ्वैकल्पिक' इत्यर्थज्ञापनार्थम् । अत एव 'अमनुष्ये इति किम् ?। 'राङ्कवो मनुष्य' इति वृत्तिः सङ्गच्छते । 'अमनुष्ये' इतिपदाऽभावे पक्षे ष्फगपि स्यादित्याशय[1] इति वाच्यम् । तत्राऽणोऽनिष्टत्वात् । एतत्सूत्रविहितयोर्द्वयोरप्यभावस्याऽमनुष्यग्रहणेन बोधिततया, ज्ञापितेऽप्यणोऽलाभात् । न च तेन ष्फगभाव एव बोध्यते । विनिगमनाविरहात् । सूत्रोपात्ततया तदभावबोधनस्यैवौचित्यात् । न च[2] 'मनुष्यस्थे ष्फगणावि'ति ज्ञाप्यताम् । अनिष्टत्वात् ।

न चाऽमनुष्यग्रहणं पर्युदासवृत्त्या चेतने एव प्रवृत्त्यर्थम्, 'राङ्क्वायणः कम्बल' इति मा भूदितीति वाच्यम् । तत्राऽपि ष्फगणोरिष्टत्वात् ।

एवमण्ग्रहणमपि व्यर्थम् , कच्छादिपाठादणोऽपि सिद्धेरिति चेत् । इष्टाऽऽपत्तेः । तथा च भाष्यम्–'रङ्कोरमनुष्यग्रहणाऽऽनर्थक्यम् । मनुष्यतत्स्थयोर्वुञ्विधानात्' । 'तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्न । अनिष्टत्वात्'। 'अण्ग्रहणाऽऽनर्थक्यं च । कच्छादिभ्योऽण्विधानादि'ति ।

अपाच्यमिति। द्वितीयो वर्णः पकारः। यत्तु 'प्राच्यवाचीप्रतीच्यस्ताः' इत्यमरे दन्त्योष्ठ्यपाठात्सूत्रेऽपि तथैव पठित्वा 'अवाच्यमि'त्युदाहरन्ति,

---

१ 'पदाऽभावे वुञेव स्यादित्याशयः' इति ग. घ. पाठः ।

२ 'न च 'अमनुष्ये मनुष्यस्थे वुञ् न ष्फगणभ्यां बाध्यते' इति ज्ञाप्यताम् । अनिष्टत्वात् । न चाऽमनुष्यग्रहणं पर्युदासवृत्त्या चेतने एव प्रवृत्त्यर्थम् । 'राङ्कवः कम्बल' इति माभूदितीति वाच्यम् । तत्रापि ष्फगणोरिष्टत्वात् । एवमण्ग्रहणमपि व्यर्थम् । कच्छादिपाठादणोऽपि सिद्धेः । न च मनुष्यतत्स्थयोर्वुञर्थः सं पाठश्चरितार्थः । विनिगमनाविरहेण तत्पाठस्योभयार्थत्वादिति चेत् । इष्टापत्तेः । तथा च भाष्यम्' इति ग. पाठः ।

तन्न। 'यदिन्द्रप्रागपागुदगि'ति वेदे वर्णव्यत्ययकल्पनाऽऽपत्तेः। अमरेऽपि पकारपाठस्यैव प्रचुरत्वाच्च।

प्रागादयोऽस्तात्यन्ता अव्ययाः। अन्येऽनव्ययाः। इहोभयेऽपि गृह्यन्ते, अविशेषात्। 'संस्काराः प्राक्तना' इति तु कालवाचिनोऽव्ययात् परत्वात् ट्युट्युलोर्बोध्यम्।

वर्णुरिति। 'अदूरभवश्चे'त्यर्थे सुवास्त्वादित्वादणो 'जनपदे लुप्'। वर्णुः-सिन्धुनदः।

पदान्तत्वात्षत्वाऽप्राप्तेराह—[1]ह्रस्वात्तादौ। 'तिङन्तस्य प्रतिषेधो वक्तव्यः'। भिन्द्यस्तराम्। अरण्याण्ण इति। अणि हि ङीप्स्यादिति भावः।

उत्तरादाहञिति। यद्यपि 'आहि च दूरे' 'उत्तराच्चे'त्याहिप्रत्यये, ततो भवेऽणि, टिलोपे, 'औत्तराहः' सिद्धः, तथापि अदूरे सिद्ध्यर्थम्, 'औत्तर' इति प्रयोगनिवृत्त्यर्थं, स्त्रियां टाबर्थम्, आद्युदात्ताऽर्थं चेदम्। 'छन्दस्याविष्टयस्योपसङ्ख्यानम्'।

वक्ष्यमाणाविति। 'सायंचिरमि'त्यादिने'ति शेषः। पक्षे इति। 'श्वसस्तुट् चे'त्यनेन।

काकतीरमिति। 'ककतीर'शब्दोऽत्र प्रकृतिः। काकतीरशब्दस्य प्रकृतित्वे परत्वाच्छप्रत्ययप्रसङ्गात्। भाष्ये त्वव्ययात्त्यबिति सूत्रे 'कखतीर'-'काखतीरमि'ति पाठः। संज्ञाभूनाया इति। सूत्रे पञ्चम्यर्थे सप्तमीति भावः।

मद्रेभ्यो। बहुवचननिर्देशाज्जनपदवाचिनो ग्रहणम्, न भद्रपर्यायस्य। दिशोऽमद्राणामिति। 'दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याऽचामादेरचो वृद्धिरि'त्यर्थः। पौर्वमद्र इति। 'मद्रस्य पूर्व' इत्येकदेशिसमासः। 'मद्रैकदेशवृत्तेर्मद्रशब्दस्य दिक्शब्देन सामानाधिकरण्यात् 'तद्धिताऽर्थे'ति समास' इत्यन्ये।

---

१ 'ह्रस्वात्तादौ। 'आदि'ग्रहणमुपदेशे तादित्वप्रतिपत्त्यर्थम्। तेन 'मुहुस्तनमि'त्यत्र षत्वं नेत्याहुः। उणादीनां व्युत्पन्नत्वेनाऽयमपि प्रत्ययाऽवयवः' इति ख. घ. पाठः।

उदीच्य । 'दिग्'ग्रहणं निवृत्तम् । उदीच्यग्रामात्किम् ? । माथुरः । मध्यदेशग्रामोऽयम् । बह्वचः किम् ? । 'ध्वज्ञी'–ङीषन्तः । तस्य 'ध्वाज्ञः' । अन्तोदात्तात्किम् ?। 'शार्करीधानम्' । अयं कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । सर्वत्राऽण्प्रत्ययः प्रत्युदाहरणेषु । स्वरे विशेषः । शैवपुरमिति । 'प्रस्थपुरवहान्ताच्चे'ति वुञ् न । 'वृद्धादि'त्यस्य तत्राऽनुवृत्तेः ।

प्रस्थोत्तर । उदीच्यग्रामलक्षणाऽञोऽपवादः । वाहीकस्य कोपधत्वेऽपि पलद्यादिषु पाठो वृद्धाच्छस्य परत्वात्प्राप्तस्य बाधनाऽर्थम् । कोपधाऽण् तु अवृद्धे साऽवकाशः । अत एव[1] 'औलूकीय' इत्यत्र[2] परत्वात् 'वृद्धाच्छः' । पलदीति । ईकारान्तो वा, नान्तो वेत्याहुः ।

कण्वादिभ्यो । कण्वादिर्गर्गाद्यन्तर्गणः । अत्र लक्षणप्रतिपदोक्तपरिभाषया गोत्रप्रत्ययस्य गर्गादियञ एव ग्रहणम् । एवं चाऽत्र गोत्रं युवत्वाऽनाक्रान्त-पौत्रप्रभृत्यर्थविहितप्रत्ययाऽन्तत्वरूपं शास्त्रीयमेव गृह्यते इति बोध्यम् । शास्त्रीयमिति । अपत्याऽधिकारादन्यत्वेऽप्युक्तयुक्त्या पूर्वसूत्रे, अर्थाऽधिकाराऽनुरोधात्पूर्वसाहचर्याच्च 'इञश्चे'त्यत्राऽपीति भावः । इदं च वृद्धसंज्ञासूत्रे, 'यूनि लुक्' सूत्रे च भाष्यकैयटयोः स्पष्टम् । अपवाद इति । प्रतिषेध इत्यर्थः । लिङ्गमिति । तत्फलं तु 'औद्दालकिः पिता', 'औद्दालकायनः पुत्र' इत्यत्र 'इञः प्राचामि'ति भरतेभ्यो लुक् नेति 'आह्वादि'तिसूत्रे कैयटः ।

वृद्धिर्यस्या । 'अचामि'ति जातौ सौत्रं बहुवचनम् । तेन 'शालीय'-सिद्धिः । व्यपदेशिवद्भावात् 'ज्ञीय'सिद्धिः । आदिरिति किम् ? । सभासंनयने भवः साभासंनयनः । वृद्धिरिति किम् ?। तदभावे-यस्याऽचामादिर्हलित्यर्थः सामर्थ्यात्स्यात् । तथा च 'रक्षितस्याऽयं-राक्षितः' इत्यत्रैव स्यात्, न त्वौपगवीयादौ । 'यस्ये'ति तु संज्ञिनो व्यपदेशाय ।

---

१ 'अत एव' इति ग. घ. नास्ति ।

२ 'इत्यत्राऽणः परत्वात् वृद्धाच्छः' इति ख. ङ. पाठः ।

अचामिति किम् ? । तदभावे 'यस्याऽऽदिर्वृद्धिरि'त्यर्थे 'औपगवीया' इत्यादावेव स्यात्, न तु गार्गीयाऽऽदौ ।

एङ् प्रा । प्राग्ग्रहणं विकल्पाऽर्थम् । तदाह–वा स्यादिति । व्यवस्थित-विभाषा चेयम् । तेन शैषिकेष्वेवेदम् । तेनाऽपत्ये, विकारे च वृद्धलक्षण-फिञ्मयटौ न । अप्राग्देशवाचिक्रोडदेवदत्तयोश्च न शैषिकेऽपि । स्पष्टं चेदं भाष्यकैयटयोः । देवदत्तीय इति । अत्र देवदत्तो मनुष्यनाम । न च देवदत्तशब्दः काश्यादिषु पठ्यते, तत्र परत्वाट्ठञ्ञिठावेव स्याताम्, तत्राऽपि 'वृद्धादि' ति वर्त्तते । ये तु तत्र कुमार-युवराजादयोऽवृद्धाः पठ्यन्ते, तेभ्यस्तु पाठसामर्थ्यादिति वाच्यम् । काश्यादिसाहचर्येण प्राग्देश-वाचिन एव देवदत्तस्य काश्यादिषु पाठात् । अप्राग्देशवाचिनस्तु व्यव-स्थित विभाषया 'एङ् प्राचां देशे' इति, 'वा नामधेयस्ये'ति च न संज्ञेति, अदोषात् । स्पष्टं चेदमेङिति सूत्रे कैयटे । अत एव 'देवदत्तीया' इति, अत्र भाष्ये उदाहृतम्[2] । 'व्यवस्थितविभाषया छे एव वृद्धत्वमि'ति तु वृत्तिकृत् । 'अत्र 'नामधेय' शब्देन आधुनिकसाङ्केतिकरूपं पौरुषेयमेव गृह्यते । अत एव 'एङ् प्राचां देशे' इति साऽर्थकम् । तेन घटीयाद्यसाध्वेव । गहादित्वाद्वा 'साध्वि'ति कैयटाद्यनुसारिणः ।

अन्ये[3] तु 'एङ् प्राचां देशे' इति नियमाऽर्थम्-'देशवृत्तेश्चेदेङादेरेवे'ति; घटीयाद्यनेनैव साधु । रूढ्या बोधकशब्दत्वस्य नामत्वात् । इदमेव सञ्ज्ञात्वम् । स्पष्टं चेदं 'कारनाम्नो'ति सूत्रे आकरे । अत एव 'गोष्ठजादयः पशुनामभ्यः' इति वार्त्तिके 'गोगोष्ठम्' 'अविगोष्ठमि'त्युदाहृतं सङ्गच्छते

---

१ इतोऽग्रे––'वृद्धाच्छः । शौवादंष्ट्रसिद्धिस्तु 'ओर्गुण' इत्यत्रोपपादिता' इति ग. घ. पाठः ।

२ इतोऽग्रे––'एतदुदाहरणपरभाष्यप्रामाण्येन देवदत्तशब्दपाठस्याऽप्रामाणि-कत्वात्' इति ग. घ. पाठः ।

३ 'अन्ये तु अनुपसंजातविरोधन्यायेन एङ् प्राचां देशे' इति ग. घ. पाठः ।

इत्याहुः । एतदेवाऽवष्टभ्य मूलेऽपि क्वचित्पाठः–'घटीयं रूपम्', 'घाटमि'ति । 'गोत्रोत्तरपदस्याऽसमस्तगोत्रवत्प्रत्यया भवन्तीति वक्तव्यम्, जिह्वाकात्यहरितकात्यवर्जम्' । 'आदनपाणिनीयाः' । पिङ्गलकाण्व्यस्य च्छात्राः–'पैङ्गलकाण्वा' इत्यादि । जिह्वेत्यादि किम्? । जैह्वाकाताः । हारितकाता' इति । कतः–अकण्वादिः । अवृद्धत्वादौत्सर्गिकोऽण् । 'एङ् प्राचामि'त्यस्य शैषिकेष्वेव प्रवृत्तिं ध्वनयितुमिहैव एतत्प्रकरणमुपन्यस्तमित्याहुः । छस् छादिः, न तु शादिः । पदत्वफलकसित्त्वस्य वैयर्थ्याऽऽपत्तेः । व्याख्यानाच्च । अत एव सो न श्रवणाऽर्थः । उच्चारणार्थ इति । विधेय-घटकस्य इत्त्वेपि, तदतिरिक्तफलाऽभाव इत्यर्थः । ञकारविपर्यासस्तु स्त्रीप्रत्यये विशेषाऽर्थ इति भावः । काश्याद्यन्तर्गणसूत्रमाह–आपदादीति ।

ओर्देशे । 'वृद्धादि'ति निवृत्तम् ।

वृद्धात् । अत्र 'ओर्देशे' इति सम्बध्यते । तदाह—वृद्धादेवेति । 'प्राग्देशवाचिन एवे'ति तु न नियमः । अप्राग्देशवाचिन उवर्णान्तस्याऽभावेन व्यावर्त्त्याऽभावादि'ति हरदत्तः । 'अव्ययात्त्यप्'सूत्रे उपाऽन्त्यभाष्यस्वरसोऽप्येवमेवं ।

धन्व-मरुदेशः । धन्वविशेषेति । स्वरूपग्रहणन्तु न । तस्याऽवृद्धत्वात् । अत एव पर्यायाणामपि न ग्रहणम् । 'पारेधन्व'शब्दस्तु विशेषवाच्येव । स्पष्टं चेदमव्ययात्त्यप्सूत्रे भाष्ये । ऐरावतं धन्वेति । यद्यपि 'समानौ मरुधन्वानावि'त्यमरः, तथापि 'अष्टकं नाम धन्वे'ति भाष्ये ह्रस्वपाठात्

१ इतोऽग्रे—'उभयत्राऽपि ञकार एवाऽनुबन्धः । तस्य विपर्यासस्तु स्त्रीप्रत्यये विशेषाऽर्थः' इति ग. घ. पाठः ।

२ इतोऽग्रे—'वृद्धाच्छमिति । न च तत्र 'वृद्धात्प्राचामि'त्यस्य प्राप्तिः, परत्वात्स्येति वाच्यम् । 'नियमसूत्राणां निषेधमुखेन प्रवृत्तिरि'तिपक्षेऽनेनैव ठञो विधानात् । स्पष्टं चेदं त्यप्सूत्रे भाष्ये इत्याहुः' इति घ. पाठः ।

३ इतोऽग्रे—'उपक्रमस्थवृद्धादित्यस्य संकोचापत्तेश्चेत्याहुः' इति ग.घ. पाठः ।

नपुंसकत्वमपि 'धन्व'शब्दस्येति बोध्यम्। धनुर्वाचकस्य धन्वशब्दस्य नपुंसकत्वेऽपि न ग्रहणम्, 'देशे' इत्यनुवृत्तेः। पैलुवहक इति। उत्तरपद-वृद्धिसहितस्त्वपपाठः। उत्तरेणेति। रोपधत्वादिति भावः।

ईत इति। व्याख्यानाद्दीर्घग्रहणम्। तपरत्वं स्पष्टाऽर्थम्।

जनपदत। 'तदवधिरि'[1]ति कर्मधारयः। तेन स-जनपद एव। अवधित्वं च सन्निधानाज्जनपदं प्रत्येव। न च जनपदत्वादेव सिद्धिः। पुनर्विधान-सामर्थ्यादुत्तरसूत्रेण 'त्रिगर्त'शब्दे परमपि गर्त्तोत्तरपदं छं बाधित्वा वुञेव यथा स्यादित्यर्थं तत्। एवं चोत्तरार्थमेव 'तदवधि'ग्रहणं फलितम्। तद्ध्वनयन्नुदाहरति—त्रैगर्त्तक इति। एतेन 'उत्तरोदाहरणस्याऽत्रोपन्यास-श्चिन्त्य' इत्यपास्तम्।

अवृद्धादपि ब। अत्र सूत्रे 'अवृद्धादपी'ति चिन्त्यप्रयोजनम्। सामर्थ्या-द्वृद्धादित्यस्य निवृत्तिसिद्धेरित्याहुः। दार्वेक इति। 'दार्वा' इति बहुवचना-ऽन्तोऽयं जनपदे। [2]कालञ्जरका इति। कालञ्जरेषु भवा इत्यर्थः।

कच्छाग्निवक्त्रवर्त्तो। 'जनपदे'त्यादि निवृत्तम्। 'देशे' इत्येव। 'उत्तरपद'ग्रहणं कच्छाऽर्थम्। केवलस्याऽपि तस्य देशे[3] वृत्तेः। अन्यत्र तु सामर्थ्यादेव तदन्तविधिः सिद्धः। 'दारुकच्छ'-'कुण्डाग्नि'-'सिन्धुवक्त्र'–'बहुवर्त्ताः' प्रकृतयः। क्वचित्तु काशिकायां 'गर्त्तोत्तरपदादि'ति पाठो दृश्यते, स 'जनपदतदवध्योश्चे'ति सूत्रभाष्यविरुद्धः।

धूमादिभ्यः। ये तु धूमादिषु पाथेय-विदेहा-ऽऽनर्त्ता, योपधा, जनपद-वाचिनस्तेषां 'धन्वयोपधात्' 'जनपदतदवध्योश्चे'त्येव सिद्धे, अदेशाऽर्थं ग्रहणम्। 'समुद्रान्नावि, मनुष्ये च'।

१ 'तत्, तदवधिरिति कर्मधारयः' इति क. ग. पाठः।

२ मुद्रितसिद्धान्तकौमुद्यां तु 'कालञ्जरक' इत्येव सम्प्रति पाठो दृश्यते।

३ 'कूलाख्ये देशे वृत्तेः' इति ग. घ. पाठः।

नागरा ब्राह्मणा इति । कन्थ्यादिषु 'नगर'शब्दो 'माहिष्मती'साहचर्यात्संज्ञाशब्द एव गृह्यते । तेन नाऽत्र ढकञ् । अत एव 'प्राचां ग्रामनगराणामि'ति सूत्रभाष्ये 'नागरा' इत्युदाहृतमिति भावः ।

विभाषा कुरु । 'कुरोः कच्छादिपाठसामर्थ्यात्पक्षेऽणि सिद्धे, युगन्धराऽर्थं विभाषे'ति भाष्यकृतः । मनुष्य-तत्स्थयोस्तु परत्वान्नित्यमेव वुञ् । कुरुयुगन्धरौ-जनपदशब्दौ । 'अवृद्धादपी'ति नित्ये प्राप्ते विकल्पोऽयम् ।

कोपधा । 'प्रस्थोत्तरे'त्यादिना सिद्धे जनपदवुञो बाधनाऽर्थमिदम् । तत्तु[2] 'उदीच्यग्रामलक्षणाऽञ्बाधनाऽर्थमि'त्युक्तम । महिषका-जनपदः ।

कच्छादि । 'अयमाकृतिगणश्चकारादि'त्येके । वुञादेरिति । यद्यपि कच्छशब्दो न बहुवचनविषय, इति न वुञः प्राप्तिस्तथाप्युत्तरार्थं पाठ इत्याहुः । सिन्धोः–'ओर्देशे ठञ्'प्राप्तः । नियमार्थमिति । 'साल्वादेवे'ति विपरीतनियमस्तु न । 'गोयवाग्वोश्चे'त्यारम्भात् । 'कच्छादिषु 'साल्व'-पाठस्तु 'साल्वः पदातिरि'त्यादौ छो मा भूदि'ति कैयटः । 'अनभिधानाच्छो ने'ति भाष्यस्वरसः ।

गहादिभ्यः । एभ्यः सति सम्भवे देशवाचिभ्यश्छः । तेन 'पूर्वपक्षादिभ्योऽदेशवाचिभ्योऽपि पठितेभ्यः । अपठितेभ्यश्च यथायोगमि'त्याहुः । अयमाकृतिगणः । 'मुखे'त्यादि चत्वारि गणसूत्राणि[3] । आद्यादित्वात्तसिः । मुखतो[4] भवम्–मुखतीयम् । तत्र 'अलोन्त्यस्ये'ति सलोपे, 'यस्येति चे'ति अकारलोपः । ज्ञापयितुमिति । तेन 'आरातीय' इत्यादि सिद्धम ।

कुग्जनस्येति । इदम्, 'मुखे'ति च 'अन्त.पूर्वपदादि'तिसूत्रे भाष्ये स्पष्टम् । अतो भवाऽर्थे एव एतेभ्यः प्रत्यय इत्याहुः । देवकीयमिति ।

---

१ 'इत्युदाहृतम् । तेनाऽत्र न ढकञिति भावः' इति ग. घ. पाठः ।

२ तत्तु = 'प्रस्थोत्तरपदे'त्यादिसूत्रन्तु इत्यर्थः ।

३ 'गहाद्यन्तर्गणसूत्राणि' इति लघुशेखरे ग. पाठः ।

४ 'मुखतो जातादि' इति ख. ङ. पाठः ।

'नूनमत्र दैवीऽनुग्रह' इति भाष्यात् 'देवस्याऽयमि'त्यर्थे देवाद्यञञावि-त्यपि पक्षे भवती'ति माधवः। 'स्वकीयमि'ति तु स्वशब्दात्स्वार्थिक'क'प्रत्य-यान्तादस्याऽऽकृतिगणत्वेन छे बोध्यम्। केवलात् 'स्व'शब्दात्तु अण्— 'सौवम्'। एतच्च 'द्वारादीनां चे'ति सूत्रे आकरे स्पष्टम्। 'स्वीयमि'ति तु 'प्राक्क्रीताच्छः'। एवं 'मध्य'शब्दाद्भवे 'मध्यीयमि'ति भवति। एवं तत्रैवा-ऽर्थे छप्रत्ययसन्नियोगेन मध्यस्य मान्तत्वमपि निपात्यते, 'मध्यमीय' इति भवति। स्पष्टं चेदम् 'अन्तःपूर्वपदादि'त्यत्र भाष्ये। एवं पृथिवीमध्य-वाचिनो 'मध्य'शब्दस्य भवाऽतिरिक्तजातादिषु च्छप्रत्ययसन्नियोगेन मध्यमाऽऽदेशः। 'मध्यमीयः'। मध्याऽन्तरवाचिनस्तु नेति बोध्यम्। 'पृथ्वीमध्यवासिनश्चरणा' इत्यर्थे तु न च्छः। किन्तु 'सोऽस्य निवास' इत्यणेव। मध्यमाऽऽदेशस्तु तत्राऽपि। 'माध्यमाश्चरणा' इति। तदुक्तम्— 'पृथ्वीमध्यस्य 'मध्यम'भावश्चरणसम्बन्धे'। 'अण् तु निवासलक्षण' इति।

राज्ञः। 'देशे' इति न सम्बध्यते। असम्भवात्। ब्राह्मणकीय इति। कोपधत्वादण् प्राप्तः। सौसुकीय[3]-ऐणीकीयादि तु गहादित्वात्साधु।

एतेन 'कोपधग्रहणं कर्त्तव्यम्, सौसुकाद्यर्थमि'तिवार्त्तिकाऽनुक्तेर्न्यूनते'-त्यपास्तम्। अयोमुखीयमिति। वाहीकग्रामलक्षणौ ठञ्ञ्ठाविह प्राप्तौ।

ठञ्ञिठादेरिति। नगरान्ते 'रोपधेतोरि'ति वुञ् आदिशब्दाऽर्थः।

पर्वताच्च। 'पार्वतीयैरि'ति तु 'पर्वतीयस्य राज्ञ इमे' इत्यर्थे छान्तादणि बोध्यम्। 'शैषिकादि'ति निषेधस्तु न। असरूपत्वात्।

विभाषा। 'अमनुष्य'शब्दोऽत्र यौगिको, व्याख्यानात्।

---

१ इतोग्रे 'अन्यार्थे तु नाऽण्, अनभिधानात्' इति ग. घ. पाठः।

२ इतोग्रे—'अन्तरशब्दादनेन च्छे, 'न'शब्देन समासे, स्वार्थिक-के 'नान्तरीयक-मि'ति साधु। 'अविनाभूतमि'त्यर्थः' इति ग. घ. पाठः।

३ 'सौषुकीय' इति ख. ङ. पाठः।

कृकण। देशवाची 'भारद्वाज'शब्दः प्रकृतिविशेषणम्, व्याख्याना-दित्याह—देशवाचिभ्यामिति।

युष्मदस्मदोः। चाच्छ इति। विधेयसन्निहितचस्य विधेयसमुच्चायकत्वा-त्खञा प्राप्तबाधस्य, त्यदादित्वेन वृद्धत्वात्प्राप्तस्य च्छस्याऽनेनैव विधान-मिति भावः। यथासङ्ख्यन्तु न। अस्वरितत्वात्। न च एक एव खोऽनेन विधीयते, चकारेण तस्य सहायता द्योत्यते, सा च प्रकरणाच्छेनेति, कुत्र यथासङ्ख्यप्राप्तिरिति वाच्यम्। सहायतामात्रद्योतनेऽपि, तस्य प्रति-योगिसाकाङ्क्षतया द्वयोरुपस्थित्या तत्प्राप्तेः। द्वितीयोपस्थितिं विनाऽर्थो-ऽपर्यवसानात्। पक्षेऽणिति। खञ्छयोरभावपक्षे उत्सर्गसूत्रेणाऽणित्यर्थः।

यत्तु 'प्रत्ययत्रयविधानान्न यथासङ्ख्यमि'ति। तन्न। अन्यतरस्या-ङ्ग्रहणस्य हि पक्षेऽभावमात्रमर्थो, न त्वन्यभावोऽपि। नानाऽर्थताऽऽपत्तेः। प्रकृते च वाक्यस्य महाविभाषया सिद्धत्वादन्यतरस्याङ्ग्रहणबोधिततद-भावेऽणेवेति लक्ष्यसंस्कारवेलायां निर्णीयते। यथासङ्ख्यसूत्रे हि 'विध्यर्थ-प्रमितिवेलायां निर्दिश्यमानगतसङ्ख्यासाम्यं गृह्यते' इति स्पष्टं 'ञमङण-नमि'त्यादौ भाष्ये। अत एव 'सिन्ध्वपकराभ्यां कन्' 'अञ्च वा' इति नाऽसूत्रीत्याहुः। भाष्ये तु 'युष्मदस्मदोरन्यतरस्याम्'। 'छ' इति वर्त्तते। 'आभ्यां छो वा स्यात्'। उक्तरीत्या वृद्धत्वान्नित्ये प्राप्ते विकल्पोऽयम्। ततः 'खञ् च' इति योगविभागेन यथासङ्ख्यं परिहृतम्।

तस्मिन्नणि च। पूर्वसूत्रे साक्षान्निर्दिष्टत्वेन प्राधान्यात्खञ एव तच्छब्देन परामर्शः। निमित्तनिमित्तिनोर्यथासङ्ख्यन्तु न। पृथग्विभक्ति-

१ 'चकारेण च्छस्याऽनुकर्षणेन अनेनैव विधानमिति मत्वा यथासङ्ख्यप्राप्ति-रुद्भाविता वार्तिककृता। अस्तु वा तथा, तथापि सूत्रे न कश्चिद्दोषः' इति ग. घ. पाठः।

२ 'वाक्यादेर्महाविभाषादिना' इति ग. घ. पाठः।

३ 'भाष्ये इत्याहुः' इति ग. घ. पाठः।

निर्देशेन, चकारेण च वाक्यभेदसूचकेन योगविभागबोधनात्। 'तस्मिन् युष्माकास्माकौ'। तस्मिन् = खञीत्यर्थः। ततः-'अणि चे'ति। अत एव 'खञणोरि'ति नोक्तम्।

तवकममका।'एकवचने' इतिषष्ठ्यर्थ प्रथमाद्विवचनमित्याह-एकार्थवाचिनोरिति। यौगिकैकवचनग्रहणमिति भावः। अत्राऽपि 'खञि, अणि चे'ति वाक्यभेदेन सम्बध्यते, अतो न यथासङ्ख्यमिति दिक्।

प्रत्ययोत्तर। उत्तरपदे तु 'त्वत्पुत्रः' 'मत्पुत्र' इत्युदाहरणं बोध्यम्।

अर्द्धाद्यत्। 'अर्द्धात्सपूर्वपदाट्ठञ्वक्तव्यः'। 'बल्यर्थम्—बालेयम्'। 'तस्याऽर्द्धं भवा बालेयार्द्धिकाः'। 'अध्यात्मादित्वादिदं सिद्धमि'त्यन्ये।

दिक्पूर्व। 'दिक्शब्दपरावराभ्यामर्द्धेन समासे यदेव पूर्वविप्रतिषेधेन'[1]। सम्भाव्येतेति। 'चाऽनुकृष्टं नोत्तरत्रे'त्येतदनुपस्थितिकाले इत्यर्थः। तदुपस्थितौ च यतोऽनुकर्षाऽभावाट्ठञ एवाऽनुकर्षो भविष्यतीति[2] भावः।

[3]अ साम्प्रतिके। 'सम्प्रति'शब्दात्प्रज्ञाद्यणि विनयादित्वात्स्वार्थे[4] ठक्। तेन 'सम्प्रति', 'साम्प्रतम्', 'साम्प्रतिकमि'ति त्रयः पर्याया इति बोध्यम्। 'सम्प्रतौ'ति न्याय्येऽपि। 'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रः, स वा एष सम्प्रति यज्ञो यत्पञ्चरात्र' इति प्रयोगात्। 'न न्यूनो, नाऽतिरिक्तः, सम'इत्यर्थः। 'एतर्हि सम्प्रतीदानीमि'त्यमरादिदानीमित्यर्थेऽप्येते बोध्याः।

द्वीपाद। अनुसमुद्रमिति। 'अनुर्यत्समये'ति समासः। ( सप्तम्यन्तं

---

१ इतोऽग्रे—'पूर्वसूत्रस्थपूर्वग्रहणेनैष सिद्ध इति केचित्। पदग्रहणं स्वरूपविधिनिरासायेत्याहुः' इति ग. घ. पाठः।

२ इतोऽग्रे—'तद्ग्रहणं स्पष्टार्थमेव, तन्न्यायाऽनित्यत्वज्ञापनार्थं वेति भावः' इति ख. ग. घ. ङ. पाठः।

३ इतः पूर्वम्—'मध्यान्मः। स्वार्थेऽप्ययम्। परन्तु भावार्थोऽण्विषये एव, अभिधानस्वाभाव्यात्। तेन 'माध्यम'सिद्धिः। स्पष्टं चेदमन्तःपूर्वपदादिति सूत्रे भाष्ये' इति ग. घ. पाठः। ४ अयं ख. घ. ङ. पाठः।

चेदम्—) विद्यमानक्रियाद्वारकं द्वीपविशेषणमित्याह—समुद्रसमीप इति। द्वीपस्य कच्छादौ पाठात् कच्छाद्यणो, मनुष्यवुञश्चाऽपवादः। 'अनुसे'ति किम् ? । 'द्वैपम्' अन्यत् । 'द्वैपको मनुष्यः' । उक्तावण्वुञौ ।

कालाट्ठञ् । अत्र स्वरूपस्य, पर्यायाणां, कालविशेषवाचिनां, लक्षणयाऽपि तद्वाचिनां च ग्रहणम् । अत एव 'कालिकी व्याप्तिरि'त्यादयःप्रयोगाः, सन्धिवेला-त्रयोदशीप्रभृतिभ्योऽवृद्धेभ्यष्ठञ्बाधनाऽर्थं विधीयमानोऽण्, 'त्रैहिपलालिकम्', 'कादम्बपुष्पिकमि'त्यादिप्रयोगाश्च सङ्गच्छन्ते । एतेन 'विशेषाणामेव ग्रहणमि'ति वृत्त्याद्युक्तमपास्तम् । मुनित्रयाऽनुक्तत्वात् । 'पौनःपुनिक' इत्यस्याऽनापत्तेश्च । अत एव 'नस्तद्धिते' इति सूत्रे 'पौनःपुनिकमि'ति प्रतीके—'यथाकथञ्चित्कालशब्दाट्ठञि'ति कैयटः ।

'[1]लाक्षणिकग्रहणे प्रमाणन्तु सन्धिवेलादिसूत्रेऽनेन कालग्रहणेन नक्षत्राणां विशेषणम् । ननु 'लुबविशेषे' इतिव्युत्पादनात्पुष्यादिशब्दानां कालो मुख्य एवाऽर्थ इति चेन्न । लुपः पौषादिनिवृत्त्यर्थं [2]लक्षणाऽन्वाख्यायकत्वाददोषः । न त्वेतावता कालो मुख्याऽर्थः । अनन्यलभ्यस्यैव शब्दाऽर्थत्वादि'ति मनोरमा । तदाह—कालवाचिभ्य इति । 'कालप्रतिपादकेभ्य' इत्यर्थः । अत एव 'तदस्य परिमाणम्, 'सङ्ख्याया' इति सूत्रे भाष्ये यो यः काले वर्त्तते स स कालशब्दः, रमणीयादिष्वतिप्रसङ्गस्त्वनभिधानान्न' इत्युक्तम् । अनेन[3] 'अत्र शास्त्रे 'काल'ग्रहणेन यथाकथञ्चित्कालबोधकानां ग्रहणमि'ति सूचितम् ।

---

१ 'लाक्षणिकग्रहणे' इत्यारभ्य 'मनोरमा' इत्यन्तः ख. घ. ङ. पाठः । क. कुण्डलितः, मनोरमास्थत्वात् ।

२ 'लक्षितलक्षणे'ति मनोरमापाठः । तत्र पुष्यलक्षितचन्द्रेण कालो लक्ष्यते इत्यर्थो बोध्यः ।

३ 'अनेन हि अत्र शास्त्रे' इति ख. घ. ङ. पाठः ।

सायम्प्रातिक इत्यादि। न चाऽत्र स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाऽभाववत्कालमुदायस्य कालवाचकत्वाऽभावात्कथं ठञः प्राप्तिः। किञ्चाऽत्र तदन्तत्वेन, 'पौनःपुनिक' इत्यत्र स्थानिवत्त्वेन चाऽव्ययत्वात् ट्युट्युलौ दुर्वाराविति वाच्यम्। 'नस्तद्धिते' इति सूत्रस्थभाष्यप्रयोगेण ईदृशकालवाचकादप्यस्य प्रवृत्तेः, ट्युट्युलोरभावस्य च कल्पनाददोष इत्याहुः। इति यावदिति। नन्विदम् 'अव्ययात्त्यब्'तिसूत्रस्थभाष्यविरुद्धम्। तत्र हि छनक्षत्राऽणोः, छट्युट्युलोश्च विप्रतिषेध उक्तः। त्वद्रीत्या हि छबाधकठञपवादतया उत्कृष्टबलानामणादीनां दुर्बलेन छेन संप्रधारणाया अनुचितत्वेन, तदसङ्गतिः स्पष्टैवेति चेन्न। तेषां स्वघटकठञपवादत्वेऽपि, परस्परपरिहारेण चारितार्थ्यस्यैव सम्प्रधारणाबीजत्वेनाऽदोषात्।

---

१ 'सर्वस्य द्वे' 'इतिसूत्रस्थ' इति ग. घ. पाठः।

२ 'कल्पनाददोषः। सूत्रे 'चिरमि'त्यस्य ग्रहणेनाऽव्ययत्वप्रयुक्तट्युट्युलोरनित्यत्वज्ञापनाच्चेत्याहुः' इति ख. ग. घ. ङ. पाठः।

३ 'तदसङ्गतिः स्पष्टैवेति चेन्न। वृत्त्याद्यनुसारेण मूलस्य सत्वात्। 'कालादि'त्यनुवृत्तावप्यतिप्रसङ्गोऽनभिधानाद्वारणीयः। यत्तु 'सायंचिरमि'तिसूत्रस्थसायंग्रहणप्रत्याख्यानपरभाष्य' इति ख. ङ. पाठः।

४ 'इति चेन्न। 'सायंचिरमि'तिसूत्रस्थ—'सायं'ग्रहणप्रत्याख्यानपरभाष्यविरोधेन उक्तभाष्यस्य प्रौढिवादपरत्वात्। तत्र हि मान्ताऽव्ययादव्ययत्वेनैव ट्युट्युलोः सिद्धतया तत्प्रत्याख्यातम्। स्यतेर्घञि निष्पन्न-'साय'शब्दस्त्ववसानमात्रवाची, न कालवाची, 'सायाह्न' इत्यादिप्रयोगात्' 'षोऽन्तकर्मणी'ति स्मरणाच्च। अतः सूत्रमतेऽपि नेह तद्ग्रहणमिति तद्भावः। न च सायशब्दस्यापि लक्षणया सायाह्नपरत्वे कालवाचित्वमस्त्येव। अत एव 'सायमण्डनमभिस्वरयन्त्यः' इति भारविप्रयोग इति वाच्यम्। तस्य मान्ततया अपिविधेयतया गौरवाऽऽपत्तेः। अव्ययस्य प्रतिपदोक्तत्वाच्च। चिरप्राह्णादिसाहचर्येण शक्त्या कालवाचिन एव 'सायं'शब्दस्येह ग्रहणाच्च। न चैवं 'साय'-

यत्तु 'सायंचिरमि'ति सूत्रस्थ'सायम्' ग्रहणप्रत्याख्यानपरभाष्यविरोधेन उक्तभाष्यं प्रौढिवादः। तत्र हि मान्ताऽव्ययादव्ययत्वेनैव ट्युट्युलोः सिद्धतया तत्प्रत्याख्यातम्।[1] स्यतेर्घञि निष्पन्न–'साय'शब्दस्तु अवसानमात्रवाची, न कालवाची, 'सायाह्न' इत्यादिप्रयोगात्, 'षोऽन्तकर्मणी'ति स्मरणाच्चेति तद्भावः। तन्न।[2] 'साय'शब्दस्याऽपि लक्षणया सायाऽह्नपरत्वे कालवाचित्वसत्त्वात्। तस्य[3] च सायाह्नशब्दे, 'सायतर'शब्दे, 'साये' इति सप्तम्यन्ते च लक्षणया कालपरत्वे साधुत्वम्, नाऽन्यत्रेति,[4] अनभिधानान्न ततष्ठञिति भाष्याशयसत्त्वेनाऽविरोधात्।[5] एवं च 'सायमण्डनमि'त्यादिप्रयोगा अपप्रयोगा एवेति दिक्[6]।

---

शब्दस्य लक्षणादिना कालपरत्वे, ततः कालाट्ठञ् दुर्वारः। न चेष्टापत्तिः। 'सायंचिरयोर्मान्तत्वं निपात्यते' इति वार्तिकविरोधादिति वाच्यम्। अनभिधानेन तत्र ठञोऽभावकल्पनात्। वस्तुतो घञन्त'साय'शब्दस्य' 'सायाह्न'-शब्दे, 'सायतर'शब्दे' इति ग. पाठः।

१ इतोऽग्रे—'अतः सूत्रमतेऽपि नेह तद्ग्रहणमिति तद्भावः' इति ख. ङ. पाठः।

२ इतोऽग्रे—'अत एव 'सायमण्डनमभित्वरयन्त्यः' इति भारविप्रयोगः। न चैवं ततः कालाट्ठञ् दुर्वारः। न चेष्टापत्तिः। 'सायंचिरयोर्मान्तत्वं निपात्यते' इति वार्तिकविरोधादिति वाच्यम्। अनभिधानेन तत्र ठञोऽभावकल्पनात्। वस्तुतो घञन्तसायशब्दस्य सायाह्नशब्दे' इति ख. घ. ङ. पाठः।

३ तस्य च = घञन्तसायशब्दस्य चेत्यर्थः।

४ 'नाऽन्यत्रेति भाष्यसंमतमिति भाष्यप्रदीपोद्द्योते निरूपितम्' इति ख. ग. घ. ङ. पाठः।

५ इतः पूर्वम्—'अत एवाव्ययात्त्यबितिसूत्रे ठञ्-नक्षत्राणोष्ठञ्-ट्युट्युलोश्च विप्रतिषेधाऽनुक्तया भाष्ये न्यूनते'ति परास्तम्। अपवादत्वादित्याहुः' इति ग. घ. पाठः।

६ इतोऽग्रे—'वस्तुतः'कालादि'त्यनुवृत्तावपि, ठञोऽपवादत्वेऽपि परस्परपरिहारेण चारिताऽर्थ्यस्यैव सम्प्रधारणाबीजत्वेन भाष्याऽसङ्गत्यभावादिति दिक्' इति ख. ग. घ. ङ. पाठः।

श्राद्धे । 'श्राद्ध'शब्दः 'प्रज्ञाश्रद्धाऽर्चाभ्यो ण' इति सप्तम्यर्थे मत्वर्थीयाऽन्तः पित्र्यकर्मविशेषे रूढ इत्याहुः । अत एव श्रद्धावतः पुरुषस्य नेह ग्रहणम् । व्याख्यानाच्च । ठञ्त्रा स्यादिति । 'ऐषमोह्य' इत्यादिना त्यबपि विकल्पितः । पक्षे ट्युट्युलौ बोध्यौ ।

द्वारादीनां च । ( द्वार, श्वस्, व्यल्कस, स्वस्ति, स्व, स्वग्राम, श्वन्, स्वादु, मृदु, द्वारपाल, स्वादंष्ट्र, स्वाध्याय, स्वर । वृत् ) ।

'इह तदादिग्रहणमपी'त्यग्रे वक्ष्यते । अत्र स्वग्राम-स्वाध्याययोः पाठः 'स्वशब्दादेश्चेतयोरेवे'ति नियमाऽर्थः । तेन 'स्वार्थिकाः प्रकृतित' इति सिद्धम् । 'स्वाभाविकम्' 'स्वाराज्यमि'ति च सिद्धम् । ध्वनितं चेदं 'द्वारादीनां चे'ति सूत्रे भाष्ये ।

शौवस्तिकमिति । ननु प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वात्तुटि, तस्य प्रत्ययभक्ततया 'अङ्गात्परस्ये'त्यर्थे ठस्याऽऽदित्वाऽभावेन ततः परत्वाऽभावात् 'कर्मठ' इत्यादौ अठचष्ठस्येव इकादेशो दुर्लभः । 'यदागमा' इति न्यायेनाऽऽगमविशिष्टस्य ग्रहणेऽपि, निर्दिश्यमानपरिभाषया समुदायस्य दुर्लभः, निर्दिश्यमानस्य व्यवहितत्वाच्चेति चेन्न । 'वुञ्छणि'त्यत्र, 'बह्वचो मनुष्यनाम्न' इत्यत्र च ठचश्चित्वेन 'इकादेशोऽन्तरङ्गेभ्यो बलवानि'ति ज्ञापितत्वात् । अन्यथा सन्नियोगशिष्टप्रत्ययाऽऽद्युदात्तत्वेनैव सिद्धौ किन्तेन ?। कृते त्विकादेशे प्रत्ययस्वरं बाधितुं चित्त्वमित्याहुः । तन्न । 'ठस्येक' इतिसूत्रे सङ्घातग्रहणपक्षेऽन्तोदात्तस्य ठस्याऽऽन्तरतम्यादन्तोदात्ताऽऽदेशसम्पादनेन चित्त्वसार्थक्यात् । 'वर्णग्रहणपक्षे ठगादिष्वकार उच्चारणार्थः, अनच्का एव प्रत्यया' इति भाष्यकैयट-हरदत्तादिसंमतत्वेन, प्रत्यये व्यर्थस्य चित्त्वस्याऽऽदेशेऽन्तोदात्तप्रवृत्त्या सार्थक्यात् । तस्मात्

---

१ अयं पाठः क. नास्ति ।

२ इतोऽग्रे—'तस्मात् ठचश्चित्त्वं सामान्याऽपेक्षं ज्ञापकं बोध्यम्—'प्रत्ययसम्बन्ध्यादेशा अन्तरङ्गेभ्यो बलवन्त इती'ति बोध्यम्' इति ख. क. पाठः ।

'श्वसस्तुट्चे'ति चेनाऽऽदेशसंनियोगः कर्त्तव्य इति साधु । 'अङ्गत्व-निमित्तस्य ठस्ये'ति व्याख्याने तु 'यदागमा' इति परिभाषया विशिष्टस्य ग्रहणात्, निर्दिश्यमानपरिभाषया च ठस्यैवाऽऽदेशान्न दोष इति दिक्।[1]

सन्धिवेला । अण्ग्रहणं पौर्णमास्याश्छं[2] बाधितुम् । वचनं तु ठञ्-बाधनाऽर्थं चरितार्थम् । तैषमिति । 'तिष्येण युक्ते काले भवमि'त्यर्थः । जाते तु 'श्रविष्ठाफल्गुनी'ति लुक् । 'तिष्यपुष्ययोर्नक्षत्राऽणी'ति यलोपः ।

'शाश्वतम्' इति प्रयोगदर्शनात्सन्धिवेलादौ शश्वच्छब्दोपि पठ्यते । 'शाश्वतिक' इत्यत्र तु निपातनादेवाऽणभावः ।

प्रावृष । 'नहिवृती'ति प्रशब्दस्य दीर्घः । ऋत्वणोऽपवादः । प्रावृषेण्य इति । भवादावयम् । जाते तु ठपं वक्ष्यति । 'रषाभ्यामि'ति सिद्धे, प्रक्रियालाघवाऽर्थं णकारोच्चारणम् । 'प्रावृषेण्यमाचक्षाणः प्रावृषेण्' इत्यत्र णश्रवणाऽर्थमपि तत् । ण्यन्तात्क्विप् । णिलोपा-ऽल्लोप-यलोपा' इति कश्चित् ।

सर्वत्राण् च । हैमनमिति । 'नस्तद्धिते' इति टिलोपस्तु न । तलोपस्य समुदायलोपत्वे 'अन्' इति प्रकृतिभावात् । अवयवलोपत्वे तु 'यस्ये'ति-लोपस्य स्थानिवत्त्वात्, असिद्धत्वाद्वा ।

हैमन्तमिति । ऋत्वणि तकारलोपो न । तस्य 'सर्वत्रे'ति प्रतिपदोक्ता-ऽणा सन्नियोगशिष्टत्वात् । नन्वत्र 'सर्वत्र'ग्रहणं व्यर्थम्, 'छन्दसी'त्यस्य निवृत्त्यैव तत्फलसिद्धेरिति चेन्न । 'सर्वत्र विभाषा गोरि'त्यादिवत् तत्स-त्त्वात् । एतेन 'सर्वत्र'ग्रहणसामर्थ्येन 'हेमन्ताच्चे'ति पूर्वसूत्रेऽपि तदपकर्षणाल्लोकेपि 'हैमन्तिकमि'ति भवती'त्यपास्तम् ।

किञ्चैवं[3] लोके 'हेमन्''हेमन्त'शब्दाभ्यां ऋत्वणा हैमन-हैमन्तयोः सिद्धिः । छन्दसि तु ठञा तृतीयमपि । न चाऽत्र ठञा अणो बाधः ।

---

१ एतत्स्थाने 'अत एव भाष्ये 'अनादित्वादप्राप्तिरि'त्येवोक्तमित्याहुः' इति घ.पाठः ।

२ 'पौर्णमास्यादिभ्यः' इति घ. पाठः ।

३ 'किञ्च लोके' इति घ. पाठः ।

छन्दसि सर्वविधीनां वैकल्पिकत्वात्; इति रूपत्रयसिद्धौ, 'सर्वत्राऽण् चे'ति सूत्रं न कार्य'मिति भाष्यं विरुध्येत। त्वद्रीत्या 'हेमन्त'शब्दे ऋत्वणो 'हेमन्ताच्चे'ति ठञा बाधाऽऽपत्तौ, 'हैमन्तमि'त्यसिद्ध्या, फलभेदे प्रत्याख्यानाऽनापत्तेः। तत्रैतावान्विशेषः—'लोके हेमनो वृत्तिविषये एव ऋतुवाचित्वमि'ति, हेमन्तशब्देनाऽस्वपदविग्रह' इति कैयटः। हेमन्तपर्याय-हेमन्शब्दस्तु 'तस्मादेतौ हेमन् न शुष्यत' इत्यादिप्रयोगादस्तीत्यवसीयते।

न च 'हेमन्ताच्चे'ति चकारेण ऋत्वणोऽनुकर्षणात्तत्सिद्धिः। 'वसन्ताच्चे'तिवदस्याऽपि 'छन्दसी'त्यनुकर्षकत्वस्यैवोचितत्वात्। ध्वनितं चेदं सर्वं भाष्ये इत्यलम्।

तुटः प्रागिति। अन्यथाऽन्तरङ्गत्वात्तुटि 'अङ्गात्परस्ये'त्यर्थे युकारस्याऽङ्गात्परत्वाऽभावात्स न स्यात्। न च 'यदागमा' इति न्यायेन 'युवोरि'तिसूत्रे आगमविशिष्टस्याऽपि ग्रहणान्न दोषः। निर्दिश्यमानपरिभाषया विशिष्टस्याऽप्राप्तेः। निर्दिश्यमानस्य व्यवहितत्वाच्चेति भावः।[2]

'अङ्गत्वनिमित्तयोर्युवोरि'त्यर्थे तु न दोषः[3]। अत एव भाष्ये 'अनादित्वादप्राप्तिरि'त्येवोक्तम्। मृत्यु'शब्दे तु कण्ठादाविकादेरिव, बाहुलकादस्याऽप्रवृत्तिर्बोध्या। तुक् तु कर्त्तुमशक्यः। 'प्रातस्तनमि'त्यत्र विसर्गाऽभावाऽऽपत्तेः। एवं श्वसस्तुकि तान्तत्वात्कादेशाऽऽपत्तिरिति बोध्यम्।

'दिवसाऽवसानरूढ'साय'शब्दस्य, 'चिर'शब्दस्य च प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते' इति सूत्राऽनुसारिवार्त्तिकमतम्। भाष्ये तु 'सायम्'-ग्रहणं प्रत्याख्यातम्। अत्र 'सायम्' 'चिर'शब्दयोर्यद्वक्तव्यं तत् 'कालाट्ठञि'ति सूत्रे, अव्ययप्रकरणे चोक्तम्[4]।

---

१ 'रूपत्रयसिद्धाविदं सूत्रं न कार्यम्' इति ख. ग. घ. ङ. पाठः।

२ इतोऽग्रे—'न वर्णग्रहणेष्वि'ति निषेधाच्चिन्त्यमेतत्' इति घ. पुस्तके टिप्पणी।

३ इतोऽग्रे—'ज्ञापकमप्येतदर्थं एवेति तु सम्यक्' इति घ. पुस्तके टिप्पणी।

४ इतोऽग्रे—'चिरन्तनमिति। चिरस्य मान्तत्वं निपातनात्' इति घ. पाठः।

प्राह्णेतनमिति । 'प्राह्णः सोढोऽस्ये'ति विग्रहः । एतदर्थमेव एदन्तत्वनिपातनम् । जाताद्यर्थे तु सप्तम्यलुका सिद्धम् । न च एकारान्तात्सप्तमीश्रवणाय तत्राऽप्येदन्तत्वनिपातनमस्तु । 'घकाले'त्यत्र 'हलदन्तादि'त्यननुवृत्त्या तथाऽप्यलुकः प्रवृत्तेरि'त्याहुः । ध्वनितं चेदमत्रैव भाष्ये । 'घकाले' त्यस्य वैकल्पिकत्वाज्जातार्थेऽपि पाक्षिक-'प्राह्णतनमि'त्येतद्व्यावृत्तये एदन्तत्वनिपातनम् । उक्ताऽर्थकैतत्सूत्रस्थभाष्यप्रामाण्यात्तत्र विकल्पाऽनुवृत्तेः ।

'पुराणमि'त्यत्र पृषोदरादित्वात्तलोपो, न तु 'पुराणप्रोक्तेष्वि'ति निपातनात् । तथा हि सति निपातनानां बाधकत्वेन 'पुरातनमि'त्यस्याऽनापत्तेरिति सर्वादिसूत्रे कैयटे स्पष्टम् । परुत्-पूर्ववत्सरे । परारि—पूर्वतरे ।

अग्रादीति । डिमचो डित्त्वं शक्यमकर्तुम् ।

तत्र जातः । यद्यपि 'शेषे' इत्येव सिद्धम्, 'चाक्षुषं रूपमि'त्यादिवत् । अधिकारत्वाच्च घादयोऽपि तत्र सिद्धा इति, व्यर्थो जाताद्यर्थनिर्देशः । 'जातादिष्वेवे'ति नियमार्थन्तु न । 'चाक्षुषमि'त्याद्यसिद्धेः । 'शेषे' इत्यस्य लक्षणताया वैयर्थ्याऽऽपत्तेश्च । 'आस्ते' 'शेते' इत्यादौ त्वनभिधानान्न । 'अङ्गुल्या खनति' 'वृक्षमूलादागत' इत्यादौ यथा । समर्थविभक्तयोऽप्याक्षेपादेव लप्स्यन्ते । 'चाक्षुषमि'त्यत्र तृतीया यथा । तथाऽपि 'प्रावृषेण्यमि'त्यादेरत्रैवाऽर्थे प्रवृत्त्यर्थमिदमावश्यकम् । योगविभागः, समर्थविभक्तिनिर्देशश्च स्पष्टाऽर्थः ।

---

१ 'हलदन्तादित्यनुवृत्तेरित्याहुः' इति ख. ग. घ. ङ. पाठः ।

२ 'निपातनमित्यन्ये' इति ख. ग. घ. ङ. पाठः ।

३ 'विकल्पाऽनुवृत्तिश्चिन्त्येति तत्त्वम्' इति ख. ग. घ. ङ. पाठः ।

४ 'इतोऽग्रे—'अलुगिति' । 'पक्षे' इति शेषः' इति घ. पाठः ।

५ 'प्रावृषेण्यमित्याद्यर्थमिदमावश्यकम्' इति ख. ग. घ. ङ. पाठः ।

६ इतोऽग्रे—'परिमाणान्तस्ये'त्यत्र स्थानिसमर्पणाऽर्थमपि तस्यावश्यकत्वाच्च । न च तत्र 'सङ्ख्यायाः' इत्यनुवृत्त्या निस्तारः । 'असमासे निष्कादिभ्य' इति सूत्रस्थ-

संज्ञायां शरदो । 'प्रकृतिप्रत्ययसमुदायेन चेत्संज्ञा गम्यते' इत्यर्थः । संज्ञायां किम् ? 'शारदं सस्यम्' ।

उत्तरपदस्य । ननु 'अवयवादि'त्यादौ पञ्चमीनिर्देशात्, 'जे प्रोष्ठपदानामि'त्यस्याऽऽरम्भसामर्थ्यात्, पूर्वसाहचर्याच्च नियमाऽपेक्षया विधित्वस्योचितत्वाच्च, 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'ति सूत्रे 'पूर्वपदस्य चे'त्युक्तेश्च विनाऽप्यधिकारमुत्तरपदस्यैतानि भविष्यन्तीति चेन्न । 'उत्तरपदवृद्धौ सर्वं चे'ति स्वरविधायके उत्तरपदाऽधिकारविहितवृद्धिपरिग्रहाऽर्थं तत्सत्वात् ।

पूर्ववार्षिक इति । 'वर्षाणां पूर्वं' इत्येकदेशिसमासः । पूर्वास्विति । 'तद्धितार्थे'ति समासः । ऋतोरिति । 'ऋतुवाचकाद्वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वाच्यः, अवयववाचकानां यदि पूर्वपदत्वमि'त्यर्थः । पूर्वत्रेति । उदाहरणे इत्यर्थः । तेन तत्र 'वर्षाभ्यष्ठक्', 'सर्वऽत्राण् च तलोपश्चे'ति ठगणौ सिद्धौ । इह त्विति । प्रत्युदाहरणे । तेन तत्र कालाट्ठञेव । वृद्धिमद्विधौ किम् ? पौर्वप्रावृषम् । इह एण्यो न । किन्तु ऋत्वणेव । वाचनिक एवाऽयं तदन्तविधिः । जनपदेति । तदधिकारे 'अवृद्धादपी'त्यनेनेत्यर्थः ।

सुसर्वार्द्धेति । 'जनपदवाचिनः शब्दस्याऽनन्तरे प्रत्यये विधीयमाने तदन्तविधिः, यदि सुप्रभृतिभ्यः परः स भवती'त्यर्थः । अयमपि वाचनिक एव तदन्तविधिः । यत्तु 'लक्षणप्रतिपदोक्तपरिभाषया जनपदशब्दमुच्चार्य

---

'परमनैष्किकमि'ति भाष्योदाहरणाऽसङ्गत्यापत्तेः । अत्रत्यभाष्यन्तु प्रौढिवाद एवेत्याहुः । केचित्तु तत्र भाष्यप्रामाण्यादेव वृद्धिमाहुः' इति घ. पाठः ।

१ 'पूर्वप्रावृषम्' इति घ. पाठः ।

२ 'प्रत्ययविधौ' इति ख. ग. घ. ङ. पाठः ।

३ 'न्यायसिद्धोऽयं तदन्तविधिः' इति घ. पाठः ।

४ इतोऽग्रे—'सुसर्वार्द्धे'ति 'दिश' इति सूत्रे लक्षणप्रतिपदोक्तपरिभाषया जनपदशब्दमुच्चार्य विहितस्य 'जनपदतदवध्योश्चे'ति प्रत्ययस्यैव ग्रहणेन वृद्धिविधायकेनैव तदन्तविधिज्ञापनात् । पूर्वसूत्रे तु प्रतिपदोक्तपरिभाषा न प्रवर्त्तते । 'पूर्ववार्षिक' इत्याद्यसिद्ध्यापत्तेरित्याहुः' इति घ. पाठः ।

विहितस्य 'जनपदतदवध्योश्चे'ति प्रत्ययस्यैव ग्रहणेन, वृद्धिविधायकेनैव तदन्तविधिज्ञापनमि'ति । तन्न । 'दिशोऽमद्राणामि'त्यत्र 'अमद्राणामि'-त्यस्य वैयर्थ्याऽऽपत्तेः ।

पौर्वपञ्चाल इति । अत्र 'पूर्व'शब्दो देशवाची, कालवाची वा । न चाऽत्र वुञ् दुर्वारः। तदन्तविधिबोधकवाक्ये 'दिक्शब्देभ्य' इति 'शब्द'-ग्रहणेन दिशिदृष्टशब्दमात्रग्रहणादिति वाच्यम् । भाष्यादिप्रामाण्येना-ऽत्र 'शब्द'ग्रहणस्य स्पष्टाऽर्थत्वात् । पौर्वमद्र इति । 'मद्रेभ्योऽञि'त्यञ्[2] ।

उत्तरार्थ इति । 'सुसर्वार्द्धदिशो जनपदस्याऽमद्राणामि'त्युक्ते सुसर्वार्द्धेभ्यः परस्याऽपि मद्रस्य 'अमद्राणामि'ति पर्युदासः सम्भाव्येतेति तद्वारणाय इहाऽर्थोऽपि स' इत्यन्ये ।

प्राचां ग्राम । 'प्राचामि'ति देशनिर्देशः। ननु जननिवासत्वेन नगरस्याऽपि 'वाहीकग्रामेभ्य' इत्यादिवत् ग्रामत्वादेव सिद्धे, 'नगर'ग्रहणं व्यर्थम् , स्पष्टं चेदं भाष्ये इति चेन्न । 'नगराणामि'त्येतदुत्तरपदविशेष-णम् , 'ग्रामाणामि'त्येतदङ्गविशेषणमि'ति विषयविवेकाऽर्थं तत्सत्त्वात् । 'ग्रामे'ति च लुप्तषष्ठ्यन्तम् । तदाह–दिश[3] इत्यादिना।

पूर्वैषुकामशम इति । अत्राऽण्प्रत्ययः । यत्तु 'दिक्पूर्वपदादि'ति ञ'

---

१ इतोऽग्रे—'वृद्धिविधिज्ञापिततदन्तविधौ वृद्धिविधिगृहीतदिग्वाचकस्यैवा-ऽनुवादौचित्यात् । शब्दग्रहणं तु स्पष्टाऽर्थमेवेत्याहुः' इति ख. ङ. पाठः ।

२ 'मद्रेभ्योऽञि'त्यञ्। लक्षणप्रतिपदोक्तपरिभाषयैवाऽस्य वारणे सिद्धेऽस्य प्रयोजनं चिन्त्यम् । केचित्त्वस्मादेव ज्ञापकादत्र प्रतिपदोक्तपरिभाषा न प्रवर्त्तते । तदन्त-विधिश्च वाचनिक एव । प्रत्युदाहरणेऽपि वुञ् भवत्येवेत्याहुः' इति घ. पाठः ।

३ इतोग्रे 'इदमेव ध्वनयितुं व्युत्क्रमेण व्याख्यातम् । अवयवस्येति । 'दिशः परस्येत्यादिः' इति घ. पाठः ।

'अवयवस्याऽऽदेरच' इतिपाठः' इति ख. ग. घ. ङ. पाठः । क. नास्ति ।

इति हरदत्तः। तन्न। प्रकृतेः संज्ञात्वात्[1]। पूर्वपाटलीति। पाटलिपुत्र-शब्दस्तदवयवे वर्त्तते इति समानाधिकरणसमासः।

पूर्वाह्णा। इदं 'विभाषा पूर्वाह्णाऽपराह्णाभ्यामि'त्यस्य नक्षत्राऽणो, 'निशाप्रदोषाभ्यां चे'त्यस्य, औत्सर्गिकाऽणश्च यथायथमपवादः। यद्यपि 'सिन्धवपकराभ्यामणञौ'। 'कन् च'। ततः 'पूर्वाह्णे'त्यादि वुन्रहितमेव पाठ्यम्। आर्द्रकाऽमावास्यकयोः 'केऽण' इति ह्रस्वत्वेन सिद्धम्, तथापि 'अमावास्यिके'[2]त्यत्र नित्येत्त्वाय वुन् कृतः। अत्र 'संज्ञायां शरद' इति-सूत्रस्थ'संज्ञा'ग्रहणं 'कृतलब्धे'ति यावदनुवर्त्तयन्ति केचिदि'ति वृत्ता-वुक्तम्। तन्मते असंज्ञायां यथायथमणादयो, घादयश्च बोध्याः।

अमावास्याया वा। पक्षे सन्धिवेलाद्यण्। 'अमावस्यदन्यतरस्यामि'-ति सूत्रे अमापूर्वाद्वसेर्ण्यति, वृद्धौ, पक्षे ह्रस्वो निपात्यते इति, एकदेश-विकृतस्याऽनन्यतया ह्रस्वपक्षेऽप्यण्-वुन्-अकारा भवन्त्येव। दीर्घपाठ एव चाऽत्र[3] सूत्रे इति, 'अमावस्यदन्यतरस्यामि'ति सूत्रे भाष्ये स्पष्टमित्याहुः[4]।

अ चेति। 'अमावास्याशब्दादकारप्रत्ययः स्यादि'ति तदर्थः। क्रमादिति। एतदर्थमेव योगविभाग इति बोध्यम्। स्पष्टं चेदं यथासङ्ख्यसूत्रे भाष्ये।

---

१ 'प्रकृतेः संज्ञात्वादि'ति वृत्तिविरोधात्' इति ख. घ. ङ. पाठः।

२ 'आर्द्रिका', 'अमावास्यिकेत्यत्र' इति ख. घ. ङ. पाठः।

३ 'दीर्घपाठ एव च सूत्रे' इति घ. पाठः।

४ इतोऽग्रे—'ये तु 'अमावस्याया वे'ति ह्रस्वं पठन्ति, तेषां विकृत्या प्रकृतेर-ग्रहणाद्दीर्घपक्षे न स्यादि'ति न्यास-हरदत्तादयः। न च वृद्धिप्रकृतिभूतस्येदं ग्रहणमिति न दोषः। टाबन्तस्याऽनुकरणेऽन्तरङ्गत्वाद् वृद्धौ, वृद्धिप्रकृति-भूतस्याऽनुकर्त्तुमशक्यत्वादिति बोध्यम्। [1]'अमावस्यदि'ति सूत्रे पक्षे वृद्ध्य-भाव एव निपात्यते इति चेदस्तु' इति ख. ङ. पाठः।

---

1 'अमावस्यदिति सूत्रं चेदस्तु' इति घ. पाठः।

श्रविष्ठाफल्गुनी । 'अव्ययात्त्यबि'ति सूत्रे विप्रतिषेधनिरूपणाऽवसरे 'स्वातेरुभयं प्राप्नोति, सौवात' इति भाष्यप्रतीकमुपादाय-'भवार्थेऽण्, जाताऽर्थे तु लुक् स्यादि'ति कैयटोक्तेः, सूत्रे 'स्वाति' इति ह्रस्वाऽन्तपाठ इत्याहुः । ह्रस्वपाठेऽपि लिङ्गविशिष्टपरिभाषया ङीषन्त'स्वाती'शब्दादपि जातार्थेऽणो लुग्भवत्येव । माधवस्तु 'स्वातीतिष्ये'ति ङीषन्तं पठित्वा, जातार्थेऽप्यङीषन्तस्य 'सौवात' इति रूपम्, लिङ्गविशिष्टग्रहणे केवलस्याऽग्रहणादिति 'अत'धातावाह । नक्षत्रेति । 'नक्षत्रयुक्तचन्द्रे'त्यर्थः ।

लुक्तद्धित । अप्रधानमिहोपसर्जनं, न शास्त्रीयम्, असंभवादिति स्पष्टं भाष्यादिषु । श्रविष्ठा = धनिष्ठा । बहुला = कृत्तिका । सूत्रे समाहारद्वन्द्वे ह्रस्वनिर्देश इति बोध्यम् । उपसङ्ख्यानमिति । प्रकरणात् 'लुक्' इति शेषः । चित्रेति । 'लुक्तद्धिते'ति लुकि, जाताऽर्थगतस्त्रीत्वप्रतिपादनाय पुनष्टाप्[2] । पिप्पल्यादेरिति । अन्यथा 'रेवती रोहिणी नक्षत्रे' इति गौरादिषु पाठात्, नक्षत्रवाचित्वाऽभावेन स न स्यादिति भावः । 'नक्षत्रेभ्यो बहुलमि'त्यस्यैवाऽयं सर्वः प्रपञ्चः । स्पष्टं चेदं भाष्ये ।

टाऽनाविति । विधानसामर्थ्यान्नाऽनयोर्लुक् । स्त्रियामित्येवेति । 'फल्गुनी' 'अषाढे'ति भाष्योदाहरणात् । अस्त्रियामपीति । 'श्राविष्ठीया' 'आषाढीया'इति भाष्योदाहरणात् । बहुवचननिर्देशादिति । बह्वर्थत्वेऽपि, शब्दपरत्वेन एकवचनं न्याय्यमिति भावः ।

स्थानान्तगोशाल । सूत्रे समाहारद्वन्द्वगर्भो द्वन्द्वः[3] । तेन स्त्रीलिङ्गयो-'र्गोशाला''खरशाला'शब्दयोर्ग्रहणम् । विभाषेति । अस्य 'यद्यपी'त्यादिः ।

---

१ इतोऽग्रे—'अभिव्यक्ते'तिन्यायेन, साहचर्येण च लब्धमेतत्' इति ख. घ. ङ. पाठः ।

२ 'लुकि, लक्ष्ये लक्षणन्यायाऽनित्यत्वेन पुनष्टाप्' इति घ. पाठः ।

३ इतोऽग्रे—'समुद्राभ्राद्घः' इत्यादिनिर्देशैः पूर्वनिपातप्रकरणस्याऽनित्यत्वान्न तत्कृतो दोषः' इति घ. पाठः ।

'तथाऽपि एकदेशविकृतन्यायेन तत्राऽपि लुगि'ति च शेषः ।

प्रतिप्रसूत इति । 'कालाट्ठञा निवर्त्तित औत्सर्गिकोऽण् पुनः 'सन्धिवेला'दिसूत्रेणाऽभ्यनुज्ञात' इत्यर्थः । स्पष्टं चेदं 'दृष्टं सामे'त्यत्र भाष्ये । अयमेव भाष्ये द्विरण्त्वेन व्यवहृतः ।

कृतलब्ध । 'शेषे' इति सूत्रेणैव कृतत्वादिप्रकारकबोधे घादीनां साधुत्वे सिद्धे, इदं चिन्त्यप्रयोजनमिति, स्पष्टं 'तत्र जात' इति सूत्रे भाष्ये ।

---

१ इतोऽग्रे—'यत्तु सूत्रे 'गोशाल'शब्दस्य 'विभाषा सेने'ति नपुंसकस्यैव निर्देशः । तत्साहचर्यात्खरशालेऽप्येवमेव । स्त्रीत्वपक्षेऽपि लिङ्गविशिष्टपरिभाषया लुक् । यद्यपि प्रागुक्तरीत्या टाबन्तयोर्ग्रहणेऽपि न क्षतिः, एकदेशविकृतन्यायेन क्लीबेऽपि सिद्धेः, तथाऽपि तत्पक्षे वृत्तिद्वयकल्पनागौरवभिया लाघवाऽर्थं ह्रस्वाऽन्तयोरेव ग्रहणमि'ति हरदत्तादयः । तन्न[1] । नपुंसकह्रस्वविशिष्टस्य लिङ्गप्रत्ययवैशिष्ट्याऽसम्भवेन, परिभाषाप्रवृत्तेर्दुरुपपादत्वात्' इति ख. घ. पाठः ।

---

1 'तन्न । शालशब्दाट्टापो विहितत्वेन, तस्य लिङ्गप्रत्ययवैशिष्ट्येऽपि गोशालशब्दादेर्लिङ्गप्रत्ययवैशिष्ट्यस्य दुर्लभत्वात् । यदि तु 'स्त्रीप्रत्यये चाऽनुपसर्जने ने'ति निषेधादत्र विहितत्वांऽशो दुर्लभोऽयुक्तश्च । ध्वनितं चेदं 'बहुव्रीहेरूधस' इत्यत्र भाष्ये । तथापि न क्षतिः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य प्रातिपदिकस्य ग्रहणमि'त्यर्थस्य सत्त्वेन, टापः पूर्वभागस्य प्रातिपदिकत्वाऽभावेन, परिभाषाप्रवृत्तेर्दुरुपपादत्वात् । न ह्यत्र ह्रस्वान्त'शाल'शब्देन समासः, किन्तु टाबन्तेन । 'शाला'शब्दो यद्यपि लिङ्गविशिष्टं प्रातिपदिकं, तथापि नाऽसौ सूत्रे गृहीतः, किन्तु तदवयवकः समुदायः । अत एव 'राजकुमारी'त्यादौ प्रातिपदिकत्वायाऽर्थवत्सूत्रे यत्न आदृतः । अन्यथा लिङ्गविशिष्टपरिभाषया सिद्धे, तद्यत्नो व्यर्थ एव स्यात् । अपि च नपुंसकह्रस्वविशिष्टस्य लिङ्गप्रत्ययवैशिष्ट्याऽसम्भवेन परिभाषाप्रवृत्तिर्दुरुपपादैवेति दिक्'- इति घ. पाठः ।

यद्यपि कृत-क्रीतत्वे जात-लब्धत्वयोर्व्याप्ये, तथाऽपि पृथगुपादानं कृतत्वा-दिप्रकारकेऽपि बोधे एषां साधुत्वबोधनाय । अत एव जाते लुग्भाजामपि, कृते लुग्नेति बोध्यम् ।

प्रायभवः । यद्यपि 'तत्र भव' इत्येव सिद्धं, तथाऽपि भवने कादाचित्कोऽभावप्रतियोगित्वप्रकारकशाब्दबोधाऽर्थमिदमित्याहुः । भाष्ये तु नीलघटे घटत्ववत्, प्रायभवेऽपि भवत्वसत्त्वादिदं प्रत्याख्यातम् ।

उपजानु । उपजान्वादयः सामीप्येऽव्ययीभावाः । 'उपजानुभवं गडु' इत्यत्र 'उपजान्वि'ति ठक् न । अनभिधानात् । अत एव शरीराऽवयवाद्यन्नेति स्पष्टं भाष्ये ।

सम्भूते । 'सम्भूत'शब्देन अवक्लृप्तिरूपा सम्भावना, आधेयस्याऽऽधारपरिमाणाऽनतिरेकश्चे'त्युभयमपि गृह्यते' इत्याहुः ।

कोशाड्ढञ् । 'विकारे (कोशाड्ढञ्) वक्तव्य' इति वार्त्तिकम् । सूत्रमते कोशे सम्भवस्तु सत्कार्यवादाऽऽश्रयेण यथाकथञ्चिदुपपाद्यः । कौशेयमिति । वस्त्रविशेषे रूढः । क्रिमौ, भस्मनि वा न, अनभिधानात् ।

कालात्सा । 'पुष्प्यदि'ति—'पुष्प विकसने' इति दैवादिकाच्छतरि रूपम् । 'तत्र भव' इति यावत् 'कालादि'ति वर्त्तते । उप्यन्ते इति । सूत्रे भूतकालोऽविवक्षित इति भावः । योगविभाग उत्तराऽर्थः ।

आश्वयुज्या । 'अश्विनीनक्षत्रयुक्तायां पौर्णमास्यामि'त्यर्थः । कालाट्ठञ् उप्तेऽर्थेऽपवादोऽयम् । ञकारः स्वराऽर्थः । उत्तरत्र वृद्ध्यर्थश्च ।

देयमृणे । ऋणे किम् ? । 'मासे देया भिक्षा' ।

---

१ 'कृतत्वप्रक्रीतत्वकारकेऽपि' इति घ. पाठः ।

२ 'जाते तु लुग्भाजामपि' इति क. पाठः ।

३ 'कादाचित्कत्वप्रकारक' इति घ. पाठः ।

४ इतोऽग्रे—'तस्य प्रायभवत्वाऽभावादनभिधानाच्च' इति घ. पाठः ।

५ इतोऽग्रे—'शरीरावयवाद्यत् भवसामान्ये विहितोऽपि न । अनभिधानादिति स्पष्टं भाष्ये' इति घ. पाठः ।

६ अत्र 'इत्यर्थः' इति सर्वत्र पाठः । स च कघुशेखरात् शोधितः ।

कलाप्य०। 'देयमृणे' इत्यर्थोऽन्वयाय, 'कालादि'त्यनुवृत्तेन सम्बन्धाय च कलाप्यादयः काले लाक्षणिका इत्याह—यस्मिन्काले इति।

फलमिति। 'उपचारादि'ति शेषः। वस्तुतोऽश्वत्थशब्दस्य तत्फलसम्पादककाले लक्षणेत्युचितम्। लक्षणाद्वयकल्पने गौरवात्। यत्तु 'फले लुगि'ति। तन्न। प्लक्षाद्यणो विधानसामर्थ्येन लुगभावात्। अयं च प्लक्षादिरिति स्पष्टं तद्विदाम्। ईदृशेऽर्थे एवाऽयम्, अभिधानस्वाभाव्यात्।

आवरसमकमिति। 'समा'शब्दो वर्षपर्यायः। अवरा चाऽसौ समा चेति कर्मधारयः। अवरशब्दस्याऽदिक्शब्दत्वान्न 'दिक्सङ्ख्ये' इति नियमः। 'आगामिवत्सराणामाद्ये संवत्सरे देयमि'त्यर्थः। सूत्रे समाहारद्वन्द्वः।

संवत्सराऽग्र। 'संवत्सराऽग्रहायणीभ्यां वे'त्येव सिद्धे, ठञ्ग्रहणं सन्धिवेलादिषु 'संवत्सरात्फलपर्वणोरि'ति पाठात्, फले ऋणत्वेन विवक्षिते अणं बाधित्वा ठञेव यथा स्यादिति।

तदस्य। 'प्रथमान्तात्सोढोपाधिकात्षष्ठ्यर्थेऽणादयः स्युः'। 'अस्ये'ति षष्ठी न कर्त्तरि। 'न लोके'ति निषेधात्। किन्तु कर्त्तुरेव शेषत्वविवक्षायाम्। सोढम्=अभ्यस्तम्। कालस्य स्वरूपेणाऽभ्यासाऽयोगात्तत्सहचरितक्रियायां लक्षणेत्याह—निशासहचरितमिति।

तत्र भवः। पुनः 'तत्र'ग्रहणं 'कालादि'त्यस्य निवृत्त्यर्थम्। भवनमत्र सत्तव, न तूत्पत्तिः, 'तत्र जात' इति पृथग्ग्रहणात्।

---

१ 'व्याहरतीत्याद्यर्थमावश्यकेन कालादित्यनुवृत्तेन' इति ख. पाठः।

२ इतोऽग्रे—'अत एव पुँल्लिङ्गं दर्शयति–अश्वत्थ इति' इति ख. पाठः।

३ 'अभिधानसामर्थ्येन' इति क. पाठः।

४ इतोऽग्रे—'अश्वत्थेन वृक्षेण कालस्य सम्बन्धोऽव्यभिचारीति उक्तार्थाश्रयणम्। 'संज्ञायां श्रवणाश्वत्थाभ्यामि'ति सूत्रनिष्पन्नस्तु पूर्वोत्तरसाहचर्यान्न गृह्यते इति बोध्यम्' इति ख. पाठः।

५ इतोऽग्रे—'न च पूर्वसूत्रस्थ तदि'त्यस्य व्यावृत्तये 'तत्र'ग्रहणम्। 'तदस्ये'ति सूत्रस्य इव उत्तरत्राऽपि सुपठत्वात्' इति ख. घ. क. पाठः।

'[1]अजिनान्ताच्च भवे लुक्'। 'उष्ट्राऽजिनः', सिंहाजिनः। स्पष्टं चेदम् 'अन्तःपूर्वपदादि'त्यत्र भाष्ये। 'चतुर्मासाण्ण्यो यज्ञे'। चतुर्षु मासेषु भवानि—'चातुर्मास्यानि' यज्ञाः। 'संज्ञायामण् वक्तव्यः'। कालाट्ठञो-ऽपवादः। चतुर्षु मासेषु भवा—'चतुर्मासी' पौर्णमासी। 'आषाढी', 'कार्त्तिकी', 'फाल्गुनी' च। इदं च पञ्चमे—'तदस्य ब्रह्मचर्यमि'ति सूत्रे भाष्ये स्पष्टम्। अत एव 'द्विगोरि'ति न लुक्। अप्राग्दीव्यतीयत्वात्[2]।

दिगादिभ्यो यत्[3]। 'उदकात्संज्ञायाम्'। मुखजघनयोरशरीरावय-वाऽर्थः[4] पाठः। सेनाया मुखे, जघने च भवं—'मुख्यम्'। 'जघन्यम्'।

शरीराऽव। 'जङ्घोरस्यो वेग'इति त्वसाध्वेव, शरीराऽवयवसमुदायस्य तदनवयत्वात्।

'शिरस्'शब्दाद्यति, 'ये च तद्धिते'। यादौ तद्धिते शिरसः शीर्षन्नादेशः। 'शीर्षण्यः'। 'वा केशेषु'। 'शीर्षण्याः, शिरस्याः केशा' इति बोध्यम्।

जङ्गलधेनु। 'उत्तरम् = उत्तरपदम्, विभाषितम् = विभाषितवृद्धिक-मि'त्यर्थः। स्वरूपेणोत्तरपदस्य विकल्पाऽसम्भवात्। जङ्गलम् = वन-प्रधानो देशः।

दृतिकु। दृतिः-चर्मविकारः, शरीराऽवयवविशेषश्च। कुक्षिः-धूमादिः। ततो वुञि प्राप्तेऽनेन ठञ्। कलशिर्घट इति। 'दण्डाऽऽहतं कालशेयमरिष्ट-मपि गोरसे' इत्यमरव्याख्यायां 'मन्थनपात्रं कलशिरि'त्युक्तेः। 'वस्तिः-नाभेरधो द्वयोः'। 'अस्ती'ति तिङन्तप्रतिरूपको निपातः, 'अस्तिक्षीरा'इति

१ 'अजिनान्ताच्च भवे न प्रत्ययः। अनभिधानात्। किन्तु लक्षणयैव तत्र प्रयोगः। उष्ट्राऽजिनः। सिंहाऽजिनः' इति घ. पाठः।

२ इतोऽग्रे—'भाष्यप्रयोगाद्वा, विधानसामर्थ्याद्वेत्याहुः' इति ख. ङ. पाठः।

३ इतोऽग्रे—'अयं तिदेवेति 'तव्यत्तव्ये'ति सूत्रे भाष्ये स्पष्टम्' इति ख. पाठः।

४ 'मुखजघनादीनाम्' इति ख. ग. घ. ङ. पाठः।

यथा । धनवाची च—'अस्तिमान्' । धनवानिति यथा । 'अत्राऽविशेषात् द्वयोर्ग्रहणमि'ति हरदत्तादयः । 'आस्तेयम्' । 'विद्यमाने, धने च भवमि'-त्यर्थः । 'त्रिष्वाहेयं विषाऽस्थ्यादी'त्यमरः ।

ग्रीवाभ्योऽण् च । 'ग्रीवा'शब्दो धमनीसङ्घाते । उद्भूताऽवयवभेद-विवक्षया सूत्रे बहुवचनम् । तिरोहिताऽवयवभेदविवक्षायां तु एकवचना-ऽन्तादपि अण्ठञौ स्त एव ।

गम्भीरात् । 'पञ्चजनादुपसङ्ख्यानम' । पाञ्चजन्यः । इदं च 'अन्तः-पूर्वे'त्यत्र भाष्ये स्पष्टम् । परिमुखमिति । वर्जनाऽर्थे 'अपपरी'इति समासः ।

'प्रतिशाख'शब्दः-परिमुखादिः । 'प्रातिशाख्यम' । 'परिमुखाऽऽदिराकृति-गण' इत्येके । परिमुखादिभ्य एवेति । दिगादिगणाऽनन्तरं परिमुखादि-गणः पठ्यते । तत्सामर्थ्यादिह सूत्रे 'अव्ययीभाव'पदं तन्मात्रपरम् । न हि तेषां कार्याऽन्तरमस्ति, येन गणपाठश्चरिताऽर्थः स्यात् । 'परिमुखादिभ्य' इत्येव तु नोक्तम् । बहुव्रीहि-तत्पुरुषयोरपि प्रसङ्गात् । 'अव्ययीभाव'ग्रहणस्य उत्तरत्रोपयोगाच्चेति भावः । 'परिमुखादिषु नासिकाशब्दोऽपि पठनीय'इति 'पद्दन्न' इति सूत्रे भाष्यम् । औपकूल इति । एवम्—औपशालो बोध्यः ।

अनुशतिकादीनां च । अयमाकृतिगणः । आकृतिगण इति । तेन ऊर्ध्वन्दमात् ठञ्सिद्धिः । अत्र प्रत्ययसन्नियोगेन ऊर्ध्वशब्दस्य मान्तत्वं निपात्यते । अत्र वार्त्तिकम्—'मध्यान्मणमीयौ' । 'माध्यमः''मध्यमीयः' ।

१ इतोऽग्रे—'सर्वत[1]' इत्यर्थे त्वव्ययीभावो'ऽव्ययमि'ति योगविभागा-दित्याहुः । 'अस्मादेव निपातनादि'त्यन्ये' इति ख. ङ. पाठः ।

२ 'परेर्मुखोलूखलस्फैरौष्ठहनुशीलरथाः । उपास्स्थूलास्थूणाकलापस्थानसीर-कलायशालयः । अनोः पदयूपवंशसीतापथिन्तिलमाषस्यसात?यवभङ्ग—(खङ्ग)गाङ्ग(स्वङ्ग)शीररथाः । परिमुखादिराकृतिगणः' इति घ. पाठः ।

1 'सर्वत' इत्यर्थे त्वस्मादेव निपातनादव्ययीभावः, 'अव्ययमि'ति योग-विभागाद्वेत्याहुः' इति घ. पाठः ।

'मध्यस्य मध्यम्भावो, दिनञ् च प्रत्यय इति वक्तव्यम्' ।, 'माध्यन्दिने उपगायती'ति । ञित्त्वमाद्युदात्ताऽर्थम् । भाष्ये तु णित् दृश्यते । 'इदं छान्दसमि'त्याहुः । 'एषां पश्चानामि'ति—आदेरचो विशेषणम् । तत्फलमुदाहरति—देविकाकूले इति । सौदेविके तु नाऽऽत्त्वम् । देविकादेर्वृद्ध्यप्राप्तेः । अत्र 'वृद्धिरि'ति अनुवर्त्तते । तेन वृद्धिसंज्ञक आकार इत्यर्थः । उत्तराऽर्थमनुवर्त्तमानस्याऽत्राऽसम्बन्धे मानाऽभावात् । तेन 'दाविकीभार्य' इत्यादौ पुंवत्त्वनिषेधसिद्धिः । यद्यपि ह्रस्वमकारं विधाय तस्य वृद्ध्याऽपीदं सिध्यति, तथाप्यपवादविषये उत्सर्गाऽप्रवृत्त्या आद्विधानं कृतम् ।

वर्गान्ता । केवलवर्गात्तु न । प्रातिपदिकग्रहणे व्यपदेशिवद्भावनिषेधात् ।

कर्णल । अलङ्कारे किम् ? । 'कर्ण्यम्', 'ललाट्यम्' ।

तस्य व्याख्यान इति च । वाक्याऽर्थपरामर्शकेतिशब्दसमीपे श्रूयमाणचकारात् 'तत्र भव' इत्यस्य वाक्याऽर्थस्य ग्रहणम् । 'षष्ठीसमर्थात् व्याख्यातव्यत्वेन प्रसिद्धग्रन्थाऽऽदिप्रतिपादिकाद्व्याख्यानकरणेऽर्थे, सप्तमी-

---

१ इतोऽग्रे—'नन्वत्र ह्रस्व एव विधेयः । वृद्ध्या आकारस्य सिद्धत्वात् । न च वृद्धेरयमपवादः । एकारप्राप्तवृद्धिबाधेऽपि, आकारप्राप्तवृद्धिबाधे मानाऽभावादिति चेन्न[1] । प्रक्रियालाघवाऽर्थत्वात् । अत एव वहीनरस्य[2] औपसङ्ख्यानिकेत्त्वे, वृद्धिः । 'विहीनर'शब्दस्यैव भाष्येऽङ्गीकाराददोषाच्च । वहीनरात्तु नोत्पत्तिः, अनभिधानादित्याहुः' इति ख. घ. ङ. पाठः ।

---

1 इतोऽग्रे—'अष्टाऽवसरत्वात् । अत्र चेदमेव मानम् । न च वहीनरस्य औपसङ्ख्यानिकेत्त्वे वृद्धिर्न स्यात् । न्यायस्याऽनित्यत्वेनाऽक्षतेः । विहीनरस्यैव भाष्येऽङ्गीकारेणाऽदोषाच्च' इति घ. पाठः ।

2 'वहीनरस्येद्विधानमि'ति वार्त्तिकेन इत्त्वम्, ततो वृद्धिरित्यर्थः' इति ख. पाठः ।

समर्थात्त 'भव' इत्यर्थे प्रत्यया' इत्यर्थः। 'व्याख्यातव्यनाम्न' इति किम् ?। 'पाटलिपुत्रस्य व्याख्यानी कोशले'ति। तया हि पाटलिपुत्रं व्याख्यायते,-'ईदृक्सन्निवेशविशिष्टमि'ति। 'नाम'ग्रहणे तु तत्सामर्थ्यात् ग्रन्थानामेव शब्दमयानां ग्रहणम्। तेषु हि व्याख्यातव्यनामत्वं प्रसिद्धम्। 'नाम'ग्रहणस्य प्रसिद्ध्युपसङ्ग्रहाऽर्थत्वादिति भावः। व्याख्यातव्यनामत्वञ्च तत्प्रतिपादकत्वम्। तत्त्वं च शक्त्या, लक्षणया वेत्यत्र नाऽऽग्रहः।

'मन्त्ररूपभवाऽर्थे, कल्परूपव्याख्याने च लुगि'ति भाष्ये स्पष्टम्। यद्यपीदं 'तत्र भवः' 'तस्येदमि'त्याभ्यां गताऽर्थं, तथाऽपि ठञादीनपवादान् वक्तुमिमावर्थौ निर्दिष्टव्यावेव। प्रसङ्गात्तु अणादिकं विधीयते इति बोध्यम्।

बह्वचोऽन्तो। अणोऽपवादः। बह्वचः किम् ?। 'सौपम्'। अन्तोदात्तात्किम् ?। संहितायाः 'सांहितम्'। गतिस्वरेणाऽऽद्युदात्तोऽयम्।

'बह्वच्पदमुत्तरत्राऽप्यनुवर्त्तते' इति वृत्त्यादिस्वरसः।

क्रतुयज्ञे। 'अत्र अर्थाभ्यां यथासङ्ख्यं नेष्यते' इति यथासङ्ख्यसूत्रे भाष्ये। पाकयज्ञः—अल्पयज्ञः। नवयज्ञः = आग्रयणम्। अनन्तोदात्तार्थ इति। नन्वेवमग्निष्टोम-पाकयज्ञ-नवयज्ञाः कथमुदाहृताः, अन्तोदात्तत्वादिति चेन्न। कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तवाजपेयाद्यर्थमावश्यकमिदं परत्वात्तत्राऽपि प्रवर्त्तते इत्याशयात्। यज्ञाऽऽद्यर्थ-मन्त्र-ब्राह्मण-कल्पेषु लाक्षणिकत्वे, व्याख्यातव्यनामत्वं तेषां बोध्यम्।

---

१ अत्र 'इती'ति किम्। तदभावे हि अर्थसंनिधाने श्रूयमाणश्चकारोऽर्थमेव समुच्चिनुयात्, न तु समर्थविभक्तिमपि। तेन भवेऽपि षष्ठ्यन्तादेव स्यात्। इतिस्तु वाक्याऽर्थपरामर्शक इति न दोषः' इति घ. पाठः।

२ 'मन्त्ररूपभवार्थेऽनभिधानात्प्रत्ययो न। किन्त्वौपचारिक एव प्रयोगः— 'अग्निष्टोमे भवो मन्त्रोऽग्निष्टोम' इत्यादि। एवं कल्परूपे व्याख्यानेऽपि— 'अग्निष्टोमस्य व्याख्यानं कल्पोऽग्निष्टोम इति' इति घ. पाठः।

३ 'नामत्वप्रसिद्धिरिति बोध्यम्' इति घ. पाठः।

अध्यायेष्वेव। 'एव'कारः स्पष्टाऽर्थः। ततः ष्ठनिति। षित्वं ङीषर्थम्। 'पौरोडाशिकं काण्डमि'ति तु 'पुरोडाशमधिकृत्य कृतं पौरोडाशम्'। तदेव 'पौरोडाशिकम्'। विनयादित्वाट्ठकि साध्वित्याहुः। 'दाशृ दाने'। कर्मणि घञ्। इहैव निपातनाड्डस्य डत्वम्।

छन्दसो य। प्राग्वल्लक्षणठकोऽपवादः। इहाऽर्थयोः प्रत्ययाभ्यां यथासङ्ख्यं न। अस्वरितत्वात्।

प्राग्जृत्। चातुर्होतृक इति। 'चतुर्होते'ति 'पृथिवी होता, द्यौरध्वर्युरि'त्यादिमन्त्रस्य नामधेयम्। 'नामाऽऽख्यातग्रहणं सङ्घातविगृहीताऽर्थम्' इति वार्त्तिकम्।

अण् ऋगय। 'आकृतिगणोऽयमि'ति कश्चित्। ठञादेरिति। आदिना प्राच्-वृद्धाभ्यां ठक्छौ। ऋगयने 'बह्वच' इति ठञ् प्राप्तः। भावसाधनाऽयनशब्देन समासे 'अनो भावकर्मवचन' इत्यन्तोदात्तत्वात्। अभेदोपचाराच्च ग्रन्थे वृत्तिर्बोध्या। औपनिषदेऽप्येवम्। 'निरुक्त'शब्दः 'संज्ञायामनाचितादीनामि'त्यन्तोदात्तः। अस्य आचितादौ पाठस्त्वनार्षः। हरदत्तमाधवादिविरोधात्।

ठगाय। आयः = स्वामिग्राह्यो भागः। स यत्रोत्पद्यते तत् 'आयस्थानम्'। बहुवचनं स्वरूपग्रहणं निरसितुम्। वृद्धाच्छं परत्वादयं बाधते। 'आपणिकः' इत्यादि। कार्कण इति। 'कृकणपर्णादि'ति च्छः प्राप्तः। तैर्थ इति। अत्र धूमादित्वाद्वुञ् प्राप्तः। यत्तु 'तत्त्वाट्ठञि'ति। तद्भ्रमसात्। 'तीर्थ'शब्दस्याऽदेशवाचित्वे तु धूमादित्वाऽभावात्, आयस्थानठकोऽपवाद इतिबोध्यम्। अण्ग्रहणन्तु 'उदपान'शब्दात् उत्सादेरञं बाधित्वाऽणर्थम्। अन्यथा आयस्थानठकं बाधित्वा यथाविहितोऽञेव स्यात्।

विद्यायोनिसम्बन्धेभ्य इति। 'विद्यायोनिकृतसम्बन्धवत्प्रतिपादकेभ्य' इत्यर्थः। इदमुत्तरत्राऽप्यनुवर्त्तते। अणपवादोऽपि परत्वाच्छं बाधते-'मातामहक' इत्यादि।

---

१ तत्त्वात् = धूमादित्वादित्यर्थः।

ऋतप्रज्ञ्। 'विद्यायोनिसम्बन्धेभ्य' इत्येव। तदाह–वुञोऽपवादइति। अत्र यद्वक्तव्यं तट्टिड्ढेत्यत्रोक्तम्।

गोत्रा। 'अपत्यप्रत्ययान्तात् 'तत आगत' इत्यर्थे अङ्कवत्प्रत्ययाः स्युः। वैदादौ 'सङ्घाङ्के'त्यणः, औपगवके-गोत्रचरणाद्वुञश्चाऽतिदेशः। वुञ् 'तस्येदमि'ति सामान्येन विधीयमानोऽपि, अञादिभ्योऽन्यत्र अङ्केऽपि दृष्ट इत्यस्याऽप्यतिदेशः। स्पष्टं चेदं 'दृष्टं सामे'त्यत्र भाष्ये।

आशौचमिति। 'अशुचेरागतमि'त्यादिविग्रह[1] इत्यभिमानः। 'अशुचेर्भाव' इति तु फलितोऽर्थः। रूढिवशाच्च नाऽतिप्रसङ्गः। प्रसङ्गादुदाहरति—आनैश्वर्यमिति। ब्राह्मणादेराकृतिगणत्वेनाऽनीश्वरस्याऽपि तत्र पाठात्ष्यञ्। केचित्तु यो यस्य भावः स तत्र भवो भवतीति, आशौचे 'तत्र भव' इत्यणमाहुः। आशौचेन आक्षैत्रज्ञादयो[2] व्याख्याताः। एतेन 'अस्य सूत्रस्याऽत्र लेखः प्रमादादि'त्यपास्तम्।

हेतुमनु। 'मनुष्य'ग्रहणम् अहेत्वर्थम्। समरूप्यमिति। 'विभाषे'ति योगविभागात् अगुणवचनादपि पञ्चमी विग्रहे। 'आगमनक्रियानिरूपिताऽपादाने[3] पञ्चमी'त्यन्ये। बहुवचनं स्वरूपविधिनिरासाऽर्थम्[4]।

मयट् च। योगविभागो यथासङ्ख्यनिरासाऽर्थः। टो ङीबर्थः।

प्रभवति। प्रभवः–प्रथमप्रकाशो, नोत्पत्तिः। 'तत्र जात' इत्यतो भेदेन निर्देशात्।

विदूरा। अणोऽपवादः। दन्त्यमध्योऽयम्। यद्यपि विदूरे नगरेऽसौ

१ 'इत्यादिविग्रहः। 'यत्तु 'अशुचेर्भाव' इति। तन्न। 'न नञ्पूर्वात्तत्पुरुषादि'तिभावाऽर्थस्य 'इगन्ताच्चे'त्यस्याऽणोऽत्र प्राप्त्यभावात्' इति ख. ग. ङ. पाठः। क. कुण्डलितः।

२ 'आक्षेत्रज्ञादयो व्याख्याताः' इति क्वचित्पाठः।

३ 'अपादानत्वे' इति ख. ङ. पाठः।

४ 'स्वरूपनिरासार्थम्' इति ख, ङ. पाठः।

संस्क्रियते, न ततः प्रभवति, किन्तु वालवायात्, तथापि वालवायस्य तत्-प्रभववाचकस्य प्रत्ययसन्नियोगेन 'विदूरा'ऽऽदेशो निपात्यते इति बोध्यम्।

यद्वा वालवायपर्यायो 'विदूर'शब्दो ञ्यप्रत्ययविषयो वैयाकरणनिकाये एव प्रसिद्ध इति नाऽतिप्रसङ्गः। स्पष्टं चेदं भाष्ये।

तद्गच्छति। 'तदि'ति द्वितीयाऽन्तम्। पथः कर्त्तृत्वन्तु-'काष्ठानि पचन्ती'तिवत्।

अभिनि। द्वारेण पुरुषेषु निष्क्रमत्सु तदीयनिष्क्रमणाऽऽरोपात्करण-स्याऽपि द्वारस्य कर्त्तृत्वम्। तदित्येवेति। 'अधिकृत्ये'त्यपेक्षया द्वितीयान्तं तत्। शारीरकमिति। 'जीवमि'त्यर्थः। 'शरीर'शब्दात्तस्येदमित्यणि स्वार्थे कः। शारीरकीय इति। चतुर्लक्षणीसूत्रसन्दर्भः। 'वृद्धाच्छः'।

उपचारादिति। एवं च 'वासवदत्ता आख्यायिके'त्यपि सिद्धम्। आख्यायिकासु बहुधा प्रत्ययो न, अनभिधानात्। क्वचित्तु भवत्येव—'भैमरथी'। स्पष्टमिदं भाष्ये इत्याहुः।

शिशुक्रन्दयमस। 'देवाऽसुर''रक्षोऽसुरा'दिद्वन्द्वेभ्यस्त्वनभिधानाच्छो नेत्याहुः। किन्त्वणेव। निपातनादिति। 'सभा राजे'ति सूत्रे 'अमनुष्य'-शब्दो रूढ्या रक्षःपिशाचादीनाहे'त्युक्तत्वादिति भावः।

सोऽस्य नि। कृद्योगे कर्त्तरि 'अस्ये'ति षष्ठी। 'स्रुग्घ्नाऽधिकरणकवासकर्त्ता'[2] उदाहरणाऽर्थः[1]। न चैवं 'तत्र भव' इत्येव सिद्धिः। तत्र स्थित्यर्थकभुवोऽपि ग्रहणात्। उत्पत्तिमात्राऽर्थग्रहणे तु 'तत्र जात' इत्यनेनैव सिद्धौ, तद्वैयर्थ्यं स्यादिति वाच्यम्। वासस्य चेतनमात्रकर्त्तृत्वेन प्रसिद्धतया प्रकारकृत-भेदात्। 'वसन्ति हि प्रेम्णि गुणा' इत्यादौ तूपचार इत्याहुः।

---

१ इतोऽग्रे—'तत्रैतत्कर्त्तृकनिवासाऽधिकरणाऽभिन्नः स्रुघ्न' इति विग्रहाऽर्थः। विशेषणविशेष्यभावव्यत्यासात्' इति ख. घ. ङ. पाठः।

२ 'कर्त्ता वृत्त्यर्थः' इति ख. घ. ङ. पाठः।

अन्ये तु कर्त्तुः शेषत्वविवक्षायां षष्ठी। 'स्रुग्घ्नाऽभिन्ननिवाससम्बन्धी'-त्येवार्थः। उक्तार्थस्तु फलति। 'अभिजन' इत्युत्तरसूत्रे तथैवाऽऽवश्यकत्वादित्याहुः।

अभिज। 'सोऽस्ये'ति वर्त्तते। 'निवास' इति च। तत्सामानाधिकरण्याय 'अभिजायते एभ्य'इति व्युत्पत्त्या पित्रादिवचनस्याऽभिजनशब्दस्य तत्सम्बन्धिनि[1] लक्षणा। तदाह—यत्र पूर्वैरिति।

आयुध। 'क्रियाऽर्थोपपदस्ये'ति चतुर्थी। 'आयुधजीविनोऽभिधातुमि'त्यर्थः। 'पर्वते' इति प्रकृतिविशेषणम्। तदाह—पर्वतवाचिन[2] इति। हरदत्तस्तु 'पर्वतादि'ति पञ्चम्यन्तं सूत्रे आह। येति किम्?। 'साङ्काश्यका आयुधजीविनः'। योप[3]धत्वाद्वुञ्।

सिन्धुतक्ष। ये तु सिन्ध्वादयः कच्छादिषु पठ्यन्ते, तेभ्यो मनुष्यवुञ्बाधनाऽर्थं वचनम्।

तूदीसलातुर। वृत्तौ तु 'शले'ति तालव्यपाठो दृश्यते।

अचित्ताद। देशादिप्रतिषेधात् 'अचित्ते'ति न स्वरूपग्रहणम् तत्साहचर्याद्देशादावपि न तद्ग्रहणमित्याहुः।

वासुदेवार्जुना। छाऽणोरपवादः। 'वासुदेव'शब्दोऽत्र परमात्मवाचको गृह्यते, 'सर्वत्राऽसौ वसति–अन्तर्यामित्वात्, सर्वमत्र वसति वा, सर्वस्य ब्रह्मविवर्त्तत्वादि'ति 'वासुः'। बाहुलकादुण्। स चाऽसौ देवश्चेति व्युत्पत्तेः। न तु 'वसुदेवस्याऽपत्यं वासुदेव' इति क्षत्रियवाची। उत्तरसूत्रविहितवुञैव सिद्धेः। न च 'वृद्धिनिमित्तस्ये'ति पुंवत्त्वनिषेधो दोषः। 'न कोपधाया' इति पुंवत्त्वनिषेधस्य वुन्यपीष्टत्वात्। तदुक्तं भाष्ये—'संज्ञैषा तत्र भवत' इति।

गोत्रेति। 'अपत्यप्रत्ययान्तेभ्य' इत्यर्थः। वृद्धाच्छमिति। 'औपगवक'

---

१ 'तत्सम्बन्धिवासाऽधिकरणे लक्षणा' इति ख. घ. ङ. पाठः।

२ 'पर्वतवाचिभ्यः' इति ख. ग. घ. ङ. पाठः।

३ 'योपधाद्वुञ्' इति ख. ङ. पाठः।

इत्यादौ। 'आख्या'ग्रहणं प्रसिद्धिपरिग्रहाऽर्थम्। तेन 'क्षत्रियोऽयं शूर' इत्यादौ 'शूर'शब्दान्नेत्याहुः।

जनपदिनां जनपदव। स्वस्वामिसम्बन्धे मत्वर्थीयं दर्शयति—स्वामिवाचिनामिति। 'सर्व'शब्दाऽर्थमाह—प्रकृतिश्चेति। तत्फलन्तु 'मद्राणां राजा-माद्रः'। 'द्व्यञ्मगधे'त्यण्। 'वृजी'-वार्ज्यः। 'वृद्धेदि'ति ञ्यङ्। 'स[1], भक्तिरस्ये'त्यर्थे 'मद्रकः' 'वृजिक' इत्यत्र 'माद्र''वार्ज्य'योर्मद्रवृजिशब्दाऽतिदेशः। 'मद्रवृज्योः कन्'। अङ्गा जनपद इति। दृष्टान्ताऽर्थम्। 'अवृद्धादपी'ति वुञ्। पञ्चाला ब्राह्मणा इति। अभेदोपचारोऽत्र बोध्यः। पौरव इति। पूरुर्न जनपद इति भावः। बहुवचने इति किम्?। एकवचन-द्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो यथा स्यादिति। तत्करणं तु ये यज्जनपदवाचिनस्तेभ्यस्तज्जनपदप्रत्ययो यथा स्यात्, जनपदाऽन्तरप्रत्ययो मा भूदि[2]'ति [3]हरदत्तः।

तेन प्रो। अध्यापनेन, अर्थव्याख्यानेन वा प्रथमप्रकाशितं प्रोक्तमुच्यते। तत् स्वकृतम्, अन्यकृतं वेत्यन्यदेतत्। अतः 'तेन कृतमि'त्यनेन न गताऽर्थता। यत्तु 'वेदस्य नित्यत्वात्कृतत्वाऽसम्भवेन काठकाद्यर्थं प्रोक्ताऽधिकार' इति। तन्न। 'यद्यप्यर्थो नित्यो, या त्वसौ वर्णानुपूर्वी, साऽनित्या। तद्भेदाच्च काठकादिव्यवहार इति, तत्कृतत्वेनैव सिद्धमि'ति भाष्ये उक्तत्वात्। 'कठादयो हि महाप्रलये वर्णानुपूर्वीविनाशे पुनरुत्पद्य, संस्काराऽतिशयाद्वेदाऽर्थं स्मृत्वा, शब्दरचनां विदधति। ततश्च तेऽपि वेदाऽनुपूर्व्याः कर्त्तार एव, न तु प्रकाशका' इति कैयटः। प्रेति

---

१ 'स, तौ वा भक्तिरस्येत्यर्थे' इति ख. घ. ङ. पाठः।
'स भक्तिरस्येत्यर्थे' इति ग. पाठः। क. तु 'स' इत्यपि नास्ति।

२ 'जनपदान्तरपदप्रत्ययो मा भूत्' इति सर्वादर्शे पाठः। स लघुशेखरानुसारेण त्वत्र अस्माभिः शोधितः।

३ इतोऽग्रे—'प्रत्यासत्त्यैव सिद्धौ, चिन्त्यप्रयोजनमिदमित्याहुः' इति ख. घ. ङ. पाठः।

किम् ? । देवदत्तेनाऽध्यापितं व्याकरणमि'त्यत्र न। 'आसुरेश्छो वक्तव्यः'। 'आसुरीयः कल्पः'। वृद्धाच्छं बाधित्वा प्राप्तस्य 'इञश्चे'त्यणो बाधनाऽर्थमिदम्। स्पष्टं चेदं 'कौरव्यमाण्डूकाभ्यां चे'ति सूत्रे भाष्यकैयटयोः।

तित्तिरिव । अणोऽपवादः। इत आरभ्य वक्ष्यमाणाः प्रत्ययाः 'तेनैकदिगि'त्येतत्पर्यन्तं छन्दसि वाच्ये इष्यन्ते। 'शौनकादिभ्यश्छन्दसी'ति च्छन्दोग्रहणस्य पूर्वमपकर्षादुत्तरत्राऽनुवृत्तेश्च। तदाह—छन्दोब्राह्मणेति। अत एव 'तित्तिरिप्रोक्तः श्लोक' इत्यत्र न। अणप्यत्र न। अनभिधानादित्याहुः। वस्तुतस्तु 'तित्तिर्यादिभ्यश्छणेव' 'स च छन्दस्येवे'ति नियमद्वयाऽऽश्रयणादणप्यत्र न। ध्वनितं चेदं 'छन्दोब्राह्मणानी'ति सूत्रे भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम्। 'छन्दः'शब्देन च कल्पसूत्राण्यपि गृह्यन्ते। तत्र स्वरितत्वप्रतिज्ञयाऽधिकाऽर्थगतेः।

काश्यपकौ। णकार उत्तरत्र वृद्ध्यर्थः। पुंवत्त्वप्रतिषेधस्तु चरणत्वेन जातित्वादपि सिद्धः। आभ्यां कल्पेऽपि तद्विषयता इष्यते।

कलापिवैशं। कलाप्यन्तेवासिनश्चत्वारः—१ हरिद्रुः, २ छगली, ३ तुम्बुरुः, ४ उलपः। द्वितीया नव—१ आलम्बिः, २ कलिङ्गः, ३ कमलः, ४ ऋचाभः, ५ आरुणिः, ६ ताण्ड्यः, ७ श्यामायनः, ८ कठः, ९ कलापी'ति। कलापिनो वैशम्पायनशिष्यत्वादेव सिद्धे, पुनस्तद्ग्रहणादत्र शिष्यशिष्याणां न ग्रहणमित्याहुः। इदमणोऽपवादभूतं परत्वाच्छं बाधते।

पुराणप्रो। 'तत्र ब्राह्मणेषु भल्लु-शाट्यायन-ऐतरेयेभ्यः। कल्पे-पिङ्ग-अरुण-पराजिभ्य' इति वृत्तिः। याज्ञवल्कानीति। 'कण्वादिभ्य' इत्यण्। 'याज्ञवल्क्यादयो हि पाणिन्यपेक्षया आधुनिका इति प्रसिद्धिरि'ति हरदत्तः। भाष्ये तु एषामपि शाट्यायनादितुल्यकालत्वात् 'याज्ञवल्क्यादिभ्यः प्रतिषेधः' ( 'तद्विषयता च न' ) इति वार्त्तिकमेवाऽऽरब्धम्।

इत उत्तरम् 'शौनकादिभ्यश्छन्दसी'ति सूत्रम्। तच्च वृत्तिकृता 'छन्दस्यभिधेये एभ्यो णिनिरि'ति व्याख्यातम्। छन्दसि किम् ?,

१ यद्यपि लघुशेखरस्थोऽयमंशः, तथापि औचित्यादत्राऽपि गृहीतोऽस्माभिः।

'शौनकीया शिक्षे'ति च प्रत्युदाहृतम् । कौस्तुभेऽप्येवमेव । 'छन्दोब्राह्मणानी'ति-'कलापिवैशम्पायनाऽन्तेवासिभ्यश्चे'तिसूत्रस्थभाष्यस्वरसोऽप्येवम्[1] । तत्र हि 'वैशम्पायनाऽन्तेवास्यन्तेवासिनां 'वैशम्पायनाऽन्तेवासि'ग्रहणेन न ग्रहणम् । यतो वैशम्पायनाऽन्तेवासि-कठा-ऽन्तेवासि-खाडायनस्य शौनकादिषु ग्रहणं करोती'त्युक्तम् । अस्य वेदमात्रविषयत्वे 'वेदे एवाऽस्माद्यथा स्यात्, अन्यत्र मा भूदि'ति तच्चारितार्थ्ये, ज्ञापकत्वमसङ्गतं स्यादिति दिक् ।

कठचर । कठाद्वैशम्पायनाऽन्तेवासित्वाण्णिनिः । चरकादण् । तयोर्लुक् । 'चरके'ति वैशम्पायनस्य नामाऽन्तरम् ।

कलापिनोऽण् । वैशम्पायनाऽन्तेवासिणिनेरपवादः । नन्वेवमण्ग्रहणं व्यर्थम्, वचनसामर्थ्यादण एव सिद्धेरिति चेन्न । अण्ग्रहणमन्यतोऽपि विधानार्थम् । तेन 'माधुरेण प्रोक्ता माधुरी वृत्तिरि'त्यादौ छाऽऽदिकं न । स्पष्टं चेदं 'तेन प्रोक्तमि'त्यत्र भाष्यकैयटयोः ।

एवं 'मौदाः''पैप्पलादाः' 'शाकला' इत्यपि बोध्यम् । मुद-पिप्पलाद-शाकलेभ्यः 'पुराणप्रोक्तेष्वि'ति णिनेरपवाद' इति हरदत्तः ।

'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते आह–नान्तस्येति ।

छगलिनो । कलाप्यन्तेवासिणिनेरपवादः ।

पाराशर्य । तद्विषयताऽत्रेष्यते[2] भाष्यकृता । भिक्षुसूत्रम्—चतुर्लक्षणीरूपं भिक्षुत्वसम्पादकं सूत्रमित्यर्थः । तज्ज्ञाने हि ब्रह्मरूपत्वेन सर्वज्ञानात् कर्मस्वनादरेण भिक्षुत्वसम्पत्तिरित्याहुः । णिनिर्मण्डूकप्लुत्याऽनुवर्त्तते । 'भी'त्यादि किम् ? । 'पाराशरम' । 'शैलालम्' ।

कर्मन्दकृ । इहाऽपि[3] तद्विषयता द्रष्टव्या ।

---

१ 'सूत्रस्थभाष्यस्वरसोऽप्येवमेव' इति ख. ङ. पाठः ।

२ 'तद्विषयताऽत्रेष्यते । तदर्थं 'शौनकादिभ्य' इत्यत 'छन्दो'ग्रहणमप्यनुवर्त्यम् । भिक्षुसूत्रादानां छन्दस्त्वमुपचारेण बाध्यम्' इति ख. ङ. पाठः ।

३ 'इहापि छन्दोऽनुवृत्त्यादि प्राग्वत् । तेनैक । 'छन्दसी'ति निवृत्तम् । पुनस्तेनग्रहणात्' इति ख. ङ. पाठः ।

तेनैक[1]। तेनेति—सहाऽर्थे तृतीया । एकदिक् । 'एकदिग्रूपा-ऽधिकरणस्थमि'त्यर्थः । सौदामनीति । अत्र 'अन्' इति प्रकृतिभावः ।

तसिश्च । उक्ते[1] विषये । 'तसन्तं स्वभावादधिकरणशक्तिप्रधानम्'[2] । 'अन्तर्वर्त्तितृतीयाऽर्थप्रधानमि'ति 'कृन्मेजन्त'सूत्रे कैयटः । तत्र आद्यमेव युक्तम् । ( तदाह[3]— ) स्वरादीति । ननु स्वरादिषु नाऽयं पठ्यते । तद्धितपरिगणने भाष्ये, स्वयं च पठित, इतीदमसङ्गतमिति चेन्न । 'तसि-लादिस्तद्धित एधाच्पर्यन्तः' 'शस्तसी' इति स्वरादिपठितेनैव सिद्धे, 'तद्धितश्चे'ति सूत्रं व्यर्थमित्याशयात् ।

उपज्ञातमिति । 'उपदेशं विना ज्ञातमि'त्यर्थः ।

कृते ग्रन्थे । 'तेने'त्येव ।

कुलालादिभ्यो वुञ् । इदमग्रन्थे, ग्रन्थेऽपि ।

क्षुद्राभ्र । पादपात्–छाऽपवादः । 'केचित्तु सूत्रे 'पदपे'ति अवृद्धं पठन्ती'ति हरदत्तः ।

[4]तस्येदम् । अत्र 'इदमि'ति सर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययाऽर्थबोधकमिति बोध्यम् । अणादयो महोत्सर्गा, घादयश्चाऽत्रार्थे स्युः । 'अत्र प्रकृत्यर्थ-प्रत्ययाऽर्थयोः परोक्षत्व-प्रत्यक्षत्वे अविवक्षिते' इति भाष्यम् ।

अत्र[5] वार्त्तिकम्–'स्वे ग्रामजनपदमनुष्येभ्यः'इति । 'आत्मीयज्ञाति-धनेष्वि'त्यर्थः । द्विविधोऽत्र नियमः । 'स्वेऽर्थे एव', 'एभ्य एवे'ति च ।

---

१ 'उक्तविषये' इति घ. पाठः ।

२ 'शक्तिप्रधानमित्येके' इति ख. घ. ङ. पाठः ।

३ अयं पाठः क. ग. नास्ति ।

४ 'तस्येदम् । 'ञित्-णित्-कित्-तित्-निरनुबन्धकभेदेन पञ्चोत्सर्गाः, घादयश्चा-ऽत्राऽर्थे स्युः । यद्वा अण्-ण्य-अञ्-नञ्-स्नञः पञ्च सूत्रोक्ता महोत्सर्गाः' इति ख. घ. ङ. पाठः ।

५ अत्र = 'तस्येदमि'ति सूत्रे इत्यर्थः ।

भाष्ये 'तस्याऽनन्तरः' 'तस्य समीप' इत्यत्र प्रत्ययमाशङ्क्य, अनेन परिगणनेन परिहृतम् । यदि 'एभ्यः स्वेऽर्थे एवे'त्येतावन्मात्रं स्यात्, तदा एतदतिरिक्तेभ्योऽनन्तरादिष्वतिप्रसङ्गस्तदवस्थ एवेति, 'सिद्धन्त्वि'त्यस्य भाष्येऽसङ्गत्यापत्तेः । अभिधानव्यवस्थाप्रदर्शनमिदम् । अत एवाऽनभिधानमाश्रित्य भाष्ये प्रत्याख्यातम् । 'शुनोऽयं शौवः सङ्कोच' इति सिद्धम् । 'शुनः सङ्कोचे' इति 'नस्तद्धिते' इति सूत्रे उपसङ्ख्यानाट्टिलोपः । अन्यत्र 'शौवन' इति ।

सांवहित्रमिति । ढत्वादीनामसिद्धत्वात्, ( अकृतव्यूहपरिभाषया च तदप्रवृत्तौ, ) अलौकिके प्रक्रियावाक्ये इट् । ततो निमित्ताऽभावान्न ढत्वादि ।

तुरिति । तृन्-तृचोः सामान्यग्रहणम् । इडर्थमिदमुपसङ्ख्यानम् । अण् तु सिद्ध एवाऽनूद्यते ।

रणिति । यद्यपि भाष्यपुस्तके ञित्पठ्यते, तथाऽपि सोऽपपाठः । स्वार्थिकप्रकरणे 'आग्नीध्रसाधारणादञि'त्युपसङ्ख्यानस्य वैयर्थ्याऽऽपत्तेरित्याहुः । अत्रेदं चिन्त्यम्-'स्त्रियां क्लीबर्थं स्वार्थिकाऽञश्चारिताथ्यं वक्तुं शक्यमि'ति । स्पष्टं चेदं भाष्ये । णित्पक्षे 'पिबाग्नीध्रात्तवे'त्यादावाद्युदात्तस्तु स्वार्थिकाऽञा निर्वाह्यः । भं चेति । 'यचि भमि'ति सूत्रादनन्तरं 'रणी'ति वक्तव्यमि'त्यर्थः । एतेन 'अस्या भसंज्ञाया आकडारस्थत्वाऽभावेन कथं पदत्वबाधः । सामर्थ्यादिना तद्बाधे च, कथं नाऽङ्गत्वबाध' इत्यपास्तम् । अग्निमिन्धे इति । 'अन्तर्भावितण्यर्थोऽत्रेन्धिरि'ति कैयटः । क्विप् । अग्नीत्-ऋत्विग्विशेषः । 'त्वमग्नित् ऋतायते' इत्यत्र तु च्छान्दसं

१ 'अत एव शुनोऽयं शौवः सङ्कोचः । 'शुनः सङ्कोचे' इति ख. ङ. पाठः ।

२ इतोऽग्रे—'अनन्तरसमीपादिष्विदमर्थेष्वनभिधानान्न' इति घ. पाठः ।

३ 'अकृतव्यूहपरिभाषया च तदप्रवृत्तौ' इति क. ग. नास्ति ।

४ 'ऋतायस्व' इति क्वचित्पाठः ।

ह्रस्वत्वम्। सोऽप्याग्नीध्र इति। अस्माच्छरणेऽर्थे छ एव। एतेन 'उत्तरेणाऽऽग्नीध्रीयं धिष्ण्यमि'ति व्याख्यातम्। सामिधेनीति। षित्त्वान्ङीष्। 'हलस्तद्धितस्ये'ति यलोपः। ययाऽग्निः समिध्यते सा 'समित्'। सम्पदादित्वात्करणे क्विप्। ततः कर्मणि षष्ठ्यन्तादाधानकरणे तद्धितोऽयम्।

रथात्। 'रथाद्रथाऽङ्गे'इतिवार्त्तिकमभिप्रेत्याह–रथ्यं चक्रमिति। अत्र 'रथसीताहलेभ्यो यद्विधावि'ति 'येन विधिरि'ति सूत्रे उपसङ्ख्यानात्तदन्तविधिः। तेन 'परमरथं वहति-परमरथ्यः'। 'तद्वहती'त्यत्र रथग्रहणन्त्वप्राग्दीव्यतीयत्वाऽर्थम्। तेन फलन्तु अनेन यति 'द्विरथ'इत्यत्र 'द्विगोर्लुगनपत्ये' इति यतो लुक्। वहत्यर्थे तु 'द्विरथ्य' इति। तत्र हि अप्राग्दीव्यतीयत्वान्न लुक्। यथा हलादेरपि कस्यचिल्लुक् तथा 'द्विगोर्लुगि'त्यत्रोक्तम्। अन्यथा रथाङ्ग इव वोढर्यप्यनेनैव इदमर्थतया प्रत्ययसिद्धौ, तद्वैयर्थ्यं स्पष्टम्।

न च तत्कर्मकवहनकर्त्तर्यर्थे प्रत्ययाऽर्थं तदावश्यकम्। 'तस्यापत्यमि'तिसूत्रभाष्योक्तरीत्या 'तस्ये'त्यस्य सर्वप्रकृतिविशेषसंग्राहकत्ववत्, इदमित्यनेन सर्वाऽर्थविशेषाणां सामान्यविशेषरूपेण परामर्शेनाऽनेन प्रत्ययेऽपि वोढेत्यर्थबोधेनाऽक्षतेः। स्पष्टं चेदं 'तद्वहती'ति सूत्रे भाष्ये।

सीता-हलयोस्तु 'नौवयोधर्म' 'मतजनहलादि'त्यत्र तदन्तविधिः। 'हलसीराट्ठगि'[3]त्यपि 'तस्येदमि'त्यधिकारे, 'तद्वहती'त्यधिकारे च पठ्यते,

---

१ इतोऽग्रे—'अत एव 'रथाद्रथाङ्गवोढोरि'त्युक्त्यैव तत्प्रकारकबोधनिर्वाहस्य सुकरत्वेऽपि, 'तद्वहती'त्यत्र 'रथ'ग्रहणं सार्थकम्' इति ख. घ. ङ. पाठः।

२ इतोऽग्रे—'यद्यपि यत् न अजादिस्तथाऽपि व्यवस्थितविभाषाऽऽश्रयणेन अजादिग्रहणस्य प्रायिकत्वान्न दोषः। अत एव 'तद्वहती'त्यत्र 'रथ'ग्रहणं सार्थकम्। सीताहलयोस्तु 'नौवयोधर्म' 'मतजनहलात्' इति घ. पाठः।

३ 'यत्तु 'हलसीराट्ठगि'त्यपि 'तस्येदमि'त्यधिकारे, 'तद्वहती'त्यधिकारे च पठ्यते, तत्तु विशिष्य तत्तत्प्रकारकबोधाऽर्थमेवेति, न तत्तदन्तविधौ ज्ञापकम्। अत एव वार्त्तिके 'यद्विधावि'ति चरिताऽर्थम्[1]। यदि तु 'सर्वनाम्नां बुद्धिस्थ-

---

1 'एवं च 'तद्वहती'त्यधिकारे 'शकटादणि'त्यप्येवम्' इति घ. पाठः।

तत्सामर्थ्यात् हलसीरांऽशेऽपि तदन्तविधिः । परन्तु सङ्ख्यापूर्वपदे एव । तत्रैव लुकः प्राप्तेः सत्त्वात् । अत एव 'परमहल'शब्दात् ठक् नेति स्पष्टं 'येन विधिरि'ति सूत्रे भाष्यकैयटकौस्तुभादिषु । वार्त्तिके 'यद्विधावि'ति तु अवयुत्याऽनुवाद इत्याहुः ।

पत्त्रपूर्वा । 'पत्त्रे'त्यर्थग्रहणम् । एवमुत्तरत्राऽपि । तदाह—अश्वरथस्येति । इदमपि 'रथाऽङ्गे एवे'ति 'तस्येदमि'ति सूत्रे भाष्ये ।

वाह्ये इति । अर्थनिर्देशोऽयम् । 'अत्रैवे'त्यर्थः ।

द्वन्द्वाद्वु । अणोऽपवादः । परत्वाच्छं बाधते । एतद्वुनन्तं स्वभावात् नित्यस्त्रीलिङ्गम् । काकेत्यादि । 'काकोलूकस्य वैरमि'त्यर्थः । कुत्सेत्यादि । 'कुत्सकुशिकयोर्मैथुनिके'ति विग्रहः । मिथुनं–दम्पती, तस्य कर्म = विवाहक्रियानिष्पादनम् । मनोज्ञादित्वाद्वुञ् । तदन्तं चेदं स्त्रियाम्, स्वभावात् ।

मैथुनिका—विवाहरूपः सम्बन्धः । 'वैरे देवाऽसुरे'तिवार्त्तिकपाठः । 'द्वन्द्वे' इति तु लेखकप्रमादः । तथा पाठे मैथुनिकायामतिव्याप्तिः स्यादिति बोध्यम् । भाष्येऽत्र सूत्रे 'वैरे' इत्येव पाठाच्च । 'द्वन्द्वे' इत्येतद्विशिष्टन्तु 'शिशुक्रन्दे'ति सूत्रे भाष्ये पठ्यते ।

गोत्रच । अत्र गोत्रम्–अपत्यप्रत्ययाऽन्तमात्रमिति 'यूनि लुक्'सूत्रे, 'अभिजिद्विदे'ति सूत्रे च भाष्यादौ स्पष्टम् । 'क्षौद्रकमालवकमि'ति गोत्रत्वाऽऽरोपात्साधु ।

---

सामान्यविशेषादितत्तत्प्रकारकबोधकत्वमेवे'ति, विशेषतो वहनकर्त्तृत्वप्रकारकबोधःऽप्यत्र पाठेनैव भविष्यति । [1]स्पष्टं चेदं 'तद्वहती'तिसूत्रे भाष्ये इत्युच्यते, तदर्थस्तु हलसीरांऽशेपि तदन्तविधिः' इति ख. ङ. पाठः ।

१ 'शकटहलसीरांशेऽपि' इति घ. पाठः ।

२ 'भाष्यादौ स्पष्टम् । न तु प्रवराऽध्यायप्रसिद्धाऽपत्यप्रत्ययाऽन्तम् । अत एव 'शेषे' इति सूत्रेऽनेनैव सिद्धे, समूहे गोत्राद्वुञो विधानं तेषामर्थानामिदमर्थत्वेनाऽग्रहणे ज्ञापकमुक्तं सङ्गच्छते । अन्यथा 'क्षौद्रकमालवकमि'त्यस्य 'गोत्रचरणादि'त्यनेनाऽसिद्ध्या, तदसङ्गतिः स्यात्' इति ख. ङ. पाठः ।

1 'ध्वनितं चेदम्' इति ख. ङ. पाठः

धर्माम्नायेति । इदं 'तस्येदमि'ति सूत्रे भाष्ये स्पष्टम् ।

आम्नायः—सम्प्रदायः । 'शास्त्रमि'ति त्वेके ।

सङ्घाङ्क । सङ्घादय इदमर्थविशेषणम् । गोत्रग्रहणाऽनुवृत्तेः-अञादीनां गोत्रप्रत्ययानामत्र ग्रहणम् । एवं च वुञोऽपवादोऽयम् । तत्राऽप्यञन्तम् ऋषिप्रजनरूपमेव गृह्यते इति 'स्त्रीपुंसाभ्यामि'ति सूत्रे कैयटे स्पष्टम् ।

णित्त्वं ङीबर्थम् । 'वैदी स्थूणा अस्य वैदोस्थूणः' इत्यादौ 'वृद्धिनिमित्तस्ये'ति पुंवत्त्वप्रतिषेधाऽर्थं च । अङ्कलक्षणयोर्विशेष्यनिघ्नत्वेन स्त्रीत्वात् , 'विदानां लक्षणं स्थूणा वैदी'ति । न च 'विदानां सङ्घ' इत्याद्यर्थे वृद्ध्यर्थं तत् । 'गोत्रेऽलुगची'त्यलुका वृद्धिसिद्धेः । स्पष्टं चेदं भाष्ये ।

घोषेति । अत एव यथासङ्ख्यमपि न । वैषम्यात् ; प्रकृतयस्तिस्रः, प्रत्ययाऽर्थविशेषणानि तु चत्वारीति । यद्यप्यङ्कलक्षणयोः पर्यायता, 'कलङ्काऽङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणमि'ति कोशात्, तथाऽपि पृथक् ग्रहणसामर्थ्यादिह विशेषपरतेत्याह—परम्परेति । यथा गवादिनिष्ठं चिह्नं गोद्वारा स्वामिना सम्बद्धम् । साक्षादिति । यथा-विदानां विद्या ।

अण् वोक्ते इति । अण्सम्बद्धसङ्घादीनामनुवृत्तेरिति भावः। पक्षे इति । न च 'चरणाद्धर्माऽऽम्नाययोरि'त्युक्तत्वात्कथं सङ्घादिषु वुञः प्राप्तिः । 'गोत्रचरणाद्वुञि'त्यस्य उत्तरत्राऽनुवर्त्तनेन,वाक्यभेदेन व्याख्यानसामर्थ्यात्तत्प्रवृत्तेः । ध्वनितं चेदं वृत्त्यादौ । अन्ये तु पक्षे छमेवेच्छन्ति । 'शौकलेन प्रोक्तमि'ति पाठः । लक्षणे क्लीबतेति । अयमुत्सर्ग इति बोध्यम् ।

छन्दोगौ । 'सङ्ख्या'दि निवृत्तम् । 'एभ्यो ञ्यः स्यादिदमर्थे' । 'चरण'-शब्देभ्यो वुञोऽपवादः । नटात्-औत्सर्गिकाऽणः, याज्ञिकात् छस्येतिबोध्यम् ।

चरणाद्धर्मेति । तेन 'छान्दोगं कुलमि'त्यादौ न । न चेदं वुञ्विधि-

---

१ 'वैदी विद्या अस्य' इति ख. घ. ङ. पाठः ।

२ 'वैदीविद्यः' इति ख. घ. ङ. पाठः ।

३ 'असाधारणी विद्या' इति ख. घ. ङ. पाठः ।

४ अत्र सर्वत्र 'बिदे'तिशब्दं पवर्गीयादिमपि केचित् पठन्ति ।

५ 'शाकल्येन' इति घ. पाठः ।

मात्रविषयमिति भ्रमितव्यम् । सङ्कोचे मानाऽभावात् । 'छान्दोग्याः पुरुषा' इति प्रयोगस्तु अध्येत्रणन्तो बोध्यः[2] ।

न दण्डमा । 'दण्डमाणवे'त्यादि प्रत्ययाऽर्थविशेषणम् । 'गोत्रे'ति वर्त्तते । तथा च 'गोत्रचरणादि'ति प्राप्तो वुञ् ने'त्यर्थः । रैवतिकादयः सर्वे गोत्रप्रत्ययान्ता एवेत्याशयेनाह–वुञोऽपवाद इति । इहैव निपातनादिति । अन्यथा इञ्स्यात् । इदं च हास्तिपदेऽपि तुल्यम् । 'तत्राऽण्[3], पद्भावश्च निपात्यते । हस्तिन इव पादावस्य हस्तिपादः । 'अहस्त्यादिभ्य' इति निषेधाल्लोपो न । ततोऽपत्येऽणि 'यस्ये'ति लोपे, तस्याऽऽभीयत्वेनाऽसिद्धत्वात् 'पादः[4] पदि'त्यस्याऽप्राप्तेरि'ति हरदत्तः[5] । 'पादपर्याय–'पद'-शब्देन समासेऽण्मात्रनिपातनेन हास्तिपदस्य सिद्धिरि'त्यन्ये ।

'हस्तिपदस्ये'ति–पाठः । 'हस्तिपादस्ये'ति क्काचित्कः पाठः । अत्र 'गोत्र-वुञोऽपवाद'[6] इति क्वचित्पाठः । अनयोश्चरणत्वे तु 'चरणवुञोऽपवाद' इति बोध्यम् । अथर्वणा प्रोक्तमधीयानः—आथर्वणिकः[1] । ततोऽणि, इकस्य लोपे 'अन्' इति प्रकृतिभावे 'आथर्वणः' सिद्धः । तदाह—चरणवुञ इति ।

समाप्ताः शैषिकाः ।



१ इतोऽग्रे—'आथर्वणिकस्ये'ति । हरदत्तोक्तरीत्या वार्त्तिके, कैयटरीत्या सूत्रे वा । 'आथर्वणो धर्मः' 'आथर्वण आम्नाय' इति भाष्यविरोधाऽऽपत्तेश्च' इति घ. पाठः ।

२ इतोऽग्रे—'अर्श आद्यजन्तो वा बोध्यः इति घ. पाठः ।

३ 'यत्तु हरदत्तेन तत्राऽण् , पद्भावश्च' इति ख. घ. ङ. पाठः ।

४ 'पादः पदि'त्यस्याऽप्राप्तेरित्युक्तम् । तन्न । पादपर्यायपदशब्देन समासे अण्मात्र-निपातनेन हास्तिपदस्य सिद्धौ, पद्भावनिपातनवैयर्थ्यात् । तद्ध्वनयन्नाह—हस्तिपदस्येति' इति ख. घ. ङ. पाठः ।

५ 'हरदत्तः' इति ख. ग. घ. ङ. पाठः । क. तु नास्त्येव ।

६ 'इत्येव क्वचित्पाठः । अत्र 'चरणवुञोऽपवाद' इति क्काचित्कोऽपपाठः । हस्तिपदस्यापत्यमिति विग्रहे चरणत्वस्याऽसम्भवात्' इति ख. घ. ङ. पाठः ।

# अथ विकाराद्यर्थप्रकरणम् ।

तस्य विकारः। 'तस्येदमि'त्यतः 'तस्ये'ति वर्त्तमाने, पुनः 'तस्य'ग्रहणं तत्सम्बद्ध-घादिनिवृत्त्यर्थम् । अणादयस्तु अनुवर्त्तन्ते एव । 'प्राग्दीव्यतः' 'प्राग्भवनादि'ति विशिष्टाऽवधिपरिच्छेदेनाऽधिकृतत्वादिति बोध्यम् ।

तत्र 'प्राणिरजतादिभ्योऽञ्' 'ओरञ्' 'अनुदात्तादेश्चे'ति, ('मयड्वैत-योरि'त्यनुवर्त्तमाने)-'नित्यं वृद्धे'ति,'पिष्टाच्चे'त्यादयोऽपवादा वक्ष्यन्ते। अतः अप्राणि, अनुवर्णान्तम्, अनुदात्तादिभिन्नम्, अवृद्धं, प्रतिपदमवक्ष्यमाण-प्रत्ययं चेहोदाहरणम् । ( एतेन मनोरमायां-'मयड्वैतयोरि'त्यस्योपन्यासो-ऽसङ्गतः,तस्य पाक्षिकत्वेनाऽणोऽपीष्टत्वादि'ति परास्तम् । अनुवृत्तिप्रदर्शना-र्थत्वात् )। तदुदाहरति-आश्म इति । अश्मन्-भस्मन्शब्दौ मनिन्नन्तत्वादा-द्युदात्तौ । एवं 'चर्मणो विकारः कोशः-चार्मः' । 'नस्तद्धिते' इत्यत्र 'चर्मणः कोशे' इत्युपसङ्ख्यानाट्टिलोपः ।

मार्त्तिक इति । 'मृत्तिका'शब्दस्तिकन्नन्त त्वादाद्युदात्तः । प्राचीनस्य 'तस्ये'त्यस्य निवृत्तेस्तदधिकारोक्ताष्ठगादयोऽपि नेह-'हालः', 'सैरः' ।

अवयवे च । अत्र प्राण्यादिषु स्वरूप-विशेष-पर्यायाणां ग्रहणम् । व्याख्यानात् । अयमधिकारः । चाद्विकार इति । तेन वक्ष्यमाणप्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये, अन्येभ्यस्तु विकारे एवेति बोध्यम् ।

---

१ इतोऽग्रे—'शेषाऽधिकारनिवृत्त्यर्थं च । तन्निवृत्तिसामर्थ्याच्च 'तस्येदमि'त्यने-नाऽपि न । विकाराऽवयवयोस्तद्रूपेण बोधे घादयः । 'पाटलिपुत्रस्याऽवयवाः पाटलिपुत्रका' इत्यादावप्राण्यादिभ्योऽवयवेऽपि भवन्ति । प्राण्योषधि-वृक्षेभ्य एवाऽवयवे तन्निवृत्तेरिति स्पष्टं भाष्ये' इति ख. घ. ङ. पाठः ।

२ अयं पाठः क. ग. नास्ति ।

३ 'एतेन' इत्यारभ्य 'अनुवृत्तिप्रदर्शनार्थत्वात्' इत्यन्तः ख. घ. ङ. पाठः । क. कुण्डलितः ।

मायूर इति । 'मयूर'शब्दो 'लघावन्ते' इत्यनेन, 'मादीनां चे'त्यनेन वा मध्योदात्तः । तत 'अनुदात्तादेश्चे'त्यञ्। अन्ये तु 'ततः परत्वात् 'प्राणिरजतादिभ्य' इत्यञ्। उदात्ताद्यर्थं, वृद्धेषु मयड्बाधनाऽर्थं चाऽऽवश्यकस्य 'प्राणी'त्यादेः परत्वादनुदात्तादिष्वपि प्रवृत्तेरि'त्याहुः । 'मूर्वा'शब्दः 'तृणधान्यानां च द्व्यषामि'त्याद्युदात्तः । 'पिप्पल'शब्दोऽपि 'लघावन्ते द्वयोश्चे'ति तथा । 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति आद्युदात्तप्रयोगात् ।

बिल्वादिभ्यो । 'गवेधुक'स्य कोपधत्वेऽपि मयट्बाधनार्थमिह पाठः । भाष्ये तु 'गवीधुका'शब्दः पठ्यते' इति दृश्यते । अण्ग्रहणं बाधकबाधनाऽर्थम् । 'बिल्वादिभ्यो यथाविहितमि'त्युच्यमाने हि 'पाटली'शब्दान्ङीषन्तादनुदात्तादिलक्षणाऽञो 'नित्यं वृद्धे'ति मयटा बाधेऽपि, पुनर्वचनादञेव स्यादित्याहुः । अञोऽपवाद इति । 'उवर्णाऽन्तत्वाऽऽदिप्रयुक्तस्ये'त्यर्थः । अण् स्यादिति । 'बिल्वादिभ्योऽणि'त्यतोऽनुवृत्तेः ।

त्रापुषमित्यादि । ओरञोऽपवादः । दैवदारवमिति । 'देवदारु'शब्दः पीतद्र्वर्थत्वादाद्युदात्तः । ( 'पीतद्रुः सरलो वृक्षः ) ।

दाधित्थमिति । 'दध्नि तिष्ठती'ति 'सुपि स्थ' इति के, उपपदसमासे, पृषोदरादित्वात्सस्य तः । कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तोऽयम् ।

पलाशादि । पलाश-खदिर-शिंशपा-स्यन्दन-मूलास-करीर-शिरीष-यवास-विकङ्कत । वृत्। एतेन 'खदिरशब्दस्य यद्यणिष्यते, तदा स बिल्वादिषु पठितव्य' इति हरदत्तोक्तमपास्तम् । पलाशादित्वेनाऽञणोः सिद्धत्वात् । षित्त्वाङीषिति । 'शामील्यः स्रुचो भवन्ती'ति च श्रूयते । इदं प्राचामनुरोधेन । 'वस्तुतोऽयं टित्, 'ञितश्च तत्प्रत्ययादि'ति सूत्रभाष्यप्रामाण्यादि'ति 'टिड्'ढेत्यत्र निरूपितम् । माधवोऽपि टित्त्वमेवाऽऽह ।

---

१ 'अनुदात्तादेश्चेति, ततः परत्वात् 'प्राणिरजतादिभ्य' इति वा अञ्' इति ख. घ. ङ. पाठः ।

२ अयं ख. ग. घ. ङ. पाठः क. नास्ति.।

प्रकृतिमात्रादिति । तत्र 'पुरुष'शब्दाद्विकारेऽर्थेऽञ्, मयट् च न । किन्तु 'पुरुषाद्वधविकारे'ति विहितः पाञ्चमिको ढञेव । अवयवे तु भवेतामेव तावित्याहुः ।[२]आश्मनमिति । 'अश्मन्' इति राजविशेषस्य संज्ञा । ततो विकारेऽपि 'अश्मनो विकारे' इति टिलोपो न । तत्र प्रसिद्धतरत्वेन पाषाणवाचकस्यैव ग्रहणात्[३] । यदि तु पाषाणविकारेऽपि 'आश्मनमि'तीष्यते,तदा 'तस्येदमि'ति सामान्यविवक्षायां 'पैष्टी सुरे'तिवत्साध्यः।[४]येऽपि टिलोपविधावुभयोरपि ग्रहणमिच्छन्ति, तेषामप्येवमेव साध्यमित्याहुः ।

अधिकाराद्देवाऽर्थलाभे सिद्धे सूत्रे 'एतयोरि'ति वचनं पुनर्विधानबोधनद्वारा 'प्राणी'त्यपवादविषयेऽपि पक्षे मयडर्थम् । तेन 'तालम्', 'तालमयमि'त्यादि सिद्धम् । 'एतयोरि'त्यनेन विकाराऽवयवयोः क्रमेणोपस्थितिरित्यर्थे मानाऽभावात् 'अभक्ष्याच्छादनयोरि'त्यनेन यथासङ्ख्यं न[५]। यत्तु[६] मनोरमायां[७]'समासनिर्देशादि'ति । तस्य तदपवादैकशेषनिर्देशादित्यर्थः ।

मौद्ग इति । मुद्ग-कर्पास्योर्घृतादित्वान्ङीषन्तत्वाच्चाऽन्तोदात्तयोः 'अनु-

१ इतोऽग्रे—'एवमश्वपतेरपि 'ण्यादय' इति पूर्वविप्रतिषेधेन प्राप्तस्य ण्यस्याऽश्वपत्याद्यणा बाधात् 'आश्वपत' इत्येवेति बोध्यम्' इति ख. घ. ङ. पाठः ।

२ 'आश्मनमिति । अवयवे इदम् । केचित्तु 'अश्मन्नि'ति राजविशेषस्य संज्ञा' इति घ. पाठः ।

३ 'ग्रहणादित्याहुः' इति ख. घ. ङ. पाठः ।

४ 'एतेन येऽपि' इति ख. ङ. पाठः ।

५ 'यथासङ्ख्यं न । अस्वरितत्वाच्च' इति घ. पाठः ।

६ 'इह विकारेण, अवयवेन (च) एकैकेन सह 'अभक्ष्याच्छादनयोरि'ति सम्बध्यते । समासनिर्देशात् । अतो यथासङ्ख्यं न' इति मनोरमा । 'समासनिर्देशादि'ति। 'अभक्ष्ये'त्यादौ समासनिर्देशात्, 'एतयोरि'त्यत्र तदपवादैकशेषनिर्देशाच्चेत्यर्थः' इति लघुशब्दरत्नटीका ।

७ 'यत्तु' इत्यारभ्य 'एकशेषनिर्देशात्' इत्यन्तः ख. घ. ङ. पाठः । क. ग. नास्ति।

दात्तादेश्चे'त्यञं बाधित्वा बिल्वाद्यण् । भाषायां किम् ? । 'खादिरो यूपः' । यद्यपि मयटो वैकल्पिकत्वात्, वेदे आपाद्यरूपाऽभावाच्चेदं सिद्धम्, तथाऽपि बह्वचः परस्य मयटोऽर्थान्तरपरत्वमेवेति ध्वनयितुमिदम् । न च तदभावेऽपि 'विकाराऽवयवयोश्चेच्छन्दसि, तर्हि द्व्यच एवे'ति नियमाऽर्थात् 'द्व्यचः छन्दसी'ति सूत्रादेव तद्ध्वनिः सिद्ध[1] इति वाच्यम् । लोके 'घटमयमि'त्यादिव्यावर्त्तकस्य 'द्व्यचश्चेद्विकाराऽऽदौ मयट्, तर्हि छन्दस्येवे'ति-विपरीतनियमस्य शङ्कावारणाऽर्थं 'भाषा'ग्रहणसत्त्वात् ।

आ[2]नन्दमय-विज्ञान[3]मया-ऽन्नरसमय-शब्देषु तु श्रुतौ 'हेतुमनुष्येभ्य' इत्यनुवर्त्तमाने 'मयट् चे'ति सूत्रेणाऽऽगताऽर्थे मयड् बोध्यः ।

'विकारे मयडि'ति शङ्करभगवत्पादाद्युक्तिस्तु 'यो यतो निर्गतः स तस्य विकार' इत्यादिलोकप्रसिद्धेरार्थिकाऽर्थकथनपरतया नेयेति दिक् ।

अ[4]न्ये तु 'च्छन्दसि सकलविकल्पानां व्यवस्थितत्वमि'ति निर्विवादम् । अत एव 'श्रीग्रामण्योश्छन्दसी'त्यत्र 'श्री'त्यंशोऽनयैव रीत्या भगवता प्रत्याख्यातः । एवं च[5] 'भाषायामि'ति, 'द्व्यचश्छन्दसि', 'नोत्वद्वर्ध्रे'ति द्विसूत्री च[5] त्याज्या । व्यवस्थितविभाषयैव सिद्धेः । 'भाषा'ग्रहणेऽन्न[6]मयाऽऽदिसिद्धये 'द्व्यच' इत्यारब्धम् । 'मौञ्जमि'त्यादौ तत्प्रतिषेधाय 'नोत्वदि'ति च । एवं च विकारेऽपि मयट् सुलभ एव । एतेन 'बह्वचो विकारे मयटो दुर्लभत्वेन,

---

१　'सिद्ध एव' इति घ. पाठः ।

२　'आनन्दमय' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ग. घ. ङ. पाठः । क. कुण्डलितो, मनोरमाशब्दरत्नगतत्वात् ।

३　'आनन्दमय-विज्ञानमय-शब्दयोस्तु' इति घ. पाठः ।

४　'एवञ्च तात्पर्यग्राहकस्य न्यायाऽनुसन्धानेनैव सिद्धेस्तदर्थं बहुशः पाणिनियत्नाऽदर्शनाच्च 'भाषायामि'ति' इति घ. पाठः ।

५　'त्रिसूत्री त्याज्या' इति ख. ङ. पाठः ।

६　'अन्नमय-शरमयादिसिद्धये' इति ख. घ. ङ. पाठः ।

आनन्दमये प्राचुर्ये मयट्। न च अन्नमयादिप्रायपाठाद्विकारे एवोचितः। उभयसम्भवे एव तस्य निर्णायकत्वादि'ति वेदान्तसूत्रवृत्तिकृदुक्तमपास्तम्।

आनन्दमयात् इतरेषु विकारे एव मयटस्तैरपि स्वीकारेण, विज्ञानमयोऽर्थमुक्तसरणेस्तेषामप्यावश्यकत्वेन, 'प्रायपाठादानन्दमयेऽपि विकारार्थतैवोचिते'त्याशयो भगवत्पादानाम्।

वस्तुतस्तत्र सर्वत्र प्राचुर्ये मयट्। प्राणमयादौ विकारस्याऽऽत्मस्येनोपपत्त्यभावात्। तदवच्छिन्नत्वेन तद्विकारत्वकल्पनस्याऽदृष्टत्वात्। 'न हि घटमय आकाश' इति दृश्यते।

किञ्चाऽऽनन्दमयः कस्याऽऽनन्दस्य विकारः?। न च ब्रह्माऽऽनन्दस्य। तस्याऽविकारित्वात्। नापि वृत्त्यानन्दस्य। तद्विषयविज्ञानस्य तत आन्तरत्वेन, तस्य विज्ञानमयाऽन्तरत्वाऽनुपपत्तेः। अयमेव 'विकारशब्दान्नेति चेन्न, प्राचुर्यादि'तिसूत्रस्य, तद्वृत्तिकृतां चाऽऽशय इत्याहुः।

नित्यं वृद्ध। 'इह 'मयडि'ति, 'भाषायामि'त्यादि चाऽनुवर्त्तते' इति वृत्तिः। शर, दर्भ, मृत, कुटी, तृण, सोम, बल्वज। वृत्।

'आरम्भसामर्थ्यादेवाऽस्य नित्यत्वे सिद्धे, 'नित्य'ग्रहणं योगविभागेन क्वचिदन्यत्राऽपि नित्यं विधानार्थमि'त्याशयेनाह—एकाच इति। शरा-

---

१ प्रायपाठात् = अन्नमयादिमध्ये पाठादित्यर्थः।

२ 'विज्ञानमयाऽन्तरसमयार्थम्' इति ख ङ. पाठः।

३ इतोग्रे—'यद्वा प्राचुर्ये मयटयपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिकाभात्, विकारार्थे एव पर्यवसानमित्याशय इत्याहुः' इति घ. पाठः।

'इत्याहुः। तन्न। सूत्रविरोधात्' इति ख. ङ. पाठः।

४ 'एवञ्च शरादिषु मृच्छब्दपाठफलं चिन्त्यम्। न च 'मोषु वरुण मृन्मयं गृहमि'त्यादिच्छन्दोऽर्थं मृच्छब्दपाठः। अयमेव मृच्छब्दपाठोऽत्र भाषाग्रहणाऽसम्बन्धस्य ज्ञापकः। 'एकाच' इत्यत्र तु 'भाषायामि'ति सम्बध्यते एवेति वाच्यम्। 'वाङ्मय'-'त्वङ्मया'ऽऽदेरपि वेदे दर्शनेन तत्राऽपि 'भाषा'ग्रहणा-

दिषु मृच्छब्दपाठस्तस्याऽनित्यत्वबोधनाऽर्थः ।'मोषु वरुण मृन्मयं गृहमि'-त्यादिषु प्राचुर्ये एव मयट् ।

गोश्च पुरीषे । सामर्थ्याद्विकाराऽवयवरूपाऽर्थस्याऽत्राऽसम्बन्धो बोध्यः । पुरीषे किम् ? । 'गव्यं पयः' । 'गोपयसोर्यत्' ।

व्रीहेः पुरोडाशे । 'पुरोडाशरूपे विकारे' इत्यर्थः ।

यावक इति । विकाराऽणन्तात् 'यावादिभ्य' इति स्वार्थे कन् ।

तालादिभ्यो । अण्ग्रहणं बाधकबाधनाऽर्थम् । तेन विकाराद्यर्थोऽञन्त-'बार्हिण'शब्दे मयट् न । वचनन्तु 'ञितश्च तत्प्रत्ययादि'त्यञो बाधनेन चरिताऽर्थम् । तापनीय इति । 'तपनीय'शब्दोऽनुदात्तादिः ।

शौकमिति । 'शुक''बक'शब्दौ 'प्राणिनां कुपूर्वाणामि'त्याद्युदात्तौ । रजतादिषु 'काञ्चन'शब्दं केचित्पठन्ति । तेन 'काञ्चनी यष्टिरि'त्यादि सिद्धम् ।

अन्ये तु 'पैष्टी सुरे'तिवदेतत्साधयन्ति । हेमन्-व्याघ्रावप्यत्र पठन्ति केचित् । तेन 'वैयाघ्रं चर्म', 'तदण्डमभवद्धैममि'त्यादिसिद्धिः । अणि प्रकृतिभावे सति 'हैमनमि'ति स्यात् ।

---

ऽसम्बन्धात् । तस्माद्भाषायामित्यस्य व्याख्यानादेवाऽत्राऽसम्बन्ध उचितः । एवञ्च आनन्दमये विकारे मयडपि सूपपादो, वृद्धत्वादिति दिक्' इति घ. पाठः । एतत्खण्डनं चोपरिमुद्रिते क. ग. पाठे वर्त्तते ।

१ 'मृन्मयं गृहमि'त्यादिषु तु प्राचुर्ये एव मयट् । 'तत्प्रकृते'त्यस्य स्वार्थिकतया, तत्र प्राचुर्यस्य विशेषणतया, न लेशतोपि विरोध्यनुवृत्तिलाभ इति तत्रैव निरूपयिष्यामः' इति ख. ङ. पाठः । क. कुण्डलितः ।

२ 'चरितार्थं स्यादित्याहुः' इति ख. ङ. पाठः ।

३ 'अन्ये तु काञ्चनविकारेऽपि 'काञ्चन'शब्दस्य वृत्तिमाश्रित्य न पठन्ति' इति घ. पाठः ।

४ इतोऽग्रे—'ञितश्च । तयोरेवेति । योग्यतावशाद्विकाराऽर्थप्रत्ययान्ताद्विकारे एव । एवमवयवेऽपीति बोध्यम् । अतएव भाष्योक्तप्रत्याख्यानं सङ्गच्छते ।तत्रा-

बैल्वमयमिति । 'बैल्वस्याऽवयव' इत्यर्थः । 'बैल्वस्य विकार' इत्यर्थेऽनभिधानान्मयट् न भवत्येवे'ति भाष्योक्तेः । एतत्प्रत्याख्यातं च[2] । प्रत्याख्यानप्रकारष्टिड्ढेत्यत्र निरूपितोऽस्माभिः ।

क्रीतवत् । अत्र 'परिमाण'शब्देन परिच्छेदकमात्रं गृह्यते । तेन सङ्ख्याया अपि ग्रहणम् । स्पष्टं चेदम् 'आर्हादि'तिसूत्रे भाष्ये । नैष्किक इति । 'असमासे निष्कादिभ्य' इति ठक् । शतिक इति । 'शताच्च ठन्यतौ' ।

अणञाविति । 'उर्णा'शब्दोऽन्तोदात्तः । 'उमे'ति 'तृणधान्यानां चे'त्याद्युदात्तमिति भावः । ऐणमिति । प्राण्यञ् ।

गोपयसो । ननु 'गो'ग्रहणं व्यर्थम् । प्राणित्वादञः प्राप्तिसत्त्वेन, 'गोरजादिप्रसङ्गे यदि'त्येव सिद्धेरिति चेन्न । 'एकाचो नित्यमि'ति मयटः प्राप्त्याऽजादिप्रसङ्गाऽभावात्[2] ।

द्रोश्च । ओरञः, 'एकाचो नित्यमि'ति मयटश्च अपवादोऽयम् । उभयोरपि नाऽप्राप्तिसत्त्वात् । धनादिवाची 'द्रव्य'शब्दश्च 'गुणैर्द्रूयते' इत्यर्थे 'अचो यदि'ति यत्प्रत्ययाऽन्त इत्याहुः ।

माने व । 'माने = प्रस्थादौ वाच्ये 'वय'प्रत्ययः स्यादि'त्यर्थः । द्रुवयमिति । 'द्रोर्विकारभूतं प्रस्थादिपरिमाणमि'त्यर्थः ।

---

ऽवयवप्रत्ययान्तादवयवे उदाहरणं चिन्त्यम् । अवयवस्य प्राण्यौषधिवृक्षत्वाऽभावात् । 'अवयवे च प्राण्यौषधिवृक्षेभ्य' इत्युक्तेः । केचित्त्वौषध्यवयवस्यौषधित्वमङ्गीकृत्य तत्रोदाहरणमित्याहुः । अत्र यद्वक्तव्यं तट्टिड्ढे ति सूत्रे एवोक्तम्' इति घ. पाठः ।

१ 'बैल्वमयमिति । इदं च वृत्त्यनुरोधेन । जितो विकारावयवार्थत्नेन मयटं निवर्त्तयन्सूत्रकारोऽन्यतो(ऽपि) मयटमिच्छती'ति तदाशयः । भाष्ये तु 'बैल्वस्य विकार' इत्यर्थेऽनभिधानान्मयट् न भवत्येवेत्युक्तम्' इति ख. ङ. पाठः ।

२ इतोऽग्रे-'यत्तु 'मयड्वैतयोरि'ति मयड्बाधाऽर्थमिदमि'ति । तत्तु योगविभागसिद्धतया क्वाचित्कत्वेनाऽपि 'एकाचो नित्यमि'ति मयट् सुशकवारण इत्यभिप्रायेणेत्याहुः' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

फले । फलितस्य वृक्षस्य फलमवयवो, विकारो वेत्याहुः । आमलकमिति । अनेन मयटो लुकि, 'लुक्तद्धिते' ङीषो लुक् । न च स्थानिवत्त्वात् 'यस्ये'ति-लोपाऽऽपत्तिः । लुका लुप्तत्वात् । 'फले लुग्वचनानर्थक्यम्, प्रकृत्यन्तरत्वात्' ।

न्यग्रोधस्य । केवलस्येति किम् ? । 'न्याग्रोधमूलाः शालयः' । फलपाकशुषामिति । 'फलपाकेन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामि'त्यर्थः । 'लुप' इति शेषः । व्रीहिमुद्गौ-बिल्वादी । विदार्या मूलमिति । एवं 'बिसस्य मूलम्–बिसम्' । 'मृणालस्य मूलम्–मृणालमि'त्यादि बोध्यम । 'पाटलि'शब्दो बिल्वादिषु । पुष्पाणीति । भाष्ये तु 'मूलानी'ति पाठः । सालवानि मूलानीति । यद्यपि वृद्धत्वान्मयडुचितः, तथाऽपि वृत्त्यादिप्रामाण्यादस्य प्लक्षादित्वम्, बिल्वादित्वं वा बोध्यमित्याहुः ।

कंसीय । अत्र यथासङ्ख्यम् । 'परशव्यस्य यदन्तत्वात् अनुदात्तादित्वेन अञि सिद्धेऽपि, यतो लुगर्थं वचनमि'ति प्राञ्चः । न च 'यस्ये'ति लोपे कृते 'हलस्तद्धितस्ये'ति यलोपेन सिद्धिः । 'ईती'त्यनुवृत्तेः । 'लुक्'शब्देन विधानान्न प्रकृतेर्लोपः । 'प्रातिपदिकादि'त्यधिकाराच्च न औणादिकयोः । 'प्रातिपदिकात्परयोर्लुगि'त्यर्थात् । न च यञञोरेव लुगस्तु । विधान-सामर्थ्याच्च यञ्-अञ्-लुकां विकल्पः । 'वे'ति तु नोक्तम् । औत्सर्गिकस्याऽणः पक्षे श्रवणाऽऽपत्तेरिति वाच्यम् । एककालप्रतीतानामुद्देश्यविधेयभावाऽसम्भवात् । वाक्यभेदे मानाऽभावाच्च । 'कंसीयपरशव्ययोरि'ति षष्ठी-निर्देशस्य व्यर्थत्वाऽऽपत्तेश्च । तदाह—छयतोश्चेति ।

( इति विकाराद्यर्थप्रकरणम् ) ।

इति प्राग्दीव्यतीयाः ।

---

१ इतोऽग्रे—'फले आमलकशब्दस्य प्रकृत्यन्तरत्वात् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । तच्च तवाऽपि फलसम्बन्धेन वृक्षे योगात्प्रवृत्तौ 'आमलकस्याऽयम् आमलकीयो वृक्षः' इत्येतन्निवृत्त्यर्थमावश्यकमिति भाष्यकैयटयोः स्पष्टम्' इति ख. ङ. पाठः । क. कुण्डलितः ।

२ इतोऽग्रे—यत्तु 'पाक्षिकमयडभावार्थ'मिति । तन्न । अन्यथैवोपपत्तौ शास्त्रबाधे मानाऽभावात्' इति ख. ङ. पाठः, क. कुण्डलितः ।

३ 'कंस'-'परशु'शब्दघटकयोः औणादिकप्रत्यययोर्न लुगित्यर्थः ।

# अथ ठगधिकारप्रकरणम् ।

तदाहेतीति । 'आहौ प्रभूते'ति वार्त्तिकाऽऽरम्भसामर्थ्याद्वाक्यादयं प्रत्ययः । तस्य च द्वितीयाऽन्तत्वाऽसम्भवात् 'तदि'ति कर्ममात्रं परामृश्यते । तत्र पदसमुदायाऽर्थं 'इति'ना परामृश्यमानः स्फुटतया वचनक्रियायां कर्म भवतीत्याशयेनाऽऽह—इति य आहेति । वृत्तौ कृञर्थोऽन्तर्भूत इति बोध्यम् । एवं 'नित्यः शब्द इत्याह—नैत्यशब्दिकः', 'कार्यशब्दिक' इति बोध्यम् ।

स्वागता । व्यायाम, स्वजन, मूलोक्ताश्च स्वागतादिः । 'न कर्मे'त्यतो नञनुवर्त्तते । स्वपताविति । 'स्व'शब्दस्य द्वारादित्वात् ऐचः प्राप्तिः । तत्पाठफलम्—'सौवनगरिक' इत्यादि । अन्यत्र 'न य्वाभ्यामि'ति प्राप्तिः ।

'आहौ' इत्यादौ धात्वर्थनिर्देशे इक्श्तिपौ । एतेन 'आहे'तिपदे एकदेशस्य प्रकृतिभागस्य उच्चारणाऽर्थेकारेण 'आहौ' इति निर्देश' इत्यपास्तम् । 'पृच्छतौ' इत्याद्यर्थमुक्तकल्पनाया आवश्यकत्वात् ।

प्रभूतमाहेति । क्रियाविशेषणाद्धक्तरि प्रत्ययः । प्रभूतादि-सुस्नातादि-परदारादय आकृतिगणाः ।

तेन दीव्यति । इह काल-पुरुष-सङ्ख्या न विवक्षिताः । कारकं तु विवक्षितमेव । 'जयति' 'जितमि'ति पृथगुपादानात् । 'तेने'ति करणे तृतीया । दीव्यत्यादौ कर्त्तुरुक्तत्वात् । तत्साहचर्याज्जितयोगेऽपि सैव । तेन 'देवदत्तेन जितमि'त्यत्र न । 'अङ्गुल्या खनती'त्यादौ तु अनभिधानान्न ।

अत्र तिङन्ते क्रियायाः प्राधान्येऽपि वृत्तौ, तद्विग्रहे, सूत्रे च विशेष्यविशेषणभावव्यत्यासो बोध्यः । ('सत्त्वप्रधानानि नामानी'ति सिद्धान्तादित्याहुः[1]) । अभ्र्येति । 'अभ्रिः स्त्री काष्ठकुद्दालः'[2] ।

---

१ अयं ख. घ. ङ. पाठः । क. ग. नास्ति ।

२ इतोऽग्रे—'पूर्वोत्तरसाहचर्याच्चेत्याहुः' इति ख. पाठः ।

संस्कृतम् । सत उत्कर्षाऽऽधानं-संस्कारः । योगविभाग उत्तराऽर्थः । बाहुकेति । अषित्त्वान्न ङीष्[1] । सूत्रे सांहितिकः षकार इति भावः । तथा च 'आकर्षात्पर्पादेरि'ति श्लोकवार्त्तिकं प्रकरणाऽन्ते वक्ष्यते । निकषोपल इति । स्वर्णपरीक्षाऽर्थः । पाठान्तरमिति । माधवोक्तमेतत् । तत्तु 'आकर्षात्पर्पादेरि'तिवार्त्तिकविरुद्धम् । तत्र हि नीरेफपाठे वृत्ताऽसङ्गतिः स्यात् । पर्पिकीति । षित्त्वान्ङीष् । येन पीठेनेति । 'पर्प गतौ' । 'हलश्चे'-ति करणे घञ् । एतन्माधवरीत्या । उज्ज्वलदत्तस्तु–पिपर्त्तेः 'प' उणादिः । पर्पम् = गृहं, बालतृणं च । तेन चरन्-'पर्पिक' इत्याह ।

इह 'पादः पच्चे'ति गणसूत्रम् । तदनार्षमित्युक्तं प्राक् ।

श्वादेरि । 'इञि परतो यत्किञ्चिन्निमित्तक ऐज्ने'त्यर्थः । तेन 'श्वाभस्त्रे-रिदं-श्वाभस्त्रमि'त्यत्राऽप्यैच् न । तदुक्तं भाष्ये—'तदन्तस्य चाऽन्यत्र प्रति-षेधो वक्तव्य' इति । ननु द्वारादौ 'श्वन्'शब्दपाठेऽपि, तदादौ कथं प्राप्ति-रैचोऽत आह—तदादीति । गृह्यमाणमचो विशेषणम् । 'द्वारादीनामचा-मादेरचो वृद्धिर्भवति, स चेदङ्गसम्बन्धी'[2]त्यर्थः कार्य इति भावः । तत्फलन्तु 'शौवहानं नगरमि'त्यादिसिद्धिः[3] । श्वागणिक इति । 'श्वादेरिञी'त्यत्र 'इकारादिग्रहणं कर्त्तव्यमि'ति वचनादैज्न ।

निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह—ऐज्वेति ।

श्वापदस्येदमिति । 'शौवादंष्ट्रो मणिरि'तिवत् अण् । न तु ढञ् । 'अभिधानलक्षणाः कृत्तद्धितसमासा' इत्युक्तेः ।

---

१ इतोऽग्रे—'ननु पूर्वसूत्रे एव पाठेऽपि नाविकस्य सिद्धत्वात् 'नाविका'इत्यस्य स्त्रीलिङ्गस्यैवोदाहरणस्यावश्यकतया, तेनैव षित्त्वशङ्काया निरासात् 'बाहुका'-इत्युदाहरणाऽन्तरदानं चिन्त्यमिति चेन्न । स्पष्टार्थत्वात्' इति घ. पाठः ।

२ 'तच्चेदङ्गसम्बन्धि' इति ख. घ. ङ. पाठः ।

३ इतोऽग्रे—'नचैवं 'स्व'शब्दपाठेनैव सिद्धौ गणे 'स्वाध्याय'शब्दपाठो व्यर्थः । तदादिविधेः स्वशब्दविषयेऽनित्यत्वज्ञापनाऽर्थत्वात् । तेन स्वार्थिक-स्वाभाविकादिसिद्धिः' इति घ. पाठः ।

'आपादिक' इत्यत्र तु पूर्वविप्रतिषेधेन नित्यमेव निषेध इष्यते। स्पष्टं चेदं 'नवेति विभाषे'ति सूत्रे भाष्ये।

वेतनादिभ्यो। 'धनुर्दण्डे'ति सङ्घातविगृहीतम्।

आयुधा। आयुध्यन्तेऽनेनेति-आयुधम्। घञर्थे कः।

उत्सङ्गेन हरतीति। नयति, उपादत्ते वेत्यर्थः।

भस्त्रादिभ्यः। शीर्षभार-शीषभारयोर्निपातनाच्छीर्षभाव-सप्तमी-समासौ। 'तत्पुरुषे कृती'ति वाऽलुक्।[1] न च गणे 'शीर्षभार'शब्दपाठो व्यर्थः, एकदेशविकृतन्यायेन सिद्धेरिति वाच्यम्। अलौकिकविग्रहवाक्ये लुकः प्रवृत्त्या, 'शीर्षभार'शब्दे विकाराऽभावादित्याहुः। भस्त्रा=चर्म-विकारो, येन लोहादि ध्मायते, जलादिकं च नीयते। एकदेशेति। छिन्नपुच्छश्वदृष्टान्तमूलकलौकिकन्यायेनेत्यर्थः। एवंच 'वीवधाच्चे'ति वार्त्तिकं न कार्यमिति भावः। वृत्तिकृता तु सूत्रे 'वीवध'शब्दः प्रक्षिप्तः।

निर्वृत्तेऽक्षद्यूता। 'अयमाकृतिगण' इति गणरत्नकृत्।

त्रेर्मप्। त्रितः क्त्रिरेव गृह्यते, न तु सङ्ख्यावाची 'त्रि'शब्दो, व्याख्या-नात्, 'प्रत्ययाऽप्रत्यययोरि'ति न्यायाच्च, 'निजां त्रयाणामि'ति निर्देशाच्च। एवं च 'क्त्रेर्मबि'ति ककारसहितः पाठोऽयुक्त एवेति बोध्यम्।

अत्र योगो विभज्यते-'त्रेर्मप्' इति। 'त्रिप्रत्ययाऽन्तप्रकृतिकतृतीया-ऽन्तान्निर्वृत्तेऽर्थे मबि'त्यर्थः। ततो,'नित्यम्'। इदं न मप्विधायकम्। नित्यविकल्पयोर्व्यवस्थाऽनापत्तेः। विकल्पस्याऽनिष्टत्वाच्च। नाऽपि निर्वृत्ते-

---

१ 'शीर्षभार' इत्यारभ्य 'विकाराऽभावादित्याहुः' इत्यन्तः ख. ङ. पाठः। क. कुण्डलितः। मनोरमाशब्दरत्नस्थत्वात्।

२ इतोऽग्रे—'यद्यपि दीर्घं उपसर्गस्यैव, तथापि 'सर्वे सर्वपदादेशा' इति-न्यायेन समुदायस्य तत्त्वं बोध्यम्। पदशब्देन तत्राऽर्थबोधकस्यैव ग्रह-णात्। धातूपसर्गसमुदाये च विशिष्टे एवाऽर्थबोधकत्वम्। कस्य चित् वाचकत्वेन, कस्यचिद् द्योतकत्वेनेत्याहुः' इति ख. पाठः।

ऽर्थे मपो नित्यत्वमात्रबोधकम् । एकयोगेनैव सिद्धेः । किन्तु निर्वृत्ता-ऽर्थविहितमबनुवादेन नित्यत्वविधायकम् । नित्यत्वं चाऽयोगव्यवच्छेदः । 'शङ्खो नित्यं पाण्डर' इतिवत् । तत्र हि 'न कदाऽपि अपाण्डुर' इति प्रतीयते । एवं च 'योऽयं निर्वृत्ते मप् स त्रिप्रत्ययाऽन्ताद्भवत्येव । कदाचिदपि न भवतीति ने'त्यर्थः । एवं च निर्वृत्तेऽपि वाक्यं न । अन्य-त्राऽपि त्र्यन्तस्य प्रयोगो न । 'पक्तिः क्रियते', 'कृत्रि महत्सुन्दरमि'त्यादौ । एवं चाऽऽद्यसूत्रेऽपि 'वे'त्यस्याऽसम्बन्धः । फलाऽभावात् ।

न च योगविभागे मानाऽभावः । 'त्र्यन्तं मप्विषयमेव यथा स्यात्, केवलस्य प्रयोगो मा भूदि'त्यादिभाष्यस्यैव मानत्वात् । तद्ध्वनयन् अस्व-पदविग्रहं क्तिनाऽऽह—कृत्या निर्वृत्तमिति । 'तृतीयान्तत्र्यन्तादि'ति वृत्तिस्तु अलौकिकविग्रहाऽभिप्रायेण बोध्येत्याहुः ।

भावप्रत्ययान्तादिति । एवं च मप् न कार्यः । निर्वृत्ते भावप्रत्यया-न्तादिमप् । ततः 'त्रेः' । 'भावे'त्याद्यनुवर्त्तते । नियमाऽर्थमेतत् । तेन निर्वृत्ते वाक्यं न । ततो 'नित्यम्' । अनेनाऽन्यत्राऽपि स्वातन्त्र्यं निवर्त्तते इत्याहुः । पाकिममिति । कुट्टिममप्येवम् । 'कुट्टिमोऽस्त्री निबद्धा भूरि'त्यमर-शेषः । भाष्ये तु क्वचित्पुस्तके 'कुट्टिमा भूमिरि'ति पाठो दृश्यते ।

ल्यबन्तमिति । 'उदीचां माङ' इति क्त्व, 'अपे'त्यनेन गतिसमासः । 'मयतेरिदन्यतरस्यामि'तीत्त्वम् । ततश्च सामर्थ्यात्, 'तेने'त्यधिकारेऽपि प्रथमाऽन्तात्प्रत्यय इति भावः ।

चूर्णादिनिः । मत्वर्थीयेनिना सिद्धे ठक्बाधनार्थमिदम् ।

लवणाल्लुक् । लवणरसवत्त्वेनैव 'लवणः समुद्र' इतिवत्सिद्धे, 'लावणिक'निवृत्त्यर्थं वचनम् ।

व्यञ्जनैरु । सेचनेन मृदूकरणम् उपसेकः । अन्नादिरसव्यञ्जकवाचका-त्तृतीयान्तात् उपसिक्तेऽर्थे प्रत्ययः । ननु उपसिक्ते संसृष्टत्वस्य नैयत्यादिदं व्यर्थमिति चेन्न । 'व्यञ्जनादुपसिक्ते एवे'ति नियमाऽर्थम् । तेनेह न—

'सूपेन संसृष्टा स्थाली'ति हरदत्तः। क्रियाविशेषणत्वादिति । अकर्मक[1]-धातुस्थलेऽपि फलव्यापारयोर्धात्वर्थत्वेन फलसामानाधिकरण्यात् द्वितीयेति भावः। प्रतीपमिति । 'प्रतिगता आपोऽस्मिन्नि'ति बहुव्रीहिः। 'ऋक्पूरि'ति समासान्तः। 'द्व्यन्तरि'ति ईत्त्वम्। व्युत्पत्तिमात्रं चेदम्। प्रतिकूलाऽनुकूलपर्याया हीमे। एवं च एषु उत्तरपदभूताऽबादयोऽविवक्षिता-ऽर्थाः। 'ऊदनोरि'ति तु न। अदेशत्वात्।

परिमुखमिति । 'अपपरी' इति कर्मप्रवचनीयत्वम्। 'पञ्चम्यपाङि'ति पञ्चमी। 'अपपरिबहिरि'त्यव्ययीभावः। ततः ठक्। स्वामिनो मुखं वर्ज-यित्वा यः सेवको वर्त्तते, स 'पारिमुखिकः'। यदा सर्वतो भावे परिः, प्रादिसमासश्च, ततो-यतो यतः स्वामिनो मुखं, ततो यो वर्त्तते सोऽर्थः। एवं पारिपार्श्विकोऽपि । द्विगुणार्थमिति । औपचारिकादेवाऽयं प्रत्यय इति बोध्यम्। बहुवृद्ध्युद्देश्यकत्वेनाऽस्य गर्ह्यत्वं बोध्यम्।

वृद्धेरिति । वृद्ध्यर्थे द्रव्ये 'वृद्धि'शब्द औपचारिको बोध्यः। गर्ह्यं किम् ?। मुख्याऽर्थादधमर्णे मा भूत्-'द्विगुणां वृद्धिं प्रयच्छत्यधमर्ण' इत्यादौ। 'वृद्ध्याजीवश्च वार्धुषिरि'त्यादयोऽसाधव एवे'ति हरदत्तः।

निपात्यत इति । 'सङ्ख्यायास्तत्पुरुषस्ये'ति वार्त्तिकं तु अव्ययादावेव प्रवर्त्तते, इति तत्रैव निरूपितम्। तेन वाक्यमपि अकारान्तेन भवति।

न च प्रत्ययसन्नियोगेन विहितस्य कथं वाक्ये प्रवृत्तिरिति वाच्यम्। टिलोपेनैव सिद्धतया वृत्तिकृतां समासाऽन्तनिपातनवैयर्थ्याऽऽपत्तेः। तदाह—दशैकादशानिति ।

न च विशेषणत्वात् एकादशशब्दस्य पूर्वनिपातः स्यादिति वाच्यम्। द्वन्द्वाऽद्वन्द्वसाधारण—'सङ्ख्याया अल्पीयस्या' इति पूर्वनिपातात्। एतेन 'द्वन्द्व-बहुव्रीहिमात्रविषयं तदि'त्यपास्तम्। स्पष्टं चेदं 'तदस्मिन्न-धिकमि'ति सूत्रे कैयटे।

---

१ 'अकर्मकधातुस्थलेऽपि शक्त्या, लक्षणया वा' इति घ. पाठः।

उञ्छति । 'भूपतितमेकैकं गृह्णाती'त्यर्थः । भूपतितस्य एकैकस्य उपादानम् उञ्छः । शाब्दिक इति । प्रकृत्यादिविभागेन शब्दस्य व्युत्पादके वैयाकरणे एवेदम्, अभिधानस्वाभाव्यात् । दार्दुरिकश्च कुलालः । दर्दुरो-वाद्यभाण्डविशेषः । 'दर्दुरस्तोयदे, भेके, वाद्यभाण्डाऽद्रिभेदयोः । दर्दुरा चण्डिकायां च, पामजाले तु दर्दुरमि'ति विश्वात् ।

स्वरूपस्येत्यादि । इदं च 'स्वं रूपमि'तिसूत्रे भाष्य-कैयटयोः स्पष्टम् । मात्स्यिक इति । 'मत्स्यस्य ङ्यामि'त्युक्तेन यलोपः । हारिणिक इति । ननु हरिणस्य मृगविशेषतया, पर्यायोदाहणाऽनुक्तेर्न्यूनतेति चेन्न । आरण्यचतुष्पात्सु, हरिणे च 'मृग'शब्दो वर्त्तते । तेनाऽऽद्यस्य हरिणो विशेषो, द्वितीयस्य पर्याय इत्यदोषात् । 'आरण्यके'ति मनोरमायान्तु णाऽन्ताऽरण्यशब्दात् स्वार्थे कः । वुञ् तु न, पथ्यध्यायादावेव विधानादित्याहुः ।[1]

परिपन्थम् । अव्ययीभावः । मयूरव्यंसकादित्वात् तत्पुरुषो वा । अत एव निपातनात्पन्थाऽऽदेशः । 'तिष्ठति'योगे क्रियाविशेषणत्वात् द्वितीया । चो भिन्नक्रमः । तदाह—हन्ति चेत्यर्थे इति । (यत्तु 'तत्पुरुषपक्षे 'कालभावाऽध्वे'ति कर्मत्वमि'ति । तन्न । गन्तव्यत्वेन प्रसिद्धक्रोशादेरेव तत्र ग्रहणात्) । माथः पन्था इति । 'मथ्यते = गाह्यते गन्तृभिरि'ति व्युत्पत्तेः । आक्रन्दिक इति । आर्त्तत्रातेति फलितोऽर्थः ।

पदोत्तरपदम् । 'पदान्तमि'ति तु नोक्तम्, बहुच्पूर्वान्मा भूत् ।

प्रतिकण्ठमिति । वीप्सायामव्ययीभावः । 'लक्षणेनाऽभिप्रती' इत्याभिमुख्ये वा । 'अन्याऽर्थे वर्त्तमानात्प्रतिकण्ठशब्दात्प्रत्ययो न, अनभिधानादि'ति हरदत्तः ।

चरति । 'स्वरसेन प्रवर्त्तते' इत्यर्थः । चरतेरासेवावृत्तित्वात् । आसेवा

---

१ 'आरण्यकेति' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ब. क. पाठो मनोरमाशब्दरत्नगतत्वात् क. ग. नास्ति । 'आरण्यकचतुष्पात्सु' इति मनोरमापाठः ।

२ इतोऽग्रे—'तदि'त्यधिकारसामर्थ्याद्वा' इति ब. पाठः । ३ क. म. नास्ति ।

च स्वारसिकी प्रवृत्तिः, न त्वनुष्ठानमात्रम् । तेन दैववशात् धर्मे प्रवृत्तो दुर्वृत्तो न 'धार्मिक' उच्यते । अधर्मो-धर्मविरोधिगुणविशेषजनकं कर्म ।

प्रतिपथमिति । प्राग्वदव्ययीभावः । 'ऋक्पूरि'ति समासान्तः । वृत्तावेतद्विहितप्रत्ययो नित् उक्त इति, अवृद्धिकमेवोदाहरणं युक्तम् ।

समवायान्स । बहुवचनादर्थनिर्देशः । तदाह—सामूहिक इति । 'समवैती'त्यस्य-'प्रविश्य तदवयवी भवती'त्यर्थः । तत्र गुणभूतप्रवेशं प्रति प्रकृत्यर्थस्य कर्मता । संश्लेषोऽर्थत्वे सप्तमी । 'कुरुक्षेत्रे समवेता' इति यथा । सैन्या इति । द्वितीयान्तात् ण्य-ठकौ । 'सेनायां समवेता' इति विग्रहस्तु फलितार्थकथनपरतया कथञ्चिन्नेयः ।

संज्ञायां ल । 'आभ्यां द्वितीयान्ताभ्यां पश्यतीत्यर्थे ठक्, सम्यक ज्ञानं संज्ञा, तस्याम्' । 'प्रसिद्धिविषयीभूतेऽर्थविशेषे' इति यावत् । 'लालाटिकः प्रभोर्भालदर्शी कार्याऽक्षमश्च यः' । भिक्षुरिति । स हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः ।

तस्य धर्म्यम् । धर्मोऽनुवृत्त आचारः, ततोऽनपेतमित्यर्थः ।

तदस्य प । पण्यम्—विक्रेयम् ।

किसरादिभ्यः । तालव्यमध्यो वृत्तौ पठ्यते ।

शलालुक इति । 'इसुसुक्तान्तात्कः' ।

शिल्पम् । अभ्यासपूर्वकं क्रियासु कौशलं शिल्पम् । मृदङ्गादयस्तद्वादने लाक्षणिकाः । मुख्याऽर्थात्तु अनभिधानात्प्रत्ययो नेति स्पष्टं भाष्ये ।

प्रहरणम्-आयुधम् । करणव्युत्पत्तेः ।

धानुष्क इति । 'इसुसुक्ते'ति कादेशे, 'इणः ष' इति षः ।

परश्वधा । चात् ठक् । परश्वधः—परशुः, कुठारः ।

शक्तियष्ट्योः । अत्रेदं बोध्यम् । इकक् ह्रस्व एवाऽस्तु । न च 'यस्ये'ति

---

१ 'विशेष्याऽनुरोधेन तु लोके सप्तमी प्रायेण प्रयुज्यते-'कुरुक्षेत्रे समवेता' इति यथा' इति ब. पाठः ।

लोपे, 'शाक्तीक' इत्याद्यसिद्धिः । इकारोच्चारणसामर्थ्यात्तदप्रवृत्तेः। दीर्घस्तु न बाध्यते । तन्निमित्तत्वात् । न च 'नञ्स्नञीकगि'ति वार्त्तिके ग्रहणार्थं दीर्घपाठः । तत्राऽपि ह्रस्वस्य सुपठत्वात् । 'कर्कलोहितादीकक्' 'तीयादीकक् स्वार्थे' इत्यादीनां तु तत्र न ग्रहणम् । नञ्स्नञ्साहचर्येणाऽस्वार्थिकस्यैव तत्र ग्रहणात् । न चैवमपि 'ठगि'त्येवाऽस्तु । सामान्यसूत्रेण ठकि सिद्धे, पुनष्ठग्विधानेनैव 'यस्ये'ति लोपप्रतिबन्धसम्भवादिति वाच्यम् । वाक्यनिवृत्त्यर्थत्वस्याऽपि सम्भावितत्वात् । विकाराऽभावाऽर्थत्वस्याऽपि सम्भावितत्वाच्च[1] । सर्वं चेदं भाष्ये ध्वनितम् ।

अस्तिनास्ति । 'अस्ति' 'नास्ती'ति निपातौ । यद्वा वचनसामर्थ्यात् 'अस्ती'त्याख्यातात्,'नास्ती'ति निपाताऽऽख्यातसमुदायाच्च प्रत्ययः । 'वृत्ति-विषये स्वविषयक-मति-लाक्षणिकेभ्योऽस्त्यादिभ्यः प्रथमासमर्थेभ्यः प्रत्यय' इत्यर्थः । 'दिष्टमि'ति प्रथमान्तनिर्देशस्तु कालवाचिपुँल्लिङ्ग'दिष्ट'शब्दस्य न ग्रहणमित्यर्थबोधनायेत्याहुः[2] । तद्ध्वनयन्नाह—इत्येवं मतिर्यस्येति ।

परलोक इति । एतच्चाऽभिधानस्वाभाव्याल्लभ्यते । 'दिष्टं दैवं भागधेयम्' । दैष्टिको दैवपरायणः । यत्तु 'प्रमाणाऽनुगता मतिर्दिष्टा, साऽस्ये'ति विग्रहेऽप्ययं प्रत्ययः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणादि'ति । तन्न[3] । 'दैवं दिष्टमि'ति कोशविरोधेन, त्वदुक्ताऽर्थककोशाऽनुपलम्भेन[4] च, तत्सत्त्वे मानाऽभावात् । यत्तु 'अर्श आद्यचि 'दिष्टा'शब्दः साधुः । सूत्रे टाबन्तेन समाहारद्वन्द्व' इति । तन्न । तावताऽपि 'प्रमाणाऽनुगते'त्यर्थाऽलाभात्[5] ।

---

१ 'सम्भावितत्वेन इकादेशदीर्घयोरप्यभावापत्तेश्च' इति घ. पाठः ।

२ 'यत्तु'इत्यारभ्य 'इत्याहुः'इत्यन्तपाठो मनोरमाशब्दरत्नस्थत्वात् क.कुण्डलितः।

३ 'तन्न । दिष्टस्य स्त्रीत्वे मानाऽभावात् , दैवं दिष्टमिति' इति घ. पाठः ।

४ 'त्वदुक्ताऽर्थकत्वाऽभावाच्च' इति घ. पाठः।

५ इतोऽग्रे—'दिष्टविषयेत्यर्थस्यैव लाभाच्च' इति घ. पाठः ।

'दिष्टमि'ति अस्य मतिर्दैष्टिक' इति भाष्यविरोधाच्च[1]। 'अस्ति'शब्दात् योगविभागेन ईकगपि। 'तेन 'आस्तीकवचनं श्रुत्वे'त्यादि सिद्धम्।

अयं चाऽभिधानस्वाभाव्यात् ऋषिविशेषेऽभिधेये एवेत्याहुः।

शीलम्—स्वभावः। 'तदस्ये'त्येव। अपूपादिशब्दाः स्वभक्षणे[2] वृत्तौ लाक्षणिका बोध्याः। क्रियाऽन्तराऽन्तर्भावेण लक्षणायान्तु न वृत्तिः, अनभिधानात्।

ताच्छीलिके णेऽपीति। अत्र यद्वक्तव्यं तद्वृद्धेति सूत्रे एवोक्तम्।

कर्माध्यं। ऐकान्यिक इति। 'एकमन्यदि'ति विग्रहे 'तद्धितार्थे'ति समासः। 'अध्ययने जयो वृत्तोऽस्ये'त्यादौ तु न, अनभिधानात्।

हितं भक्षाः। 'अस्ये'ति प्रकृतमपि चतुर्थ्या विपरिणम्यते। हितयोगात्। यद्वा 'तदस्मै' इत्यपकृष्टव्यम्। प्रकृतिश्च पूर्ववल्लाक्षणिकीत्याशयेनाह—अपूपभक्षणं हितमस्मा इति। नियुक्तमिति। नियतमित्यर्थः।

श्राणा—यवागूः। इकार उच्चारणार्थः। टो ङीबर्थः। सङ्घातेति। अतएव 'टिठन्'करणं चरिताऽर्थम्। अन्यथा ठञमेव विदध्यात्। तद्धि ओदने वृद्धिवारणायेत्याहुः। सङ्घातग्रहणे तु व्याख्यानमेव शरणम्।

नियुक्तः = अधिकृतः। आकरः = खनिः।

अगारान्ताट्ठन्। निदत्र पठ्यते। वृत्तौ तु ञित् पठ्यते इति वृद्धिमदेवोदाहरणं युक्तम्।

अध्यायिन्य। अदेशेत्यादि किम्?। 'काश्यामधीते'। 'पूर्वाह्णेऽधीते'।

[3]कठिनान्तप्रस्ता। प्रस्तार-संस्थानशब्दौ सन्निवेशपर्यायौ। 'प्रेस्त्रोऽयज्ञे' इति घञ्। तत्र हि 'अयज्ञे' इति च्छेदः।

---

१ इतोऽग्रे—'अचि टाबन्तस्य मूलभूतदिष्टग्रहणाऽसम्भवाच्च' इति घ. पाठः।

२ 'स्वभक्षणविषयकस्वभावे' इति घ. पाठः।

३ 'कठिणान्ते'ति णकारघटितः पाठः क.।

नैकटिक इति। 'आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यमि'ति शास्त्रम्। तदनादृत्य निकटे वसतीत्यर्थः। 'अशास्त्रीयनिकटवासे एवाऽयं साधुरि'ति वृत्तिकृत्।

आवसथिक इति। लित्स्वरः। 'आवसन्त्यस्मिन्निति आवसथः'। 'उपसर्गे वसेरि'ति 'अथ'प्रत्ययः। ततो वसतीत्यर्थे ष्ठल्।

कुसीदसूत्राच्च। 'कुसीदसूत्रोपात्तशब्दादि'त्यर्थः। तत्र हि द्वाभ्यां ष्ठन्-ष्ठचौ द्वौ विहितौ। अत्र येषां षकारः सांहितिक इति सम्भाव्यते, तेषामेव गणने, ष्ठनादेः षित्त्वमनार्षमिति सम्भाव्येत, इत्यतो वार्त्तिककृत् सर्वानेव पर्यजीगणदिति।

ठकोऽवधिः समाप्तः।



## अथ प्राग्घितीयाः ।

तद्वहति । 'रथ'शब्दसाहचर्याद्युगशब्दो रथाङ्गवाच्येव गृह्यते । स प्रासङ्ग इति । 'प्रसज्यते' इति कर्मणि घञ् । 'उपसर्गस्य घञी'ति दीर्घः । प्राऽऽसज्यते इति आङ्प्रश्लेषो वा । 'प्रासङ्गो ना युगाद्युगे' इत्यमरस्याऽयमर्थो—'युगात् = रथाङ्गात् , अन्यत् युगमि'ति । तेनाऽत्रैव पर्यवसानं तस्याऽपि । तेन 'प्रसङ्गादागतः प्रासङ्गः' । ततो नेत्याहुः ।

धुरो य । इह 'धुरो ढक् चे'त्येवोचितम् । भस्येति । 'र्वोरुपधाया' इत्यतः 'उपधा'ग्रहणमनुवर्त्तते । तेन 'प्रतिदीव्न' इत्यादौ न निषेधः । 'धुर्वी'धातोः 'भ्राजभासधुर्वी'ति क्विपि, राल्लोपे, धूः सिद्धः ।

धौरेय इति । अयं कित् । 'त्रिदि'ति 'धर्मपथी'ति सूत्रे हरदत्तस्वरसः । 'धौरेयक' इति स्वार्थकन्नन्तम् । सर्वधुरामिति । 'सर्वधूरि'ति 'पूर्वकालैके'ति समासः । 'ऋक्पूरि'ति समासान्तः । 'परवल्लिङ्गमि'ति स्त्रीत्वम्, विशेष्यत्वाद्वा । टाप् । सूत्रे सौत्रं ह्रस्वत्वम् । विधेयस्य पूर्वप्रयोगसामर्थ्यात् 'ख' इति योगो विभज्यते । तेन 'धुरीणं' इत्यादि सिद्धम् ।

एकधुराल्लुक् च । चकारः खस्याऽनुकर्षणाऽर्थः । तत्सामर्थ्यात्पक्षे

---

१ 'गृह्यते इत्याहुः । यद्यपि 'युग्यं च पत्रे' इत्येव सिद्धम्, तथाप्ययुग्यमित्यत्र 'ययतोश्चाऽतदर्थे' इत्यन्तोदात्तत्वायेदमावश्यकम्' इति ख. ग. पाठः ।

२ 'युगात् = रथाङ्गात्, अन्यस्मिन्—युगे = स्कन्धवाह्ये काष्ठे इति' इति लघुशेखरपाठः ।

३ इतोऽग्रे—'एतच्चाऽभिधानस्वाभाव्यात् । तेन' इति घ. पाठः ।

४ इतोऽग्रे—'हलि चे'ति दीर्घः प्राप्तः' इति ख. ङ. पाठः ।

५ 'सूत्रे शब्दस्वरूपाऽपेक्षं क्लीबत्वम्' इति ख. घ. ङ. पाठः ।

६ 'धुरीणः, दक्षिणधुरीणः' इति घ. पाठः ।

श्रवणम् । अन्यथा चकारं विनैव प्राकरणिकस्य यतो लुग्विधीयेत[1] ।

एकधुर इति । 'अन्तरङ्गानपी'ति न्यायेन सवर्णदीर्घात्प्रागेव 'लुक्तद्धिते'ति टापो लुक् । 'एकधुरां वहती'ति विग्रहः ।

केचित्तु सर्वधुरैकधुरयोः क्लीबत्वमिच्छन्ति, लोकात्, सूत्रनिर्देशाच्च ।

(हलसी) । हलसीरयोर्यद्वक्तव्यं तत् 'तस्येदमि'त्यत्रोक्तम् ।

संज्ञायाम् । 'जन्याः' इति सविसर्गपाठः । अत एव 'जनी'शब्दादेषा पञ्चमी'ति भाष्यं सङ्गच्छते । एतेन[2] 'निर्विसर्गपाठं पठित्वा, स्त्रियामेवाऽस्य साधुत्व'मिति वदन्तः परास्ताः । 'याते'ति जन्यानवदत्कुमारी'ति कालिदासप्रयोगविरोधाच्च । 'जायतेऽस्यां गर्भ' इति 'जनी' । 'जनिघसिभ्यामिण्' । 'कृदिकारादि'ति ङीष् । 'जनिवध्योश्चे'ति वृद्धिनिषेधः । तां वहतीति । 'प्रणयकलहादौ प्रियसमीपं प्रापयती'त्यर्थः । जन्या–मातुर्वयस्या[3] ।

न चेत्तत्र धनुः करणमिति । 'सम्भाव्यते' इति शेषः । धनुरविवक्षितम्, करणमात्रे[4] प्रतिषेध इष्यते । स्पष्टं चेदमाकरे । तेन 'चोरं विध्यती'त्यादौ न । सम्भाव्यते हि तद्व्यधने धनुरादीनां करणता । यदा तु 'धनुषे'त्यादि प्रयुज्यते, तदा सापेक्षत्वेनाऽसामर्थ्यादेव न भविष्यतीति प्राञ्चः ।

अत्रेदं वक्तव्यम्-प्रधानस्य प्रत्ययाऽर्थस्य सापेक्षत्वे को दोषः । न च तद्धितस्य साधनप्रधानत्वेनाऽसामर्थ्यम् । व्यधनस्य तदंशे नित्यसाऽपेक्षत्वात् । तस्मात्करण[5]प्रयोगे प्राप्तप्रत्ययवारणार्थम्—'अधनुषे'ति[6] । अन्यथा

१ 'एकधुरात्','लुगि'ति योगविभागेनैव सिद्धौ चकारो व्यर्थ इति चिन्त्यम्' इति घ. पाठः ।

२ 'यत्तु स्त्रियामेवाऽस्य साधुत्वमिति । तन्न । मानाऽभावात्' इति घ. पाठः ।

३ 'जामातुर्वयस्या' इति क. ग. पाठान्तरम् ।

४ 'करणसम्भावनामात्रे प्रतिषेध इष्यते' इति ख. ङ. पाठः ।

५ 'करणस्य प्रयोगेऽपि' इति घ. पाठः ।

६ इतोऽग्रे—'परन्तु तद्धितयोगे न तृतीयान्तस्य प्रयोगः, किन्तु षष्ठ्यन्तस्य ।

'पद्याः शर्करा' इत्यत्रापि न स्यात्। संभाव्यते हि तत्रापि तैक्ष्ण्यस्य करणता। 'चौरं विध्यती'त्यादौ यद्यनिष्टः प्रत्ययस्तदाऽनभिधानेन वारणीयः। स्पष्टं चेदं सर्वमत्रैव भाष्यकैयटयोः। पद्या इति। 'पद्यत्यतदर्थे' इति पद्भावः। 'तदि'त्यनुवर्त्तमानद्वितीयान्ताऽबाधायाऽऽह—तृन्नन्तमिति। तृजन्तत्वे हि षष्ठी स्यादिति भावः।

वशं ग। वशनं-वशः = इच्छा। 'वशिरण्योरुपसङ्ख्यानमि'ति अप्। सर्वस्याऽपि स्वेच्छानुसारित्वात्सामर्थ्यलभ्यमर्थमाह–परेच्छानुसारीति।

पदमस्मिन्। निर्देशादेव प्रथमा समर्थविभक्तिर्बोध्या। आबर्हीति। 'उत्पाटनयोग्यमि'त्यर्थः। 'बृह उद्यमने'-दन्त्योष्ठ्यवादे रूपम्। 'उद्बृह रक्ष' इत्यादिप्रयोगदर्शनात्। 'प्रथमान्तात् 'आबर्हि'इत्युपाधिकान्मूलशब्दात् यदि'त्यर्थः। मूल्या इति। 'सम्यक् शुष्का' इत्यर्थः। तदा हि ते मूलोत्पाटनेनैव संग्रहयोग्या, न मध्यतो लवनेन, कोशस्थानामपि पातसम्भवादित्याहुः। यप्रत्ययश्चेति। तेन 'धेनुष्या'शब्दोऽन्तोदात्त इति बोध्यम्। यति तु तित्स्वरः स्यादिति भावः। संज्ञायामिति। ऋणप्रत्यर्पणपर्यन्तं[1] या धेनुर्दोहनाऽर्थमुत्तमर्णाय दीयते, तस्याः संज्ञेयम्।

गृहपतिना सं। निर्देशादेव तृतीया समर्थविभक्तिः। 'संज्ञायामि'-त्यनुवृत्तेर्दक्षिणाऽग्न्यादौ न[2]।

नौवयो। अत्र मूलान्त-मूलादीनां द्वन्द्वगर्भो द्वन्द्वः। तेन 'मूल'शब्दयोर्नैकशेषः। 'अष्टभ्यो यथासङ्ख्यमष्टस्वर्थेषु यदि'त्यर्थः। इह तार्याऽऽदियोगे यथासम्भवं करणे, कर्त्तरि, हेतौ, तुल्याऽर्थयोगे च तृतीया भवतीति,

---

'कर्तृकर्मणोः कृती'तिसूत्रस्थभाष्यप्रामाण्येन तद्धितार्थक्रियायोगे कर्मादिसंज्ञाऽभावस्योपपादितत्वात्। स्पष्टं चेदं सर्वमत्रैव भाष्यकैयटयोः' इति घ. पाठः।

१ 'ऋणप्रत्यर्पणाय' इति ख. घ. ङ. पाठः।

२ 'दक्षिणाग्न्यादौ नाऽतिप्रसङ्गः' इति घ. पाठः।

सैवेह समर्थविभक्तिरर्थात् लभ्यते । नावा तार्यमिति ।, शक्याऽर्थे 'ऋहलोर्ण्यत्' । करणे, तस्य स्वातन्त्र्यविवक्षायां कर्त्तरि वा तृतीया ।

वयस्य इति । मित्रे एवेदम् । संज्ञाऽधिकारात् । तेन 'वयसा तुल्यः शत्रुरि'त्यत्र न । धर्म्यं-धर्मफलम्[1] । वध्यो-वधाऽर्हः । 'दण्डादिभ्य' इत्यर्हाऽर्थे वध्यस्य साधुत्वात् । मूलेनाऽऽनाम्यमिति । अत्रापि कर्त्तृतृतीया । 'पटाद्यु-त्पत्त्यर्थं वाणिग्भिर्नियुक्तेन मूलाऽऽख्येन भागेन आत्मानं प्रति शेषी-कर्त्तव्यो लाभाऽऽख्यो भाग' इत्यर्थः । 'आनाम्यमि'ति—आङ्-पूर्वान्नमतेः अभिभवाऽर्थात् , अत एव निपातनात् ण्यत् । अन्यथा 'पोरदुपधादि'-ति यत्स्यात् । अभिभवश्च शेषीकरणरूप एव । लोके तु क्रयसाधने द्रव्ये 'मूल्य'शब्दः प्रयुज्यते । तत्र तद्घटिते समुदाये लक्षणेत्याहुः ।

सीत्यमिति । सीता-हलाऽग्रम् । तेन समीकृतमित्यर्थः । संपूर्वादिणः क्तः । 'रथसीताहलेभ्य' इति तदन्तविधिः—'पञ्चसीत्यम' । 'कृष्टक्षेत्रस्य समीकरणाऽर्थः काष्ठविशेषो 'मई'ति मध्यदेशप्रसिद्धः[2] 'सीते'त्यन्ये ।

तुलयेति । तुल्याऽर्थयोगे तृतीया । संमितम्-परिच्छिन्नम् ।

तुल्यमिति । सदृशमात्रे रूढोऽयम् । संज्ञाधिकारात् । तुलायां तु नाऽऽग्रहः, 'चन्द्रतुल्यं मुखमि'त्यादिदर्शनात् । धर्मादनपेतमिति । 'यदनुष्ठानं धर्ममनुवर्त्तते एव, तदि'त्यर्थः । 'पथ्यमि'त्यादौ संज्ञाऽधिकारा-दभिधेयनियमो द्रष्टव्यः । तेन शास्त्रीयात्पथोऽनपेतमेव-'पथ्यम' । तेन 'पथो=मार्गात् अनपेतश्चोर' इत्यादौ न । अन्यसमर्थविभक्तेरभावेऽपि, योग्यतावशादेवाऽत्र[3] पञ्चमी समर्थविभक्तिर्बोध्या ।

छन्दसो । तत्र निर्माणे इच्छायाः करणत्वेन सामर्थ्यात्तृतीयान्तात्प्रत्ययः । 'छदि संवरणे' इति चुरादिरिच्छायामपि । ततो घञि इच्छावाची'छन्द'-

१ 'तत्फलम्' इति ख. घ. ङ. पाठः ।

२ 'मई'ति मध्यदेशे प्रसिद्धम्' इति सर्वादर्शेषु पाठः ।

३ 'निर्देशादेव अत्र' इति ख. घ. ङ. पाठः ।

शब्दः–'स्वच्छन्दोच्छलदि'त्यादौ। असुनि तु सान्तः। सोऽत्र प्रकृतिः। त्रिष्टुबादिवाची तु न गृह्यते। संज्ञाऽधिकारात्। पुत्र इति। संज्ञाऽधिकार-बललभ्यमेतत्। नेह—'उरसा निर्मितं सुखम्'।

हृदयस्य। 'प्रीणातीति प्रिय' इति व्युत्पत्तेः कृद्योगलक्षणा कर्मणि षष्ठी। अलौकिके तद्धितप्रकृतिभागे तु वचनसामर्थ्यादेव सेति बोध्यम्[2]। 'तत्र शेषत्वादेव षष्ठी'त्यन्ये। भावः साधनं वेति। ल्युटो भावकरणयो-र्विधानादिति भावः। 'मतस्ये'ति कर्मणि षष्ठी। 'जल्प'शब्दो भाव-साधनः। कर्त्तरि षष्ठी। एवं कर्षणं-कर्षः। तद्योगे 'हलस्ये'ति कर्मणि षष्ठी। करणस्य कर्तृत्वविवक्षया कर्त्तरि वा। परिमाणवाची 'कर्ष'शब्दस्तु न गृह्यते[3]। 'हल'सम्बन्धात्। अत्राऽपि हलशब्दांऽशे तदन्तविधिः। 'रथसीताहलेभ्यो यद्विधौ' इति वार्त्तिकोक्तेः। 'द्विहल्यः'।

तत्र साधुः। प्रवीणो, योग्यो वा साधुः, नोपकर्त्ता। तत्र 'तस्मै हितमि'ति सिद्धेः। अग्र्य इति। भवाऽर्थे तु 'अग्रिम' इत्येव। 'भवे छन्दसी'त्य-धिकारस्थ-'अग्राद्यत्'-घच्छौ चे'तिसूत्रद्वयन्तु छान्दसमेव। आपादपरि-समाप्तेश्छन्दोऽधिकारादित्याहुः। प्रतिजनमिति। 'जनं जनं प्रती'ति विग्रहः। मनोरमायां[4]—'जनो जनः प्रतिजनमि'त्युक्तम्। तत्र विग्रहे 'प्रति' शब्दप्रयोगाऽभावेन कर्मप्रवचनीययुक्तत्वाऽभावान्न द्वितीया। न चाऽस्व-पदविग्रहत्वान्नित्यसमासत्वाऽऽपत्तिः। अस्वपदविग्रहत्वस्य नित्यत्वे प्रयोज-कत्वाऽभावात्। नित्यसमासत्वं परमस्वपदविग्रहत्वादौ प्रयोजकमित्य-

१ 'संज्ञाऽधिकारात्। तत्र निर्माणे इच्छायाः करणत्वात्तृतीयान्तादित्येतल्लाभः' इति ख. पाठः।

२ इतोऽग्रे—'हृदयस्य प्रियः पुत्र' इत्यादावनभिधानान्नेत्याहुः' इति घ. पाठः।

३ 'न गृह्यते। साहचर्यात्, हलसम्बन्धात्, अनभिधानाच्च' इति ख.घ.ङ.पाठः।

४ 'मनोरमायाम्'इत्यारभ्य 'भाष्यपदमञ्जर्योः' इत्यन्तः पाठः क. कुण्डलितः। लघुशब्दरत्नगतत्वात्।

न्यदेतत् । स्पष्टं चेदम् 'अषडक्षे'ति अध्युत्तरपदात्खविधायकसूत्रे भाष्यपदमञ्जर्योः । 'यथाऽर्थे यत् अव्ययमि'ति वीप्सायामव्ययीभावः। 'तृतीयासप्तम्योर्बहुलमि'त्युक्तेः सप्तम्या अम् वा। अत्र 'परस्यकुला-ऽमुष्य-कुलयोः षष्ठ्या अलुक्। निपातनात्।

भाक्ता इति। भक्तशब्देनाऽत्राऽन्नम्, तत्र साधवः = त्रिष्फलीकृता इत्यर्थः। योगविभागादिति। अत एव 'सर्ववेदपारिषदं हीदं शास्त्रमि'ति भाष्यप्रयोगः सङ्गच्छते। स्वापतेयमिति। 'स्व'शब्दोऽत्र धनवाची।

सभाया यः। यति तित्स्वरः स्यात्।

समानतीर्थे वासी। 'समानतीर्थाऽधिकरण(क)वासकर्त्तेत्यर्थे प्रत्यय' इति बोधे 'प्रथमादि'त्यधिकारात् 'समानतीर्थ'शब्दस्य प्रकृतित्वे निर्णीते, 'वासी'त्यस्य प्रत्ययाऽर्थत्वनिर्णयः। अत्र यादिप्रत्ययविवक्षायां पूर्वमेव 'तीर्थे ये' इति सादेशे, 'सतीर्थ ङी'त्यलौकिके वाक्ये, एकदेशविकृत-न्यायेन 'समानतीर्थ'शब्दत्वात्प्रत्ययः। 'वासी'ति अत एव निपातनात् णिनिः। ग्रहादेराकृतिगणत्वाद्वा।

समानतीर्थे इति। 'पूर्वाऽपरप्रथमे'ति तत्पुरुषः। समानोदरेऽप्येवम्[2]। 'तरन्त्यनेनेति-तीर्थम्'। तरतेस्थक्। 'तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्याय-मन्त्रिषु। योनौ, जलाऽवतारे चे'ति विश्वः। इह तु अध्यापकवाचिन एव ग्रहणम्।

न च 'सतीर्थे वासी'त्येव सूत्रमस्तु। 'स'शब्दस्तु व्याख्यानात्[3]समाना-ऽर्थक एवेति वाच्यम्। सूत्रे यादिप्रत्ययविषयाऽभावेन सादेशाऽना-

१ 'यथाऽर्थे' इति वीप्सायामव्ययीभावः' इति घ. पाठः।

२ 'समानोदरेऽप्येवम्। उत्तरसूत्रद्वयसहितमिदं सूत्रं, सादेशविधाययकं च सूत्रद्वयमनेनैव समासे प्रवर्त्तते, लक्षणप्रतिपदोक्तपरिभाषयेत्याहुः' इति घ. पाठः।

३ 'सशब्दस्तु साहचर्यात्' इति ख. ङ. पाठः।

पत्तेः। 'सोदराद्य' इत्यत्र तु शब्दपरत्वान्न दोषः। न हि अत्राऽपि शब्दपरत्वं वक्तुं शक्यम्। सप्तम्या असङ्गतेः। 'सतीर्थाद्वासी'ति तु वक्तुं युक्तम्।

शयित इति। शेतिः स्थितौ। 'जलाशयः' 'कुशेशयमि'ति यथा।

ओ चोदात्त इति। तित्स्वराऽपवादोऽयम्। 'सोदराद्य' इत्यत्र त्विदं नाऽनुवर्त्तते। अत एव[1] तत्सूत्रं चरिताऽर्थम्। अन्यथा यति, ये वा, रूपे, स्वरे च विशेषाऽभावेन, पूर्वसूत्रेणैव एकदेशविकृतन्यायात्सिद्धौ, वैयर्थ्यं स्पष्टमेव। अत्र च 'विभाषोदरे' इत्यनेन यादौ विवक्षिते सादेशो वैकल्पिकः।

( इति प्राग्घितीयाः )।

समाप्ताश्चातुर्थिकाः।

---

१ 'अत एव 'सोदराद्य' इति सूत्रम्' इति घ. पाठः।

अथ पाञ्चमिकाः ।

तत्र

## छयद्विधिप्रकरणम् ।

मित्यतः प्रागिति । 'एतत्प्रतिपाद्याऽर्थात्प्रागि'त्यर्थः । ततश्च ततः प्राग्येऽर्थास्तद्बोधकशास्त्रेष्वस्योपस्थानं बोध्यम् । अवध्यवधिमतोः साजात्यात् । अत एव 'मासात्पर' इत्यत्र कालस्यैव प्रतीतिः । 'ग्रामात्पूर्व' इति देशस्यैव । एतेन 'प्राग्वतेष्ठञि'त्यतः प्राक् 'छयतोः पूर्णोऽवधिरि'ति ग्रन्थोऽयुक्त' इति परास्तम् । तेषां शास्त्राणामर्थबोधकत्वाऽभावेन तेष्वेषामनुपस्थितेः । न च 'प्राक् ठञः' इत्येव,'प्राक् निष्कादि'त्येव वा सूत्र्यतामिति वाच्यम् । एवं हि प्रतिसूत्रमस्योपस्थितौ सन्निधानाऽविशेषाच्छरीरावयवादिभ्य, उगवादिभ्यश्च, उभावपि तव्यत्तव्याऽनीयरामिव पर्यायेण स्याताम् । मम तु समानेऽर्थे प्रकृतिविशेषाद्विहितो यदादिश्छं बाधते इति न दोषः । 'विभाषे'त्यादिज्ञापकेन निर्वाहे तु प्रतिपत्तिगौरवम्, अवध्याश्रयणवैयर्थ्यं च । 'प्राग्वतेष्ठञि'त्यधिकाराऽन्तरेणाऽवष्टब्धत्वान्न तदुत्तरमस्याऽधिकाराऽऽशङ्का । स्पष्टप्रतिपत्त्यर्थं तदिति चेत् । तर्हि अर्थ एवाऽवधित्वेन निर्देष्टुमुचितः । अन्यथा 'भक्षितेऽपि लशुने न शान्तो व्याधिरि'तिन्याय आपद्येत ।

गवाद्यन्तर्गणसूत्राण्याह—नाभि नभं चेति । 'नाभिशब्दो यतं लभते, नभाऽऽदेशं चे'त्यर्थः । नभ्योऽक्ष इति । 'नभ्यं चक्रमि'त्यादौ तु तादर्थ्या-

---

१ 'तद्घटकशास्त्रे' इति घ. पाठः । २ 'प्रतीतिर्मीमांसा' इति ख. ङ. पाठः ।

३ इतोऽग्रे—'क्रीताद्यर्थानामारम्भस्तु प्राग्वतेष्ठञित्यारभ्य' इति घ. पाठः ।

४ इतोऽग्रे—'एतेन 'अधिकारत्वेऽपि हितेत्यादावनुवृत्तस्य 'शरीरावयवादि'त्यादावप्यनुवृत्त्यापत्तिः । क्रीतात्प्राचीनस्य हितार्थस्य तत्र सत्त्वात् । तस्मात् परिभाषेयम् । यदादिविधिषु प्रत्ययविशेषनिर्देशान्न परिभाषोपस्थितिः । यथाऽचो ञ्णितीत्यादावधिकपरिभाषाया' इत्यपास्तम्' इति घ. पाठः ।

ऽऽरोपेण, प्रकृति-विकृतिभावाऽऽरोपेण च प्रत्यय उपपाद्यः। स्पष्टं चेदं भाष्ये। हिताऽर्थस्तु तत्र न सम्भवत्येवेति बोध्यम्। रथाङ्गं सछिद्रं 'नाभिः'। तदनुप्रविष्टः काष्ठविशेषः-'अक्षः'। स च तद्गमनाऽनुगुणत्वात्तस्मै[1] हितः। अञ्जनं—तैलाऽभ्यङ्गः। तदपि स्नेहनत्वात् नाभये हितम्।

रथनाभावेवेति। शरीराऽवयववाचकात्तु आदेशाऽसन्नियुक्तः शरीराऽवयवाद्यदेव परत्वादितिभावः[2]। नभ्यचक्रप्रकृति'नभ्यो'वृक्षः। चरव्यतण्डुलप्रकृतयो व्रीहयोऽपि 'चरव्याः'। अङ्गारीयकाष्ठाऽर्थवृक्षोऽपि 'अङ्गारीय' एव। तादर्थ्येन तच्छब्दव्यवहारात्। ततः प्रत्ययस्तु न। अनभिधानादित्याहुः।

वा च दीर्घत्वमिति। चेन प्रकृतिभावः समुच्चीयते। तेन टिलोपो न। न च सम्प्रसारणे 'शु-अनि'ति स्थिते, पूर्वरूपं बाधित्वा 'वार्णादाङ्गमि'तिन्यायेन प्राप्तस्य टिलोपस्य 'ये चाऽभावकर्मणोरि'त्यनेन निवृत्तौ, ततः पूर्वरूपेऽपि, न पुनष्टिलोपप्रसक्तिः, भ्रष्टाऽवसरत्वादिति वाच्यम्। भ्रष्टाऽवसरन्यायस्याऽत्र शास्त्रे आश्रयणाऽभावादिति[3] 'इको गुणे'त्यत्र भाष्यप्रदीपोद्द्योते निरूपितम्। दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपो नेत्याहुः[4]।

नङ् चेति। ङित्त्वमत्र चिन्त्यप्रयोजनम्। यत्तु 'ऊधन्यशब्दादाचारक्विप्यात्मनेपदाऽर्थं ङित्त्वमि'ति। तन्न। 'अनुदात्तङित' इति सूत्रे आक्षेपा-

---

१ 'तदनुगुणत्वात्' इति ख. घ. ङ. पाठः।

२ इतोऽग्रे—'एवं 'तदस्य तस्मिन्नि'त्यर्थे बाधकाऽभावेऽपि शरीराऽवयवनाभेर्न नभादेशः, अनभिधानादिति बोध्यम्। अनभिधाने मानन्तु चिन्त्यमिति केचित्' इति घ. पाठः।

३ 'आश्रयणाऽभावाच्च' इति ख. घ. ङ. पाठः।

४ इतोऽग्रे—'पूर्वरूपेऽन्त्वस्य विनाशोन्मुखतया पूर्वमपि प्रकृतिभावाऽप्रवृत्तेः। न च स्थानिवद्भावेनाऽन्त्वम्। उकाराऽकारयोः पूर्वरूपस्थानित्वेनाऽन्त्वस्य तत्स्थानिधर्मत्वाऽभावात्। अत एव 'राजकीयमि'त्यादावल्लोपो न। अर्द्धविकारेण प्रत्यभिज्ञाऽभावाच्च नैकदेशविकृतन्यायविषयः' इति ख.घ.ङ.पाठः।

देव धातोग्रहणे जाते, भूवादिसूत्रात्षष्ठ्यन्ततया विपरिणता[1]ऽनुवृत्त-धातुग्रहणसामर्थ्येन 'धातुरेव यो धातुः, न नामत्वमन्वभूत् यो धातुरि'ति-व्याख्यानेन तत्राऽऽत्मनेपदाऽप्राप्तेः । एतेन 'न तु नामधातुरि'ति-व्याख्याने चित्रङः क्यचि, क्यजन्तादात्मनेपदाऽनापत्तिरि'ति परास्तम् । क्यजन्तेन ततः प्राक् नामत्वाऽननुभवात् ।

न चैवमप्यूधन्यशब्दात्क्यचि, आत्मनेपदाऽर्थमेव ङित्त्वमस्तु । चित्रङो ङित्त्वमिव, सामर्थ्येनेदमपि समुदायोपकारकं भविष्यतीति वाच्यम् । 'यं समुदायं योऽवयवो न व्यभिचरति, तत्समुदायोपकारक ए[2]व तदवयव-धर्मः, नाऽन्यस्ये'ति 'गुप्तिजा'दिसूत्रे भाष्ये स्पष्टमुक्तत्वात् । ङित् चित्रङ् तु क्यजन्तं न व्यभिचरत्येवेति स्पष्टमेव । न च ङित्त्वसामर्थ्यादेव न्याय-बाधः । न्यायबाधाऽपेक्षयाऽन्यत्र क्लृप्ताऽनङ एवाऽत्रोच्चारणमित्यस्यैव युक्त[3]त्वात् । न च ङकाराऽभावेऽनः सर्वादेशताऽऽपत्तिः । नकारमात्रस्यैवा-ऽऽदेशत्वात् । 'ये चे'ति प्रकृतिभावेन 'अल्लोपोऽन' इति न । टिलोपश्च ।

न चाऽयम् अन् लाक्षणिक इति, कथमत्र 'ये चे'त्यस्य प्राप्तिः । अन्-ग्रहणे तदप्रवृत्तेः । स्पष्टं चेदं सर्वं 'बहुव्रीहेरूधस' इत्यत्र भाष्ये ।

ऊर्णापलेति । भाष्ये तु 'अशीतिशतं कम्बल्यमि'त्युदाहृतम् ।

विभाषा हवि । हविर्विशेषाणामिह ग्रहणम् , न स्वरूपस्य । गवादौ 'हविः'शब्दपाठात् । विपरीतन्तु न । असञ्जातविरोधन्यायात् । 'उवर्णान्त-हविर्वाचकेभ्यः पूर्वविप्रतिषेधेन नित्यमेव' । 'चरव्यास्तण्डुलाः' । 'स्थाली-वचन'चरु'शब्दस्य लक्षणया तत्रत्ये हविषि वृत्तिरि'ति कैयटादयः ।

वेदे तु 'आदित्यश्चरुरि'त्यादौ 'अदितिम् ओदनेने'ति वाक्यशेषात् , ओदने लक्षणा । लोके गृहीतशक्तिकस्यैव वेदे बोधकत्वस्वीकारादिति तदाशयः । मीमांसकास्तु-'ओदने शक्तिः, स्थाल्यां लक्षणे'त्याहुः ।

---

१ 'विपरिणतविभक्तिकाऽनुवृत्त' इति ख. घ. ङ. पाठः ।

२ 'एवाऽवयवधर्मो, नान्यस्य' इति ख. घ. ङ. पाठः ।

३ 'युक्तत्वादित्याद्यनुदात्तङित इत्यत्र निरूपयिष्यामः' इति घ. पाठः ।

अपूपादौ—'अन्नविकारेभ्यश्चे'ति पठ्यते। 'अन्नविकाराः = अदनीयविशेषास्तेभ्यो यत् वे'त्यर्थः। 'ओदन्याः'। 'ओदनीयाः'। 'ततोऽपि पूर्वविप्रतिषेधेन नित्यमेवोवर्णान्तेभ्यः'। 'सक्तव्या धानाः'। नन्वेवमपूपादीनां तेषाञ्चित्पाठो व्यर्थः। न च यदा सादृश्यादिनाऽपूपादयोऽर्थान्तरे वर्त्तन्ते तदर्थं पाठः। गौणमुख्यन्यायेन वारणादिति चेन्न। गणे तेषां पाठस्य प्रपञ्चार्थत्वात्। अन्यत्र तथा दृष्टत्वेन एवमेवौचित्यादित्याहुः।

हविष्यमिति। 'हविः'शब्दो गवादिः। नस्यमिति। 'पद्दन्' इति नस्। 'प्रभृति'ग्रहणस्य प्रकारार्थत्वात्। एवं च 'नासिकाया यत्-तस्-क्षुद्रेषु नसि'ति नाऽपूर्वमिति बोध्यम।

ये च। 'शीर्षन् छन्दसी'त्यतः 'शीर्षन्नि'ति वर्त्तते।

शीर्षण्ये—'ये चे'ति प्रकृतिभावः।

खलयव। 'वृष'शब्दोऽकारान्तो, व्याख्यानात्। न तु नकारान्तः।

[1]यत्तु 'नान्तग्रहणे इष्टे 'आत्मन्विश्वे'तिवत्, असन्देहार्थं नलोपमकृत्वैव निर्दिशेदि'ति। तन्न। अर्द्धमात्रागौरवाऽऽपत्तेः। किं च आत्मन्निति नकारोच्चारणं नाऽसन्देहाय। सन्देहाऽप्राप्तेः। किन्तु प्रकृतिपरिमाणार्थमिति वृत्तौ स्पष्टम्। तेन 'असमास'ग्रहणज्ञापिततदन्तविधेर्न तत्र प्रवृत्तिः। अत एव उत्तरपदग्रहणं 'भोग'शब्देनैव सम्बध्यते। किञ्चैवम् अकारान्तोऽपि गृह्यताम्, न तन्मात्रमित्याहुः।

वृषाय हितं वृष्यम्। ब्रह्मण्यमिति। 'ब्रह्मन्'शब्दो ब्राह्मणपर्यायः। 'वृषन्' ब्राह्मण'शब्दाभ्यां हितेऽर्थे न कोऽपि प्रत्ययः, अनभिधानादि'ति भाष्यम्। चाद्रथ्येति। 'अत्र रथशब्दांऽशे तदन्तविधिर्न, 'रथसीताहलेभ्यो यद्विधौ' इति वार्त्तिकस्य हलसीतासाहचर्येण चतुर्थाऽध्यायस्थस्येव प्रवृत्तेरि'ति कैयटः। तन्न। 'असमास'ग्रहणज्ञापकसिद्धवक्ष्यमाण-

---

१ 'यत्तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. ङ. पाठो मनोरमाशब्दरत्नगतत्वात् क. कुण्डलितः।

तदन्तविधेः 'कृष्णतिल्यम्' 'राजमाष्यम्' 'यवाऽपूप्यमि'त्यादाविव, इहाऽपि दुर्वारत्वादिति दिक् । रथशब्दस्य गवादावेव पाठस्तु न कृतः । 'हिताऽर्थे एव यथा स्यात्, अर्थाऽन्तरे मा भूदि'ति ।

अजाविभ्याम् । सूत्रे 'अज'शब्दः पुंलिङ्गा, व्याख्यानात् । अत एव 'द्वन्द्वे घी'ति बाधित्वा 'अज'शब्दस्य अजाद्यदन्तत्वात्पूर्वनिपातः कृतः ।

स्त्रीलिङ्गाभ्यामपि अजाऽवीभ्यां लिङ्गविशिष्टपरिभाषया ध्यन् । 'तसिलादिष्वि'ति पुंवत्त्वम् ।[1]

आत्मन्वि । उत्तरपदग्रहणं भोगेनैव सम्बद्धयम्, नाऽन्येन । व्याख्यानात् । कर्मधारयादेवेति । सर्वसमासेभ्यो लघुत्वेनाऽन्तरङ्गत्वात्तस्यैव ग्रहणमिति भावः । पञ्चजन-सर्वजन-महाजनेष्वप्येवमेव[2] । न च 'पञ्चानामि'त्यस्य सङ्ख्येयविशेषसापेक्षत्वेन 'पञ्चानां जन' इतिसमासाऽनुपपत्तिः । प्रकरणादिना विशिष्टसङ्ख्येयवृत्तित्वाऽवगमे, एतत्सम्भवात् । स्पष्टं चेदं भाष्ये । विश्वजनीयमिति । विश्वस्य जनः = साधारणो, वेश्यादिः । बहुव्रीहावपि स एवाऽन्यपदार्थः । तस्मै हितमित्यर्थः ।

पञ्चजनीन इति । रथकारपञ्चमाश्चत्वारो वर्णाः 'पञ्चजनाः' । प्रत्येकं पञ्चजनशब्दस्य एषु रूढिः । यद्वा प्राण-चक्षुः-श्रोत्रा-ऽन्न-मनांसि प्रत्येकं पञ्चजनाः । यद्वा देवाः, पितरो, गन्धर्वा, असुरा, रक्षांसि—पञ्चजनाः । यद्वा प्रजावाची,-इति प्रथमस्य चतुर्थे पादे 'प्राणो वाक्यशेषादि'ति सूत्रे शाङ्करभाष्ये स्पष्टम् । 'दिक्सङ्ख्ये' इति समासः ।

सर्वजने,—'पूर्वकालैके'ति समासः । साध्वर्थे प्रतिजनादिभ्यः खञि सार्वजनीन-वैश्वजनीनावपि बोध्यौ ।

मातृभोगीण इति । यथाऽत्र णत्वं तथा 'रषाभ्यामि'त्यत्र निरूपितम् । ( मा[3]त्रे हित इत्यर्थः ) । 'भोग'शब्दोऽत्र शरीरवाचीति स्पष्टं भाष्ये । 'भोगः सुखे, स्त्र्यादिभृतावहेश्च फण-काययोरि'त्यमरे 'अहे'रिति तु

१ इतोऽग्रे—'पुंयोगे 'अजी'शब्दादपि ध्यानित्येके' इति ब. पाठः ।
२ 'पञ्चजनादिष्वप्येवमेव' इति ब. पाठः । ३ अयं पाठः क. ग. नास्ति ।

प्रयोगबाहुल्याऽभिप्रायेणेत्याहुः । केवलमातृ-पितृभ्यां छ एव ।

राजा-ऽऽचार्याभ्यां तु अनभिधानाच्छो नेति दिक् ।

**सर्वपुरुषा** । यथासङ्ख्यमत्रेष्यते । **सर्वादिति** । शब्दपरत्वात्सर्वनाम-कार्याऽभावः । **पुरुषाद्वधेति** । वधादिषु त्रिषु सामर्थ्यात्षष्ठी समर्थ-विभक्तिः । कृते तु 'तेने'ति निर्दिष्टैव । अञि प्राप्ते इति । पाक्षिकमयटो-ऽप्युपलक्षणम । हिते तु पुरुषाच्छ एवेति बोध्यमित्याहुः ।

**तदर्थम्** । विकृतिवाचकादिति । न चाऽस्य न प्रथमत्वमिति वाच्यम् । 'प्रकृताव'त्यर्थसमर्पकाऽपेक्षया तत्त्वस्य सत्त्वात् । **तदर्थमिति**—सप्तम्याः स्थाने प्रथमा । सामान्ये नपुंसकं बोध्यम् । तदाह—**तदर्थाया-मिति** । एतत्सामर्थ्यादेव चतुर्थ्यन्तात्प्रत्ययः । विकाराऽर्थत्वं हि प्रकृतेस्तादर्थ्यचतुर्थ्यैव गम्यते । यद्वा 'तस्मै' इत्यनुवर्त्तते । प्रकृति-विकृत्योः ससम्बन्धिकत्वेऽपि, उभयोपादानमुपादानकारण-तत्कार्यवाचक-योरेव ग्रहणम्, न तु स्वाभावा-ऽनौचित्यादिवाचकयोरित्येतदर्थम् । दृश्यते हि 'प्रकृत्याऽभिरूपः' 'विकृतिरेषा स्त्रीणां यत्स्वातन्त्र्यमि'त्यादौ तदर्थकता तेषाम् । अत एव 'उदकाय कूप' इत्यादौ न ।

ननु 'तदर्थ'ग्रहणं व्यर्थम् । 'तस्मै' इत्यनुवृत्त्या प्रकृतिविकृतिसम्बन्धेन तादर्थ्यचतुर्थ्याः समर्थविभक्तित्वलाभादिति चेन्न । 'मूत्राय यवागूरि'-त्यादिवारणाऽर्थत्वात् । अत्र[1]प्रकृत्यन्तरनिवृत्तौ तात्पर्यं, न तादर्थ्ये इत्याहुः ।

**अङ्गारीयाणीति** । 'अङ्गाररूपविकृत्यर्थानि प्रकृतिभूतानि काष्ठानी'ति बोध इत्याहुः । **शङ्कव्यमिति** । 'उगवादी'ति यत् । **तृणानीति** । यदा चर्म-विकारश्छदिस्तदा 'छादिषेयं चर्मे'त्यत्राऽपि चर्मणोऽञं बाधित्वा, पूर्व-विप्रतिषेधेन इदमेवेष्यते । इदं च उगवादिसूत्रे भाष्ये स्पष्टम्—'यत्-ढ्यावञः पूर्वविप्रतिषिद्धम् , ढञ्चे'ति । ( एतद्भाष्यादेव 'निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलवत्त्वे प्रयोजकमि'ति लभ्यते । तेन 'स्वम्पि तटाकानी'त्येव । परत्वान्नुम्प्रवृत्तेरिति बोध्यम् ) । **बालेया इति** । प्रकृति-

1 'अयं ख. घ. ङ. पाठः । क. कुण्डलितः । ग. नास्ति ।

विकृतिभावो यथा कथञ्चिदुपपाद्यः । आर्षभ्य इति । यो वंसो[1] ऋषभाऽवस्थाप्राप्त्यर्थं पोष्यते, स एवमुच्यते । अत्राऽपि प्रकृतिविकृतिभावो यथांकथञ्चित् । पूर्वविप्रतिषेधेनेति । 'अन्वपेक्ष्ये'ति शेषः ।

एवं 'सनङ्गु'शब्दात् 'सनङ्गव्यं चर्मे'त्यत्र चर्मणोऽञः पूर्वविप्रतिषेधेन उवर्णान्तत्वात् यदेवेति, सर्वमुगवादिसूत्रे भाष्ये स्पष्टम् ।

चर्मणोऽञ् । 'चर्मण' इति षष्ठी । 'तदर्था प्रकृतिरि'ति प्रत्ययाऽर्थः । न तु पञ्चमी । तथा सति चर्मशब्दाच्चर्माऽर्थायां प्रकृतौ प्रत्ययः स्यात्— 'चर्मणे द्वीपो'त्यादौ । तच्च नेष्टम् । तदाह—चर्मणो येति । वाध्र्यै इति । वृधे रंनि[3], आद्युदात्त'वध्र'शब्दाच्चर्मवाचिनो विकारेऽणि 'टिड्ढे'ति ङीप् । वार्ध्री-रज्जुः । ( 'प्र नु वोचं वाध्र्यश्वस्य नामे'ति प्रयोगः । तत्राऽवग्रहकाले ह्रस्वस्तु 'ङ्यापोरि'ति बोध्यः ) । वधेरौणादिके ष्ट्रनि 'वरत्रा'पर्यायो 'वध्री'-शब्दः । तमादाय 'वध्र्यै' इति पाठः । 'वध्रिकाः पश्ये'ति भाष्यम् ।

तदस्य । 'तदर्थं विकृतेरि'त्यादि निवृत्तम् । 'तदर्थमि'त्यनुवर्त्तते' इति 'छदिरुपधी'ति सूत्रस्थभाष्यन्तु अभ्युच्चयमात्रमिति, अत्रैव सूत्रे कैयटे स्पष्टम् । स्यादिति । सम्भावने लिङ् । इष्टकानां बहुत्वेन सम्भाव्यते एतत्—'प्राकार आसां स्यादि'ति । देशस्य च गुणेन सम्भाव्यते— 'प्राकारोऽस्मिन् स्यादि'ति । इह प्रकृतिविकृतिभावः, तादर्थ्यं च न त्रिवक्षितम्, किन्तु योग्यतामात्रम । तेन पूर्वस्याऽयमविषयः । द्विस्तच्छब्दोपादानं स्पष्टाऽर्थम् । प्रासादो देवदत्तस्येति । ईदृशेऽर्थे 'प्रासादीयो देवदत्त' इति प्रयोगो लोके न दृश्यते इति भावः ।

छयतोः पूर्णोऽवधिः ।

---

१ 'यो वत्स ऋषभावस्था' इत्युचितः पाठः । ऋकारस्याऽच्त्वात् ।

२ 'पूर्ववत्' ष. पाठः ।

३ 'वृधिवधिभ्यां रन्' इत्युणादिसूत्रेण रन्प्रत्यय' इति मनोरमाकृतः ।

४ अयं ख. ङ. पाठः ।

## अथ आर्हीयप्रकरणम् ।

प्राग्वतेः । अवध्युपादानं 'सर्वभूमिपृथिवीभ्यामणञौ' 'शीर्षच्छेदाद्यच्चे'त्याद्यधिकारवदपवादेन विच्छेदेऽपि, ठञो निवृत्तिर्मा भूदि'त्येतदर्थम् । न च एते ठञपवाद-ठकोऽपवादा, न ठञ इति वाच्यम् । अपवादाऽपवादस्य सुतरां तदपवादत्वात् । तेन 'पारायणतुरायणे'त्यादौ ठञ् लभ्यते । न च पारायणादिसूत्रे एव ठञ् निर्दिश्यतामिति वाच्यम् । उत्तरसूत्रे येषां पर्युदासो गोपुच्छादीनां, तेभ्यः क्रीताद्यर्थे ठञ इष्टत्वात्, तस्य च प्रकृतसूत्रं विनाऽलाभात् । एवं च 'गौपुच्छिक' इत्यादौ ठञर्थमिदं सूत्रम् । अत्र 'वति'शब्देन तदर्थो लक्ष्यते । तेनाऽर्थेष्वेवाऽस्योपस्थानम् । तेनाऽपवादविषये ठञ् न । अत एव 'शूर्पादि'ति सूत्रे 'अन्यतरस्याम्'-ग्रहणं चरिताऽर्थमित्याहुः ।

आर्हादगोपुच्छ । अत्र 'अर्हती'ति तिङन्तैकदेशः शबन्तः 'अर्ह'-शब्दोऽनुक्रियते । प्रथमोपस्थितत्यागे मानाऽभावात् । न तु 'तदर्हमि'ति-सूत्रस्थाऽजन्तः । किञ्च तस्याऽनुकरणे 'आर्हादि'त्यनेन वत्यर्थो गृह्यते, उत न ? । नाऽऽद्यः[1] । विशेषविहितकना वतिप्रत्ययबाधाऽऽपत्तौ, 'एकवच्चाऽरगाऽन्यतरस्यामि'ति प्रयोगविरोधात्[2] । तदेतद्ध्वनयन्वक्ष्यति— 'आर्हादित्येतत्सप्तदशसूत्र्यामनुवर्त्तते' इति । तत्र 'अनुवर्त्तते' इत्यस्य 'सम्बध्यते' इत्यर्थः । एतेन 'षोडशसूत्राणामेवाऽनुवृत्तिविषयत्वमि'त्यपास्तम् । नाऽन्त्यः । 'प्राग्वतेरि'त्यनुवृत्त्यैव सिद्धेः, 'आर्हादि'त्यस्य वैयर्थ्याऽऽपत्तेरित्याहुः[3] । आङ् च न मर्यादायाम् । 'प्राक्'पदाऽनुवृत्त्यैव

---

१ 'नाद्यः । उभयाकाङ्क्षायामन्वयस्य युक्तत्वेन, अनुपात्तप्रत्ययका-ऽर्थबोधके एव सम्बन्धस्य युक्तत्वात्' इति क. कुण्डलितः, ख. घ. ङ. पाठः ।

२ 'विरोधाच्च' इति ख. घ. ङ. पाठः ।

३ 'वैयर्थ्यापत्तेः । मध्ये विच्छेदेन अजन्तेऽवधित्वस्य वक्तुमशक्यत्वाच्चेत्याहुः' इति घ. पाठः ।

सिद्धे, तद्ग्रहणस्य वैयर्थ्याऽऽपत्तेः । तदेतत्सकलमभिसन्धायाऽऽह—तदर्हतीत्येतदभिव्याप्येति ।

अत्र सूत्रे 'परिमाण'शब्देन उन्मानमपि गृह्यते इति 'असमासे निष्कादिभ्य' इति सूत्रस्थभाष्यस्वरस' इत्यनुपदमेव स्फुटी भविष्यति ।

प्रमाणन्तु न गृह्यते । मानाऽभावात् । 'सङ्ख्या तु मूर्त्ताऽमूर्त्तस्य सर्वस्य परिच्छेदिका । परिमाणन्तु मूर्त्तस्यैवे'ति भेदः । तदुक्तम्—

'ऊर्ध्वमानं किलोन्मानं, परिमाणन्तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्, सङ्ख्या बाह्या तु सर्वतः[1] ॥

अस्याऽथः-'द्रव्याऽन्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्यपाषाणाऽऽदिना तुलादावारोपितेन स्वर्णादेर्गुरुत्वं येन मीयते, तदूर्ध्वाऽऽरोपणात् 'उन्मानम्' । यच्चोर्ध्वाऽधरदिगवस्थितवस्तुपरिच्छेदकं, तच्च । यथा 'ऊरुद्वयसमुदकमि'ति । आरोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादि मीयते, तत् 'परिमाणम्' = प्रस्थादिः । परिः सर्वतोभावे । तिर्यगवस्थितवस्तुदैर्घ्यपरिच्छेदकं-'प्रमाणम्' । यथा वस्त्रादेर्हस्तादिः ।

यत्तु 'ऊर्ध्वाऽधरदिगवस्थितदैर्घ्यपरिच्छेदकमपि 'प्रमाणमि'ति। तन्न । 'पुरुषद्वयसमि'त्यादौ 'प्रमाणे ल' इति लुगापत्तेरिति 'पुरुषात्प्रमाणे' इत्यत्र निरूपितम् । सङ्ख्या तु एभ्यस्त्रिभ्योऽपि बहिर्भूता एकत्वद्वित्वादिः । अनेन सङ्ख्यायाः सर्वथा बाह्यत्वं वदता इतरेषां परस्परं ग्रहणं सूचितम् । तेन उन्मानस्य परिमाणग्रहणेन ग्रहणम् । अत एव 'अपरिमाणबिस्ते'-ति सूत्रे बिस्ताऽऽचितग्रहणं, 'परिमाणान्तस्ये'त्यत्र शाणपर्युदासश्च चरितार्थः। 'असमासे निष्कादिभ्य' इति असमासग्रहणं तदन्तविधिज्ञापकमि'ति भाष्यं च सङ्गच्छते इति दिक् ।

परिमाणान्तस्या । इह 'परिमाण'शब्देन परिच्छेदकमात्रं गृह्यते ।

---

१ इतोग्रे 'प्रमाणाऽग्रहणाऽर्थं च सङ्ख्याग्रहणमित्याहुः । अत्र वार्त्तिकम्—'ऊर्ध्वमानं किलोन्मानम्' इति ख. ग. क. पाठः ।

'शाण'पर्युदासात्। इदं च 'विभाषा कार्षापणे'तिसूत्रे भाष्यकैयटयोः स्पष्टम्।

यद्यपि 'उत्तरपदस्ये'ति सूत्रे भाष्ये-अत्र सूत्रे 'सङ्ख्याया' इत्यनुवृत्तिरुक्ते'ति 'परमनैष्किकमि'त्यत्राऽस्य न प्राप्तिः। तथापि प्रकृतसूत्रस्थभाष्ये

१ इतोऽग्रे— अग्रे व्याख्यास्यमानस्याऽत्र स्मारणमात्रमिति बोध्यम्। अत्राऽपि वृत्तिलिखनन्तु लेखकप्रमादात्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

२ 'न प्राप्तिः, तथाऽपि प्रकृतसूत्रस्थभाष्ये 'परमनैष्किकमि'त्युदाहरणात्[1], सूत्रेऽन्तग्रहणाच्च, उत्तरपदाऽधिकारप्रयोजनखण्डकपूर्वपक्षयुक्तिरूपतद्भाष्यस्य प्रौढिवादपरत्वान्न दोषः। अत एव 'विभाषा कार्षापणे'ति सूत्रे 'अध्यर्धसौवर्णमि'त्यादिष्वनेन वृद्धिरुक्ता कैयटेन। अन्यथा समासकन्विध्योरेव तस्य सङ्ख्यात्वेन, तदसङ्गतिः स्पष्टैव।

एतेन 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे'ति सूत्रे ( 'परिमाणान्तस्ये'ति सूत्रेणैव सिद्धे ) 'संवत्सर'ग्रहणम् 'अन्यत्र परिमाणग्रहणे कालाऽग्रहणज्ञापनार्थमि'ति भाष्ये उक्तत्वेन, 'परिमाणान्तस्ये'ति सूत्रे 'सङ्ख्याया' इत्यनुवृत्तिरावश्यकी। अन्यथा 'संवत्सरस्य चेद्भवति सङ्ख्याया एवे'ति नियमाऽर्थतासम्भवे, उक्तार्थज्ञापकता न स्यात्। न च संज्ञायां वृद्ध्यर्थं संवत्सरग्रहणस्याऽऽवश्यकत्वेन भाष्यमनुपपन्नमेव। भाष्यप्रामाण्येन तादृशसंज्ञाया अभावादि'त्यपास्तम्। 'परिमाणन्तु सर्वत' इति लक्षितपरिपरिमाणत्वस्य सङ्ख्यायामिव, कालेऽपि अभावेन, तद्भाष्यस्यैकदेश्युक्तित्वात्। नियमाऽपेक्षया लघुत्वेन, भाष्यप्रामाण्येन,'इष्टाऽनुरोधेन चोक्तज्ञापकस्यैव युक्तत्वाच्च।

1 'मित्युदाहरणात् 'संख्याया' इत्यनुवर्त्य वाक्यभेदेन तत्र व्याख्यातव्यम्। तेनाऽसङ्ख्यापूर्वपदेऽपि क्वचित्प्रवृत्तिः। तत्साहचर्यादारम्भसामर्थ्याच्च, 'अचामादेरि'त्यनुवृत्तस्य सर्वथा बाधे मानाऽभावाच्चोत्तरपदस्यैव भविष्यतीति, नोत्तरपदाधिकारस्य तत्र प्रयोजनमिति तद्भाष्याशयान्न दोषः। एतेन 'संख्यायाः संवत्सरसंख्यस्य चे'ति सूत्रे संवत्सरग्रहणमन्यत्र परिमाणग्रहणे काकाऽग्रहणज्ञापनार्थमिति' इति घ. पाठः।

'परमनैष्किकमि'त्युदाहरणात्, सङ्ख्याया इत्यनुवर्त्त्य तत्र वाक्यभेदेन व्याख्येयम् । तेन 'परिमाणान्तस्ये'त्यस्य असङ्ख्यापूर्वपदे काचित्कत्वम् । अत एव तस्य तत्साहचर्यादुत्तरपदे एव प्रवृत्तिरिति, न तत्र तदधिकारप्रयोजनमिति तदाशयेनाऽदोषात् । एवञ्च 'परमनैष्किक'सिद्धिः, अनतिप्रसङ्गश्च ।

कालस्य परिच्छेदकत्वेऽपि, नाऽत्र ग्रहणम् । 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे'तिसूत्रे'परिमाणान्तस्ये'तिसूत्रेणैव सिद्धे संवत्सरग्रहणम् अन्यत्र परिमाणग्रहणे कालाऽग्रहणज्ञापनाऽर्थमि'ति भाष्ये उक्तत्वात् । न च 'संवत्सरस्य चेद्भवति सङ्ख्याया एवे'ति नियमाऽर्थं तत् । भाष्यप्रामाण्येन ज्ञापकत्वस्यैवाऽङ्गीकारात् । न च संज्ञायां वृद्ध्यर्थं संवत्सरग्रहणाऽऽवश्यकत्वेन, भाष्यमनुपपन्नम् । भाष्यप्रामाण्येन तादृशसंज्ञाया अभावात् ।

असमासग्रहणं ज्ञापकमिति । न च 'परमनैष्किकमि'त्यत्र उन्मानतयाऽपरिमाणत्वात्, 'आर्हादि'तिसूत्रप्राप्तठको निषेधाऽर्थं तत् । पूर्वसूत्रे उन्मानस्याऽपि परिमाणग्रहणेन ग्रहणात्तदप्राप्तेः । ध्वनितं चेदं ज्ञापकवर्णनपरभाष्ये । एतेन 'द्रोणषष्टिभ्यां परिमाणसङ्ख्यावाचिभ्यां ठञि प्राप्ते वचनम् । निष्काद्युन्मानेभ्यस्तु पूर्वसूत्रेण ठकि सिद्धे, समासप्रतिषेधाऽर्थं वचनमि'त्यपास्तम् । तस्मात्तेभ्योऽपि ठञि प्राप्ते वचनमित्येव तत्त्वम्[2] ।

इतः प्रागिति । प्राग्भिकेष्वेवेदं, प्रत्यासत्तेरिति बोध्यम् । प्रतिषेध्यसमर्पकगोपुच्छादिषु तदन्तविधिस्तु भवत्येव । व्यपदेशिवद्भावेन केवल-

असङ्ख्यापूर्वपदसंवत्सरान्ते नित्यत्वेन तस्याऽप्राप्तेश्च' इति ख. ङ. पाठः । क. कुण्डलितः ।

१ 'सङ्ख्याया' इत्येतद्घटितवाक्यसाहचर्यात् 'परिमाणान्तस्ये'त्यस्यापि उत्तरपदे एव प्रवृत्तिरिति' इति लघुशेखरे पाठः ।

२ 'यत्तु हरदत्तेन 'पूर्वसूत्रे परिच्छेदकमात्रं ( सङ्ख्याभिन्नं ) परिमाणशब्देन गृह्यते' इति । तन्न । प्रमाणग्रहणे मानाऽभावात् । सङ्ख्याग्रहणस्य वैयर्थ्याऽऽपत्तेश्च' इति ख. ङ. पाठः, क. कुण्डलितः ।

स्याऽपि निषेधसिद्धिः। 'ग्रहणवते'त्यस्य, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यस्य च प्रत्ययविधिविषयत्वात्। तदुक्तं भाष्ये-'विधौ प्रतिषेधः। प्रतिषेधश्चाऽयमि'ति। उपपादितं चैतदहन्शब्दे हलन्तनपुंसके, इत्याशयेनोदाहरति—सुगव्यं. यवापूप्यमिति। 'अपूप'ग्रहणात्, अन्नविकारत्वाद्वा यत्। उभयत्राऽपि ज्ञापकसिद्धतदन्तविधेः सुलभत्वात्। यत्तु 'अन्नविकारत्वादेव सिद्धे, अपूपादीनां प्रतिपदपाठसामर्थ्यान्न तदन्तविधिरि'ति, तत् वृत्तिविरोधादुपेक्ष्यम्।

इत ऊर्ध्वं त्विति। वाचनिकमेवेदम्। 'असमासे' इति सूत्रादूर्ध्वम् आर्हीये,अनार्हीये चे'त्यर्थः। तदाह–प्राग्वतेरिति। तत्राऽलुकीति। लुगन्तायाः प्रकृतेर्नेत्यर्थः। द्विशूर्पमिति। 'द्वाभ्यां शूर्पाभ्यां क्रीतमि'त्यर्थे द्विगुः। न तावदेषा लुगन्ता प्रकृतिरिति, सङ्ख्यापूर्वपदादपि 'शूर्पादञन्यतरस्यामि'त्यञः, ठञो वा 'अध्यर्धे'ति लुक्। द्विशौर्पिकमिति। ठञो द्विगुं प्रति निमित्तत्वाऽभावात् लुगभावः। 'परिमाणान्तस्ये'त्युत्तरपदवृद्धिः। 'सङ्ख्यापूर्वपदानामि'ति किम्?। 'परमपारायणं वर्त्तयति'।

अर्धात्प। 'जङ्गलधेन्वि'ति सूत्रे विभाषितङ्ग्रहणस्योत्तरपदसंबद्धत्वात्, पुन'र्वा'ग्रहणम्। तपरः किमिति। दीर्घस्य वृद्धिनिषेधे फलाऽभावात्प्रश्नः।

निषेधो न स्यादिति। पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धिं प्रति फलोपहितनिमित्तत्वाऽभावादिति भावः। तस्य वृद्धिपक्षे तु तामादायैव निषेधः सिद्ध्यतीति बोध्यम्। ननु 'परस्ये'ति' व्यर्थम्। न च पूर्वव्यावृत्त्यर्थम्। 'पूर्वस्य तु वे'त्यनुवृत्तिसामर्थ्येनैव तद्व्यावृत्तिसिद्धेरिति चेन्न। 'अकारान्तस्य परिमाणस्ये'ति तदन्तविधिबाधनाऽर्थत्वात्। तदन्तविधौ हि सति 'आर्द्धद्रौणिकमि'ति न सिद्ध्येदित्याहुः।

---

१ 'वार्त्तिकमेवेदम्' इति घ. पाठः।

२ इतोऽग्रे—'तेन द्वाभ्यां शूर्पाभ्यां क्रीतं 'द्विशूर्पम्'। 'तेन क्रीतमि'त्यर्थे 'द्विशौर्पिकमि'त्यत्र अञ् न' इति घ. पाठः।

शताच्च । उत्तरसूत्रप्राप्तकनोऽपवादोऽयम् । 'अशते' इति न प्रकृतेर्विशेषणम् । असम्भवात् । किन्तु प्रत्ययाऽर्थस्य । तत्राऽपि यत्र प्रकृत्यर्थशतस्यैव प्रत्ययाऽर्थत्वम्, तत्राऽन्तरङ्गे चरिताऽर्थः प्रतिषेधः 'शतेन क्रीतं शत्यम् शाटकशतमि'त्यादौ शब्दाऽन्तरप्रयोगसमधिगम्ये बहिरङ्गप्रकृत्यर्थाऽतिरिक्तसङ्ख्येयाऽन्तरविषये न प्रवर्त्तते इत्याशयेन प्रत्युदाहरति—शतकः सङ्घ इति । तदेवाऽऽह—इहेति ।

वस्तुत इति । अभेद एव पारमाऽर्थिकः, भेदस्तु काल्पनिक एवेति भावः । 'शताच्चे'ति चकारोऽनुकर्षणाऽर्थ इत्याशयेनाऽऽह—असमास इत्येवेति । व्याख्यानादेतदनुकर्षक एव चकार इति भावः । द्विशतकमिति । न चाऽत्र 'अध्यर्धपूर्वे'ति लुकः प्राप्तत्वेन कथमेतत् । अत एव 'पञ्चभिः शतैः क्रीतं पञ्चशतमि'त्यादौ लुगुदाहृत इति वाच्यम् । 'द्विगुणं शतं द्विशतमि'ति निष्पन्न'द्विशत'शब्दोऽद्विगुरेवाऽत्र प्रकृतिरित्यदोषात् । तदेतदुक्तं—द्विशतेन क्रीतमिति । यत्तु 'द्वे शते परिमाणमस्य द्विशतम्', 'तेन क्रीतमि'त्यर्थेऽस्योत्पन्नत्वेन द्विगुनिमित्तत्वाऽभावान्न दोष' इति । तन्न । प्रकृतेर्लुगन्ततया 'अलुकी'ति निषेधेनाऽत्राऽप्राप्तेरित्याहुः ।

सङ्ख्याया अति । सूत्रे द्वन्द्वगर्भो बहुव्रीहिः । 'न तु त्यन्तशदन्ताया' इति वृत्तौ 'त्यन्तसहितायाः शदन्ताया' इति मध्यमपदलोपी समासः । साहित्यं च एकप्रतिषेधाऽन्वयित्वेन । एतेन 'मध्यमपदलोपिसमासे

---

१ 'केवलं प्रत्ययोत्पत्तये तयोर्भेदविवक्षेति भावः' इति घ. पाठः ।

२ 'न चाऽयं प्रकृतिसमुच्चयाऽर्थश्चकार इति वाच्यम् । 'ठन्यतौ' 'शतादशते' इति सूत्रद्वयेनैव सिद्धेः, व्याख्यानाच्च' इति घ. पाठः ।

३ 'पञ्चशतेन क्रीतम्' इति ख. ङ. पाठः ।

४ एतत्स्थाने—'न च संख्यापूर्वपदानामित्याक्षिप्तसमासः प्रतिपदोक्तपरिभाषया संख्यापदमुच्चार्य विहित एव गृह्यते इति नातिप्रसङ्ग इति वाच्यम् । मानाऽभावात् । विशिष्टरूपोपादाने एव तत्परिभाषाप्रवृत्तेः' इति घ. पाठः ।

'सप्तति-चत्वारिंश'च्छब्दादेव निषेधः स्यात्, न तु चत्वारिंशच्छब्दादि'-त्यपास्तम्। शदन्तपर्युदासात् तत्सङ्ख्याग्रहणे लौकिक्या अपि ग्रहणमित्याशयेनाह—पञ्चभिरिति। अनर्थकत्वात् डत्यवयव-'तेः' पर्युदासो न—'कतिक' इति। चात्वारिंशत्के-'इसुसुक्तान्तादि'ति कः। 'अन्त'ग्रहणन्तु 'एकसप्तत्या क्रीत' इत्यत्राऽपि निषेधाऽर्थम्। अन्यथा प्रत्ययग्रहणपरिभाषया न स्यादि'ति हरदत्तः।

वतोरिड्वा। प्रत्ययाऽधिकारेऽपि इट् न प्रत्ययः। 'चरेष्ट' इतिवत् टिप्रत्यये कर्त्तव्ये, अन्यत्र प्रसिद्धाऽऽगमसदृशोच्चारणेन आगमत्वनिर्णयात्। व्याख्यानाच्च। 'वतोरि'ति पञ्चमी 'कन्' इति प्रथमायाः षष्ठीं कल्पयतीत्याशयेनाऽऽह—कन इड् वेति।

विंशतित्रिंशद्भ्याम्। त्रिंशतः शदन्तत्वात्, 'द्विशब्दस्य विंशादेशः, तिश्च प्रत्यय' इतिप्रक्रियाऽऽश्रयणे विंशतेः त्यन्तत्वाच्च, संज्ञायां कन् न प्राप्नोतीत्यत आह—योगविभाग इति। स्पष्टं चेदं भाष्यकैयटयोः। विंशक इति। 'ति विंशतेर्डिती'ति 'ति'लोपः। त्रिंशके-'टेरि'ति लोपः।

अर्द्धिक इति। अर्द्धशब्दस्य भागवदपेक्षत्वेऽपि, स कार्षापणाऽर्द्धे रूढ इति, नाऽसामर्थ्यम्। यद्वा प्रकरणादिना भागिविशेषे विज्ञाते, नाऽसामर्थ्यम्। वस्तुतो नित्यमाऽपेक्षत्वान्नाऽसामर्थ्यमित्याहुः।

शूर्पाद। शूर्पस्य परिमाणत्वाट्ठञोऽपवादः।

---

१ इतोऽग्रे—'अयं च प्रकारो 'मर्यादाऽभिविधौ च यः' इति कारिकाव्याख्याने 'निपात एकाजि'ति सूत्रे विवरणादौ स्पष्टः' इति ख. ङ. पाठः।

२ 'शदन्तपर्युदासात् कृत्रिमाऽकृत्रिमन्यायाऽप्रवृत्तेः सङ्ख्याग्रहणे' इति ख. ङ. पाठः। 'शदन्तपर्युदासान्महासंज्ञाकरणाच्च' इति घ. पाठः।

३ 'विंशतिक'इत्यादौ नाऽयं पर्युदासः। तत्र तिशब्दस्याऽनर्थकत्वात्। शतिच् हि तत्र प्रत्ययः। अत एव डत्यवयव-तेः पर्युदासो न' इति घ. पाठः।

४ 'कार्षापणाऽर्द्धेऽर्थे' इति ग. पाठः।

शतमानविं । शतमानम्-परिमाणविशेषः । ततः ठञ्प्राप्तः । विंशत्या क्रीतं-'विंशतिकम्' । संज्ञाशब्दोऽयम् । असंज्ञायां हि ड्वुन् स्यात् । सा च यदि परिमाणस्य, तदा ठञ् प्राप्तः । अन्यस्य चेत्, ठक् प्राप्तः । वसनात्-ठगेव । सहस्रम्-सङ्ख्या । ततः 'सङ्ख्याया' इति कन् प्राप्तः ।

अध्यर्द्धपू । अध्यारूढमर्द्धं यस्मिन् तत्-अध्यर्द्धम् । 'प्रादिभ्यो धातुजस्ये'ति साधु । समाहारे द्वन्द्वः । सौत्रं पुंस्त्वम् । द्विगुसाहचर्यादध्यर्द्धपूर्वोऽपि समानाधिकरणसमास एव गृह्यते इत्याहुः । सङ्ख्यासंज्ञासूत्रे 'अध्यर्द्धपूर्वात् द्विगोरि'ति पाठो दृश्यते भाष्ये । द्विगोश्च परस्येति । 'द्विगोरि'ति पञ्चमी'ति वृत्तिरीत्येदम् । वस्तुतो 'द्विगोरि'ति षष्ठी । 'द्विगोर्निमित्तस्य तद्धितस्ये'त्यर्थः । तथा च वार्त्तिकम्-'द्विगोर्लुकि तन्निमित्तग्रहणमि'ति । तेन 'द्वाभ्यां शूर्पाभ्यां क्रीतम् द्विशूर्पम्' । द्विशूर्पेण क्रीतं-'द्विशौर्पिकमि'त्यत्र द्वितीयस्य ठञो लुक् न । 'द्वयोः शूर्पयोः समाहारो द्विशूर्पी' । 'तया क्रीतमि'त्यर्थे त्वनभिधानात्प्रत्यय एव नेति स्पष्टं भाष्ये । 'असंज्ञायामि'ति द्विगोर्विशेषणम् । पाञ्चकलायिकमिति । 'पञ्च कलायाः परिमाणमस्य पञ्चकलायम्' । कृततद्धितलुगियं कस्य चित्संज्ञा । ततस्तेन क्रीतमित्यर्थे उत्पन्नस्य[1] न लुक् । न च नाऽयं द्विगुनिमित्त इति, कथं लुकः प्राप्तिरिति वाच्यम् । भाष्ये प्रत्याख्यातत्वेनेष्टाऽऽपत्तेः[2] । एतेन यद्वृत्तावुक्तम् 'असंज्ञाग्रहणं प्रत्ययाऽन्तस्य विशेषणम् । 'पञ्च कलायाः परिमाणमस्ये'ति 'तद्धिताऽर्थे'तिसमासे 'तदस्य परिमाणमि'ति ठञो लुक् न । ठञन्तमेतत्परिमाणविशेषनामे'ति, तदपास्तम् । भाष्यविरोधात् । तद्विरोधेनैव तादृशसंज्ञाया अभावाच्च । नन्वेवमपि 'अध्यर्द्ध'ग्रहणं व्यर्थम् । तस्य सङ्ख्यावाचित्वेन, तत्पूर्वस्य द्विगुत्वात् । तथा च गण्यते-'एकः' 'अध्यर्द्धौ', 'द्वावि'ति । अत एव 'अध्यर्द्धकमि'ति कन्, 'अध्यर्धकंसमि'ति तद्धिताऽर्थे द्विगुश्च सिद्ध्यति ।

---

१ 'उत्पन्नस्य ठञो न लुक्' इति घ. पाठः ।

२ इतोऽग्रे 'यस्तु ताभ्यामुत्पद्यते ठक्, स श्रूयते एवेति स्पष्टं भाष्ये' इति घ.पाठः ।

तथा च सङ्ख्यासंज्ञासूत्रे, वार्त्तिकम्-'अध्यर्धग्रहणं च समासकन्विध्यर्थ-मि'ति। अत्र 'समासविधि'शब्देन समासरूपो विधिः, समासनिमित्तको विधिश्चेत्युभयमपि गृह्यते। ( स्पष्टं चेदं सङ्ख्यासंज्ञासूत्रे कौस्तुभे )।

तेन 'अध्यर्द्धसाहस्रमि'त्यत्र सङ्ख्यापूर्वपदतदन्तविधिनिमित्तक-प्रत्ययः, उत्तरपदवृद्धिश्च। एवं च द्विगुत्वादेव लुक् सिद्ध इति चेन्न। 'लुकि चाऽग्रहणमि'ति भाष्ये उक्तत्वेन इष्टाऽऽपत्तेः।

विभाषा कार्षापण। 'कार्षापणाद्युत्तरपदकात् द्विगोः, अध्यर्धपूर्वाच्चे'-त्यर्थः। 'विभाषे'ति योगविभागादन्यत्राऽपि। तेन 'सुवर्णशतमानयो-रुपसङ्ख्यानमि'ति नाऽपूर्वम्। 'अध्यर्द्धसुवर्णम्'। 'अध्यर्द्धसौवर्णिकम्'। 'अध्यर्द्धशतमानम्'। 'अध्यर्द्धशातमानम्'। स्पष्टं चेदं भाष्ये।

अत्र अध्यर्धद्विगुभ्यां यथासङ्ख्यं नेष्टम्। अध्यर्द्धप्रतिकमिति। आदेशस्य प्रत्ययसन्नियोगशिष्टत्वान्न तत्पक्षे प्रत्ययलुगिति भावः।

अध्यर्द्धसहस्रमिति। 'शतमाने'त्यणो लुक्। तदभावे 'सङ्ख्यायाः संवत्सरे'त्युत्तरपदवृद्धिः। अध्यर्द्धस्य सङ्ख्यात्वात्।

द्वित्रिपूर्वा। 'अध्यर्द्धपूर्व'ग्रहणमुत्तराऽर्थमनुवृत्तमपीह न सम्बध्यते। 'द्विगोरि'ति तु सम्बध्यते एव, षष्ठीसमासव्यावृत्तये इति व्याख्यातारः।

'पूर्व'ग्रहणं स्पष्टाऽर्थम्। अत एव 'द्वित्रिभ्यां यदुच्यते' इत्येव भाष्ये-ऽनूदितम्। एतेन 'द्वादशनिष्क'शब्दे व्यवहिते प्रवृत्त्यर्थं पूर्वग्रहणमि'ति परास्तम्। 'त्रिस्ताच्चे'त्यनेन योगविभागो यथासङ्ख्यनिरासायेत्याहुः।

---

१ 'लुक् सिद्ध इति चेन्न। अध्यर्द्धे सङ्ख्याकार्यस्याऽनित्यत्वज्ञापनाऽर्थं तत्स-त्त्वात्। तेन कृत्वसुच् न—'अध्यर्द्धं करोती'ति। यः सकृत्प्रक्रान्तां क्रियामभि-निर्वर्त्य, पुनस्तामेव कुर्वन्मध्ये निवर्त्तते, स एवमुच्यते। अत एव 'समासकन्-विध्यर्थमि'ति भाष्यं सङ्गच्छते। 'लुकि चाऽग्रहणमि'त्यस्य तु प्रत्यय-लुगर्थं न कार्यम्, ज्ञापनाऽर्थत्वे त्विष्टापत्तिरित्यर्थ' इति दिक्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

द्विनिष्कमिति । ठञो लुक् । न च 'निष्क'शब्दमुच्चार्य विहितठक्प्रत्ययस्यैव प्रतिपदोक्तत्वादनेन लुगुचित इति, कथं ठञो लुगिति वाच्यम् । समासे तस्याऽसम्भवात् । ये त्वत्र परिभाषाऽबाधाय 'असमासे निष्कादिभ्य' इति सूत्रस्थाऽसमासपदं 'द्वि''त्रि'पदाऽघटितसमासपरमित्याहुः, तन्मते ठक एव लुग्बोध्यः । परन्त्वेतन्मते मानं चिन्त्यम् । 'परिमाणाऽन्तस्ये'त्युत्तरपदवृद्धिर्लुगभावे ।

बह्विति । इदं 'बिस्ताच्चे'त्यत्राऽप्यनुवर्त्तते[1] ।

विंशतिकात्खः । अत्र 'द्वित्रिपूर्वादि'ति न सम्बध्यते, पूर्वसूत्रे चाऽनुकृष्टत्वात्[2] । 'शतमाने'त्यणि प्राप्ते, तस्य च लुकि प्राप्ते, खो विधीयते ।

ननु 'शतमानसहस्रवसनादण्' 'विंशतिकात्' 'अध्यर्धपूर्वद्विगोः खः' 'लुगसंज्ञायामि'त्येव न्यासोऽस्तु । द्वितीययोगेऽणः, तृतीये 'विंशतिकादि'त्यस्य, चतुर्थे 'अध्यर्द्धपूर्वद्विगोरि'त्यस्यैवाऽनुवृत्त्येष्टसिद्धेः । एवञ्च 'विंशतिकात्ख' इति व्यर्थमिति चेत् । चिन्त्यम्[3] ।

खार्याः । 'तदस्य परिमाणमि'ति ठञि प्राप्ते, तस्य लुकि प्राप्ते, ईकन् विधीयते[4] ।

ननु 'इकन्' इति ह्रस्व एव पठितुं युक्तः । सवर्णदीर्घेण रूपसिद्धेः । न च

---

१ इतोऽग्रे—'एतद्वार्त्तिकाऽर्थसंग्रहाऽर्थमेव सूत्रे पूर्वग्रहणमित्यपि कश्चित्' इति घ. पाठः ।

२ इतोऽग्रे—'एवञ्च तस्य स्वरितत्वे मानाऽभावान्नाऽनुवृत्तिः' इति घ. पाठः ।

३ इतोऽग्रे—'केचित्तु पुनर्विंशतिग्रहणसामर्थ्यात्पूर्वोक्ताऽणो बाधाऽभावकल्पनात्, तेनाऽणि, तस्य लुकि, 'अध्यर्द्धविंशतिकमि'ति रूपसिद्धिः । न चैवं तत्र 'खो वे'त्युक्त्या सिद्धिः । पदलाघवाऽभावात् । योगविभागस्याऽधिकत्वाच्चेत्याहुः । तन्नाध्याऽननुगृहीतम्' इति घ. पाठः ।

४ इतोऽग्रे—'खारीविंशतिकाभ्यामीकन्खौ' इत्येव सिद्धे योगविभागसामर्थ्यात्केवल'खारी'शब्दादपीकन् । तदाह—केवलायाश्चेति । 'तत्सामर्थ्यादध्यर्द्ध-

'यस्ये'ति लोपाऽऽपत्तिः। कन्प्रत्ययेन, 'केऽण' इति ह्रस्वत्वेन चेष्टसिद्धौ, इकारोच्चारणसामर्थ्येन लोपबाधपूर्वकं सवर्णदीर्घकल्पनादिति चेन्न। 'तदस्य परिमाणम्'—'सङ्ख्याया' इति-सूत्रस्थभाष्यपर्यालोचनया 'खारी'-पर्यायः 'खार'शब्दोऽस्ति पुँल्लिङ्गः। तत्प्रकृतिक एव च स्त्रियां 'खारी'शब्द इति, तत इकनि 'भस्याऽढे' इति पुंवत्त्वे, 'खारिक' इति स्यादिति, तद्वारणाऽर्थं दीर्घोच्चारणमि'ति वदन्ति। 'काकिणीशब्दात्तदुत्तरपदकाऽध्यर्धपूर्वद्विगोश्चोपसङ्ख्यानम्'। 'काकिणीकम्' 'द्विकाकिणीकम्'। स्पष्टं चेदं भाष्ये। ( इदमपि योगविभागसिद्धमित्याहुः )।

पणपाद। पणादिसाहचर्यात्पादशब्दः परिमाणवाची अत्र गृह्यते। प्राण्यङ्गार्थस्यैवेति। 'पादस्य पदाऽऽजी'त्यत्र गतिवचनाऽऽज्यादिभिर्योग्यतया प्राण्यङ्गस्यैव तावत् पादस्य ग्रहणम्। एवं चाऽर्थाऽधिकारात् 'पद्यती'त्यादावपि तस्यैवाऽनुवृत्तिरिति भावः। 'शताद्वेति वक्तव्यम्'। 'पञ्चशत्यम्'। 'पञ्चशतम्'[3]। कनो लुक्। शताच्च ठन्यतौ न। तत्राऽसमासग्रहणाऽनुवृत्तेः। इदं चोत्तरसूत्रे भाष्ये स्फुटम्।

शाणाद्वा। पक्षे ठञिति। 'आर्हादि'ति सूत्रे 'परिमाण'शब्देन उन्मानग्रहणस्याऽपि भाष्यसंमतत्वादिति भावः। 'मुख्यपरिमाणस्यैव ग्रहणमि'-ति मताऽन्तरे तु ठक्। परन्तु भाष्यविरोधात्तन्मतं चिन्त्यम्।

---

त्यादि नाऽनुवर्त्तते' इति तु न युक्तम्। भाष्यविरोधादिति'[1] इति ख. ङ. पाठः। क. कुण्डलितः।

१ 'पुंवत्त्वे इकारोच्चारणसामर्थ्येन 'यस्ये'ति लोपाऽभावे 'खारेक' इति स्यादिति' इति ख. घ. ङ. पाठः।

२ अयं ख. ङ. पाठः। क. ग. नास्ति।

३ 'पञ्चशतकम्'। कनो लुकि 'शताच्च ठन्यतौ न' इति पाठान्तरम्।

४ 'उक्तभाष्यसंमतत्वादिति भावः' इति घ. पाठः।

---

1 इतोऽग्रे—'उत्तरत्राऽननुवृत्त्यापत्तेश्च। अध्यर्द्धपूर्वादौ लुगापत्तेश्च' इति ग. घ. पाठः।

द्वित्रीति—वार्त्तिकम् । त्रैरूप्यमिति । अणि एकम् , यति द्वितीयम् , ठञो लुकि तृतीयम् । त्रयोदशेति । १ ठञ् , २ ठक् , ३ ठन्—४यतौ, ५ कन्, ६ डूवुन्, ७ टिठन्, ८ अञ्, ९ शतमानाद्यण्, १० ख, ११ ईकन्, १२ पणादियत्, १३ 'द्वित्री'तिवार्त्तिकोक्तोऽण् च, इत्येवं त्रयोदशेत्यर्थः। अनुवर्त्तनेन तु नाऽन्यत्वमिति भावः ।

**तेन** क्रीतम् । 'क्री'धातोश्च द्रव्यदानपूर्वकवस्त्वन्तराऽङ्गीकारोऽर्थः । तत्र 'तेने'त्यनेनोपस्थितत्वात् क्रयघटकं द्रव्यमेव परामृश्यते । तेन 'मूल्यद्रव्यसमर्पकात्तृतीयान्तात्क्रयकर्मणि उक्ताः प्रत्यया' इति फलितम् । तेन 'देवदत्तेन क्रीतम्', 'पाणिना क्रीतम्', 'सन्तोषेण चे'त्यादौ नाऽतिप्रसङ्गः । 'तेभ्यः = प्रयोगेभ्यो हिताः तद्धिता' इति महासंज्ञाकरणात् न तेषु दोष' इत्यन्ये । नन्वेवं 'सोऽस्यांऽशवस्ने'त्येव सिद्धमिति चेन्न । 'यस्य शतं मूल्यं न भवति, अथ च कार्यवशात्तेन क्रीतं, तदर्थमस्याऽऽवश्यकत्वादि'ति कैयटः ।

**गोद्व्यचो** । ठकोऽपवादः । 'ठञादीनामपवाद' इति वृत्तिस्तु प्रामादिक्येव । स्वर्ग्य इति । कथं 'स्वर्ग्यः क्रतुरि'ति । न हि क्रतुः संयोगो, नाऽप्युत्पात इति चेन्न । करणव्युत्पत्त्या येन यागादिना करणेन पुरुषाः फलेन संयुज्यन्ते, तस्य यागादेरेव संयोगत्वात् । तदुक्तं भाष्ये-'संयोगो नामेदं कृत्वेदमवाप्यते इति' । 'इदं कृत्वे'ति प्रतीकमुपादाय 'करणव्युत्पत्त्ये'त्यादिनाऽयमर्थः कैयटेन स्पष्टमेवोक्तः । न चैवं भावाऽर्थसंयोगग्रहणे मानाऽभावेन 'शत्यो धनपतिसंयोग' इत्युदाहरणमसम्बद्धमिति वाच्यम् । धनपतिसंयोगेऽपि उक्तसंयोगत्वसत्त्वात् ।

यत्तु हरदत्तेन—'करणसाधन-भावसाधनयोरुभयोरपि ग्रहणमि'त्युक्तम् । तत्र मानं, फलं च चिन्त्यम् । अश्व । वसु । अश्म । भङ्गा ।

---

१ इतोऽग्रे—'शत'शब्दोऽत्र न सम्बध्यते, शाणस्यैव भाष्ये उदाहृतत्वादित्याहुः' इति ख. ङ. पाठः । २ 'तत् क्रीतम्' इति ग. पाठः ।

उमा । वर्षा । ऊर्णा । गण । इत्यश्वादिः ।

तस्येश्वरः । 'तस्ये'त्यनुवर्त्तमाने 'तस्य'ग्रहणं 'निमित्तमि'त्यस्य निवृत्त्यर्थम् । अन्यथा संयोगादिवत् ईश्वरस्य प्रत्ययाऽर्थविशेषणता संभाव्येत । 'तत्रे'त्यनेन योगविभाग उत्तराऽर्थः, अनुवृत्त-'सर्वभूमि-पृथिवीभ्यामि'त्यनेन यथासङ्ख्यनिरासाऽर्थश्च ।

तस्य वापः । 'तस्ये'ति कर्मणि षष्ठी । न कर्त्तरि । व्याख्यानात् । तेन 'देवदत्तस्य वापः क्षेत्रमि'त्यादौ नेत्याहुः । पात्रिकीति । षित्त्वान्ङीष् ।

तदस्मिन् वृ । प्रत्येकं सम्बन्धादिति[1] । एकैककर्मकदानाधिकरणेऽपि प्रयोगस्येष्टत्वात् । द्वन्द्वस्तु सौत्र एवेति भावः । यद्यपि शुल्कमप्यायविशेष-स्तथापि गोबलीवर्दन्यायेन पृथग्ग्रहणम् । संज्ञावृद्धेरत्राऽग्रहणम् । आयादि-साहचर्यात् । 'उपदे'ति टाबन्तम् । रक्षानिर्वेश इति । 'रक्षानिमित्तभृति-रूप' इत्यर्थः । उत्कोच इति । 'उपहार' इत्यन्ये । 'उपधे'ति तवर्गचतुर्थयुक्त-पाठस्त्वसङ्गतः । धर्माऽर्थकामभयैर्मन्त्रिपरीक्षणस्योपधात्वादित्याहुः[2] ।

पूरणाऽर्द्धा । टिठनोरिति । 'अर्द्धाच्चेति वक्तव्यमि'ति टिठन । सति तत्र ङीप् स्यात् । इष्यते तु टाप् । 'पूरणाऽर्थकात्, अर्द्धशब्दाच्च ठन्नि'त्यर्थः । रूपकस्येति । रूप्यकार्षापणस्येत्यर्थः । यद्यपि भागवाचकत्वेऽपि भागवति नित्यसापेक्षत्वान्नाऽसामर्थ्यं, तथाऽपि रूढत्वादस्यैव ग्रहणमिति भावः ।

---

१ इतोऽग्रे—स च बुद्ध्या निष्कर्षादिति भावः । इदं च 'दीयते' इत्यस्य वृद्ध्याद्युपक्रमकत्वे उक्तम् । यदा तु 'यत्तत्प्रथमासमर्थं दीयते चेत्तद्भवती'-त्युपक्रम्य-'पश्चात्किं पुनस्तद्दीयते' इत्यपेक्षायां वृद्ध्यादयः सम्बध्यन्ते, तदैष यत्नो व्यर्थः । शुल्कस्याऽप्यायविशेषत्वात्फलं चिन्त्यम् । अत एव 'शौल्कशालिक' इत्यत्र 'ठगायस्थानेभ्य' इति भवति । संज्ञावृद्धेरत्र अग्रहणम्, आयादिसाहचर्यात् । उपदेति टाबन्तम्' इति ख. घ. ङ. पाठः ।

२ 'तस्य धर्मार्थकामभयैर्मन्त्रिपरीक्षणार्थत्वात्' इति ख. पाठः ।

भारभूतेभ्य इति । वंशादिशब्दानां भारभूतत्वं च तथाभूताऽर्थाऽभिधायित्वाद्बोध्यम् । सौत्रमेकवचनमिति भावः ।

वस्नद्रव्याभ्याम् । वस्नो मूल्यम् । प्रस्थं सम्भवतीति । आधारभूतस्वप्रमाणादाधेयस्य यदनाधिक्यं, तत्समानाधिकरणधरणाऽनुकूलव्यापारः संभवतेरर्थः । अतः सकर्मकत्वात्तदित्यनुवृत्त्या लभ्यमाना द्वितीया समर्थविभक्तिर्न विरुध्यते । तादृह—स्वस्मिन्नित्यादि । पचत्यर्थे द्रोणादयः शब्दास्तत्परिमिते व्रीह्यादौ लाक्षणिका इति बोध्यम् । 'तत्पचती'ति पचतिग्रहणं 'सम्भवत्यवहरति'निवृत्त्यर्थम्। आढकादीनां परिमाणत्वादाह-षक्षेठञिति ।

षित्त्वादिति । अत्र मानं तूत्तरसूत्रस्थ-'द्व्याढकिकी'ति भाष्यप्रयो

द्व्याढकिकीति । अत्र ऐजागमो न । 'न य्वाभ्यामि'त्यस्य 'सङ्ख्यायाः संवत्सरे'ति वृद्धिनिषेधकत्वाऽभावात् । अपरिमाणेति । तत्र आचितस्य साक्षादुपादानादिति भावः ।

कुलिजा । लुगभावे इति । अन्यतरस्याङ्ग्रहणाऽनुवृत्तेरिति भावः । इदं च वृत्त्यनुरोधेन व्याख्यातम् । वस्तुतोऽत्राऽन्यतरस्याङ्ग्रहणं नाऽनुवर्त्तते । पुनः खग्रहणात् । लुक्तु ठञ एव । ख-ष्ठनोस्तु न लुक् । सहविधाने उद्देश्यविधेयभावाऽसम्भवात् । द्वन्द्वेन, चकारेण च सहविधानस्य स्फुटत्वात् । तेन रूपत्रयमेव । 'द्वैकुलिजिकी'ति चिन्त्यमेव । अत एव

---

१ 'प्रत्येकसम्बन्धविवक्षया तु सूत्रे एकवचनमिति भावः' इति घ. पाठः ।

२ 'स्वस्मिन्निति । सूत्रे'अवहरती'त्यत्र षष्ठ उपसर्गस्तद्व्याचष्टे—उपसंहरतीति' । इति ख. ङ. पाठः । क. कुण्डलितः ।

३ 'इतोऽग्रे—अत्र यथा ऐजागमो न भवति, तथा 'न य्वाभ्यामि'त्यत्रैव निरूपितम्' इति ख. ङ. पाठः ।

४ इतोऽग्रे—'द्विगोष्ठंश्चे'ति सूत्रे' 'खोऽन्यतरस्यामि'त्यस्य चानुकृष्टत्वाच्च । लुक्तु ठञ एव । तद्विधानसामर्थ्यादेव खष्ठन्भ्यां तस्य न बाधः' इति घ.पाठः ।

५ इतोऽग्रे—'न च 'खश्च वे'त्येव सिद्धे लुक्पदवैयर्थ्यम् । लाघवाऽभावात्' इति घ. पाठः ।

भाष्यकृता [1] 'कुलिजादि'ति सूत्रे ष्ठनः, चाऽनुकृष्ट'खोऽन्यतरस्यामि'त्यस्य च अनुवृत्तिं स्वीकृत्य, 'लुक्खौ चे'ति प्रत्याख्यातम्। एतेन 'परिमाणान्तस्ये'-ति सूत्रे कुलिजपर्युदासो वृत्तिकृदुक्तः परास्तः।

तदस्य परिमाणम्। यद्यपि 'तदस्य परिमाणं सङ्ख्यायाः' इत्येकसूत्रतया भाष्ये पठितम्, तथापि 'अन्येभ्योऽपि दृश्यते, खारशतिकाद्यर्थमि'ति-भाष्येण योगविभागो ध्वनितः।

अत्र सूत्रे 'परिमाण'शब्देन परिच्छेदकमात्रम्। उत्तरसूत्रे परिमाणेन सङ्ख्याया विशेषणात्। शब्दाऽर्थोभयकल्पनाऽभावरूपलाघवाऽनुरोधेन पूर्वसूत्रनिर्णीताऽर्थस्य उत्तरसूत्रे ग्रहणवत्, उत्तरसूत्रे निर्णीताऽर्थस्य पूर्व-सूत्रेऽपि ग्रहणस्य युक्तत्वात्। तेन 'षष्टिर्जीवितपरिमाणमस्य षाष्टिक' इति सिद्धम्। द्विषष्ट्यादिभ्यस्त्वनेनाऽनभिधानान्न प्रत्ययः। किन्तु 'द्वे षष्टी भृत' इत्यर्थे 'तमधीष्टो भृत' इत्यनेन। अत एव 'द्विषाष्टिक' इत्यादौ न लुक्। अनार्हीयत्वात्। न च तत्र 'कालादि'त्यधिक्रियते, नाऽयं कालवाचीति वाच्यम्। यथा कथञ्चित्कालवाचकानामपि तत्र ग्रहणात्। रमणीयादिषु तु नाऽतिप्रसङ्गः। अनभिधानात्। सर्वं चेदमत्रैव भाष्ये स्पष्टम्।

यत्तु [2] 'सोऽस्ये'त्यनुवर्त्तमाने पुनः 'तदस्ये'तिग्रहणं पुनर्विधानाऽर्थम्। तत्सामर्थ्यात्'द्विषाष्टिक' इत्यादौ लुक् ने [3]'ति काशिका, 'येन विधि'रिति-सूत्रे कैयटश्च। तन्न। काकवाशितेनेव 'तदस्ये'त्यनेनाऽऽर्हीयत्वनिवृत्तेरशक्य-त्वात्। किञ्चाऽस्याऽऽर्हीयत्वाऽभावे 'द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिक' इत्यादौ विभक्तेनाऽनेन प्रत्यये लुगापत्तिदूषणपूर्वक-'द्वे षष्टी भृत' इत्यर्थे कालाऽधिकारस्थेन 'तमधीष्ट' इत्यनेन स' इति भाष्यविरोधाऽऽपत्तेः।

---

१ 'भाष्यकृता चानुकृष्टस्याऽप्युत्तरत्राऽनुवृत्तिं स्वीकृत्य' इति घ. पाठः।

२ 'यत्तु' इति ख. ङ. नास्ति।

३ 'लुक् नेति तु काशिका' इति ख. ङ. पाठः।

न च 'येन विधिरि'तिसूत्रस्थं 'ठञ्विधौ सङ्ख्यायाः प्रयोजनं द्विषाष्टिकमि'ति भाष्यं विरुद्ध्येत । 'ठञ्विधायके 'सङ्ख्याया' इतिपदघटिते सूत्रे तदन्तविधिरि'ति तदर्थः; तदुदाहरणे लुगापत्तेरिति वाच्यम् । 'द्वे षष्टी परिमाणमस्य सङ्घस्य स द्विषष्टिः', 'स सङ्घः परिमाणमस्याऽध्ययनस्य द्विषाष्टिकमि'ति तदर्थेनाऽदोषात् । तत्र हि द्वितीयतद्धितस्य द्विगुनिमित्तत्वाऽभावान्न लुक् ।

पूर्वसूत्रमिति । ननु परिमाणग्रहणाऽनुवृत्तिर्व्यर्था, सङ्ख्यायाः परिच्छेदकत्वाऽव्यभिचारादिति चेन्न । 'पञ्च गावोऽस्य सङ्घस्य धनमि'त्यर्थे प्रत्ययवारणाऽर्थं तत्सत्त्वात् । ननु पञ्चादिशब्दानां सङ्ख्येयवृत्तित्वात्परिच्छेदकत्वाऽभावः । पञ्चसङ्ख्याकप्रस्थादिपरिमाणके तु नेष्यते इत्याह[1] आह–तत्र संज्ञायां स्वार्थे इति । यद्वेति । 'आ दशतः सङ्ख्याः सङ्ख्येये' इति कोशः प्रायोवाद इति भावः ।

सङ्घे पञ्चक इति । 'पञ्च परिमाणमस्य सङ्घस्ये'त्यर्थः । प्राणिसमूह इति । यद्यपि पङ्क्त्यादिसूत्रभाष्ये 'समूहमात्रं सङ्घ' इति लभ्यते, तथापि तत्-तत्सूत्रमात्रविषयमित्यभिमानः । 'सङ्घशब्दस्य बहुसमुदाये शक्ततया पदद्वयाऽऽत्मके[2] 'केऽण' इत्यादौ 'द्विकं सूत्रमि'त्यादिप्रयोगासिद्धये तदि'त्यन्ये । पञ्चकमध्ययनमिति । 'पञ्च आवृत्तयः परिमाणमस्ये'त्यर्थः ।

स्तोमे ड । मन्त्रसमूहे 'स्तोम'शब्दः शक्तः । कैयटस्वरसात् । लोके समूहमात्रे प्रयोगस्तु लक्षणयोपपाद्यः । मन्त्रसमूहः श्रुत्ययाऽर्थः । 'स्तुतिस्तोम' इत्यत्र 'स्तुति'पदं स्तुतिकरणमन्त्रसमूहे लाक्षणिकम् । करणेक्तिन्वा ।

पृष्ठ्याऽऽदिसंज्ञिकेति । 'साम्ना स्तुवीत, एकं साम त्र्यृचे क्रियते' इति श्रुतिः । तत्र त्र्यृचस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्राः । सप्तदशे स्तोमेऽन्त्यायाः सप्तकृत्वः । एकविंशे त्र्यृचस्य सप्तकृत्व' इत्यादि बोध्यम्[3] ।

---

१ 'इत्यत आह' इति ख. ङ. पाठः ।

२ 'वर्णद्वयात्मके 'उञ' इत्यादौ' इति घ. पाठः ।

३ इतोऽग्रे—'डित्फलं दर्शयितुमुदाहरति—एकविंश इति' इति घ. पाठः ।

अत्र डित्त्वात्तिलोपे 'अतो गुणे' इति पररूपं बोध्यम्। 'त्रयस्त्रिंशा'-ऽऽदौ टिलोपाऽर्थमपि डित्त्वम्।

'प्रमाणे द्वयसज्'तिसूत्रे 'स्तोमे डट्'इति वचनाऽन्तरम् पठ्यते। तत्र टित्त्वम्—यदा स्तोमसाहचर्यात्स्त्रियां प्रयोगः 'पञ्चदशी रात्रिरि'ति, यदा वा तत्साध्यस्तुतौ लक्षणायां 'पञ्चदशी स्तुति रि'ति तदा, ङीबर्थमित्याहुः।

एवं वचनाऽन्तराण्यपि पठ्यन्ते,—'शन्शतोर्डिनिः'। 'विंशतेश्च'। 'त्रिंशिनो मासाः'। 'पञ्चदशिनोऽर्द्धमासाः'। 'विंशिनोऽङ्गिरसः'। अत्र 'ति'लोपे कृतेऽकारस्य 'यस्ये'ति लोपे कर्त्तव्ये तस्य नाऽसिद्धत्वम्। भाष्यप्रयोगात्। यद्यप्यत्र वृत्त्यादौ 'छन्दसी'ति पठितं, तथापि द्वयसज्विधायकसूत्रभाष्ये 'छन्दसी'ति पदरहितः पाठो दृश्यते[1]।

पङ्क्तिविंशति। 'पञ्चन्'शब्दस्य टिलोपः। 'ति'प्रत्ययः। 'चोः कुरि'ति कुत्वम्। रूढीति। एवञ्चाऽवयवार्थे नाऽभिनिवेष्टव्यमिति भावः। 'पङ्क्ति'-शब्दो नानाऽर्थः। अस्ति च्छन्दो विशेषे, यस्य पञ्चाऽक्षराः पञ्च पादाः। अस्ति क्रमसन्निवेशे। यथा 'ब्राह्मणपङ्क्तिरि'ति। अस्ति दशसङ्ख्यायां-'कृतवान्पङ्क्तिरथो विलङ्घ्य यदि'त्यादौ। 'दशरथ' इत्यर्थः। द्वयोर्दशतो'र्विन्' भावः, 'शतिच्' प्रत्ययः, अपदत्वं च निपात्यते। चित्त्वमन्तोदात्ताऽर्थम्।

अत एव भाष्ये एषु अव्युत्पत्तिपक्षोऽप्युक्तः। 'आ विंशत्या त्रिंशता याही'ति अन्तोदात्तदर्शनाच्च। ये तु 'शति'प्रत्ययं वदन्ति, तेषां मते निपातनादन्तोदात्तत्वं बोध्यम्। 'द्वौ दशतावि'ति 'द्वौ दशतौ परिमाणमस्ये'ति च विग्रहः।

इदं यथाकथञ्चिद्व्युत्पत्तिमात्रम्, न त्ववयवाऽर्थे आग्रहः। एवं च विंशत्यादयः शब्दाः स्वभावात्सङ्ख्यायां, सङ्ख्येये च वर्त्तन्ते। उभयत्राऽप्येकवचनाऽन्ताः[2]। तेन 'विंशतिर्गावः' 'विंशतिर्गवामि'त्यादिसिद्धिः।

---

१ 'छन्दसीति पदरहितपाठाल्लोकेऽपि प्रवर्त्तते इत्याहुः' इति ख. पाठः।

२ इतोऽग्रे—'सङ्ख्येयपरतायामपि शब्दशक्तिस्वभावान्नियमेन स्वाश्रयाऽऽश्रय-

एकशेषेण-'विंशती' 'विंशतयः' इत्यादीष्टमेव । एवं सहस्रादयोऽपि अव्युत्पन्नाः । एषां प्रदर्शनन्तूदाहरणमात्रमित्याहुः ।

एवं त्रयाणां दशतां 'त्रिन्'भावः, 'शत्' च प्रत्ययः । चतुर्णां दशतां 'चत्वारिन्'भावः । पञ्चानां तेषां 'पञ्चा' इत्यादेशः । षण्णां दशतां 'षष्' । तिश्च प्रत्ययः । अपदत्वं सर्वत्र । सप्तानां दशतां 'सप्त'भावः । अष्टानां तेषाम् 'अशी'भावः । नवानां दशतां 'नव'भावः । तत्र'विंशत्याद्या नवत्यन्ताः स्त्रीलिङ्गाः । दशानां दशतां'श'भावः, 'त'श्च प्रत्यय इति दिक् ।

पञ्चद्दशौ । डत्यन्तौ निपात्येते, 'तदस्य परिमाणमि'त्यर्थे । येषान्तु पञ्चानां सङ्घे एव पञ्चत्वसङ्ख्या, तेषामितः तद्विशेष्यकबोध एवेति बोध्यम् ।

पक्षे इति । 'सङ्ख्याया' इति कन् ।

त्रिंशच्चत्वारिंश । 'आभ्यां 'तदस्य परिमाणमि'त्यर्थे'डण्'प्रत्ययो भवति, ब्राह्मणेऽभिधेये, समुदायेन संज्ञा चेद्गम्यते' इत्यर्थः । संज्ञा च प्रत्यासत्त्या ब्राह्मणस्यैवेति बोध्यम् । 'त्रिंशच्चत्वारिंशतोरि'ति पञ्चम्यर्थे षष्ठीद्विवचनम् । 'चत्वारिंशत' इति सूत्रपाठे तु समाहारद्वन्द्वात्पञ्चम्येकवचनम् ।

अत्र 'ब्राह्मणसंज्ञायामि'ति षष्ठीसमासेन निर्देश उचितः । एवं हि उक्तोऽर्थः स्फुटो भवति । अन्यथा हि 'यस्य कस्यचित्संज्ञायां, ब्राह्मणस्थे च प्रयोगे' इत्यर्थोऽपि सम्भाव्येत । तथा च मन्त्रे, भाषायां च न[2] स्यात् । इष्यते तु सः । तथा तु न कृतमित्येवेति दिक् ।

तदर्हति । लब्धुमिति । उपलक्षणमेतत्—क्रियामात्रस्य । तेन

---

स्वरूपपरम्परयैव सङ्ख्याऽन्वयस्वीकारात्,-'वेदाः प्रमाणमि'तिवत् । 'गावो धनमि'त्याद्यप्येवमेव । साक्षात्सम्बन्धेन सङ्ख्याऽन्वये तु तत्र 'गावो धनानी'त्यपि भवतीति विशेषः' इति ख. ङ. पाठः । क. कुण्डकितः ।

१ 'एवं सहस्रादयोऽपि पृषोदरादित्वात्साधवो बोध्याः' इति ख. ङ. पाठः ।

२ ('डण) न स्यात तस्मादिष्टाऽनुरोधेन व्याख्येयं स्यादिति दिक' इति घ. पाठः ।

'भारतिक' 'रामायणिक' 'औपवासिका'ऽऽदीनामनेनैव साधुत्वम्। कथना-ऽऽदिदशायामपि योग्यताऽनपायादित्याहुः।

छेदादिभ्यो नित्यम्। अत्र 'नित्य'ग्रहणं न वाक्यनिवृत्त्यर्थम्। तस्य भाष्यकारेणेष्टेः। नाऽपि 'सर्वदे'त्यर्थकं प्रत्ययाऽर्थविशेषणम्। छिन्नप्ररूढ-वेतसादेरपि नित्यं छेदनाऽनर्हत्वात्। नाऽपि पौनःपुन्यरूपाऽऽभीक्ष्ण्यं नित्यशब्दाऽर्थः, भाष्ये 'न कर्त्तव्यमि'त्युक्तः तदर्थत्वस्याऽनौचित्यात्। एवं च सूत्रमेव मास्त्विति दिक्। मूलन्तु वृत्त्यनुरोधेन।

शीर्षच्छेद्य इति। यथा—रावणादिः।

दण्डादिभ्यः। 'यदि'ति वर्त्तते। 'दण्डादिभ्यो य' इति पाठस्तु अनार्षः। तथाहि—'अचो यदि'ति सूत्रे 'हनो वा वधश्च वक्तव्यः' 'तद्धितो वे'त्युक्तं भाष्ये। कृत्यस्याऽप्यर्हे विधानान्नाऽर्थविशेषस्तयोः। अत्र 'य'प्रत्यये हि स्वरे विशेषः स्पष्ट एव। यप्रत्ययेऽन्तोदात्तत्वम्, यति तु 'यतोऽनाव' इत्याद्युदात्तत्वम्।

न चाऽत्र यत्यपि स्वरे विशेषः। 'यदुत्पत्तिवेलायां यदन्तस्य द्व्यच्कस्य आदिरुदात्तः' इत्यर्थो 'यतोऽनाव' इत्यस्य वेदभाष्ये व्याख्यातः। 'वधे'त्यकारान्तप्रकृतिकं हि तद्धितयदन्तं, न तदुत्पत्तिवेलायां द्व्यच्कम्। कृदन्तन्तु तथा। तत्र वधादेशस्य हलन्तत्वात्। एवं च तद्धिते स्वरितत्वं, कृति-आद्युदात्तत्वमि'ति वाच्यम्। तद्धितकृतोरविशेषं वदत्फणिभाष्य-विरोधेन वेदभाष्यस्याऽप्रयोजकत्वात्। अत एव 'नमः शष्प्याय च फेन्याय चे'त्यादावाद्युदात्तप्रयोगः सङ्गच्छते। 'क्रतुर्भवत्युक्थ्य' इत्यादौ पठ्यमानम् अन्तोदात्तत्वन्तु व्यत्ययेन बोध्यम्। वेदभाष्यकृतामपि 'नमः

१ 'नित्यं छेदनाऽनर्हत्वात्। तस्मात्पौनःपुन्यरूपाऽऽभीक्ष्ण्यं 'नित्य'शब्दार्थः। भाष्यमपि न नित्यग्रहणप्रत्याख्यानपरं, किन्तु वाक्यनिवृत्त्यर्थत्वखण्डनपर-मित्याशयवानाह—छेदं नित्यमर्हतीति। केचित्तु—'भाष्ये नित्यग्रहणं प्रत्याख्यातम्। सूत्रमेव मास्त्वि'ति तदाशय इत्याहुः' इति ख. ङ. पाठः।

शष्प्याय चे'त्याद्यर्थं व्यत्यय आवश्यकः । स्पष्टं चेदं 'सभाया य' इति सूत्रे मनोरमायाम् । न च कृति 'असिना वध्य' इत्यत्र 'साधनं कृते'ति समासः । तद्धितेन तु स दुर्लभः । कृतसमासात्तु न तद्धितः । सङ्ख्यापूर्वपदाऽतिरिक्ते तदन्तविध्यभावात् । स्वरे भेदाच्च । कृता समासे कृदुत्तरपदप्रकृतिस्वरेण स मध्योदात्तः । समासात्तद्धिते 'तित्स्वरितमि'ति स्वरितान्तः स्यात् ।

एतेन 'तद्धितान्त'वध्य'शब्देनाऽपि 'सुप्सुपे'ति समासः सुलभ' इत्यपास्तम् । अन्तोदात्तत्वप्रसङ्गात् । एतेन 'स्वतन्त्रवधधातोर्ण्यति, 'जनिवध्योरि'ति वृद्धिप्रतिषेधे, तेन समासे 'असिवध्यः' मध्योदात्तः सिद्ध्यती'त्यपास्तम् । स्वतन्त्रवधधातोरसार्वत्रिकत्वाच्चेति वाच्यम् ।

अस्य विशेषस्य भाष्ये एवाऽग्रे उक्तत्वेनाऽदोषात् । नञ्समासे 'ययतोश्चाऽतदर्थे' 'कृत्योकेष्णुच्चार्वादयश्चे'त्याभ्यामन्तोदात्तत्वादविशेषः । 'अयमाकृतिगण' इति गणरत्नकृत् ॥ पात्रात् । 'घन्' इति नित्प्रत्ययः ।

कडङ्करद । 'कडङ्करं बुसं क्लीबमि'त्यमरः । कडमिति । मदमित्यर्थः । 'कडंगरे'ति पाठस्तु हरदत्त-माधवादिविरोधादुपेक्ष्यः ।

स्थालीबिलात् । छयतावनुवर्त्तेते । पाकयोग्या इति । त्रिष्फलीकृताः । 'वारत्रयं कण्डिता' इति यावत् । तत्कर्मार्हतीति । यद्यपि यज्ञशब्दस्य तदर्थव्यापारे, ऋत्विक्शब्दस्य च तत्कर्मणि लक्षणया सूत्रेणैव सिद्ध्यति, तथापि अत्र प्रकरणे मुख्याऽर्थेभ्य एव प्रत्यय इति ज्ञापनाऽर्थमिदम् । यज्ञयोग्यता च अर्थित्व-समर्थत्व-विद्वत्त्वादिरूपा, अतो देशे न सूत्रेण सिद्धिरिति बोध्यम् । यज्ञियो देश इति । 'यज्ञाऽनुष्ठाने योग्य' इत्यर्थः ।

आर्हीयाणां ( द्वादशानां ) गतोऽवधिः ।

---

१ 'प्रत्यय आवश्यकः' इति क. ग. पाठः । २ 'वध्यशब्देनाऽपि' इति क. पाठः ।

३ 'अन्तोदात्तत्वाऽविशेषात्' इति घ. पाठः ।

४ इतोऽग्रे—'यद्यपि कृत्तद्धितयोरर्थकृतो विशेषोऽस्ति, तथापि तमनादृत्य स्वरूपकृतविशेषमादायैव भाष्यं प्रवृत्तमितिबोध्यम्' इति क. कु. ख. घ. ङ. पाठः ।

५ 'तथापि गौणमुख्यन्यायाच्च स्यादिति वार्त्तिकम्' इति क. कु. ख. घ. ङ. पाठः ।

# अथ ठञधिकारप्रकरणम् ।

पारायण । पारायणिक-तौरायणिकौ शिष्य-यजमानयोरेव वाचकौ, न तु गुरुऋत्विजोः । अनभिधानात् । अन्यथा ऋत्विजोऽपि पुरोडाशनिर्वर्त्त-कत्वात्तत्रापि स्यादित्याशयेनाह—छात्र इति । आदित आरभ्य आऽन्ता-दविच्छेदेन वेदा[१]ऽध्ययनं 'पारायणम्' । तच्च गुरुशिष्याभ्यां निर्वर्त्त्यते । अन्यतराऽसन्निधावध्ययनक्रियाया अनुत्पादादित्याहुः ।

चान्द्रायणम्—तपोविशेषः ।

'संशय'शब्दः स्वविषयत्वे लाक्षणिकः । 'आपन्न' इति कर्त्तरि क्तः । तदाह—संशयविषयीभूतोऽर्थ इति । सन्देग्धरि तु प्रत्ययो नेष्यते इति भावः । 'सांशयिकः संशयाऽऽपन्नमानस' इत्यमरस्तु 'संशयाऽऽपन्न मानसमस्मिन्विषये' इति व्याख्येयः । ततोऽभीति । पञ्चम्यन्तात्प्रत्ययः ।

पन्थो ण । 'पथः पन्थाऽऽदेशो,णश्च प्रत्यय' इत्यर्थः । यद्यपि क्वचित्-वृत्तिपुस्तके 'पन्थोऽण् नित्यम्' । अण् च प्रत्यय' इति दृश्यते, तथापि 'छेदादिभ्यो नित्यमि'ति सूत्रे 'पन्थो ण नित्यमि'ति भाष्ये पाठदर्शनात् अयुक्तं तत् । 'नित्य'ग्रहणं 'छेदादिभ्य' इत्यत्रत्येन समानम् ।

उत्तरपथेना । अर्थसन्निहितचकारेण सजातीयत्वात् 'गच्छती'त्यर्थ आकृष्यते इति बोध्यम् । समर्थविभक्तिश्चाऽत्र सूत्रनिर्दिष्टा तृतीयैवेत्याहुः।

वारिजङ्गलेति । 'अजशङ्कुपूर्वात्पथ उपसङ्ख्यानम्' । 'आजपथिकः', शाङ्कुपथिकः' । 'स्थलपूर्वात्पथोऽण्, मधु-मरीचयोरिति वाच्यम्' । 'स्थालपथम्'—मधु, मरीचं वा ।

कालात् । 'का[२]लग्रहणे सर्वोऽपि कालवाचको गृह्यते' इति 'तदस्य परिमाणमि'ति सूत्रे भाष्ये स्पष्टम् । रमणीयादिष्वनभिधानान्नाऽतिप्रसङ्गः । स्वरूपमात्रग्रहणन्तु 'मासाद्वयसी'त्यादावनन्वयादपि नेत्याहुः ।

---

१ 'वेदपठनम्' इति ख. ङ. पाठः । २ 'अत्र सर्वोपि' इति ख. घ. ङ. पाठः ।

तेन निर्वृत्तम् । 'तेन = करणेन निर्वर्त्तितमि'त्यर्थः । चतुरर्थ्यन्तर्गते 'तेन[1] निर्वृत्तमि'त्यत्र 'तेन कर्त्रे'त्यर्थः । उभयत्राऽप्यन्तर्भावितण्यर्थात् वृतेः कर्मणि क्तः ।

आह्निकमिति । 'अह्नष्टखोरेवे'ति नियमान्न टिलोपः ।

तमधीष्टो । तादृश एवेति । 'स्वसत्तया व्याप्स्यमानकाल' इत्यर्थः । मासमधीष्ट इति । अत्यन्तसंयोगे द्वितीया । ननु मुहूर्त्तमेवाऽस्य प्रार्थनं, भरणं च क्रियते, तथा च कथं तस्य मासेनाऽत्यन्तसंयोग इति चेन्न । तत्फलीभूताऽध्ययनादिक्रियाव्याप्ते तद्व्याप्तत्वोपचारात् ।

यद्यपि कस्य चिन्मासमपि प्रार्थनाऽऽदि क्रियते, तथापि यावत्[2]काल ते क्रियेते, तावतः प्रत्ययो नेष्यते इति बोध्यम् । अत्राऽधीष्ट-भृतयोः कालाऽन्तर्भावेण न शक्तिः, 'दीव्यती'त्यादिवत् । भूत-भाविनास्तु उभयोपादानसामर्थ्यात्कालाऽन्तर्भावेणेव सेत्याहुः ।

मासाद्वयसि । 'समुदायेन चेद्वयो गम्यते' इत्यर्थः । अत्र निर्वृत्तादीनां पञ्चानामधिकारेऽपि 'भूते' इत्येव सम्बध्यते । सामर्थ्यात् । न हि अर्थाऽन्तरे प्रत्यये वयो गम्यत इत्याहुः । खञो ञित्त्वं स्वराऽर्थम्, पुंवत्त्वप्रतिषेधाऽर्थं च—'मासीनाभार्य' इति ।

द्विगोर्यप् । पित्त्वादनुदात्तः । तेन 'इगन्तकाले'त्यनेन पूर्वपदप्रकृतिस्वर एव अवतिष्ठते । 'य' इत्युक्ते तु सतिशिष्टत्वात्प्रत्ययस्वरेणाऽन्तोदात्तः स्यादिति बोध्यम् । 'अध्यर्धे'ति लुक्तु न । अनार्हीऽयत्वात् ।

षण्मासात् । यबपीति । इदं वृत्त्यनुरोधेन । अत एव 'अवयसि ठंश्चे'ति सूत्रे भाष्ये उक्तम्-'अनन्तरस्याऽनुकर्षो द्रष्टव्यो, द्वेष्यं विजानीयाद् यबप्यनुवर्त्तते' इति । तेन हि यपः पूर्वसूत्रेऽप्यननुवृत्तिः सूचिता । अन्यथा पूर्वसूत्रे तस्याऽनुवृत्तौ, तस्याऽप्यनन्तरत्वाऽक्षतिरेव । कैयटेनाऽपि

---

१ 'तेन निर्वृत्तमित्यत्र' इति मनोरमास्थम् ।

२ 'यावन्तं कालम्' इति ख. घ. ङ. पाठः ।

'व्यवहितस्याऽपि क्वचिदनुवृत्तिर्दृष्टा, 'द्वितीयाटौस्वि'त्यत्र इदम इवे'ति व्याचक्षाणेन पूर्वसूत्रेऽननुवृत्तिरेवोक्ता। चाट्ठञिति। न च स यबनुकर्षणेन चरिताऽर्थः। स्वरितत्वबलेनैव तत्सम्बन्धसिद्धेः।

अवयसि ठंश्च। चाण्ण्यदिति। न च 'अवयसि', 'ठनि'ति न्यासद्वयेनैव सिद्धे, चो व्यर्थ इति वाच्यम्, 'शब्दगौरवादपि योगविभागो गरीयानि'ति ज्ञापनाऽर्थत्वात्। स्पष्टं चेदं सप्तमे कैयटे।

---

१ इतोऽग्रे—'षण्मासात्' 'ण्यदि'ति योगद्वयेनैव सिद्धे, चकारस्य वैयर्थ्याऽऽपत्तेश्चेत्याहुः' इति ख. ङ. पाठः।

२ 'इति वाच्यम्। 'ण्यति स्वरितत्वप्रतिज्ञायां मानाऽभावेन, यत एव सम्बन्धाऽऽपत्तेः' इति घ. पाठः।

३ इतोऽग्रे—'वस्तुतश्चो 'ण्यच्चे'त्यस्याऽनुकर्षणाऽर्थः। अत एव 'दत्तः षाण्मासिकोऽवधिरि'ति सिद्धम्। अत्र सूत्रे, 'समाया' इति सूत्रे च अधीष्टादयश्चत्वार एव सम्बध्यन्ते, न निर्वृत्ताऽर्थः। प्रागुक्त'सङ्ख्यापूर्वपदानामि'तितदन्तविधिना 'समायाः ख' इत्यनेनैव तदन्तद्विगोः खे सिद्धे, 'द्विगोरि'त्यारम्भसामर्थ्याद्विकल्पेन विधिसिद्धौ 'वा'ग्रहणेन इतः पूर्वसूत्रेषु तदसम्बन्धज्ञापनात्[1]। एवं च 'वा'ग्रहणं निर्वृत्तेऽर्थे विकल्पाऽर्थं चरिताऽर्थम्। न चाऽधीष्टादीनामेवाऽसम्बन्धं ज्ञापयत्विति वाच्यम्॥ 'मासाद्वयसी'त्यादौ वयोऽवगतेरन्यार्थेऽसम्भवेन, अधीष्टसूत्रोपात्तभूताऽर्थान्वयस्याऽऽवश्यकत्वेन क्लृप्तबाधस्य तस्यैव बाधज्ञापनादित्यभिप्रेत्याह[2]–समामधीष्ट इत्यादि।

---

1 इतोऽग्रे—'न च 'सङ्ख्यापूर्वसमाशब्दान्तस्य चेद् द्विगोरेव, नाऽन्यस्य सङ्ख्यापूर्वस्ये'ति नियमाऽर्थं तत्स्यादिति, कथं सामर्थ्याद्विकल्पसिद्धिरितिवाच्यम्। विधिनियमसम्भवे विधेरेव ज्यायस्त्वात्। नियमवादिमतेऽन्यसंख्यापूर्वे सर्वथाऽभावकल्पनाऽपेक्षया द्विगुविषये पाक्षिकाऽभावकल्पने लाघवाच्च' इति घ. पाठः।

2 'अव्यवहितबहुबाधकल्पनाऽपेक्षया, व्यवहितैकबाधकल्पनस्य न्याय्यत्वाच्चेत्यभिप्रेत्याह' इति घ. पाठः।

समामधीष्टे इत्यादि। इदमुपलक्षणम्—'समया निर्वृत्तमि'त्यपि। प्रागुक्त'सङ्ख्यापूर्वपदानामि'ति तदन्तविधिना 'समायाः ख' इत्यनेनैव तदन्तद्विगोः खे सिद्धे, 'द्विगोरि'त्यारम्भसामर्थ्याद्विकल्पेन विधिसिद्धौ 'वा'ग्रहणं स्पष्टार्थम्। पञ्चस्वर्थेष्विति। अत्र 'यथायोगमि'ति शेषः।

द्व्यहीन इत्यादि। समाहारद्विगौ, तद्धितार्थद्विगौ च तुल्यं रूपम्। नन्वन्तरङ्गत्वात् 'राजाऽह' इति समासान्तटचा भाव्यम्, तथा च समाहारद्विगौ 'न सङ्ख्यादे रि'त्यह्नादेशनिषेधेन द्व्यहीनस्य सिद्धावपि, तद्धिताऽर्थद्विगावह्नादेशे, खे 'द्व्यह्नीन' इत्यपि प्राप्नोति। एवं तद्धिताऽर्थद्विगौ 'द्वैयह्निक'स्य सिद्धावपि, समाहारद्विगोष्ठकि 'द्वैयहिक' इत्यपि प्राप्नोति। किञ्च समासान्ते कृतेऽहन्शब्दान्तद्विगोरभावात्प्रकृतसूत्रस्यैवाऽप्राप्तिः। न च महाविभाषया टचो विकल्पः। 'बृहतीजात्यन्ताः, समासान्ताश्चे'ति नित्येषु परिगणनादित्यत आह—समासान्तेति। अत्र च वृत्त्याद्येव मानम्।

सङ्ख्यायाः संवत्सर। संवत्सरस्य पूर्वनिपातो मात्रालाघवाऽनुरोधात्। सङ्ख्याया इति। 'सङ्ख्यायाः परस्य संवत्सरसङ्ख्याशब्दस्ये'त्यर्थः।

द्वे षष्टीति। षष्टिशब्दोऽत्र तत्सङ्ख्याकाऽहरादिरूपे काले वर्त्तते। अतः 'कालादि'त्यधिकारस्थभृताऽर्थप्रत्ययः। तेनेति। इदमुपलक्षणम्। 'द्विवर्षे'त्यत्र 'अपरिमाणे'ति ङीप् नेत्यपि बोध्यम्। यद्यपि सङ्ख्ययाऽपि परिच्छिद्यते, तथापि 'सङ्ख्या बाह्या तु सर्वत' इत्यत्र 'सङ्ख्या बाह्या तु'

---

'द्विगोर्वे'ति सूत्रे—'पञ्चस्वर्थेष्विति च' इति ख. ङ. पाठः।

१ 'समया निर्वृत्तमित्यस्याऽपि' इति ख. ङ. पाठः।

२ इतोऽग्रे—'न च समासान्तानामुत्तरपदाऽवयवत्वान्न दोषः। तस्य क्वाचित्कत्वादित्यत आह—समासान्तेति' इति घ. पाठः।

३ 'तथापि तक्रकौण्डिन्यन्यायात् साक्षात्श्रुतनिमित्तत्वेन कार्यित्वस्य बाधो मा भूदिति तद्ग्रहणमिति भावः' इति घ. पाठः।

इत्येतावतैव उक्तत्रिभ्यो बहिर्भूतत्वे सिद्धे, पुनः 'सर्वत' इत्यनेनाऽसति गमके सामान्यपरपरिमाणशब्देनाऽप्यग्रहणस्य सूचनान्न दोषः। अत्राऽर्थे इदं सङ्ख्याग्रहणमपि ज्ञापकमिति दिक्।

वा च लुगिति। वाक्यभेदेन 'तयोरेवे'त्यर्थः।

द्वैवर्षिक इति। 'व्याधिरि'ति–अस्य विशेष्यम्। अनेन प्रत्ययाऽर्थस्याऽचेतनता दर्शिता। चित्तवति हि नित्यं लुग्वक्ष्यते। प्रतिषेधो नेति। 'भविष्यदर्थकप्रत्ययभिन्ने ञिदादावि'ति सूत्राऽर्थः। तदाह–गम्यते हीति। 'कर्म करिष्यती'त्यादिपदाऽन्तरसमभिव्याहारेणे'त्यर्थः। अधीष्टभृतयोः कालाऽनन्तर्भावेण शक्तेरुक्तत्वान्न विरोध इति भावः। 'लक्षणप्रतिपदोक्त'-परिभाषया 'भावी'त्यर्थे उत्पन्नप्रत्ययस्यैव भविष्यच्छब्देन ग्रहणमि'त्यपि केचित्। तदाह—अधीष्टो भृतो वा कर्मेति। यत्तु 'अधीष्टो भृतो भूतो वे'ति क्वचित्पाठः। सोऽपपाठः। अधीष्टभृतयोः प्रतिषेधाऽभावमुपक्रम्य उदाहरणे, तृतीयोपन्यासस्य व्यर्थत्वात्। तत्र[1] भविष्यत्त्वाऽनवगतेश्च।

द्विवार्षिको मनुष्य इति। ननु 'चित्तवति नित्यमि'ति नित्यलुको वक्ष्यमाणत्वेन, कथमत्र प्रत्ययश्रवणमिति चेन्न। आरम्भसामर्थ्यादेव[2] नित्यत्वे सिद्धे, 'नित्य'ग्रहणं विशिष्टेऽर्थे नित्यं लुक् यथा स्यात्। स च विशिष्टोऽर्थो भूत एव। व्याख्यानात्। तत्रैवाऽभिधानाच्चेति हरदत्तादयः।

परे तु अधीष्ट-भृतयोर्वृद्धिनिषेधप्राप्तिरेव न। अध्येषण-भरणयोश्चेतन-

---

१ 'तत्र नित्यलुक्प्राप्तेश्च' इति ख. पाठः।

२ 'सामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं प्रत्ययविशेषणम्। प्रत्यये नित्यत्वं चाऽर्थद्वारा। प्रत्ययार्थस्य तत्त्वं च प्रकृत्यर्थयावत्कालसम्बन्धित्वम्। तच्च भूते एव। यद्यपि भाविनाऽपि क्वचित्तथासम्बन्धस्तथाप्यभिधानस्वाभाव्यात्तत्रैव लुक्। अधीष्टभृतयोस्तु न तथा। तत्फलाऽध्ययनादेस्तथात्वेऽपि, साक्षात्प्रत्ययाऽर्थयोरतथात्वात्। 'अमनुष्ये' इतिच्छेदः, मनुष्यपदस्य तत्सदृशे लक्षणा वे'त्यादि वदन्तो देवानां प्रिया एव' इति ख. पाठः।

विषयकत्वेन तत्र लुको नित्यतया ञिदादिप्रत्ययपरत्वाऽभावात्। अचेतनविषययोरपि तयोः सत्त्वे तु तत्रैवोदाहर्त्तुमुचितम्। 'नित्य'ग्रहणं 'वे'त्यस्य निवृत्त्यर्थं स्पष्टार्थमेव[1]। तस्मात् अधीष्टभृतयोर्नित्यलुकः प्राप्त्या, वृत्त्यादिग्रन्थाश्चिन्त्या एव। भाष्यन्तूदासीनमिति वदन्ति।

परिमाणान्त। अत्र यद्वक्तव्यं तत् 'असमासे निष्कादिभ्य' इत्यत्र उक्तम्। केचित्पठन्तीति। अत्राऽरुचिबीजं 'कुलिजाल्लुक्खौ चे'त्यत्र दर्शितम्।

षष्टिकाः। निपातनसामर्थ्यात् शालिविशेषे एवाऽयं साधुः। तेन मुद्गानां षष्टिरात्रपाच्यत्वेऽपि, तेषु नेति बोध्यम्। अत एव 'षष्टिके संज्ञाग्रहणं कर्त्तव्यमि'त्युक्तं वार्त्तिककृता। यदा तु 'षष्टि'पदात्तत्सङ्ख्याकरात्र्यादिलाक्षणिकात् अधीष्टादौ प्रत्ययस्तदा 'षाष्टिक' इत्येव। एकवचनाऽन्तप्रयोगदर्शनादाह— बहुवचनमिति। 'परिजय्य' इत्यस्य विवरणम्— 'जेतुं शक्य' इति। अस्येत्यर्थे इति। 'ब्रह्मचर्यं चेत्तत्कालपरिच्छेद्यमि'त्यपि[2] बोध्यम्। यद्वेति। अत्र पक्षे 'ब्रह्मचर्यं चेद्विशेष्यमि'त्यर्थः।

मासोऽस्येति। अत्र वाक्ये मासस्य प्राधान्यात्प्रथमा, न त्वत्यन्तसंयोगे द्वितीया। तस्याः षष्ठीविषये विधानेन, विशेषणादेव विधेः। भाष्यन्तु 'यद्वे'त्यादिपक्षपक्षपात्येव। तत्र हि 'तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसङ्ख्यानम्'। 'महानाम्नीनां ब्रह्मचर्यं-माहानाम्निकम्'। 'आदित्यव्रतिकम्'। 'तच्चरतीत्यर्थे च तेभ्य उपसङ्ख्यानम्'। 'महानाम्नीसहचरितं व्रतं महानाम्न्यः', 'तच्चरति-माहानाम्निक' इत्युक्तम्। यद्यपि 'महानाम्न्योऽस्य ब्रह्मचर्यस्ये'ति विग्रह उचितः, तथाऽपि[3] यस्य महानाम्न्यः सम्बन्धिन्यः, तन्महानाम्नीनां सम्बन्धि भवत्येवेति,—'तस्य ब्रह्मचर्यमि'त्येव सूत्रं कार्यमित्याशयः[4]।

---

१ इतोऽग्रे—'आरम्भसामर्थ्येन हि चाऽनुकृष्टस्वस्य निवृत्तिरेव स्यात्' इति ख. ङ. पाठः।　　२ 'चेत् गम्यमित्यपि बोध्यम्' इति घ. पाठः।

३ 'तथापि तुल्यवित्तिवेद्यत्वात् 'महानाम्नीनामि'त्येव विगृहीतम्। यद्वा यस्य महानाम्न्यः' इति घ. पाठः।

४ इतोऽग्रे—'एवञ्च वृत्तिवाक्ययोः समानार्थत्वमपि निर्वहतीत्यपरमनुकूलम्।

नामेति। अनेन महानाम्न्यादिशब्दानां रूढत्वं दर्शयति। एवं च भाषितपुंस्कत्वाऽभावात् 'भस्याऽढे' इति पुंवत्त्वं न। इदमेव हरदत्तमतेऽरुचिबीजम्। अत एव भाष्यकृता 'माहानाम्निकमि'त्यकृतपुंवद्भावमेवोदाहृतम्। 'अवान्तरदीक्षादिभ्यश्चरत्यर्थे डिनिर्वक्तव्यः'। 'अवाऽन्तरदीक्षी'। 'तिलव्रती'। मत्वर्थीयेनिनाऽपीदं सिद्धम्। 'अष्टचत्वारिंशतो ड्वुंश्च'। चात् डिनिः। 'अष्टचत्वारिंशतं वर्षाणि व्रतं चरति अष्टचत्वारिंशकः'। 'अष्टचत्वारिंशी'। 'चातुर्मास्यानां यलोपो, ड्वुन्-डिनी च'। 'चातुर्मास्यानि चरति-चातुर्मासकः', 'चातुर्मासी'ति। स्पष्टं चेदं भाष्ये।

तस्य दक्षिणा। 'यज्ञवाचकेभ्यः षष्ठ्यन्तेभ्यो दक्षिणेत्यर्थे ठञि'त्यर्थः।

तत्र च दीयते कार्यम्। 'कालवाचिभ्यो 'दीयते' 'कार्यमि'त्येतयोरर्थयोर्भववत्प्रत्यया' इत्यर्थः। तदाह—प्रावृषि दीयते कार्यं वेति। 'प्रावृष एण्यः'। शारदम्। 'सन्धिवेलाद्यृतुवि'त्यण्। इदं च वृत्त्यनुरोधात् व्याख्यातम्। वस्तुतस्तु चकारो भिन्नक्रमः, 'दीयते' इत्यनन्तरं बोध्यः। चकारेण च 'यज्ञाख्येभ्य' इत्याकृष्यते। 'तत्र दीयते' इत्यर्थे यज्ञाख्येभ्यः ठञ् भवती'त्यर्थः। 'अग्निष्टोमे दीयते-आग्निष्टोमिकं भक्तम्'। कार्यरूपाऽर्थे

'तदस्ये'ति सूत्रे उभयोपादानसामर्थ्यात्तन्त्रेण वाक्यार्थद्वयं सूत्रस्य। महानाम्न्यादिषु तु सामर्थ्यात्षष्ठी समर्थविभक्तिरित्याशयेनाह-षष्ठ्यन्तेभ्य इति। एवञ्च तच्चरतीत्यादिवचनाऽन्तरं न कार्यमिति तु वृत्त्याद्याशयः' इति घ. पाठः। 'इत्येव सूत्रं कार्यमित्याशयः। वृत्त्याद्याशयस्तु 'तदस्ये'ति सूत्रे उभयोपादानसामर्थ्यात्तन्त्रेण वाक्यद्वयं सूत्रस्य। तत्राऽऽद्यपक्षे सामर्थ्यात्षष्ठी समर्थविभक्तिः। द्वितीये तु प्रथमैव। एवं च 'तच्चरती'त्यादिवचनाऽन्तरं न कार्यमिति' इति ख. ङ. पाठः।

१ 'महानाम्निकम्' इति सर्वेषु आदर्शेषु पाठः।

२ 'चातुर्मासिकः' इति सर्वेषु आदर्शेषु पाठः।

३ इतोऽग्रे 'अन्यत्र चकारकरणसामर्थ्यादेव वाक्यभेदः' इति घ. पाठः।

एव भववदतिदेशः। एतच्च भाष्यकैयटयोः स्पष्टम्। न चैवमपि कार्येऽतिदेशो व्यर्थः[2], तत्रकार्यस्य तत्रभवत्वादिति वाच्यम्। कर्त्तुं योग्यादेरकृतस्याऽपि कार्यपदाऽर्थत्वेन, तस्य तत्रभवत्वाऽभावात्[3]। 'द्वैमासिक' इत्यत्र लुगभावाऽर्थं चेदमावश्यकम्। यथाकथञ्चित्कालवाचकानामपि कालग्रहणेन ग्रहणस्य उभयत्राऽपि भाष्ये उक्तत्वेन, उभयोरपि ठञोः[4] प्राप्तेः। एतेन 'वतिः सर्वसादृश्याऽर्थः। तेनाऽत्र तदन्तविध्यभावः। तेन द्विमासादिभ्यो न ठञि'ति परास्तम्। तदन्तविधिं विनाऽपि प्राप्तेः।

नन्वेवमपि तत्रदीयमानस्य तत्रभवत्वात्, 'ऋतुयज्ञेभ्यश्चे'त्यनेनैव सिद्धे, 'तत्र च दीयते'इत्यंशो व्यर्थ इति चेन्न। तत्र 'व्याख्यातव्यनाम्न' इत्यस्याऽनुवृत्तेः। किञ्च द्वैवाजपेयिको न सिद्ध्येत्। भवाऽधिकारे तदन्तविध्यभावात्। अत्र तु 'सङ्ख्यापूर्वपदानामि'ति वाचनिकः सः। प्राग्दीव्यतीयत्वेन लुगापत्तेश्च।

व्युष्टादि। व्युष्टम्—दिवसमुखम्। 'आकृतिगणोऽयमि'ति गणरत्नकृत्। सङ्घातादिति। वचनसामर्थ्याद्वाक्यादपि प्रत्यय इति भावः।

सम्पादिनि। गुणोत्कर्षः–सम्पत्तिः। आवश्यके णिनिः।

सम्पादि। 'गुणोत्कर्षवदि'त्यर्थः। प्रभवतीति। 'समर्थ' इत्यर्थः।

ऋतोरण्। 'उपवस्त्रादिभ्य उपसङ्ख्यानम्'। 'उपवस्ता प्राप्तोऽस्य–औपवस्त्रम्'। स्पष्टं चेदं व्युष्टादिसूत्रे भाष्ये।

---

१ इतोऽग्रे—'अत एव भाष्ये वृत्त्युक्तसूत्राऽर्थं मत्वा, 'दीयते''कार्य'योरर्थयोस्तत्रभवेन सिद्धत्वात्सूत्रवैयर्थ्यमि'त्याशङ्क्य, 'एवं तर्हि योगविभागोत्तरकालमिदं पठितव्यम्—'तस्य दक्षिणा यज्ञाख्येभ्यः'। 'तत्र च दीयते'। ततः 'कार्यं भववत्'। 'कालादि'त्युक्तम्' इति ख. घ. ङ. पाठः।

२ 'कार्येऽतिदेशस्य व्यर्थत्वात्सिद्धान्ते तदुल्लेखो व्यर्थ इति वाच्यम्' इति घ. ख. ङ. पाठः।

३ इतोऽग्रे—'तत्र हि 'भू'धातुः सत्ताऽर्थक इत्याशयात्' इति ख. घ. ङ. पाठः।

४ 'ठञोः प्राप्तेरित्याहुः' इति ख. घ. ङ. पाठः।

काल्यं शीतमिति । प्रातःकालवाचि-'काल्य'शब्दस्तु तद्वाचि-'कल्य'-शब्दवद्व्युत्पन्नं प्रातिपदिकमिति बोध्यम् ।

प्रकृष्टे ठञ् । 'प्रकृष्ट' इति कर्मणि क्तः । ठञ्ग्रहणं स्पष्टाऽर्थम् । अन्यथाऽनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत । इन्द्रमहः = इन्द्रोत्सवः ।

वैशाखो मन्थ इति । विलोडनदण्डाऽऽधारः काष्ठविशेषो 'मन्थः' । रूढिशब्दावेतौ कथञ्चिद्व्युत्पाद्येते इति बोध्यम् । चूडादिभ्य इति । इदं व्युष्टादिसूत्रे भाष्ये स्पष्टम् । आकृतिगणोऽयम् ।

अनुप्रवचनादि । 'अयमाकृतिगण' इति गणरत्नकृत् । 'वेशन-पूरण-पदन रोहणेभ्यः सपूर्वेभ्य उपसङ्ख्यानम्' । 'प्रवेशनीयम्' 'गृह-प्रवेशनीयमि'त्यादि । 'स्वर्गादिभ्यो यत्' । 'स्वर्ग्यम्' । 'धन्यम्' । 'यशस्यम्' । 'आयुष्यम्' । 'पुण्याहवाचनादिभ्यो लुग्वक्तव्यः' । 'पुण्याहवाचनम्' । 'शान्तिवाचनम्' । 'स्वस्तिवाचनम्' । स्वर्गादि-पुण्याहवाचनादी आकृतिगणौ ।

'एवं च संवेशनादीनां गणे पाठः प्रपञ्चाऽर्थः, । 'वेशने'त्यादि वार्त्तिके-नैव सिद्धेरि'ति हरदत्तः ।

ऐकागारिकट् । 'चौर एवे'ति नियमाऽर्थम् । तेन भिक्षौ न । अन्यथा ठञैव सिद्धं स्यात् । टित्त्वं ङीबर्थम् । आद्युदात्तत्वमप्यत्र निपात्यते इति बोध्यम् । अत एव 'एकागाराच्चौरे' इत्येव सूत्रयितुमुचितम् । ठञैव सिद्धे-रि'ति भाष्योक्तं सङ्गच्छते । समानकालस्येति । एतदर्थमेव निपातनम् । अयमप्याद्युदात्तो बोध्यः । भाष्यप्रामाण्यात् । आद्यन्तौ = उत्पत्तिनाशौ ।

'आकालाट्ठश्चे'ति वार्त्तिकम् । नित् अयम् । आकालोऽत्राऽपि समानकालाऽऽदेश एव । ठञः पूर्णोऽवधिः ॥

---

१ इतोऽग्रे-'यत्तु 'विशि-पूरि-पदि-रुहि-प्रकृतेरनात्सपूर्वादुपसङ्ख्यानमि'ति भाष्ये वचनम् । 'पती'ति पाठाऽन्तरम् । तत्र 'कृद्ग्रहणे गतिकारकपूर्वस्या-ऽपि ग्रहणमि'ति, प्रवेशनीयं, गृहप्रवेशनीयमित्युभयोः सिद्धिर्बोध्या' इति ख. घ. ङ. पाठः, क. कुण्डलितः ।

## अथ भावकर्मार्थप्रकरणम् ।

**तेन** तुल्यं क्रिया **चेद्वतिः** । सूत्रे 'तुल्यमि'ति सामान्ये नपुंसकं प्रथमाऽन्तम्[1] । उदाहरणे च । व्यापारविशेषणत्वात् । क्रियापदं-संनिहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययाऽर्थस्यैव विशेषणम् । 'यत्तुल्यं सा चेत् क्रिया भवती'त्यर्थः । प्रकृत्यर्थविशेषणत्वे[2] तु ब्राह्मणादिशब्दानां लक्षणयाऽध्ययनपरत्वेऽपि, तत्र तृतीयार्थोऽन्वयेन सत्त्वरूपतया क्रियात्वाऽसम्भवः । पाकादीनां तु, शयितव्यादीनां च तृतीयाद्यर्थान्वयेन, सत्त्वरूपता स्पष्टैव । किञ्च भूतपूर्वगत्याऽध्ययनादीनां[3] क्रियात्वसम्भवेऽपि, तदाश्रयणे गौरवम् । किञ्चैवमुपमेयक्रियाया अपि भूतपूर्वाया ग्रहणाऽऽपत्तौ, वत्यन्तार्थस्य लिङ्गसङ्ख्याद्यन्वयित्वेनाऽव्ययत्वाऽनापत्तिः । पाठसामर्थ्यात् तत्कल्पने गौरवमिति भाष्ये स्पष्टम् ।

**ब्राह्मणेनेति** । ननु जातिविशिष्टद्रव्यं ब्राह्मणशब्दाऽर्थो, न च तेन क्रियायास्तुल्यत्वम्, अत्यन्तभेदादिति चेन्न । ब्राह्मणादिशब्दानां तत्कर्तृकाऽध्ययनादिषु निरूढलाक्षणिकत्वेनाऽदोषात् । सौष्ठवादिश्च साधारणो धर्म इति बोध्यम् । 'तुल्य'शब्देन च सादृश्यविशिष्ट उच्यते । तदेकदेशे सादृश्ये तृतीयान्ताऽर्थस्य प्रतियोगितयाऽन्वयः, व्युत्पत्तिवैचित्र्यात् ।

न चैवं 'ब्राह्मणवदधीते' इत्यादावेव स्यात्, न तु 'नृत्यवद्गमनमि'त्यादौ, तत्र गमनस्य सत्त्वभूतत्वेन क्रियात्वाऽभावादिति वाच्यम् । 'अस्ती'त्यध्याहृत[4]सत्तयोरेवोपमानोपमेयभावेनाऽदोषात् । न चैवमपि क्रिया क्रिययैव

---

१ इतोऽग्रे—'उदाहरणे तु क्रियाविशेषणत्वात् द्वितीयान्तम्, प्रथमान्तं वा' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

२ 'एतेन प्रकृत्यर्थविशेषणमित्यपास्तम्' इति घ. पाठः ।

३ 'भूतपूर्वगत्या तेषां क्रियात्वसम्भवेपि' इति ग. पाठः ।

४ 'अध्याहृत्य' इति ख. घ. ङ. पाठः ।

तुल्या भवतीति, तृतीयासमर्थस्याऽपि क्रियात्वमावश्यकम्। तत्र यद्यपि मुख्यक्रियावाचिभ्यो धातुभ्यो न। प्रातिपदिकत्वाऽभावात्। अत एव तिङन्तान्न। तदर्थे उपमानत्वाऽभावस्य कारके उपपादितत्वाच्च। 'कृत्वा'-'हृत्वे'त्यादिभ्योऽपि न। धातुसम्बन्धाऽधिकारे तेषां विधानेन, तुल्य-शब्दार्थेऽनन्वयात्। तथापि 'स्थातव्येन तुल्यं[1] गच्छति, मन्दत्वादि'त्या-दावेव स्यादिति[2] वाच्यम्[3]। तृतीयासमर्थस्य सामर्थ्येन क्रियोपमानत्व-योग्यार्थकत्वलाभेऽपि, क्रियात्वलाभे मानाऽभावात्। तच्च तस्य सत्त्वभूत-त्वेऽप्यक्षतमेव। भाष्ये वत्प्रत्ययाऽर्थविशेषणपक्षे 'तृतीयासमर्थोऽपि क्रिये'-त्युक्तम्। तस्याऽपि 'अयमेवाऽर्थः क्रियोपमानत्वयोग्य इत्यर्थ' इत्यदोषात्।

अत एव 'यत्तृतीयासमर्थं क्रिया चेदि'त्यर्थे तृतीयासमर्थस्य क्रियात्वं कथं स्यादि'त्युक्तं भाष्ये। यत्तु कैयटेन 'स्थातव्यादीनां साधारणधर्मान्व-यित्वे क्रियात्वहानिरि'ति भाष्याशय उक्तः। तन्न। भाष्यात्तृतीयासमर्थ-त्वस्यैव क्रियात्वाऽभावे नियामकत्वलाभात्। किञ्च तदन्वये यथा कारका-ऽन्वयस्तथा वतिरपि दुर्वारः। यदि तु साधारणधर्माऽऽधारत्वेन क्रियात्व-हान्या कारकाऽन्वयो न स्यादिति, तदाधारत्वमेव नेति कैयटाऽऽशयः, तर्हि उपमेये 'अधीते' इत्यादावपि कारकाऽन्वयाऽनापत्तिरिति दिक्।

गुणतुल्ये इति। 'गुण'पदम् अक्रियोपलक्षणम्। गुणादीनां तुल्यत्वे

---

१ 'तुल्यं गमनम्' इति घ. पाठः।

२ इतोऽग्रे—'न तु ब्राह्मणवदित्यादौ लाक्षणिके स्यादितिवाच्यम्' इति घ. पाठः।

३ इतोऽग्रे—'सन्सूत्रस्थभाष्यप्रामाण्येन तिङन्ताऽर्थभूतमुख्यक्रियायाः सादृश्ये प्रतियोगितयाऽन्वयाऽभावेन लिङ्गाद्यन्यतमाऽन्वयिकृदन्तार्थस्यैव तत्र तथा-ऽन्वयेन तस्याऽपि सत्त्वरूपत्वात्। नचैवमध्ययनादेरपि सादृश्याऽन्वयित्वेन सत्त्वरूपत्वे, तुल्यप्रतियोगिनो न क्वाऽपि क्रियात्वमिति, सूत्राऽसङ्गतिरिति वाच्यम्, सामर्थ्येन भूतपूर्वगत्याश्रयणात्। ध्वनितं चेदं सर्वं भाष्यकैयटयोः' इति घ. पाठः।

मा भूदित्यर्थः। यद्वा–'गुणकृतं यदा द्रव्ययोस्तुल्यत्वं, तदा मा भूदि'त्यर्थः। आद्ये 'पुत्रेण तुल्यम् अस्य स्थौल्यम्', 'ब्राह्मणेन तुल्याऽस्य गौरि'त्यादि।

द्वितीये उदाहरति—पुत्रेणेति। 'ब्राह्मणवदस्य गौरि'त्यादिप्रयोगास्तु क्रियाऽध्याहारेण 'ब्राह्मणसम्बन्धिगोकर्तृकसत्तावत् एतत्सम्बन्धिगोसत्ते'त्यर्थे एव साधवः, नाऽन्यथा। अत एव 'महानसवदि'ति वतेः साधुत्वरक्षणाऽर्थं प्रतिज्ञावाक्ये 'वह्निमान् भवितुमर्हती'त्यादिक्रियापदं प्रयुञ्जते वृद्धाः। नव्यास्तु 'महानससदृशः पर्वत' इति व्याचक्षाणाः सूत्रविरोधादुपेक्ष्याः।

ननु तथाऽव्युत्पन्नानां तथाबोधोऽनुभवसिद्ध इति चेत्। सत्यम्। तादृशेऽर्थे साधुत्वमात्रं निराकुर्मो, न तु बोधमपि।

'भेद्यभेदकसम्बन्धोपाधिभेदनियन्त्रितम्।
साधुत्वं, तदभावेऽपि बोधो नेह निवार्यते'॥

–इति वृद्धोक्तेः। 'भेद्यम् = विशेष्यम्। भेदकम् = विशेषणम्। सम्बन्धः = तयोः संसर्गः। उपाधिः-पश्वादिः। अव्युत्पन्नस्य साधुभ्योऽप्यबोधात्, तत्रैव व्युत्पन्नस्याऽसाधुभ्योऽपि बोधाच्च 'कस्मात्किं बुध्यते' इति नियन्तुम् अशक्यम्। किन्तु 'किंविशेष्यके, किंप्रकारके, किंसंसर्गके बोधे उद्देश्ये किं साधु, किं ने'त्येव शास्त्रविचारविषय' इति तदर्थः।

उक्तं च भाष्ये–'समानायामर्थाऽवगतौ शब्दैश्चाऽपशब्दैश्च शास्त्रेण भक्ष्याऽभक्ष्यादिवन्नियमः क्रियते' इति।

तत्र तस्येव। यद्यपि 'मथुरायामिव पाटलिपुत्रेऽधीते' इत्यत्र पूर्वेणैव सिद्धम्, तस्य, 'मथुरया तुल्यमधीते' इत्यस्य च तुल्यत्वात्, तथापि द्रव्यगुणादितुल्याऽर्थ आरम्भः। 'क्रिया चेदि'ति तु नाऽनुवर्त्तते।

मथुरायामिवेति। अत्र वाक्ये प्राकारादिपदाऽध्याहारेणैव बोधः। प्राकारयोरेव चोपमानोपमेयभावः।

---

१ इतोऽग्रे—'वृत्तौ तु मथुरादिपदानां तत्सम्बन्धिप्राकारादौ लक्षणा, तदन्तर्भावेणैकाऽर्थीभावो वा। तत्र वाक्ये प्राकारादिसम्बन्धे षष्ठ्यां सिद्धायामपि,

किञ्च इवाऽर्थस्योपमानविशेषणतयाऽनेन वतौ 'उपमानमथुराप्राकाराऽभिन्नः पाटलिपुत्राऽधिकरणकः प्राकार' इति बोधः। प्राकाराऽन्तर्भावेण चैकार्थीभावः। एवम् 'उपमानमथुराऽभिन्ने पाटलिपुत्रे मे गृहमि'त्यर्थे 'मथुरावत्पाटलिपुत्रे मे गृहमि'त्यपि साधुः। पूर्वेण वतौ तु 'मथुराप्राकारसत्तासदृशी पाटलिपुत्राऽधिकरणकप्राकारसत्ते'ति बोध' इतिभेदः। सर्वं चेदं भाष्ये स्पष्टमिति भाष्यप्रदीपोद्द्योते निरूपितम्। वृत्त्यन्तर्भूतमधिकरणत्वं न शक्तिविशेषरूपमिति, न तस्य क्रियाऽऽकाङ्क्षत्वेनाऽसामर्थ्यं शङ्क्यम्। आधेयाऽन्वयद्वारैव क्रियाऽन्वये तस्य साधुत्वेन वा।

तदर्हम्। 'अर्हमि'ति पचाद्यजन्तम्। तद्योगे कर्मणि षष्ठीप्राप्तौ, सौत्रो विभक्तिव्यत्ययः। एवं च द्वितीयान्तादेव प्रत्ययः। तद्ध्वनयन् स्फुटत्वाय तिङन्तेन विग्रहमाह—विधिमर्हतीति। न च 'यथावद्विहिताऽध्वराय' 'यथावत्ख्यातवृत्ताये'त्याद्यनुपपन्नमिति वाच्यम्। वृत्तिविषये 'यथा'शब्दस्य सत्त्वाऽर्थकत्वेन द्वितीयान्तादर्हाऽर्थप्रत्ययेनाऽदोषात्।

एवमेव 'तथात्वम्' 'यथात्वमि'त्युपपद्यते। 'योग्यतामर्हति यद्विधानम्,

तत्रैव विषये सप्तमी, अत एव ज्ञापकादिति बोध्यम्। अधिकरणसप्तम्यन्तात्तु ज्ञापकपरभाष्यप्रामाण्यान्नेष्यते एव प्रत्ययः। किन्तु षष्ठ्यर्थसप्तम्यन्तादेवेत्याहुः। एतेन 'कारकाणां क्रियान्वयित्वेन द्रव्यगुणादितुल्यत्वे, असामर्थ्यात्सप्तम्यन्तेन वृत्तिर्दुर्लभे'त्यपास्तम्। [1]मथुरास्रुघ्नयोरुपमानोपमेयभावस्त्वार्थं एव' इति ख.घ.ङ.पाठः। क. कुण्डलितः, आदौखण्डितश्च पाठोऽयम्।

१ अत्र, पूर्वत्र, अग्रे च सर्वत्र 'मथुरा'स्थाने 'मधुरा' इति पाठः क. ग. पुस्तकयोः। क्वचित् 'मथुरा' इति स शोधितश्च।

२ 'विभक्तिव्यत्यय इत्येके। अन्ये तु 'कर्तृकर्मणोरि'ति षष्ठ्यनित्यत्वे लिङ्गमिदम्। अत एव 'तत्रेव तस्य अर्ह'मिति न सूत्रितम्। निरूपितं चेदं षष्ठीविधायके इत्याहुः। एवञ्च द्वितीयान्तादेव प्रत्ययः' इति घ. पाठः।

1 'मथुरापाटलिपुत्रयोः' इति घ. पाठः। 'मधुरा' इत्यपि पाठान्तरम्।

आख्यानं वा तत्कर्मणे' इत्यर्थात् क्रियायोगोऽपि सुलभः। विधिवदिति । 'विधिकर्मकयोग्यताकर्तृहरिकर्मकं देवदत्तकर्तृकं पूजनमि'ति बोधः।'विधि'-शब्देन विध्युक्तप्रकारादिसादृश्याऽप्रतीतेः पूर्वेणाऽसिद्धिरिति बोध्यम् ।

क्रियाग्रहणमिति । तथा च भाष्यम्–'द्वितीयासमर्थात्कर्मोऽर्हक्रियायाम्, अर्हतिकर्तृभूतायां प्रत्यय' इति । न च 'यो विधियोग्यपूजनाऽऽश्रयः, स विधिपूजनसदृशपूजनाऽऽश्रयोऽपी'ति, 'तेन तुल्यमि'त्यादिनैव सिद्धमिति वाच्यम् । यदा किञ्चन वृत्तं प्रसिद्धमेवाऽन्यनिवृत्त्यर्थं पुनरुपादीयते, 'राजानमेतदर्हति वृत्तम्, न त्वराजानमि'ति, तदा वत्यर्थं सूत्रस्याऽऽवश्यकत्वात् । उपमानत्वाऽविवक्षायां तच्चारितार्थ्याच्च । यथा 'विनीतवदागमनम्' 'चिच्छेद कृतहस्तवदि'त्यत्र 'विनीतानामिदं योग्यमागमनम्' 'कृतहस्तानामिदं योग्यं छेदनमि'ति प्रतीयते इत्याहुः ।

तस्य भावः । 'भावे चाऽकर्मकेभ्यः' 'भावे' इत्यादौ भावपदार्थस्य अन्यादृशस्य प्रसिद्धत्वादाह–प्रकृतीति । भावपदार्थलक्षणमिदम् । 'भवन्ति = अर्थबोधाय प्रवर्त्तन्तेऽनेने'ति 'भाव' इति करणे घञिति भावः । अत एव 'घटत्वमि'त्यादौ द्रव्यत्वादीनां न भावत्वम् ।

प्रकार इति । 'मुख्यविशेष्यतानिरूपितविषयताऽऽश्रय' इत्यर्थः । तेन 'राजपुरुष' इत्यादौ राजत्वादेः प्रकारत्वेऽपि न क्षतिः । स च प्रवृत्तिनिमित्तभूत एव गृह्यते ।

अत एव 'शाब्दबोधे शब्दस्याऽपि भानमि'तिवादिनां मते 'घटत्वमि'त्यादौ न शब्दे भावप्रत्ययः । 'नानात्वम्' 'यौगपद्यमि'त्यत्राऽपि नानाऽऽदिशब्दजन्यबोधप्रकारोऽसहभावो, युगपद्भावश्चाऽर्थः ।

---

१ 'तत्कर्माऽध्वरादिसम्बन्धिने' इत्यर्थात्' इति लघुशब्दरत्नपाठः ।

२ 'मित्याद्यर्थात्' इति ख. ध. ङ. पाठः ।

३ 'विध्युक्तद्रव्यम् । सादृश्याऽप्रतीतेः' इति घ. पाठः ।

४ 'निरूपितप्रकारताऽऽश्रय इत्यर्थः' इति ख. घ. ङ. पाठः ।

संज्ञाशब्दे च शब्द एव प्रवृत्तिनिमित्तमिति तत्रैव भावप्रत्ययः। 'कुत्वं कस्मान्न भवती'त्यादौ कुशब्द[1]स्वरूपशक्तस्य 'कुत्व'पदस्य तद्बोध्येषु लक्षणया न दोषः। 'पाचकः' 'औपगवः', 'राजपुरुषः' इत्यादौ क्रियाकारकभावसम्बन्धस्य, षष्ठ्यर्थसम्बन्धस्य च वृत्तौ प्रवेशेन, (संसर्ग[2]स्याऽपि तस्य प्रकारतयैव भानात्, ) स एव प्रवृत्तिनिमित्तमिति, तत्रैव भावप्रत्ययः।

'प्रकार' इति चोपलक्षणं, संसर्गस्याऽपि। प्रवृत्तिनिमित्तत्वं च यत्र बुद्धिस्थे सति विशेष्यभूताऽर्थबोधनाऽर्थं शब्दस्य प्रवृत्तिः=प्रयोगः, तत्त्वम्। क्वचिच्च प्रकारस्य तत्त्वम्। क्वचित्संसर्गस्य। न हि राजनि बुद्धिस्थेऽपि 'राजपुरुष' इतिप्रयोगः, किन्तु तत्सम्बन्धे एवेति मञ्जूषायां निरूपितम्। तदुक्तं हरिणा-'कृत्तद्धितसमासेभ्यो भावप्रत्ययेन सम्बन्धाऽभिधानमि'ति। न्यायसिद्ध एवाऽयमर्थः[3]।

इदमपि प्रायिकम्। 'कृष्णसर्पत्वम्' 'पटे शुक्लत्वम्' 'सत्ता' इत्यादौ जातिगुणबोधस्यैवाऽनुभवसिद्धत्वात्। धर्मत्वेन च प्रवृत्तिनिमित्तं शक्यम्। '[4]प्रकृतिजन्ये'त्यादि तु तस्यैवोपलक्षकम्।

वस्तुतः प्रकृतिजन्यबोधप्रकारो यस्तस्यैव धर्मत्वेन भानात्, संसर्गस्यापि विशेष्यत्वेन भानम्। धर्मत्वेन प्रकारस्येति बोध्यम्,। तत्र घटादिपदाऽर्थो जातिविशिष्टा व्यक्तिः। सा[5] च उद्भूतभेद-तादात्म्य-सम्बन्धेन प्रकारः।

---

१ 'कुशब्दरूप' इति क. पाठः।

२ अयं ख. घ. ङ. पाठः।

३ इतोऽग्रे—'न च कृति न सम्बन्धस्य प्रवृत्तिनिमित्तत्वम्, कर्तृत्वादेः क्रियाकारकसम्बन्धरूपत्वमि'त्यभिमानात्। तत्राऽप्येकार्थीभावाऽङ्गीकाराच्च' इति ख. घ. ङ. पाठः।

४ 'प्रकृतिजन्ये'त्यादिस्तु प्रयोगोपाधिः' इति ख. घ. ङ. पाठः।

५ 'सा च आधारतानिरूपितवृत्तित्वसम्बन्धेन' इति ख. घ. ङ. पाठः।

आकाङ्क्षावशात् । एवं च 'घटत्वमि'त्यादौ 'तेन सम्बन्धेन घट[1]सम्बन्धी धर्म' इत्येव बोधः । 'सत्त्वमि'त्यादौ तु समवेतत्वमात्रमेव सम्बन्धः । 'प्रमेयत्वमि'त्यादौ स्वरूपमेव सम्बन्ध इत्याद्यूह्यम्[2] ।

तदुक्तं भाष्ये—'यस्य गुणस्य भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलावि'ति । 'गुण'पदं धर्ममात्रोपलक्षणम् । 'द्रव्य'पदं चाऽऽश्रयोपलक्षणम् । तदभिधाने = द्रव्यवृत्तितादृशधर्माऽभिधाने[3] ।

यत्तु 'प्रकृतिर्लक्षणया शब्दपरा प्रकारः त्वाऽऽद्यर्थः । जन्यबोधनिरूपितत्वं संसर्गः । तेन 'घटत्वमि'त्यादौ 'घटशब्दजन्यबोधप्रकार' इत्यर्थः । सूत्रेऽपि 'तस्ये'ति शब्दपरमि'ति पक्षान्तरं भाष्ये दृश्यते, तत्तु[4] प्रौढ्येति, भाष्यप्रदीपोद्द्योते निरूपितम् । प्रकृतेर्लक्षणायां मानाऽभावात् ।

किञ्च 'तस्ये'त्यस्याऽत्र शब्दपरत्वे, 'गुणवचने'ति सूत्रे 'कर्मणी'त्यनेनाऽन्वयो न स्यात् । तत्राऽर्थपरत्वे शब्दाऽधिकाराऽऽपत्तिरिति दिक् ।

अत्रेदं बोध्यम्—'अब्राह्मणत्वमि'त्यादौ पूर्वं नञ्समासे, ततस्त्वप्रत्ययेऽन्तोदात्तत्वम्[5] । पूर्वं प्रत्यये, पश्चान्नञ्समासे त्वाद्युदात्तत्वम्[6] । यदा

१ 'घटवृत्तिधर्मः' इति ख. घ. ङ. पाठः ।

२ इतोऽग्रे—'ब्रह्मसत्तैव जातिरि'ति पक्षेऽपि तस्या उपाधिभेदेन भिन्नत्वात्, न दोषः' इति ख. घ. ङ. पाठः ।

३ इतोऽग्रे—'एवं च केवलव्यक्तिशक्तिवादेऽपि न दोषः । अपरे तु 'विशिष्यैव तेषु शक्तिः । तथैवाऽनुभवात् । शक्यतावच्छेदकं च तादात्म्येन तदेव । निरवच्छिन्नैव वा शक्तिः । न च नानार्थताऽऽपत्तिः । इष्टापत्तेरि'त्याहुः' इति ख. घ. ङ. पाठः ।

४ 'तत्तु 'गुणसमूहो द्रव्यम्, संज्ञाशब्दे च व्यक्तिमात्रबोधकत्वमि'तिवादिनां मते प्रकृतिप्रत्यययाऽर्थयोर्भेदोपपादनपरं प्रौढयेति' इति ख. घ. ङ. पाठः ।

५ इतोऽग्रे—'आरोपश्च नञर्थः' इति घ. पाठः ।

६ इतोऽग्रे—'ब्राह्मण्ये चाऽऽरोपाऽन्वयः । न च आद्यपक्षेपि आरोपितब्राह्मण्य

तु युगपद्भाव-नञर्थयोर्विवक्षा, तदा नञ्सापेक्षत्वात्पूर्वं प्रत्ययाऽप्राप्तौ, नञ्समासोत्तरं त्वतलोः सतिशिष्टत्वात्त्वतलस्वरेणैव व्यवस्था। युगपद्विवक्षायामन्ये भावप्रत्ययास्तु साऽपेक्षत्वेऽपि पूर्वमेवेति स्पष्टं भाष्ये। तेन 'अशौक्ल्यमि'त्यादिसिद्धिः। अत्राऽवयवद्वारकं सामर्थ्यं भावप्रत्ययाऽन्तेनेति 'शुक्लाभिन्नभाव' इत्यर्थेऽपि 'शौक्ल्य'शब्देन नञः समासो बोध्यः। एतत्सर्वं लक्ष्याऽनुरोधाद्व्यवस्थितमिति स्पष्टं कैयटादौ।

अपवादैरिति। अन्यथाऽपवादविषयेऽस्याऽनुपस्थितिः स्यात्, निराकाङ्क्षत्वादिति भावः। **चकार** इति। अन्यथाऽपत्याद्यर्थविहितप्रत्ययानामिव, एतयोरपि तौ बाधकौ स्यातामिति भावः। 'पुंस्त्वमि'त्यादौ 'ह्रस्वात्तादावि'ति षत्वं तु न। सवनादिष्वनयोः पाठादित्याहुः।

**न नञ्पूर्वात्तत्पु**। अधिकारसूत्रमेतत्। तत्र गृह्यमाणप्रातिपदिकात् विधीयमानानां तदन्ते प्राप्त्यभाव इत्याशयेनोदाहरति—अपतित्वमिति। 'पत्यन्ते'ति, 'इगन्ताच्चे'ति च क्रमेण यक्-अणौ प्राप्तौ

---

मेव त्वप्रत्ययार्थः, प्रकृतिजन्यप्रकारत्वादिति बोधाऽविशेषः। आरोपितब्राह्मण्यसमनियते ब्राह्मणभेदे भावप्रत्ययस्य सत्वात्, 'गोतर' इत्यादौ तरादिवदिति भाष्याशयः' इति घ. पाठः।

१ 'विवक्षात्वम्' इति क. पाठः। 'विवक्षाऽर्थः' इति ग. पाठः।

'युगपद्भावनञर्थयोर्विवक्षा। 'विशेष्ये विशेषणं, तत्र च विशेषणान्तरमि'ति न्यायेन च बोधः। त्वप्रत्ययेन च ब्राह्मणयोग्या क्रिया शूद्रवृत्तिर्बोध्यते, तदा नञ्सापेक्षत्वात्' इति घ. पाठः।

२ इतोऽग्रे—'अत्र क्वचित्पूर्वं भावविवक्षैव, क्वचित्पूर्वं निषेधविवक्षैव, क्वचिद्युगपदुभयविवक्षैव, क्वचिदनियम' इत्यादि लक्ष्याऽनुरोधाद्व्यवस्थितम्' इति घ. पाठः।

३ इतोऽग्रे—'अचतुरे'त्याद्यंशस्तु कैयटे प्रत्याख्यातः। ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधात्ष्यञोऽप्राप्त्या, विशिष्टानामाकृतिगणत्वाद्गणे पाठ-

आपटचमिति । 'उत्तरो भावप्रत्ययो नञ्पूर्वाद्ब्रहुत्रीहेर्नेष्यते' इत्यादि-भाष्यं 'पत्यन्ते'ति प्राक्तन-'पृथ्वादिभ्यः' इत्यादिसूत्रविषयमेवेति, भाष्य-प्रदीपोद्द्योते निरूपितम् । आचतुर्यमिति । नञ्पूर्वाणामेषामत एव पर्यु-दासाद्गणे पाठाऽनुमानेन ष्यञ् बोध्यः । अन्यथा चतुरादीनां पाठेऽपि ग्रहण-वता प्रातिपदिकेन तदन्तविधिनिषेधान्नञ्पूर्वेभ्यः स न स्यादिति बोध्यम् ।

अणादीति । पृथुमृद्वादिभ्योऽणः, चण्डखण्डादिषु गुणवचनष्यञः, वत्सादिभ्यो वयोवचनाऽञ इति भावः । यत्तु 'बालाद्वयोवचनाऽञ' इति । तन्न । पुरोहितादियका बाधात् । पुरोहितादिपाठश्च स्वरभेदाय, अञो बाधाय चाऽऽवश्यकः । न च तत्र 'वे'ति वर्त्तते । तथा सति गुणवचनसूत्रेऽपि तदनुवृत्त्यापत्तौ 'ब्राह्मण'शब्दादपि 'प्राणभृज्जाति'त्व-प्रयुक्ताऽञ आपत्तेरि'ति वदन्ति ।

रऋतो । हलादेः किम् ? । 'ऋजिष्ठः' । लघोः किम् ? । 'कृष्णिष्ठः' ।

वर्णदृ । गुणवचनत्वादेव ष्यञि सिद्धे, इमनिजर्थं वचनम् । एवेति । तेन 'कृतमाचष्टे कृतयती'त्यादौ णाविष्ठवद्भावे रभावो नेत्याहुः ।

औचिती-याथाकाम्योर्ब्राह्मणादित्वात्ष्यञ् । यत्तु 'दृढादिपठितसंमति-विमतिभ्यामिगन्तत्वादणपी'ति । तन्न । ष्यञा बाधात् । 'वे'त्यनुवृत्तेरत्र वृत्त्यादावनुक्तत्वाच्च ।

गुणवचनब्रा । कर्मेह क्रिया, कार्यं च । 'अर्हत', इति—वार्त्तिकम् । यद्यप्याकडारसूत्रोक्तगुणवचनत्वं न पकादीनां, तथापि ब्राह्मणादेराकृति-

---

मङ्गीकृत्यैव ष्यञः साधनीयत्वात् । अस्मादेव निषेधात्तेषां गणे पाठा-ऽनुमानमेव न स्यादिति, तदंशः स्पष्टप्रतिपत्त्यर्थ इति तु सूत्राऽऽशयः । 'न नञ्पूर्वात्तत्पुरुषादि'त्यंशोऽपि 'पत्यन्ते'त्युत्तरमेव पाठ्यः, न त्वत्र पाठे फलमस्तीति स्पष्टं भाष्ये' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

१　इतोऽग्रे—'आकृतीति । केषाञ्चित्पाठः कार्याऽन्तरायेति बोध्यम् । [1]यथा—'एकभाव-त्रिभावा-ऽन्यभावेभ्यः स्वार्थे विधानाऽर्थः । अत एव 'आन्य-

---

1　'यथाऽर्हतो नुमर्थः' इति घ. पाठः ।

गणत्वात् 'ऐक्यमि'त्यादिसिद्धिः। 'तरतम'शब्दोऽतिशयवति अव्युत्पन्नं प्रातिपदिकम्। (ततोऽनेन ष्यञि 'तारतम्यमि'ति बोध्यम्। 'साधकतममि'-त्यत्र कैयटे ध्वनितमिदम्)।'कवि'शब्दादयोऽप्यत्रैव लक्ष्याऽनुसारात् ज्ञेयाः।

भाष्यन्तु कालशब्दव्यवायादि'ति वार्तिकप्रयोगः [1]सङ्गच्छते। एतेनाऽस्य, 'अविरविकन्यायेने'त्यादेश्चाऽपशब्दत्वं मीमांसकोक्तं परास्तम्। अन्त्यमपि निर्दोषमेव। 'अविः' 'अविकः'—अनयोर्मध्ये विकारादिप्रत्ययः [2]कान्तादेव, नं तु केवलात्। तेन 'आविकं मांसमि'त्येव, न तु 'आवमि'ति व्युत्पादितम्। तत्र 'अविरविक' इति सुबन्तद्वयसमुदाये चरमसुपं विहाय प्राग्भागमनुकृत्य, तथा व्यवहृतं भाष्ये, इति न दोषः। न हि 'विभक्तिविशिष्टमेवाऽनुकर्त्तव्यमि'ति नियमे बीजमस्ति। 'अस्यवामीयम्', 'नासदासीयं ब्रह्मसूक्तमि'ति व्यवहाराच्च। तत्राऽन्त्ये 'आसीदि'ति तकारं विहाय प्राग्भागाऽनुकरणम्। 'प्राग्रीश्वरादि'त्यादावनर्थकैकदेशाऽनुकरणस्य प्रसिद्धत्वात्। यद्वा 'आसीदि'ति तान्ताऽनुकरणे, 'अनुकरणं चाऽनिती'ति निपातत्वादव्ययत्वे, 'अव्ययानामि'ति टिलोपः। यथा चैतत्तथा 'अनुकरणं चाऽनिती'त्यत्र निरूपितम्। न च आकडारसूत्रे प्रातिपदिकमात्रस्य गुणवचनसंज्ञा कृता[3]भाष्ये, 'समास-कृत्-तद्धित-सर्वनाम-सङ्ख्या-संज्ञा-'लिङ्गानां चे'त्यादि-जातिसंज्ञा'—'एकद्रव्योपनिवेशनी संज्ञे'ति–संज्ञाभिर्बाधश्चोक्त इति,-अत्र ब्राह्मणादिग्रहणं व्यर्थम्, 'ऐक्यमि'त्यादिप्रयोगाऽसिद्धिश्चेति वाच्यम्। समासादिसंज्ञाविषयार्थं, प्राणभृज्जात्यादिलक्षणप्रत्ययबाधनार्थं, युवाद्यण्समावेशार्थं च ब्राह्मणादिग्रहणात्। तस्याऽऽकृतिगणत्वादेव च 'ऐक्यमि'त्यादिसिद्धिः' इति ख. घ. ङ. पाठः। मनोरमादिस्थत्वात् क. कुण्डलितः।

१ इतोऽग्रे—'शब्दपरं वा, लक्षणयाऽर्थपरम्' इति घ. पाठः।

२ अयं पाठः क. ग. नास्ति। ३ 'कविमाणवादि' इति घ. पाठः।

1 'सङ्गच्छते' इति क. नास्ति।

2 'कन्नन्तादेव' इति ख. घ. ङ. पाठः।

3 इतोऽग्रे—'तयोः समावेशश्चोक्तः' इति घ. पाठः।

यथातथायथापुरयोः । 'नञः शुची'त्यतो 'नञ' इति वर्त्तते । 'यथा-तथा'शब्दो निपातसमुदायः । यथापुरमिति । 'पुरा'शब्देन पदार्थाऽनतिवृत्तावव्ययीभाव इति भाष्यकैयटयोः स्पष्टम् ।

'आभ्यां प्रत्ययाऽन्तरम् अनभिधानान्ने'ति भाष्यस्वरसः । विवक्षाभेदेन प्रयोगद्वयसिद्धिमभिप्रेत्य एतत्सूत्रस्य भाष्ये प्रत्याख्यानात्[3] ।

स्वार्थे इति । 'अन्यभाव'शब्दोऽप्यत्र बोध्यः । स्पष्टं चेदम् अइउण्सूत्रे कैयटे । चातुर्वर्ण्यादिराकृतिगणः । सर्वे वेदा इति । 'पूर्वकालैके'ति समासः ।

'चतुर्वेदस्ये'ति—गणसूत्रम् । चतुर्वेदे-तद्धितार्थे द्विगुः[2] । अणो लुक् । चतुर्विद्य इति । 'विद्यालक्षणकल्पसूत्रान्तादि'ति ठक् । तस्य लुक् ।

सङ्घातेति । यद्यपि वर्णग्रहणेऽपि 'यस्ये'ति लोपेन सिद्धं, तथापि तस्य स्थानिवत्त्वादयादेशः स्यादिति भावः । आरम्भसामर्थ्याच्चाऽलोन्त्यस्याऽप्रवृत्तिः । केचिदिति । भाष्याऽनुक्तत्वमत्राऽरुचिः ।

वाणिज्यमपीति । अपिना 'दौत्य'स्य सङ्ग्रहः ।

कपिज्ञात्योः । इह कपि-ज्ञाती द्वौ शब्दौ । अर्थावपि द्वौ । तयोर्यथासङ्ख्यं नेष्यते । एवं 'पत्यन्त'-'हायनान्त'-'द्वन्द्वमनोज्ञा'दिसूत्रेष्वपि बोध्यम् ।

समासे त्विति । 'असमासे' इति प्रतिषेधेन, 'राजन्'शब्दांऽशे तदन्तविध्यनुज्ञानात्, ब्राह्मणादिषु केवलराजन्शब्दपाठेऽपि न[4] क्षतिः ।

---

१ 'यथातथयथापुरयोः' इति ख. घ. ङ. पाठः ।

२ इतोऽग्रे—'सुप्सुपे'ति समासो वा । सूत्रे सौत्रत्वात् ह्रस्वः' इति ख. घ. ङ. पाठः । क. कुण्डलितः । ग. नास्ति ।

३ 'एतत्सूत्रं भाष्ये प्रत्याख्यातम् । यद्यपि अयथातथाशब्दो गणरत्ने पठित एव, तथापि 'आयथापुर्यमि'त्याकृतिगणत्वफलं बोध्यम्' इति घ. पाठः ।

४ इतोऽग्रे 'एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव । अत एव 'राज्यमि'त्यत्र ब्राह्मणादित्वात्ष्यञिति शाबरभाष्यम्

तत्र केवलस्य अत्र, ब्राह्मणादिषु च पाठात्ततः प्रत्ययद्वयमपि। समस्ते ब्राह्मणादेराकृतिगणत्वादेव सिद्धेः।

प्राणभृत्। 'प्राणिजाती'त्येव सुवचम्। यस्तु 'पर्यायेषु लाघवगौरव-विचाराऽभावेनेदमयुक्तमि'त्याह, स देवानांप्रिय एव। प्राणसम्बन्ध्यर्थ-कस्य, प्राणधारणकर्त्तृत्वार्थकस्य च पर्यायत्वाऽभावात्। फले तु न विशेष इत्यन्यदेतत्। जातीति किम्?। 'देवदत्तत्वम्'। परिभाषिकजातित्वस्य तत्राऽभावात्। प्राणेत्यादि किम्?। 'तृणत्वम्'। 'सुभगं[1] मन्त्रे'।

औद्गात्रमिति। उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो होत्राभ्यश्छे प्राप्ते, सुष्ठु-दुष्ठुभ्यां गुणवचने ष्यञि, वधूशब्दादिगन्तलक्षणेऽणि प्राप्ते वचनम्।

यौवनमिति। मनोज्ञादिपाठाद्वुञि यौवनकमपि। 'प्रकृत्याऽके राजन्ये'त्यादिना प्रकृतिभावः। श्रोत्रियस्येति। 'यलोपश्चे'ति प्रचुरः पाठः। तत्र 'ये'ति सङ्घातग्रहणम्। अन्यथा 'यस्ये'त्यकारलोपस्याऽसिद्धत्वात्, स्थानिवत्त्वाच्च इकारान्तस्य भत्वाऽभावेन, 'यस्ये'ति लोपाऽप्राप्तौ, इकारस्य यणेव स्यादिति बोध्यम्। क्वचित्तु 'घलोपश्चे'ति पाठः। 'श्रोत्रियंश्छन्द' इत्यत्र-'छन्दसः श्रोत्रभावो, घन् च प्रत्यय' इति यदा व्याख्यानं, तदेह 'घलोप' इति यथाश्रुतम्। यदा तु वाक्याऽर्थे पदवचनं, तदा 'घ'शब्देन 'इय' इतिरूपं लक्ष्यते इति बोध्यम्।

इगन्ताच्च ल। 'लघुपूर्वादिक' इत्येव वक्तुमुचितम्। यथान्यासेऽपि 'लघुः पूर्वोऽवयवो यस्ये'ति प्रातिपदिकविशेषणम्। पूर्वत्वं च सन्निधानात् इगवधिकमेव इष्यते। तेन 'कृशानुत्वमि'त्यत्र न। इगन्तात्किम्?।

---

अवेष्ट्यधिकरणे भट्टैर्दूषितम्। केचित्तु ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् ष्यञि सिद्धे, 'राज'शब्दपाठो यका समावेशाऽर्थ इति, शबरोक्तं सम्यगे-वेत्याहुः। इदं च पदमञ्जरी-धातुवृत्त्योः स्पष्टम्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

१ वार्त्तिकमिदम्। 'महते सौभगाये'त्युदाहरणमस्य। इदं क. ग. नास्ति।

'घटत्वम्' । 'ले'त्यादि किम् ? । 'पाण्डुत्वम्' । 'वैनरमि'त्यत्र[1] आकडारादिसूत्रस्थभाष्यप्रामाण्यात् 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति वुञं बाधित्वा, पूर्वविप्रतिषेधेन 'इगन्ताच्चे'त्यण् बोध्यः ।

कथं काव्यमिति । यद्यपि 'कु'धातोः 'ओरावश्यके' इति ण्यति काव्यं सिद्धम् , तथापि 'कवेः कर्मे'त्यर्थे 'कावमि'ति स्यादिति प्रश्नः ।

आभिधानीयकमिति । 'अभिधेयस्य भावः, कर्म वे'त्यर्थः । अभिधानीयम् = अभिधेयम् ।

सहायाद्वेति । इदं भाष्ये क्वचिन्मृग्यम् । एतदभावे ब्राह्मणादित्वात् ष्यञ्[2] । एवमवश्यशब्दाद्भावे 'योपधादि'ति वुञि-'आवश्यकम्' । तदस्याऽस्तीति मत्वर्थीयेऽचि 'आवश्यको देवदत्त' इति । स्त्रियां तु 'आवश्यिके'ति । प्रज्ञाद्यणि 'आवश्यकी'त्यपि । स्पष्टं चेदं मतुप्विधायके[3] कैयटे ।

शैष्योपाध्यायिकेति[4] । अस्याऽपि प्राप्तिरस्तीति भावः । 'गौपालपशुपालिके'त्यादि तु अस्योदाहरणं मुख्यम् ।

गोत्रचरणात् । गोत्रमिह[5] लौकिकम् । श्लाघादयश्च पदाऽन्तरोपात्ता

---

१ 'विश्च ना च विनरौ, तयोर्भावः–वैनरम्' इति हि कैयटः ।

२ इतोऽग्रे—'एवं चेदं वचनं 'गुणवचने'ति सूत्रे वक्तुं युक्तम् । साहाय्यमिति । ब्राह्मणादित्वात्ष्यञ् । एवञ्च नित्ये ष्यञि प्राप्ते, विकल्पार्थमिदम्' इति ख. घ. ङ. पाठः ।

३ 'मतुप्विधायककैयटे' इति क. ग. पाठः ।

४ इतोऽग्रे—'परत्वादिदमेव न्याय्यमिति भावः । 'गौपालपशुपालिके'त्यादावस्य चरिताऽर्थत्वात् । केचित्तु 'वैनरमि'त्याकडारसूत्रस्थभाष्यप्रयोगाद्द्वन्द्वविषयमिदमनित्यम् । तेन 'उदात्तत्वाऽनुदात्तत्वे', 'घटपटत्वे' इत्यादिप्रयोगसिद्धिरित्याहुः' इति ख. पाठः ।

५ 'गोत्रमिहाऽलौकिकम्' ? इति क. पाठः ।

एव प्रत्ययाऽर्थाऽन्वयिनो, न प्रत्ययवाच्या इति बोध्यम्। 'गोत्रं च चरणैरि'-ति जातित्वात् 'प्राणभृज्जातो'त्यञि प्राप्ते वचनम्।

प्राप्त इति। इणः प्राप्त्यर्थत्वात्। अवगतवान्वेति। अवपूर्वस्य इणो ज्ञाने प्रसिद्धत्वात्।

गार्गिकयेति। 'आपत्यस्ये'ति यलोपः। स्वभावात्स्त्रीत्वम्।

होत्राभ्यः। जुहोतेस्त्रनि 'होत्रा'। नेति वाच्य इति। छप्रत्यये निषिद्धे 'तस्य भाव' इत्येव त्वः सिद्ध इति भावः।[1]

तलो बाधनार्थमिति। अधिकारवशात् 'होत्राभ्य' इति भावकर्मणोः प्राप्तस्येति भावः।

एतेन 'कर्मणि 'त्व'स्याऽप्राप्तेस्तदर्थं 'त्व'ग्रहणम्। किञ्च पूर्वसूत्रविहित-त्वाऽऽदेरपि निषेधः स्यादि'त्यपास्तम्। शब्दोपात्त-छस्यैव निषेधात्।[2] 'होत्राभ्य' इत्यनुवृत्तेः फलं दर्शयति—ब्राह्मणेति।

( इति भावकर्मार्थप्रकरणम् )।

**नञ्स्नञोरधिकारः समाप्तः॥**



१ 'होत्राभ्यः' इत्येव त्वः सिद्धः' इति ख. ङ. पाठः।

२ इतोऽग्रे—'यद्वाऽत्र पक्षे 'आ च त्वादि'त्यत्राऽऽङ् अभिविधौ। तेनाऽनेनैव तयोर्विधानान्न दोषः। त्वग्रहणे तु सामर्थ्यान्न तत्प्रवृत्तिः। इदमेवाऽभिप्रेत्य 'त्वात्प्रागि'ति व्याख्यातम्' इति ब. पाठः।

## अथ पाञ्चमिकप्रकरणम् ।

धान्यानाम् । भवनाऽपेक्षया चेयं कर्त्तरि षष्ठी । सैव च समर्थविभक्तिः । अन्यस्या अनिर्देशात् । अलौकिके वाक्ये तु प्रत्ययाऽर्थस्याऽक्रियात्वेऽपि, कृद्योगाऽभावेऽपि (च) तद्धितविधावनुवादसामर्थ्येनैव तत्कल्पना बोध्या । 'भवन'शब्दोऽधिकरणल्युडन्तो, न गृहादिवाचकः । 'क्षेत्रे' इत्यस्याऽनन्वयाऽऽपत्तेः । अत एव 'क्षेत्र'शब्दोऽपि न शरीरादिवाचकः । 'भवन'शब्देनाऽनन्वयाऽऽपत्तेः । किन्तु तृणधान्यानामुत्पत्त्याधारभूवाचकः । 'भवति'श्चोत्पत्तिवचनः । क्षेत्रे किम् ? । भवतेरुत्पत्त्यर्थकस्य ग्रहणं यथा स्यात् । तेनेह न—'मुद्गानां भवनं = गृहभूतोऽयं कुसूल' इतीत्याहुः[2] ।

विभाषा तिल । अत्र,'यव-यवके'त्यत्र च विभिन्नविभक्तितया 'धान्यानामि'त्यस्याऽसम्बन्धेऽपि,प्रत्ययाऽर्थसामर्थ्यलभ्या षष्ठ्येव समर्थविभक्तिः। खञि प्राप्ते वचनम् । तदाह—पक्षे खञिति । 'शणसप्तदशानि धान्यानी'ति-

१ इतोऽग्रे—'न च लौकिकविग्रहवाक्ये 'भवन'शब्दयोगसत्त्वेन कृद्योगलक्षणषष्ठीप्राप्तावपि, अलौकिकविग्रहवाक्ये सा दुर्लभा, कृद्योगाऽभावादिति कथमस्याः समर्थविभक्तित्वमिति वाच्यम् । तद्धितविधावनुवादसामर्थ्येनैव तत्राऽपि तत्कल्पनात् । न चाऽलौकिके तृतीयाया एव प्रवेशोऽस्त्विति वाच्यम्। प्रत्ययाऽभावपक्षेऽलौकिके प्रविष्टयैव विभक्त्या परिनिष्ठितस्य लौकिकत्वेन, 'भवन'शब्देनाऽनन्वयाऽऽपत्तेः । प्रत्ययवाच्यभवनस्याऽक्रियात्वेन तृतीयाया अप्यप्राप्तेश्च । [1]कर्त्तुरेव शेषत्वविवक्षया सूत्रे शेषे षष्ठीसत्त्वे तु न कापि शङ्का' इति ख. घ. ङ. पाठः ।

२ इतोऽग्रे—'हरदत्तस्तु धान्यसम्बन्धात्, व्याख्यानाच्च क्षेत्रशब्दस्य उत्पत्त्याधारभूवाचकस्यैव ग्रहणे सिद्धे, 'भवन'ग्रहणं व्यर्थम् । एवं च शेषलक्षणा षष्ठी । क्षेत्रं प्रत्ययाऽर्थ इत्याहुः' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

1 लघुशब्दरत्नतोऽयं पाठः पूरितः ।

स्मृतिबलेन उमाभङ्ग्योरपि गणत्वेन धान्यत्वस्य भाष्यकृतोक्तत्वादिति भावः। असामर्थ्येपीति। 'सर्व' इत्यस्य कृतेनाऽन्वयेनोत्तरपदार्थेऽनन्वयात् असामर्थ्यमित्यर्थः। 'सर्वेण चर्मणा कृत' इत्यर्थे तु तद्धितो नेष्यते इति भावः। निपातनादिति। प्रत्ययसंनियोगेनैव चेदं निपातनम्। तद्ध्वनयन्नाह-सर्वे श्चर्मणेति। 'कृत' इति प्रत्ययाऽर्थघटक-कृति-निरूपित-करणत्वस्यैव चर्मणि न्याय्यत्वात्सामर्थ्येन तृतीया समर्थविभक्तिः।

यथामुखसं। 'दर्शन'शब्दोऽधिकरणव्युत्पत्त्या आदर्शाऽऽदिपरः, कर्मव्युत्पन्नश्च। [1]तन्त्रेणोभयोः सूत्रे उच्चारणम्। अत एव 'यथामुखीनः सीतायाः पुप्लुवे' इति भट्टिप्रयोगः सङ्गच्छते। तत्र हि 'मुखमनतिक्रम्य दृश्यते' इत्यर्थः। 'यथामुख'स्य पूर्वनिपातो नानाऽर्थसङ्ग्राहकत्वेनाऽभ्यर्हितत्वात्। तेन सदृशाऽर्थस्याऽपि ग्रहणम्। नन्वत्राऽर्थे 'यथाऽसादृश्ये' इति वचनात्समासो दुर्लभ इत्यत आह-निपातनादिति। समं सर्वमिति। 'सम्'-इत्युपसर्गपूर्वात्तु प्रत्ययो नेष्यते, अनभिधानादिति भावः। इदं निपातनं प्रत्ययसन्नियोगेनैव बोध्यम्। अत एव भाष्ये 'समर्मुखस्य दर्शन' इति विग्रहो दर्शितः। 'संयुगे संमुखीनं तमि'त्यादयस्तु संमुखीनाऽऽदर्शादिना अभिमुखाऽवस्थानात् साधर्म्यादौपचारिका' इति कैयटः। यथामुखं दर्शन इति। अव्ययीभावस्याऽव्ययस्य उन्मत्तगङ्गाऽऽदिवत्कर्मत्वयोगे कृद्योगलक्षणा षष्ठी। 'नाऽव्ययीभावा'दित्यम्। ('शेषलक्षणा षष्ठी'त्यन्ये)।

---

१ इतोऽग्रे—'क्वचित्तु 'संमुखस्य दर्शन' इति पाठो दृश्यते, सोऽपपाठः। कैयटादिविरोधात्। केचित्तु 'यथामुखशब्देऽप्येवं वक्तुमुचितम्। वैषम्ये मानाऽभावात्। [1]तस्माद्यथामुखशब्दात्पदसमुदायादेव प्रत्यय इत्याहुः' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

२ अयं ख. घ. ङ. पाठः। क. ग. नास्ति।

---

1 'वस्तुतस्तु यथामुखशब्दात्पदसमुदायादेव प्रत्यय इत्याहुः' इति घ. पाठः।

तत्सर्वादेः । 'पत्रपात्रमि'ति पञ्चम्यर्थे प्रथमा[1] । 'सर्वादेरि'[2]ति बहुव्रीहिः । तत्सामानाधिकरण्याय पथ्यादिभिस्तदन्तग्रहणम् । तदाह—पथ्याद्यन्तादिति । एवं च 'सर्व'पूर्व'पथि'शब्दग्रहणेन कृतसमासान्त-'सर्वपथ'ग्रहणमुपपद्यते[3] । सर्वपथीन इति । 'पूर्वकालैके'ति समासः । 'ऋक्पूरि'ति समासान्तः । सर्वाङ्गीण इति । 'रषाभ्यामि'ति णः ।

अनुपदसर्वा । निपातनात्तिङन्तेनाऽपि द्वन्द्वः । अनुरायामे इति । आद्ये 'पादसम्बन्धिदैर्घ्योपलक्षिते'त्यर्थः । द्वितीये सादृश्ये समासः[4] । 'पदेन सदृशी'ति विग्रहः । सादृश्यं च तुल्यपरिमाणतया बोध्यम् । समर्थविभक्तिर्द्वितीया, निर्देशात्, सामर्थ्याद्वा ।

स्थलविशेष इति । यद्यपि 'अयः = एकद्यूतकाराऽपेक्षया शारस्य प्रदक्षिणं गमनम् । अनयः = द्वितीयाऽपेक्षया प्रसव्यं वामाऽपरपर्यायं गमनम् । 'अयसहितोऽनयः अयानय' इति भाष्यकैयटबलात् गतिविशेष इति प्रतीयते, तथाऽपि सव्याऽपसव्यगामिनां शाराणां स्थल[5]विशेषः शारयुगादिस्थानं लक्षणयोच्यते । ये हि परशारभिया युग्मादिस्थानं प्रापणीयास्ते 'अयाऽनयीना' इत्युच्यन्ते । 'अयः-प्रदक्षिणम्, अनयः-प्रसव्य-

---

१ 'प्रथमा, द्वितीया वा' इति घ. पाठः ।

२ 'सर्वादेरि'ति कर्मधारयो, लाघवात् । एवञ्च 'आदिभूतसर्वशब्दात्परेभ्यः एभ्यस्तद्व्याप्नोतीत्यर्थे प्रत्यय' इति वाच्योऽर्थः । फलितमाह—पथ्याद्यन्तादिति' इति घ. पाठः ।

३ इतोऽग्रे—'यथाश्रुते तु उत्तरपदावयवत्वपक्षमाश्रित्य सर्वपथशब्दात्प्रत्यय उपपाद्य इति बोध्यम्' इति घ. पाठः ।

४ इतोग्रे 'यथार्थत्वेन समासे तु सादृश्यशक्तस्य क्रियाविशेषणतयाऽन्वयः' इति घ. पाठः ।

५ अत्र 'स्थलविशेषम्' इतिनपुंसकलिङ्गप्रयोगः सर्वादर्शेषु । भाष्यप्रदीपोद्द्योते च तथैव दृश्यते ।

मि'ति व्याख्याऽर्थमुक्त्वा, 'प्रदक्षिण-प्रसव्यगामिनां शाराणां यस्मिन्परैः पदानामसमावेशः सोऽयानय' इति लक्ष्यार्थो दर्शितः। पदानां = स्थान-विशेषाणां मध्ये, यस्मिन् पदविशेषे, परैः = परकीयैः, द्वितीयद्यूतकार-सम्बन्धिभिः शारैः, असमावेशः = अबाधनम् = अनतिक्रमणम्, तत्पदम् = स्थलविशेषः 'अयाऽनय' इति तदर्थः। युग्मादिस्थाने हि परैरसमावेशः।

'ससहायस्य शारस्य परैर्नाऽऽक्रम्यते पदम्।
असहायस्तु शारेण परकीयेण बाध्यते'॥

—इति द्यूतव्यवहार' इति कैयटः। तं नेय इति। प्रधाने कर्मणि यत्। अप्रधाने द्वितीया। अयानयीन इति। युग्मादिस्थानं प्रापणीय इत्यर्थः। 'शृणन्त्येभिर्द्यूतकाराः परस्परमि'ति शाराः = द्यूतसाधनविशेषाः। बाहुलकाद्घञ्। अवरस्येति। 'आदेरि'ति शेषः। उत्वे कृते 'आह्गः'।

---

१,२,३,४ अयं पाठो भाष्यप्रदीपोद्द्योतात्पूरितः स्पष्टप्रतिपत्तये।

५ इतोऽग्रे—'अन्ये तु गतिविशेषोऽयानयः। 'प्रदक्षिणप्रसव्यगामिनामात्मीयानां शाराणां यानि पदानि, तानि परकीयशारैर्नाऽऽक्रम्यन्ते यत्र गतिविशेषे स' इति यावत्। ससहायगमने हि तैरनाक्रमणं प्रसिद्धम्। तत्प्रापणे च गतिविशेषस्य करणत्वेन, 'अयानयेन नेय' इति विग्रहमाहुः। तन्न। 'अयानयं नेय' इति विग्रहपरभाष्यविरोधात्।

तत्रेयं द्यूतशास्त्रमर्यादा-चतस्रो वीथयः, प्रत्येकं द्वादशकोष्ठोपेताः। शारास्तु त्रिंशत्। ते चैकैकेन कितवेन पञ्चदश पञ्चदश स्ववामपार्श्वस्थप्रथम-कोष्ठपर्यन्तं प्रदक्षिणप्रसव्यगतिभ्यां ये ससहायतया नेयास्ते सर्वेऽपि 'अयानयीनाः'। 'स्थलविशेष' इति पक्षेऽपि स्ववामपार्श्वस्थप्रथमकोष्ठ एव सः। स चाऽयाऽनयगतिलभ्यत्वादयानयशब्देनोच्यते[1] इत्याहुः' इति क. कुण्डलितः ख. घ. ङ. पाठः। 'अबाधनमि'त्यत्र'(अ)योधनम्' इति पाठान्तरं घ.।

---

1 'एवं चाऽऽरम्भकाले यत्र स्थाने शाराः स्थाप्यन्ते तच्छिरः। तत्र स्थिता एवमुच्यन्ते। तत्रस्था एव हि तथा नेतव्या इत्याहुः' इति घ. पाठः।

संनियोगेनैवेति । अत एव भाष्ये 'परांश्चाऽवरांश्चे'ति अनादेशेनैव विग्रहः प्रदर्शितः । 'पारम्पर्यमविच्छिन्नमि'ति तु अव्युत्पन्नपरम्पराशब्दात् स्वार्थे ष्यञि बोध्यम् । अवारपारं गामीति । 'भविष्यति गम्यादय' इति भविष्यति साधुत्वं णिनेः । 'गमेरिनिराङि, णिच्चे'ति बहुलवचनात्केवला-दपि णित् इनिर्बोध्यः । आवश्यके वा । अयमपि भविष्यत्येवेत्युक्तं प्राक् । उभयथाऽपि 'अकेनोरि'ति षष्ठीनिषेधाद् द्वितीया । आवश्यकेऽपि यथा 'अकेनोरि'त्यस्य प्रवृत्तिस्तथा तत्रैवोक्तम् ।

'राष्ट्रावारे'त्यत्र 'अवारपाराद्विगृहिताद्विपरीताच्चे'ति पठ्यते । तदिहा-प्याश्रीयते इत्याशयेनोदाहरति–अवारीण इत्यादि । पूर्वपदे इति । उत्तरपदे तु विभक्तिलुकैवेष्टसिद्धिरिति भावः । न च यलोपनिपातनसामर्थ्यादेव पूर्वपदे लुगभावे सिद्धे, अलुग्निपातनं व्यर्थमिति वाच्यम् । सूत्रे उत्तरपदे-ऽपि यलोपदर्शनेन, तत्राऽपि लुगभावशङ्काऽऽपत्तेः । 'वि'पूर्वकजनेर्गर्भ-विमोचनमर्थः । अत एव तेनाऽत्यन्तसंयोगाऽभावान्न द्वितीया । खप्रत्यया-नुत्पत्ताविति । इदं च सूत्रे उत्तरखण्डे यकाराऽनुच्चारणात् ज्ञायते । विकल्पां-शस्तु वाचनिक एव । यलोप इति । पूर्वोत्तरपदयोरित्यर्थः । समायामिति । 'समा'शब्दो बहुवचनान्त एवे'ति उक्तभाष्यप्रयोगादुपेक्ष्यमिति भावः ।

'अद्यश्वीने'ति अविभक्तिकं, न तु स्त्रीलिङ्गनिर्देशो, व्याख्यानात् । अत एव पुंनपुंसकयोरपि 'अद्यश्वीनो गोसमूहः' 'अद्यश्वीनं गोमण्डलमि'त्यादेः सिद्धिः । अवष्टब्धम् । आसन्नम् । 'अवाच्चालम्बने'त्याविदूर्ये स्तन्भेः षत्व-विधानात् । निपातनात् वाऽर्थे समासः । तदाह–अद्य श्वो वेति ।

आङ्पूर्वाद्दोरिति । गोशब्दश्च गोः प्रतिदाने लाक्षणिकः । आङ् मर्यादायाम् । तदाह—प्रत्यर्पणेति । अस्य 'यो गवा भृत' इत्यादिः ।

१ इतोऽग्रे—'अकर्मकधातुभिर्योगे' इत्यपि अधिकरणत्वविवक्षायां न प्रवर्त्तते इति तत्रैवोपपादितम्'[1] इति ख. घ. ङ. पाठः क. कुण्डलितः ।

1 इतोऽग्रे—'कारकसप्तम्या युक्तत्वाच्च' इति घ. पाठः ।

आगवीन इति। 'आङ्मर्यादे'त्यव्ययीभावे, उपसर्जनह्रस्वत्वे च, खप्रत्ययः। 'ओर्गुणः'।

गामीति। अत्र 'सुप्यजातावि'ति णिनिः। तद्ध्वनयन्नाह–गच्छतीति। अनुग्विति। पश्चादर्थेनाऽनुना अव्ययीभावः। तच्चाऽत्राऽधिकरणशक्तिमत्परमिति द्वितीयान्तात्प्रत्ययः।

अध्वानमलं गच्छतीति। 'सुप्यजातावि'ति णिनिं ध्वनयितुमेवमुक्तम्। 'अलंगामि'पदेन विग्रहे तु 'अध्वनोऽलंगामी'त्येव।

---

१ 'अनुग्विति। क्रियाविशेषणत्वात् द्वितीयान्तम्। तदन्तादेव च प्रत्ययः। 'गामी'ति[1] कृद्योगेऽपि न षष्ठी। किञ्च 'कर्त्तृकर्मणो'रिति सूत्रे कर्त्तृसाहचर्येण धात्वर्थं प्रति भेदेनाऽन्वयि यत्कर्म, तदेव गृह्यते। क्रियाविशेषणस्तोकादीनां तु नैवंविधत्वमिति स्पष्टमेव। अतो न षष्ठी। द्वितीया तु भवत्येव। अत्रैव तद्विभायके [2]साहचर्याऽभावादिति प्राञ्चः। नव्यास्तु 'पश्चादि'त्यस्याऽर्थेऽयं समासः। तच्च यद्यपि विभक्तित्रयसाधारणं, तथापीह योग्यताबलात् सप्तम्यर्थवृत्ति। अतस्तस्य कर्मत्वाऽयोगात्प्रथमान्तादेव प्रत्यय इत्याहुः' इति ख. ङ. पाठः।

---

1 'गामीति कृद्योगेऽपि न षष्ठी। 'अकेनोरि'ति निषेधात्। इदं च 'अध्वन' इति सूत्रे हरदत्तग्रन्थे स्पष्टम्। किञ्च 'कर्त्तृकर्मणोरि'तिसूत्रे कृद्ग्रहणेन प्रकृत्यर्थं प्रति कर्मत्वं विवक्षितम्। तत्र संकोचे मानाऽभावेन संपूर्णधात्वर्थकर्मण एव ग्रहणं, न तु भावनामात्रकर्मफलसमानाधिकरणमपि। यद्वा कर्त्तृसाहचर्येण धात्वर्थं प्रति भेदेनाऽन्वयि यत्कर्म तदेव गृह्यते' इति घ. पाठः।

2 'साहचर्याऽभावात्। 'वर्त्तते' इत्यधिकारे 'तत्प्रत्यनुपूर्वे'ति द्वितीयारूपसमर्थविभक्तिनिर्देशेन 'कर्मणि द्वितीये'तिसूत्रस्थकर्मपदे सङ्कोचाऽभावकल्पनाच्च। तस्य च 'प्रयच्छति गर्ह्यमि'त्यादावन्वयाय द्वितीयान्तत्वमेवावश्यकमिति प्राञ्चः। नव्यास्तु पश्चादित्यस्यार्थेऽयं समासः' इति घ. पाठः।

अभ्यमित्राच्छ च । 'अलं गामी'त्यनुवर्त्तते । अभ्यमित्रीय इति । 'लक्षणेनाऽभी'ति समासः[2] ।

गोष्ठा । यद्यपि 'भूतपूर्वे चरट्' 'षष्ठ्या रूप्य चे'त्येते अत्रैव पठित्वा, तदग्रे 'गोष्ठात्खञि'तिसूत्रयितुमुचितम्[3] । तथाऽपि तयोरन्यत्र[4] करणसामर्थ्येन विशेषविहितेनाऽपि खञा चरटो बाधा नेति ज्ञाप्यते इत्याहुः[5] । तत्तु भाष्ये न दृष्टम् । 'गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः' । 'घञर्थे क' इत्यधिकरणे कः । 'अम्बाऽम्बगोभूमी'ति षत्वम् ।

---

१ इतोऽग्रे—'एतेनाऽत्र 'सुप्यजाताविति णिनिरि'त्यपास्तम् । प्रकृते ताच्छील्याऽप्रतीतेः । तस्मादावश्यके णिनिः ।[1] विग्रहस्तु-'अध्वनो गामी' 'अभ्यमित्रस्य गामी'ति । यत्तु 'अकेनो'रिति निषेध' इति । तन्न । 'अंशं हारी'त्यत्रेव भविष्यत्वाऽप्रतीतेः । यदि त्वत्राऽपि 'भविष्यति गम्यादय' इत्युक्तेर्भविष्यत्वप्रतीतिस्तदाऽस्तु षष्ठीनिषेधात् द्वितीयैव । 'अभ्यमित्रमि'त्यत्र क्रियाविशेषणत्वात् द्वितीये'त्यन्ये' इति ख. घ. ङ. पाठः ।

२ 'क्रियाविशेषणत्वाद् द्वितीयान्तात्प्रत्ययः' इति घ. पाठः ।

३ 'सूत्रयितुमुचितम् । 'अश्वस्ये'ति सूत्रे खञ्ग्रहणस्य कर्त्तव्यत्वेऽपि, भूतपूर्वपदाऽकरणेन लाघवस्य स्फुटत्वात्' इति ख. घ. ङ. पाठः ।

४ 'तथापि अत्राऽकरणसामर्थ्येन' इति ख. ङ. पाठः ।

५ इतोऽग्रे—'केचित्तु 'तदेव सूत्रद्वयमत्रादौ पठित्वा 'गोष्ठात्खञ्चे'त्येव वक्तुं युक्तम् । चशब्देन चरट्समुच्चय' इति । तन्न । रूप्यस्यैव समुच्चयाऽऽपत्तेः । चरटः पूर्वसूत्रे चाऽनुकृष्टत्वाच्चेति दिक् ।

वस्तुतस्तु 'पदलाघवाऽभावेन मात्रालाघवे नाऽभिनिविष्टं सूत्रकृता'

---

1 'एवञ्च गामिशब्देन विग्रहे पूर्वसूत्रविषये 'अध्वनो गामी'ति षष्ठ्यन्तेन विग्रह उचित' इत्यपास्तम् । 'अकेनोरि'ति निषेधात् । तस्य चावश्यकेऽपि प्रवृत्तेः पूर्वमुपपादितत्वात्' इति घ. पाठः ।

एकाहगम इति। न च 'एकाऽहेने'ति परिच्छेदाऽवगमात्परिमाणाख्यासत्त्वेन 'ग्रहवृदृनिश्चिगमश्चे'त्यपं बाधित्वा 'परिमाणाख्यायामि'ति घञ् स्यादिति वाच्यम्। अस्मादेव निपातनादपः सत्त्वेनाऽदोषात्। 'अश्वस्ये'ति कर्त्तरि षष्ठी।

शालीनकौपीने। रूढिशब्दावेतौ। अत एव शाला-कूपाभ्यां तत्प्रवेश-तत्पतनलाक्षणिकाभ्यामेव प्रत्ययः। तदाह—शालाप्रवेशमिति। अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः।

कूपेति। यत् अकार्यं तत्प्रच्छादनीयत्वात्कूपाऽवतरणमर्हतीत्यर्थः। तदाच्छादनम् = वासःखण्डः। अन्ये तु 'कार्य'शब्दे करोतिः क्रियासामान्यवचनः। तेन लज्जाहेतुत्वेनाऽद्रष्टव्यत्वात्पुरुषलिङ्गं 'कौपीनम्'। अस्पृश्यत्वात् तदाच्छादनमित्याहुः।

व्रातेन। नानाजातीयानाम्, अनियतवृत्तीनां, शरीराऽऽयासजीविनां सङ्घो—'व्रातः'। तत्कर्माऽत्र भारवाहनाद्यात्मकशरीराऽऽयासरूपं 'व्रात'शब्देन लक्षणयोच्यते। तेषामेवाऽन्यतमे 'व्रातीन' इष्यते। यस्तु अन्यस्तत्कर्मणा जीवति, तत्र नेष्यते इति वृत्तिकैयटयोः स्पष्टम्।

साप्तपदीनम्। 'अवाप्यते' इति प्रत्ययाऽर्थः। तद्धिताऽर्थे द्विगुः।

खञिति। अनुदात्ताऽऽदिलक्षणाऽञोऽपवादः। गोदोह इति। षष्ठीसमासः। 'ह्यस्'शब्दस्य तेन 'सुप्सुपे'ति समासः। 'ह्यस्'शब्देन च कालप्रत्यासत्तिर्विवक्षिता। नवनीतमिति। यद्यपि भाष्यादौ 'घृतमि'त्येव पाठः, तथापि हरदत्तेन नवनीतपरतया व्याख्यातत्वात् एवमुक्तम्।

---

इत्येव तत्त्वम्। न तु चरटोऽबाधज्ञापने मानमस्ति। भाष्याद्यनुक्तेरिति बोध्यम्'[1] इति ख. घ. ङ. पाठः।

१ 'अनुदात्तलक्षणाऽञोऽपवादः' इति घ. पाठः।

---

1 'केचित्तु आनन्तर्याद्रूप्याऽपवादत्वशङ्कावारणाय तथोक्तिरित्याहुः' इति घ. पाठः।

तस्य पाक । अर्थयोः, प्रत्यययोः, प्रकृत्योश्च यथासङ्ख्यम् । 'आदि'-ग्रहणद्वयप्रयोजनं चिन्त्यम । पाकः—परिणामः । मूलम् = उपक्रमः । जाहचो जकारस्य नेत्त्वम् । फलाऽभावात् ।

पक्षतिः—प्रतिपत्. पक्षिणां पक्षमूलं च ।

वित्तः = प्रतीतः । प्रसिद्धः । 'वित्तो भोगप्रत्यययोरि'ति साधुः ।

'चुञ्चुरि'त्युकारद्वयवान् प्रत्ययः ।

विनञ्भ्याम् । 'नसहे'ति प्रकृत्यर्थविशेषणम, न प्रत्ययाऽर्थ-विशेषणमिति स्पष्टं भाष्यादौ । तदाह—असहार्थे इत्यादिना ।

नानेति । ञित्त्वादादिवृद्धिराद्युदात्तत्वं च । असहार्थे किम् ? । क्रिया-विशेषकात् मा भूदिति । यथा 'विगत' इति ।

क्रियाविशिष्टेति । न च 'ससाधनां क्रियामाहुरि'ति भाष्यविरोधः । 'सह'शब्देन साहित्यमात्रं बोध्यम् । न तु तस्य विशेषणत्वम् । माना-ऽभावात् । तत्तु लोकव्युत्पत्तिगम्यमित्याशयः । विशालादयश्च रूढा इति न तत्राऽभिनिवेष्टव्यम् । अलाबूकटमिति । क्वचिद्भाष्यपुस्तके पुल्लिङ्ग-पाठो दृश्यते । विकारप्रत्ययाऽपवादोऽयम् । रजसो विकारत्वात् । अलाब्वाः—'ओरञ्' 'मयड्वैतयोरि'ति मयट् च प्राप्तः । 'उमा'शब्दात् घृतादित्वादन्तोदात्तात् 'अनुदात्तादेश्चे'त्यञ्, मयट् च, 'उमोर्णयोरि'ति वुञ् च । तिलात् असंज्ञायां 'तिले'ति मयट् प्राप्तः[१] यत्तु 'तिलशब्दोऽपि घृतादि'रिति हरदत्तः । तन्न । 'तिल'शब्दस्य घृतादित्वे मानाऽभावात् । 'तृणधान्यानां च द्व्यषामि'ति फिट्सूत्रेणाऽऽद्युदात्तत्वस्यैव न्याय्यत्वात्, तद्वृत्तावुदाहृतत्वात्, 'तिलाश्च मे' इत्यादौ वेदे तथैव पाठाच्च । 'भङ्गा'-शब्दष्टाबन्तः 'तृणधान्ये'त्याद्युदात्तः । ततोऽण्, मयट् च प्राप्तः ।

---

१ 'तिलोमाशब्दाभ्यां घृतादित्वादन्तोदात्ताभ्यामनुदात्तादेश्चेत्यञ्, मयट् च । 'उमोर्णयोरि'ति वुञ्च । असंज्ञायां 'तिले'ति मयट् चेति हरदत्तः' इति ख. घ. ङ. पाठः ।

गोष्ठजिति। यद्यपि भाष्ये चित् न पठ्यते, तथापि ('गवां स्थानं गोष्ठमि'त्याश्रित्य ) तत्प्रत्याख्यानपरभाष्यप्रामाण्याच्चित्त्वमुक्तम्।

'पशुनामादिभ्य' इति पाठः। गवां स्थानमिति। 'तस्येदमि'त्यर्थे 'सर्वत्र गोरजादी'ति यत् प्राप्तः।

अत्रत्याऽऽदिशब्दानामर्थबोधकानि वार्त्तिकान्याह—सङ्घाते इति। अप्रसृताऽवयवः समूहः 'सङ्घातः'। प्रसृताऽवयवस्तु 'विस्तारः'। कटच्-पटचौ द्वावपि सामूहिकानामपवादौ। द्वित्वे इति। 'प्रकृत्यर्थस्य द्वित्वे द्योत्ये' इत्यर्थः। उष्ट्रगोयुगमिति। द्व्यवयवसङ्घातप्राधान्यादेकवचनं, 'द्वयं' युगमि'त्यादिवत्। एवमग्रेऽपि। षट्त्वे इति। यद्यपि इदं भाष्ये न दृश्यते, तथापि वृत्त्यादिप्रामाण्यात्, कर्णपर्वमहाभारते 'हस्तिषड्गवमि'ति-प्रयोगाच्च आदिशब्दाऽर्थतया व्याख्यातम्। अवाचीन इति। प्रसिद्ध इत्यर्थः। नते इति। 'नासिकासम्बन्धि-नतत्वे गम्यमाने 'अव'शब्दात् स्वार्थे प्रत्यय' इत्यर्थः। एवं च अवशब्दस्य नासिकासाधने नमने वृत्ति-रिति बोध्यम्। टीटच् लुप्तयकारादिः। तेन टस्य नेत्त्वम्।

नेर्बिडच्। अत्र 'नते नासिकायाः संज्ञायामि'ति वर्त्तते। 'निबिडाः केशाः' इति तूपमानात्सिद्धमि'ति वृत्तिः। केचित्त्वत्र तन्न सम्बन्ध-यन्ति, उक्तप्रयोगाऽनुरोधात्।

प्रकृतेरिति। 'नेरि'त्यर्थः। यथासङ्ख्यमत्र बोध्यम्। चिकाऽऽदेशेऽकार उच्चारणाऽर्थः। अत एव कप्रत्यये 'चिक्कमि'ति सिद्ध्यति।

क्लिन्नस्येति। अत्र चिल्पिलावादेशौ, लश्च प्रत्यय इति बोध्यम्। पुरुषे व्युत्पादितानां तदवयवेऽक्षिण लक्षणया प्रयोगो बोध्यः। भाष्ये तु 'अस्ये'ति प्रत्याख्याय, चक्षुषोः साधयित्वा, पुरुषे मत्वर्थीयाऽच्प्रत्ययान्ततया साध्वि'-त्युक्तम्। 'समुच्चयाऽर्थकाऽन्यतरस्याङ्ग्रहणेन पक्षप्राप्तोऽपि मतुप् अनभिधानान्ने'ति कैयटः।

---

१ अयं ख. घ. ङ. पाठः। क. ग. नास्ति।

उपाधिभ्याम् । आसन्नम्–समीपम् । आरूढम्–उच्चस्थानम् । संज्ञाऽधिकारान्नियतविषयः प्रयोग इत्याह—पर्वतस्येति । 'समुद्रोपत्यका हैमी, पर्वताऽधित्यका पुरी'त्यादावन्यत्र क्वचित्प्रयोगस्तु लक्षणयोपपाद्यः । 'त्यकनश्चे'ति निषेधान्नेत्त्वम् । कर्मठ इति । ठस्य अङ्गनिमित्तत्वाऽभावात् इकाऽऽदेशो न । आकृतीति । 'गर्भित' इति अप्राणिन्येवेति बोध्यम् ।

तदस्येत्यनुवर्त्तत इति । 'प्रमाणे' इति प्रकृत्यर्थविशेषणमिति भावः । 'प्रमाणे विद्यमानात्प्रथमान्तादस्येति षष्ठ्यन्तार्थे प्रमेये एते स्युः'। प्रमाणशब्देन परिच्छेदकमात्रम् । व्याख्यानात् । तत्र मात्रच् । न त्वायामपरिच्छेदकमेव । तेन 'प्रस्थः परिमाणमस्ये'त्यर्थे 'प्रस्थमात्रमि'त्यादिसिद्धिः । तदुक्तं कैयटेन–'मात्रचस्त्वविशेषेण परिच्छेदकमात्रे स्मरणादि'ति । वृत्तिकृताऽप्युक्तम्—'मात्रच् पुनरविशेषेणे'ति । ध्वनितं चेदं 'यत्तदेतेभ्य' इति सूत्रे भाष्ये, इति तत्रैव निरूपयिष्यामः । '**प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम**'तिवचनात्तावूर्ध्वमाने एवेति बोध्यम् । ऊर्ध्वोऽवस्थितेन येन मीयते तत् 'ऊर्ध्वमानम्'–ऊर्वादि । तेन तिर्यङ्माने न । एतेन 'द्विकाण्डा क्षेत्रभक्तिरि'त्यादौ द्वयसचो लुगि'त्यपास्तम् ।

प्रमाणे ल इति । 'प्रमाणे वर्त्तमानाद्विहितस्य लुगि'त्यर्थः । इह आयामपरिच्छेदकत्वेन प्रसिद्धानां शमादीनां तत्परिच्छेदकानामेव ग्रहणं,

---

१ इतोऽग्रे—'अत एव सूत्रे 'प्रमाण'ग्रहणं चरितार्थम् । अन्यथा 'उन्माने द्वयसादी'त्येव वदेत् । आयामोपाधौ 'प्रमाणे ल' इति नित्यलुका श्रवणाऽभावेन तद्वैयर्थ्यं स्पष्टमेव । 'शम' इत्यादि परिच्छेद्ये लक्षणया सिद्धम्, 'पलं घृतमि'तिवत् । ध्वनितं चेदम्' इति घ. पाठः ।

२ इतोऽग्रे—'नन्वेवं सति ऊर्ध्वमाने तक्रकौण्डिन्यन्यायात् मात्रच् न स्यात् । एवञ्च 'ऊरुमात्रमि'त्यनुपपन्नम् । न चेदं प्रमाणमपीति भ्रमितव्यम् । ऊर्वादेः कदापि तिर्यगवस्थितवस्तुपरिच्छेदकत्वाऽभावादिति चेन्न । वृत्त्यादिप्रामाण्येन एतन्न्यायस्याऽत्राऽनङ्गीकारात्' इति घ. पाठः ।

न तु सूत्रवत् परिच्छेदकमात्रम्। अत एव 'ऊरुद्वयसमि'ति भाष्यं सङ्गच्छते। शमादीनां यदा आयामपरिच्छेदकत्वं, तदा मात्रचो लुक्। यदा तु ऊर्ध्वाऽधरदिगवस्थितवस्तुपरिच्छेदकत्वेन द्वयसजादि, तदा अप्रमाणत्वान्न लुक्। अत एव 'आर्हादि'ति सूत्रे 'आयामविवक्षायां प्रमाणमित्येतद्भवती'ति भाष्ये उक्तम्। 'ल'[1] इति लुकः पूर्वाऽऽचार्यसंज्ञा।

द्विगोरप्रमाणत्वात्, तदन्तविध्यभावाच्च पूर्वेणाऽप्राप्तेराह-द्विगोर्नित्यमिति। 'प्रमाणान्तद्विगोरि'त्यर्थः। एतत्सामर्थ्यादेव तदन्तद्विगोर्मात्रच्। 'वे'त्यस्याऽप्रकृतत्वेऽपि, 'समर्थानामि'त्यादेरनन्वयेन तत्सहचरितमहाविभाषाया असम्बन्धेऽपि 'नित्य'ग्रहणं योगविभागेन संशये मात्रचोऽपि लुगर्थम्। अन्यथा वक्ष्यमाणः संशये मात्रच् 'शमगात्रमि'त्यादौ यथा न लुप्यते, 'प्रमाणे ल' इत्यस्य पूर्वविधिविषयत्वात्, तथा द्वौ 'शमौ स्यातां, न वा, द्विशम' इत्यादौ द्विगोरपि न लुप्येतेत्यधिकसङ्ग्रहाऽर्थं 'नित्य'ग्रहणमिति। एतत्सामर्थ्यादेव प्रमाणान्तद्विगोः संशये मात्रच्। न तु परिमाणाद्यन्तात्। मानाऽभावात्। तेन 'पञ्च कुडवाः स्युर्न वे'त्यादि वाक्यमेवेत्याहुः।

प्रमाणपरीति। तेनोन्मानात्संशये मात्रच् न। [4]शममात्रमिति। 'शमः स्यान्न वे'ति विग्रहः। 'संशयविषयीभूतशमप्रमाणकमि'ति बोधः।

---

१ इतोऽग्रे—'प्रमाणे' इति सप्तमीनिर्देशस्तु सूत्रवत्' इति ख. घ. ङ. पाठः।

२ इतः पूर्वम्-'लक्षणया सिद्धे शममात्रमित्यादिनिवृत्तये इदम्' इति घ. पाठः।

३ इतोऽग्रे—'यद्यपि द्विगोर्मात्रजाद्यप्राप्तिः, तदन्तविध्यभावात्, तस्य प्रमाणत्वाऽभावाच्च, तथाप्यस्मादेव ज्ञापकात्तदन्तविधिः। स च संशये मात्रजिवधायकेपि प्रमाणांऽशे एव, न त्वन्यांऽशे। एवञ्च तत्र 'पञ्च कुडवाः स्युर्न वे'त्यादि वाक्यमेवेत्याहुः' इति घ. पाठः।

४ 'शममात्रमिति। अस्य विधानसामर्थ्यात् 'प्रमाणे' इति लुक् न। तस्याऽनन्तरस्येतिन्यायेन पूर्वसूत्रविषयत्वाच्च। द्विगोस्तु भवत्येवेत्युक्तम्' इति घ. पाठः।

पञ्चमात्रमिति। संशय्यमानाऽर्थवाचिनः प्रत्ययः। वत्वन्तात्स्वार्थे इति। भाष्येऽत्र बहुलग्रहणसहितः पाठः। हास्तिनमिति। 'इनणी'ति प्रकृतिभावः। अत्रत्यवृत्तिहरदत्तादिखण्डनं 'पुरुषात्प्रमाणे' इति सूत्रे निरूपितम्।

[1]यत्तदेतेभ्यः। ननु 'पूर्वत्र प्रमाणग्रहणं परिच्छेदकमात्रपरम्, प्रस्थमात्रादिसिद्धयर्थमि'त्युक्तम्। इदमपि 'यावानध्वा', 'यावती रज्जुः','यावज्जलम्' 'अधिकरणैतावत्त्वे चे'त्यादिप्रयोगात्परिच्छेदकमात्रे इष्यते। एवञ्च तदनुवृत्त्यैव सिद्धेऽस्य फलाऽभावः। तदुक्तं भाष्ये—'किमर्थं परिमाणे इत्युच्यते, न 'प्रमाणे इत्येव सिद्धमि'ति। 'प्रमाणपरिमाणयोरेकाऽर्थत्वं मत्वा प्रश्न' इति कैयट' इति चेन्न[2]।

'डावतावर्थवैशेष्यान्निर्देशः　पृथगुच्यते।
मात्राद्यप्रतिघाताय, भावः सिद्धश्च डावतोः'

—इति वार्त्तिकेन समाहितत्वात्।

अस्याऽर्थः—इह शास्त्रे वतुपं विधाय तत्र परे आत्वं विहितम्। पूर्वाऽऽचार्यास्तु डावतुं विदधिरे। तद्रीत्या निर्देशोऽयम्। 'विशिष्यते इति विशेषः'। तद्भावो-'वैशेष्यम्'। अर्थभेदादित्यर्थः। प्रमाणपरिमाणयोर्भेदस्य प्रागुक्तत्वादिति भावः। एवञ्चेह परिमाणग्रहणं सर्वतो मानाऽर्थकमिति

---

१ 'यत्तदेतेभ्यः। अत्र 'परिमाण'ग्रहणं सर्वतो मानपरमिति भाष्ये स्पष्टम्। तथा च वार्त्तिकम्—'डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते। मात्राद्यप्रतिघाताय, भावः सिद्धश्च डावतोः' इति ख. घ. ङ. पाठः।

२ इतोऽग्रे–'नन्वर्थभेदेऽपि पूर्वत्र प्रमाणग्रहणं परिच्छेदकमात्रपरं, प्रस्थमात्रादिसिद्ध्यर्थमि'त्युक्तम्। इदमपि—'यावानध्वा' 'यावती रज्जुः' 'यावज्जलम्', 'अधिकरणैतावत्त्वे चे'त्यादिप्रयोगात्परिच्छेदकमात्रे इष्यते। एवं च विद्यमानोऽप्यर्थभेद इहाऽऽश्रयितुमशक्य इति, तदनुवृत्त्यैव सिद्धेऽस्य फलाऽभावः। तदुक्तं भाष्ये—'किमर्थं परिमाणे इत्युच्यते, न 'प्रमाणे' इत्येव सिद्धमि'ति। 'प्रमाणपरिमाणयोरेकाऽर्थत्वं मत्वा प्रश्न' इति च कैयटः। अत आह—मात्रादीति' इति ख. घ. ङ. पाठः।

तात्पर्यम् । तत्फलमाह—'मात्रादी'ति । तत्रैवाऽस्य विधाने यदादिभ्यो विशेषविहितेन वतुपा तेभ्यो मात्रादीनां परिच्छेदकमात्रे बाधप्रसङ्गः[1] । परिमाणग्रहणे तु सति भिन्नोपाधिकत्वान्न बाध इति प्रमाणाद्युपाधौ 'तन्मात्रमि'त्यादिसिद्धिः । आदिना द्वयस-दघ्नौ ।[2] उक्तप्रयोगास्तु प्रमाण-

---

१ 'बाधाप्रसङ्गः' इति क. पाठः । 'मात्रादीनां बाधादभावप्रसङ्गः' इति घ. पाठः ।

२ इतोऽग्रे—'एवं चाऽत्र परिमाणग्रहणं सामर्थ्यात्सर्वतोमानपरमेव । तदैव चोपाधिभेदो, नान्यथेति भावः । उक्तप्रयोगास्तु उपमानाद्बोध्याः ।

यत्तु 'अन्यत्, प्रमाणम्, अन्यत् परिमाणमि'त्यत्रत्यभाष्यात्पूर्वसूत्रे 'प्रमाण'शब्देन आयामपरिच्छेदकमेव । 'प्रस्थमात्रमि'त्यादयश्चाऽसाधव एव ।

'न प्रमाणे' इत्येव सिद्धमि'ति भाष्यस्याऽयमर्थः—तदर्थकं प्रमाणग्रहणमेवाऽनुवर्त्यं, 'यावानध्वे'त्याद्यायामोपाधिकप्रयोगा एव मुख्याः सन्तु । ये तु परिमाणे प्रयोगास्ते एवोपमानाद्भवन्तु, यथा सिद्धान्ते 'यावानध्वे'-त्यादय' इति । तत्रोत्तरम्—'मात्रादी'ति । उक्तोऽर्थे' इति । तन्न । 'मात्रा-दी'त्यादिग्रहणवैयर्थ्याऽऽपत्तेः । अत्र हि पक्षे 'प्रथमश्चे'त्यादिना द्वयस-दघ्नौ प्रमाणादपकृष्य ऊर्ध्वमाने विधीयेते । एवं च प्रमाणग्रहणाऽनुवृत्तावप्युपाधिभेदात्तद्बाधाऽप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव । न च तत्र 'प्रमाण'शब्देन तिर्यङ्मानोर्ध्वमानयोर्ग्रहणमिति, नाऽऽदिग्रहणवैयर्थ्यम् । रूढित्यागेन सङ्कोचे मानाऽभावात् । एतेन 'पूर्वसूत्रे परिच्छेदकमात्राऽर्थत्वेऽप्यत्राऽनुवृत्तं शब्दाऽधिकारात् आयामपरमेवेति तदाशय' इत्यपास्तम् । अस्याऽऽयामोपाधे-र्विधानेन, द्वयसादेरूर्ध्वमाने एव विधानेन,[1] विषयभेदादादिग्रहणवैयर्थ्यात् । शब्दाऽधिकाराऽऽश्रयणे मानाऽभावाच्च । भाष्यं तु मदुक्तरीत्या समञ्जसमेव । एवं च पूर्वसूत्रे तत्परिच्छेदकमात्रपरमित्येवोचितम् । तत्पक्षे हि 'प्रथमश्चे'-त्यादि नियमाऽर्थमेवेति, विशेषविहितवतुपा तयोरपि बाधः स्यादेवेति,

---

1 'विषयभेदात्परिमाणग्रहणाऽभावेपि तयोर्बाधाऽप्रसक्त्या आदिग्रहणवैयर्थ्यात्' इति घ. पाठः ।

ग्रहणाऽनुवृत्त्या परिच्छेदकमात्रेऽपि विधानात्सिद्धाः । न चैतत्सिद्ध्यर्थं 'वतुप् चे'त्येवोच्यताम् । सर्वतोमानोपाधावपि मात्रजापत्तेः । फलाऽन्तर-माह—'भाव इति' । 'मात्रादेरि'त्यादिः । 'डावतोरि'ति पञ्चम्यन्तम् । अर्थभेदे 'तत्परिमाणमस्य-'तावत्' धान्यं राशीकृतम्' । 'तावत्'प्रमाणमस्य कुड्यादेः 'तावन्मात्रमि'ति सिद्ध्यति । 'यादृग्राशीकृतधान्यादेर्दैर्घ्यं, तादृक्कुड्यादेर-पी'ति तदर्थः । एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वात्तदन्तात् मात्रादयो न स्युः । यस्य हि तावत्प्रमाणं, तस्य तदपि । एवं च तावच्छब्द एव प्रयुज्येत । अन्यथा प्रत्ययमालाप्रसङ्गादिति कैयटादयः ।[1]अत्राऽऽद्यमेव

---

तच्चरितार्थम् । न चैवमपि सर्वतोमाने विशेषविहितवतुपा मात्रचो बाधः स्यादेवेति वाच्यम् । इष्टाऽऽपत्तेः । अत एव कैयटेन, हरदत्तेन च 'प्रमाणो-पाधौ प्रकृत्यर्थे 'यन्मात्रमि'त्यादिसिद्धिरि'त्युक्तम् ।

अत्र प्रमाणशब्देनोन्मानमपि[1] । 'प्रमाणे' इति च वर्तते । तथाऽत्रापि परिच्छेदकमात्रपरम् । एवं च सर्वप्रयोगाणां मुख्यत्वमेव । न च 'वतुप् चे'-त्येव सूत्र्यताम् । चेन मात्रादिसिद्धिः । चेन द्वयसादीनामनुकर्षेऽपि 'प्रथमश्चे'त्यादिव्यवस्थापकस्याऽत्रापि प्रवृत्तेर्नाऽव्यवस्थेति वाच्यम् । सर्वतोमानोपाधेरनिष्ट-मात्रा-ऽऽपत्तेः' इति ख. ङ. पाठः ।

१ इतोऽग्रे—'न च परिमाणग्रहणाऽभावेऽपि 'परिच्छेदक-तत्परिच्छिन्नपरिच्छेदक-

---

1 'यद्वा परिच्छेदकत्वेन सर्वतोमाना-ऽऽयाम-मानो-न्मानबोधकेभ्यो मात्रादिः, सर्वतोमानत्वेन तद्वद्बोधकाद्वतुरिति विषयभेदसत्त्वेन न बाधः । कैयटे प्रमाणशब्दः सूत्रवदेव परिच्छेदकमात्रपरो बोध्यः । अर्थभेदे सत्येव रूपे विशेषरूपमपि फलं दर्शयितुं 'मात्रादी'त्युक्तिः । एतेन 'वतुप् चे'त्येव सूत्र्यताम् । चेन मात्रादिसिद्धिः । चेन द्वयसजादीनामनुकर्षेऽपि प्रथमश्चेत्या-दिव्यवस्थापकस्य अत्रापि प्रवृत्तेर्नाऽव्यवस्थे'त्यपास्तम् । उक्तबोधवैलक्षण्यस्य दुरुपपादत्वात् । यदि तु बोधविशेषाऽनादरस्तदा परिमाणग्रहणे सर्वतो-मानोपाधेरप्राप्तमात्राऽऽपत्तिरिति बोध्यम्' इति च. पाठः ।

समाधानं मुख्यमिति, नाऽत्राऽत्यन्तक्षोदः कार्य इत्यलम्।

किमिदम्। वस्य 'घ'विधानसामर्थ्याद्वतुपोऽप्यत्र विधिः। प्रत्ययाऽन्तरत्वभ्रमव्यावृत्तये 'व' इति। कियानिति। "इदंकिमोरीश्की'। 'यस्ये'ति लोपः। इयानिति। प्रत्ययमात्रमिहाऽवशिष्यते। पठितं च—

'उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ,
गतवति विलयं च प्राकृतेऽपि प्रपञ्चे।
सपदि पदमुदीतं केवलः प्रत्ययो यत्,
तदियदिति मिमीते को हृदा पण्डितोऽपि'।

वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य द्व्यर्थोऽयं श्लोकः।

किमः सङ्ख्या। 'किम्'ग्रहणमिदमो व्यावृत्त्यर्थम्। अन्यथा प्रश्नवाक्ये इवोत्तरे 'इयन्तो गाव'इत्यत्राऽपि डत्यापत्तिः। 'सङ्ख्यारूपं परिमाणमि'ति

---

राशि-परिच्छेद्यमि'ति 'तावन्मात्र'शब्दाद् बोधः, 'परिच्छेदकतत्परिच्छेद्यमि'ति 'तावत्'इत्यतो बोध इति, तद्वैलक्षण्याय वत्वन्तादपि मात्रच् स्यादेवेति वाच्यम्। तच्छब्दार्थप्रस्थादेः साक्षात्कुडवादिपरिच्छेदकत्वाऽभावे, परम्परया तत्त्वं वाच्यम्। एवञ्च संसर्गतया तदर्थस्याऽपि भानेनाऽविशेषात् 'न कर्मधारयान्मत्वर्थीय' इति न्यायेन वृत्तिद्वयघटितः प्रयोगो न स्यादिति भावः। परिमाणग्रहणे तु सर्वतोमानत्वप्रकारकबोधे एव वतुरिति, न तेन सोऽर्थोऽवगन्तुं शक्य इति, भवत्येव वत्वन्तान्मात्रच्। न चैवमप्युक्तरीत्या तच्छब्दान्मात्रचैव तदर्थबोधसम्भवे, उक्तन्यायेन वतु-मात्रोभयघटितप्रयोगाऽनापत्तिरिति वाच्यम्। सर्वतोमानत्वेनाऽपि बोधाय तत्करणात्। अत्राऽऽद्य-मेव समाधानं मुख्यमिति, नाऽत्राऽत्यन्तं क्षोदः कार्यः' इति घ. पाठः।

१ इतोऽग्रे—'वत्वतात्स्वार्थे' इति वचनेन सिद्धः' इति ख. घ. ङ. पाठः।

२ इतोग्रे 'किम्'ग्रहणे तु सामर्थ्यात्परिप्रश्ने एव। न चैवमपि 'इदमो वो घः' 'किमः' इति सूत्रद्वयकरणेन, उत्तरत्र किंग्रहणमात्रानुवृत्त्यैव सिद्धे 'किम' इति व्यर्थम्। डतेरादेशत्वभ्रमव्यावृत्त्यर्थं तत्सत्त्वात्' इति घ. पाठः।

कर्मधारयः। 'परिमाण'शब्दोऽत्र परिच्छेदकपरः। तेन 'सङ्ख्यारूपपरिच्छेदकविषयकप्रश्ने वर्त्तमानात्किमोऽस्येति षष्ठ्यर्थे डतिरि'त्यर्थः। न च परिमाणग्रहणाऽनुवृत्त्यैव सिद्धेऽत्र तद्ग्रहणं व्यर्थम्। तस्य सर्वतोमानपरत्वेनाऽनन्वयाऽऽपत्तेः।

प्राञ्चस्तु 'करणस्य कर्त्तृत्वविवक्षया'सङ्ख्यायाः परिमाणमि'ति विग्रहः[1]। 'परिमाण'शब्दश्च भावव्युत्पत्त्या परिच्छेदपरः। परिच्छेदकसङ्ख्याप्रश्नेऽपि परिच्छेदस्य विषयत्वात्सङ्ख्यापरिच्छेदविषये प्रश्ने किमो वर्त्तमानत्वं बोध्यमि'त्याहुः। तत्र करणतृतीयाऽन्तेनैव 'साधनं कृते'ति[2] समासः कुतो नोक्त इति चिन्त्यम्।

सङ्ख्येति किम्?। 'कियान् वृक्ष' इत्यादौ मा भूत्। परिमाणे इति किम्?। क्षेपे मा भूत्, 'केयमेषां दशानां सङ्ख्ये'ति। नाऽत्र परिच्छेदकत्वेन सङ्ख्या विवक्षिता। एतेन 'सङ्ख्यायाः परिच्छेदकत्वाऽव्यभिचारात्, परिमाणग्रहणं व्यर्थमि'त्यपास्तम्। कुत्साऽत्र किमर्थः।

'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।
सहस्रशः समेतानां परिषत्त्वं न विद्यते'॥

—इत्येवं सङ्ख्येयद्वारेण सङ्ख्यायाः कुत्सेत्याहुः।

कतीति। अत्र प्रश्नोत्तरयोर्बहुवचनमेव। द्व्येकयोः सन्देहाऽभावात्। बहुत्वव्याप्यसङ्ख्यानां[3] बहुत्वात्प्रश्नो युक्त एव। यन्निष्ठा सङ्ख्या तत्रैव प्रत्यासत्त्या 'अस्ये'त्यधिकारात्प्रत्ययः। अत एव 'कति गावोऽस्मिन्वर्गे' इत्यादौ वर्गस्याऽधिकरणत्वमेव भवति। 'किं द्वौ स्तः[4]' इति प्रश्नस्तु तत्कर्त्तृकसत्ताया एवेत्याहुः।

---

१ इतोऽग्रे—'निपातनाच्च विशेषणस्याऽपि परनिपातः' इति ख. घ. ङ. पाठः।

२ इतोऽग्रे—'कर्मणि वा षष्ठी' इति घ. पाठः।

३ 'बहुत्वसङ्ख्याया अवयवभूतसङ्ख्यानाम्' इति ख. घ. ङ. पाठः।

४ 'द्वौ स्तो न वेति' इति घ. पाठः।

संख्याया अव । 'अवयवे वर्त्तमाना या सङ्ख्या, तद्वाचकादवयविरूपे अस्येत्यर्थे तयबि'त्यर्थः । अवयवी चाऽत्र समुदायरूपः, अतिरिक्तश्च । तेन 'मुनित्रयमि'त्यादिसिद्धिः । एवं 'बहुतयं यूथमि'त्यपि बोध्यम् ।

अकज्विशिष्ट-द्वि-उभादिभ्यो न प्रत्ययः । सङ्ख्यात्वेन प्रसिद्धत्वाऽभावादिति सर्वनामसंज्ञाप्रकरणे भाष्ये ध्वनितम् ।

द्वित्रिभ्याम् । नन्वयचश्चित्त्वं व्यर्थम् । द्वित्र्युभानामन्तोदात्ततया'यस्ये' ति लोपे, 'अनुदात्तस्य च यत्रे'त्यनेन आद्युदात्तस्यैव प्रयोगे श्रवणादिति चेन्न । प्रत्ययाद्याऽकारवत्प्रकृतेरपि शेषनिघातेनाऽनुदात्तत्वादिति दिक् ।

उभादुदात्तो । 'उदात्त'ग्रहणसामर्थ्यादादिरुदात्तः । अन्तोदात्तत्वस्य चित्त्वेनैव सिद्धत्वात् । सर्वोदात्तत्वन्तु बाधितम्, 'अनुदात्तं पदमेकवर्ज्जमि'त्युक्तेः । न च 'उभये'त्यत्र[1] सम्बुद्धावामन्त्रिताऽऽद्युदात्तत्वं बाधितुम्[2] उदात्तग्रहणमिति वाच्यम् । 'येन नाऽप्राप्ति'न्यायेन[3] चित्स्वरस्यैव बाध्यत्वात् । तस्य सतिशिष्टत्वेन बलवत्त्वाच्च । अत एव प्रयुज्यते-'उभयं शृणवच्चन' इति[4] ।

नन्वेवमपि 'उभात् अय'इति निरनुबन्धकादेशाऽन्तरमस्तु । तस्य स्थानिवद्भावेनाऽनुदात्तत्वे 'उभ'शब्दस्याऽन्तोदात्ततया, 'अनुदात्तस्य चे'त्यनेन

१ 'उभे'(इ)त्यत्र' इति क. ग. पाठः ।

२ 'बाधितुं तदिति' इति ख. घ. ङ. पाठः ।

३ 'येन नाप्राप्तिन्यायेन, पुरस्तादितिन्यायेन च' इति ख. घ. ङ. पाठः ।

४ इतोऽग्रे—'ननु उभशब्दस्य 'उभे भद्रे' इत्यादिप्रयोगाऽनुरोधात् गणेऽन्तोदात्तत्वं निपात्यते । एवञ्च चित्त्वादन्तोदात्तत्वे, अकारस्याऽनुदात्तत्वे, 'यस्ये'ति लोपे, 'अनुदात्तस्य च यत्रे'त्यनेनाऽऽद्युदात्तत्वं सिद्धमिति चेन्न । प्रकृतेरपि शेषनिघातेनाऽनुदात्तत्वात् । न चैवमपि 'उभादयो नित्यमि'त्ययः प्रत्ययाऽन्तरमेवाऽस्तु, किमुदात्तग्रहणेनेति वाच्यम् । 'उभयी'त्यत्र ङीबनापत्तेरिति हृदयम् । नन्वेवमपि 'उभात् अय इति' इति घ. पाठः ।

आद्युदात्तत्वसिद्धेरुदात्तग्रहणं व्यर्थमेवेति चेन्न । 'स्वाङ्गशिटामि'त्याद्युदात्तत्वस्यैव लोके इष्टत्वात् । 'उभ'शब्दपाठप्रत्याख्यानेऽपि वृषादित्वात्तत्त्वं बोध्यम् । 'उभे भद्रे' इत्यादिषु पठ्यमानमन्तोदात्तत्वं तु च्छान्दसम् ।

तयप इति । वस्तुतोऽत्र नाऽऽदेशत्वमयचः । किन्तु प्रत्ययाऽन्तरत्वमेव । 'उभयी'त्यत्र ङीप्तु 'टिड्ढे'ति सूत्रे 'मात्रच्' इति प्रत्याहाराऽऽश्रयणात्सिद्ध इति 'न वे'तिसूत्रे, स्थानिवत्सूत्रे च भाष्ये स्पष्टम् । अयमेव च सूत्राऽऽशय इति दिक् ।

तदस्मिन्नधिकम् । उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीति[1] अत्र भाष्ये स्पष्टम् । 'ग्रहणवते'ति निषेधात् 'अन्त'ग्रहणम् । 'दश'शब्दात्तु न । 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधादित्याहुः[2] ।

समानजातीयत्व इति । 'प्रत्यासत्तिन्यायलब्धोऽयमर्थ' इति कैयटः । 'इतिकरणलब्धोऽयमर्थ' इत्यन्ये ।

शदन्त । 'सङ्ख्याया' इति वर्त्तते । 'एकत्रिंशं शतमि'त्येतत्सिद्धयेऽन्तग्रहणम् । अन्यथा 'प्रत्ययग्रहण'परिभाषया न स्यात्[3] । एकत्रिंशत्त्वा-

---

१ 'औपश्लेषिकेऽधिकरणे सप्तमी । अन्यथा 'यस्मादधिकमि'ति प्रयोगसिद्धा पञ्चम्येव स्यात् । केचित्तस्मान्निर्देशात्सप्तमीत्याहुः' इति घ. पाठः ।

२ इतोऽग्रे—'अधिका अस्यामिति । अस्मान्निर्देशात्सप्तमीत्याहुः' इति ख. ङ. पाठः ।

३ इतोऽग्रे—'न च नाऽयं सङ्ख्यावाचकः, किन्तु तत्समुदायवाचकः । न च सङ्ख्यासमुदायः सङ्ख्याग्रहणेन गृह्यते, स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनेवेति वाच्यम्, 'नान्तादसङ्ख्यादेरि'ति सूत्रे 'असङ्ख्यादेरि'ति निषेधेन तेषामपि तत्त्वबोधनात्, समुदायस्यापि तद्ग्रहणेन ग्रहणबोधनाद्वाऽदोषात् । अत एव 'गोत्रिंशदधिका अस्मिन्नि'त्यत्र नाऽतिप्रसङ्गः । सङ्ख्यावाचकत्वाऽभावात्' इति घ. पाठः ।

ऽऽदयोऽपि सङ्ख्याविशेषा एव, न सङ्ख्यासमुदायः। अत एव 'नान्तादसंङ्ख्यादेरि'ति सूत्रे 'असङ्ख्यादेरि'ति चरिताऽर्थम्। 'गोत्रिंशत् अधिका अस्मिन्नि'त्यत्र तु नाऽतिप्रसङ्गः। सङ्ख्यावाचकत्वाऽभावात्। 'अन्त'ग्रहणं विंशत्यंशेऽपि सम्बध्यते। अन्यथा 'ग्रहणवते'ति निषेधेन 'एकविंशं शतमि'त्यादौ न स्यादिति स्पष्टं भाष्ये।

स्पष्टप्रतिपत्तये विंशतिशब्दादुत्तरमन्तशब्दे कर्त्तव्ये, पूर्वं करण-सामर्थ्याद्व्यपदेशिवद्भावनिषेधं बाधित्वा, केवल'विंशति'शब्देऽप्यस्य प्रवृत्तिरित्युदाहरति—विंशमिति। अत एव 'अचः परस्मिन्नि'ति सूत्रे 'विंशं शतमि'ति भाष्यप्रयोगः सङ्गच्छते। अत एव-'विंशतेश्चाऽन्तग्रहणं कर्त्तव्यम्, इहाऽपि यथा स्यात्, 'एकविंशं शतमि'ति भाष्यं सङ्गच्छते।

**सङ्ख्याया गुणस्य**। गुणोऽत्र समानभागः। निमीयते = क्रीयतेऽनेनेति **निमानम्** = मूल्यम्। 'तदस्य सञ्जातमि'ति सूत्रात् 'तदस्ये'ति मण्डूकप्लुत्या-ऽनुवर्त्तते। तदाह—प्रथमान्तात्षष्ठ्यर्थे इति। 'गुणस्ये'ति—मध्यमणि-न्यायेनोभयाऽन्वयि। तेन 'गुणकर्मकनिमाने वर्त्तमानात् गुणगतसङ्ख्या-वाचकादि'त्यर्थः। एवं च निमानस्य, निमेयस्य च भागरूपत्वे एवाऽस्य प्रवृत्तिरिति बोध्यम्। तदाह—यवानां द्वाविति। यद्यप्युदश्विद्भागे प्रत्ययः, तथाऽपि तस्याऽप्युदश्वित्त्वात् 'द्विमयमुदश्विदि'ति प्रयुक्तम्। अभिधान-स्वाभाव्याद्वा भागे विधीयमानोऽपि, भागवन्तमेवाऽऽहेति बोध्यम्।

नन्विदं 'भूयसो वाचिकायाः सङ्ख्याया' इति वार्त्तिकविरुद्धमिति चेन्न। निमेयसङ्ख्याऽपेक्षया निमानसङ्ख्याया आधिक्यमात्रस्य 'भूयस्त्व'-पदार्थत्वात्। 'भूयसं' इति तु कथञ्चिदारोपेणोपपाद्यम्। व्यावर्त्त्यं तु 'एको यवभागो निमानमस्योदश्विद्भागस्ये'ति। निमानविशेषणे 'गुणस्ये'त्यत्र एकत्वं विवक्षितम्। तेनेह न 'त्रयो यवानां भागा निमानमनयोरुदश्विद्-

---

१ 'एकत्रिंशत्तादयोऽपि' इति क. ग. पाठः।

२ 'ईयसू तु कथञ्चित्प्रकर्षमारोप्य उपपाद्यः' इति घ. पाठः।

भागयोरि'ति। द्विमयमिति। 'द्वि'शब्दस्य नित्यसापेक्षत्वात् 'यवानामि'त्येतत्सापेक्षत्वेऽपि प्रत्ययः। 'यवसम्बन्धिभागद्वयरूपमूल्यप्राप्य उदश्विद्भाग' इति बोधः। सङ्ख्याया इति किम् ?। 'यवभागौ निमानमस्योदश्विद्भागस्य'। षष्ठ्यर्थे किम् ?। स्वार्थे मा भूत्। सूत्रे 'निमान'शब्दो बाहुलकात्कर्मल्युडन्तो निमेयाऽर्थकोऽपि तन्त्रेण निर्दिष्टः। तेन 'उदश्वितो द्वौ भागौ निमेयौ येषाम् एकभागानां यवानां, ते 'द्विमया यवा उदश्विद्भागयोरि'ति सिद्धम्। ध्वनितं चेदं भाष्ये इत्याहुः।

तस्य पूरणे। 'तस्ये'त्येकत्वम् अविवक्षितम्। 'सङ्ख्यायाः' इति वर्त्तते। सङ्ख्येयप्रतिपादकसङ्ख्यावाचिनां च ग्रहणम्। तत्र यथा 'अतिशायने' 'कुत्सिते'इत्यादिषु प्रवृत्तिनिमित्तस्यैवाऽतिशयादिकं गृह्यते, अन्तरङ्गत्वात्, तथेहाऽपि यतः सङ्ख्यावाचिनः प्रत्ययस्तत्प्रवृत्तिनिमित्तसङ्ख्यापूरणे एव प्रत्ययः। प्रत्यासत्तेश्च। यथा च तत्र 'याप्यो वैयाकरण' इत्येव विग्रहो, न तु 'याप्यं वैयाकरणत्वमि'ति, तथेहाऽपि। तेनेह न 'एकादशानां घटानां पूरणो जलादिरि'ति। 'पूरणे' इति–पूरयतेर्ण्यन्तात्करणे ल्युट्। उद्भूताऽवयवः सङ्घः प्रकृत्यर्थः। अवयवः प्रत्ययाऽर्थः। 'वार्क्षी शाखे'तिवत्। यदा च यस्तत्तत्सङ्ख्यापूरकत्वेन विवक्षितस्तदा स प्रत्ययाऽर्थः। एवं च व्युत्क्रमेणाऽध्यायेषु गण्यमानेषु द्वितीयादयोऽपि यदा चरमं गण्यन्ते, तदा तेऽपि[1] अष्टमा भवन्त्येव। तदा तेषां तत्त्वेन विवक्षितत्वादिति बोध्यम्।

नान्ताद। डट इति। 'डटि'ति प्रथमान्तस्याऽनुवृत्तस्य 'नान्तादि'ति पञ्चम्या षष्ठी कल्प्यते[2] इति भावः। यद्यप्यस्य प्रत्ययत्वेऽपि न क्षतिस्तथाऽपि 'षट्कती'त्यादौ डटो मण्डूकाऽनुवृत्तिक्लेशपरीहाराय इहाऽपि तदनुवर्त्त्य

---

१ 'इतोऽग्रे—'सूत्रमते तु सङ्ख्याग्रहणेऽनुवर्त्तमाने पुनः सङ्ख्याग्रहणादधिकसङ्ख्याग्रह इति बोध्यम्' इति घ. पाठः।

२ 'कल्पते' इति क. ग. पाठः।

आगमत्वमेव व्याख्यातम् । तमट्साहचर्येणाऽऽगमत्वस्यैवौचित्याच्च । तस्य हि अनुदात्तत्वाय आगमत्वमेवेष्टव्यम् । प्रत्ययत्वे हि आद्युदात्तः स्यात् । ध्वनितं चेदं भाष्ये । मुक् तु न कृतः । 'पञ्चम' इत्यादौ नलोपाऽनापत्तेः ।

पञ्चानामिति । न चाऽयं व्यपदेशिवद्भावेन सङ्ख्यादिः । 'अप्रातिपदिकेने'ति निषेधात् । इदमेव च तज्ज्ञापकमित्याहुः ।

षट्कति । इह षष्ठीनिर्देशबलात्षडादीमागमित्वम् । एवं चाऽनुवृत्तो डट् अर्थात्सप्तम्या विपरिणम्यते । तदाह—डटीति । वस्तुतः सप्तम्या विपरिणामे फलाऽभावः,[1] 'डट् चेदस्ती'त्येवं व्याख्यानसम्भवात् । 'तिथुक्'-सूत्रे भाष्ये तु 'तस्य पूरणे' इत्यस्याऽनुवृत्त्या तदेकवाक्यतया सहविधान-मि'त्युक्तम् । आद्यक्षरेति । 'आदिभूतस्याऽच्सहितव्यञ्जनस्य लोप' इत्यर्थः । विशेषविहिताभ्यामप्याभ्यां चतुरो डट् न बाध्यते । थुग्विधानसामर्थ्या-दित्याहुः । 'व्यञ्जनसहिताऽच' इति तु नोक्तम् । 'द्विर्वचन'न्यायेन तकारस्याऽपि लोपाऽऽपत्तेरि'ति हरदत्तः । अत एव 'चतुर्थतुर्याणी'ति निर्देशः सङ्गच्छते । न च 'थट् च च्छन्दसी'ति प्रकृतः थडेव डटः क्रियताम्, किमनेन थुकेति वाच्यम् । 'षष्ठ' इत्यादौ जश्त्वाऽऽद्यापत्तेः । चतुर्थे रेफस्य विसर्गाऽऽपत्तेश्च । न चैवं पूर्वसूत्रेऽपि थुगेवाऽस्तु । 'पञ्चथ' इत्यादौ नलोपाऽनापत्तेः ।

बहुतिथ इति । बह्वीनां पूरणी 'बहुतिथी' । 'सिद्धश्च प्रत्ययविधा-वि'ति 'भस्याऽढे' इति पुंवत्त्वे, पश्चात्तिथुक् । ( पूगादिभ्योऽत एव ज्ञापकाड्डट् ) ।

द्वेस्तीयः । अनेन तन्त्राद्याश्रित्य सहायवाच्यपि 'द्वितीय'शब्दो व्युत्पाद्यते । अत एव 'पूरणाद्भागे तीयादि'त्यत्र 'पूरण'ग्रहणं चरिताऽर्थम् । अत एव 'अनेकमन्यपदाऽर्थे' इति सूत्रे भाष्ये उक्तम्—'अयं तीयाऽन्तः[2] शब्दोऽस्त्येव पूरणम् । अस्ति सहायवाची' इति केचित् । तन्न । 'न हि

१ 'फलाऽभावो, मानाऽभावश्च' इति ब. पाठः । २ अयं ख. ङ. पाठः ।

अपूरणस्तीयशब्दोऽस्ती'ति 'पूरणाद्भागे' इति सूत्रस्थभाष्याऽसङ्गत्यापत्तेः। तस्मात्सहायवाची अव्युत्पन्नं प्रातिपदिकमित्येव ज्यायः। अन्विधायकसूत्रस्थपूरणग्रहणन्तु 'प्रागेकादशभ्य' इत्युत्तराऽर्थमिति तत्रैव भाष्ये स्पष्टम्।

डटोऽपवाद इति। प्रत्ययाऽधिकारात्प्रत्ययत्वस्यैव न्याय्यत्वात्। किञ्च[1] तदादेशत्वे हि 'द्वितीये'त्यत्र ङीप्प्रसङ्गः। एवं च 'विभाषा द्वितीयातृतीयाभ्यामि'ति निर्देशोऽसङ्गतिः[2]। अत एव 'द्वि'शब्दस्य नाऽऽदेश इत्याहुः।

त्रेः सम्। 'अण'इत्यनुवृत्तेः 'हल' इति दीर्घो न। प्रत्ययत्वभ्रमव्यावृत्तये 'तृ चे'ति नोक्तम्। रेफस्य ऋकारः सम्प्रसारणम्। तमडागम इति। एवं चाऽनुदात्तत्वं सिद्धम्। प्रत्ययत्वे त्वाद्युदात्तः स्यादिति बोध्यम्। इह प्रत्यासन्नत्वात्पङ्क्त्यादिसूत्रपठिता विंशत्यादयो गृह्यन्ते। एवमुत्तरसूत्रे षष्ट्यादयोऽपि। अत एव तत्र सूत्रे 'असङ्ख्यादेरि'त्यस्य एकषष्टे प्रयोजनमुक्त्वा, 'तदन्तविध्यभावात्प्राप्तिर्ने'त्युक्त्वा, 'इदमेव ज्ञापकमेतत्प्रकरणे तदन्तविधेः, तेन 'एकविंशतितम'इतिसिद्धमि'ति भाष्यं सङ्गच्छते। लौकिकविंशत्यादिग्रहणे तु तदसङ्गतिः स्पष्टैव। एवं चाऽयमेव 'असङ्ख्यादेरि'तिनिषेधो 'ग्रहणवते'त्यस्य प्रत्ययविधिविषयत्वे मानमिति भाष्यतात्पर्यम्।

[3]मनोरमायां 'निपातिता' इत्यस्य 'पठिता' इत्येवाऽर्थः। 'लोकप्रसिद्धा' इत्यस्य च 'लौकिका' इति।

वृत्तिकृतस्तु-'विंशत्यादयो लौकिका गृह्यन्ते, न पङ्क्त्यादिसूत्रनिविष्टाः। तदा हि एकविंशत्यादिभ्यो न स्यात्। 'ग्रहणवते'ति तदन्तविधिनिषेधादि'त्याहुः। तन्न। 'एकोनविंशतितम' इत्यस्याऽसिद्धापत्तेः।

---

१ 'एवञ्च' इत्यस्य स्थाने 'अत एव' इति घ. पाठः।

२ 'इति निर्देशः' इति घ. पाठः।

३ 'मनोरमायाम्' इत्यारभ्य 'लौकिका इति' इत्यन्तः ख. घ. ङ. पाठः क. कुण्डलितः।

अस्याः सङ्ख्याया विंशत्यादिभ्यः प्राग्भावित्वात् । सहस्रादिभ्योऽपि तमडापत्तेश्चेत्यास्ताम् ।

अत्रेदं बोध्यम्—'अनारम्भो वा प्रातिपदिकविज्ञानात्, यथा सहस्रादिष्वि'ति कात्यायनेन यद्यपि पङ्क्त्यादिसूत्रं प्रत्याख्यातम्, तथाऽपोहाऽर्थमावश्यकं तत् । अत एव भाष्ये उक्तम्–'नाऽसूया कर्त्तव्या यत्राऽनुगमः क्रियते' इति । 'वस्तुतो गणे एव तथा पाठ्यम्, प्रत्ययादिनिपातनफलकम् अष्टाध्यायीसूत्रं विफलं, पङ्क्तिग्रहणं चेती'त्यन्ये ।

एकशततम इति । एतेन 'उत्तरसूत्रेणैव सिद्धेऽत्र शतादिग्रहणं व्यर्थमि'त्यपास्तम्।[1] अस्य सङ्ख्यादित्वेन तदप्राप्तेः। सहस्रादिसङ्ग्रहार्थं तदावश्यकत्वाच्च । अत एवेति । 'डटस्तमड्विधानसामर्थ्यादेवे'त्यर्थः । सङ्ख्यात्वाऽभावादप्राप्तिः । सङ्ख्यादेस्त्विति । एतच्च प्राक् शताद्बोद्धव्यम् । 'नित्यं शतादौ'त्युक्तेः ।

मतौ छः । 'मतुविषये' इत्यर्थः । तेन समर्थविभक्त्याद्यपि तदीयमेवेत्याहुः । 'अस्यवामीयमि'त्यादौ 'प्रकृतिवदि'त्यस्याऽनित्यत्वात् ङसादेर्न लुक् । द्वितीयविभक्तिप्राग्भागस्यैव चाऽनुकरणात्प्रत्यय इति स्पष्टं भाष्ये ।

विधानसामर्थ्यादिति । 'मतुप्प्रकरणे एव कर्त्तव्येऽत्र विधानसामर्थ्यादि'त्यर्थः[2] ।

विमुक्तादिभ्योऽण् । एते शब्दपरा गणे निर्दिष्टाः ।

गोषदक इति । 'गोषदशब्दोऽस्त्यस्मिन्नि'त्यर्थः । 'मतौ छ' इत्याऽरभ्याऽनुकरणशब्दादेव एते साधव इत्याहुः ।

तत्र कुशलः । 'गोषदादिभ्य' इत्यतो वुन् अनुवर्त्तते । आकर्षादिभ्यो

---

१ 'व्यर्थम् । न च भाष्यमते तत्राऽपि पङ्क्त्यादिसूत्रस्थषष्ट्यादिग्रहणमिति सहस्रतमादिसिद्धयर्थं तत् । एवमपि 'शत'ग्रहणस्य वैयर्थ्यापत्तिरित्यपास्तम्' इति ख. घ. ङ. पाठः, क. कुण्डलितः ।

२ इतोऽग्रे—'एतदर्थमेवेदं प्रकरणमत्र कृतम्' इति ख. घ. ङ. पाठः ।

वुना सिद्धे कन्ग्रहणम इदुदन्ताऽर्थम ,–'अशनिक' इति । मुख्य इति । हरदत्तादिस्वरसादिति भावः । काम इच्छेति । न तु कामयिता । अनभिधानादिति भावः । 'तत्रे'त्यनुवर्त्तते । तदाह–धने काम इति । तद्रचनायामिति । प्रकृतेश्चाऽत्रार्थे लक्षणा । अत्रैवाऽर्थेऽस्य साधुत्वं बोध्यम् ।

उदरात् । 'तत्र', 'प्रसिते' इति च वर्त्तते । 'यः प्रसितः स चेत् अविजिगीषुरि'त्यर्थः । आद्यून इति । निष्ठानत्वस्य 'दिवोऽविजिगीषायामि'ति तत्रैव विधानात् । उदरक इति । मल्लादिः । सस्येनेति । कर्त्तरि तृतीया । परितो जातः–परिजातः । परिगत इत्यर्थः ।

अंशं हारी । अत्र यद्वक्तव्यं तत् 'अकेनोरि'ति षष्ठीनिषेधसूत्रे एवोक्तम् ।

तन्त्रा । तन्त्रम्–तन्तुवायशलाका । 'तन्यन्ते तन्तवोऽस्मिन्नि'ति व्युत्पत्तेः । 'अचिरः कालोऽपहृतस्ये'ति 'कालाः परिमाणिने'ति समासः ।

ब्राह्मणको । 'ब्राह्मणशब्दात् आयुधजीवित्वोपाधिकात्प्रथमान्तात् सप्तम्यर्थे कन् । अन्नशब्दात्तु अल्पत्वोपाधिकात्' । तदाह–आयुधेत्यादि ।

शीतोष्णाभ्याम् । 'संज्ञायामि'त्यनुवर्त्तते, इत्याशयेनाऽऽह—अलस इत्यादि । शीतमिव 'शीतम्'— मन्दम् । शीतं हि मन्दतायुक्तम् । सति शीते कार्यकरणेऽपाटवात् । उष्णमिव-'उष्णम्',-शीघ्रम् । क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां विग्रहः[2] । षष्ठी तु ततो नेत्युक्तम् । ([3]अलौकिके तु शेषे षष्ठ्येवोचिता । प्रत्ययाऽर्थस्य कारकाऽन्वयाऽयोग्यत्वात्) ।

अध्यारूढशब्दादिति । 'गत्यर्थे'त्यादिना रुहेः कर्त्तरि, कर्मणि च क्तः । आद्ये कर्मणोऽनभिहितत्वात्तद्योगे द्वितीया-'अध्यारूढो द्रोणः खारीमि'ति । 'ग्रामं गत" इतिवत् । तथाऽधिकशब्दयोगेऽपि तस्यां प्राप्तायां 'यस्मादधिकम्' 'तदस्मिन्नधिकमि'ति च निर्देशात्सप्तमी-पञ्चम्यौ । 'उपश्लिष्ट'-पदाऽध्याहारेण वा सप्तमी । द्वितीये कर्मणोऽभिधानात्प्रथमा,–'अधिका

१ एवं 'सरुकः' इत्यपि बोध्यम् ।

२ 'प्रत्ययः' इति ख. ग. ङ. पाठः ।

३ अयं ख. ङ. पाठः क. कुण्डलितः ।

खारी द्रोणेने'ति। तृतीया तु कर्त्तरी'ति प्राञ्चः।

परे तु-'अधिकशब्दाऽर्थस्य नामार्थत्वेनाऽक्रियात्वात् हेतौ तृतीया। निर्देशसिद्धा पञ्चमी षष्ठ्यपवादः। अधिकपदार्थे तदर्थयोर्भेदाऽन्वयाऽनुभवात्षष्ठ्यपवादत्वमेव तस्याः, न तु प्रथमाऽपवादत्वमित्याहुः।

अनुका। सूत्रे समाहारद्वन्द्वे लिङ्गव्यत्ययः। 'क्रियाविशिष्टसाधनवाचिभ्यामाभ्यां प्रत्ययः, स्वार्थे' इति बोध्यम्। अनृजुरिति। 'संज्ञायामि'-त्यधिकारादीदृशे एवाऽर्थे एतस्य साधुत्वं बोध्यम्। तिर्यगवस्थानात्पार्श्वम् 'अनृजु'। तत्साधर्म्यात् उपायोऽपि। एवमग्रेऽपि। तीक्ष्ण इति। इदमपि संज्ञाऽधिकारादेव लब्धम्। दम्भ इति। 'दम्भसाधनमि'त्यर्थः। दाम्भिका हि प्रायेण दण्डाऽजिनादि धारयन्ति। इह शीतो-ष्ण-पार्श्वाऽयःशूल-दण्डाऽजिनेभ्यो मुख्याऽर्थेभ्यः प्रत्ययो नेष्यते।

तावतिथं ग्रहणमिति लुग्वा। 'ग्रहणमि'ति भावे ल्युट्। अन्तरङ्गत्वात्। 'ग्रहणमि'ति च प्रत्ययाऽर्थः। 'तावतिथमि'ति पूरणप्रत्ययाऽन्तोपलक्षणम्। 'तावतिथमि'ति तृतीयाऽर्थे सौत्रो निर्देशः। तृतीयाऽन्ताद्ग्रहणमित्यर्थे प्रत्ययः। 'तावतिथेन गृह्णातीत्युपसङ्ख्यानमि'ति वार्त्तिके तृतीयाया एव समर्थविभक्तित्वस्य क्लृप्तत्वात्। तद्ध्वनयन् वक्ष्यति—'द्वितीयेन रूपेण ग्रहणमि'ति।

प्राञ्चस्तु 'तावतिथं ग्रहणमि'ति सूत्रे सामानाधिकरण्यनिर्देशात्करणे ल्युट्। 'ग्रहणोपाधिकात्प्रथमाऽन्तात्स्वार्थे प्रत्यय' इत्यर्थः। 'द्विकमि'त्यस्य 'ग्रहणकरणं द्वितीयं रूपमि'त्यर्थः। 'द्वितीयेन रूपेण ग्रहणमि'ति तात्पर्याऽर्थविवरणमित्याहुः।[2] कन्स्यादिति। अनन्तरावपि ठक्ठञौ नाऽनुवर्त्तेते। अस्वरितत्वादिति भावः।

---

१ इतोऽग्रे—'निर्देशसिद्धे पञ्चमी-सप्तम्यावपि षष्ठ्यपवादौ' इति वदन्ति' इति ख. घ. ङ. पाठः।

२ इतोऽग्रे—'परन्त्वत्र पक्षे स्वार्थिकप्रकरणे एव सूत्रे कर्त्तव्ये, अत्र करणं चिन्त्यप्रयोजनम्' इति घ. पाठः।

पूरणप्रत्ययस्य चेति । न च 'लुग्वावचनाऽऽनर्थक्यं, महाविभाषा-प्रकरणादि'ति वार्त्तिकेनेदं विरुध्यते । तेन हि कन एव लुगिति लभ्यते । 'द्वितीयकं' 'द्वितीयमि'त्येव रूपमिति च लभ्यते । तयोश्च महाविभाषया कनो वैकल्पिकत्वेनैव सिद्धेरिति तदाशय इति वाच्यम् । 'तावतिथेन गृह्णाती'तिवार्त्तिकस्य 'षष्ठेन रूपेण गृह्णाति षट्क'इत्युदाहरणपरभाष्येण पूर्ववार्त्तिकस्य प्रौढिवादपरत्वबोधनात् । तत्र हि पूरणप्रत्ययस्यैव लुक् दृश्यते । व्याख्यातं चैवमेव कैयटेन । किञ्च कनो लुग्वक्तुमशक्यः । सहविधानेन, वाक्यभेदकल्पने मानाऽभावेन च, उद्देश्यत्वाऽनुपपत्तेः ।[1]

द्विकं वा ग्रहणमिति । न च प्रत्ययेनैव ग्रहणस्योक्तत्वाद्ग्रहणपदोपादा-नमनुचितमिति वाच्यम् । ग्रहीतर्यपि प्रत्ययविधानेन, द्विकादिशब्दानां नानाऽर्थत्वेनाऽसन्देहाऽर्थं तथोक्तेः । तस्य प्रकरणादिना निर्णये तु न प्रयोक्तव्यमेव तत् । 'इति'करणो विवक्षाऽर्थः[2] । तेन ग्रन्थविषयग्रहणे एव । तेन 'द्वितीयं ग्रहणं देवदत्तेन दण्डस्ये'त्यादौ न । 'द्वितीयेन रूपेणे'त्यस्य 'द्वितीयया गुरुकृतया शब्दाऽऽवृत्त्ये'त्यर्थः । एवं च ग्रन्थरूपकर्मणः प्रत्ययेनोक्तत्वात् 'उभयप्राप्तावि'त्यस्याऽप्रवृत्तेर्ग्रहणपदघटिते[3] उदाहरणे 'देवदत्तस्ये'ति कर्त्तरि षष्ठी निर्बाधेत्याहुः ।

नित्यं लुगिति । 'तावतिथेन गृह्णातीति लुगि'ति वार्त्तिकपाठादिति भावः । षष्ठेनेति । 'पञ्चभी रूपैरसौ न गृह्णाति, किन्तु षष्ठेने'त्यर्थः । एतेन वार्त्तिके 'सङ्ख्याया' इत्येव वक्तव्यम्, लुक्तु न कर्त्तव्य' इत्यपास्तम् । 'षड्भी रूपैर्गृह्णाती'ति बोधाऽऽपत्तेः । 'एकेन गृह्णाती'त्यत्राऽऽपत्तेश्च ।

---

१ इतोऽग्रे—'अत एव सूत्रे 'लुग्वे'ति चरितार्थम् । अन्यथा महाविभाषया कनः पाक्षिकतया 'पञ्चमम्' 'पञ्चमकमि'ति रूपद्वयसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव' इति घ. पाठः ।

२ 'विवक्षिताऽर्थ' इति ख. ङ. पाठः ।

३ 'ग्रहणपदाऽघटिते' इति क. पाठः । स च लेखकप्रमादात् ।

यत्तु 'द्वितीयकं रूपेण देवदत्तस्ये'त्युदाहरन्ति । तत्र 'रूपेणे'त्यस्य प्रयोगोऽनुचित इति स्पष्टमेव सुधियाम् ।

शृङ्खलमस्य । 'शृङ्खलमि'ति क्वचिद्भाष्यकैयटयोः पाठः । 'काष्ठमयं पाशकं यत्पादे व्यतिषज्यते, तत् शृङ्खलमुच्यते' इति कैयटः ।

कालप्रयोजना । कालवाचकश्च प्रकरणादिना कालवृत्तिः पूरणप्रत्ययाऽन्त एव गृह्यते । ततश्च सप्तम्यन्ताद्भवे प्रत्ययः । कारणवाचकात्तृतीयान्ताज्जनित इत्यर्थे प्रत्ययः । फलवाचकात्तु प्रथमान्तात् । एतत्सर्वमुत्तरसूत्रस्थसंज्ञापदाऽपकर्षणेन लभ्यते इत्याहुः ।

तदस्मिन्नन्नम् । 'अन्नम्'—अत्र अभ्यवहार्यम् ।

वटकेभ्य इति । नन्वत्र संज्ञाग्रहणात्कनभावे मत्वर्थीयेनिनैव सिद्धमिति चेन्न । 'सप्तम्यां च न तौ स्मृतावि'ति निषेधात् ।

श्रोत्रियन् । 'छन्दःशब्दात् 'अधीते' इत्यर्थे 'घन्'प्रत्ययः, प्रकृतेः 'श्रोत्र'भावो निपात्यते' । वेतीति । 'तावतिथमि'ति सूत्रान्मण्डूकप्लुत्येति भावः । अन्यथा विशेषविहितेन घना बाधादण् न स्यादिति बोध्यम् । न चाऽत्राऽणप्रत्ययो नेष्ट इति वाच्यम् । 'छन्दोऽधीते इति वाक्याऽर्थे 'श्रोत्रियन्'पदं निपात्यते' इति भाष्योक्तपक्षाऽन्तरे तस्य दुर्वारत्वात् । अर्थबोधाऽर्थं लोके प्रयुज्यमानवाक्ये क्रियाप्रधानस्याऽपि[1] स्वभावात् सत्त्वरूपे तदध्यायिनि प्रयोगः । यद्वा सूत्रे 'अधीते' इत्यस्य अध्ययनपूर्वं तदर्थाऽनुष्ठानमर्थः । तेनाऽध्येतृमात्रेऽण् सिद्ध इति, 'वे'ति नाऽनुवर्त्यमित्याहुः ।

श्राद्धीति । कर्मवचनादपि 'श्राद्ध'शब्दाल्लक्षणया तत्साधनद्रव्यवृत्तेः प्रत्ययः । अयं च प्रयोगः श्राद्धभोजनदिने एव, न दिनाऽन्तरे इति स्पष्टं भाष्ये ।

पूर्वादिनिः । 'अनेने'ति कर्तृवाचकमनुवर्त्तते । तस्य च क्रियाऽऽकाङ्क्षा-

---

१ 'क्रियाप्रधानस्याऽपि वृत्तौ' इति ख. घ. ङ. पाठः ।

यामन्तरङ्गत्वात्करोतिक्रियैव गृह्यते । 'पूर्वमि'ति च क्रियाविशेषणम्[1]। तदाह—पूर्वं कृतमनेनेति ।

कृतपूर्वीति । कृत-पूर्वशब्दयोः 'सुप्सुपे'ति समासः । 'सपूर्वादि'त्यस्य 'विद्यमानपूर्वात् पूर्वशब्दादिनिरि'त्यर्थः ।

इष्टादिभ्यश्च । 'इष्टी यज्ञे' ।

छन्दसि परिपन्थि[2] । 'पर्यवस्थातृ'शब्दात् शत्रुवाचकात्स्वार्थे इनिः, 'अवस्थातृ'शब्दस्य च 'पन्थ'-'परि' इत्यादेशौ निपात्येते ।

लोके त्विति । 'अनुपस्थितपरिपन्थिभिः पार्थिवैरि'त्यादौ । छान्दसमपीदम् अनुवृत्तिसौकर्याय इह व्याख्यातमित्याहुः ।

अनुपद्यन्वेष्टा । यत्तु 'अन्वेष्टृ'शब्दात्प्रत्ययः । 'एष्टृ'शब्दस्य पदाऽऽदेशो निपात्यते । यद्वा अविद्यमानप्रकृतिप्रत्ययमेवाऽन्वेष्टरि निपात्यते' इति[3] । तन्न । हिरिण्याद्यन्वेष्टर्यपि[4] प्रयोगाऽऽपत्तेरित्याशयेनाह—अनुपदमन्वेष्टेति । पदनिरूपिता[5] च 'गवामि'त्यादौ षष्ठी । 'पदस्य पश्चादि'ति अव्ययीभावः ।

गवादीनां[6] पदात्पश्चादन्वेषणं गवादीनामेव । तेनाऽयं प्रयोगः प्राणिनाम् अन्वेषणे एव । तेन हिरण्यादावन्वेष्ये न भवति । स्पष्टं चेदं

---

१ 'क्रियाविशेषणात् द्वितीयान्तात्प्रत्ययः' इति ख. घ. ङ. पाठः ।

२ 'छन्दसि परिपन्थि । अस्य वैदिक्यां व्याख्यास्यमानत्वात् , अत्रोपन्यासो लेखकप्रमादकृतः' इति ख. घ. ङ. पाठः ।

३ 'इति । तन्न । 'अनुपदी गवामि'ति वृत्त्याद्युदाहृतषष्ठ्या अनापत्तेः । अन्वेषणक्रियानिरूपितकर्मत्वेपि कृद्योगाऽभावेन कारकषष्ठ्या अप्राप्तेः । शेषषष्ठ्या तस्य सूपपादत्वेपि,द्वितीयान्तप्रयोगाऽऽपत्तिर्दुर्वारेत्याशयेनाह-अनुपदमन्वेष्टेति ।' इति घ. पाठः ।

४ 'हिरण्याद्यन्वेष्टरि' इति घ. पाठः ।

५ 'एवञ्च पदनिरूपिता 'गवामि'त्यादौ षष्ठ्येव भवति' इति घ. पाठः ।

६ 'गोः पदात्पश्चादन्वेषणं गवामेव' इति ख. घ. ङ. पाठः ।

सर्वं हरदत्तग्रन्थे। न च 'गवामि'त्यस्य पदविशेषणत्वे वृत्तिर्न स्यात्। नित्यसापेक्षत्वेनाऽदोषात्।

साक्षीति। 'साक्षात् द्रष्टे'त्यर्थे प्रथमोच्चारितात् इनिरि'ति सूत्राऽर्थः। 'अव्ययानाम्भमात्रे' इति टिलोपः। संज्ञाग्रहणाच्च न दातृग्रहीत्रोरयं प्रयोगः। किन्तु पार्श्वे स्थितः सन्नुदासीनतया यः पश्यति, तत्रैव।

क्षेत्रियच्। 'परक्षेत्रशब्दात्सप्तम्यन्तात् घन्, परशब्दलोपश्च निपात्यते'। क्षेत्रियो व्याधिरिति। किञ्च 'क्षेत्रियं विषम्', यत्परशरीरे संक्रमय्य चिकित्स्यते। अपि च 'क्षेत्रियाणि तृणानि'। सस्याऽर्थे क्षेत्रे जातानि तानि चिकित्स्यानि = विनाशयितव्यानि। किञ्च 'क्षेत्रियः पारदारिकः'। परदाराः—परक्षेत्रम्, तत्र चिकित्स्यः–निगृहीतव्यः। स्पष्टमेतत् सर्वमाकरे।

इन्द्रियमिन्द्र। इन्द्रः = आत्मा। कार्यकारणसङ्घातेश्वरत्वात्। 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते' इति श्रुतेः। कर्त्रधिष्ठितानामेव करणत्वात्तस्य लिङ्गम् = अनुमापकम्। इन्द्रेण दृष्टम् = ज्ञातम्, 'मम-चक्षुः, मम श्रोत्र-मि'त्यादिक्रमेण। सृष्टम्-अदृष्टद्वारा। जुष्टम्-प्रीणितम्, सेवितं वा। दत्तम्-यथायथं विषयेभ्यः।

---

१ 'साक्षाच्छब्दात् द्रष्टर्यर्थे' इति घ. पाठः।

२ इतोऽग्रे—'साक्षाच्छब्दस्याऽव्ययत्वेन 'प्रकृतिवदनुकरणमि'ति सूत्रे 'पञ्चम्या लुक्' इति घ. पाठः।

३ ऐतरेयश्रुतिरियम्।

# अथ[1] मत्वर्थीयप्रकरणम् ।

तदस्याऽस्त्य । 'गोमानि'त्यादावाधाराऽऽधेयभावाऽभावात्षष्ठ्युपादानम् । न च तत्राऽपि 'अधि ब्रह्मदत्ते पञ्चाला' इतिवत्तत्सम्भवः । 'अधि'शब्दयोगे तादृशबुद्धिसत्त्वात्तत्र तादृशबौद्धाऽधिकरणत्वसत्त्वेऽपि, अन्यत्र तत्सत्त्वे मानाऽभावात् । एवं वृक्षाणां पर्वताऽधिकरणत्वेऽपि, तन्मूलकसम्बन्धाऽभावेन षष्ठ्यप्राप्तेः 'अस्ये'त्यनेनाऽसिद्धया, सप्तम्युपादानमावश्यकम् ।

सर्वत्र हि क्रियाकारकभावमूलक एव सम्बन्धो द्रव्याऽन्वये षष्ठीनियामकः । न चैवमत्र । संयोग एव हि आधारत्वमूलम्, न तु तन्मूलकः सः । अत एव यथाकथञ्चित्संयुक्तयोरामलकयोरन्यतरबोधकाऽऽमलकशब्दान्न षष्ठी । नाऽपि तन्मूलको मतुः[3] । अत एव भूमाद्यर्थेषु 'संसर्ग'पदेन संयोगग्रहणम् । अन्यथा तस्याऽपि 'अस्ये'ति षष्ठ्यर्थतयैव सङ्ग्रहात्तत्रग्रहणवैयर्थ्यं स्पष्टमेवं[4] । तस्मात्संयोगस्य भूमादिवत्प्रतीतिर्न तु षष्ठ्यर्थता, नाऽपि मत्वर्थतेति बोध्यम् । स्पष्टं चेदं भाष्ये ।

'अस्ती'ति-पुरुषवचने न विवक्षिते । तयोः प्रथमाऽतिक्रमे कारणाऽभावेन प्रवृत्त्या, निर्देशेन शास्त्रसङ्कोचे मानाऽभावात् । कालस्तु वर्त्तमानत्वरूपो विवक्षित एव । अत एव गवामतीतत्वे, अनागतत्वे वा, मतुपो न साधु-

१ बालमनोरमायान्तु 'तदस्मिन्नधिकमिति दशान्ताड्डः' ५।२।४५। इति सूत्रात् पूर्वमेव "अथ मत्वर्थीयाः' इति लिखितम् ।

२ 'तदस्यास्त्य । इहोभयोपादानं तत्तत्कारकबोधे मतुपः साधुत्वाऽर्थम् । किञ्च गोमानित्यादौ' इति ख. घ. ङ. पाठः ।

३ 'मतुरिति स्पष्टं भाष्ये' इति ख. ङ. पाठः ।

४ इतोऽग्रे—'दण्डी'त्यादौ च संयोग एव भविष्यति, 'गोमानि'त्यादौ स्वस्वामिभाव इव' इति क. कुण्डलितः पाठः ।

त्वम् । 'अहमस्म्यस्ये'ति 'मद्वानि'ति च सिद्धयति । स्पष्टं चेदं भाष्ये ।

'अस्ती'ति प्रकृत्यर्थविशेषणम् । एवं च 'अस्त्युपाधिकात्प्रथमान्तात् षष्ठ्यर्थे, सप्तम्यर्थे च प्रत्यय' इत्यर्थः । 'गोमानि'त्यतश्च 'वर्त्तमानसत्ताऽऽश्रयगोसम्बन्धी'ति बोधः ।

नन्वेवं 'गोमान्-आसीत्, भविते'त्यादि कथमिति चेत् । उच्यते । 'आसीदि'त्यनेन न गवां सत्तोच्यते, किन्तु गोमतः । युक्तं चैतत् । अन्यथा गोमत्पदेनैव तस्या उक्तत्वात् 'आसीदि'त्यस्य प्रयोगाऽनापत्तिः । बहुवचनाऽन्तान्मतुपः सत्त्वेन 'आसीदि'त्यत्राऽपि तदापत्तिश्च । यद्यपि गोमत्यपि नाऽतीतत्वादि, तथाऽपि वर्त्तमानसत्ताऽऽश्रयगोसम्बन्धित्वरूपाऽवस्थाविशेषगताऽतीतत्वादेस्तत्राऽऽरोपेण तदुपपत्तिः । 'राजाऽयमासीत्, भविष्यति वे'तिवत् । 'गोमदादिपदानां तत्समभिव्याहारे तथाव्यवहारविषये लक्षणे'ति परे । 'चित्रगुरासीदि'त्याद्यप्येवमेव ।

अत्र षष्ठ्यर्थमत्वर्थीयान्तात्षष्ठ्यर्थमत्वर्थीयो न । एवं सप्तम्यर्थतदन्तात्सप्तम्यर्थः सो न । 'दण्डिमती'त्यादौ षष्ठ्यर्थवृत्तेः सप्तम्यर्थे प्रत्ययः । भिन्नवृत्तावपि सरूपो न । तेन 'वह्निमद्वानि'त्यादयः प्रयोगा असाधव एव । 'तसौ मत्वर्थे' इति भत्वेन जश्त्वाऽसम्भवाच्च । न च 'दण्डिकाः सन्ति

१ 'विशेषविषयाऽतीतत्वादेः' इति घ. पाठः ।

२ इतोऽग्रे—'तत्र वाक्याऽर्थवशात् मतुबर्थसम्बन्धस्याऽपि यद्यपि अतीतत्वादिप्रतीतिः, तथापि अन्तरङ्गः शब्दसंस्कारो न निवर्त्तते, 'ग्रामं[1] न गच्छती'तिवदिति स्पष्टमत्रैव कैयटे' इति ख. ङ. पाठः । क. कुण्डलितः ।

३ 'लक्षणे'ति कश्चित्' इति ख. घ. ङ. पाठः ।

४ इतोऽग्रे—'धातुसम्बन्धे प्रत्ययाः' इति सूत्रेण सिद्धिरिति तत्र सूत्रे भाष्ये स्पष्टम्' इति ख. घ. ङ. पाठः ।

1 'ग्रामात् न आगच्छती'ति कैयटे पाठः ।

अस्मिन्नि'तिविग्रहे इनिष्ठन्नन्तान् दुर्वारः । 'सप्तम्यां च न तौ स्मृताविति'-वचनेन सप्तम्यर्थे तयोरप्रवृत्तेः । स्पष्टं चेदं सर्वमत्रैव भाष्यकैयटयोः ।

एकाऽर्थीभावबलाच्छब्दशक्तिस्वभावादेव बहुव्रीहाविव, मत्वन्तवृत्तावस्त्यर्थाऽन्तर्भावसम्भवेन, 'अस्ति'ग्रहणम् 'अस्ति'शब्दान्मतुप्विध्यर्थम् । 'अस्ति'सामानाधिकरण्याऽभावाच्चाऽप्राप्तिः । अस्तेश्चाऽव्यभिचारान्न अस्तिसामानाधिकरण्यम् । तेन 'अस्तिमानि'ति सिद्धम् । 'सत्ताकर्तृधनवानि'ति चाऽर्थः ।

'इति'शब्दो विषयविशेषलाभाऽर्थः । तेनैकयवाऽभिप्रायेण न 'यवमानि'ति प्रयोगः । किन्तु बहुयवसत्ताऽभिप्रायेणैव । क्वचित्तु 'यवमतीभिरद्भिर्यूपं प्रोक्षती'त्यादौ जातिमात्रसम्बन्धविवक्षायामपि भवति ।

वार्त्तिके भूमादिग्रहणन्तु 'प्रायेण भूमादयोऽपि प्रतीयन्ते' इत्येवंपरम् । तदाह—भूमेत्यादि । अत्र संसर्गः संयोगः । अत एव 'दण्डी'त्यादौ संयुक्तदण्डस्यैव प्रतीतिर्न तु गृहाऽवस्थितदण्डस्य तत्स्वामिन इति बोध्यम् । स च 'सम्बन्धाऽन्तरे सत्येव तन्नियामको, न तु केवल' इत्युक्तं प्राक् ।

ये 'अस्ति'विवक्षायां मतुबादयो विधीयन्ते, ते भूमादिषु विषयेषु भवन्ती'ति वाक्याऽर्थः। 'यवमान्' । 'ककुदावर्त्ती' । 'रूपवान्' । 'क्षीरिणो

---

१ इतोऽग्रे—'अस्तिमानि'ति तु 'अस्ति'शब्दात्तिङन्तप्रतिरूपकात्, स्वरादिपठिताद्वा अव्ययान्मतुपि सिद्धम् । तद्धि वृत्तौ कर्तृविशेषधनवाचीति अस्तिसामानाधिकरण्यमस्त्येवेत्याहुः । भाष्ये तु एकार्थीभावबलात्' इति ख.पाठः ।

२ 'इति सिद्धमित्युक्तम्' इति घ. पाठः ।

३ 'धनकर्तृकसत्तावानिति चाऽर्थः' इति ख. ङ. पाठः ।

४ इतोऽग्रे—'वृत्तिविषये चाऽस्तिघटक'ति'शब्दः कर्तृविशेषे धने वर्त्तते । कर्तृसामान्याऽवच्छिन्नक्रियया प्रत्ययाऽर्थस्य विशेषणाऽयोगादि'ति कैयटः' इति ख. घ. ङ. पाठः ।

५ 'तेनैकयवसत्त्वाऽभिप्रायेण' इति घ. पाठः ।

वृक्षाः'। 'उदरिणी कन्या'। 'दण्डी'ति क्रमेणोदाहरणानि।

भूमा-बहुत्वम्। तच्चाऽऽपेक्षिकम्। यस्य हि यावदुचितं, तावदेव बह्वादिशब्देनाऽपि प्रतीयते। यथा पञ्चगोरपि देवदत्तस्य 'बह्व्यो गाव' इति व्यवहारः। राज्ञः सहस्रगोरपि 'अल्पा' इति।

मनोरमायां—'राज्ञस्तु सहस्रगोभिरपी'ति पाठो दृश्यते। सोऽपपाठः। संज्ञाऽभावेन समासदौर्लभ्यात्। टजापत्तेश्च। 'सहस्रगोरपी'ति पाठः, बहुव्रीहिश्च समास इति बोध्यम्। संयोगस्योभयनिष्ठत्वेऽपि 'पुरुषी दण्ड' इति न। अनभिधानादित्याहुः।

रसादीनां विशेषणमिति। तथा च गुणवाचकानामेषां ग्रहणमिति भावः। 'इति'शब्दाऽनुवृत्तेरिदं प्रायिकम्। तेन 'स्पर्शिको वायुरि'त्यादि सिद्धमिति स्पष्टं भाष्यादौ। एवं च सूत्रं व्यर्थमेवेति तत्त्वम्।

गुणवचनेभ्य इति। 'वचन'ग्रहणाद्गुणगुणिनोर्ये समानरूपाः प्रसिद्धाः शुक्लादयस्ते एवेह गृह्यन्ते, न तु रूपादयोऽपि। तेषामेवाकडारसूत्रे गुणवचनसंज्ञाया उक्तत्वात्। अत एव 'अव्यतिरेकात्सिद्धमि'ति भाष्यं सङ्गच्छते।

न चैवं मतुप एवाऽप्राप्तेर्लुग्विधानं व्यर्थम्। 'पटस्य शुक्ल' इति व्यतिरेकस्याऽपि दर्शनेन, प्राप्तमतुपोऽश्रवणार्थं तदावश्यकत्वात्। 'अव्यतिरेका-

---

१ 'मनोरमायाम्' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः ख. घ. ङ. पाठः। क. कुण्डलितः, शब्दरत्नधृतत्वात्।

२ इतोऽग्रे 'तन्निरूपितस्य तस्य वृत्तिनियामकत्वाऽभावादित्याहुः' इति घ. पाठः।

३ इतोऽग्रे—'संसर्गोऽत्र संयोगः। अत एव 'दण्डी'त्यादौ संयुक्तदण्डस्यैव तत्स्वामिनः प्रतीतिर्न तु गृहावस्थितदण्डस्याऽपीति बोध्यम्' इति ख. घ. ङ. पाठः। क. ग. तु पूर्वमेवाऽयं पाठः ( १४७५ पृष्ठे )।

४ 'तथा च नैयायिकसंमतगुणवाचकानामेवैषां ग्रहणम्। वस्तुत 'इति'शब्दाऽनुवृत्तेरिदं प्रायिकम्' इति ख. घ. ङ. पाठः।

५ इतोऽग्रे—'अत एव गुणिपरशुक्लशब्दान्मतुप् नेत्याहुः' इति घ. पाठः।

दि'त्यादिना च भाष्ये इदं प्रत्याख्यातमि'ति न भ्रमितव्यम् । 'दृश्यते च व्यतिरेको, यथा 'पटस्य शुक्ल' इति भाष्येणाऽव्यतिरेकादित्यस्यैव खण्डनात् । स्पष्टं चेदं कैयटे । एवञ्च गुणिनि यौगिकत्वात्त्रिलिङ्गत्वं, सर्वलिङ्गत्वं चोपपद्यते । रूढत्वे तु गुणे 'शुक्लो रूपमि'तिवन्नियतलिङ्गसङ्ख्यत्वं स्यात् गुणिन्यपि, गुणेऽपि वा सर्वलिङ्गसङ्ख्यत्वं स्यादिति स्पष्टं भाष्यकैयटयोः । अन्येतु 'अनभिधानान्नैतेभ्यो मतुप्, नापि गुणे सर्वलिङ्गसङ्ख्यत्वमि'त्याहुः ।

मादुपधाया । 'यवादिराकृतिगण' इति'आसन्दीवदि'तिसूत्रस्थभाष्यादिस्वरसः । 'म् च अश्चे'ति 'मम्' इति समाहारद्वन्द्वः । तेन मतुबाक्षिप्तं प्रातिपदिकं विशेष्यते । तदाह—मवर्णाऽवर्णान्तादिति ।

'उपधायाश्चे'ति वाक्याऽन्तरम् । 'उपधाभूत-मात्परस्ये'त्यर्थः । 'येन नाऽव्यवधान'न्यायेनाऽन्त्याऽज्व्यवहितेऽपि भवति । एवमक्षराऽर्थे स्थिते फलितमाह—मवर्णाऽवर्णोपधादिति । 'नृमत इदं नामतमि'त्यत्र तु अवर्णोपधत्वस्य बहिरङ्गत्वान्न वत्वम्[1] ।

झयः । इदमप्याक्षिप्तप्रातिपदिकविशेषणमित्याह—झयन्तादिति[3] ।

आसन्दीवदष्ठी । 'आसन्दीवदादीनां स्त्रियां न प्रयोग' इति एतत्सूत्रस्थभाष्यस्वरसः । ऋषिरिति । कण्वाऽऽख्यः ।

१ 'अदुपधत्वस्य' इति ख. घ. ङ. पाठः ।

२ इतोऽग्रे—'अत्र मस्याऽनुनासिको वो न । 'मतोर्व' इत्यत्र वद्वयोच्चारणात् । गुणभेदकत्वाश्रयणाच्च । अत एव 'प्रत्ययस्थादि'तिसूत्रस्था'ऽसुब्वत' इति भाष्यप्रयोगे च 'प्रत्यये भाषायामि'त्यनुनासिको न कृतः । केचित्तु 'अस्मादेव भाष्यप्रयोगात् मतावनुनासिकाऽभावः । वस्तु अनुनासिक एव । अत एव 'ककुद्मानि'त्यत्र नाऽनुनासिक' इत्याहुः' इति ख. घ. ङ. पाठः ।

३ इतोऽग्रे–'वह्निमद्धानि'ति त्वसाध्वेव। मत्वन्तान्मतुपो निषेधात् । अपदान्तत्वेन जश्त्वाऽयोगाच्च' इति घ. पाठः । क. ग. तु पूर्वत्राऽयं पाठः (१७७४ पृ०) ।

राजन्वतीति। अन्यत्र पुंस्त्वस्य विवक्षितत्वेऽपि, अत्र तन्न विवक्षितमिति भावः। 'राजन्वान् देश' इत्यपि बोध्यम्।

शिखावान् दीप इति। यद्यपि व्रीह्यादिष्वयं पठ्यते इति, अतो लचो न प्राप्तिः, तथाऽपि तत्र ज्वाला-चूडावाचिनोरेव ग्रहणम्। यद्यपि 'शिखाऽग्रमात्रे, चूडायां, केकिचूडा-प्रधानयोः। ज्वालायां, लाङ्गलिक्यां च, शिफा-शाखा-घृणिष्वपी'ति हेमकोशे उक्तं, तथाऽपि तयोरेव प्रसिद्धत्वं मन्यते। 'चूडावती प्रतिमे'ति वा प्रत्युदाहार्यम्।

प्राण्यङ्गादेवेति। 'इति'करणाऽनुवृत्त्येदं लभ्यते।

[1]मेधावानिति। यदा 'धारणावती बुद्धिर्मेधे'ति विशेषवाचकस्य सामान्ये लक्षणा, तदेदम्। एतेन 'अस्मायामेधे'ति विनेर्बोधकस्य सत्त्वादिदं चिन्त्यमि'त्यपास्तम्। तत्र विशिष्टरूपोपादानेन अभिव्यक्तपदार्थस्यैव ग्रहणादित्याहुः। 'चिकीर्षावान् देवदत्त' इति प्रत्युदाहरणमि'त्यन्ये।

चूडालोऽसीति। 'असी'ति 'तिङ्ङतिङ' इति निहतम्। चूडालात्सो रुत्वे, तस्योत्वे, सुस्थानिकस्याऽपि सुप्त्वेनाऽनुदात्ततया, तत्स्थानिकस्य पूर्वेण सहैकादेशस्य 'एकादेश उदात्तेने'त्युदात्तत्वे, तस्य परेण पूर्वरूपैकादेशे, तस्य पदाद्यनुदात्तेन सहैकादेशत्वात् 'स्वरितो वे'त्यस्य प्राप्तिरिति बोध्यम्।

सिध्मादिभ्यश्च। 'अयमाकृतिगण' इतिगणरत्नकृत्। मतुप्समुच्चयार्थमिति। निपातानामनेकार्थत्वादिति भावः। तेन सिध्म-निष्पाव-मांसादिभ्योऽदन्तेभ्य इनि-ठनौ न, किन्तु मतुबेव। पूर्वसूत्रे तु विकल्पसमुच्चययोरविशेष इति भाष्येऽत्रैव तदुक्तिः। अत्र च लिङ्गं 'केशाद्व' इत्यत्र पुनरन्यतरस्याङ्ग्रहणम्। तद्धि इनि-ठनोः प्राप्त्यर्थम्। अस्य विकल्पाऽर्थत्वे एतदनुवृत्त्यैव सिद्धौ, किं तेन ?। न च तत् 'द्युद्रुभ्यां म' इत्यस्य नित्यत्वबोधनाऽर्थम्, विकल्पद्वयमध्यपठितस्य हि नित्यत्वं न्याय्यमिति वाच्यम्। तेषां रूढिशब्दत्वेन तदर्थस्य मतुपाऽभिधातुमशक्यत्वेनैव तदनुत्पत्ति-

---

१ 'मेधावानिति। मेधे'ति सञ्ज्ञाशब्दोऽयम्। एतेन' इति ख. घ. ङ. पाठः।

सिद्धेर्विकल्पसम्बन्धेऽपि क्षत्यभावात् । ध्वनितं चेदं 'द्युद्रुभ्यां नित्याऽर्थमेके' इत्यत्राऽरुचिबोधकैकपदेन भाष्यकृता । किञ्चैवं 'द्युद्रुभ्यां मो नित्यमि'त्येव सिद्धे, अन्यतरस्याङ्ग्रहणस्य फलाऽन्तरमेव वाच्यमिति दिक् । 'लज्वे'ति वृत्तावपि 'वा'शब्दः समुच्चये बोध्यः ।

'वातदन्ते'ति—सिध्माद्यन्तर्गणसूत्रम् । यद्यपि 'अलोऽन्त्यस्ये'त्येव सिद्धे, ङित्त्वं व्यर्थम् , तथाऽपि प्रत्ययत्वभ्रमव्यावृत्त्यर्थं तत् । प्रत्यये हि ङित्त्वं व्यर्थमेव । श्रवणाऽर्थं तु न । प्रथमोपस्थितेत्संज्ञाबाधे मानाऽभावादित्याहुः । वातूल इति । अन्तोदात्तः । एवं बलूलोऽपि । 'पार्ष्णिधमन्योर्दीर्घश्च' । 'पार्ष्णीलः' । 'धमनीलः' । 'क्षुद्रजन्तूपतापाश्च' । 'यूकालः' । 'मक्षिकालः' । उपतापो—रोगः । 'विचर्चिकालः' । 'विपादिकालः' ।

यद्यपि 'ज्योत्स्नादिभ्योऽण उपसङ्ख्यानमि'ति वार्त्तिके भाष्यकृता 'वैपादिक' इत्युदाहृतं, तथापि 'कौण्डल'साहचर्यात् अर्हाऽर्थकमेव तत्रेति वृत्त्याद्याशयः । 'काल-घाटा-जटाभ्यः क्षेपे' । कालात् केचिन्नेच्छन्ति ।

वत्सांऽसाभ्याम् । 'काम''बल'शब्दौ मत्वर्थीयाऽच्प्रत्ययान्तावित्याह—कामवतीत्यादि । वत्सांऽसशब्दौ वृत्तिविषये स्नेहबलयोर्वर्त्तेते । पक्षे मतुप् । 'वत्सवान्' 'अंसवानि'ति । प्रकरणादिना स्नेहबले प्रतीयेते एव । अत एवैतत्प्रकरणे सूत्रप्रणयनं चरितार्थम् । वृत्तिकारादयस्तु 'यद्यपीह प्रकरणे सर्वत्र मतुः समुच्चीयते, तथापीह नेष्यते, उक्तोदाहरणे उक्तार्थाऽप्रतीतेरि'त्याहुः ।

'विश्वगि'ति—वार्त्तिकम् । 'विषु = नाना, अञ्चन्तीति विष्वञ्चि' ।

१ इतोऽग्रे—'यद्यपि 'वत्सवती गौः' 'अंसवान्दुर्बल' इत्यत्र स्नेहवतीत्याद्यर्थो न प्रतीयते, तथापि दुर्बलादिपदाऽसमभिव्याहारे प्रकरणादिना स्नेहबले प्रतीयेते एव' इति ख. घ. ङ. पाठः, क. कुण्डलितः ।

२ 'वृत्तिकारादयस्तु न भवत्येव मतुबित्याहुः' इति घ. पाठः ।

३ 'मतुबन्ते तूक्तोदाहरणे उक्ताऽर्थाऽप्रतीतेरित्याहुः' इति ख. घ. ङ. पाठः ।

'तान्यस्य सन्तीति विषुण' इति। विषुवदाख्यः कालः। तस्य हि विष्वक्= नानाप्रकाराणि दिनानि सन्ति। दिनाऽन्तराणां ह्रासवृद्ध्योस्तन्मूलकत्वात्। तथा मृत्युर्वायुरव्यवस्थितचित्तश्च-'विषुणः'।

इह यदि यणि कृते उत्तरपदलोपः स्यात्तर्हि वलि लोपे 'विष्ण' इति स्यादत आह—अकृतसन्धेरिति। 'समर्थानामि'त्यस्याऽपवादोऽयम्। 'शाकी-पलाली-दद्र्वां ह्रस्वत्वं चेति वक्तव्यम्'। चात् 'न'प्रत्ययः। महत् शाकं 'शाकी'। तद्वत्—'शाकिनम्'। भिन्नानि शालि-कोद्रव-पलालानि 'पलाली'ति कैयटः। 'महत्पलालं तदि'त्यन्ये। 'पलालक्षोद' इत्यपरे। 'शाकिनम्'। 'पलालिनम्'। दद्रूस्त्वग्रोगविशेषः। तद्वान्–'दद्रुणः'।

प्रज्ञाश्रद्धा। यद्यपि कर्त्तृव्युत्पन्न'प्रज्ञ'शब्दात् प्रज्ञाद्यणि 'प्राज्ञ' इति सिद्ध्यति, नाऽप्यर्थभेदः, तथापि स्त्रियां ङीबभावार्थमिदमिति ध्वनयन्नाह–प्राज्ञेति। अत्र श्रद्धासाहचर्येण भावाऽर्थकाऽङन्तस्यैव प्रज्ञाशब्दस्य ग्रहणमित्याहुः। 'व्याकरणे' कृद्योगलक्षणा षष्ठी न, तद्धिताऽऽधिक्यादिति कैयटः। 'कर्त्तृकर्मणोरि'तिसूत्रस्थभाष्याऽनुगृहीत-मदुक्तरीत्या तु षष्ठ्येवोचितेति ध्येयम्।

वृत्तेश्च। 'अनुच्छेद्यजीविकोपायो वृत्तिरि'त्याहुः। 'विच्छिन्नस्य प्रतिविधानमि'त्यन्ये। वृत्तिकृता तु सूत्रे 'वृत्ति'शब्दः प्रक्षिप्तः।

तपःसह। अत्र 'अस्याऽस्मिन्नि'ति अर्थद्वयेन न यथासङ्ख्यम्। ([2]ठनोऽपीति। अपिना अणा बाधा मा भूदिति च)।

योगविभाग इति। 'तपःसहस्राभ्यामण्, विनीनी चे'ति न्यासेन अण उभयसम्बन्धो, विनीनोर्यथासङ्ख्यं च सिद्धमिति भावः।

ज्योत्स्नादिभ्यः। आदिना 'तमिस्र-कुण्डल-कुतप-विपादिका' इति

१ इतोऽग्रे—'विषयत्वविवक्षायान्तु 'प्राज्ञो व्याकरणे' इत्यपि बोध्यम्' इति घ. पाठः।

२ अयं पाठः क. ग. नास्ति। मूले एव प्रायोऽस्य पाठस्य सत्त्वात्।

भाष्ये स्पष्टम्। विसर्पोऽपि वृत्तौ। 'नखरो' गणरत्ने। कौण्डलः= कुण्डलाऽर्ह उच्यते। तत्र यथाकथञ्चिन्मत्वर्थ उपपाद्यः। यस्तु संसक्त-कुण्डलः स 'कुण्डली'। 'इदं च इतिकरणाऽनुवृत्तेर्लभ्यते' इति हरदत्तः।

ज्यौत्स्न इति। शुक्लपक्षः। तामिस्रः–कृष्णपक्षः, नरकविशेषश्च। तमःसमूहः 'तमिस्रम्'। तदस्मिन्नस्तीत्यर्थः। स्त्रियां–'तामिस्री'। 'तमिस्रे'-त्यपि वक्ष्यते।

मतुप् चेति। अन्यतरस्याङ्ग्रहणस्य समुच्चयाऽर्थस्याऽनुवृत्तेरिति भावः।

सिकताश। देशे विशेषस्य वक्ष्यमाणत्वादाह–घट इति। सिकता इति। लुपि युक्तवद्भावः। शर्करा इत्यादीति। 'स्त्री शर्करा, शर्करिलः, शार्करः, शर्करावति। देश एवाऽऽदिमावेवमुन्नेयाः सिकतावती'त्यमरे सूत्रद्वयोदाहरणसङ्ग्रहः। दन्तुर इति। निम्नोन्नते प्रयोगस्तु लक्षणया बोध्यः। उन्नते किम्?। 'दन्तवान्'।

ऊषशुषि। ऊषः=क्षारमृत्। शुषिः=छिद्रम्। मधु माधुर्यमिति। रसवाचिन एवाऽत्र ग्रहणम्[1]। तेन 'मध्वस्मिन्नस्ति घटे' इत्यत्र ने'ति भाष्यम्। खर इति। 'महत्कण्ठविवरं खम्, तद्वानि'त्यर्थः। गर्दभे रूढोऽयम्।

नगपांस्विति। भाष्ये 'नगाच्चे'त्येव पठ्यते। 'पांसुर' इतिप्रयोगस्तु 'कृपो रो ल' इति सूत्रे भाष्ये दृश्यते। नगाः-वृक्षाः, पर्वताश्च। जाति-शब्दोऽयम्। तथा च 'नगरी'ति जातिलक्षणो ङीष्। वुञ्छणादिसूत्रे अश्मादिषु नगशब्दपाठान्नगरस्य सिद्धेर्नगग्रहणं चिन्त्यप्रयोजनमिति कश्चित्। तन्न। तत्र 'देशे तन्नाम्नी'त्युक्तेः। पाण्डुः=शुक्लो वर्णः, तद्वान् 'पाण्डुरः'। अव्युत्पन्न एवेति। एवमेव नखर-सिन्धुर-कण्डुराः साधव इत्याहुः। 'पाण्डर'शब्दो गुणे, गुणिनि च। तत्र गुणे पुमान्, तद्वति त्रिलिङ्गः। कच्छूः-त्वग्रोगविशेषः। 'कच्छ्वा' इत्यपि भाष्ये न दृश्यते।

द्युम इति। द्यौरस्यास्ति। 'दिव उदि'त्युत्त्वम्'। 'अव्युत्पन्नं 'द्यु'-

---

१ 'रसाऽन्वित एवाऽत्र गृह्यते' इति ख. घ. ङ. पाठः।

इति अह्नो नामधेयमि'त्यन्ये । द्रुः = वृक्षः, शाखा चेत्याहुः । रूढेषु मतुप् न विकल्पते,[1] तदर्थस्य तेनाऽभिधातुमशक्यत्वादित्याहुः ।

'अन्येभ्य' इति—वार्त्तिकम् । 'व'प्रत्ययोऽनुवर्त्तते । मणिव इति । 'बिम्बावम्' । 'कुररावम्' । 'इष्टिकावम्' (—इत्यप्यस्योदाहरणम् । 'अन्येषामपी'ति दीर्घः ) ।

'दृशि'ग्रहणप्रपञ्चमाह—अर्णस इति । अर्णो—जलम् । यणेति । सूत्रे सांहितिको यण्, न तु 'ख्यत्यादि'तिवत्कृतयणादेशाऽनुकरणम् । लक्ष्ये यणोऽभावादिति भावः । आसुतिः—अभिषवः । परितः सीदतीति 'परिषत्' । 'सदिरप्रतेरि'ति षत्वम् । 'सत्सूद्विषे'ति क्विप् ।

पाठान्तरमिति । तत्र पृषेर्बाहुलकात् अदिः । 'पार्षदकृतिरेषे'ति भाष्य-प्रयोगात् । वलचि—'अन्येभ्य' इति वार्त्तिकम् । 'पुत्रवलः' 'उत्सङ्गवल' इत्यादि । संज्ञायामित्यनुवृत्तेरिति । 'अण' इत्यनुवृत्तेरपि भ्रातृवले दीर्घो-ऽभावो बोध्यः । 'वनगिर्योरि'त्यतः 'संज्ञायामि'ति वर्त्तते[2] ।

ज्योत्स्ना । ज्योत्स्ना—चन्द्रप्रभाः । तत्राऽवयवीभूतं ज्योतिरस्तीति मत्वर्थोपपत्तिः । एतेन'तमःसमूहे 'तमिस्र'शब्दो व्याख्यातः । 'तमिस्रं तिमिरं तम'इत्यमरस्तु समूह-समूहिनोरभेदोपचारात् । स्त्रीत्वमतन्त्रमिति । व्याख्यानमत्र शरणम् । ऊर्जस्विन्-गोमिनोर्नान्तत्वव्यक्तये नलोपोनाऽकारि ।

अत इनि । 'एकाऽक्षरादेतयोः प्रतिषेधः' । 'स्ववान्' । 'खवान्' । 'अस्मिन्नस्तीत्यर्थे च प्रतिषेधः' । इदं सर्वम् 'इति'करणाऽनुवृत्तेर्लभ्यते । अत एव वृक्ष-प्लक्ष-व्याघ्र-सिंहादिभ्यो न । तण्डुलाऽऽदिभ्यस्तु भवत्येव । 'कारक'शब्दाच्च नेति बोध्यम् । 'एकाक्षरात्, कृतो, जातेः, सप्तम्यां च न तौ स्मृतौ' इति भाष्योक्तेः । संज्ञादिभ्य इति । आदिना मेखला,

१ अयं पाठो लघुशब्देन्दुशेखरात्पूरितः । औचित्यात् ।

२ 'वर्त्तते इति भावः' इति ख॰ पाठः ।

वाणा, हंसा, वडवा, अष्टका, बलाका, पताका, कर्मन्, चर्मन्, (वर्मन्[1]) इत्येते गृह्यन्ते । 'यव-खद्-नौ-कुमारीत्येतेभ्य इकः' ।

अन्येभ्य इति । 'व्रीहि-पापा-वीणा-अशीर्षेभ्य' इत्यर्थः ।

मतुप् चेति । समुच्चयार्थकाऽन्यतरस्यामित्यस्याऽनुवृत्तेः ।

व्रीहिरिति । इदमर्थग्रहणम् । तेन 'शालिलः' 'शाली'त्यादिसिद्धि-रि'ति वृत्तिः । एवं च व्रीह्यादिषु 'व्रीहि'ग्रहणं चिन्त्यप्रयोजनम् ।

स्वाङ्गादिति । 'विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युरि'-त्यर्थः । विवृद्धौ कर्णावस्य–'कर्णिल' इत्यादि ।

एकगोपूर्वात् । सूत्रे बहुव्रीहिः । अधिकारप्राप्त'प्रातिपदिकादि'त्यन्य-पदाऽर्थः । अन्यस्याऽनुपस्थितत्वात् । इदं सूत्रं षष्ठीतत्पुरुष-बहुव्रीहि-द्वन्द्वेषु न । अनभिधानात् । अत एव भगवता 'अत'इत्यनुवृत्तौ ऐकगविको न सिद्ध्यती'त्याशङ्क्य 'समासान्ते कृते भविष्यती'ति समाहितम् । अन्यथा बहुव्रीह्यादौ तदसिद्ध्या तदसङ्गतिः स्पष्टैव ।

ऐकशतिक इति । 'पूर्वकालैके'ति समासः । 'तद्धितार्थे' इति तु न । मत्वर्थे तस्याऽनभिधानेनाऽप्रवृत्तेर्भाष्ये एवोक्तत्वात् । 'सङ्ख्यायाः संव-त्सरे'त्युत्तरपदवृद्धिस्तु न । तत्र प्रतिपदोक्तपरिभाषया 'सङ्ख्या'पदमुच्चार्य, 'तद्धितार्थे'तिसूत्रविहितसमासस्यैव ग्रहणादित्याहुः । (संज्ञापूर्वकविधे-रनित्यत्वादि'ति कश्चित्) । 'एकशब्दोऽत्र मुख्याऽऽदिवाची'त्यन्ये । तदा 'विशेषणं विशेष्येणे'ति समासः[2]।

केवलैकगोशब्दयोस्तु नाऽस्य प्रवृत्तिः । 'व्यपदेशिवद्भावोऽप्राति-पदिकेने'ति निषेधात् । अत्र 'अत' इति न सम्बध्यते । तेन 'गोश-कटिरस्याऽस्ति 'गौशकटिक' इति सिद्धम् । यद्यप्यनुवृत्तिपक्षेऽपि अदन्त-'शकट'शब्दमादायेदं सिद्ध्यति, तथापि इकारान्तेन 'गोशकटिमान्'

१ 'वर्मन्' इति क. ग. नास्ति । 'शर्मन्' इति बालमनोरमापाठः ।

२ अयं ख. घ. ङ. पाठः क. कुण्डलितः ।

इत्यस्याऽऽपत्तिः । 'गोविंशतिः' 'एकविंशतिः' अस्यास्तो'त्यादौ त्वनभिधानान्नेति भाष्ये इहैव स्पष्टम् । 'गवां समूहो गोत्रा, साऽस्मिन्नस्ती'ति 'गौत्रिकमि'त्यर्थवत्सूत्रे कैयटेन चोक्तम् । 'द्वन्द्वोपतापे'त्यादौ मण्डूकाऽनुवृत्त्या 'अत' इत्यस्य सम्बन्धः । मानं च तत्रैव वक्ष्यामः । वृत्तिकारादीनान्तु प्रमाद इति स्पष्टमेव । अत एवाऽर्थवत्सूत्रे 'गोमदिदं नगरमि'त्यत्र 'मत्वन्तान्मत्वर्थीयो लुप्यते' इति भाष्यमुपादाय कैयटेनोक्तम्-'एकगोपूर्वादि'ति ठञो भाष्यकृद्वचनाल्लोप' इति । 'नित्य'ग्रहणं मतुब्बाधनाऽर्थम् ।

'एकदेशिने'ति निर्देशादिनिरपि क्वचित् । तेन 'एकदण्डी'त्यादिसिद्धिः । 'एकद्रव्यवानि'ति तु 'एकेन द्रव्यवानि'ति विग्रहीतव्यमित्याहुः ।

निष्कात्पराविति । सूत्रेऽसामर्थ्येऽपि सौत्रत्वात्समासः । 'अन्त'ग्रहणं 'शतादिपूर्वादि'त्यर्थनिरासाऽर्थमित्याहुः ।

रूपादा । 'आहतप्रशंसाविशिष्टेऽर्थे वर्त्तमानाद्रूपशब्दान्मत्वर्थे यबि'त्यर्थः । आहतम्—ताडनम्, तेन निष्पन्नं दीनारादिषु यत्प्रतिमादिरूपम्, तदपि 'आहत'शब्देन कार्ये कारणोपचारादुच्यते । तदाह—आहतमिति । 'कर्मणि क्तप्रत्यय' इत्यन्ये'[1] ।

'अन्येभ्योपी'ति—वार्त्तिकम् । दृशिग्रहणादिनिरपि,–'गुणी'ति[2] ।

यशस्वीति । 'तसौ' इति भत्वाद्रुत्वं न । यशस्वानिति । ननु 'एकगोरि'तिसूत्रे 'नित्य'ग्रहणं किमर्थम् । विभाषायाः पूर्वयोगे ('द्युद्रुभ्यां म'इत्यादौ) एव निवृत्तत्वात् । 'एवं तर्हि ज्ञापयत्याचार्यः 'प्रागेतस्माद्योगाद्विभाषेत्यनुवर्त्तते'इति भाष्ये उक्तत्वेनाऽग्रे तत्सम्बन्धे मानाऽभावेन कथमत्र मतुबिति चेत् । सत्यम्[3] । 'तसौ मत्वर्थे' इति सूत्रे 'यशस्वी' 'यशस्वानि'ति भाष्यो-

---

१ इतोऽग्रे—'अर्श आद्यचो लुका भाष्यसङ्गतिः । अवयवधर्मस्य समुदाये उपचारबोधकतयाऽपि भाष्यसङ्गतिरित्यन्ये' इति घ. पाठः ।

२ अयं ख. घ. ग. ङ. पाठः । क. नास्ति ।

३ 'सत्यम् । अस्य भाष्यस्य 'तत्सूत्रेऽसम्बन्ध' इत्यर्थमात्रपरत्वात् । न त्वग्रेऽपि तदसम्बन्धपरत्वम्' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

दाहरणात्, 'प्रकृत्यैकाजि'ति सूत्रे 'स्रग्वत्तर' इति भाष्योदाहरणाच्च एतद्विषये मतुपः स्वीकारात्।

'चोः कुरि'त्येतदपवादतया व्रश्चादिषत्वमाशङ्कयाऽऽह—क्विन्नन्तत्वादिति। 'सृजियज्योः पदान्ते षत्वं क्विन्प्रत्ययस्येति कुत्वाऽपवाद' इति मते ऋत्विगादिसूत्रेण पदान्तविषये कुत्वनिपातनात्तदिति बोध्यम्।

मिननिति। क्वचिद्भाष्यपुस्तकेऽयं चित् दृश्यते। मूलेऽपि क्वचिच्चिदेव। इनिठनौ, मतुप्चेति। अनेनाऽन्यतरस्याङ्ग्रहणेन'अत इनी'त्यस्य प्रवृत्तौ, तत्र मतुप्समुच्चयबोधकाऽन्यतरस्याङ्ग्रहणाऽनुवृत्तेः प्रत्ययत्रयसौलभ्यम्। इदं चाऽन्यतरस्याङ्ग्रहणं पूर्ववार्त्तिकेऽप्यपकृष्यते। तेन 'फली' 'बर्ही'त्यादि सिद्ध्यतीत्याहुः। शीतोष्णेति। 'इह 'चालुरि'ति वर्त्तते। 'चुट्ट' इति चित्त्वम्। तेन हृदयाल्वादयोऽन्तोदात्ता' इति हरदत्तः। 'तन्न सहते' इति भाष्ये पाठः। तृप्रः पुरोडाश इति। 'न तृप्रा उरुव्यचसमि'ति मन्त्रस्य भाष्ये तथा व्याख्यानादिति भावः। माधव इति। 'सुप्धातुवृत्तावि'ति शेषः। हिमाच्चेति। एकारादिरयम्।

तप् पर्वमरुद्भ्याम्। पिदयं प्रत्ययः। यद्यपि भाष्ये क्वचित्पुस्तके नित्पठ्यते, तथापि सोऽपपाठः। 'मरुत्त'शब्दस्य मध्योदात्तत्वाऽनापत्तेः। मरुच्छब्दो मृग्रोरुतिप्रत्ययाऽन्तत्वादन्तोदात्तः। तस्मात् तपि मध्योदात्तत्वं स्पष्टम्। तनि तु नित्त्वादाद्युदात्तत्वाऽऽपत्तिः। 'पर्वत'शब्दे तु न विशेषः। 'स्नामदिपद्यर्तिपृशकिभ्यो वनिप्'ति वनिबन्तत्वेन, 'नप्विषयस्ये'ति फिट्सूत्रेण च 'पर्व'शब्दस्याऽऽद्युदात्तत्वेन, ततस्तपि, तनि वा, उभयथाऽप्याद्युदात्तत्वात्। 'भृमृदृशियजिपर्वादिभ्यो तजि'ति निष्पन्न'पर्वत'-शब्दोऽन्तोदात्तोऽप्यस्तीत्यन्यदेतत्।

नच मरुत्तस्याऽऽद्युदात्तत्वे इष्टाऽऽपत्तिरेवाऽस्त्विति वाच्यम्। 'ददाति, वृत्तं वा पुनरेतद्भविष्यति—'मरुद्भिर्दत्तो मरुत्त' इत्येतत्प्रत्याख्यानपरा-

१ 'उदाहरणाच्चेति बोध्यम्' इति ख. घ. ङ. पाठः।

ऽत्रत्यभाष्यविरोधात्। तस्याऽयं भावः-मरुच्छब्दस्योपसर्गत्वं प्रथमाऽध्याये उपसङ्ख्यातम्। तत्सामर्थ्याच्च अजन्तत्वाऽभावेऽपि 'अच उपसर्गादि'ति निष्ठायां तत्वे, 'मरुत्तः' सिद्ध्यति। तच्चोपसर्गत्वं तत्वे एव। अतो नाऽङ्-कि-र्विधि-णत्वानि। अत एव तत्ववत् तानि भाष्ये नोदाहृतानि।

इदं चवचनं 'मरुद्दत्त' इत्येतन्निवृत्तये आवश्यकम्। तत्राऽधिकारप्राप्ताऽपि निपातसंज्ञा नेष्यते। सत्यां हि तस्याम् अव्ययत्वे, 'मरुद्भिर्दत्त' इति भाष्यप्रयोगे विभक्तिश्रवणाऽनापत्तिः।

ननु असत्यपि निपातत्वे, 'उपसर्गाश्चाऽभिवर्जमि'ति फिट्सूत्रेण आद्युदात्तत्वे, 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वं मरुत्तस्य दुर्वारमिति चेन्न। 'निपाता'इत्येतत्सिद्धाऽऽद्युदात्ताऽनुवादेनाऽभिप्रतिषेधाऽर्थमेव तत्, न त्वाद्युदात्तविधानाऽर्थमित्याकरे उक्तत्वात्।

किञ्च तत्वे एवोपसर्गत्वस्वीकारेण तत्प्राप्तिर्दुरुपपादैवे[1]। एवं च तत्र 'मरुत्त'-शब्दस्य मध्योदात्ततया फलाऽभेदायाऽत्राऽपि पित्पाठ एवोचितइत्याहुः।

अपरे तु 'एवं हि तत्वविधावेव 'मरुत' इति वदेत्। तस्मात्प्रथमे संज्ञाप्रकरणे पाठोऽनेकफलाय, अनेकसंज्ञालाभाय वा। तत्र[2] नाऽऽद्यः। उपसर्गसंज्ञायाः फलाऽन्तराय चारितार्थ्येऽजन्तत्ववैकल्यात्तत्वाऽनापत्त्या, 'मरुत्त'इत्युदाहरणपरभाष्यविरोधाऽऽपत्तेः। तस्मात् द्वितीय एव। एवं च निपातत्वमूलकम् आद्युदात्तत्वं दुर्वारमेव। 'नेष्यते' इति तु रिक्तं वचः। अत्र पक्षे तत् तत्वविषय एवेति 'मरुद्भिरि'त्यादिप्रयोगोपपत्तिः[3]। एवं च

१ इतोऽग्रे—'एवञ्चाऽधिकारबललब्धनिपातत्वमपि तद्विषयमेवेति, न तद्बलेनाऽप्याद्युदात्तत्वशङ्का' इति घ. पाठः।

२ 'न चाऽऽद्ये उपसर्गसंज्ञायाः फलान्तराय चारितार्थ्येऽजन्तत्ववैकल्यात्तत्वं न स्यात्। 'मरुत्त' इत्युदाहरणपरभाष्यप्रामाण्येन तत्स्वीकारात्। अस्तु वा द्वितीय एव' इति घ. पाठः।

३ इतोऽग्रे—'आद्येऽपि उपसर्गत्वसंनियोगशिष्टतया यत्र तत्फलं तत्रैवेति, न दोषः' इति घ. पाठः।

नित्पाठ एवोचितः। यदि तु वेदे क्वचिन्मरुत्तशब्दो मध्योदात्तः श्रूयते, तदा स च्छान्दसत्वाद्बोध्य' इत्याहुः।

न च मरुच्छब्दात्प्राप्तमतुपो बाधनाऽर्थमिदमावश्यकमिति कथं तत्प्रत्याख्यानमिति वाच्यम्। अस्य रूढिशब्दत्वेनाऽवयवाऽर्थाऽभावेन तदप्राप्तेरिति दिक्।

पदत्वमिति। तेन 'यस्ये'ति लोपो न। अनुवर्त्तत इति। 'बहुलं छन्दसी'त्यतः।

वाचो ग्मिनिः। गकारद्वयाऽर्थं प्रत्यये गकारोच्चारणम्। द्वित्वे तु त्रयम्। किञ्च 'मिनि'प्रत्यये 'प्रत्यये भाषायामि'त्यनुनासिके, 'वाङ्मी'त्येव स्यादित्याहुः। उत्तरसूत्रस्थं 'बहुभाषिणी'ति अत्राऽपि सम्बध्यते। अत एवोत्तरसूत्रे 'कुत्सिते इति वक्तव्यम्', 'न वक्तव्यम्, नानायोगकरणसामर्थ्यान्न सम्यक् बहुभाषिणि भविष्यती'त्युक्तं भाष्ये। न च विपरीतमेव किं न स्यात्। अभिधानस्वाभाव्यादिति दिक्।[1]

ऐश्वर्येति। तेन 'धनवानि'त्याद्यर्थे 'स्वामी'ति न। 'एतद्वृत्तिविषयमेव स्वशब्दस्यैश्वर्यवाचित्वमि'ति नाऽतिप्रसङ्गः। कटकवलयिनीति। कटक-वलययोः कश्चिद्भेदं परिकल्प्य द्वन्द्व उपपाद्यः। प्राण्यङ्गान्नेति। इदं चाऽभिधानस्वभावलब्धं वृत्तौ पठितम्। भाष्ये तु नैतत् दृश्यते।

अत इत्येवेति। मण्डूकप्लुत्या तदनुवर्त्तते' इति भावः।[2] अत्र 'समासान्ता' इति सूत्रस्थभाष्यं मानमित्याहुः। ठनादीति। आदिना मतुपो ग्रहणम्। रोगे चेति। एवं च कुगर्थमेवेदं वचनमिति भावः। स्पष्टं

१ इतोऽग्रे—'असंजातविरोधित्वन्यायाच्चेति दिक्' इति घ. पाठः।

२ इतोऽग्रे—'अत एव सिध्मादिषु 'क्षुद्रजन्तूपतापाच्चे'त्यस्य चारितार्थ्यमित्याहुः। तन्न। लच्-मतुब्विधानेन तस्य चारितार्थ्यात्। तस्माद्वृत्त्यादिव्याख्यानमेव मानम्। 'समासान्ता' इतिसूत्रस्थभाष्यं च मानमित्याहुः' इति घ. पाठः।

चेदं वृत्तौ। ठन्बाधनार्थमिति। अदन्तत्वादेव इनिः सिद्ध इति भावः।

मालेति। एतद्गणसूत्रम्। ब्राह्मणवर्णीति। ब्राह्मणवर्णः = ब्राह्मणत्वम्। तेन 'ब्राह्मण' इत्यर्थः। वर्णीति। वर्णोऽत्र वेदाध्ययनाऽर्थं ब्रह्मचर्यम्।

पद्मिनीति। लतायामपि प्रयुज्यते। तस्मात् 'देशे' इति प्रायिकम्।

अत्र वार्त्तिकान्याह—बाह्विति। अर्थाच्चेति। अर्थोऽत्र धनम्। कालतोऽत्राऽसंनिधिः, न देशतः। तत्र विरोधात् 'अस्ती'त्यस्याऽसम्बन्धः। ततश्च अप्राप्त एव इनिर्विधीयते। सत्तोपाधिकादिनिठनोरनभिधानादभावः।

अत एव भाष्ये–'असंनिहिते किम् ?। अर्थवान्' इत्युक्तम्। 'अर्थी, समर्थो, विद्वान् यः, शास्त्राऽनुपहतश्च य' इत्यादि तु च्छान्दसत्वाद्बोध्यम्। 'अर्थनमर्थ' इति क्रियाशब्दात् सत्तोपाधिकादिनिठनौ भवत एव। तेन 'धान्याऽर्थी', 'अर्थिकः', 'प्रत्यर्थिक' इति। तत्राऽर्थशब्दादिनौ धान्येनाऽर्थीति समासः। 'धान्यकरणकप्रार्थनावानि'त्यर्थः। स्पष्टं चेदं भाष्ये।

बलादिभ्यो। अन्यतरस्याङ्ग्रहणं प्रकृतस्य इनेः समुच्चयाऽर्थम्, न तु विकल्पाऽर्थम्। तथा हि सति इनिठन्मतुपो भविष्यन्ति। तथा चाऽस्य सूत्रस्य वैयर्थ्यापत्तिः। तं विनाऽपि 'अत'इत्येव इनिठनोः, सामान्यसूत्रेण मतुपश्च सिद्धेः। अदन्ता एव ह्यत्र गणे पठ्यन्ते। न च 'बलादिभ्य' इत्येव

---

१ 'अप्राप्त एव इनिर्विधीयते। 'अर्थादसंनिहिते[1] एवे'ति नियमात् सत्तोपाधिकादिनेरभावः। ठनोऽप्यनभिधानादभाव' इति कैयटादयः। 'अर्थी समर्थो विद्वान् यः, शास्त्राऽनुपहतश्च य' इत्यादि तु च्छान्दसत्वाद्बोध्यम्। अत्राऽर्थशब्दो द्रव्यपदार्थको गृह्यते। तेन 'अर्थनमर्थ' इति क्रियाशब्दाट्ठनपि। तेन 'धान्यार्थी''अर्थिकः' 'प्रत्यर्थिक' इति। तत्राऽर्थशब्दादिनौ 'धान्येन अर्थी'ति समासः। 'धान्यकरणकप्रार्थनावानि'त्यर्थः। ध्वनितं चेदं भाष्ये' इति ख. घ. ङ. पाठः।

---

1 'तक्रकौण्डिन्यन्यायादनभिधानाद्वाऽर्थादसंनिहिते एवेति नियमाद्वा' इति घ. पाठः।

सूत्रमस्तु। 'अन्यतरस्यामि'त्यस्य च 'प्राणिस्थादि'तिसूत्रस्थस्याऽनुवृत्तिः कार्या। एवं च प्रकरणात्, अन्यतरस्याङ्ग्रहणाच्च मतुप्समुच्चयाऽर्थात् द्वयोः सिद्धौ, शेषवैयर्थ्यमिति वाच्यम्। 'एकगो' इतिसूत्रस्थनित्यग्रहणेन विच्छेदात्।

**प्रथिमिनीति**। इमनिजन्ता प्रकृतिः। 'अनिनस्मन्नि'ति अनर्थकेनाऽपि तदन्तविधिः। **मेति**। मान्तस्योदाहरणमित्यर्थः। 'वकारयकारपरस्ये'ति बहुव्रीहिः। अनुस्वारस्येत्यर्थः। **अनुनासिकौ वयाविति**। अनेन आद्यो दन्त्योष्ठ्यादिः, न तु पवर्गीयाऽन्त इति ध्वनितम्[1]

**तुन्दिब**। अत्र 'तुन्दि'शब्दात्तुन्दाद्यन्तर्गणसूत्रेण 'स्वाङ्गाद्विवृद्धात्ति'-त्यनेन इलच्-इन्-ठन्-मतुपोऽपि बोध्याः। न च विशेषविहित'भ'प्रत्ययेन बाधः। 'बलादिभ्य'इतिसूत्रादन्यतरस्याङ्ग्रहणाऽनुवर्त्तनेनाऽदोषादित्याहुः। **मूर्द्धन्येति**। 'तुडि तोडने'। 'तुण्डिः'। इन्। 'वट वेष्टने'। इन्। 'वटिः'।

इति मत्वर्थीयाः।



१ इतोऽग्रे—'इनिप्रकरणे मतुप्समुच्चयाऽर्थकाऽन्यतरस्याङ्ग्रहणस्याऽसम्बन्धज्ञापनेन चारितार्थ्यात्। तेनाऽसंनिहितादावर्थवानित्यादि नेत्याहुः' इति ख. घ. ङ. पाठः, क. कुण्डलितः।

२ 'तुण्डिशब्दात्' इति क. घ. ङ. पाठः।

( इतः स्वार्थिकाः प्रत्ययाः । )

## अथ प्राग्दिशीयप्रकरणम् ।

प्राग्दिशो विभक्तिः । व्याख्यानादत्र 'विभक्ति'शब्दः शब्दपरः, न तु सुप्तिङुपस्थापकः । तदाह—विभक्तिसंज्ञा इति ।

अथ स्वार्थिका इति । 'स्वीयायाः प्रकृतेरर्थे भवा' इत्यर्थः । तसिलादावर्थनिर्देशविरहात् । 'अतिशायने' 'कुत्सिते' इत्यादीनां च प्रकृत्यर्थविशेषणत्वादिति भावः ।

निवृत्तमिति । इदं च 'समर्थानामि'ति सूत्रे एवोपपादितम् ।

किंसर्वनाम । 'प्राग्दिश' इत्येव । त्यादिपर्युदासात्किमः पृथग्ग्रहणम् । नच त्यादिभ्यः प्रागेव 'किम्'शब्दः पठ्यतां, गणे किमत्र ग्रहणेनेति वाच्यम् । तथा हि सति 'कश्च भवांश्च कौ' इत्यत्र भवतः शेषाऽऽपत्तेः । 'त्यदादीनां यत्परं तच्छिष्यते' इत्युक्तत्वात् ।

वस्तुतः 'पूर्वशेषोऽपि दृश्यते' इति भाष्यात्तत्र न दोषः । एवं चाऽत्र 'किम्' ग्रहणं त्यक्तुं शक्यम् । ध्वनितं चेदं 'त्यदादीनाम' इत्यत्र कैयटे ।

विधेयाऽनिर्देशादाह—अधिक्रियत इति । 'बहु'शब्दश्चाऽत्र सङ्ख्यावाच्येव गृह्यते' इति स्पष्टं भाष्ये । प्रकरणलभ्यमाह–प्राग्दिशीये परे इति । 'दिशः प्राक्-प्राग्दिशम्' । 'तत्र भवे' इत्यर्थः ।

एतेतौ । द्वितीयोऽयं व्यञ्जनाऽन्तः । यथासङ्ख्यं च निमित्तनिमित्तिनोः ।

एतदोऽन् । भाष्यसंमतोऽयं पाठः । वृत्तिकृत्तु 'एतदोऽशि'ति पठित्वा शकारः सर्वादेशाऽर्थ' इत्याह । नलोप इति । सर्वाऽऽदेशत्वं त्वानुपूर्व्यात्

---

१ 'स्वार्थिका'इत्यस्य—'प्रायेण स्वार्थिका' इत्यर्थः । 'जात्यन्ताच्छ बन्धुनि' 'प्रकारवचने'इत्यादिविहितप्रत्ययस्य वाचकत्वात् अत्र 'प्रायेणे'ति पूरितम्' इति लघुशब्देन्दुशेखरे नागेशः ।

२ 'नलोप इति । न चाऽदृतद्व्यूहपरिभाषया सर्वादेशाऽनापत्तिः । असिद्धत्वं

सिद्धम् । इत्संज्ञा तु न । फलाऽभावात् । 'न विभक्तावि'ति निषेधाच्च ।

यत्तु 'नलोपं बाधित्वा त्यदाद्यत्वं प्राप्नोति' । तन्न । परत्वात् अनः पूर्वमेव तत्प्रवृत्त्या, अनि कृते, 'लक्ष्ये लक्षणस्ये'ति न्यायेन तदप्राप्तेः । ध्वनितं चेदं भाष्ये ।

कु तिहोः । 'अष्टन' इत्यतो 'विभक्तावि'त्यनुवर्त्तते । 'ती'ति इकार उच्चारणाऽर्थः । 'तिहोरि'त्यस्य फलं दर्शयति—कस्मादिति । यत इति । तसिलादीनां विभक्तित्वात्त्यदाद्यत्वम् । इत इति । 'ऊडिदम्पदादि'त्यस्य 'लिती'त्यत्राऽनुवृत्तिसामर्थ्यात् लित्स्वरबाध इति स्पष्टं भाष्यकैयटयोः ।

द्वाभ्यामिति । सर्वनामत्वात्प्राप्तोऽपि तसिल् 'अह्यादिभ्य' इतिपर्युदासान्न भवति । 'नूनं मत्तः परं वंश्या' इत्यत्र तु आद्यादित्वात्तसिर्बोध्यः । तस्य चाऽविभक्तित्वान्न 'युष्मदस्मदोरि'त्यात्त्वम् । अस्य तसिलस्त्वत्र न प्राप्तिः, 'अह्यादिभ्य' इति पर्युदासात् । अत एव 'तसेश्चे'ति तसिलपि न ।

परस्य तसेरिति । 'प्रतियोगे पञ्चम्यास्तसिः', 'अपादाने चाऽहीयरुहोरि'ति वक्ष्यमाणस्येत्यर्थः । 'प्रत्ययग्रहण'परिभाषया 'तस्'धातोर्न ग्रहणम् । स्वरार्थमिति । 'लित्स्वराऽर्थमि'त्यर्थः । विभक्त्यर्थमिति । 'तन्निमित्ताऽत्वाद्यर्थमि'त्यर्थः । 'कुत आगच्छति' 'तत आगच्छती'त्यादि उदाहरणम् । अन्यथा 'कुतः अवहीयते, अवरोहती'त्यादौ सावकाशं तसिलं बाधित्वा, अत्र 'ग्रामत आगच्छती'त्यादौ सावकाशस्तसिः परत्वात् स्यात् । तस्य च विभक्तित्वाऽभावाद्विभक्तिकार्याणि न स्युरिति भावः ।

सर्वोभयेति । भाष्येष्टिरियम्, अभिधानस्वभावमूला । 'ओदनं परिषिञ्चती'त्यादौ सर्वाऽर्थत्वेऽपि, 'वा' ग्रहणाऽनुवृत्तेस्तसिलभाव इत्याहुः ।

इह त्र-तसिलौ स्वतन्त्रौ प्रत्ययौ, न तु सप्तमी-पञ्चम्योरादेशौ । तेन 'कुत्र' 'कुत' इत्यादौ 'अच्च घेः' 'घेर्ङिती'त्यादिकं न ।

---

तु न । स्वरादावेव तस्य नियमादिति वाच्यम् । आनुपूर्व्यात् सिद्धेः' इति घ. पाठः ।

वाग्रहणमिति। अत एव 'पञ्चम्यास्तसिलि'ति सूत्रे त्रल आदेशत्वे, 'कस्मिन् कुत्रे'त्यत्र 'अच्च घेरि'ति औत्त्वमापादितम्। न च 'वाह च च्छन्दसी'त्युक्तेरिदं छान्दसमस्तु। छान्दसोदाहरणे वाक्यस्यैव भाष्यकृता उदाहरणात्।[2] 'साहचर्याच्च कुत्रचित्', 'नाऽन्यत्र कुत्राऽपि च साऽभिलाषमि'त्यादिसकलमहाकविप्रयोगाच्च। एतेन 'भाषायां त्रल् ने'ति भागवृत्त्युक्तम्, कौशिकावृत्त्युक्तं च परास्तम्।[3] 'अतः' तकारस्य 'न विभक्तावि'तीत्त्वनिषेधो न। थमोरुच्चारणाऽर्थोकारेण मकारपरित्राणाऽर्थेन निषेधस्याऽनित्यत्वज्ञापनात्।

वाह च च्छन्द। पूर्वोक्त'वा'ग्रहणाऽपकर्षस्य स्फुटीकरणाय च्छान्दसमपीदमुपन्यस्तम्।

एतदस्त्रतसो। 'इदमोऽन्वादेशे' इत्यतः 'अश्' अनुवर्त्तते। 'एतदोऽनि'त्येव सिद्धेऽनुदात्ताऽर्थं वचनम्। ननु लित्स्वरे शेषनिघातेनैव त्रतसोरनुदात्तत्वे सिद्धे, तयोस्तद्विधानं व्यर्थमिति चेन्न। लित्स्वराऽपवादेऽशोऽनुदात्तत्वे कृते, लित्स्वराऽप्राप्त्या, प्रत्ययस्वरेण त्र-तसोरुदात्तत्वे प्राप्ते, तत्सार्थक्यादित्याहुः। अतो नेति। 'अतः = एतस्माद्ग्रामादि'त्यर्थः। 'अन्यत्र भीष्माद्गाङ्गेयादि'त्यादौ प्रथमाऽर्थे त्रलि'ति वाक्याऽन्वयाऽधिकरणे परिमले उक्तम्। तच्चिन्त्यम्। भवदादियोगाऽभावात्। तदध्याहारो वेति बोध्यम्।

सप्तम्यन्तेभ्य इति। 'सप्तम्या' इत्येवाऽनुवर्त्तते, क्लृप्तस्वरितत्वात्, न 'इतराभ्य' इतीति भावः। 'यत्र काले' इत्यादिप्रयोगाः कथमिति चेत्। यच्छब्दस्य कालाऽर्थकत्वाऽभावात्। अत एव 'काले' इत्यस्य उपादानम्।

---

१ इतोऽग्रे—'छन्दसि सर्वविधीनां वैकल्पिकत्वेन, आपाद्यरूपाऽभावेन च, औत्त्वाऽऽपत्तेरसङ्गत्यापत्तेः' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

२ 'भाष्यकृतोदाहरणाच्च' इति ख. घ. ङ. पाठः।

३ 'चतुर्थ्योऽन्ता जयादित्यकृतिरि'ति पक्षे वामनोक्तं च' इति घ. पाठः।

न हि 'यदा काले' इति, 'सदा काले' इत्यादि वा भवति। स्पष्टं चेदं 'वर्त्तमाने लडि'ति सूत्रे भाष्यकैयटयोः। तत्र हि 'सर्वदा' इत्यर्थे 'सर्वत्रे'ति प्रयुक्तं भाष्ये इति दिक्।

अधुनाप्रत्यय इति। अत्र पक्षे निपातनान्मध्योदात्तः। 'धुनाप्रत्ययः अशभावश्च निपात्यते' इत्यपि भाष्यकैयटयोः स्पष्टम्। विहितत्वादिति। 'सर्वैकान्ये'त्यनेन। एतेन 'अदा'प्रत्ययः। स्वरे विशेषः। दाप्रत्यये पदमन्तोदात्तम्। अत्र त्वाद्युदात्तमि'ति परास्तम्। प्रागुक्तभाष्यकृत्कृतप्रत्याख्यानविरोधात्। तर्हीति। अस्य प्रतिद्वन्द्विभूतं 'यदी'त्येतत्तु अखण्डमेवाऽव्ययं बोध्यमित्याहुः। एतर्हीति। 'एतद्' इति योगविभागेन एताऽऽदेशः।

अहनीति। 'सप्तम्यन्ताऽहन्शब्दार्थे' इत्यर्थः।

'इदम् अह' इत्यर्थेऽपि 'अद्ये'ति निपात्यते। 'अद्य पुष्य' इत्यादौ तथैव बोधादि'ति केचित्। एद्युसिति। भाष्ये तु 'एद्युसुजि'ति चित्पठ्यते।

प्रकारवचने। इदं प्रकृतिविशेषणम्। स्वार्थिकानामुपक्रमात्।

अत्र प्रकारो न सादृश्यम्, 'अन्यथा' 'सर्वथे'त्यादौ तदप्रतीतेः। 'यथा हरिरि'त्यादितो 'यत्सदृशो हरिस्तत्सदृशो हर' इति बोधाऽऽपत्तेः[1]। 'हरिसदृशो हर' इतिबोधाऽनापत्तेश्च[2]। मम तु 'यत्प्रकारवान् हरिस्तत्प्रकारवान् हर' इति वाच्याऽर्थे, सोऽर्थः फलतीति न दोषः[3]। अस्ति च सादृश्ये 'प्रकार'शब्दः। 'ब्राह्मणप्रकारोऽयं माणवकः', 'ब्राह्मणसदृश' इत्यवगमात्। 'प्रकारे गुणवचनस्ये'ति सूत्रे[4] प्रकारपदेन सादृश्यस्यैव ग्रहणाच्च।

किन्तु सामान्यस्य भेदको विशेषः 'प्रकारः'। 'बहुभिः प्रकारैर्भुङ्क्ते' इत्यतो 'बहुभिर्विशेषैरि'त्यवगमात्।

---

१ 'यथेत्यादेर्यत्सादृश्यमिति बोधे, यथा हरिरित्यादितो' इति घ. पाठः।

२ 'बोधेऽपि, हरिसदृशो हर इति बोधाऽनापत्तेश्च' इति ख. घ. ङ. पाठः।

३ इतोग्रे—'अनभिधानाच्च' इति घ. ङ. पाठः।

४ इतोऽग्रे—'तज्जातीयप्रत्ययानामुभयोरपि पूर्वोत्तरत्र दर्शनाच्च' इति घ. पाठः।

तेनेति। 'प्रथमान्तात्तु न थाल्। अनभिधानादि'त्याहुः। किंसर्वनामादिभ्यो विशेषविहितेनाऽपि थाला जातीयर् न बाध्यते। अर्थभेदात्। प्रकारे हि थाल्, जातीयस्तु तद्वति, स्वभावात्। 'तथाजातीय' 'अन्यथाजातीय' इति भाष्यप्रयोगाच्च[1]।

एतदोपि वाच्य इति। इदम् 'एतदोऽनि'ति सूत्रे भाष्ये स्पष्टम्। थमुः द्वितीयान्तादपि—'इममेतं वा प्रकारमापन्न इत्थम्भूत' इत्यादि। 'इत्थम्भूते'ति प्रयोगदर्शनात्। एतेन कथम्भूतो व्याख्यातः।

इति प्राग्दिशीयाः।



१ इतोऽग्रे—'वस्तुतस्तु 'यथे'त्यस्य 'यत्प्रकारक' इत्यर्थः। वचनग्रहणादयमपि तद्वति। अबाधस्तु भाष्यप्रयोगादेवेत्याहुः', इति घ. पाठः।

## अथ प्रागिवीयप्रकरणम्।

दिक्शब्देभ्यः सप्तमी। इह समर्थविभक्तीनाम्, उपाधीनां च न यथा-सङ्ख्यम्। अस्वरितत्वात्। शब्दग्रहणसामर्थ्यलभ्यमर्थमाह–दिशि रूढेभ्य इति। अस्तातौ पुराद्यादेशविधानाऽर्थम् 'अस्ताति चे'ति सूत्रमिह लेख्यम्। तत्राऽनुवृत्तिप्रदर्शनाय 'पूर्वे'त्यादिसूत्रमपीहैव व्याचष्टे–पूर्वाधरावरेति। 'सङ्ख्याया' इति यावत् 'अस्ताति'पदरहित'दिक्शब्देभ्य इति 'सूत्रमनु-वर्त्तते। 'असी'ति अविभक्तिकम्। सन्नियोगशिष्टत्वसूचनाय चकारः। 'अवराणामि'ति आनन्तर्ययोगे षष्ठी। तदाह—एभ्य इति।

अस्ताति च। अस्तातेः सिद्धत्वादिदं लुप्तसप्तम्यन्तमित्याशयेनाह–अस्तातौ परे इति। पुर इति। ननु 'शब्दभेदादर्थभेद' इति नये दिक्-शब्दानां कथं देशाऽऽदिवृत्तितेति चेत्। समानाऽऽनुपूर्वीकत्वसादृश्यात्तथा-व्यवहार इति गृहाण। पूर्वादयश्च क्वचिद्देशे तत्तद्दिक्स्थदेशत्वं प्रवृत्ति-निमित्तीकृत्य प्रवर्त्तन्ते। क चित्तु वक्तृसंमुखदेशत्वादिकं निमित्तीकृत्य। अत एव 'पुर' इत्यस्य 'अग्रे' इत्यर्थकत्वं विश्वकोशादावुक्तम्। 'पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका' इत्यादयः प्रयोगाश्च। क्वचित्तु स्वसंयुक्तसंयो-गित्वादिकम्। यथा पराऽऽदिशब्दे। प्रकृतसूत्रे च सर्वेषां ग्रहणम्। विनिगमकाऽभावात्। तदुक्तं हरिणा–'प्रत्यङ्मुखस्य यत्पश्चात्, तत्पु-रस्ताद्विपर्यये' इति। ननु 'पूर्वस्मिन्देशे वसती'त्यत्राऽतिप्रसङ्ग इति चेन्न।

पूर्वाद्यर्थानां देशविशेषणत्वेऽपि, पूर्वादिशब्दानां तद्वृत्तित्वाऽभावात्। अस्य हि 'पूर्वाऽर्जिते, पूर्वाऽध्युषिते वा देशे वसती'त्यर्थः। तदुक्तं भाष्ये–'नैष देशो, देशविशेषणमेतदि'ति। नन्वेवं 'पुरस्ताद्दिशो, देशात्, काला-द्वे'त्यादौ दिगादिशब्दानां प्रयोगाऽनापत्तिः, उक्ताऽर्थानामप्रयोगादिति चेन्न। नानाऽर्थत्वेनाऽसन्देहाय कदाचित्प्रयोगेऽप्यक्षतेः।

दक्षिणोत्तराभ्याम्। ननु 'तसु'प्रत्यय एव विधेयः। एवं च प्रत्यय-स्वरेणाऽन्तोदात्तत्वसिद्धेः, चकारोऽपि वैयर्थ्यः। न च अकाराऽभावे

टाबन्ताभ्यां प्रत्यये 'दक्षिणत' इत्याद्यसिद्धिः । 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वेन सिद्धेः । न च 'षष्ठ्यतसर्थे'त्यत्र विशेषणाऽर्थेनाऽर्थः । अन्यथा 'ततो ग्रामादन्य' इत्यादौ पञ्चमीं बाधित्वा परत्वात्षष्ठ्यापत्तिरिति वाच्यम् । 'षष्ठीतस्वर्थप्रत्ययेने'तिन्यासेनैव सिद्धेरिति चेन्न । अकारोच्चारणेन अन्यतोऽपि विधानाऽनुमानात् । तेन 'पुरत' इति सिद्धम् । एतत्सामर्थ्यादेव 'अस्ताति चे'तिचकारेण तस्मिन्नपि पुरादेश इत्याहुः। भाष्ये तु नैतद् दृष्टम् ।

प्राच्यामिति । 'लिङ्गविशिष्ट'परिभाषया लुक् ।

विभक्तित्रयाऽर्थं प्रकटयितुमाह—वसति, आगतो, रमणीयं वेति ।

पश्चात् । 'दिक्पूर्वपदस्य चाऽपरस्य पश्चाऽऽदेशादि वक्तव्यम्' । दक्षिणाऽपरस्यामि'ति-'दक्षिणपश्चात्' । 'उत्तरपश्चात्' । 'अर्द्धे उत्तरपदे केवलस्य, दिक्पूर्वस्य चाऽपरस्य 'पश्च'भावो वक्तव्यः' । 'पश्चाऽर्द्धः' 'दक्षिणपश्चाऽर्द्धः' इति ।

एनबन्यत । 'अपञ्चम्या' इति प्राक् असेरनुवर्त्तते इति बोध्यम् । अदूरे इति । 'अवधिमान् अवधेश्चेत् अदूरे' इत्यर्थः । अञ्चत्यन्तात्तु न । व्यवस्थितविभाषाविज्ञानादित्याहुः ।

दक्षिणादाच् । चकार 'आजाही' इत्यत्र विशेषणाऽर्थः, वाक्यस्मरणयोरननुबन्धकाऽऽकारव्यावृत्तये इति बोध्यम् । न च साहचर्येण निस्तारः । तस्याऽनित्यत्वादिति । ध्वनितं चेदं भाष्ये ।

उत्तराच्च । चकारेण व्यवहित आच् अपि समुच्चीयते । अत एव 'दक्षिणा पश्चात्पुरसस्त्यगि'ति सूत्रे 'आजि'त्येव नोक्तमित्याहुः । तद्ध्वनयन्नाह—उत्तरेति ।

सङ्ख्याया । 'विधस्याऽर्थे' इत्यर्थः । 'विधानं विध' इति घञर्थे के, पुँल्लिङ्ग' इति कैयटः । 'विध'शब्दस्याऽर्थश्च प्रकारः । सामान्यस्य भेदको विशेषः 'प्रकारः' । स चाऽभिधानस्वाभाव्यात्क्रियाविषयक एव गृह्यते ।

---

१ 'भाष्यादौ' इति घ. पाठः ।

तदाह—क्रियाप्रकारे इति । तदुक्तं भाष्ये-'विध-युक्त-गताश्च प्रकारे भवन्ती'ति । 'त्रेधा गुणः''नवधा द्रव्यमि'त्यादावपि 'उपदिशती'ति, 'भवती'ति वा क्रिया बोध्या ।

चतुर्धेति । 'चतुर्भिः प्रकारैरि'त्यर्थः । अधिकरणस्य = द्रव्यस्य, विचलनम्–अन्यथाकरणम् । तच्चेह सङ्ख्यासन्निधानात्तद्विषयमेवेत्याह—द्रव्यस्य सङ्ख्यान्तरेति । तदवगमश्च पदाऽन्तरसमभिव्याहारादिति बोध्यम् । पञ्चधेति । 'पञ्चत्वसङ्ख्याविशिष्टमि'त्यर्थः ।

एकाद्धो । 'धा'ग्रहणं 'धा'मात्रस्य यथा स्यात् । अन्यथाऽनन्तरत्वात् अधिकरणविचाले विहितस्यैव स्यात् । ऐकध्यमिति । 'भुङ्क्ते'इति,'राशिं कुर्वि'ति वा शेषः । द्वैधानीति । स्वभावात् सत्त्ववाचित्वम् ।

एधाच्च । 'द्वित्र्योर्धा इत्यस्य एधाजि'त्यर्थः ।

याप्ये पा । याप्यमत्र कुत्सितम् । अयं प्रवृत्तिनिमित्तकुत्सायामेव । अत एव 'कुत्सिते' इत्यत्रैव नाऽयं विहितः । तस्य अप्रवृत्तिनिमित्तकुत्सायामपि प्रवृत्तेः । तिङन्तादपि प्रसङ्गाच्च ।

पूरणाद्भागे । 'पूरण'ग्रहणमुत्तराऽर्थम् । मुखतीयादेरनर्थकत्वेनैव वारणात् । पूरणार्थत्वात्तीयप्रत्ययः 'पूरण'शब्देनोक्तः । 'पूरणाऽर्थकतीयप्रत्ययान्ताद्भागे वर्त्तमानादि'त्यर्थः ।

'तीयादीकक्', 'न विद्याया' इति यद्यपि 'दृष्टं सामे'ति सूत्रे भाष्ये

---

१ इतोऽग्रे—'केचित्तु 'विधाशब्दस्याऽर्थे इत्यर्थः । यद्यपि ओदनपिण्डोऽपि 'विधा'शब्दवाच्यः, तथाऽपीह न गृह्यते । 'विधायामि'ति वक्तव्येऽर्थग्रहणात् । तद्धि प्रसिद्धतराऽर्थग्रहणाऽर्थम् । तादृशश्च प्रकार एव । स च क्रियाविषय एव, अभिधानस्वाभाव्यात् । तेन 'एका गोविधे'त्यादौ न । 'विधा'शब्दश्च नित्यस्त्रीलिङ्ग इत्याहुः' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

२ इतोऽग्रे—'प्रकृतसूत्रेऽपि प्रयोजनं 'द्वेस्तीय' इत्यत्र निरूपितम्' इति ख. घ. ङ. पाठः, क. कुण्डलितः ।

पठितम्, तथाप्यनिर्दिष्टार्थत्वात्स्वार्थे इति बोध्यम्। भागाऽर्थे विधीयमानस्य स्त्रियां न प्रयोगः, 'भागे' इति पुंस्त्वस्य विवक्षितत्वादिति अजन्तस्त्रीलिङ्गे 'विभाषा द्वितीये'ति सूत्रे निरूपितम्। तेन 'चतुर्थी' 'पञ्चमी'त्येव भक्तौ, न 'चतुर्था' इत्यादि। अत्र 'प्रागेकादशभ्य' इति अन्प्राप्तिः।

पूर्वत्र ञ्याऽनौ नित्याविति। न च षष्ठाऽष्टमशब्दाभ्यां भागाऽर्थप्रतिपादनाय लुग्विधानम्। प्रत्ययानां स्वार्थिकत्वेन प्रकृतेस्तदर्थत्वाऽऽवश्यकत्वात्।[1] प्रकरणादिकन्तु तत्राऽप्यावश्यकम्। स्वरस्तु लुकि नाऽस्त्येवेति, 'न लुमते'त्यत्र भाष्ये स्पष्टम्।

एकादा। 'असहायवाचकात् एकादि'त्यर्थः। अत एव 'एकाकिभिः क्षुद्रकैर्जितमि'ति बहुवचनोपपत्तिः। वाक्यभेदेन कन्-आकिनिचोरेव लुक्। विधानसामर्थ्यात्पक्षे श्रवणमपि।

भूतपूर्वे। 'तत्र वर्त्तमानात् प्रातिपदिकात्[2] प्रत्यय' इत्यर्थः।

षष्ठ्या रूप्य च। अत्र 'भूतपूर्वे' इत्यनुवृत्तं श्रुतत्वात्षष्ठ्या एव विशेषणम्। 'भूतपूर्वे सम्बन्धे या[3] षष्ठी तदन्तात्स्वार्थे प्रत्ययः'[4]। एवं च स्वार्थिकप्रकरणविरोधो न[5]। एतेन[6] 'षष्ठ्यन्तात्तदाक्षिप्ते भूतपूर्वे सम्बन्धिनि प्रधाने प्रत्यय इत्यर्थ' इति निरस्तम्। आक्षिप्तेनाऽन्वयस्याऽनुचित-

१ 'प्रत्ययानां लक्षणयोपपत्तेः। प्रकरणादिकन्तु' इति घ. पाठः।

२ 'प्रातिपदिकात्, तत्प्रकृतिकसुबन्ताद्वा।' इति घ. पाठः।

३ 'लाक्षणिकी या षष्ठी' इति ख. घ. ङ. पाठः।

४ इतोऽग्रे—'एवञ्च षष्ठ्या भूतपूर्वसम्बन्धाऽनुयोगिनि लक्षणा' इति ख. घ. ङ. पाठः।

५ 'विरोधोऽपि न' इति ख. घ. ङ. पाठः।

६ 'एतेन षष्ठ्यन्ताऽर्थस्य विशेषणत्वात्तदाक्षिप्तसम्बन्धिनः प्राधान्यात्, प्रधानेतरसंनिधौ च प्रधाने कार्यसम्प्रत्ययस्य न्याय्यत्वादाह-भूतपूर्वेऽर्थे इती'त्यपास्तम्। मूलार्थस्तु भूतपूर्वेऽर्थे' इति घ. पाठः।

त्वाच्च। मूलाऽर्थस्तु 'भूतपूर्वेऽर्थे वर्त्तमानात्षष्ठ्यन्तादि'ति बोध्यः[1]।

अतिशायने। 'अतिशेतेः[3] कर्त्तरि बाहुलकात् ल्युडि'ति भाष्यस्वरसः। इत एव निर्देशाद्दीर्घः। केचित्तु निवृत्तप्रेषणप्रकृतिकण्यन्तस्य रूपमाहुः। अतिशायनं च-प्रकर्षः। स चाऽत्र स्वाऽपेक्षया इतरस्य न्यूनीकरणंरूपोऽभिभवः। अत एव कर्तृल्युटि[4], अतिशायनस्य प्रत्ययाऽर्थत्वपक्षे 'कालीमतिशेते कालः','कालितर' इति प्राप्नोति, 'कालतर' इति चेष्यते' इति द्वितीयान्तात्प्रत्ययाऽऽपादनं[5] भाष्योक्तं सङ्गच्छते। 'तत्र वर्त्तमानात् प्रातिपदिकात्स्वार्थे प्रत्ययः'। एवं च 'प्राप्ताऽप्राप्तविवेक'न्यायेन अभिभवकर्त्तृत्वे एव द्योत्यतापर्यवसानात्, तस्य च प्रकृत्यर्थविशेषणत्वेन अयं[6] 'प्रकृत्यर्थविशेषणते'ति पक्षः[7]। यद्यपि प्रकृत्यर्थस्य द्रव्यस्य न स्वरूप-

---

१ इतोऽग्रे—'किञ्च सम्बन्धिनि पूर्वं भूतत्वं सम्बन्धे तत्त्वेनैव वाच्यम्। एवं च सम्बन्धे तदन्वयस्यैवौचित्यम्' इति ख. घ. पाठः, क. कुण्डलितः।

२ इतोऽग्रे—'विभक्तेर्लक्षणायां च सूत्रमेव मानम्' इति ख. घ. पाठः।

३ 'अतिशेतेर्भावे ल्युट्। यद्यपि 'कर्त्तरि बाहुलकात् ल्युडि'ति भाष्यस्वरसः, तथापि स गौरवग्रस्त इति, भावे ल्युडेवाऽऽश्रितः। अत एव 'यावद् ब्रूयात् प्रकर्ष इति, तावत् अतिशायने' इत्युपक्रमस्थभाष्यं सङ्गच्छते। इत एव निर्देशाद्दीर्घः' इति घ. पाठः।

४ 'कर्त्राद्यर्थे ल्युटि' इति घ. पाठः।

५ 'निकृष्टगुणवाचकात् द्वितीयान्तात्' इति घ. पाठः।

६ 'अस्य प्रकृत्यर्थविशेषणतेति पक्षः' इति ख. ङ. पाठः।

७ इतोऽग्रे—'यद्वा भावे ल्युट्। 'यावद् ब्रूयादतिशये इति, तावदतिशायने' इत्युपक्रमस्थभाष्यात्। अत्राऽपि पक्षे तन्न प्रत्ययाऽर्थः। 'लघोः कर्तुरतिशायनं लघुतममि'त्यापत्तेः। प्रत्ययाऽर्थस्य प्राधान्यात्। नाऽपि प्रकृत्यर्थः। तथा हि सति प्रकर्षोऽतिशयादिभ्य एव स्यात्, न तु लघ्वादेः[1]। तस्मात्-

1 इतोऽग्रे—'नापि प्रकृतेर्विशेषणम्। स्वार्थाऽभिधानं प्रति व्यग्रतया गुणत्वात्। यद्यपि प्रकृत्यर्थस्य द्रव्यस्य' इति घ. पाठः।

तोऽतिशयस्तथाऽपि तद्गतप्रवृत्तिनिमित्तगुणाद्यतिशयेनैव तदतिशयः।

न चैवं 'गोतर' इत्यादि न स्यात्, प्रवृत्तिनिमित्तभूतजातेः स्वतः प्रकर्षाऽभावादिति वाच्यम्। तत्सहचरित-वाह-दोहादिगताऽतिशयेनैव तदतिशयव्यवहारात्।

द्व्यादिभ्यस्तु न प्रत्ययः। द्वित्वादिरूपाऽतिशयस्य प्रकृत्यैवोक्तत्वात्। अन्यस्याऽतिशयस्य द्योत्यस्याऽभावाच्च। 'बहु'शब्दात्तु भवत्येव। त्र्यादिरूपविशेषस्य तेन तेन रूपेण प्रकृत्याऽनभिहितत्वात्। एवं च तरबादिसमभिव्याहारे आढ्यादिपदानाम् अतिशयविशिष्टाऽऽढ्यपरत्वम्।[1] प्रत्ययस्तु द्योतकः। 'कुमारितरे'त्यादौ तु तरबन्तान्न ङीप्। तरबन्तस्य प्रकृष्टवयःप्रवृत्तिभिमित्तकत्वेऽपि, वयोमात्रप्रवृत्तिनिमित्तकत्वाऽभावात्।[2] 'वयसि प्रथमे' इत्यत्र तु व्याख्यानात्केवलवयःप्रवृत्तिनिमित्तकस्यैव ग्रहणात्।

अत एव 'गोतरे'त्यादौ जातिलक्षणङीषभावः। जातिमात्रप्रवृत्तिनिमित्तकत्वाऽभावात्। तदुक्तं भाष्ये—'तरपा उक्तत्वात्स्त्रीत्वस्य, न भविष्यती'ति। 'तरपेति। तरबन्तेन, न तु वयोवाचकेने'त्यर्थः। 'तरबन्तेन स्वाऽर्थनिष्ठस्त्रीत्वस्य उक्तस्य द्योतनायाऽत्र स्त्रीप्रत्ययः प्रार्थ्यते। 'वयसि प्रथमे' इत्यनेन वयोमात्रवाचकाऽर्थगतस्त्रीत्वे द्योत्ये ङीप् क्रियते, न चाऽयं तथे'ति तद्भावः।[3] अधिकं भाष्यप्रदीपोद्द्योते द्रष्टव्यम्।

---

प्रकृत्यर्थविशेषणमेव। तत्राऽपि कर्त्तृतयाऽतिशयविशिष्टादेव प्रत्ययो, न त्वतिशय्यमानात्, अनभिधानादिति बोध्यम्' इति ख. ङ. पाठः।

१ 'विशिष्टाऽऽढ्यादौ लक्षणेति बोध्यम्' इति ख. पाठः।

२ इतोऽग्रे—'प्रकर्षस्याऽपि प्रवृत्तिनिमित्तत्वाद्वा' इति घ. पाठः।

३ इतोऽग्रे—'अत्र ङीप्वारणाय भाष्ये पक्षाऽन्तरमुक्तम्,—'अतिशायने' इति भावे ल्युट्। प्रकृत्यर्थश्चाऽयम्। 'प्रवृत्तिनिमित्तकृताऽतिशये वर्त्तमानात् प्रातिपदिकात्तमबि'त्यर्थः। एवं च 'कुमारत्वाऽतिशय' इति बोधात्, वयोविशिष्टद्रव्यवचनत्वाऽभावाश्च ङीप्। 'कुमारत्वकृतोऽभिभवाऽनुकूलो व्यापार'

आतिशायनिकप्रत्ययान्तात् आतिशायनिकप्रत्ययो न, अनभिधानादिति अत्रैव भाष्ये स्पष्टम् । 'श्रेष्ठतमाय कर्मणे' इत्यादिकन्तु छान्दसत्वात्स्वार्थे साध्विति दिक् । 'अतिशयेने'ति—प्रकृत्यादित्वात्तृतीया[1] । 'अभिभवकर्त्तृत्वेन विशिष्ट आढ्य' इत्यर्थः । अवयवे समुदाये यदा एकस्याऽतिशयो विवक्ष्यते, तदा तरबीयसुनौ अपवादौ वक्ष्येते । परिशेषात् बहूनां मध्ये यदा एकस्याऽतिशयविवक्षा, तदाऽयमिति बोध्यम् ।

सुबन्तादेव चाऽयं प्रत्ययः । अत एव 'घकाले'त्यलुग्विधानं सङ्गच्छते । 'कुत्सिते' इति सूत्रे भाष्ये-'ततः प्रवर्त्ततेऽसौ विभक्त्यन्तः' इत्युक्तेश्च ।

तिङश्च । अप्रातिपदिकत्वात् अप्राप्तौ वचनम् । तमबिति । इष्ठन् तु नोक्तः । 'अजादी गुणवचनादेवे'ति नियमात्[2] ।

तरप्तमपौ घः । अस्मिन्नेव प्रकरणे 'पितौ घ' इति वक्तव्ये, प्रथमाऽध्याये गुरुसूत्रकरणम् अत्यन्तस्वार्थिकतरबादिज्ञापनाऽर्थमित्याहुः[3] ।

किमेत्तिङ् । 'अव्ययानां घ' इतिषष्ठीसमासः । फलितमाह—अव्ययाच्च

---

इति बोधः । तस्य च कर्त्तृस्थत्वात्, तेनाऽभेदमापन्नस्यैव बोधान्न सामानाधिकरण्याऽनुपपत्तिः । नाऽपि लिङ्गवचनाऽनुपपत्तिः । नाऽपि षष्ठ्यापत्तिः । प्रवृत्तिनिमित्तकृताऽतिशयश्च प्रवृत्तिनिमित्ताऽतिशयं विना नेति, तत्राऽपि तत्प्रतीतिः सिद्धेति दिक्' इति ख. घ. ङ. पाठः, क. कुण्डलितः ।

१ 'प्रकृत्यादित्वात्तृतीया प्रकृत्यर्थताऽवच्छेदके [1]आढ्यत्वेऽन्वेति' इति ख. घ. ङ. पाठः ।

२ इतोऽग्रे—'धातोश्चे'ति तु नोक्तम् । मात्रागौरवात् । केवलाद्धातोरुत्पत्तिस्तु नाऽऽपाद्या । 'ततः प्रवर्त्ततेऽसौ विभक्त्यन्त' इति कुत्सितसूत्रस्थभाष्यरीत्या तदप्राप्तेः' इति घ. पाठः ।

३ इतोऽग्रे—'तद्धि तर-तममात्रस्य संज्ञा' इति ख. घ. ङ. पाठः ।

---

1 आढ्यत्वेऽन्वेतीत्याहुः' इति घ. पाठः ।

यो च इति। आमोरुकारः सानुबन्धकत्वसंपादनेन नुट्व्यावृत्त्यर्थः। परत्वाद्धि 'यस्ये'ति लोपं बाधित्वा नुट् स्यात्। ननु अमुह्रस्वादिरेवाऽस्तु। अकारोच्चारणसामर्थ्यात्सिद्धं रूपमिति चेन्न। स्वरे विशेषस्य सत्त्वेन, अकारोच्चारणसामर्थ्याऽभावे, 'यस्ये'ति लोपस्य दुर्वारत्वादिति दिक्।

किन्तमामिति। आमन्तस्याऽव्ययत्वात्ततः परस्य सोर्लुक्। 'पूर्वाह्णेतरामि'त्यादौ तत्तत्क्रियाविशिष्टस्यैव तत्तत्कालव्यवहारनियामकत्वात्, न शुद्धद्रव्यप्रकर्षः। उच्चैस्तमस्तरुरिति। 'उच्चैः'शब्दोऽत्र उच्चत्वगुणवत्परः। यद्यपि न द्रव्यस्य स्वतःप्रकर्षः, तथाऽपि द्रव्यनिष्ठगुणादिप्रकर्ष एव 'द्रव्यप्रकर्ष' उच्यते। 'उच्चैस्तमामि'त्यत्र तु अधिकरणशक्तिप्रधान 'उच्चैः'शब्दः। तच्छक्तिविशिष्टे चाऽत्र प्रकर्ष इति, न शुद्धद्रव्यप्रकर्षः। इदं 'पूर्वाह्णेतमामि'त्यत्राऽपि बोध्यम्।

द्विवचनविभज्यो। 'द्विवचन'शब्दो न रूढः, किन्तु द्व्यर्थप्रतिपादक-

---

१ 'यत्तु आमोरुकारो मस्येत्त्वाऽभावाय। न च फलाऽभावः। तथा सत्यागमत्वेन आगमाऽनुदात्तत्वस्यैव फलत्वात्। इदमेवाऽभिसन्धाय भाष्ये उक्तम्–'अथापि कथञ्चिदित्कार्यं स्यात्, एवमपि न दोषः, क्रियते न्यास एवे'ति। तन्न। 'आगमा अनुदात्ता' इत्यस्य 'अनुदात्तं पदमि'ति शेषनिघातप्रवृत्तिमूलकत्वेन, अस्य च प्रत्ययत्वेनाऽऽद्युदात्तप्राप्त्या, तदप्राप्तेः। अत एव 'रुणद्धी'त्यादौ श्नमः प्रत्ययस्वरेणाऽऽद्युदात्तत्वमेवेति स्पष्टमाकरे। अत एव 'अथाऽपी'ति भाष्यम्–'इत्सञ्ज्ञासामर्थ्यादन्यतोऽपि स्यादितीत्त्वनिरासाय उकार' इत्येवंपरतया व्याख्यातं कैयटेन। न च आमोरुकारः सानुबन्धकत्वसम्पादनेन नुड्व्यावृत्त्यर्थः। नद्याप्साहचर्येणाऽतद्धितस्यैवाऽऽमस्तत्र ग्रहणादित्याहुः।' ननु अमुह्रस्वादिरेवाऽस्तु' इति घ. पाठः।

२ 'पूर्वाह्णेतरामि'त्यादौ विभक्त्यर्थस्य प्रकर्षो, न कालस्येति, न द्रव्यप्रकर्षः' इति घ. पाठः।

शब्दपरः, योगबलात् । द्वयोरर्थयोर्वचनं-'द्विवचनम्'[1] । करणे ल्युट् । कर्मणि षष्ठ्या समासः[2] । विभज्यम् । 'ऋहलोरि'ति ण्यति प्राप्ते, अत एव निपातनात् अपादाने तदपवादो यत् । एतत्समानाऽर्थ'विभाज्य'शब्दस्तु निवृत्तप्रेषणप्रकृतिकण्यन्तात् अचो यति साधुः ।

'द्विवचनं च विभज्यं चे'ति द्वन्द्वः । तस्य उपपदेन कर्मधारयः । तेन 'द्व्यर्थवाचके, विभागाऽवधौ चोपपदे सती'त्यर्थः । अन्वर्थं च उपपदम्-'उपोच्चारितं पदमि'ति । न तु कृत्रिमम् । तद्धितविधौ तस्याऽसम्भवात् । तच्च विग्रहे एव प्रयुज्यते । वृत्तौ तु गताऽर्थत्वात् न आवश्यकम् । प्रकरणादिना च निर्णयः ।

इह द्वे उपपदे, द्वे च सुप्तिङन्ते प्रकृती, प्रत्ययौ च द्वौ, तथापि यथासङ्ख्यं नेष्यते[3] । यौगिक'द्विवचन'ग्रहणादेव 'अस्माकं च, देवदत्तस्य च, देवदत्तोऽभिरूपतरः' इति सिद्धम् । 'अस्मदो द्वयोश्चे'त्यनेन एकस्मिन्नर्थे बहुत्ववद्भावविधानात् । स च[4] स्वनिमित्तशास्त्रीयकार्यप्रवर्त्तको, न त्वेकत्व-निमित्तकार्यनिवर्त्तकः । न च 'दन्तोष्ठस्य दन्ताः स्निग्धतरा' इति न सिद्ध्येत्, समाहारस्यैकत्वात्, वर्त्तिपदार्थानां बहुत्वादिति चेन्न । वृत्तौ विशेषणेषु अभेदैकत्वसङ्ख्योपादानात्, वर्त्तिपदस्य परित्यक्तभेदा-ऽङ्गीकृताऽभेद-लक्षणैकत्वसङ्ख्य-दन्तोष्ठलक्षणा-ऽर्थद्वय[5]-प्रतिपादकत्वेनाऽक्षतेः । प्रत्ययस्त्वत्र अतिशयप्रयोजकधर्मवाचकात्, अतिशयविशिष्टस्वार्थ[6]बोधकादिति बोध्यम्[7] ।

---

१ 'द्वयोर्वचनं द्विवचनम्' इति ख. ङ. पाठः ।

२ इतोऽग्रे–'विभज्यग्रहणसाहचर्येण तादृशस्यैव ग्रहणं बोध्यम्' इति घ. पाठः ।

३ 'नेष्यन्ते' इति ख. ङ. पाठः ।

४ 'स च शास्त्रीयकार्यप्रवर्त्तको, न तु स्वनिमित्तकार्यनिवर्त्तकः' इति घ. पाठः ।

५ इतोऽग्रे—'इतरेतरयोगे तु विशेष्यतया दन्तोष्ठानां बहुत्वभानान्न तरबि-त्याहुः' इति घ. पाठः ।

६ 'स्वार्थलक्षकात्' इति ख. घ. ङ. पाठः ।

७ इतोऽग्रे–'विभज्यम = विभक्तव्यम । 'विभागप्रतियोगी'ति यावत । [illegible]

विभज्यस्योपपदशब्देन सुबन्तत्वमावश्यकम् । सुप् च 'लक्षण-प्रतिपदोक्त'परिभाषया 'पञ्चमी विभक्ते' इति सूत्रविहित एव गृह्यते। एतदर्थमेव उपपदग्रहणम्। अत एव 'साङ्काश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका आढ्यतमा' इत्यत्र न तरप्। पञ्चमी तु अत्र न। विभागस्यैवाऽभावादिति,निरूपितं कारकप्रकरणे । प्रत्ययस्तु अत्र विभागप्रयोजकीभूत-धर्मवाचकात् स्वार्थे इति बोध्यम् ।

तयोराद्यमुदाहरति—अयमनयोरिति। द्वितीयमुदाहरति—उदीच्या इति। 'माथुराः पाटलिपुत्रकेभ्यः, साङ्काश्यकेभ्यश्चाऽभिरूपतरा' इत्यादि अपि अस्योदाहरणम्। 'एते खल्वपि नैर्देशिकानां वार्त्ततरका' इत्यादि-'तस्मिन्नि'त्यादिसूत्रस्थभाष्यप्रयोगात् तमप्विषयेऽपि तरबादिरि'ति कैयटः। 'परुद्भवान् पटुरासीत्, ऐषमस्तु पटुतर' इत्यादावेकस्याऽपि धर्मिणो

---

उपपदशब्देन सुबन्तत्वमावश्यकम्' इति ब. पाठः ।

१ इतोऽग्रे—'एवञ्च यत्र विभागस्यैव प्रतीतिस्तत्रैव तरप्। एतेन 'द्विवचन-ग्रहणं व्यर्थम्, लघुत्वेन एकबुद्धिविषयीकृतात् अवयवसमुदायात् लघुतरस्य पृथक्तया बोधनेन, विभज्यग्रहणेनैव सिद्धेरि'त्यपास्तम्। प्रकर्षस्य प्रति-योग्यपेक्षत्वेन विभागे लब्धे, विभज्यग्रहणात् यत्र विभागस्यैव प्रतीतिस्तत्रैव सूत्रप्रवृत्तेः। अत्र च लघुतरत्वेन विभागस्य सत्त्वेऽपि, लघुत्वेनाऽविभाग-स्याऽपि सत्त्वात्' इति ब. पाठः ।

२ इतोग्रे—'न च प्राच्यानामेको राशिरुदीच्यानां चाऽपर इति राश्यपेक्षं व्यर्थत्वमस्तीति, द्विवचनग्रहणेनैव सिद्धे, विभज्यग्रहणं व्यर्थमिति वाच्यम्। राशित्वेन शब्दतः प्रतीत्यभावात्। बहुवचनेन भेदस्यैव प्रतीयमानत्वेन, राश्यर्थस्य कथमप्यप्रतीतेश्च । 'माथुराः पाटलिपुत्रकेभ्यः साङ्काश्यकेभ्यश्च अभिरूपतरा' इत्याद्यर्थं तस्यावश्यकत्वाच्चेति दिक्। अल्पाच्तरस्य विभज्यस्य परनिपातो यथासङ्ख्याऽभावबोधनायेत्याहुः' इति ब. पाठः ।

गुणभेदेन भेदाऽऽरोपात्प्रतियोग्यपेक्षः प्रकर्षः । तदाश्रयश्च प्रत्ययो बोध्यः । व्यपदिशन्ति च,-'अन्य एवाऽसि संवृत्तः','कश्चित्स एवाऽसि धनञ्जयस्त्वमि'ति । 'नतरामि'त्यादौ प्रतियोग्यसमानाधिकरणत्वरूपाऽऽत्यन्तिकत्वे अभावगते प्रकर्षे तरप् । 'प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरि'ति तु प्रकृत्यर्थगतप्रकर्षाऽसम्भवविषयम् । एवं द्योत्याऽर्थप्रकर्षेऽपि द्योतकात् तरप् । यथा 'नितरां गच्छती'त्यादौ ।

अजादी । एवकाराऽभावे 'अतिशायने' इति निवृत्त्या, 'केवलस्वार्थिकत्वमि'त्येव सम्भाव्येत । विधित्वस्य उचितत्वात् । न च व्याख्यानात्, लक्ष्याऽनुरोधाच्च तदनुवृत्त्या, नियमाऽर्थत्वं सिद्धम् [१] । तर्हि विपरीतनियमशङ्कावारणाऽर्थं स इति बोध्यम् ।

एतेन नियमेनाऽप्राप्तेराह—तुश्छन्दसीति । एवं च लाघवात् प्रतिप्रसवविधिरेवाऽयम, न त्वपूर्वो, गौरवात् । तेन उपाधिसङ्करो न । अस्याऽर्थस्य स्फुटप्रतिपत्तये छान्दसमपीदम इहैवोदाहृतम् ।

तुरिष्ठे । इमनिच्ग्रहणमुत्तराऽर्थम् । ननु 'तुरिष्ठेमेयःस्वि'तिज्ञापकात् इष्ठन्नीयसुनोः सिद्धत्वेन, 'तुश्छन्दसी'ति व्यर्थमिति चेन्न । इमनिचोऽपि कल्पनाऽऽपत्तेः । लोकेऽपि इष्ठन्नीयसुनोरापत्तेश्च । यद्यपि निमित्तस्य च्छान्दसत्वादिदमपिच्छान्दसम्, तथापि तस्यैवेहोपन्यासादिदमप्यत्रोक्तम् । 'णाविष्ठवदि'त्यतिदेशेनाऽस्य लोकेऽप्युपयोगाच्च । लोप इति । स च वचनसामर्थ्यात्सर्वाऽऽदेशः । अन्त्यस्य 'टेरि'त्यनेनैव सिद्धेः । बिल्वकादिसूत्रस्थलुक्पदस्य स्वरितत्वे तु न किञ्चिन्मानमिति बोध्यम् । 'टेरि'त्यत्र लोपपदस्यैवाऽनुवृत्तेश्च ।

दोहीयसीति । न च 'दोग्ध्री'शब्दाल्लिङ्गविशिष्टपरिभाषया ईयसुनि,

१ 'तदनुवृत्तिं व्याख्याय' इति ङ. पाठः ।

२ इतोऽग्रे—'उत्तरसूत्रे एव इमनिचः करणे तु इष्ठन्नीयसुनोरनुवृत्त्यनापत्तेः । चकारकरणे भिन्नविभक्त्युच्चारणे गौरवं च' इति घ. पाठः ।

'भस्याऽढे' इति पुंवत्त्वात्परत्वाज्जातस्य 'टेरि'ति ङीपो लोपस्य आभीयाऽसिद्धत्वात्तल्लोपाऽनापत्तिरिति वाच्यम। 'सिद्धश्च प्रत्ययविधावि'त्युक्तत्वेन पुंवत्त्वस्याऽन्तरङ्गत्वात्। घत्वादिकन्तु न पूर्वम्[1]। तेन सिद्धकाण्डस्थकार्यप्रवृत्तेः[2]। गुणस्तु भवत्येव[3]। एभ्यः परत्वात्। सिद्धकाण्डस्थत्वाच्च। 'तृलोपविधायकं सूत्रमुणादिव्युत्पन्नेषु ने'ति 'रक्षित' इति सूत्रस्थभाष्यस्वरसः।

प्रशस्यस्य। 'प्रशस्य'शब्दस्य क्रियाशब्दत्वात् अगुणत्वेऽपि, अत एव ज्ञापकादजादी। 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यते इत्याह—अजाद्योरिति[4]।

प्रकृत्यैकाच्। इष्ठादिष्विति। इदं च प्रकृतसूत्रे भाष्ये स्पष्टम्। तद्धितमात्रे प्रवृत्तौ तु 'ज्ञः स्थालीपाक' इति 'ज्ञो देवताऽस्ये'त्यर्थे न सिद्ध्येदिति बोध्यम्। अयं च प्रकृतिभाव एतत्प्रकरणस्थलोपमात्रस्य। एवं च 'अल्लोपोऽनः' 'नस्तद्धिते' 'यस्येति च' 'टे'रि'त्यादेः सर्वस्याऽप्ययमिति[5], अत्रैव सूत्रे भाष्यप्रदीपोद्द्योतेऽस्माभिर्निरूपितम्।

ज्यादा। 'ज्यादुत्तरस्य ईयसुन आकाराऽऽदेश' इत्यर्थः।

---

१ इतोऽग्रे—'घत्वादिकं तु तृलोपस्य भावित्वेनाऽकृतव्यूहपरिभाषया प्रागेव नेति बोध्यम्' इति ख. घ. ङ.। २ 'घत्वादिकं तु पूर्वं, तेन' क. ग. पाठः।

३ इतोऽग्रे—'लुप्तेऽपि तृचि प्रत्ययलक्षणध्रौव्यात्' इति ख. घ. ङ. पाठः।

४ 'अजाद्योरिति। एतत्प्रकरणे पाठात्, निमित्ताऽऽकाङ्क्षायाः सत्त्वाच्च सन्निहिताऽतिशायिकाऽजादिप्रत्ययस्यैव निमित्तत्वमिति[1] तदाशयः। 'प्रशस्यस्ये'त्यादि 'विन्मतो लुगि'त्यन्तं सूत्रषट्कं पञ्चमस्थम् 'इष्ठेमेयःस्वि'ति प्रकरणे पठितुं युक्तम्। इमनिचि तु नाऽतिप्रसङ्गः। पृथ्वादिभ्य एव तद्विधाना'दित्येके' इति ख. ग. घ. ङ. पाठः। क. कुण्डलितः।

५ 'सर्वस्याऽप्ययं प्रकृतिभावः' इति घ. पाठः।

1 'इति तदाशयः' इति क. ग. नास्ति। 'निमित्तत्वमित्याहुः' इति घ. पाठः।

वृद्धस्य । स्वरूपस्यैव ग्रहणम् । व्याख्यानात् । वृद्धस्य 'प्रियस्थिरे'ति-वर्षाऽऽदेशोऽपि पक्षे भवति । न च इमनि सावकाशस्याऽनेनै बाधः । 'वृद्ध'शब्दादिमनिचोऽभावात् । इहैव 'वृद्धस्य वर्षिश्चे'ति वक्तव्ये द्विर्वृद्ध-ग्रहणं चिन्त्यप्रयोजनम्। यत्तु 'द्विर्वृद्धग्रहणसामर्थ्यात्पृथ्वादेराकृतिगणत्वेन इमनिचि 'वर्षिमे'त्यपि भवती'ति । तन्न । तत्र वर्षादेशस्य चारितार्थ्येन, इष्ठनादौ ज्याऽऽदेशेन बाधाऽऽपत्तौ, 'वर्षिष्ठ' इत्याद्यनापत्तेरित्याहुः ।

अन्तिकबाढयोः । अत्र नेद-साधौ हलन्तावेव । अन्यथा 'प्रकृत्यैका-जि'ति सूत्रस्थभाष्योक्तरीत्या 'श्रेष्ठ' इत्यादावुच्चारणसामर्थ्याट्टिलोपाऽभाव-वत्, अत्राऽपि तदभावाऽऽपत्तौ, 'नेदिष्ठ' इत्याद्यसिद्ध्यापत्तेः । उत्तर-कन्साहचर्याच्च ।

स्थूलदूर। 'यणादी'ति लुप्तषष्ठीकं पृथक् पदम् । 'परमि'ति च षष्ठ्यर्थे प्रथमा । 'पूर्वस्ये'ति—पूर्वत्वेऽवधिस्तु यणादिरेव। 'यणादी'ति बहुव्रीहिः। ओर्गुणेन तु न सिद्धम्। यणादिलोपस्य आभीयत्वेनाऽसिद्धत्वात्। क्षिप्रक्षुद्राऽर्थं तस्याऽऽवश्यकत्वाच्च । इक्परिभाषोपस्थित्या च क्षिप्रक्षुद्रयोर्न यकारदकारयोर्गुणः । न च 'पूर्वस्ये'ति निर्दिष्टस्थानिकत्वेन तदनुपस्थितिः। इगनिकोः सत्त्वेनाऽनियमप्रसक्तेर्नियमाऽर्थं परिभाषोपस्थितेरावश्यकत्वात्।

न चैवं 'पूर्व'ग्रहणं व्यर्थम् । ह्रसिष्ठे इकोऽसम्भवादिव, क्षेपिष्ठादौ प्रत्ययस्य इका व्यवधानात्, अप्राप्तिशङ्कावारणाऽर्थं 'पूर्वमात्रस्ये'त्यर्थकस्य तस्य आवश्यकत्वात्। 'पर'ग्रहणन्तु 'यविष्ठः' 'ह्रसिष्ठः' इत्यत्र पूर्वयणादेर्लोपो मा भूदिति । स्थूलादीनां गुणवचनत्वात्तेभ्योऽजादी । क्षिप्रक्षुद्रावपि गुण-वचनावेव । युवशब्दस्याऽगुणवाचित्वे, अत एव वचनात् अजादी इति बोध्यम् । यत्तु वृत्तौ 'अत्र येऽगुणवचना' इत्युक्तम्, तत्र बहुवचनं चिन्त्यम्। क्षिप्रक्षुद्रयोरगुणवचनत्वे तु इमनिचि चारितार्थ्यात्तयोः कल्पनैव न स्यात्।

---

१ 'वृद्धस्य' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख.ग.घ.ङ. पाठः । क. कुण्डलितः, मनोरमागतत्वात् ।

अनभिधानात्तयोस्तदभावे तु 'क्षेपिमे'त्यादिस्वोक्तिविरोध इति।[1] (वस्तुतः) आकडारसूत्रभाष्यरीत्या 'युव'शब्दोऽपि गुणवचन एवेति बोध्यम्।

प्रियस्थिर। 'बंही'त्यादाविकार उच्चारणाऽर्थो, न विवक्षितः, आभीयाऽसिद्धत्वात्, इकारोच्चारणसामर्थ्याच्च प्रादाविव टिलोपाऽनापत्तौ, 'बंहिष्ठ' इत्याद्यसिद्ध्यापत्तेरित्याहुः। वरादिसाहचर्यात् वृन्दोऽपि हलन्त एव। अत एव 'वृन्दिष्ठ' इति माधवादिभिरुदाहृतम्। न च प्र-स्थ-स्फेष्वप्येवमेव आपत्तिः।[2] 'प्रेष्ठः' 'प्रापयती'त्यादेर्भाष्ये उदाहृतत्वेन, तदंशे[3] साहचर्याऽनाश्रयणात्[4]। 'प्रेष्ठ' इत्यादावादेशस्याऽसिद्धत्वात्तन्निमित्तकटिलोपो न। स्थानिनिमित्तकोऽपि न। प्राद्यादेशानां टिलोपाऽपवादत्वादित्याहुः।[5]

बहोर्लोपो। इष्ठन उत्तरसूत्रेण कार्याऽन्तरस्याऽपि विधानात्तस्येह न ग्रहणमित्याशयेनाऽऽह—इमेयसोरिति। लोपश्च 'आदेः परस्ये'त्यादेः। 'भू'भावस्याऽसिद्धत्वात् 'भूयानि'त्यत्र ओर्गुणो न[6]। 'अङ्गवृत्त'परिभाषया वा। दीर्घोच्चारणस्य तु 'भूमे'त्यादौ सावकाशत्वान्न तद्बलात्तदभावः।

इष्ठस्य यि। पूर्वसूत्रं सम्पूर्णमनुवर्त्तते। तदाह—बहोरित्यादि। 'भूरादेशश्चे'त्यपि द्रष्टव्यम्। अत्राऽऽदिलोपे कृते 'यि'शब्द आगमः।

यद्वा लोपाऽपवादो यकार आगमः। इकारस्तूच्चारणाऽर्थः। पक्षद्वयमपीदं भाष्ये स्थितम्।

१ 'इति दिक्। प्रियस्थिर'। इति ख. घ. ङ. पाठः। २ लघुशेखरपाठोऽयम्।

३ इतोऽग्रे—'उत्तराऽऽदेशविधौ साहचर्यस्यापस्थितत्वेनोच्चारणाऽर्थत्वाऽङ्गीकारेऽपि प्रादौ तदनुपस्थित्या प्रयोगसमवायित्वकल्पनाया एवोचितत्वात्' इति घ. पाठः।

४ 'साहचर्याऽनाश्रयणाच्च' इति घ. पाठः।

५ 'टिलोपाऽपवादत्वेन भ्रष्टाऽवसरन्यायादित्याहुः' इति घ. पाठः।

६ इतोऽग्रे—'तत्प्रत्याख्यानपक्षे 'भू-ऊ' इत्यूकारप्रश्लेषात्तदभावः' इति घ. पाठः।

युवाल्पयोः । 'युवे'ति स्वरूपस्यैव ग्रहणम्[1] । व्याख्यानात् । कनिष्ठ इति । प्रकृतिभावात् 'टेरि'ति, 'नस्तद्धिते' इति वा टिलोपो न[2] ।

विन्मतोर्लुक् । 'अजादी' इत्यनुवृत्तिलभ्यमर्थमाह—इष्ठेयसोरिति । अस्मादेव ज्ञापकादाभ्यामजादी । इदं च 'र ऋत' इति सूत्रे भाष्ये स्पष्टम् ।

न च विन्विषये मतुपः सत्त्वेन, मतुप्लुकैव 'स्रजिष्ठ' इत्यादिसिद्धौ, विन्ग्रहणं व्यर्थम्, विन्नन्तात्तु नेष्ठन्, एतज्ज्ञापकसिद्ध एव तत्रेष्ठन्निति वाच्यम् । 'णाविष्ठवदि'त्यनेन णिचि, विनो लुकः फलस्य सत्त्वादिति नामधातुप्रक्रियायां निरूपयिष्यते[3] ।

स्रजिष्ठ इति । विनो लुकि भत्वात्पदकार्याऽभावः । अत्रेदं बोध्यम्—'यशस्विन्'शब्दादिष्ठनि, विनो लुकि, 'यशसिष्ठ' इत्येव । विन्मतोर्लुकि 'टेरि'ति लोपस्य भाष्यकारेणाऽनङ्गीकारात् । बाधकलुकस्तत्र प्रयोगे प्रवृत्तेरिति । स्पष्टं चेदं 'प्रकृत्यैकाजि'ति सूत्रे भाष्ये । 'मेधावि'शब्दादिष्ठनि विनो लुकि'टेरि'त्यस्याऽप्रवृत्तावपि, 'यस्ये'तिलोपप्रवृत्त्या 'मेधिष्ठ' इत्येव । 'स्ववत्'शब्दादिष्ठनि प्रकृतिभावात् 'स्वेष्ठ' इत्येव । 'वसुमत्'शब्दादिष्ठनि च 'वस्विष्ठ' इत्येव । 'वसिष्ठ' इति रूपमि'ति वृत्तिकृतस्तु प्रमादः ।

'ब्रह्मवत्'शब्दादिष्ठनि 'ब्रह्मिष्ठः' । ईयसि 'ब्रह्मीयानि'त्येव । विन्मतोर्लुका 'येन नाऽप्राप्ति'न्यायेन 'टेरि'त्यस्य बाधेऽपि, 'नस्तद्धिते' इत्यस्य बाधे माना-

---

१ इतोऽग्रे—'न युवाऽपत्यस्य । अल्पसाहचर्यात्' इति ब. पाठः ।

२ इतोऽग्रे—'उच्चारणन्तु सर्वादेशार्थम्, अल्पादेशकनि, 'नस्तद्धिते' इतिलोपेन येन नाप्राप्त्यभावात् लुग्न्यायोऽपि वक्तुमशक्यः' इति ब. पाठः ।

३ इतोऽग्रे—'ननु लुग्ग्रहणाऽकरणलाघवाऽनुरोधात् 'बिल्वकादिभ्य' इत्युत्तरमेव 'विन्मतोरि'ति पाठ्यम् । एवं च आभीयाऽसिद्धत्वेन लुगुत्तरं टिलोपोऽपि न । पृथ्वादिषु विन्मतुबन्तपाठो नास्त्येवेति चेन्न । 'स्थविष्ठ' इत्यादौ मतुबन्तादिष्ठनि, लुक आभीयाऽसिद्धत्वेन, स्थूलादीनामिष्ठादिपरत्वाऽभावेन, 'स्थूलदूरे'त्यादीनामप्रवृत्त्यापत्तेः' इति ख. ब. ङ. पाठः, क. कुण्डलितः ।

ऽभावात् । स्पष्टं चेदमपि तत्रैव भाष्ये । अत एव 'तस्माद्ब्राह्मणं ब्रह्मिष्ठं कुर्वि'ति बह्वृचब्राह्मणप्रयोगः सङ्गच्छते । 'श्ववत्'शब्दादिष्ठनि, मतोर्लुकि, प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाऽभावे, तद्धितपरत्वात्सम्प्रसारणाऽभावे, 'श्वनिष्ठ' इति रूपमिति दिक् ।

प्रशंसायां रूपप् । प्रशंसा चाऽत्र परिपूर्णत्वरूपा, न स्तुतिरूपा । तेन 'चौररूपोऽयं, यदक्ष्णोरञ्जनं हरती'ति सिद्धम । गुप्तवस्त्वपहरणेन हि चौर्यं परिपूर्यते । निन्दाप्रतिपादनपरं चैतद्वाक्यम् । 'परिपूर्णश्चोर' इति बोधाऽनुभवाच्च । सा च प्रकृत्यर्थताऽवच्छेदकधर्मनिष्ठा, तत्समानाधिकरणधर्मनिष्ठा वा, प्रकृत्यर्थे आरोप्यते । प्रशंसाविशिष्टश्च प्रशस्य एव गृह्यते, न प्रशंसिता । अनभिधानात् । 'प्राशस्त्यम्–प्रतियोगिनिरपेक्षम्, अतिशायनन्तु प्रतियोगिसाऽपेक्षमि'ति, न तदनुवृत्त्या निर्वाहः । पचतिरूपमिति । क्रियाप्रधानत्वादाख्यातस्याऽत्र प्रथमैकवचनमेव । पश्यत्यादियोगे द्वितीयाद्यपि । क्लीबत्वं लोकात् । स्पष्टं चेदं सर्वं भाष्ये ।

ईषदसमाप्तौ क । ईषदसमाप्तिरपि प्रकृत्यर्थविशेषणमेव । स्वार्थिकानां प्रकृतितो लिङ्गवचनस्वीकारात्, 'बहुगुडो द्राक्षा' 'वृषभकल्प इयं गौरि'ति सिद्धम् । न्यायसिद्धं चैतत् । 'गुडकल्पा द्राक्षे'ति तु कचित्प्रकृतितो लिङ्गवचनाऽतिक्रमात्सिद्धम् । अत्र ज्ञापकं 'णचः स्त्रियामञि'ति सूत्रे 'स्त्री'ग्रहणम् । अन्यथा णचः स्त्रियां विहितत्वात्, अञश्च स्वार्थिकत्वादेव सिद्धौ, किं तेन ? । अत्र 'गुड'शब्दस्य सादृश्यात् द्राक्षायां वृत्तिः । गुडगतमाधुर्या-

१ इतोऽग्रे–'तत्र सादृश्यप्रयोजकधर्मस्य माधुर्यादेरीषदसमाप्तिः[1] । यन्निरूपितसादृश्यप्रयोजकधर्मस्य ईषदसमाप्तिस्तद्वाचकाच्च कल्पादयः । स्वभावात् । एवं च पूर्णः पटुः कश्चित्, तत्सादृश्यादन्यः पटुः, प्रचुरसादृश्यं च 'पटुकल्प'शब्दगम्यमिति सर्वत्रोपमा द्रष्टव्या । यद्वा गुडगतमाधुर्याश्रयेण द्राक्षायां गुडत्वाऽऽरोपेऽपि' इति ख. ग. घ. ङ. पाठः । क. कुण्डलितः ।

1 इतोऽग्रे—'तेन ईषत्सादृश्ये प्रत्ययाऽभाव इति बोध्यम्' इति घ. पाठः ।

ऽऽश्रयेण द्राक्षायां गुडत्वाऽऽरोपेऽपि, जात्यभावात् ईषदसमाप्तं तदि'ति, अर्थगम्या उपमेति बोध्यम् । न च ईषदसमाप्तिः सादृश्यरूपा' प्रत्ययाऽर्थ एवाऽस्तु । गुणगुणिनोर्नियमतोऽभेदोपचाराच्च 'पटुकल्पः' 'पटुकल्पावि'-त्यादिसिद्धिरिति वाच्यम् । सादृश्यस्य द्राक्षाऽऽश्रयत्वे 'बहुगुड' इत्यस्याऽनापत्तिः, । गुडाऽऽश्रयत्वेऽनुभवविरोधः । 'गुडकल्पे'त्यादिप्रयोगाऽसिद्धिश्च । स्वार्थिकत्वे तु प्रकृतितो लिङ्गवचनसिद्धिः । तस्याऽनित्यत्वाद्विशेष्यनिघ्नताऽपीत्याहुः । अतिशायनादीषदसमाप्त्योर्युगपद्विवक्षायां परत्वात्कल्पपि, पुनःप्रसङ्गविज्ञानात्, प्रकर्षबोधकास्तरबादयोऽपि— 'पटुकल्पतर' इति । स्पष्टं चैतत्सर्वं भाष्ये ।

विभाषा सुपो । सूत्रे 'सुप' इति षष्ठ्यन्तम् । 'षष्ठ्यतसर्थप्रत्ययेने'-त्युक्तेः । सुबन्तादिति । 'प्रागि'त्यपकृष्यते । यद्यपि सौत्र'पुरस्ता'च्छब्दस्येदं विवरणं तत्समानाऽर्थम्, तथापि तद्योगे न षष्ठी । 'अन्यारादि'तिसूत्रस्थाऽञ्चूत्तरपदग्रहणेन तद्बाधात् । प्रागेवेति । सौत्रः 'तु'शब्दोऽवधारणे वर्त्तते इति भावः । तेन बहुजेव विकल्पते, न तु पूर्वत्वम् । अन्यथा प्राक्त्वं विकल्प्येत । तथा च पक्षे बहुच्परः स्यादिति केचित् ।

'विभाषा'ग्रहणं कल्पबादिसमावेशाऽर्थम् । कल्पबादयो हि तिङन्तेषु सावकाशाः । 'सुप्'ग्रहणं 'तिङश्चे'त्यस्याऽत्राऽसम्बन्धाय । उत्तरत्र तु वर्त्तते एवं[2] । पुरस्ताद्ग्रहणं प्रत्ययपरत्वनिवृत्त्यर्थम् । विभाषाग्रहणेन च प्रत्यय एवाऽभिसम्बध्यते, न देशः । अप्रधानत्वात् । अत एव 'उदश्वितोऽन्यतरस्यामि'त्यादौ न परत्वविकल्पः । एवं च 'तु'ग्रहणं स्पष्टाऽर्थम् । न च

---

१ 'सुबन्तादिति' इत्यारभ्य 'इति केचित्' इत्यन्तः ख. ग. घ. ङ. पाठो मनोरमादिस्थत्वात् क. कुण्डलितः ।

२ इतोऽग्रे—'न च सुब्ग्रहणात् 'प्रातिपदिकादि'त्यस्यैव निवृत्तिरस्तु । 'प्रातिपदिकप्रकृतिकसुबन्तादि'त्यर्थेन अनुवृत्तौ दोषाऽभावात् । अत एव 'ततः प्रवर्त्ततेऽसौ विभक्त्यन्तः' इति भाष्यं सङ्गच्छते' इति घ. पाठः ।

'पुरस्ताद्यादृशे लिङ्गवचने, तादृशे एव यथा स्यातामि'त्यर्थं तत्, 'पुरस्ता-दि'त्यस्याऽऽवृत्त्याऽस्याऽर्थस्याऽपि लाभ इति वाच्यम्। स्वार्थिकत्वादेव सिद्धेः। अस्तु वा इदमपि स्वार्थिकानां प्रकृतितो लिङ्गवचनाऽतिक्रमे ज्ञापकम्। स्पष्टं चेदं भाष्ये। वृत्तौ 'प्रागेवे'त्येवकारस्तु 'सर्वं वाक्यं साऽवधारणमि'ति न्यायसिद्धो, न्यायप्राप्तबाध्यबाधकभावस्फुटीकरणाऽर्थः, न तु 'तु'शब्दाऽर्थ इति दिक्। बहुचि कृते कल्पाऽऽदयस्तु न। अपवादेन बहुचा बाधात्। बहुचा उक्ताऽर्थत्वाच्च।

**प्रकारवतीति।** अत एव 'यथाजातीयकः' 'अन्यथाजातीयक' इत्यादि-भाष्यप्रयोगाः सङ्गच्छन्ते। 'अत्र 'प्रकार'शब्देन भेद एवे'ति[2] जयादित्यः। 'सादृश्यं, भेदश्चेत्युभयमपी'ति 'प्रकारे गुणवचनस्ये'त्यत्र वामनः। अधिकं थाल्विधायके उक्तम्।

**प्रागिवात्कः।** 'सुप' इति वर्त्तते। तेन तिङन्तात् को न। अत एव पूर्वसूत्रे भाष्ये 'सुबि'ति माऽस्तु। 'तिङ' इत्यस्य निवृत्त्यैव सिद्धेः। अवश्यमुत्तराऽर्थं तदनुवर्त्त्यम्—'अव्ययसर्वनाम्नामि'त्यर्थमि'त्युक्तम्। अन्यथा हि 'प्रागिवादित्यर्थमि'त्येव ब्रूयादित्याहुः।

**अव्ययसर्वनाम्नाम्।** अयमप्यधिकारः। 'अज्ञाते' इत्यादौ तु वाक्य-भेदेनाऽकचोऽपि विधानं बोध्यम्। **अनुवर्त्तत इति।** मण्डूकप्लुत्येति भावः। अत्र च मानमुक्तमेव। 'ङ्याप्प्रातिपदिकात्' 'सुप' इति चाऽनु-वर्त्तते। नचाऽन्यतराऽनुवृत्त्यैव सिद्धे, 'प्रातिपदिकात्''सुप' इत्युभया-ऽनुवृत्तिर्व्यर्थेति वाच्यम्। 'प्रातिपदिकादि'त्यनुवृत्तिः 'क्वचित्सुबन्ताऽवयव-

---

१ 'आवृत्त्या, 'प्रागिवादि'त्यतः 'प्राक्'पदाऽपकर्षणेन वाऽस्याऽर्थस्य लाभ' इति घ. पाठः।

२ 'भेद एवेत्येके' इति घ. पाठः।

प्रातिपदिकस्य टेर्ग्रहणमि'त्यर्थलाभाऽर्था । सुबनुवृत्तिस्तु 'क्वचित्सुबन्तस्य टेरि'त्यर्थलाभाऽर्थेत्याहुः ।

कस्य च दः । इदं सूत्रम् 'अव्ययसर्वनाम्नामि'त्यनेन एकयोगताऽऽपन्नमिति अत्रत्यभाष्यस्वरसः । विधेयभेदात्तु भेदेन व्याख्यातं मूले ।

सर्वनाम-तिङन्तयोः कान्तयोरसम्भवादाह—कान्ताव्ययस्येति । यङ्लुगन्तम् 'अशाशक्' इत्यादि नाऽस्त्येव । तस्य काचित्कत्वादित्याहुः । 'अधोगि'त्यादौ तु असिद्धं कुत्वम् ।

'क्व सुबन्तस्य, क्व प्रातिपदिकस्य टेरि'त्याकाङ्क्षायां व्यवस्थामाह—ओकारेति । इदं च सङ्कोचकवाक्यं युष्मदस्मच्छब्दमात्रविषयम् , भाष्ये तेषामेवोदाहरणादित्याहुः । अन्येषान्तु सर्वनाम्नां प्रातिपदिकटेः प्रागेवाऽकच् । अत एव 'कादेशः साऽकच्काऽर्थमवश्यं वक्तव्यः, कः कौ के इत्येवमर्थमि'ति भाष्यं सङ्गच्छते इति बोध्यम् ।

[1]त्वयकेति । यत्वादिषु कृतेष्वकच् । स्पष्टं चेदं भाष्ये ।

शीले इति । शीलं स्वभावो, नियमश्च । तूष्णीक इति । ह्रस्वाऽभावो, भाष्यप्रयोगात् । ( संज्ञापूर्वकविधेरनित्यत्वाद्वा )[2] ।

पचतकीति । अकचो द्वितीयोऽकार उच्चारणाऽर्थ इति भावः ।

कुत्सिते । कुत्सितगतकुत्साविवक्षायां 'कुत्सितक' इत्याद्यपि भवति । 'प्रकृष्टतम' इतिवत् ।

संज्ञायां कन् । 'कुत्सादिहेतुकसंज्ञाविषये कन्'इत्यर्थः । 'संज्ञायां कनि त्रिशब्दस्य तिस्रादेशो वक्तव्यः' । 'तिसृका नाम ग्रामः' । 'बहुवचनान्त'

---

१ 'त्वयकेति । 'अत्र सुबन्तस्य टेरकचि, विशिष्टस्य प्रातिपदिकत्वाऽभावेन लुकोऽप्राप्तौ, 'अन्तरङ्गानपी'ति न्यायाऽप्रवृत्त्या, यत्वादिषु कृतेष्वकच् । न च अकचा व्यवधानेन विभक्तिपरत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया पूर्वमपि यत्वं दुर्लभमिति वाच्यम् । उक्तन्यायस्याऽनित्यत्वात् । अत्र च भाष्यमेव मानम्' इति घ. पाठः ।

२ अयं ख. ङ. पाठः । क. ग. घ. नास्ति ।

इत्येके । 'एकवचनान्त' इत्यन्ये । 'तद्युक्तादि'त्यस्य विवरणम् 'अनुकम्पा-युक्तादि'ति । पूर्वेणेति । अनुकम्पायास्तद्विषयत्वादिति भावः ।

परंपरासम्बद्धेपीति । आरम्भसामर्थ्यादिति भावः ।[1]

धानका इति । 'धाना'शब्दात्के 'केऽण' इति ह्रस्वे, कान्ताट्टापि, 'अभाषितपुंस्काच्चे'ति विकल्पात् पक्षे इत्त्वाऽभावः ।

केचित्तु 'स्वार्थिकानां क्वचित्प्रकृतिलिङ्गाऽतिक्रमस्योक्तत्वादत्र पुंस्त्वम् । तेन 'धानिका' ( 'धानाका' ) इत्यादि न भवत्येवे'त्याहुः ।

बह्वचो । ठज्वेति । पक्षे कः । पूर्वसूत्रद्वयेति । व्याख्यानादिति भावः ।

घनिलचौ च । 'अत्र योगविभागः, चकारश्च चिन्त्यप्रयोजनः । पूर्व-सूत्रेणैव ठच्-कयोः सिद्धेरि'ति हरदत्तः । अन्ये तु-'योगविभागसामर्थ्यात् 'बह्वच' इत्यस्याऽत्राऽसम्बन्धः । तेनाऽबह्वच्यप्येतौ । ततः क-ठच्सिद्ध्यर्थं च चकारः । एतेन 'घनिलचौ चे'ति योगविभागसामर्थ्यादुत्तरसूत्रे ठचोऽसम्बन्धो ज्ञाप्यते । एवं च 'उपिक' इति न भवत्येवे'त्यपास्तम् । वृत्त्यादिविरोधाच्च[3] । अत एव 'जातिनाम्न' इत्यत्र अस्याऽसम्बन्धो वृत्तिकृतोक्त' इत्याहुः ।

ठाजादौ । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । अस्मिन्निति । तयोरेव[4]

१ अयं पाठः क. ग. नास्ति ।

२ इतोऽग्रे—'अनुकम्पायामित्यनुकर्षक-चकारसहित-'नीतौ चे'तिसूत्राऽनुवृत्ते-रिति भावः । एतदर्थमेव हि तत्र चकार इति भावः' इति ख. पाठः ।

३ इतोऽग्रे—'न च 'मनुष्यनाम्न' इत्यस्यैवाऽसम्बन्धोऽस्तु । 'प्राचामुपादेरि'ति-सूत्रे फलाऽभावेन, 'जातिनाम्न' इत्यादौ वृत्तिकृता तन्निवर्त्तनेन च तन्निवृत्ते-रेव युक्तत्वात् । न च 'प्राचामि'तिसूत्रे तदसम्बन्धे, व्यपदेशिवद्भावेन 'उप'शब्दादपि स्यादिति वाच्यम् । 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति-निषेधेन तदप्रवृत्तेरित्याहुः' इति ख. पाठः ।

४ 'प्रत्यासत्त्या तयोरेतदर्थयोः' इति ख. पाठः ।

अर्थयोर्बुद्धौ सन्निधानादिति भावः । एवं च प्रत्यासत्त्या उपस्थितप्रकृत-प्रत्ययं विशेष्यीकृत्य 'यस्मिन्विधिरि'त्येव 'अजादावि'त्यर्थलाभे[1], 'आदि'-ग्रहणं चिन्त्यप्रयोजनम् । न च 'आदि'ग्रहणम् औपदेशिकत्वप्रतिपत्त्यर्थम् । 'ठ'ग्रहणवैयर्थ्यशङ्कापरभाष्याद्यसङ्गतेः ।

सर्वमिति । अयमर्थः 'ऊर्ध्व'ग्रहणसामर्थ्याल्लभ्यते । अन्यथा 'आदेः परस्ये'ति द्वितीयादचो यः परस्तस्याऽऽदेरेव लोपः स्यात् ।

ननु 'ठ'ग्रहणं किमर्थम् । इकादेशेऽजादित्वात्सिद्धेः[2] । अत आह—ठग्रहणमिति । 'शौवस्तिक'सिद्धये इकादेशस्य सर्वतः पूर्वं प्रवृत्तिः, 'ठच-श्चित्त्वाज्ज्ञापकादि'तिवदतां मतेऽपि ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्तस्या-ऽत्राऽप्रवृत्तिरिति, ठग्रहणे कृते, नित्यत्वाट्ठावस्थायां लोपः । एवं च 'वायुदत्त'-शब्दाट्ठे, ठावस्थायां लोपे, ततः कादेशे, 'वायुक' इति सिद्धम् । अन्यथा माथितिकवत्सन्निपातपरिभाषया कादेशाऽभावे, न सिद्ध्येत् । स्पष्टं चेदं भाष्ये । एवं च 'इन्द्रवायु'[3]शब्दादिभ्यष्ठचि, नित्यत्वादेव कादेशात्पूर्वं ( वायु[4]शब्दलोपे, ) इकादेशे, 'इन्द्रिकः' इत्याद्यपि[5] सिध्यति ।

---

१ 'एवञ्चोक्तयुक्त्या प्रकृताऽच एव ग्रहणे तस्मिन्प्रत्ययादित्वस्यैव संभवात् अजादावित्यर्थलाभे' इति घ. पाठः ।

२ इतोऽग्रे—'यत्तु 'इन्द्रवायु'शब्दाट्ठे, कादेशे, लोपाऽर्थे तस्याऽऽवश्यकत्व-मि'ति । तन्न । ठकि, कादेशे, सन्निपातपरिभाषया लोपस्यैवाऽप्रवृत्तेः । न च कादेशात्पूर्वं लोपः, आयन्नादिषूपदेशिवद्वचनेन, घचश्चित्त्वस्य सामान्या-ऽपेक्षज्ञापकत्वेन च, तस्य सर्वतः पूर्वं प्रवृत्तेः । अत एव 'शौवस्तिका'ऽऽदि-सिद्धिः । अत आह—ठग्रहणमिति । 'ठाऽवस्थायां लोप' इत्यर्थकं तदि-त्यर्थः । ठग्रहणसामर्थ्याच्चैतद्विषये उक्तज्ञाप्याऽर्थस्य बाध इति भावः' इति ख. घ. ङ. पाठः ।

३ 'इन्द्रवायुशब्दात्' इति ख. घ. ङ. पाठः ।

४ अयं ख. घ. ङ. पाठः । क. ग. नास्ति ।

५ 'इति भवति' ख. घ. ङ. पाठः ।

अत्र 'अजिनाऽन्तस्ये'तिसूत्रात् उत्तरपदलोपपदे एकदेशे स्वरितत्वप्रतिज्ञानाल्लोपपदमेवाऽनुवर्त्तते। अत एव 'षषष्ठाजादिवचनात्सिद्धमि'ति भाष्यं सङ्गच्छते। अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। तेन 'सवित्रिय' इत्यत्र 'ठाजादावि'ति लोपो न[3]। उपेन्द्रदत्ते च 'चतुर्थादच' इति लोपो न।

विनाऽपि प्रत्ययमिति। समुदायशक्तिग्रहकालेऽवयवानामपि तत्र शक्तिग्रहात्, अवयवतोऽपि तद्बोधः। वार्त्तिकन्तु वर्णमात्रप्रयोगनिरासाऽर्थमिति स्पष्टं पस्पशायां कैयटे, अत्र च[1]।

उवर्णाल्ल इलस्य चेति। 'ल' इति लोपस्य पूर्वाऽऽचार्यसंज्ञा। 'उवर्णात्परस्य इलप्रत्ययस्य लोपः'। स चाऽऽदेः परस्य। चात् द्वितीयादच ऊर्ध्वलोपः। स च सूत्रसिद्ध एवाऽनूद्यते। 'भानुलः'।

क्वचिदेतदुत्तरं—'ऋवर्णादपी'ति पठ्यते। तद्भाष्ये न दृष्टम्।

'चतुर्थादि'ति एकम्। 'अनजादौ च[5]' इति अपरम्। 'लोपः पूर्वपदस्य चे'ति तृतीयम्। 'अप्रत्यये' इत्यादि तुरीयम्। 'उवर्णादि'त्यादि पञ्चमम्। पूजार्थमिति। 'ठज्वे'त्यतो 'वे'त्यनुवृत्त्यैव सिद्धेरिति भावः।

उपड इति। न च गुणे कृते द्वितीयादच ऊर्ध्वस्य लोपो जायमानो

---

१ इतोऽग्रे–'तद्ध्वनयन् वक्ष्यति शेवलेति सूत्रे-'पूर्वस्यापवाद' इति। विनापि' इति घ. पाठः।

२ 'अवयवेन स्मृतात्समुदायाद् बोध इत्यन्ये' घ पाठः।

३ 'केचित्तु ठाजादाविति सूत्रेणाऽत्रत्यवार्त्तिकैश्चोत्तरपदस्य लोपः। ठाजादाविति सूत्रेऽजिनान्तस्येतिसूत्रादुत्तरपदलोप इत्यस्यानुवृत्तेः। समस्तपदैकदेशलोपपदमात्राऽनुवृत्तेर्दुर्लभत्वात्। एतेन 'सवित्रिय' इत्यत्र 'ठाजादावि'तिलोपः स्यात्, उपेन्द्रदत्ते च 'चतुर्थादच' इति लोपः स्यादि'त्यपास्तमित्याहुः। वस्तुतस्तु एकदेशे' इति घ. पाठः।

४ इतोग्रे–'लोपः पूर्वपदस्य चे'तिवचनन्तु सौत्रलोपाऽपवादः' इति घ. पाठः।

५ 'अनजादौ वा' इति क. ग. घ. पाठः।

नकारादेरेव स्यादिति वाच्यम्। 'नेन्द्रस्ये'ति ज्ञापकेन पूर्वोत्तरपदनिमित्त-कार्याऽपेक्षयाऽन्तरङ्गस्याऽप्येकादेशस्याऽप्रवृत्तिज्ञापनान्न दोषः ।[1]

'उपेन्द्र' 'उपगु' 'उपकर्त्ते'त्यादिषु 'उपडा'दीनां पञ्चानां रूपाणां साम्येऽपि, प्रकरणादिना विशेषोऽध्यवसेय इत्याहुः ।

जातिनाम्नः । ये शब्दा जात्यन्तरेषु प्रसिद्धा, मनुष्येषु नामत्वेन विनियुक्तास्ते इहोदाहरणम् । अत एव 'नाम'पदं चरितार्थमिति बोध्यम् । द्वितीयं सन्ध्यक्षरं चेदिति। इदमेकपदेऽपि। सन्ध्यक्षरम्–एच उच्यन्ते।

एकाक्षरपूर्वपदानामिति। एकाऽच्सहितं व्यञ्जनम्-एकाक्षरम् । तेन 'एकाच्पूर्वपदानामि'त्यर्थः । 'द्वितीयादच ऊर्ध्वमि'त्यनेनाऽकारविशिष्टस्य लोपाऽप्राप्तेर्वचनमिदम् । अत एव 'वाग्दत्त'शब्दाट्ठजादौ 'वाचिक'-इत्यादिसिद्धिः ।

वागाशीरिति । 'वाक्करणकशुभाऽऽशंसनेन दत्त' इत्यर्थः । 'वाचि आशीर्यस्य तेन दत्त' इति विग्रह' इत्यन्ये । अत्र हि इकादेशपर्यन्तं तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया, न कुत्वादिप्रवृत्तिस्तत्र। यद्यपि द्वितीयादच ऊर्ध्वस्य 'शीर्दत्त'शब्दस्य लोपे, ततो 'यस्ये'ति लोपे, इकं निमित्तीकृत्य चाऽन्ते भसंज्ञायाः[2] सत्त्वात्, कुत्वाद्यप्रवृत्ताविदं सिद्धयति, तथापि भत्वे आल्लोपस्य स्थानिवत्त्वादाकारान्तस्य भत्वे, चाऽन्तनिष्ठपदत्वं-स्याऽव्याघातात्, कुत्वजश्त्वयोः[3] 'वागिक' इति स्याद्विति भावः ।

न च 'साक्षात्, परम्परया'वा भदान्तविध्यादिप्रापकस्य, प्रतिबन्धकस्य

१ इतोऽग्रे—'यदि गुणो न स्यात्तर्हीकारादेर्लोपः स्यादि'तिसम्भावनासत्त्वेन अकृतव्यूहपरिभाषया वारणाच्च । 'समर्थ'ग्रहणन्तु 'प्राग्दिश' इत्यत्रैव निवृत्तमित्युक्तम्' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

२ 'भसंज्ञायाः सत्त्वात् अकृतव्यूहपरिभाषया पूर्वमेव कुत्वाद्यप्रवृत्तौ' इति ख. घ. ङ. पाठः ।

३ 'कुत्वजश्त्वयोरन्तरङ्गयोरनिवृत्त्यापत्तौ वागिक इति' इति ख. घ. ङ. पाठः ।

वा स्थानिवद्भावस्य निषेध' इति प्राक् सिद्धान्तितत्वेन, भत्वे[1]ऽपि स्थानिवत्त्वनिषेध इति वाच्यम्। षडिकेऽपि दोषाऽऽपत्तेः। यदि तु द्वितीयादच उर्ध्वं श्रूयमाणस्य लोपविधायकवचनप्रामाण्याद्भत्वे स्थानिवत्त्वं, तर्हि प्रकृते[2]ऽपि तुल्यम्[3]।

एतेन 'पूर्वत्राऽसिद्धीये' इति निषेधो, 'जशि ने'ति निषेधश्च स्यात्' इत्यपास्तम्। उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाऽभावात्तुल्याऽवधिकया भसंज्ञया पदसंज्ञा बाध्यते। तत्र तद्धिताऽऽश्रयाया अपवादत्वादेव बाधः। विभक्त्याश्रया तु एकसत्ताऽधिकारात्परत्वाद्बाध्यते इति न दोषः। यद्यपि' विभक्त्याश्रयाऽन्तरङ्गा, तथापि तद्बाध आकडारसूत्रे ' निरूपितः।

अत्रत्य[4]मनोरमाऽपि—'यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात्तदा

१ 'भत्वे न स्थानिवत्त्वम्' इति ग. घ. पाठः।

२ 'प्रकृतेऽपि तुल्यम्। 'द्व्यच एव परस्य लोपार्थं तदिति तु न युक्तम्। 'द्व्यच' इत्युक्त्यैव उत्तरपदलोपग्रहणाऽनुवृत्त्या सिद्धेः' इति घ. पाठः।

३ इतोऽग्रे—'न च पूर्वमेव जश्त्वादेर्निष्पन्नत्वेन इदानीं विधेयत्वाऽभावः। अकृतव्यूहपरिभाषाप्राप्तनिवृत्तिप्रतिबन्धमात्रफलको ह्ययं स्थानिवद्भावः, न पदान्तविध्यादिप्रापको, नाऽपि प्रतिबन्धक इति, न स्थानिवत्त्वप्रसक्तिरिति वाच्यम्। पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्र' इत्यादौ जातस्य आनुको लोपो लुकि, सन्नियोगशिष्टपरिभाषाप्राप्तनिवृत्तिप्रतिबन्धपूर्वं तद्रक्षणरूपपूर्वविधिकर्त्तव्यताऽभिप्रायेण प्राप्तस्थानिवत्त्वनिषेधाय 'लुकि न स्थानिवदि'ति वचनमिति 'नपदान्त'सूत्रभाष्योक्तरीत्या, अत्रापि पदान्तविधिकर्त्तव्यतायाः सत्त्वात्। अकृतव्यूहपरिभाषया पूर्वमप्रवृत्तेरेव सत्त्वाच्च' इति ख.घ.ङ.पाठः। क. कुण्डलितः।

४ 'अत्रत्यमनोरमाऽपि' इत्यारभ्य 'चिन्त्यम्' इत्यन्तः ख. घ. ङ. पाठः। क. कुण्डलितः।

यद्यप्यकृतव्यूहपरिभाषया 'वाच्-आ-इक' इति स्थिते, 'यस्ये'ति लोपे सिद्धयति, तथापि तस्य स्थानिवत्त्वात् आकारान्तस्य भत्वे, अन्तर्वर्त्तिविभक्तिमाश्रित्य चकारान्तस्य पदत्वेन, तत्परिभाषाऽप्रवृत्तौ, अन्तरङ्गत्वात् कुत्वजश्त्वयोः कृतयोः 'वागिक' इति स्यादि'ति, तत्र तत्र शेषपूरणयैव व्याख्येया। एतेन 'स्वयमेवाऽग्रे निमित्तविनाशाऽभावस्य दर्शितत्वेन, पूर्वम् अकृतव्यूहपरिभाषोल्लेखोऽयुक्त' इत्यपास्तम्। परन्तु उक्तरीत्या तयोः पूर्वम् अप्रवृत्त्याऽकृतव्यूहपरिभाषाया नोपयोगः। तस्या अभावाच्चेति चिन्त्यम्।

कथमिति । अत्राऽप्युत्तरपदलोपे वाचिकवत् जश्त्वाद्यनापत्तिरिति भावः। षषष्ठेति। 'अत्र सौत्र लोप एवेष्यते, न त्वौपसङ्ख्यानिक' इत्यर्थः। अत एव सूत्रे 'ऊर्ध्वं द्वितीयादच' इति चरितार्थम्। स्पष्टं चेदं 'स्वादिष्वि'ति सूत्रे भाष्ये। 'षडिकः सिद्धोऽचः स्थानिवत्त्वात्। वाचिकस्तु एकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् । एवं तर्हि षडिके दोषः। 'षषष्ठाजादिवचनात्सिद्धमि'ति हि तत्रोक्तम् । एवं चेदं वार्त्तिकं व्याख्यानात् षट्शब्दाऽतिरिक्तविषयकमिति भावः।

शेवलसु। 'एषामकृतसन्धीनां तृतीयादच इति वक्तव्यम्'। एवं च 'सुपर्याशीर्दत्ता'ऽऽदिशब्दादपि ठचि 'सुपरिकः' इत्याद्येवे'ति भाष्ये स्पष्टम्।

अजिनान्तस्य। 'अजिनाऽन्तस्य लोपश्चे'ति वक्तव्ये 'उत्तरपद'ग्रहणात् सर्वलोपः।

अल्पे। अल्पत्वं-महत्त्वप्रतिद्वन्द्वि, ह्रस्वत्वं-दीर्घत्वप्रतिद्वन्द्वीति भेदः।

क्वचित्प्रकृतिलिङ्गाऽतिक्रमस्याऽपि ज्ञापनादाह—कुटीर इति। आयुधविशेष इति। शक्त्याख्यः। स्पष्टं चेदं वृत्तौ।

---

१ 'परन्तु' इत्यारभ्य 'चिन्त्यम्' इत्यन्तः क. पाठः। ख. घ. ङ. नास्ति।

२ 'स्वादिष्विति सूत्रे, प्रकृतसूत्रे च भाष्ये स्पष्टम्' इति ख. पाठः।

३ इतोऽग्रे—'उपेन्द्रोक्तन्यायैरेव सिद्धमेतत्' इति ख. घ. ङ. पाठः।

वत्सोक्षा। तनुत्वमत्राऽल्पत्वम्। तच्च प्रत्यासत्त्या प्रवृत्तिनिमित्तगतं प्रायः। क्वचित्तु तत्सहचरितधर्मान्तरगतमपि। द्वितीयमिति। प्रथमं वयो हि 'वत्स'शब्दस्य प्रवृत्तिनिमित्तम्। द्वितीयवयःप्राप्तौ हि तदल्पशेषं भवतीति भावः। तरुणः-उक्षा। तारुण्यस्य च तनुत्वं तृतीयवयःप्राप्तिः।

अश्वतर इति। अत्र प्रवृत्तिनिमित्ताऽश्वत्वसहचरितस्याऽश्वेनाऽश्वायामुत्पन्नत्वस्याऽल्पत्वम्, अन्यपितृत्वात्। 'अश्वायां खरोत्पन्न' इत्यर्थः। भारवहनसमर्थो वोढा-'ऋषभः'। मन्दशक्तिस्तु 'ऋषभतरः'।

कियत्तदो। निर्धार्यमाणवाचिभ्य एव प्रत्ययः, प्राधान्यात्, न तु यतो निर्धारणं ततः, अप्राधान्यात्, अभिधानस्वभावाच्च। तेन 'तयोः कतरो देवदत्त' इत्यर्थे 'कयोस्ततरो देवदत्त' इति न। एवं 'कयोरन्यतरो देवदत्त' इत्यर्थे 'कतर' इत्यादि नेत्याहुः। 'द्वयोरेकस्य निर्धारणे गम्यमाने एभ्यो डतरजि'त्यर्थः। अत्र 'द्वयोरि'त्युपलक्षणं, बहूनामपि। अत एव 'बहुष्वासीनेषु कश्चित्कञ्चित्पृच्छति, 'कतरो देवदत्त' इति 'प्रत्यय' इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते। अत एव सूत्रे 'एक'ग्रहणं चरितार्थम्। अन्यथा द्वयोर्मध्ये एकस्यैव निर्धारणात्तद्वैयर्थ्यं स्पष्टमेव।

'द्वयोरि'ति निर्धारणषष्ठी तु व्याख्यानादेव भविष्यति। न तु कर्मणि षष्ठी। तेन 'द्विकर्मके निर्धारणे' इत्यर्थो न। अन्यथा 'अस्मिन् ग्रामे कौ देवदत्तयज्ञदत्तावि'त्यत्रैव स्यात्, न त्वेकनिर्धारणे इति बोध्यम्।

अत्र निर्धारणं न प्रत्ययार्थः। तं विनाऽपि प्रतीयमानत्वेन, अन्यलभ्यत्वात्। किन्तु विषयनिर्देश इति वृत्त्यादौ स्पष्टम्।

वा बहूनाम्। 'जातिश्च, परिप्रश्नश्चे'ति समाहारद्वन्द्वः। तत्र 'जातौ' इति सर्वेषां विशेषणम्। 'परिप्रश्न'ग्रहणन्तु योग्यताबलात्किम एव विशेषणम्। 'जातिविषयेभ्यः किमादिभ्यः, परिप्रश्नविषयाच्च किमो डतमजि'त्यर्थः। 'परिप्रश्नोऽपि प्रत्यासत्त्या जातिविषय एवे'ति केचित्।

---

१ 'प्रवृत्तीति। प्रत्यासत्तेरिति भावः। इदमुपलक्षणं, तत्सहचरितधर्माणामपि। अत एव कार्श्यवाचितनुत्वशब्दस्य नेह ग्रहणमिति बोध्यम्' इति घ. पाठः।

परे तु-'जातिग्रहणं गुणक्रियासंज्ञानामप्युपलक्षणम्। अत एव 'कतरकतमौ जातिपरिप्रश्ने' इति सूत्रे 'जातिपरिप्रश्ने' इति सार्थकम्। न च 'कतर'शब्दाऽर्थं तत्। 'कतम'साहचर्येणोपपत्तेः। अत एव 'कतमो भवतामध्यापकः, शूरो, देवदत्तो वे'ति सिद्धम्। अत एव 'कतमा-कतमा एषामाढ्यते'ति द्वित्वप्रकरणेऽष्टमे भाष्यप्रयोगः सङ्गच्छते। ( अत एव 'कतमा-कतमक्' इति छान्दोग्यश्रुतिप्रयोगः सङ्गच्छते)। एवं च 'कठानां मध्येऽत्र भोक्ता कतमः कठ' इत्याद्यपि साध्वेवेत्याहुः। 'परिप्रश्न'ग्रहणात् क्षेपाऽर्थस्य किमो न। प्रत्याख्यातमिति। क्षेपाऽर्थस्य त्वनभिधानान्न। अत एव ततो डतरच् नेत्याहुः। आकरे इति। पूर्वसूत्रस्थ-'द्वयोरि'त्यस्य प्रत्याख्यानभाष्यव्याख्याऽवसरे कैयटग्रन्थे इत्यर्थः।

वाग्रहणमिति। यत्तु 'प्रागिवादि'तिवत्, 'अव्ययसर्वनाम्नामि'त्यपि अधिकारसूत्रम्। एवं चाऽत्राऽपि तदनुवृत्त्यैवाऽकचः सिद्धेः 'वा'ग्रहणं व्यर्थमि'ति। तन्न। डतरज्विषयेऽप्यकजापत्तेः। विशेषविहितेन डतरचा बाधात् नेति चेत्। प्रकृतेऽपि समम्।

महाविभाषयेति। ननु 'अषडक्षे'ति सूत्रे 'तमबादयः प्रागवक्षेपणे कनो नित्याः प्रत्यया' इत्युक्तत्वेन कथमत्र महाविभाषासम्बन्धः। 'विभाषा सुप' इति सूत्रे 'महाविभाषया वाक्यस्य सिद्धत्वेऽपि, 'विभाषे'ति कल्पा-

---

१ 'जातिग्रहणन्तु' इति क. पाठः।

२ इतोऽग्रे—'किमादीनां जातिविषयत्वं जात्या निर्धारणमात्रेण बोध्यम्' इति घ. पाठः। ३ अयं ख. घ. ङ. पाठः। क. कुण्डलितः।

४ 'कथमत्र महाविभाषासम्बन्ध इति चेन्न। बहुचोऽपि तन्मध्ये निविष्टत्वेन, 'विभाषा सुप' इति सूत्रे 'महाविभाषया वाक्यस्य सिद्धत्वेपि, विभाषेति कल्पाद्यर्थमि'ति भाष्यविरोधादुक्तभाष्यस्य प्रायिकत्वेनाऽक्षतेः। अत एव 'एकाच्च प्राचामि'तिसूत्रे 'महाविभाषयैव सिद्धे प्राचांग्रहणं न कर्त्तव्यमि'ति भाष्योक्तं सङ्गच्छते। अत एव डतरज्विधावपि महाविभाषासम्बन्ध

ऽऽद्यर्थमि'ति भाष्यस्य, 'एकाच्च प्राचामि'ति सूत्रे 'महाविभाषयैव सिद्धे, प्राचांग्रहणं न कर्त्तव्यमि'ति भाष्यस्य च 'विकल्पाऽर्थकपदं न वाक्य-साधुत्वाय, महाविभाषयैव सिद्धेः। यदि तु वाक्यं नेष्यते, तदा तदर्थं नैव तदित्याशय' इति चेन्न। 'अवक्षेपणे' इति सूत्रे 'क एतयोरर्थयो-र्विशेष' इति भाष्यप्रयोगस्य, 'समासाच्चे'तिसूत्रे 'तदित्यनेन किं प्रति-निर्दिश्यते' इतिभाष्यस्य चाऽसङ्गत्यापत्तेः। व्याख्यातं च 'इवाऽर्थ-च्छयोः कस्य सर्वनाम्ना परामर्श' इति कैयटेन। तस्मात् 'तमादयः प्राक् अवक्षेपणे कनो नित्या' इति प्रायिकमिति दिक्।

किम इति। 'किंयत्तद' इति सूत्रेऽस्य आशय उक्तः।

एकाच्च। डतमच्च स्यादिति। 'प्राचाङ्ग्रहणं पूजाऽर्थम्। महा-विभाषयैव सिद्धेरि'ति स्पष्टं भाष्ये। येनेतर इति। 'अवक्षेपणे' इति करणे ल्युडिति भावः। (प्रागिवीयानां पूर्णोऽवधिः)।

अथ स्वार्थिकप्रकरणम्।

इवे। 'इवाऽर्थोपमानत्ववति वर्त्तमानात्प्रातिपदिकात्कन्प्रत्ययः, यदुप-मेयं सा प्रतिकृतिश्चे'दित्यर्थः। प्रतिकृतिः = मृदादिनिर्मिता प्रतिमा।

---

उक्तो मूलकृता। यदि तु तद्भाष्यस्य—'विकल्पाऽर्थकपदं न वाक्यसाधु-त्वाय, महाविभाषयैव सिद्धेः। यदि तु वाक्यं नेष्यते, तदा तदर्थं नैव तदि'त्याशयो 'विभाषे'तिसूत्रस्थभाष्यस्य, तदा 'एकाच्चे'ति सूत्रस्थं भाष्य-मेव मानम्। न च तद्भाष्यमपि तद्वदेव व्याख्येयम्। एवमपि—'अवक्षेपणे' इति सूत्रे क एतयोरर्थयोर्विशेषः' इति घ. पाठः।

१ इतोऽग्रे—'इवाऽर्थो यद्यपि सादृश्यम्, तथाप्येषां प्रत्ययानां सादृश्यवति विधानम्। शब्दशक्तिस्वभावात्। सदृश एव वा इवाऽर्थः। 'इवे' इति च प्रकृत्यर्थविशेषणमर्थद्वारकम्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

२ इतोग्रे—'अश्वशब्दश्च तत्सदृशे लाक्षणिकः। स्वार्थिकश्च प्रत्ययः। लक्षणायां प्रत्यय एव तात्पर्यग्राहकः। 'यत्सदृशं सा प्रतिमा चेत्तदा प्रत्यय' इति

यत्तु 'प्रतिकृतिरूपः सदृशः प्रत्ययाऽर्थ' इति । तन्न । स्वार्थिकप्रकरणविरोधात्। अश्वसदृशस्येति । प्रकृतिप्रत्ययसमुदायः संज्ञेति बोध्यम् ।

लुम्म । अस्य लुप्त्वं प्रकृतिवल्लिङ्गाय । वचनन्तु विशेष्यवदेव । 'हरीतक्यादिषु व्यक्तिरि'त्यत्र पाठात् । ध्वनितं चेदं भाष्ये । स्पष्टं च कैयटे । तेन 'चञ्चे मनुष्यौ' इत्येव ।

जीविकार्थे चा । 'याः प्रतिमा गृहीत्वा भिक्षमाणा गृहाद् गृहमटन्ति, तास्वि'त्यर्थः । देवलकानामिति । 'देवलक'शब्देन च ते एव भिक्षवः ।

हस्तिकानिति । तदुक्तम्-

'रामं, सीतां, लक्ष्मणं जीविकाऽर्थे

विक्रीणीते यो नरस्तं च धिक् धिक् ।

अस्मिन् पद्ये योऽपशब्दान्न वेत्ति,

व्यर्थप्रज्ञं पण्डितं तं च धिक् धिक्' ॥ इति ।

आकृतीति । [3]'देव-राजा-ऽज-शङ्कुभ्यः, करि-सिन्धु-शतात्पथः । सिद्धो-ष्ट्राभ्यां गति-ग्रीवे, वामरज्जुः, स्थलात्पथः' ॥ इत्यादयो बोध्याः। अत्र वदन्ति-'अर्चासु पूजनाऽर्थासु चित्रकर्मनटध्वजे। इवे प्रतिकृतौ लोपः कनो देवपथादिषु'॥ इति । 'अर्चा'शब्देनाऽत्र या आयत-

---

सूत्राऽर्थः । अत एव 'अश्वकः प्रतिकृतिरि'त्यपि भवति । यदि तु प्रकरणादिवशात्प्रतिकृतित्वेनैव लक्षणा, तदा न भवत्यपि तत्प्रयोग' इत्याहुः । 'प्रतिकृतिशब्दस्य प्रतीकाराऽर्थस्याऽग्रहणं प्रतिपादयितुम् 'इवे' इति' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

१ 'जीविकायामि'त्येव सिद्धे, अर्थग्रहणात्तत्कालजीविकोपयुक्तासु प्रतिकृतिषु एवेदम् । याः प्रतिमा गृहीत्वा' इति घ. पाठः ।

२ इतोऽग्रे—'यास्त्वायतनेषु स्थाप्यन्ते, पूज्यन्ते च, तासु देवपथादित्वात् लुप् बोध्यः । स्पष्टं चेदं भाष्ये' इति घ. पाठः ।

३ 'देव-राजा-ऽय-शङ्कुभ्यः' इति क. ग. पाठः । स च गणरत्नविरुद्धः ।

नेषु प्रतिष्ठाप्यन्ते, पूज्यन्ते च ता उच्यन्ते। अर्चासु-'शिवः'। **चित्रकर्मणि** 'भीमः'। नटे-'रामः'। ध्वजे-'गरुडः' इति क्रमेणोदाहरणानि।

अपरे तु 'एषु भ्रमात्मिका शिवाऽभेदबुद्धिरेव, न तु सादृश्यबुद्धिरि'ति प्रत्ययोत्पत्तेरेवाऽभावः। स्पष्टं च 'चित्र-नट-विषये तादृशी बुद्धिरि'ति शङ्कुकमतनिरूपणाऽवसरे रसनिरूपणे प्रकाशकारैरुक्तम्।

यत्तु 'तत्र भ्रमत्वाऽभावोऽपि तद्बुद्धेरुक्तः, स त्वनन्तराऽवतीर्णबाधाया एव बुद्धेर्भ्रमत्वेन तत्र विवक्षणान्न विरुद्ध' इत्याहुः।

निवृत्तमिति। अस्वरितत्वात् अननुवृत्तिरेव निवृत्तिरत्र बोध्या।

'शाखादिभ्यो यदि'ति पाठः। 'य' इति तु क्वचित्कोऽपपाठः। मुख्यादीनामाद्युदात्तत्वदर्शनात्। 'नभ्यं चक्रमि'त्यत्राऽवयवाऽवयविनोः प्रकृति-विकृत्यभावात् अर्थाऽनुपपत्तिमाशङ्क्य, 'शाखादिपाठात्प्रत्ययो, नभादेशश्चे'ति 'उगवा'दिसूत्रे भाष्ये उक्तत्वाच्च। वृत्तावपि 'यदि'त्येव पाठो दृश्यते इति दिक्।

'सोम'शब्दोऽप्यत्र द्रष्टव्यः। सोम इव 'सोम्यः'। स एव 'सौम्यः' = बुधः। अन्यत्र 'सौम्य'शब्दप्रयोगस्तु तत्सादृश्यमूलको गौणो द्रष्टव्यः।

द्रव्यं च भव्ये। भव्यः-आत्मवान्। 'अभिप्रेतानामर्थानां पात्रभूत' इति यावत्।

कुशाग्राच्छः। अत्र 'छ' इति योगो विभज्यते। तेन अर्द्धजरतीयाऽऽदिसिद्धिः। 'अर्द्धजरती'शब्दः तत्कामनायां वर्त्तते' इति कश्चित्।

तद्विषयादिति। 'इवाऽर्थविषयसर्वाऽवयवकादि'त्यर्थः। भाष्ये तथैवोदाहरणात्। छः स्यादिति। 'इवाऽर्थे' इति शेषः। 'पूगाञ्ञ्य' इत्यतः प्राक् 'इवे' इत्यधिकारात्। 'शस्त्रीश्यामे'त्यादौ त्वेक एव इवाऽर्थः, समासेऽन्तर्भूत इति, च्छो न भवति। 'तद्विषयादि'त्युक्तेः 'तालकाकमि'ति द्वन्द्वात् इवाऽर्थे छो नेत्याहुः।

काकतालीय इति। 'काक इव, तालमिवे'ति विग्रहे, अत एव ज्ञापकादिवाऽर्थे 'सुप्सुपे'ति समासः। स च एतद्विषये एव। तेन

स्वातन्त्र्यम्, उपाध्यन्तरयोगो, विग्रहश्च ने'ति हरदत्तः। तन्न। 'काकाऽऽगमनमिव, तालपतनमिव काकतालम्'। 'काकतालमिव काकतालीयमि'ति भाष्यविरोधात्। तस्माद्विग्रहोऽस्त्येवेति बोध्यम्।

तत्र पूर्वपदं काकाऽऽगमनसदृशपरम्। उत्तरपदं च काकाऽऽगमनसमानाधिकरणतालपतनसदृशपरम्। तयोश्च सामानाधिकरण्यं सम्बन्धः। 'काकाऽऽगमनसदृशसमानाधिकरणं, काकाऽऽगमनसमानाधिकरणतालपतनसदृशमि'ति समासाऽर्थः। एकार्थीभावबलाच्च वृत्तावेतदर्थलाभः।

एतेन 'पूर्वोत्तरपदाऽर्थयोः असामर्थ्यात्समासो दुर्लभ' इत्यपास्तम्। तदेतत्फलितमाह–इह काकेति।

ततः 'काकतालमिवे'त्यर्थे छः। तत्रैव[1] तदधिकारस्थप्रत्ययाऽर्थे प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयस्य क्लृप्तत्वेन, 'काकताल'शब्दस्य उपमेयवाचकतत्तत्पदसमभिव्याहारेण कदा चित् तालकृतकाकमरणे, कदा चित्काककृतोपभोगे वृत्तिविषया निरूढलक्षणा। तत्र लक्ष्याऽर्थस्य प्रतियोगित्वेन प्रत्ययार्थेऽन्वयः। शक्याऽर्थस्य च 'प्रयोज्यत्व'सम्बन्धेनाऽन्वयः। तद्ध्वनयन्नाह—[2]तत्प्रयुक्त इति। एकाऽर्थीभावबलाच्च अत्राऽप्येतदर्थलाभ इति तत्त्वम्। अत्र सर्वत्र अतर्कितोपनतत्वं साधारणधर्म इत्याह—अतर्कितेति।

---

१ 'तत्र एतदधिकारस्थप्रत्ययाऽर्थे प्रकृत्यर्थस्य' इति ख. ग. घ. ङ. पाठः।

२ 'तत्प्रयुक्त इति। 'वस्तुतः 'काकताल'शब्दस्य काकतालसमागमप्रयोज्ये लक्षणा। तस्यैव प्रतियोगित्वेन छप्रत्ययार्थेऽन्वयः। उपमेयवाचकतत्तत्पदसमभिव्याहारेण काकतालसमागमप्रयोज्यत्वेन कदाचित्काकमरणस्य, कदाचित्काककृतोपभोगस्य भानम्। इदमेवाऽभिसन्धाय 'छप्रत्ययोपमायामुपमानलोप' इत्यालङ्कारिकाः। 'उपमानताऽवच्छेदकरूपेण बोधकाऽभाव' इति तदाशयः। पूर्वमतेऽपि उपमानमात्रवाचकाऽभावाल्लोपव्यवहार इत्याहुः' इति घ. पाठः।

शर्करादिभ्यः । 'आकृतिगणोऽयमि'ति गणरत्नकृत् ।

अङ्गुल्या । 'अयमाकृतिगण' इति गणरत्नकृत् । पक्षे ठगिति । 'अन्यतरस्याम्'ग्रहणं समुच्चयाऽर्थमिति भावः ।

पूगाञ्ञ्यो । 'ग्रामणीवाचकपूर्वाऽवयवकभिन्नात्पूगवाचकादि'त्यर्थः । 'पूग' इति न स्वरूपग्रहणम् । व्याख्यानात् । 'लोहिता ध्वजा यस्य पूगस्य' स-'लौहितध्वज्यः' । 'अग्रामणीपूर्वादि'त्युक्तेर्नेह-'देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः' । 'स एषां ग्रामणीरि'ति कन् । पूगस्य उद्भूताऽवयवभेदत्वात् बहुवचनम् । अत्र कन्नन्तात्पूगवचनात् ञ्यो न ।

व्रातच्फञोः । शरीराऽऽयासेन जीवित्वं पूगाद्व्रातस्य विशेषः । च्फञिति । 'गोत्रे कुञ्जादिभ्य' इत्यनेन । अस्त्रियां किम् ? । 'कौञ्जायनी' ।

टित्त्वान्ङीबिति । 'अस्त्रियामि'ति टित्त्वसामर्थ्यादत्र न सम्बध्यते इति भावः । ब्राह्मणे तद्विशेषेति । 'वाहीकेषु ब्राह्मणशब्दवाच्याऽऽयुधजीविसङ्घाऽभावादि'त्यर्थः । स्पष्टं चेदं पदमञ्जर्याम् ।

राजन्ये त्विति । तद्वाच्यस्य सत्त्वात् 'राजन्या' इति प्रत्युदाहरणम् । आहुरिति । जानकिः—त्रिगर्त्तवर्गः ।

पार्शव इति । पर्शोः जनपदशब्दात् अपत्ये 'द्व्यञ्मगधे'त्यणि, बहुत्वे तद्राजत्वाल्लुकि, तस्य सङ्घलक्षकत्वे पुनरनेन स्वार्थेऽण् । 'आयुधजीविसङ्घादि'त्यनुवृत्तेर्जनपदवाचिनः 'पर्शू'शब्दान्न विधानम् । एवं 'युध्यतेऽसौ युधा' । इगुपधलक्षणः कः । ततो 'द्व्यच' इति ढगन्तयौधेयात्सङ्घलक्षकादञि, आद्युदात्तत्वं सिद्ध्यतीति बोध्यम् । यत्तु 'ततः अङ्काऽऽदिविवक्षायां 'सङ्घाऽङ्कलक्षणे'त्यणिसद्धिरपि प्रयोजनमि'ति हरदत्तः । तन्न ।

---

१ 'ग्रामणीपूर्वाऽवयवको न भवति यः पूगस्तद्वाचकादि'त्यर्थः । अत एव 'पूग' इति न स्वरूपग्रहणम्' इति घ. पाठः ।

२ 'ग्रामणीः पूर्वाऽवयवो येषाम्' इति घ. पाठः ।

३ 'कपोतपाका' 'कौञ्जायनी' इति घ. पाठः ।

'स्त्रीपुंसाभ्यामि'ति सूत्रभाष्ये 'तत्र ऋष्यपत्यरूपगोत्रस्यैव ग्रहणमि'त्युक्तत्वेनाऽत्राऽप्राप्तेः । यौधेया इति । अञो लुकि, अन्तोदात्तत्वम् । अत्र 'अस्त्रियामि'त्यनुवर्त्तते । तेन 'पर्शूः स्त्री'ति गणरत्नकृत् ।

आभिजित्य इति । अपत्याऽणन्तात् यञ् । अस्य यञः स्वार्थिकत्वेन गोत्राऽर्थकत्वात्–'आभिजित्यस्याऽयमि'ति विग्रहे 'आभिजितक' इत्यत्र 'गोत्रचरणादि'ति वुञ् भवति । अयं च यञ् अपत्याऽर्थकाऽणन्तेभ्य एवेष्यते । तेन 'आभिजितो मुहूर्त्त' इत्यादौ न । अत्राऽपि 'अस्त्रियामि'ति बोध्यम् । स्पष्टं चेदं सर्वं भाष्ये ।

अनैमित्तिकत्वाऽर्थमिति । सन्नियोगशिष्टविधाने निमित्तनिमित्तिभावाऽभावादित्यर्थः । यद्यपि तद्भाव-भावित्वरूपं निमित्तत्वं सहविधानेऽपि, तथाऽपि 'अचः परस्मिन्नि'त्यादौ ईदृशनिमित्तत्वाऽऽश्रयणे न मानम् । 'तद्भावभावित्वे'त्यस्य 'तद्भावोत्तरं भावित्वे'त्यर्थवत्, 'तद्भावसमकालं भावित्वे'त्यप्यर्थः । अत एव 'धिन्विकृण्व्योर च'त्यत्र वलोपस्यैव करणेऽपि, 'न धातुलोप' इत्यनेन गुणनिषेधसिद्धेः, अकारादेशविधानं व्यर्थमि'त्याशङ्क्य, तत्प्रत्याख्याने गुणनिवारणाय अकाराऽऽदेशविधानमि'ति भाष्ये उक्तम् । 'न धात्वि'त्यत्र च तादृशमेव निमित्तत्वं ग्राह्यम् । 'जीरदानुरि'त्युदाहरणात् । ( एवं च 'अनैमित्तिकत्वाऽर्थमि'त्यस्य 'अपरनिमित्तकत्वाऽर्थमित्यर्थ' इत्यन्ये ) ।

तद्धितार्थे इति । अस्य स्वार्थिकत्वेऽपि वीप्सारूपो द्योत्योऽर्थोऽस्त्येवेति भावः । ददातीति । 'रजकाय वस्त्रं ददाती'त्यादाविव, समर्पणाऽर्थो ददातिः । एतेन 'परत्वादत्रोत्तरसूत्रोदाहरणत्वमेव युक्तम् । इदन्तु 'द्विपदिकां पश्ये'त्यादौ सावकाशमि'त्यपास्तम् । तत्र 'व्यवसर्ग'पदेन

---

१ इतोऽग्रे—'स्पष्टं चेदं 'धिन्विकृण्व्योर च'ति सूत्रे भाष्यकैयटयोः' इति घ. पाठः ।

२ अयं ख. ङ. पाठः । क. ग. घ. नास्ति ।

दानस्यैव ग्रहणात्। किञ्च दानाऽर्थकददातियोगेऽपि वीप्साविवक्षायाम् अन्तरङ्गत्वादयमेव वुन्। तस्य पदान्तरप्रतिपाद्य-दण्डव्यवसर्गयोग-निमित्तकत्वेन बहिरङ्गत्वात्। वीप्सा तु वुनद्योत्यैवेति, अस्याऽन्तरङ्गत्व-मित्याहुः। यत्तु 'व्यवसृजेर्धातोः प्रयोगे एवोत्तरसूत्रप्रवृत्तिरि'ति। तन्न सूत्रस्वरससिद्धम्। द्विमोदकिकामिति। 'द्वौ द्वौ माषौ ददाती'-त्यादौ अनभिधानान्नेति बोध्यम्।

दण्डव्य। 'व्यवसर्ग'साहचर्याद्धात्वर्थ एव दण्डः। न तु यष्टिः। 'एतयोर्विषयभूतयोः स्वार्थे वुन्नि'त्यर्थः। यत्तु 'स्त्रीत्वं प्रत्ययाऽर्थ' इति। तन्न। सूत्रेऽनुल्लेखात्। स्वभावतो वुन्नन्तस्य स्त्रियां वृत्तित्वस्वीकारेण, प्रत्ययाऽर्थत्वे भानाऽभावाच्च।

स्थूलादिभ्यः। 'प्रकारवचने' इत्यस्य 'प्रकारवति वर्त्तमानादि'त्यर्थः। प्रकारो—भेदः, सादृश्यं च। अत एव 'प्रकारवचने जातीयरि'त्यनन्तर-मेव 'स्थूलादिभ्यः कन्नि'ति न सूत्रितम्। 'अनत्यन्ते'त्यत्र कनः कर्त्तव्य-त्वेऽपि, लाघवसत्त्वात्। एतन्मूलकमेव जयाऽऽदित्येन 'जातीयर्विधौ भेद एव प्रकार' इत्युक्तम्।

जातीयरोऽपवाद इति। अत्राऽपवादशब्दो बाधकपरः। तेन परत्वा-द्बाध इत्यर्थः। वामनमते तु यथाश्रुत एव। 'पदलाघवाऽभावेन वर्णलाघवे नाऽभिनिविष्टं सूत्रकृते'ति प्रामाणिकाः। केचित्तु तथान्यासाऽकरणेन जातीयरोऽबाधा ज्ञाप्यते। मूलन्तु जैयादित्यमतेनैव। एतेन 'गोष्ठात् खञि'त्यत्रैव 'चरडि'ति लाघवात्कर्त्तव्ये, दूरे 'भूतपूर्वे चरडि'ति गुरुभूत-न्यासकरणेन, खञा चरटो बाधा ने'ति, 'भूतपूर्वे चरडि'ति सूत्रस्थ-मनोरमारीत्या 'जातीयरोऽपवाद' इत्ययुक्तमि'त्यपास्तम्।

चञ्चत्क इति। चञ्चतिः चलनकर्मा। चञ्चन्नेव कश्चित् 'चञ्चत्कः'। एवं-बृहद्विशेषो 'बृहत्कः'। यद्वा 'अबृहन्नपि, अचञ्चन्नपि, प्रभाविशेषात् चञ्चन्निव, बृहन्निव यो मणिविशेषो लक्ष्यते सोऽर्थः।

'सुराया' इति–गणसूत्रम्। सुरक इति। 'केऽण' इति ह्रस्वः। पादिका-मुद्रिकाऽऽदौ शब्दशक्तिस्वभावात् स्त्रीत्वम्। वाद्याऽकालाऽवदातेभ्यः सुरायाम्[1]।

अनत्यन्तगतौ। अनत्यन्तगतिः-अशेषसम्बन्धाऽभावः। भिन्नकमिति। 'ईषद्भिन्नमि'त्यर्थः[2]। प्रकृत्यैवेति। 'सामिकृतमि'त्यस्य समस्तत्वे तदेकदेश'सामि'शब्देनेत्यर्थः। असमस्तत्वे 'सामि'रूपतत्सन्निहितोपपदेनेत्यर्थः। इह 'अनत्यन्तगतेरि'त्यादेः 'यद्यपी'त्यादिः। 'इदमेवे'त्यादेः 'तथाऽपी'त्यादिर्बोध्यः। न च समासे कथम् 'अनत्यन्तगताविʼत्यस्य प्राप्तिः, 'प्रत्ययग्रहणे' इति नियमेन तस्य क्तान्तत्वाऽभावात्। 'कृद्ग्रहणे'इत्यस्याऽपि न प्राप्तिः। 'सामी'त्यस्याऽगतित्वात्, अकारकत्वाच्चेति वाच्यम्। 'सामी'त्यस्य क्रियाविशेषणत्वेन कारकत्वादिति केचित्।

अन्ये तु 'अवयवभूत'कृत'शब्दात्प्राप्तिः। न च समासे एकार्थीभूतस्य कन्नर्थाऽन्वयाऽसम्भवान्न प्राप्तिः। सूत्रं तु असमासे चरिताऽर्थमिति वाच्यम्[3]।

---

१ 'इक्षुतिल। वाद्याऽकालाऽवदातेभ्यः सुरायाम्' इति तु गणे पाठः।

२ इतोऽग्रे—'अत्रेदं बोध्यम्-पूर्वमेव तद्विवक्ष्य, ततोऽतिशयविवक्षायां 'भिन्नकतरम्'। वैपरीत्येन विवक्षायां 'भिन्नतरकम्'। तत्र कान्तत्वाऽभावेऽपि 'तरबाद्यन्तात्स्वार्थे कन् वचनमि'ति वचनात्कन्। 'न सामिवचने' इतिज्ञापकसिद्धो वा। इदं च तरब्विधायकसूत्रे तत्सूत्रभाष्यकैयटयोर्ध्वनितम्। एवम् अज्ञातादिविवक्षायामपि बोध्यम्। युगपदुभयविवक्षायां तूत्तरविषये कनेव, पूर्वविषये तु पूर्वविप्रतिषेधात्तरबेव। तदन्ताच्च अनत्यन्तगतौ स्वार्थे कन्नित्याहुः' इति घ. पाठः।

३ इतोऽग्रे–'अत्यन्तस्वार्थिकत्वेनैकार्थीभावयोग्याऽर्थान्तराऽभावादिति। तन्न। एकार्थीभूतस्य निष्कृष्य स्वार्थमात्रप्रतिपादनेपि तात्पर्यस्य वक्तुमशक्यतया, तावन्मात्रादुत्पत्तेर्वक्तुमशक्यत्वात्। अन्यथा 'साङ्कूटिनमि'त्यत्र कदाचित् 'कूटिन्'शब्दात्' इति घ. पाठः।

'अनुपसर्जनादि'तिसूत्रस्थभाष्यरीत्याऽवयवात् उत्पत्तेः सुलभत्वात् ।

न चैवं 'साङ्कूटिनमि'त्यत्र कदाचित् 'कूटिन्'शब्दादप्यापत्तौ, 'सङ्कौटिनमि'त्यस्याऽप्यापत्तिः[1] । गतिकारकसमवधाने तद्विशिष्टस्यैव कृद्ग्रहणेन ग्रहणमित्यदोषात् । इदं च 'समासेऽनञ्पूर्वे' इति सूत्रे, 'पुंयोगा-दि'ति सूत्रे च भाष्ये स्पष्टम् ।

कनं ज्ञापयतीति । स च 'क्तान्तादेवे'ति न नियमः । अत एव 'अभिन्नतरकम्' 'बहुतरकम्' 'सुकरतरकं मन्यते' इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते । एतेन 'तमाद्यन्तात्स्वार्थे कन्नि'ति पूर्वसूत्रस्थं भाष्यं व्याख्यातम् । एवं च तर-तमाद्यन्तादेवाऽयं कल्प्यमानो भवति, नाऽन्यत' इत्याहुः ।

केचित्तु 'भाष्यस्य यावादित्वात्स्वार्थे कन् कर्त्तव्य' इत्यर्थः[2] । अत एव भाष्ये 'न सामिवचने' इति प्रत्याख्यातमि'त्याहुः ।

अषडक्षेति । 'अविद्यमानानि षडक्षीण्यस्मिन्नि'ति बहुव्रीहिः । अक्षि-शब्दोऽत्र श्रोत्रवाची । 'बहुव्रीहौ सक्थ्यक्ष्णोरि'ति षच् । मन्त्रः = मन्त्रणा ।

आशिता इति । आङ्पूर्वादश्नातेः 'आशितः कर्त्ते'ति ज्ञापकात् कर्त्तरि क्तः । ण्यन्तात् कर्मणि वा । 'आशितङ्गवीनम्' । 'प्रभूतयवसमि'त्यर्थः । 'अलम्पुरुषीणः' = प्रतिमल्लः ।

विभाषेति । 'प्राक्' 'प्राचीनमि'ति रूपद्वयस्य महाविभाषयैव सिद्धेः । न[3] चः कनः समावेशाऽर्थं तत् । अनिष्टत्वात् । तस्मादस्य नित्यत्वे लिङ्गं

१ 'इत्यस्याऽप्यापत्तेः' इति सर्वादर्शेषु पाठः ।

२ 'कन् कर्त्तव्य इत्यर्थमाहुः । अत्र सूत्रे भाष्ये 'न सामिवचने' इति प्रत्या-ख्यातमि'ति न भ्रमितव्यम् । 'पूर्वसूत्रविहितस्य नाऽयं निषेध' इत्यर्थमात्र-परत्वात् । बृहतिका = प्रावारः' इति ख. ब. ङ. पाठः ।

३ 'न च कनः समावेशार्थं तत् । उत्सर्गेण तदप्राप्तेः । अस्य समुच्चयार्थत्वे तु न मानम् । तस्मादस्य नित्यत्वे लिङ्गं तत्' इति घ. पाठः ।

तत्। 'आशिता गाव' इत्यादि तु खप्रत्ययप्रकृतेरर्थकथनम्, न खप्रत्यय-विग्रह इति बोध्यम्।

तमादय[1] प्राक्कन इति। 'अवक्षेपणे कन्नि'त्यतः प्रागित्यर्थः। तेनाऽस्य कनो वैकल्पिकत्वमेवेति बोध्यम्। एतत्प्रायिकमिति प्रागेव व्युत्पादितम्।

प्राग्वुन इति। 'पादशते'ति विहितादि'त्यर्थः। आमादय इति। 'किमे-त्तिङव्ययघादामि'त्यादयः। बृहतीति। 'बृहत्या' इति कनमारभ्य जात्यन्ता-च्छाऽन्ताः कन्-ख-च्छा' इत्यर्थः। न्यायसिद्धमिदम्। 'शुक्ल' इत्युक्ते सामा-न्यशब्दात् प्रकर्षस्याऽनवगमेन, प्रकर्षाद्युपाधिद्योतनायाऽवश्यप्रयोज्याः तमादयः। एवञ्च तुल्यन्यायात्पाशादीनामपि नित्यत्वम्। डतर-डतमौ तु अत्यन्तस्वार्थिकाविति, ताभ्यां विनाऽपि स्वाऽर्थप्रतिपादनं कर्तुं शक्यते एवेति, न नित्यत्वमिति कैयटहरदत्तादयः। ध्वनितं चेदृशानां नित्यत्वं 'नित्यं कौटिल्ये गतावि'त्यत्र भाष्ये।

'अदिक्स्त्रियामिति'—कर्मधारयगर्भो नञ्तत्पुरुषः। प्रागिति। अस्तात्य-न्तम्। प्राचि देशे इत्यर्थः। तच्चाऽधिकरणशक्तिप्रधानाऽव्ययत्वान्निर्लिङ्गम्। ततः खे तु यद्यपि तस्याऽप्यलिङ्गत्वमेवोचितम्, तथाऽपि तस्य स्वभावेन आधेयप्रधानतयाऽव्ययत्वाऽभावाल्लिङ्गयोग आवश्यकः। तच्च न स्त्रीत्वम्। प्रकृत्या सहाऽत्यन्तविरोधाऽऽपत्तेः। नपुंसकत्वं तु न विरोधि। विशेषा-ऽविवक्षायां सर्वत्र सत्त्वात्। तदाह—प्राचीनमिति[2]। 'प्राग्देशवृत्ती'त्यर्थः। पश्चात् आम्रादिपदसन्निधानेऽप्यन्तरङ्गसंस्कारस्य न निवृत्तिरित्याहुः। यदा तु देशादिवाचकानां तत्सम्बन्धिलक्षणया, प्रागादिशब्दानाम् आम्रादि-

---

१ 'यत्तु न्यायसिद्धमिदम्' इति ख. पाठः।

२ 'इति कैयटहरदत्तादयः। तन्न। प्रकरणादिसत्त्वे तन्मात्रादपि तादृशबोधस्य वक्तुं शक्यत्वात्। यदि तु पाशादीनामपि नित्यत्वमिष्टं तदा 'तमादयः' इति 'आदि'शब्दः प्रकारे। 'द्योत्याऽर्थवत्त्वेन च सादृश्यमि'त्यन्ये। अदिक्स्त्रियामिति' इति ख. पाठः।

वृत्तित्वम्, 'प्रकर्षणाऽञ्चती'ति क्रियानिमित्तकतया वा तद्वृत्तित्वम्, ततश्च स्वार्थे खः, तदा उपस्थितविशेष्यलिङ्गत्यागे मानाऽऽभावात् 'प्राचीना आम्रा' इत्यपि भवति। तद्ध्वनयन्नुदाहरिष्यति—'प्राचीना ब्राह्मणीति'।

प्राचीति। लिङ्गविशिष्टपरिभाषया प्राप्तिः। प्राचीनमिति। 'प्राच्यां दिशी'त्यर्थे 'दिक्शब्देभ्य' इति अस्तातिः। 'अञ्चेर्लुगि'ति लुक्। 'लुक्तद्धिते'ति ङीपो लुक्। 'तद्धितश्चाऽसर्वविभक्तिरि'त्यव्ययत्वात्स्त्रीत्वाऽभावः।

जात्यन्ताच्छ। जात्यन्तात्-'जात्याश्रयद्रव्यलक्षकात्, छ' इत्यर्थः। तदाह—जातेरिति। अयं भावः-बन्धुशब्दो द्विविधः, रूढो, यौगिकश्च। तत्र यो ज्ञात्यादिषु प्रसिद्ध आप्तपर्यायः पुँल्लिङ्गः, स नेह गृह्यते, 'बन्धुनी'ति नपुंसकनिर्देशात्, व्याख्यानाच्च। किन्तु क्रियाशब्दः, 'बद्ध्यतेऽस्मिन् जातिरि'ति 'शॄ-स्वृ-स्निही'त्यादिनाऽधिकरणे 'उ'प्रत्ययनिष्पन्न' इति।

उदाहरणे भावप्रधानब्राह्मणशब्देन जातिशब्दस्य कर्मधारयः[1]। ततः तदाश्रये लक्षणा। प्रत्युदाहरणे[2] षष्ठीतत्पुरुषः।

स्थानान्ताद्विभाषा। 'समानं स्थानमस्ये'ति बहुव्रीहिः। 'ज्योतिर्जनपदे'ति समानस्य सः। तेन तुल्यवाची 'सस्थान'शब्दः। करणे तृतीया। भवनक्रियायामन्वयः। 'तुल्याऽर्थेन चेत्स्थानान्तस्याऽर्थवत्त्वं भवति, तदा प्रत्ययो भवति, नाऽन्यथे'त्यर्थः[3]। 'इति'करणात् 'तुल्यस्थान'शब्दान्न।

पितृस्थानीय इति। स्थानम्-सम्बन्धविशेषः, 'पदमि'ति यस्य प्रसिद्धिः। 'पितुरिव स्थानमस्ये'त्यर्थः। गोः स्थानमिति। स्थानम्-देशः।

---

१ 'बहुव्रीहिरि'ति तु तत्त्वबोधिन्यादौ।

२ 'यद्वा षष्ठीतत्पुरुषः। अत्रापि लक्षणा प्राग्वत्' इति ख. घ. ङ. पाठः।

३ इतोऽग्रे—'बहुव्रीह्यर्थं एव 'सस्थान'शब्दो, न तु कर्मधारयाऽर्थं इति 'इति'करणाल्लभ्यते। तेन 'तुल्यस्थान'शब्दात्कर्मधारयान्न। बहुव्रीहेरपि यदि नेष्यते, तर्हि तत एव नेति बोध्यम्। 'इति'करणस्य विवक्षिताऽर्थपरत्वात्' इति ख. घ. ङ. पाठः, क. कुण्डलितः।

अनुगदतीति । 'अत्राऽर्थे 'अनुगादी'शब्द' इत्यर्थः । प्रकृतिप्रदर्शनमात्रमेतत् । एतेन 'अस्य आमादित्वेन नित्यत्वादेवंप्रयोगोऽयुक्त' इत्यपास्तम् । अत एव अस्वपदविग्रहं दर्शयति—स एवेति । 'सुप्यजातावि'ति णिनिः । 'अनुयायि'—'अनुजीवि'वत् उपसर्गे सुप्युपपदेऽपि तस्य प्रवृत्तेः । एतेन 'अत एव ज्ञापकाण्णिनिरि'ति हरदत्तोक्तमपास्तम् ।

विसारिणो । 'अणिनुण' इत्यतो अण् अनुवर्त्तते । 'इनणी'ति प्रकृतिभावः ।

'आवृत्ति'शब्दस्य द्वितीयादिप्रवृत्तौ रूढत्वेऽपि, तस्येह न ग्रहणम् , त्रिःप्रवृत्तौ 'द्विःपचती'त्यापत्तेरत आह—जन्मेति । अत 'एकस्य सकृच्चे'त्यादावप्यस्य सम्बन्धः । पञ्चकृत्वो भुङ्क्ते इति । अत्र 'पञ्च'शब्दस्य पञ्चत्वसङ्ख्याविशिष्टोत्पत्तौ लक्षणा । तस्याश्च क्रियायामेवाऽन्वयः । सूत्रस्वरसात् । समुदायस्याऽपरिसमाप्तत्वाच्च वर्त्तमानत्वम् ।

एवं च 'पञ्चसङ्ख्योत्पत्तिका ओदनादिकर्मिका भुजिक्रिये'ति बोधः । 'पञ्चकृत्वः पच्यते ओदन' इत्यत्र 'एकौदनाऽऽश्रयिका पञ्चसङ्ख्योत्पत्तिकक्रियाजन्या विक्लित्तिरि'ति बोधः । अस्य च एककर्त्तृकाणामेकजातीयानामेव

---

१ 'आमादयः प्राङ् मयट' इत्युक्तेष्ठगादयो नित्या एवेत्यर्थः इति घ. पाठः ।

२ 'विग्रहप्रदर्शनमयुक्तमित्यपास्तम्' इति ख. घ. पाठः ।

३ 'क्रियायां प्रतियोगितयाऽन्वयः' इति घ. पाठः ।

४ इतोऽग्रे—'आख्यातेन पञ्चोत्पत्तिकाऽपि भुजिक्रिया निवृत्तभेदाऽभिधीयते, स्वभावात्' इति ख. घ. ङ. पाठः क. कुण्डलितः ।

५ इतोऽग्रे—'तत्र भिन्ना अपि विक्लित्तयो धातुना निवृत्तभेदा एवोच्यन्ते । अतस्तदाश्रयस्य समुदायस्यैव कर्मत्वमिति कर्मैक्यम्' इति ख.घ.ङ. पाठः ।

इतोऽग्रे—'उद्भूताऽवयवभेदसमुदायविवक्षायान्तु 'पञ्चकृत्वः पच्यन्ते ओदना' इत्यपि भवत्येव । एककर्त्तृकाणामेकजातीयकर्मकाणामेकजातीयानामेव क्रियाणां जन्मसंख्याने साधुत्वम् । स्वभावात्' इति घ. पाठः ।

क्रियाणां जन्मसङ्ख्याने साधुत्वम्। स्वभावात्। 'त्रिरावृत्ता दशे'त्यादौ आवृत्तिक्रियाजन्मगणने एव सुच् बोध्यः।

सङ्ख्यायाः किमिति। गणने वृत्तिः सङ्ख्याशब्दानामेवेति प्रश्नः। भूरिवारानिति[1]। 'तदभावे हि 'क्रियाजन्मगणने गम्ये प्रत्यय' इत्यर्थः स्यादि'त्युत्तरम्। 'वार'शब्दश्च कालपरः। स च भोजनपर्याप्त इति 'कालाऽध्वनोरि'ति द्वितीया। 'बहुगणे'त्यत्र बहुग्रहणस्य 'अनियतसङ्ख्यावाचिनां चेद्बह्वादेरेवे'ति नियमाऽर्थत्वात्, अस्य सङ्ख्यावाचित्वेऽपि, नेह ग्रहणम्।

वस्तुतो नाऽयं सङ्ख्यावाची। लोके गणनायामप्रयोगात्। 'बहु'शब्दस्तु सङ्ख्यासञ्ज्ञक इति,तत्कार्यभागिति निरूपितम्। अत एव बह्वादिविषये 'असङ्ख्यां सङ्ख्येत्याह, 'सङ्ख्यावदि'ति गंस्यते' इति भाष्ये उक्तम्। एवं च 'बहुकालसम्बन्धिभोजनक्रिये'ति बोधः।

यत्तु 'वार'शब्दः क्रियागतामावृत्तिं द्योतयन् क्रियाविशेषणत्वात्कर्म। क्लीबत्वं तु न। 'वार'शब्दस्य नित्यपुँल्लिङ्गत्वात्। 'आवृत्तानि बहूनि भोजनानि करोती'त्यर्थ' इति हरदत्तः। तन्न। क्रियाविशेषणत्वे 'वारानि'ति बहुवचनाऽसङ्गतेः। क्रियाया निवृत्तभेदाया एव धातुना बोधनात्, तद्विशेषणे बहुत्वाऽभावात्।

ननु 'क्रिया'ग्रहणं व्यर्थम्। द्रव्यगुणयोर्गणनायोग्यजन्माऽभावात्। एकैव हि तेषामुत्पत्तिः। क्रियायास्तु धातुवाच्याया निवृत्तभेदत्वेन प्रतीय-

---

१ 'भूरिवारानिति। 'बहुगणे'त्यत्र बहुग्रहणस्य नियमार्थत्वादस्य लौकिकसंख्यावाचित्वेऽपि, नेह ग्रहणम्। तत्र 'वार'शब्दः क्रियागतामावृत्तिं द्योतयन् क्रियाविशेषणत्वात् कर्म। नपुंसकत्वं तु न, तस्याऽनियतलिङ्गविषयकत्वात्। 'वार'शब्दस्य नित्यपुंलिङ्गत्वात्। 'भूरि'शब्देऽनुद्भूतावयवभेदविवक्षया एकवचनम्। 'भूरि'शब्दो भूरित्वविशिष्टजन्मनि। एवञ्च 'बहुत्वसंख्योत्पत्तिका, आवृत्ता, भोजनक्रिये'ति बोधः। ननु 'क्रिया'ग्रहणं व्यर्थम्, द्रव्यगुणयोर्गणनायोग्यजन्माऽभावात्' इत्यपि ख. पाठः।

मानतया भवति 'पुनः पुनरुत्पन्ने'ति प्रतीतिः। द्रव्यस्य तु अनिवृत्तभेदस्यैव शब्देन उपादानान्न तस्य पुनःपुनरुत्पत्तिप्रतीतिः। पुनःपुनर्जन्मयोग्यस्य जन्यैव च 'अभ्यावृत्ति'पदेनोच्यते। अत एव 'जन्मपदमेवोच्यताम्, किम् अभ्यावृत्तिपदेने'ति परास्तम्[1]।

न च क्रियाग्रहणं प्रधानीभूतक्रियाग्रहणाऽर्थम्। अत एव पाचकाऽऽदिप्रकृतिभागैः साध्यस्वभावाया अभिधानेऽपि, तदन्वयविवक्षायां 'पञ्चकृत्वः पाचक' इति न प्रयोग इति वाच्यम्[2]। कारकाणामिव, तुमुन्नन्तादीनामिव चाऽस्यापि गुणीभूतक्रियाऽन्वये साधुत्वस्येष्टत्वादिति चेन्न। साध्यस्वभावैव यत्र क्रिया, तत्रैव यथा स्यादित्यर्थं तत्। तेन 'पञ्च[3]पाचका' इत्यादौ न। 'द्विरावृत्तिः' 'द्विरावृत्ताः' 'द्विःप्रयोग' इत्यादौ तु 'द्विर्वचनेऽची'तिज्ञापकान्निर्वाहः। 'पञ्चकृत्वः पाकः'[4] इत्यादौ अध्याहृतकरोत्यादिक्रियाऽपेक्षः प्रत्ययः साधुरेव। स्पष्टं[5] चेदं कैयटे। तदुक्तं भर्त्तृहरिणाऽपि—

१ इतोऽग्रे—'एककर्त्तृकोत्पत्तिनानात्वे एव हि 'पुनःपुनरुत्पन्न' इति व्यवहारः। 'पञ्चकृत्वो दण्डी'त्यादौ मतुपा गर्भीकृताऽस्त्यर्थस्य विद्यमानक्षणसम्बन्धरूपायाः सत्ताया उत्पत्तिमाश्रित्य कृत्वसुच् बोध्यः' इति घ. पाठः।

२ 'इति वाच्यम्। 'पदार्थः पदार्थेनाऽन्वेती'ति व्युत्पत्त्यैव निर्वाहात्। अत एव 'पञ्चवारान् पाचक' इत्यपि न। अत एव पाकक्रियानिषेधतात्पर्येण 'न पाचक' इत्यादिप्रयोगो न। कारकाणां 'कर्त्तृकर्मणोः कृती'त्यादि सूत्रप्रामाण्यात्, आकाङ्क्षावशाच्च गुणभूतक्रियान्वयेऽपि, अन्येषां तथात्वे मानाऽभावाच्चेति चेन्न। साध्यस्वभावैव यत्र क्रिया तत्रैव यथा स्यादित्यर्थं तत्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

३ 'पञ्च पाकाः' इति ख. घ. ङ. पाठः।

४ 'पञ्चकृत्वः पाकः' 'पञ्चकृत्वः पटो रक्तः' इत्यादौ' इति ख. ङ. पाठः। 'यद्वा पञ्चकृत्वः पाकः' इति घ. पाठः।

५ 'स्पष्टं चेदं कैयटे। भर्त्तृहरिणा तु' इति ख. घ. ङ. पाठः।

'ल-कृत्य-क्त-खलर्थानां, तथाऽव्ययकृतामपि।
रूढि-निष्ठा-घञादीनां धातुः [1]साध्यस्य वाचकः' ॥

'कृत्यादियोगे तु कृत्वसुजादयो भवन्त्येवेत्याह—'लकृत्ये'ति। क्तः-नपुंसकविषयः। रूढिशब्दाः-ताच्छीलिकाः। घञादयः-कर्मादिविहिताः। 'द्विः शयितव्यम्', 'द्विः [2]सुकरः', 'द्विर्हसितम्' 'द्विर्दत्तवान्' 'द्विः कर्त्ता कटान्' 'द्विर्भुक्त्वा [3]गतः' इत्यादीन्युदाहरणानी'ति हेलाराजेन व्याख्यातं च [4]। ज्ञापकं सुज्विषयमेवेति नाऽतिप्रसङ्गः।

ननु 'गणन'ग्रहणं व्यर्थम्। यावता सङ्ख्या गणनाऽऽत्मिकैव [5]। न च 'सप्तदश प्राजापत्यान् पशूनालभेते'त्यत्र स्यादिति वाच्यम्। आलम्भन-क्रियायाः [6]प्रतिपशु फलतोऽभ्यावृत्तिसत्त्वेऽपि 'सप्तदश'पदस्य तद्वृत्तित्वा-ऽभावात्। तद्विवक्षायान्तु भवत्येव कृत्वसुच्-'सप्तदशकृत्व आलभेते'ति। न च तदभावे 'अभ्यावृत्तिविषये सङ्ख्यावाचकात्प्रत्यय' इत्येवाऽर्थः स्यादिति वाच्यम्। व्याख्यानतो निर्णयादिति चेन्न। गणनायां ये प्रसिद्धास्तेषामेव

---

१ 'साध्यस्य वाचकः' 'इत्युक्तम्' इति ख. घ. ङ. पाठः।

२ 'द्विः', 'द्विः सुकरः' इति क. ख. ग. ङ. पाठः। तत्र 'द्विः'इत्यत्र 'द्विर्भुङ्क्ते' इति पाठः स्यात्।

३ 'द्विर्भुक्त्वा गत' इत्यादीन्युदाहरणानि। शयितव्यादीनां च तदुत्तरविभक्त्या सिद्धत्वाऽऽवेदनमित्यन्यदिति हेलाराजेन व्याख्यातं च। 'पदार्थः पदार्थेना-ऽन्वेती'ति व्युत्पत्तिस्तु क्रियाऽतिरिक्तविषयैवेति तदाशयः' इति घ. पाठः।

४ इतोऽग्रे'तत्तु एतत्सूत्रस्थभाष्यविरुद्धम्। ज्ञापकं सुज्विषयमेवेति नाऽतिप्रसङ्गः। अव्ययकृद्योगे तु भवत्येव। तेषां साध्याऽवस्थक्रियामात्रवाचित्वात्। तुल्यन्यायात् 'द्विः शयितव्यमि'त्यपि साध्वित्याहुः' इति ख.घ. ङ. पाठः।

५ इतोऽग्रे—'न च 'शतं वारान् भुङ्क्ते' इत्यादौ प्रत्ययव्यावृत्त्यर्थम्। 'वार'-शब्देनाऽभ्यावृत्तेरुक्ततया सङ्ख्याशब्दस्य तद्वृत्तित्वाऽभावात्। एतेन सप्तदश प्राजापत्यान् पशूनालभेते'त्यत्र स्यादि'त्यपास्तम्' इति घ. पाठः।

६ 'प्रतिपशु वस्तुतोऽभ्यावृत्तिसत्त्वेऽपि' इति ख. घ. ङ. पाठः।

ग्रहणाऽर्थं तत्सत्त्वात् । तेन 'उभ'शब्दात्, 'युग्म'शब्दाच्च न कृत्वसुच् । न हि 'एकः' 'उभौ', 'त्रय' इति लोके गणना दृश्यते इत्यलम् ।'[1]

**एकस्य सकृच्च** । अयमपि कृत्वसुचोऽपवादः ।

रूपे विशेषाऽभावेऽपि न्याय्यत्वादाह—**न त्विति** । साहचर्येण विभक्तीनामेव ग्रहणस्य तत्रोक्तत्वादिति भावः ।

**विभाषा बहो** । 'अविप्रकृष्टकालक्रियाजन्मगणनवृत्तेरि'त्यर्थः । 'दिवसस्ये'ति—शेषत्वविवक्षायां षष्ठी । 'कृत्वोऽर्थप्रयोगे' इति वा । यद्यपि प्रकृतमेव प्रस्तुतं, तथापि 'यादृशस्य प्रकृतस्य लोके मयटा वचनम् = प्रत्यायनं, तत्रे'त्यर्थक'वचन'ग्रहणसामर्थ्यलभ्यं, व्याख्यानलभ्यं च विवक्षितमर्थमाह–**प्राचुर्येणेति** । **भावे इति** । 'प्रचुराऽर्थबोधकात्, तदितिप्रथमासमर्थात्, प्रातिपदिकात्स्वार्थे मयडि'त्यर्थः ।[2] **अधिकरणे इति** ।[3] 'प्राचुर्येण प्रस्तुताऽन्नादिवचनात्, वचनाऽधिकरणेऽर्थे मयडि'त्यर्थः । तन्त्रेणाऽर्थद्वये सूत्रतात्पर्यम्, व्याख्यानात्, लक्ष्याऽनुरोधाच्च । अत्र पक्षे 'प्रकृत'पदेन प्रचुरम्, व्याख्यानादेव । अत्र 'वचनाधिकरणे' इति प्रायिकम् । 'निजामयोध्यामपि पावनीमयं भवन्मयो ध्यायति नाऽवनीपतिरि'त्यादौ प्रकृतप्रकृत्यर्थोऽधिकरणमात्रे मयट्दर्शनात् । स्वार्थिकप्रकरणपाठस्त्वाद्यव्याख्याने चरितार्थः ।[4]

---

१ इतोऽग्रे—'सुच उकार उच्चारणाऽर्थः' इति घ. पाठः ।

२ 'प्रचुराऽर्थबोधजनकवृत्तिमतस्तदितिप्रथमासमर्थात्' इति घ. पाठः ।

३ 'अधिकरणे इति । 'प्राचुर्यवदन्नाद्यधिकरणलक्षकाच्छब्दात्स्वार्थे मयडि'त्यर्थः । 'भाववचनानामि'त्यादाविव प्रकृत्यर्थोऽविवक्षितः' इति ख. घ. ङ. पाठः ।

४ इतोऽग्रे—'यत्त्वधिकरणत्वं मयडर्थः । प्रकृतता, उच्यमानता च प्रकृत्यर्थविशेषणम् । अत एव विशेष्यनिघ्नते'ति । तन्न । स्वार्थिकप्रकरणविरोधात् । समस्तैकार्थीभावापन्नस्यांऽशेनान्यविशेषणत्वमंशेनाऽन्यविशेषणत्वमित्यस्याऽयुक्तत्वाच्च । अनुच्यमानमेव प्रचुरमन्नं यत्र यज्ञादौ वर्त्तते, तत्र 'अन्नमय' इति प्रयोगाऽनापत्तेश्च' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

'तत्'ग्रहणन्तु चिन्त्यप्रयोजनम् । **केचित्तु** 'तत्'ग्रहणं वाक्यभेदेन प्राचुर्याऽभावेऽपि क्वचिदत्यन्तस्वार्थिकमयडर्थम्। तेन 'चिन्मयं ब्रह्मे'-त्यादि सिद्धमि'त्याहुः ।

**अन्नमय इति** । क्वचित्प्रकृतिलिङ्गाऽतिक्रमस्याऽप्युक्तत्वाद्विशेष्य-निघ्नता । एवम् 'अपूपमयमि'त्याद्योदाहरणेऽपि बोध्यम् ।

**समूहवच्च बहुषु** । 'बहुत्वविशिष्टप्रकृत्यर्थवृत्तेरुक्ताऽर्थलक्षकादि'-त्यर्थः । 'मौदकिकम्' । 'अचित्ते'ति ठक् । स्वार्थिकत्वेऽपि लिङ्गाऽतिक्रम उक्तः । इति **हेतीति** । उपदेशपारम्पर्ये इदम् । 'सुप्सुपे'ति समासे प्राति-पदिकत्वेन प्रत्ययः । 'वचनादप्रातिपदिकत्वेऽपि प्रत्यय' इति हरदत्तः ।

**भेषजमिति** । 'भियः षुक्, ह्रस्वश्चे'ति व्युत्पादितात् भिषज्शब्दात् इदमर्थेऽणि, अत एव निपातनात् एकारः । 'कण्ड्वादियगन्तेभ्यः कर्त्तरि क्विप् तु न । 'नैतेभ्यः कर्त्तरि क्विप् दृश्यते' इति कण्ड्वादिसूत्रे भाष्यात् । 'कण्डूयतेरप्रत्यय' इति 'न पदान्त'सूत्रस्थं भाष्यन्तु क्यजन्ताऽभिप्रायम्, सम्पदादित्वाद्भावक्विबन्ताऽभिप्रायं वे'ति **केचित्** ।

**अन्ये तु** 'कण्ड्वादियगन्तादेव क्विप् । तद्भाष्यं त्वजन्तकण्ड्वादिपरम्, तत्रैवाऽनिष्टानां प्रागुद्भावितत्वात् । अत एव 'नैतेभ्य' इति प्रतीकमुपादाय 'कण्डूरि'ति कर्त्रर्थाऽनवगमादि'त्याशयमाह **कैयटः** । न च प्रकृते तदस्ति, 'भिषगि'त्युक्ते कर्त्रर्थाऽवगमादि'त्याहुः ।

**देवतान्ता** । 'तदर्थे लाक्षणिकात्स्वार्थे यदि'त्यर्थः । प्रकरणाऽविरो-धाय एवमेव युक्तं व्याख्यानम् । 'अग्निदेवतायै इदमि'ति लक्षणाप्रदर्शन-परमेव बोध्यम् । 'वैधे कर्मणि त्यज्यमानद्रव्योद्देश्यत्वमेव देवतात्वमि'-त्याशयेनाऽऽह—**पितृदेवत्यमिति** । एतेन 'पितृषु देवत्वजात्यभावात्, इदमयुक्तमि'त्यपास्तम् । अत एव 'देवदेवत्यमि'ति सिद्धम् ।

**पादाऽर्घाभ्यां च** । चकारोऽनुक्तसमुच्चयाऽर्थः । तेन 'तथैव-तथ्यमि'-त्यादि सिद्धमित्याहुः । 'मूल्ये पूजाविधावर्घ' इत्यमरः ।

'नवस्ये'त्यादिवार्त्तिकैर्विधीयमाना अत्यन्तस्वार्थिकाः। अत एव भाष्ये 'लोहितात्' 'तद्युक्तादि'तिसूत्रयोः पठितानि। आग्नीध्रसाधारणादिति। अत एव निपातनात्समानादेशसस्य दीर्घः। 'समानं धारणमस्ये'-त्यर्थः। 'अनेकं प्रति अविशिष्टसम्बन्धमि'त्यर्थः[1]।

देवतेति। लिङ्गाऽतिक्रमात् स्त्रीत्वम्।

यावादिभ्यः। 'आकृतिगणोऽयमि'ति गणरत्नकृत्।

वर्ण चा। अनित्ये किम्?। 'लोहितं रुधिरम्'। 'लोहितः पर्वतः'। नित्यत्वं—यावदाश्रयम् अवस्थानयोग्यत्वम्। तदभावः—अनित्यत्वम्। अत एव 'रक्ते' इति सूत्रं चरिताऽर्थम्[2]।

लोहिताल्लिङ्गबाधनं वेति। 'अस्मादेव ज्ञापकादत्यन्तस्वार्थिकानां सुबुत्पत्तेः प्राक् प्रातिपदिकादेवोत्पत्त्यङ्गीकारेणाऽन्तरङ्गत्वात्, परत्वाद्वा प्राप्तं लिङ्गबोधकप्रत्ययस्य बाधनं स्वार्थिकेन वा भवती'त्यर्थः। अत एव च ज्ञापकात् 'ङ्याप्प्रातिपदिकादि'तिसूत्रस्थ'ङ्याप्'पदस्याऽप्यत्र प्रकरणे असम्बन्धः। तेन एतादिभ्योऽत्यन्तस्वार्थिके 'एतिके'त्येव, न तु 'एनिके'-त्यपि। सूत्रे 'ङ्याप्'पदन्तु न्यायसिद्धाऽर्थोऽनुवाद एवे'त्यादि प्रपञ्चितं तत्रैव। वैलक्ष्येणेति। 'लज्जये'त्यर्थः। उपाय[3] इति। 'उपायशब्दः ठकं लभते, तस्य ह्रस्वत्वं चे'त्यर्थः। 'अ चे'ति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात् दीर्घस्य स्थानित्वम्। एतेन 'अन्त्यस्य स्यात्, तत्सामर्थ्याच्च लोपाऽभाव' इत्यपास्तम्। 'अकस्मात्' इति-अत्र पठ्यते, तत् दान्तम्, न तान्तम्।

---

१ 'अविशिष्टसम्बन्ध इत्यर्थः' इति घ. पाठः।

२ 'सूत्रं चरितार्थम्। यत्तु 'स्वसमानाधिकरणध्वंसप्रतियोगित्वम् अनित्यत्व-मि'ति। तत्र सामानाधिकरण्यं दैशिकमेव (ग्राह्यम्)। 'अत्र पक्षे लाक्षादि-रक्तेऽपि रञ्जनद्रव्याऽन्तरेण वर्णाऽन्तरोत्पादने कथं नाऽनित्यत्वमि'ति चिन्त्यमि'ति कश्चित्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

३ 'उपायादिति' इति सर्वादर्शेषु पाठः। स तु मूलविरुद्धः।

तेन कादेशो न। अव्ययत्वाट्टिलोपः। 'आकस्मिकम्'। यत्तु 'अकस्माज्जात-मि'त्यर्थे, तत्तु अध्यात्मादित्वाट्ठञि बोध्यम्।

वाचो व्या। 'व्याहृतः = अन्येन उक्तोऽर्थो यस्या' इत्यर्थः। तत्फलित-माह—सन्दिष्टेति। तद्युक्तात्। 'व्याहृताऽर्थया वाचा युक्तात्, तदर्थज्ञान-पूर्वकक्रियमाणाऽर्थप्रतिपादकात् 'कर्मन्'शब्दादि'त्यर्थः। इदं कैयटादि-रीत्या। 'इदं त्वया कर्त्तव्यमि'ति सन्देशवाचं श्रुत्वा, यत्कर्म क्रियते, तत् 'कार्मणमि'ति तदुक्तेः।

भाष्ये तु 'तदित्यनेन किं प्रतिनिर्दिश्यते ?। वागेव। यदेव वाचा व्याह्रियते, तदेव कर्मणा क्रियते' इत्युक्तम्। तत्र प्रश्नेन, उत्तरस्थैवकारेण[1] च 'व्याहृतार्थायामि'त्यंशस्याऽसम्बन्धो लभ्यते। अन्यथा तच्छब्दस्य प्रक्रान्तपरामर्शित्वेन, प्रक्रान्तस्य चाऽन्यस्याऽभावेन, प्रश्नाऽसङ्गतिः, उत्तरे एवकाराऽसङ्गतिश्च। तस्मात् अन्यवाक्श्रवणपूर्वकं यत् क्रियते तत्सर्वं 'कार्मणमि'त्युचितम्। वस्तुतोऽन्त्यमेव तथा, 'यदेवे'त्यादिभाष्ये क्रिययोः-उत्सर्गत एककर्तृकत्वप्रतीतेरिति चिन्त्यम्। क्षेत्रे रूढा इति। 'क्षेत्रे उत्पन्ना' इत्यर्थः। प्रज्ञ एवेति। प्रजानातीति 'प्रज्ञः'। प्रज्ञादिराकृतिगणः।

रूपपोऽपवाद इति। ननु 'प्रशंसायां रूपबि'त्यनन्तरं 'वृकज्येष्ठाभ्यां तिल्तातिलौ च[2] च्छन्दसि', 'मृदः सस्नौ', 'तिकंश्चे'ति कुतो न कृतमिति चेन्न[3]। 'तिङश्चे'त्यस्य उत्तरत्र सम्बन्धाऽऽवश्यकत्वेन, तिकन् सस्नादीना-मपि तिङन्तादापत्तेः। 'तमादयः प्राक्कन', इत्युक्तत्वेन एषामपि नित्यत्वा-ऽऽपत्तौ, मृच्छब्दप्रयोगाऽनापत्तेश्च। एतेन 'प्रकरणैक्येन पाठे कर्त्तव्ये, तदकरणेन 'गोष्ठात्खञि'ति सूत्रोक्तरीत्या 'रूपपोऽपवाद इत्ययुक्तमि'ति

---

१ 'तेन स्वयं वाचा कथनपूर्वकं यत्कर्म क्रियते' इति ख. घ. ङ. पाठः।

२ चकारः क. ग. नास्ति।

३ 'तिल्तातिलोरपि प्रशंसायामापत्तेः। तौ हि अत्यन्तस्वार्थिकौ। किञ्च 'तिङश्चे'त्यस्य' इति घ. पाठः।'.

अपास्तम्। नित्योऽयमिति। एतच्च वृत्तौ स्पष्टम्। नित्यत्वं च प्रत्ययाऽन्तराऽभावमात्रेण, न त्वेतद्बलेन वाक्याऽभाव इति बोध्यम्। 'प्रशस्ता मृदि'-त्यस्याऽसङ्गत्वापत्तेः। केचित्तु[1] 'भाष्ये नित्येष्वस्याऽगणनान्नाऽस्य नित्यत्वम्। प्रत्ययाऽन्तरन्तु अस्मादस्याऽपवादत्वादेव न भविष्यती'त्याहुः।

मङ्गलेति। सूत्रे व्यवस्थितविभाषया सिद्धमेतत्। अत एव 'अपेताऽपोढे'त्यत्र 'अल्पश' इतिप्रयोगः सङ्गच्छते। कारकत्वन्तु[2] समसनक्रियां प्रति पञ्चम्याः कर्मत्वात्, तदभिधायित्वाच्चाऽल्पशब्दस्य। 'अल्पं पञ्चम्यन्तं समस्यते' इत्यर्थ' इति केचित्। 'समासशब्दस्य संज्ञाशब्दत्वादिदं चिन्त्यम्। तस्मात् निर्देशादेव शसि'त्यन्ये। कारकात्किम्?। 'बहूनां स्वामी'। अर्थग्रहणात्पर्यायेभ्यो,विशेषेभ्यश्च। 'भूरिशो ददाति'। 'त्रिशः'।

सङ्ख्यैक। 'सङ्ख्यावाचिन, एकत्वविशिष्टाऽर्थकाच्च प्रातिपदिकात् कारकाच्छसि'त्यर्थः। एकार्था एवेति। एवं च ते एवाऽत्रैकवचनशब्देन गृह्यन्ते इति भावः।

[3]घटं घटमिति। जात्याश्रयाणां प्रतीतेरेकाऽर्थत्वाऽभावः। ततः शसि 'घटौ घटौ ददाती'त्यपि बोधो दुर्वार इति तात्पर्यम्।

एतच्च जयादित्यग्रन्थाऽनुरोधेनोक्तम्। 'प्रथम[4]-द्वितीय-पञ्चम-षष्ठा जयादित्यस्य। तृतीय-चतुर्थ-सप्तमा-ऽष्टमा वामनस्ये'त्यभियुक्ताः।

---

१ इतोऽग्रे—'अन्यतरस्यांग्रहणप्रयोजनन्त्वनुपदमेव स्फुटं भविष्यतीत्याहुः' इति.घ. पाठः।

२ 'अस्य यथा कारकत्वं तथा तत्रैवोक्तम्। एतदर्थमेवाऽन्यतरस्यांग्रहणमित्याहुः' इति घ. पाठः।

३ 'घटं घटमिति। अभेदैकत्वसङ्ख्याया वृत्तौ भानेऽपि, जात्याश्रयाणां सर्वेषामविशेषेण प्रतीतेरेकाऽर्थत्वाऽभावः' इति ख. घ. ङ. पाठः।

४ 'पञ्चमाऽध्यायाऽन्तं तत्कृतिरिति इहैव पदमञ्जर्यां स्पष्टम्' इति घ. पाठः।

वस्तुतो जातिशब्दानामपि अर्थप्रकरणादिना वृत्तावेकाऽर्थत्व-सम्भवः। अत एव 'पदशः' 'स्वरशः' इत्यादिशिक्षादिप्रयोगाः, 'कुण्डशो ददाति' 'वनशः प्रविशती'ति 'जश्शसोरि'ति सूत्रस्थवामनप्रयोगाः सङ्गच्छन्ते इत्याहुः। न चैवम्—

'अव्रतानाममन्त्राणां, जातिमात्रोपजीविनाम्।
सहस्रशः समेतानां, परिषत्त्वं न विद्यते'॥

—इत्यत्र कथं शस्। वीप्सा-कारकत्वयोरभावात्। 'एवम्भूतानां ब्राह्मणानां सहस्रस्य परिषत्त्वं न विद्यते' इति हि तदर्थ इति वाच्यम्। 'सहस्रं सहस्रं ये समेतास्तेषामपि परिषत्त्वं न विद्यते' इत्यर्थाददोषः। युक्तश्चाऽयमेवाऽर्थः। तेषामत्यन्ताऽशुद्धत्वस्य प्रतिपादनीयत्वात्। एवं च समवायक्रियां प्रति कर्त्तृत्वस्य, वीप्सायाश्च सत्त्वात्। अत एव 'एकश' इति सौत्रप्रयोगः सङ्गच्छते। तत्र हि 'एकश एकवचनादिसंज्ञानि स्युरि'ति अस्तिक्रियां प्रति कर्त्तृत्वमिति दिक्।

या पञ्चमी विहितेति। 'लक्षणप्रतिपदोक्त'परिभाषया 'प्रतिनिधि-प्रतिदाने च यस्मादि'ति 'प्रति'योगविहितपञ्चम्या एव ग्रहणमिति भावः।

आद्यादिभ्य इति। अयमाकृतिगणः। अयमेव 'सार्वविभक्तिकस्तसि-रि'ति व्यवह्रियते। 'अन्तिकस्य तसि कादिलोपः, आद्युदात्तत्वं च'। 'अन्तितः'। 'तमे तादेश्च, कादेश्च बहुलम्'। 'अन्तमः' 'अन्तितमः'

---

१ 'वस्तुतः परिमाणविशेषविशिष्टस्य प्रस्थादिशब्दार्थत्ववत्, संस्थानविशेषविशिष्टस्यैव घटादिपदवाच्यत्वेन विशेषाऽभावः। किञ्च जातिशब्दानामपि' इति घ. पाठः।

२ इतोऽग्रे—'कारकत्वं चाऽत्र क्रियाऽन्वयित्वमेव, न तु कर्त्रादिकारकार्थक-विभक्त्यन्तत्वम्। लक्षणायां मानाऽभावात्' इति ख. घ. ङ. पाठः।

३ 'सौत्रः प्रयोगः' इति ख. ङ. पाठः। ४ 'तमे' इति भाष्यात्पूरितम्।

'अन्तिषत्' । बाहुलकात् 'अन्तिकतः' इत्यपि । इदं 'सूर्यतिष्ये'ति सूत्रे भाष्ये स्पष्टम् । 'छन्दस्येतदिष्यते' इति हरदत्तः ।

अपादाने चाहीयत्वरुहोः । अत्र यद्वक्तव्यं तत् 'ध्रुवमपाये' इति सूत्रे एवोक्तम् । चारित्रत इति । 'बहुष्वासीनेषु अन्याऽतिक्रमेण लोकैर्गृह्यते' इत्यर्थः । फलितमाह—अन्यानतिक्रम्य वर्त्तत इति ।

हीयमान । 'हीयमानेन, पापेन च युक्तादि'त्यर्थः । तद्युक्तत्वं च तदन्वयित्वम् । तच्च साक्षात्, तद्धानाऽन्वयेन च । उदाहरणे करणे, हेतौ वा तृतीया । अर्जुनत इति । 'पक्षे' इति शेषः । प्रवाहिका—विषूचिका ।

अभूतेति । 'गम्यमाने' इति शेषः । 'तद्भावे'ति करणतृतीयया समासः । 'अभूत'पदेन च कर्त्तृषष्ठ्यन्तेन तस्य समासः । अभूतत्वं च प्रत्यासत्त्या 'तद्भाव'शब्दघटकतच्छब्दाऽर्थकरणकत्वेनैव ग्राह्यम् । एवं च 'येन रूपेण प्राक् अभूतम्, तेन रूपेण तस्य भावः—'अभूततद्भाव' इति फलितम् ।

अत एव 'तद्भाव' इत्यत्र तच्छब्दोपादानं सार्थकम् । एवं च यत्र प्रकृतिस्वरूपमेव विकाररूपतामापद्यमानं विकारसादृश्येन विवक्ष्यते, तत्रैवाऽयं प्रत्ययः । वृत्तिकृत्तु 'अभूतद्भावे' इति सूत्रे प्रचिक्षेप ।

'सम्पद्यकर्त्तरी'त्यस्य 'सम्पद्यर्थकर्त्तरि वर्त्तमानात्प्रातिपदिकादि'त्यर्थः । संपूर्वकपदधातोरस्मादेव निपातनात्कर्त्तरि शः । दिवादित्वात् श्यन् । 'सम्पद्यश्चाऽसौ कर्त्ता चे'ति विग्रहः । एवं च विकारवाचकादेव प्रत्ययः ।

---

१ इतोग्रे 'नानापक्षेति । वृत्तिविषये चाऽर्जुनादिपदानां 'तत्पक्षे' इत्यर्थे लक्षणा । तसिस्तु स्वार्थिक एवेति बोध्यम् । एवमुत्तरसूत्रेऽपि बोध्यम्' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

२ 'अर्जुनत इति । 'पक्षे' इति शेषः' इत्ययं लघुशेखरपाठः ।

३ 'एतेन जन्मग्रहणे कर्त्तव्येऽभूतेत्यादिवैयर्थ्यमि'त्यपास्तम्' इति घ. पाठः ।

४ 'यत्रोपादानकारणमेव' इति ख. घ. ङ. पाठः ।

५ 'विकाराऽभेदेन विवक्ष्यते' इति ख. घ. ङ. पाठः ।

६ इतोऽग्रे—'तद्भाव इत्यस्य विशेष्यस्त्वात्' इति घ. पाठः ।

तस्यैव सम्पद्यकर्तृबोधकत्वात्। तदेतत्फलितमाह—विकारात्मतामित्यादि। च्वेश्चकारोऽन्तोदात्तार्थः। 'वेरि'त्यत्र सामान्यग्रहणाऽविघातार्थ इकारः। ब्रह्मी भवतीति। अत्र भवतिक्रियायां कर्तृत्वं प्रकृतिभूतस्य अब्रह्मण एव विकाराऽभेदेन बोध्यम्। 'अभूततद्भावे' इति शब्दबलेन तथैव लाभात्। अत एव 'सद्मी भवन्ति ब्राह्मणाः' 'त्वद्भवति देवदत्त' इत्यादौ वचन-पुरुषव्यवस्था सिद्ध्यति। एवं 'कृष्णी करोती'त्यादौ कर्मत्वमपि [2]प्रकृतेर्विकाराऽभेदेन बोध्यम्। अन्यत्र तु प्रकृतिविकृत्योः कर्तृत्वे अनियमः। 'सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत' इति पस्पशायां भाष्यप्रयोगे विकृतेः कर्तृत्वदर्शनात्। 'एको वृक्षः पञ्च नौका भवति', 'अत्वं त्वं सम्पद्यते' इत्यादौ लोके प्रकृतेरपि कर्तृत्वदर्शनाच्च[3]।

'प्रकृतेर्विकृतेर्वाऽपि यत्रोक्तत्वं द्वयोरपि।
वाचकः प्रकृतेः सङ्ख्यां गृह्णाति, विकृतेर्न तु'॥

—इति प्राचीनप्रवादोऽपि च्विप्रत्ययविषयक एव। अत्र च शब्दशक्तिस्वभाव एव निर्णायकः। अन्यत्राऽप्यस्य योजनन्तु पूर्वोक्तभाष्यविरोधेन प्रामादिकम्। च्व्यन्तस्य च स्वार्थसदृशे लक्षणा। अत एव 'महद्भूता ब्राह्मणी'त्यत्र सामानाधिकरण्यनिबन्धनं पुंवत्त्वम्। तस्य गौणत्वाच्च आत्त्वाऽभावः। यथा च 'त्वद्भवती'त्यत्र त्वादिकं, तथा[4] 'त्रेस्त्रय' इत्यत्र

१ इतोऽग्रे—'किञ्च ब्रह्मीत्यादेर्निपातत्वेन द्योतकतया, भूधातुनैव तदर्थस्य क्रोडीकारेण, तस्य कर्तृत्वाऽसम्भवः' इति घ. पाठः।

२ 'प्रकृतेरेव विकाराऽभेदेन बोध्यम्। एवं कर्तृत्वमपि तेनैव बोध्यम्' इति ख. घ. ङ. पाठः।

३ इतोऽग्रे—'वस्तुतो वाक्ये विकृतेरेव कर्तृत्वमुचितम्। सम्पद्यकर्तरि प्रत्ययविधानात्' इति घ. पाठः।

४ 'तथा 'त्रेस्त्रय' इत्यत्र निरूपितम्। 'कारणीभूतो दण्डः' 'ब्रह्मीभूत' इत्यादौ च्विप्रत्ययस्तु अकारणत्वाद्यारोपपूर्वककारणत्वादिबुद्ध्यैव बोध्यः' इति ख. ङ. पाठः। अयं पाठः १५४५ पृष्ठे 'यत्तु' इत्यादिना खण्डितः।

निरूपितम् । तदुक्तम् 'आन्महत' इत्यत्र कैयटेन, 'च्विप्रत्ययो, यदा प्रकृतिर्विकृतिरूपतामापद्यमाना विवक्ष्यते, तदोत्पद्यते । परिणामविषयत्वात् च्वेः ।

'जहद्धर्माऽन्तरं पूर्वमुपादत्ते यदा परम् ।

तत्त्वादप्रच्युतो धर्मी, परिणामः स उच्यते' ॥ इति ।

यदा तूत्तराऽवस्था, पूर्वाऽवस्था वा नाऽऽश्रीयते, तदा च्वेरभावः, 'तन्तवो भवन्ति, 'पटो भवती'ति यथे'ति ।

ननु 'सम्पद्यकर्त्तरी'ति व्यर्थम्, सम्पदेः करोतिकर्मव्यापारे वर्त्तमानत्वेनाऽभूततद्भावे इत्यनेनैव सम्पद्यकर्त्तृत्वस्य लाभादिति चेन्न । तत्सामर्थ्येन अनारोपिताऽतथाभूते, आरोपिततद्भावसम्पत्तावेव प्रत्ययस्वीकारात् । ईश्वरप्रसादादिनाऽमहति मुख्यमहत्त्वोत्पत्तौ च च्व्यन्तप्रयोगाऽभावस्तत्फलम् । अत एव च्व्यन्ताऽर्थस्य गौणत्वात् 'गोऽभवदि'त्यादौ प्रगृह्यत्वाऽभावः, 'महद्भूत' इत्यादावात्त्वाऽभावश्च भाष्ये उक्तः ।

एवञ्च 'ब्रह्मीभूत' इत्यादि च्छान्दसम् । 'कारणीभूत' इत्याद्यसाध्वेव ।

यत्तु 'तत्राऽकारणत्वाद्यारोपपूर्वककारणत्वादिबुद्ध्या च्विरि'ति । तन्न । एवं हि—अगोत्वाऽऽरोपपूर्वकगोत्वबुद्ध्या च्वौ, 'गोऽभवदि'त्यादौ गौणत्वाऽभावेन, च्व्यन्तप्रतिषेधस्याऽऽवश्यकत्वेन, तत्प्रत्याख्यानपरभाष्यविरोधाऽऽपत्तेः । अत एव च प्रकृतसूत्रे प्रकृतिविकारभावाऽभावे 'समीपी भवती'त्यादिसिद्धये 'समीपादिभ्य उपसङ्ख्यानं कर्त्तव्यम्', 'न ह्यसमीपं समीपं भवती'ति प्रकृतिविकारभावाऽभावं प्रदर्श्य, समीपादिपदस्य तत्स्थपरतया 'असमीपस्थं समीपस्थं भवती'त्येवम् अभूततद्भावसत्त्वात् सूत्रेणैव सिद्धमि'ति तद्वचनं प्रत्याख्यातम् । न त्वसमीपत्वाऽऽरोपेण प्रकृतिविकारभाव उक्त इति दिक् ।

---

१ इतोऽग्रे—'केचित्तु सम्पदेरनुरूपाऽऽत्मभावे वर्त्तमानत्वम् । अत एव 'अनुरूप आत्मभावः सम्पत्तिरि'त्यव्ययीभावविधायकसूत्रस्थाऽऽकरग्रन्थाः सङ्गच्छन्ते । एतन्मते आरोपविषये एव साधुत्वम् । शब्दशक्तिस्वभावादित्याहुः' इति ख. पाठः ।

नन्वेवमपि 'श'प्रत्ययेनैव सम्पत्तिकर्तुर्लाभे 'कर्तृग्रहणं व्यर्थमिति चेन्न। 'यत्र सम्पद्यकर्तृत्वमेव, न कारकाऽन्तरत्वं, तत्रैव यथा स्यात्' इत्येतदर्थं तत्सत्त्वात्। अत एव 'अदेवगृहे देवगृहे भवती'त्यत्र न। अस्य हि 'वस्तुतो देवगृहभिन्ने, आरोपितदेवगृहत्ववति सम्पद्यते' इत्यर्थः। 'अदेवगृहे प्राग्भूतो यो वृक्षादिः, स इदानीं ( तस्मिन् प्रदेशे देवालयीभूते) देवगृहे सम्पद्यते, तथा भवती'त्यवगमात्, वृक्षादेः सम्पत्तिं प्रति अधिकरणस्याऽपि देवगृहस्य, अभूततद्भावोऽस्त्येव। तस्य प्राग् अदेवगृहस्याऽपि, सम्प्रति देवगृहत्वेन परिणामात्, सम्पद्यकर्तृत्वमप्यस्ति। अत्र वस्तुतस्तत्कर्तृत्वेऽपि, अधिकरणत्वस्याऽपि सत्त्वान्न च्विरि'त्यलम्।

ऊर्यन्तत्वादिति। 'ऊर्यादिच्वी'ति निपातत्वे, अव्ययत्वमित्यर्थः।

दोषाभूतमिति। अधिकरणशक्तिप्रधानस्याऽपि वृत्तौ शक्तिमत्-प्रधानत्वं बोध्यम्।

गार्गीति। यञन्तात् च्वौ 'आपत्यस्ये'ति लोपस्तु न। ईकारेण व्यवधानादिति भावः।

च्वौ च। 'अकृत्सार्वे'त्यतो 'दीर्घ' इत्यनुवर्त्तते।

अरुर्मनः। च्विश्चेति। अनुवादोऽयम्। न विधिः। पूर्वेणैव[2] सिद्धेः। प्रत्ययविधौ गृह्यमाणप्रातिपदिके तदन्तविध्यभावेन, 'उन्मनी स्यादि'-त्याद्यसिद्ध्यापत्तेश्च। अनुवादफलन्तु लोपस्य तत्सन्नियोगशिष्टत्वलाभः। अनेन अन्त्यलोपे यथायथं दीर्घत्व-ईत्त्वे इति बोध्यम्।

विभाषा साति। 'विभाष्यते[3] = विकल्प्यते' इति 'विभाषा'। 'गुरोश्च हल' इत्यकारः। टाप्। न तु अव्ययमिदम्। 'पयसस्तु विभाषये'त्यादि-

१ अयं ख. घ. ङ. पाठः। क. ग. नास्ति।

२ 'पूर्वेणैव सिद्धतया वैयर्थ्यात्, गौरवाच्च' इति घ. पाठः।

३ 'विभाष्यते' इत्यारभ्य 'दर्शनात्' इत्यन्तः पाठो मनोरमास्थ इति क. कुण्डलितः।

दर्शनात्। साकल्ये इति। 'अभूततद्भावविषये, साकल्ये चे'त्यर्थः। तदेवाह—कृत्स्नं शस्त्रमिति। 'सर्वाऽवयवोपेतमि'त्यर्थः।

**तदधीनवचने**। 'अभूततद्भावे' इति निवृत्तम्। 'अनेन स्वामिविशेषवाचिन ईशितव्येऽभिधेये प्रत्यय' इति वृत्तिकृत्। 'यस्मादधिकमि'ति सूत्रे भाष्ये 'अधि ब्रह्मदत्ते पञ्चालाः' 'अधि पञ्चालेषु ब्रह्मदत्त' इति द्विविधव्यवहारस्याऽपि दर्शनेन, स्वाधीनत्वं स्वामिनोऽपि वक्तुं शक्यमिति, 'द्रव्यसाद्राजा' इत्यपि भवती'त्यन्ये। विप्रत्रेति। स्वरादेराकृतिगणत्वात्, त्राऽन्तस्याऽव्ययत्वम्। एवं डाजन्तानामपि।

देवमनुष्य। सातिर्निवृत्तः। 'कृभ्वस्ती'त्यादि च निवृत्तम्। वन्दे रमे वेति। 'देवान् वन्दे, तेषु रमे वे'त्यर्थः। 'पुरु'शब्दो बहुपर्यायः। जीवत इति। 'जीवतः पुरुषस्य मनो बहुषु विषयेषु गच्छतो'त्यर्थः।

अव्यक्तानु। अत्र 'कृभ्वस्ती'त्यनुवर्त्तते मण्डूकप्लुत्या। 'सम्पदे'ति तु निवृत्तमेव। न तु ततो न्यूनमिति। यत्तु 'द्व्यजपेक्षया अवरम् = न्यूनम् अर्द्धं यस्येत्यर्थ' इति। तन्न। 'पटपटाकरोति' 'खरटखरटाकरोती'-त्यादावव्याप्तेः।

**विवक्षिते** इति। परसप्तम्यान्तु अन्योन्याऽऽश्रयः स्यात्, डाचि द्वित्वम्, द्वित्वे चाऽर्द्धोऽनेकाच्त्वे डाजितीति बोध्यम्। किञ्च शब्दाऽन्तरस्य प्राप्त्या द्वित्वस्याऽनित्यतया, नित्यत्वाट्टिलोपे, 'पटपटे'त्यस्योऽसिद्धिः।[1] 'बहुल'ग्रहणात् 'द्वितीया करोती'त्यादौ न द्वित्वम्।

**खरटखरटे**ति। 'खरटदि'त्यस्य द्वित्वादि प्राग्वत्। एवं 'त्रपटदि'त्यस्याऽपि। 'द्व्यजर्द्धादि'त्युक्तेऽत्र न स्यात्। न हि अस्याऽर्द्धं द्व्यच्। किन्तु त्र्यच्।

ननु डाचश्चित्त्वं न स्वराऽर्थम्। एकाऽच्त्वात्प्रत्ययस्वरेणैव सिद्धेः। 'लोहितादिडाज्भ्य' इति विशेषणाऽर्थोऽपि न। फलाऽभावात्। इडाऽऽदौ 'डा'शब्दस्याऽनर्थकत्वात्, सुप्स्थानिकडाऽऽदेशस्याऽपि छान्दसत्वेन तत्र

---

१ 'पटपटेत्यस्याऽसिद्धिरित्यपि बोध्यम' इति ख. ग. ङ. पाठः।

आपाद्यरूपाऽभावेन, क्यषोऽप्राप्तेरिति चेन्न । 'पटपटाऽसी'त्यत्र 'स्वरितो वाऽनुदात्ते पदादावि'ति स्वरितबाधनाऽर्थत्वादिति वृत्तौ स्पष्टम् ।

यथा तु भाष्यं तथा चकारः 'नाभा पृथिव्या निहितो दविद्युदि'त्यत्रत्य-'नाभा' इत्यस्य ङेर्डाऽऽदेशनिष्पन्नस्य अनुकरणे 'पटपटायती'त्यादाविव 'नाभा इति भवती'त्यर्थे क्यषो वारणायेति प्रतीमः । **अनेकाच** इति । 'द्यजवराद्धीदि'त्यपनीये'त्यर्थः । **पटितीति** । 'अव्यक्ताऽनुकरणस्ये'ति पररूपम् । **बीजेन सह कर्षतीति** । वृत्तौ 'बीज'शब्दो बीजाऽऽवापसहिते कर्षणे वर्त्तते । एतेन 'बीजेन सह भुवः कर्षणे, बीजानामपि कर्षणा-ऽऽपत्ताविष्टाऽसिद्धि'रि'ति परास्तम् । यद्यपि 'कृष विलेखने' तुदादिः, तथाप्यत्रत्यवृत्तिप्रामाण्येन, 'कर्षात्त्वत' इतिसूत्रभाष्यप्रामाण्येन च, भ्वादेराकृतिगणत्वात्, शप्विकरणोऽपीत्याहुः । **कृषाविति** किम् ? । 'द्वितीयं करोति पटम्' ।

**सङ्ख्याया** इति । 'गुणशब्दोऽन्ते यस्य सङ्ख्यावाचकस्ये'त्यर्थः । 'सङ्ख्यादेर्गुणादि'ति सूत्रयितुमुचितम् । कृषौ किम् ? । 'द्विगुणां करोति रज्जुम्' । **कालं यापयतीति** । वृत्तौ 'समय'शब्दस्य तद्यापने लक्षणा बोध्या । कर्त्तव्यस्याऽवसरप्राप्तिः 'समयः' । तस्याऽतिक्रमो-'यापना' । एवं च 'अद्य मे पारवश्यम्, श्वोऽस्य समय' इत्येवं बहुषु दिवसेषु य आह, स एवमुच्यते' इति तु हरदत्तः । **सपत्रेति** । 'पतन्त्यनेने'ति

१ अत्र 'ङेराडादेशेनाऽप्येतत्सिद्धेश्चिन्त्यमेतत् । तस्माद्वृत्युक्तमेव सम्यगिति बोध्यम् । 'यदि तु सर्वादेशाऽर्थं डादेशस्तर्हि, आडस्तु' इति 'वृत्याशयः' इति लिखितपुस्तके टिप्पणी ।

२ 'वस्तुतोऽन्यत्र क्लृप्तेन गणकार्याऽनित्यत्वेन 'श'विकरणाऽभावे, शपि रूप-सिद्धेर्भ्वादिपाठकल्पनं व्यर्थम् । अन्यथा श्वसेरपि भ्वादित्वाऽऽपत्तिरिति चिन्त्यमेतत्' इति टिप्पणी ।

३ 'अन्ते = समीपे यस्य' इति क. पाठः ।

व्युत्पत्त्या शराणां पुङ्खगतो बर्हः 'पत्रम्'। प्रत्युदाहरणे पत्रम्-पर्णम्। 'कृञ' इति 'समासान्ता' इत्येतत्पर्यन्तमनुवर्त्तते।

निष्कुला१ अन्तरवयवानां बहिःकरणं 'निष्कोषणम्'। तत्र किम्?। 'निष्कुलान् करोति शत्रून्'। आनुलोम्यम्-आराध्यचित्ताऽनुवर्त्तनम्। तत्र प्रकृतेर्लक्षणा। तत्र किम्?। 'सुखं करोत्यौषधम्'। चित्तपीडनम्-प्रातिलोम्यम्।

शूलात्। 'शूल'शब्दस्य तत्करणकपाके लक्षणा। करोतिर्व्यापार-सामान्ये। पाके किम्?। 'शूलं करोति कदन्नम'। शूलम्-उदररोगः।

सत्याद। सत्सु साधु सत्यम्। यत्। क्वचिदन्तोदात्तस्तु छान्दस-त्वाद्बोध्यः। 'भाण्डम्'-रत्नादिद्रव्यजातम। क्रेतव्यमिति। 'मयैवैतद्ग्राह्यमि-ति सत्यङ्कारद्रव्यप्रदानेन दृढं करोती'त्यर्थः। 'तथैव तथ्यम्'। 'पादाऽर्घाभ्यां चे'ति चस्याऽनुक्तसमुच्चयाऽर्थत्वात् स्वार्थे यत्।

परिवापणमिति। निवृत्तप्रेषणवपेस्तत्रैव व्यापारे णिच्। तदन्तात् ल्युट्। 'भद्र'शब्दो मङ्गल्यमुण्डने लाक्षणिकः। मङ्गल्यमुण्डनं-चौल-दीक्षादौ।

भद्राच्चेति। 'भद्रादित्यर्थग्रहणमि'ति तु नोक्तम्। मङ्गलादिभ्यो-ऽपि प्रसङ्गात्।

( इति स्वार्थिकप्रकरणम् )।

इति तद्धितप्रक्रिया।

१ इतोऽग्रे—'अतिव्यथनमत्र डाच्समभिव्याहारे प्रकृतिलक्ष्यम्। 'प्रयोगो-पाधिरि'त्यन्ये' इति घ. पाठः।

## अथ द्विरुक्तप्रक्रिया।

सर्वस्य द्वे। 'नित्यवीप्सयोरि'त्येवमादिषु विधेय-कार्यिणोरनिर्देशेन साकाङ्क्षत्वात्, स्वरितत्वाच्चाऽधिकारोऽयम्। तदाह—अधिकृत्येति। 'द्वे' इति स्वरूपग्रहणं तु न। 'तस्य परम्' 'नाम्रेडितस्याऽन्त्यस्ये'ति लिङ्गात्।

[1]स्यादेतत्। वाक्य-धात्वादिद्विर्वचनव्यावृत्त्यर्थं 'पदस्ये'त्यपकर्ष आवश्यकः। [2]अनभिधानन्तु दुर्ज्ञेयम्। एवं च तदपकर्षेणैव सिद्धे 'सर्वस्ये'ति व्यर्थम्। न च 'सर्वाऽवयवोपेतस्य द्वित्वं यथा स्यात्, न तु कश्चिदपि अवयवो वर्ज्यते' इत्यर्थं 'सर्वस्ये'तीति वाच्यम्। विनिगमनाविरहेण, 'एकाज्द्विर्वचन'न्यायेन च सर्वाऽवयवद्वित्वसिद्धेः। 'अलोन्त्यस्ये'त्यस्य तु न प्रवृत्तिः। 'पदस्ये'त्यस्य कर्मषष्ठ्यन्तत्वमाश्रित्य 'पदकर्मके द्वे उच्चारणे' इत्यर्थे स्थानषष्ठ्यभावात्[3]। स्थानषष्ठीत्वेऽपि 'द्वे' इत्यनेन

---

१ 'स्यादेतत्—यद्यपि 'कुत्सिते' इति सूत्रस्थभाष्यरीत्याऽन्तरङ्गत्वेन-परिगृहीतसाधनादिकार्यतिङादिविशिष्टधातोरेव व्यवहारेण, तस्यैव लोकेऽर्थबोधकत्वेन च, प्रतीतस्यैव चाऽर्थस्य बहिर्भूताऽऽभीक्ष्ण्याद्याकाङ्क्षासम्भवेन च, तदर्थ एवाऽऽभीक्ष्ण्यादिसम्भवाच्च धातुमात्रस्य द्वित्वमिति, न तदर्थं 'पदस्ये'त्यपकर्षः। नाऽपि 'वृक्षाभ्यामि'त्यादौ सुपः प्राग्भागस्य। प्रकृतीनां प्रत्ययाऽर्थाऽन्वितस्वार्थानामेव इतराऽर्थाऽऽकाङ्क्षोदयात्। नाऽपि भृशार्थे सावकाशस्य यङः पौनःपुन्ये परेण द्वित्वेनाऽबाधाय द्वित्वस्य बहिरङ्गत्वसम्पादनाय तत्। 'भृशार्थे' इति वक्तव्ये 'क्रियासमभिहार'ग्रहणेन पौनःपुन्याऽर्थकद्वित्वस्य यङबाधकत्वकल्पनात्, तथापि आबाधादिविषये वाक्यद्विर्वचनव्यावृत्त्यर्थं स आवश्यकः' इति घ. पाठः।

२ 'अनभिधानादिकन्तु' इति ख. घ. ङ. पाठः।

३ इतोऽग्रे—'एतेन 'स्वादिष्वि'ति पदसंज्ञामादाय 'वृक्षाभ्यामि'त्यादौ विभक्त्यर्थस्य वृक्षद्वयव्याप्तिसत्त्वेन; प्रकृतिभागमात्रस्य मा भूदित्येतदर्थं तदि'ति

सङ्ख्येयवाचकेन प्रत्यासत्त्या पदयोर्विधानेन, तयोरनेकाल्त्वात्सर्वादेशत्व-स्यैव प्रसङ्गादिति चेन्न । पुनर्द्वितीयषष्ठ्यन्तोच्चारणम् 'अत्र स्थानषष्ठीत्वमेव यथा स्यादि'त्येतदर्थम् । तत्र 'द्वे' इत्यस्य सङ्ख्येयाऽपेक्षायां शब्दाऽनु-शासनप्रस्तावाच्छब्दरूपे विशेष्ये, 'सर्वस्य स्थाने द्वे शब्दरूपे' इत्यर्थः । ते च प्रत्यासत्त्या 'स्थानिसमानाऽऽकारे एवे'ति स्थाने-द्विर्वचनत्वमत्र ।

अन्यथा 'एकाचो द्वे' इत्यादाविव उच्चारणक्रियाऽपेक्षकर्मषष्ठीत्वमेव स्यादिति, द्विःप्रयोग एवेदमपि द्विर्वचनं स्यात्[2] ।

ननु द्विःप्रयोग एवाऽस्तु, का क्षतिरिति चेन्न । 'पौनःपुन्यम्', 'पौनः-पुनिकमि'त्यत्र ष्यञ्-ठञोरनुत्पत्तिप्रसङ्गात् । तत्र हि पुनःपुनर्भवितरि वर्त्तमानात् 'पुनः-पुनः'शब्दाद्भावे, भवे च प्रत्ययः । तस्य वीप्सा-लक्षणेनाऽर्थेनाऽर्थवत्त्वेऽप्यन्तरङ्गत्वात्सुपि, लुक्त्वाच्चाऽव्ययात्सुपो लुकि, द्वित्वप्रवृत्त्या, 'यत्र सङ्घाते पूर्वो भागः पदमि'त्यादिनियमाऽर्थेन 'समास'-ग्रहणेन प्रातिपदिकत्वाऽभावात्स न स्यात् । 'पद'शब्दस्य 'गवित्ययमाहे'-त्यादौ प्रातिपदिकत्वधारणायाऽर्थवत्परत्वेऽपि, दोष एव । द्विःप्रयोगपक्षे आद्यपुनःशब्दस्याऽप्यर्थवत्त्वात् । बोधाऽऽवृत्तिस्तु 'द्वावि'त्यादिवन्नेति बोध्यम् । स्थाने-द्विर्वचने तु स्थानिवद्भावात्प्रातिपदिकत्वम् ।

ननु अत्राऽपि पक्षे सुबन्तस्य द्वित्वम् । तथा च प्रत्ययाऽन्तत्वात्

---

अपास्तम् । विभक्त्यन्ताऽर्थे वीप्सासत्त्वेन, एकाज्द्विर्वचनन्यायेन च सिद्धेः' इति ग. पाठः ।

२ इतोऽग्रे—'अन्यथा 'एकाचो द्वे' इत्यादाविवोच्चारणक्रियाऽपेक्षकर्मषष्ठीत्वमेव स्यादिति, द्विःप्रयोग एवेदमपि द्विर्वचनं स्यात् । न च द्विःप्रयोगपक्षे 'वृक्षमि'ति द्वितीयान्तकर्मके द्वे उच्चारणे विहिते, इति रूपत्रयश्रवणप्रसङ्गः, स्थान्यादेशभावाऽभावेन तन्निवृत्तेरयोगादिति वाच्यम् । लाघवात्पूर्वोच्चा-रणसहितद्विरुच्चारणस्यैव विधानात् । एवं च प्राप्ताऽप्राप्तविवेकेन एकोच्चारणे एव विधितात्पर्यम् । ननु द्विःप्रयोग एवाऽस्तु' इति घ. पाठः ।

स्थानिनः प्रातिपदिकत्वाऽभावे, कथमादेशे तत्सौलभ्यमिति चेन्न। 'न ङि-सम्बुद्ध्योरि'ति ज्ञापकेन प्रत्ययलक्षणेन 'अप्रत्यय' इति निषेधाऽप्रवृत्ति-ज्ञापनात्, स्थानिनः प्रातिपदिकत्वे, आदेशेऽतिदेशेन तत्सौलभ्यात्[1]।

न च 'काल'बोधकप्रातिपदिकप्रकृतिकसुबन्तत्वं दुर्लभम्। 'तादृशाऽर्थे मानाऽभाव' इत्यर्थस्य 'ङ्याप्'सूत्रे उपपादितत्वात्। 'तत्सम्बन्धिभावः' 'तदधिकरणकोत्पत्त्याश्रय' इत्याद्यर्थे प्रत्ययः प्रातिपदिकादि'त्येवाऽर्थात्[2]।

प्रातिपदिकात्परत्वं च 'कुत्सिते' इतिसूत्रस्थभाष्यप्रामाण्यात्, 'घकाले'त्यादिज्ञापकाच्च सुप्व्यवहितमित्यन्यत्। अत एव कस्कादिषु 'कौतस्कुत'शब्दपाठश्चरिताऽर्थः।

किञ्च 'द्विःप्रयोग'पक्षे 'पचसि-पचसी'त्यादौ समुदायपदत्वं दुर्लभम्। तथा च 'आम् पचसि-पचसि देवदत्ते'त्यत्र आम एकाऽन्तरता न स्यात्।

किञ्च 'पुनःपुनर्जायमाना पुराणी'त्यत्र पदाऽवयवत्वविशिष्टपदत्वा-ऽभावेनाऽवग्रहश्च न स्यात्। 'अवान्तरपदत्वे एवाऽवग्रह' इत्युत्सर्गात्।

ननु[3] स एव धातुः, प्रत्ययश्च द्विः प्रयुज्यते[4], अर्थभेदाऽभावात्, ततश्च 'यः परस्मात्तिङ्, स पूर्वस्मादपो'ति, 'यस्मात्प्रत्ययो विहितस्तदादि तदन्त-मि'ति विधीयमाना पदसंज्ञा समुदायस्याऽपि प्रवर्त्तते एव। न च द्वित्वा-त्पूर्वं प्रवृत्ततया 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तिः। लक्ष्यभेदात्।

---

१ 'तत्सौलभ्यम्। प्रातिपदिकप्रकृतिकसुबन्तत्वन्तु अशास्त्रीयत्वात्तासौ नित्या-ऽनित्यत्ववदतिदेष्टुमशक्यमिति चेन्न' इति घ. पाठः।

२ इतोऽग्रे—'न चैवमपि 'ग्रामं गतो हन्यते' इत्यर्थे 'ग्रामगत' इति समासा-ऽनापत्तिः, तत्र हि 'श्रितादिप्रकृतिकसुबन्तैरि'त्यर्थादिति वाच्यम्। प्रत्यय-ग्रहणपरिभाषायां यच्छब्देन प्रकृतेरुपादानात्तस्याऽपि शास्त्रीयत्वात्। अत एव कस्कादिषु' इति घ. पाठः।

३ 'ननु' इत्यस्य अग्रे 'इतिचेन्न' इत्यनेन (१५५३ पृष्ठे) सम्बन्धो बोध्यः।

४ 'द्विः पठ्यते' इति घ. पाठः।

यत्तु 'प्रथमसिपः प्रकृतिमध्ये प्रवेशेन, तद्ग्रहणेन ग्रहणात्, द्वितीयपचः प्रत्ययमध्यपातेन तद्ग्रहणेन ग्रहणाद्वा, समुदायस्य पदत्वमि'ति । तन्न । एकैकस्यैव प्रकृतिताऽऽदिपर्याप्त्यधिकरणत्वेन, तत्समुदायमध्यपतितस्याऽपि प्रकृत्यादिग्रहणेन ग्रहणाऽयोगात् । एवञ्च 'पौनःपुन्यमि'त्याद्यपि सिद्धम् । 'पुनःपुनरि'त्यस्य ब्राह्मणादिषु पाठात् ष्यञ्सिद्धेः । कालादि'त्यत्र 'प्रातिपदिकादि'त्यस्य भाष्यप्रामाण्यात् असम्बन्धेन 'पौनःपुनिक'सिद्धिः ।

यद्वा कृताऽऽष्टमिकद्वित्वात् अप्रातिपदिकत्वेऽपि तद्धितोत्पत्तिः कस्कादिषु 'कौतस्कुत'शब्दपाठात्कल्प्यते इति न दोषः । न चैवम् 'एकाज्द्विर्वचन'-न्यायेन समुदायस्यैव पदत्वाऽऽपत्तौ, 'अग्ने-अग्ने' इत्यादौ पूर्वखण्डे पूर्वरूपाऽऽद्यनापत्तिः । समुदायपदत्वेनाऽवयवानामननुग्रहेण, तन्न्यायविषयाऽभावात् । प्रत्येकमपि विहितत्वबुद्धिसत्त्वेन तदक्षतेश्च । न चैवम् अनेकपदाऽन्तरत्वस्याऽपि सत्त्वेन, कथमेकाऽन्तरतेति वाच्यम् । 'अनेकपदाऽन्तरे न भवती'त्यर्थस्य विधिस्पृष्टत्वाऽभावेन, विशिष्टस्याऽपि पदत्वेन, 'एकाऽन्तरे भवती'ति विधिस्पृष्टस्याऽर्थस्य सत्त्वेनाऽदोषात् ।

न च भाष्यात् 'समुदायस्यैव पदत्वमि'त्येतावदेव लभ्यते, न त्ववयवानामपी'ति । 'समुदाये या वाक्यपरिसमाप्तिस्तया पदत्वमि'ति हि तत्रोक्तमिति वाच्यम् । 'तयाऽपि पदत्वमि'ति तद्भाष्याऽर्थस्य भाष्यप्रदीपोद्द्योते निरूपितत्वादिति चेन्न ।

'घटोऽयं घट' इति वाक्यस्याऽपि पदत्वाऽऽपत्तेः । एकस्यैव घटस्य बोधनाऽर्थं मन्दं प्रति 'लौकिको द्विःप्रयोगोऽयमि'ति नाऽर्थभेदोऽत्र । तथा च [1]'आम् घटोऽयं घटोऽग्निदत्ते'त्यत्राऽप्येकाऽन्तरता स्यात् । तस्मात् स्थाने-द्विर्वचनत्वमत्र न्याय्यम् ।

१ इतोऽग्रे—'प्रत्ययलक्षणेन भवदुक्तरीत्या सुबन्तत्वस्य सत्त्वात् । न चैवमेकाज्-द्विर्वचनन्यायेन' इति घ. पाठः ।

द्विःप्रयोगपक्षस्थापनपरं भाष्यन्तु प्रौढिवादः। यद्यपि ईदृशप्रयोगाणामनभिधानमभिप्रेत्य भाष्यमिति वक्तुं शक्यम्, तथापि प्रतिपत्तिलाघवाय 'स्थाने-द्विर्वचन'पक्ष एवाऽत्र मूलकृताऽऽदृतः।

नन्वेवमपि 'स्थाने-द्विर्वचनत्व'पक्षे 'वाक् वाक्' 'राजा राजे'त्यादौ पूर्वखण्डे कुत्व-नलोपादीनि न स्युः। यद्यप्यन्तरङ्गत्वात्, 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इति निषेधाच्च तत्सिद्धिः, तथाऽपि 'अपचन्नपचन्नि'ति ङमुट्, 'वृक्षान्-वृक्षानि'ति णत्वनिषेध, इत्यादीनि न सिद्ध्येरन्, 'अश्नीताऽश्नीते' त्यादौ 'अतो गुणे' इति च स्यादिति चेन्न। 'द्विरावृत्तशब्दरूपम् आदेश' इत्यर्थके 'द्विरि'तिवक्तव्ये, 'द्वे' इति द्विवचनबलेन अनस्तमिताऽवयवभेदसमुदायस्यैव'आदेशस्य विधानात्। 'द्वे' इत्यस्य सङ्ख्येये हि स्थानिसदृशे, 'पदस्ये'त्युपस्थिते पदे[1] एवे'ति, प्रत्येकमपि पदत्वसिद्धेः। अत एव 'द्विरि'ति नाऽसूत्रि। तत्र द्विपदाऽऽत्मकाऽऽदेशस्याऽतिरिक्तस्य कल्पनाऽपेक्षया, लोके पृथक् प्रयुज्यमानयोर्विभक्त्यन्तयोः क्लृप्तत्वेन, तत्प्रक्रियानिष्पन्नयोस्तयो[2]रेव समुदितयोरादेशत्वं कल्प्यते। एतेन 'एकैकं पश्ये'त्यादौ बहुव्रीहिवद्भावेन प्रातिपदिकत्वेऽपि, तस्य स्थानिवद्भावेन पदत्वे[3]ऽपि, तदवयवयोः सुप्त्वे मानाऽभावेन, सुप्लुगाद्यनापत्तिरि'ति परास्तम्।

एतेन 'अन्याऽन्यप्रादुर्भावादि'ति पञ्चमीविधायकसूत्रस्थभाष्यप्रयोगः समर्थितः। कृतद्वित्वस्य षष्ठ्यन्तस्य 'प्रादुर्भाव'शब्देन समासे, विभक्तिलुकः सुलभत्वात्। एतेन 'तत्तत्तामसे'त्यपि व्याख्यातम्। न च 'पदस्ये'त्यपकर्षे 'प्रपचति-प्रपचती'त्यत्र सगतिकस्य द्वित्वाऽनापत्तिः। 'सगतिक-

१ 'पदे' इति प्रथमाद्विवचनम् इति ध्येयम्।

२ 'तत्सजातीययोरेव' इति घ. पाठः।

३ 'पदत्वादावपि' इति घ. पाठः।

४ 'सगतिकेतिवक्तव्यम्' इति वार्त्तिकेनैव सिद्धेः। अत्र सगतिके तत्सहितस्यैव

स्ये'ति वक्तव्यमि'ति वार्त्तिकेनैव सिद्धेः[1] ।

द्वित्वम् । तक्रकौण्डिन्यन्यायेन 'नित्यवीप्सयोरि'त्यस्य गतिरहिते एव प्रवृत्तेरित्याहुः' इति घ. पाठः ।

इतोऽग्रे—'यत्तु 'प्रपचती'त्यादौ धातूपसर्गसमुदायः क्रियाविशेषवाची, अडादिव्यवस्थाऽर्थं परं धातूपसर्गयोः पृथक्त्वकल्पनम्, ततश्च क्रियाधर्मो नित्यता समुदायस्येति, तस्यैव द्वित्वमि'ति । तन्न । कल्पितेनैव पृथक्त्वेन यथाऽडागमः, षाष्ठं द्वित्वं च व्यवतिष्ठते, एवम् आष्टमिकस्याऽपि द्वित्वस्य प्रवृत्तिं को वारयेत् ? । 'क्रियाधर्मो नित्यत्वमि'त्याद्यपि न । लकाराऽर्थकर्तृकर्मणोरपि क्रियानिरूप्यतया, विशिष्टादेव लकाराऽऽपत्तेः । किञ्च तस्य धातुत्वाऽभावान्न स्युरेव लादयः । तद्विधीनां निरुपसर्गे चारितार्थ्यात् ।

अत्रेदं बोध्यम्—'सगतिकस्य द्वित्वे ऐकपद्यं नाऽस्त्येव । स्थानिनः पदत्वाऽभावेन, आदेशेऽपि तस्य दौर्लभ्यात् । 'द्विःप्रयोग'पक्षे तु प्रथमगतिं विहाय, अवशिष्टस्य समुदायस्य तिङन्तत्वात्पदत्वं प्राप्तम् । तत्र सत्यपि न क्षतिरि'ति । अत्राऽऽहुः—तावतस्तिङन्तत्वे 'अनुदात्तं चे'ति बाधित्वा परत्वात्समुदायस्य 'तिङ्ङतिङः' इति निघाताऽऽपत्तिः । 'अनुदात्तं चे'त्यस्याऽधिकारतया सन्नियोगशिष्टत्वेनाऽन्तरङ्गत्वेऽपि, सतिशिष्टत्वात्तत्प्रवृत्तिर्दुर्वारा । न चेष्टाऽऽपत्तिः । स्थानेद्विर्वचने दुर्लभत्वात् । तस्मात् द्विःप्रयोगपक्षो दुर्बल' इति । 'उक्तरीत्याऽनस्तमिताऽवयवभेदसमुदायस्यैवाऽऽदेशत्वेन तत्पक्षेऽप्युक्तरीत्या तिङन्तत्वं सुलभम् । यद्वा सतिशिष्टस्वरबलीयस्त्वं षाष्ठस्वरविषयमेव, ज्ञापकस्य सजातीयाऽपेक्षत्वादि'त्यन्ये । 'पचति-पचतितरामि'त्यादौ प्रकर्षयोगस्य [1]प्रतियोगिसाऽपेक्षत्वात् तरबादीनां बहिरङ्गत्वेन,[2] पूर्वं द्वित्वं, ततस्तरप् । 'आढ्यतरम्—आढ्यतरमानये'त्यादौ तु भाष्यप्रामाण्यात्पूर्वं तरबिति बोध्यम्'[3] इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

1 'प्रतियोगिसापेक्षतया' इति घ. पाठः ।

2 'बहिरङ्गत्वात्' इति घ. पाठः ।

3 इतोऽग्रे—'इदं च भाष्ये स्पष्टमित्यलं पल्लवितेन' इति घ. पाठः ।

नित्यम् = आभीक्ष्ण्यम् । व्याख्यानात् । तच्च पौनःपुन्यम् । तदाह—आभीक्ष्ण्ये इति । द्योत्ये इति । 'नपुंसकमनपुंसकेने'त्येकशेषः, एकवत्त्वं च । पदस्येति । वक्ष्यमाणमिहाऽपकृष्टव्यमिति भावः । तेन पौनःपुन्ये विधीयमानं द्वित्वं धातोर्न । न च 'कुत्सिते' इति सूत्रस्थभाष्यरीत्या परिगृहीतसाधनादिकार्य-तिङादि-विशिष्टधातोरेव लोकेऽर्थबोधकत्वेन, प्रतीतस्यैव चाऽर्थस्य बहिर्भूताऽऽभीक्ष्ण्याद्याकाङ्क्षासम्भवेन, न धातुमात्र-द्वित्वमिति वाच्यम् । यङन्ते ततः प्रागपि धातोस्तत्सम्बन्धदर्शनात् ।

किञ्च आबाधादिविषये वाक्यद्वित्ववारणाऽर्थमप्यपकर्षः । किञ्च भृशाऽर्थे साऽवकाशस्य यङः पौनःपुन्ये परेण द्वित्वेनाऽबाधाय तत् । तस्मिन् हि सति द्वित्वं बहिरङ्गमिति न दोषः । 'भृशार्थे' इति वक्तव्ये 'क्रियासमभिहार'ग्रहणन्तु एतदपकर्षे एव ज्ञापकमिति दिक् ।[1]

वीप्सा = व्याप्तुमिच्छा यद्यपि, तथापि व्याप्तिप्रतिपिपादयिषायामयं योगरूढः । सा च प्रयोक्तृधर्मः, आबाधवत्[2] । अभिधेयधर्मत्वे हि 'पीडितो वीप्से' इत्यादिशब्दानामेव स्यात्, न गतवृक्षादीनाम् । तथा च शास्त्रस्य अल्पविषयता स्यात् । 'गतगत' इत्युक्ते 'प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते' इति यथा प्रतीयते, तथा 'वृक्षं वृक्षं सिञ्चती'त्यादावपि 'व्याप्तिं बुबोधयिषोरिदं वाक्यमि'त्यवगमात् । बोध[3]विषयता तु व्याप्तेरेव ।

व्याप्तिश्च पृथक् सङ्ख्यायुक्तानां नानाद्रव्याणां तदा बुद्धिस्थानां, क्रिया-गुण-द्रव्या-ऽभावैर्युगपदन्वये[4] प्रतीयते । 'पृथक्सङ्ख्यायुक्तानामि'-त्यनेन जात्यभिप्रायेण[5] प्रयोगे न द्वित्वम्, एकशेषविषये च न । 'युगपदि'-

---

१ 'ग्रहणे तु एतदपकर्ष एव ज्ञापकम्' इति क. पाठः ।

२ 'आबाधादिवत्' इति ख. घ. ङ. पाठः ।

३ 'शाब्दबोधविषयता तु वृक्षनिष्ठव्याप्तेरेव । सा च पृथक्' इति घ. पाठः ।

४ इतोऽग्रे—'इदमेव कात्स्न्र्यम्' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

५ 'ब्राह्मणो न हन्तव्य' इत्यादौ 'जात्यभिप्रायेण' इति घ. पाठः ।

त्युक्तेः—क्रमविवक्षायां न द्वित्वम् । क्रमेण[2] प्रतिपादनेऽनेकप्रयोगस्यैव दर्शनात् । 'तदा बुद्धिस्थाना'मित्यनेन सर्ववृक्ष[3]सेचनाऽभावेऽपि न क्षतिः । न हि 'सर्वे ब्राह्मणा आमन्त्रिता' इत्यादौ साक्षात्सर्वादिप्रयोगेऽप्यसङ्कुचद्वृत्तिता नियन्तुं शक्या । प्रकरणादिना सङ्कोचस्याऽऽवश्यकत्वात् ।

यत्र तु सङ्कोचकं नाऽस्ति, तत्राऽसङ्कोच इष्ट एव, 'जातो जातो निधनमुपैती'ति यथा[4] ।

तत्र द्रव्योदाहरणं—'राज्ञो राज्ञः पुरुष' इति । 'सर्वे घटा' इत्यादौ तु न द्वित्वम् । कात्स्न्र्यस्य सर्वशब्देनोक्तत्वात् । 'वृक्षं[5] वृक्षमि'त्यादौ बहुवचनन्तु न । वस्तुतस्तत्र बहुत्वसत्त्वेऽप्यभानात् । प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते । अत एव प्रत्येकं विधेयसेचनादिसम्बन्धाऽवगतिः ।

---

१ 'युगपद्ग्रहणाच्च क्रमविवक्षायाम्' इति ब. पाठः ।

२ 'अयं शोभनोऽयं शोभन' इति क्रमेण प्रतिपादने' इति ब. पाठः ।

३ 'जगतीतलवर्त्तिसर्ववृक्षाणां सेचनाऽभावेऽपि' इति घ. पाठः ।

४ इतोऽग्रे—'तत्र प्राय [1]उद्देश्यव्यापकत्वं विधेये प्रतीयते । यथा 'ब्राह्मणाय ब्राह्मणाय शतं देही'त्यादौ । अत्र 'ब्राह्मणाऽभिन्नोद्देश्यव्यापकं शतकर्मकं दानमि'ति बोधः । क्वचित् अज्ञातज्ञाप्यरूपविधेयव्यापकत्वमपि । यथा—'ब्राह्मणेभ्यः शतं शतं देही'त्यादौ । अत्र शतसङ्ख्यापरिच्छेद्यव्यापकता, तद्वदन्याऽवृत्तिस्वरूपा दाने प्रतीयते । क्वचित्स्फुटत्वाय, आवश्यकत्वप्रत्यायनाय वा उभयत्राऽपि द्वित्वम् । यथा 'विप्राय विप्राय शतं शतं देही'त्यादौ । 'एकैकस्याः शतं शतमि'त्यादौ च । 'गजे गजे न मौक्तिकमि'त्यादौ गजव्यापकत्वाऽभावो मौक्तिके बोध्यते । 'शशे शशे न शृङ्गमि'त्यादौ च शशव्यापकत्वं शृङ्गाऽभावे बोध्यते । तात्पर्यवशात्'[2] इति ख. ब. ङ. पाठः । क. कुण्डलितः ।

५ 'अत एव वृक्षं वृक्षमि'त्यादौ बहुवचनं न' इति ब. पाठः ।

---

1 'उद्देश्यतावच्छेदकव्यापकत्वम्' इति ब. पाठः ।

2 'तात्पर्यवशादिति बोध्यम्' इति ब. पाठः ।

'ब्राह्मणाय ब्राह्मणाय शतं देही'त्युक्ते प्रत्येकं शतं दीयते। एकशेषे तु नैवम्, 'ब्राह्मणेभ्यः शतं देयमि'त्युक्ते नियमेन प्रत्येकं शतं देयमित्यर्थाऽलाभात्। अत[1] एव एकशेषे एकवचनं न। द्विवचने चैकवचनमेव।

यदा तु परिगृहीतद्वित्वानां वीप्सा, तदा 'ब्राह्मणाभ्यां ब्राह्मणाभ्यां शतं देयम्', 'त्रिभ्यस्त्रिभ्य' इत्यादि भवत्येव। एवं च द्विवचने एकत्वं, द्वित्वं, बहुत्वं च व्यवस्थितमेव प्रतीयते, पदार्थकात्स्न्यं च। एके[2]शेषे कात्स्न्यं नैवेति, ततो विशेषः[3]।

अत एव बुद्धिविषयाणां बहूनां मध्ये कतिपयानामेव वृक्षाणां शोभनत्वे प्रतिपाद्ये, न द्वित्वम्। यथा 'अस्मिन् वने पञ्चषाः शोभना' इति। एवं 'कस्मै चिदेकः', 'कस्मै चित् द्वौ', 'कस्मै चित्त्रय' इत्याद्यर्थप्रतिपादनेच्छायां 'ब्राह्मणेभ्यो माषा दत्ता' इत्येव प्रयोगो, न तु द्वित्वम्। यदा तु 'एँको[4] दत्ते' इति प्रतिपादनीयं, तदा द्वित्वं भवत्येव। एवं च साहित्या[5]ऽभानान्न[6] तद्विषये एकशेषः। एतेन 'परिगृहीतैकत्वानामपि बहुत्वम् अभिधातुं कृतद्वित्वात् बहुवचनमस्तु, यथा एकशेषे एकेन बहूनां भानम्, एवमत्र द्वाभ्यामिति, को विशेष' इति परास्तम्। अन्तरङ्गैकत्वाद्यवरुद्धेऽर्थे बहुत्वस्याऽभानात्। सङ्ख्याऽन्तरे निराकाङ्क्षत्वाच्च। न हि

---

१ 'अत एव द्विवचने एकवचनमेव' इति घ. पाठः।

२ 'एकशेषे द्वित्वबहुत्वे एव प्रतीयेते, कात्स्न्यें नैवेति' इति घ. पाठः।

३ इतोऽग्रे—'न च समाहारविषयेऽप्येकशेषेण एकवचनमप्यस्ति एकशेषे इति वाच्यम्। समाहारस्यैकत्वाऽभिप्रायेण तत्सत्त्वेपि, समाह्रियमाणानां द्वित्वबहुत्वयोरेव तत्र प्रतीयमानत्वात्' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

४ 'एकैको दत्ते' इति ख. ग. ङ. पाठः।

५ 'साहित्याऽवच्छिन्नत्वेनाऽभानान्न तद्विषये' इति ख. घ. ङ. पाठः।

६ 'न' इति क. नास्ति। 'तद्विषये एकशेषः' इत्येव तत्र पाठः।

'वस्तुतो बहुत्वमस्ती'त्येतावतैव तस्य बोध आपादयितुं शक्यते। असत्त्वाऽर्थकेष्वपि तदापत्तेः । 'अयोग्यं तदि'ति चेत् । समं प्रकृतेऽपि ।[1] अत एव 'एकैकस्य प्राचामि'ति निर्देशः सङ्गच्छते । एकशेषे तु न परिगृहीतैकत्वानां भानम्, प्रातिपदिकानामेव तत्प्रवृत्तेः ।

यत्तु 'अप्रातिपदिकत्वात् समुदायाद्बहुवचनं ने'ति । तन्न । 'सरित्-सरिदि'त्यादौ स्थानिवद्भावेन तत्सत्त्वात् । 'न ङिसम्बुद्ध्योरि'ति ज्ञापकेन प्रत्ययलक्षणेन 'अप्रत्यय' इति निषेधाऽप्रवृत्तेः । 'योषा-योषे'त्यादौ एकादेशस्य पूर्वाऽन्तत्वेन लिङ्गविशिष्टे लब्धस्य प्रातिपदिकत्वस्य स्थानिवद्भावेन कृतद्वित्वे सत्त्वाच्च। 'एकैकमि'त्यादौ सुब्लुगर्थं समासत्वाऽतिदेशेन प्रातिपदिकत्वस्याऽऽवश्यकत्वाच्चेति[2] दिक् ।

तत्र व्यक्तिपक्षे व्याप्तिप्रतिपिपादयिषायामनेकतावत्प्रयोगे प्राप्ते, येन नाप्राप्तिन्यायेनेदं शास्त्रं द्व्यात्मकाऽऽदेशस्य[3] बोधनद्वारा अनेकप्रयोगस्याऽसाधुत्वबोधकम्[4] । इदमेवाऽभिप्रेत्य 'निवर्त्तकत्वाद्वा सिद्धमि'त्यनेन अस्य नियमाऽर्थत्वं भाष्ये उक्तम्[5] ।

आभीक्ष्ण्यं च क्रियाविशेषणम् । शब्दशक्तिस्वभावात् । तेन क्रियाप्रधानानामेव द्वित्वम्-आभीक्ष्ण्ये । क्रियाप्राधान्यं चाऽऽख्यातेऽस्ति, कृद्विशेषे च, 'अव्ययकृतो भावे' इति वक्ष्यमाणत्वादित्याह—तिङन्तेष्विंत्यादि । हिरुक्-पृथगादीनामव्ययानां क्रियाविशेषणत्वमात्रेण क्रियाप्रधानत्वम् । न तु क्रियावाचकत्वम् । अतो न द्वित्वम् । अनभिधानाद्वा ।

१ इतोऽग्रे—'भाऽनेपि अन्तरङ्गत्वात्तन्निमित्तकमेकवचनमेव' इति घ. पाठः ।

२ 'आवश्यकत्वाच्च । तथा चैकैकस्येति निर्देशविरोध इति दिक्' इति घ. पाठः ।

३ 'द्वयोः प्रयोगस्य द्व्यात्मकादेशस्य' इति घ. पाठः ।

४ 'प्रयोगस्य साधुत्वबोधकम्' इति घ. पाठः ।

५ इतोऽग्रे—'इदं च कैयटादिग्रन्थे स्पष्टमिति भावः' इति घ. पाठः ।

अत्र 'पचति-पचतितरां देवदत्त' इत्यादावन्तरङ्गत्वात्पूर्वं नित्यताविवक्षा । ततस्तद्गताऽतिशयविवक्षा । पौनःपुन्यविशिष्टक्रियायामतिशयभाने, अतिशयविशिष्टायां वा पौनःपुन्यभाने, वस्तुनि विशेषाऽभावेन, न्याय्यक्रमत्यागे बीजाऽभावात् । अतिशयश्च प्रतियोगिसापेक्षतया बहिरङ्ग इति बोध्यम् । 'आढ्यतरमाढ्यतरमानये'त्यादौ तु अतिशयविशिष्टानामेव व्याप्यत्वप्रतीतेः पूर्वं तरप्, ततो द्वित्वमिति स्पष्टं भाष्ये ।

**परेर्वर्जने** । 'वर्जनद्योतकस्य परेरि'त्यर्थः । वर्जनं सम्बन्धाऽभावः । उदाहरणे पञ्चम्यर्थवर्जनरूपसम्बन्धस्य परिर्द्योतकः । 'वङ्गाऽसम्बद्धवृष्टिकर्त्ता देव' इति बोधः।

'परित्रिगर्त्तं वृष्टो देव' इत्यादौ समासे तु न । वाक्यदृष्टविभक्त्यर्थाऽन्तर्भावेण तत्र समासस्यैव शक्तिकल्पनेन, परेस्तद्द्योतकत्वाऽभावात् । न हि समासस्य यदर्थाऽन्तर्भावेण शक्तिस्तत्र द्योतकाऽपेक्षा । अत एव 'घनश्याम' इत्यादौ इवाद्यप्रयोगः । 'परि'शब्दस्तु वृत्तौ साधुत्वमात्राऽर्थं प्रयुज्यते, 'समूलकषायं न्यवधीदि'त्यादौ कषेरिव । इदमेवाऽभिप्रेत्य भाष्ये उक्तम्—'न च समासे परिर्वर्जने, कस्तर्हि, समास' इति ।

यत्तु कैयटेन-'अजहत्स्वार्थायाम् एकार्थीभावाद्वर्ज्यमानोऽर्थोऽऽस्कन्दनेन[1] द्व्यर्थः परिर्न केवले वर्जने वर्त्तते, वाक्ये तु केवलवर्जने एवे'त्युक्तम् । तन्न । उक्ताऽर्थस्य सूत्राऽक्षरैरलाभात् । गतेरुक्तत्वाच्च[2] । कात्यायनेन तु

---

१ 'वर्ज्यमानाऽऽर्थस्कन्दनेन' इति क. पाठः । 'वर्ज्यमानार्थाऽऽस्कन्दी' इति तु कैयटे पाठः ।

२ इतोऽग्रे—'परेर्द्योतकतया द्व्यर्थत्वस्य विरुद्धत्वाच्च । समभिव्याहृतस्य द्व्यर्थत्वमित्यन्यदेतत् । नचाऽर्थस्य निमित्तकोटावाश्रयणेन अन्याऽनुपसर्जनीभूतस्यैव ग्रहणान्न तत्र प्रवृत्तिरिति वाच्यम् । वर्ज्यमानोपसर्जनवर्जनस्यैव वाक्यादपि प्रतीतेरिति दिक्' इति घ. पाठः ।

वचनमेव कृतम् 'परेरसमासे' इति। अत्र 'वेति वक्तव्यम्'। तेन 'अपहरेः' 'परिहरेरि'त्यपि सिद्धम्। वङ्गेभ्य इति। 'पञ्चम्यपाङ्परिभिरि'ति पञ्चमी।

उपर्यध्य[1]। 'उपरि शिरसो घटं धारयती'त्यादौ तु औत्तराऽधर्यमात्रं विवक्षितं, न तु सामीप्यम्। अतो वस्तुतस्तत्सत्त्वेऽपि न द्वित्वम्। विवक्षा हि शब्दव्युत्पत्तौ प्रधानकारणम्। अत एव 'तदाख्याचिख्यासायामि'ति सन्प्रयोगः सङ्गच्छते।

वाक्यादेरा। विनाऽपि कोपा-ऽसूये भर्त्सन-कुत्सनयोः शिष्यादौ सम्भवात्तद्ग्रहणमित्याहुः। द्विरुक्त इति। अत एव 'एकमेकः' 'जात्या-ख्यायामेकस्मिन्' इत्यादौ न बहुव्रीहिवत्। तथा इति बहुव्रीहिवद्भावे, सुप्लुकि, 'दधी'त्यादौ विभक्तिरहितस्येव, अत्राऽपि तादृशस्यैव साधुत्वा-ऽऽपत्तिः। पुनः सुप्तु न प्राप्नोत्येव। 'लक्ष्ये लक्षणस्ये'ति न्यायात्।

न च कार्याऽतिदेशेन पुनः सुबस्तु, लक्षणभेदादिति वाच्यम्। अनेन प्रातिपदिकत्वरूपकार्याऽतिदेशेनैव सुप्लोप-तदुत्पत्त्योः सिद्धत्वात्; उभयविधाने गौरवाच्च, अनेन सुपोऽनतिदेशात्।

न च प्रत्ययाऽन्तत्वात्कथमस्य प्रातिपदिकत्वम्, समासग्रहणं च नियमाऽर्थम्, न विध्यर्थमिति वाच्यम्। द्वित्वे कृतेऽपि स्थानिवद्भावेन प्रत्यया-ऽन्तत्वात् प्रातिपदिकत्वाऽनापत्तेः। अत एव 'भविते'त्यादौ प्रातिपदिकत्वं न। यदि तु बहुव्रीहिवद्भावात् प्रत्ययान्तत्वेऽपि तत्र दृष्टत्वमात्रेण भाष्य-प्रामाण्यात्प्रातिपदिकत्वमित्युच्यते, तर्हि प्रकृतेऽपि तुल्यम्।

इदं च सूत्रं वीप्सायामेव प्रवर्त्तते, नाऽसूयादिविषये। वीप्साग्रहण-मनुवर्त्त्य 'वीप्सायां द्वित्वम्, बहुव्रीहिवद्भावश्चे'ति भाष्ये उक्तत्वात्। एवं च तेनैव द्वित्वस्य सिद्धत्वात्पुनरनेन विधानम् अफलं, गुरु चेति मत्वा, मूलेऽनुवाद्यत्वमेवोक्तम्।

---

१ इतोऽग्रे—'एतेन 'द्वे' इत्यस्याऽनुवृत्तिरत्र स्पष्टार्था, उत्तरार्था वे'ति परास्तम्' इति ख. घ. ङ. पाठः।

तेनेति। तत्र दृष्टत्वमात्रेण तयोरतिदेश इति भावः। 'गोस्त्रियोरि'ति-ह्रस्वस्तु नाऽतिदिश्यते। तस्य उपसर्जनाऽर्थनिमित्तत्वात्[2]। एवं च समासवद्भावेनैव सिद्धे, बहुव्रीहिवद्भावफलं चिन्त्यम्।

एकैकमिति। न[3] चाऽत्र द्वयोः सुपोर्लुकि[4], तदर्थस्य प्रातिपदिकार्थेऽन्तर्भावेन द्वितीयाद्यनापत्तिः। व्याप्तिविशिष्टस्य कर्मत्वाऽऽदिबोधनाऽर्थं सुलभत्वात्।

बहुव्रीहिवद्भावादिति—मध्यमणिन्यायेनोभयाऽन्वयि। न चाऽतिदेशः पुंवत्त्वसम्पादनेन चरिताऽर्थः। अतिदेशादीनां बहुविषयताया उचितत्वात्। एवं कर्मधारयवद्भावविषयेऽपि बोध्यम्। ध्वनितं चेदम् अत्रैव भाष्ये।

प्रातिपदिकत्वादिति। भाष्ये 'सुप्लोप-पुंवद्भावौ प्रयोजनमि'त्यत्र 'सुप्लोप'शब्देन तन्निमित्तप्रातिपदिकत्वं लक्ष्यते। अन्यथा सुबुत्पत्तिरपि वक्तव्या स्यात्। एवं च समुदाये जातस्य प्रातिपदिकत्वस्य एकदेशविकृतन्यायेन सुब्लोपेऽपि सत्त्वमिति भावः। कार्यकालपक्षे तु तत एव पुनः प्रातिपदिकत्वं बोध्यम्।

सुबिति। तच्चैकवचनमेव। यथा चैतत्तथा प्रागेवोक्तम्।

---

१ इतोऽग्रे—'शब्दाऽधिकारद्वयकल्पनागौरवन्तु निषादस्थपत्यधिकरणन्यायेन न दोषावहम्। एवञ्च 'द्वे' इत्यनुवृत्तमनुवाद्यसमर्पकं बोध्यम्। अत एव 'एकाच्च प्राचामि'त्यादिनिर्देशाः सङ्गच्छन्ते। तत्र कृतद्वित्वस्य द्योत्याऽर्थेन अर्थवत्त्वेपि, प्रत्ययान्तत्वात् समासग्रहणकृतनियमाच्च, कृदाद्यन्यतमत्वाऽभावाच्च प्रातिपदिकत्वाऽभावेन सुब्लोपाऽप्राप्तेराह—तेनेति। विशेषातिदेशे सामान्यस्याऽप्यतिदेशादिति भावः' इति घ. पाठः।

२ 'उपसर्जनाऽर्थनिमित्तत्वेन प्रकृते तदभावात्' इति घ. पाठः।

३ 'न चाऽत्राऽपि' इति घ. पाठः।

४ 'लुकि संख्यादेस्तदर्थस्य' इति घ. पाठः।

इहेति । 'सर्वनाम्न' इत्यनेन सः । स हि पूर्वभागस्यैव, 'भस्त्रैषे'तिज्ञापकादि'त्युक्तम् । 'स्त्रियाः 'पुंवदि'त्यस्याऽपि समानाधिकरणे उत्तरपदे विधानात्पूर्वखण्डे एव प्राप्तिः । एतेनाऽत्र 'द्वे' इत्यस्याऽननुवृत्तौ, 'एके'त्यत्र पुंवत्त्वाऽऽपादनं हरदत्ताद्युक्तमपास्तम् ।

अवग्रहे इति । न चाऽत्र संहितानित्यत्वेन 'वृद्धिरेची'ति वृद्धेर्दुर्वारत्वेन, कथमवग्रहे विशेष इति वाच्यम् । द्विर्वचनस्थले संहितानित्यत्वाऽभावस्य 'सुद्ध्युपास्य' इत्यत्र व्युत्पादितत्वात् । अवग्रहविषये संहिताऽनित्यत्वस्य 'संबुद्धौ शाकल्यस्ये'ति सूत्रे उक्तत्वाच्च ।

एकैकस्मै इति । द्वयोरपि सुपोर्लुकि, पुनः सुपि, सर्वादिपठितैकशब्दान्तत्वेन, सर्वाऽर्थबोधकत्वेन च सर्वनामत्वात् स्मैभावः ।

आबाधे च । इह पुंवदिति । 'बहुव्रीहिवद्भावादि'त्यनुषज्यते । 'स्त्रियाः पुंवदि'त्यनेन सः । अतिदेशबलेन उत्तरपदत्वस्य, ऐकार्थ्येन, भिन्नाऽर्थत्वाऽभावेन च सामानाधिकरण्यस्य सत्त्वात् । ध्वनितं चेदं पूर्वसूत्रे भाष्ये ।

'न न', 'महान्महानि'त्यादौ 'नलोपो नञः' 'आन्महत'इत्यादिकन्तु न[3]। आद्ये 'रात्रेः कृती'त्यतः, अन्त्ये 'नद्याः शेषस्ये'त्यतो विकल्पाऽर्थकशब्दाऽनुवृत्त्या, व्यवस्थितविभाषाऽऽश्रयणेनाऽदोषात् ।

---

१ 'स्त्रियाः पुंवत्त्वस्य त्वत्र न प्राप्तिः । समानाधिकरणपरत्वाऽभावात् । यद्याहुतित्वविशिष्टस्य वाचकतया सामानाधिकरण्यमस्तीत्युच्यते, तदाऽस्तु सोऽपि पूर्वस्यैव' इति ख. पाठः ।

२ 'एतेन 'एकैकया' इत्यत्र वृत्तित्वमात्रवैकल्यप्रयुक्ताऽतिदेशेन चरितार्थस्य समानाधिकरणोत्तरपदत्वरूपविशिष्टनिमित्तवैकल्यप्रयुक्ताऽप्राप्त—'स्त्रिया' इत्यस्याऽतिदेशे न मानमि'त्यपास्तम् । समानाधिकरणोत्तरपदत्वाऽपेक्षया वृत्तित्वस्याऽलघुत्वात्, इहाऽनुवृत्तिसामर्थ्याच्चेत्याहुः' इति ख. पाठः । क. कुण्डलितः ।

३ इतोऽग्रे—'साक्षाच्छ्रुतेन कार्यित्वेन निमित्तत्वबाधात्' इति ख. पाठः ।

वस्तुनोऽन्त्ये 'आबाधे चे'ति द्वित्वे, सुपोर्लुकि, 'महन्महानि'ति रूपमेव दुर्लभम्। 'पथिपन्था' इत्यादौ समासान्तस्तु न। 'समासाच्चे'ति-सूत्रात्समासग्रहणेऽनुवर्त्तमाने, 'समासान्ता' इत्यत्र पुनः समासग्रहणेन, मुख्यसमासे एव तत्प्रवृत्तेः। 'आधि'शब्दस्य आबाधायां द्वित्वे, 'इको-ऽसवर्ण' इत्यस्य 'न समासे' इति निषेधस्तु, सित्साहचर्येण औपदेशिक-समासस्यैव तत्र ग्रहणान्न भवतीति बोध्यम्।

ननु 'न-ने'त्यादौ 'नञ्सुभ्यामि'ति स्वराऽऽपत्तिरिति चेन्न। 'नञ्सुभ्या-मि'त्यत्र 'वनं समासे' इत्यतः समासग्रहणाऽपकर्षेण, मुख्यसमासे एव तत्प्रवृत्तेः। न च तदभावेऽपि समासाऽन्तोदात्तत्वप्रसङ्गः। 'नञ्सुभ्या-मि'त्यत्र समासग्रहणाऽपकर्षसामर्थ्येन, तस्याऽप्यप्रवृत्तेः। 'बहुव्रीहौ प्रकृत्ये'-त्यादेरपि, 'समासस्ये'त्यस्याऽनुवृत्त्या मुख्यसमासे एव प्रवृत्तेः। आम्रेडितस्वर-तत्स्वरयोर्विशेषाऽभावेन तदतिदेशाऽभावाच्च। अत एव भाष्ये सुप्लोप-पुंवद्भावावेव प्रयोजनत्वेनोक्ताविति दिक्।

---

१ 'ननु 'न-ने'त्यादौ समासप्रयुक्तस्वराऽऽपत्तिरिति चेत्। किं समासान्तोदात्तत्वम्, उत 'बहुव्रीहौ प्रकृत्ये'ति, उत 'नञ्सुभ्यामि'त्यन्तोदात्तत्वमिति चेन्न। त्रयोऽपि न। यतः समासाऽन्तोदात्तत्वं बहुव्रीहिस्वरेण बाधितम्। तस्य, आम्रेडितस्वरस्य च फले विशेषाऽभावात्। 'नञ्सुभ्या'मित्यत्र 'वनं समासे' इति घ. पाठः।

२ 'मुख्यसमासे एव तत्प्रवृत्तेश्च' इति घ. पाठः।

३ 'तत्प्रवृत्तेः' इति ख. ङ. पाठः।

४ इतोऽग्रे—'केचित्तु 'कर्मधारयवदि'त्यधिकारसूत्रेणैव सिद्धे, 'उत्तरेषु' इति 'उत्तरेषु कर्मधारयवदेव, नाऽन्यदि'त्यर्थबोधनद्वारा पूर्वसूत्रेऽपि 'कर्मधारयवदि'त्यस्य सम्बन्धबोधनार्थम्। 'उत्तरेषु' इत्युक्त्या पूर्वसूत्रेषु सम्बन्धाऽभाव-बोधनद्वाराऽव्यवहितैकसूत्रे सम्बन्धस्य ज्ञापनाच्च। तत्राऽन्यतरस्याऽभावाऽतिदेशकत्वात्, इष्टाऽनुरोधेन कार्यविशेषप्रवृत्त्यप्रवृत्ती बोध्ये इत्याहुः' इति घ. पाठः।

कर्मधारयवदु। अन्तोदात्तत्वानीति। न च 'अनुदात्तं चे'त्यप्य-धिकारसूत्रम्। एवं च तस्येहाऽपि उपस्थानसामर्थ्यात् समासान्तोदात्तत्व-बाध एवोचितः। विधायकत्वेऽपि परत्वात्स एवोचित इति वाच्यम्। भाष्यप्रामाण्येनाऽधिकारत्वेऽपि तस्येहाऽनुपस्थानात्। अतिदेशेन विरुद्ध-स्वाश्रयनिवर्त्तनाच्च। अत एव बहुव्रीहिवद्भावे प्रकृतेऽपि, कर्मधारयवद्भावः।

किञ्च प्रियादिषु[1] प्रतिषिद्धपुंवत्त्वस्याऽपि विधानाऽर्थं कर्मधारयवद्भाव आवश्यकः। 'पुंवत्कर्मधारये'त्यस्य प्रियादिष्वपि प्रवृत्तेः। अत एव पूर्वसूत्रयोः कर्मधारयवद्भावो नोक्तः, प्रियादिषु[2] पुंवत्त्वं मा भूदितीति दिक्।

प्रकारे गुणवचनस्य। अत्र 'प्रकार'शब्दः सादृश्यवाची, व्याख्या-नादित्याशयेनाऽऽह—सादृश्ये द्योत्ये इति। पुंवद्भाव इति। 'पुंवत्कर्म-धारये'त्यनेन। अत्र वामनः—'भेदसादृश्ययोरुभयोरपि जातीयरो विधा-नेन, भेदे सावकाशस्य, द्रव्यवचनेभ्यश्च सावकाशस्य जातीयरो, गुण-वचने सादृश्यविषयेऽनवकाशेन,[3] जातीयरः स्वार्थिकत्वेन गुणवचन-जातीयाऽन्ते सावकाशत्वे परेण[4] द्वित्वेन, प्राप्तोऽपि बाधो नेष्यते' इति। न च जातीयरा सादृश्यस्योक्तत्वेन, तदन्ते द्वित्वस्याऽप्रवृत्तेः कथं तत्र तस्य साऽवकाशता, भेदेऽपि तस्य विधानेन लोटा इव[5], असहायेन सादृश्यस्य वक्तुमशक्यत्वादित्याहुः। जयादित्यस्तु—'जातीयर्विधौ भेद एव 'प्रकार'-शब्दाऽर्थ' इत्याह। ('प्रथम-द्वितीय-पञ्चम-षष्ठा जयादित्यस्य। तृतीय-

---

१ 'कोपधादिषु प्रतिषिद्ध' इति घ. ङ. पाठः।

२ 'कोपधादिषु' इति ख. घ. ङ. पाठः।

३ 'सादृश्यविषयेऽनवकाशेन' इति ख. घ. ङ. पाठः।

४ 'परेण वा' इति ख. घ. ङ. पाठः।

५ अत्रैव द्वित्वप्रकरणे सम्भ्रमे विहितेन लोटा इवेत्यर्थः।

६ अयं ख. घ. ङ. पाठः। क. कुण्डलितः।

चतुर्थ-सप्तमा-ऽष्टमा वामनस्येति मते इदम्)।

गुणवचनस्ये'ति किम्?। 'सिंहो माणवकः'।

'गुणवचन'ग्रहणसामर्थ्यान्मुख्यवृत्त्या गुणबोधकानामेव द्वित्वम्, नाऽन्येषामिति भाष्ये स्पष्टम्। तदाह—गुणोपसर्जनेत्यादि। गुणश्चेह न नैयायिकपरिभाषितः। किन्तु'वोतो गुणवचनादि'त्यत्रैव स्वपरिभाषित एव।

'नैव-नवा वनवायुभिराददे' इत्यत्राऽनेन द्वित्वे पुंवत्त्वम्। 'नवं-नवं प्रीतिरहो करोती'त्यादौ तु वीप्सायां द्वित्वं बोध्यम्। अनेन द्वित्वे हि सुप्लुक् स्यात्।'भीत-भीत इवे'त्यादौ तु'भीतेभ्यो भीतः = अतिभीत इत्यर्थ' इति कथञ्चिद्व्याख्येयम्। 'इव'शब्देन सादृश्यस्योक्ततया, गुणवचनत्वा-ऽभावेन चाऽस्य द्वित्वस्येहाऽप्रवृत्तेः। 'आधिक्ये द्वे भवत' इति वचनेन द्वित्वमि'ति तु न सम्यक्। तादृशवचनाऽनुपलम्भात्।

'खिन्नः-खिन्नः शिखरिषु पदं न्यस्य गन्ताऽसी'ति मेघदूते एकस्याऽपि खेदाऽवस्थाविशेषेषु भेदं परिकल्प्य वीप्सा बोध्ये'त्येके। 'मन्दमन्दमुदितः प्रययौ खमि'त्यत्र तु सादृश्ये द्वित्वम्। 'मन्दं-मन्दं नुदतु' इत्यादौ तु एकं मन्दपदमतिशयलक्षकम्, 'कमलानि कमलानी'तिवदित्याहुः। 'स्वतो मन्दं = मन्दगामिनं त्वां पवनो मन्दं नुदत्वि'तिकथञ्चिद्व्याख्येयमि'त्यन्ये।

वार्त्तिकान्याह—आनुपूर्व्ये इत्यादि। 'वार्त्तिकेषु 'कर्मधारयव'दिति न सम्बध्यते। तदुदाहरणेषु भाष्ये सुप्लोपाऽदर्शनात्।

मूले मूले इति। एकस्य एकमेव हि मूलम्। इतरेषान्तु उपरिसन्नि-वेशाऽपेक्षो गौणो 'मूल'व्यपदेशः। न च एकरूपं भागानां स्थौल्यम्,

---

१ 'अत एव नवनवा वनवायुभिराददे' इति घ. पाठः।

२ 'पुंवत्त्वादिसिद्धिः' इति घ. पाठः।

३ 'अत एव न सुप्लुक्' इति घ. पाठः।

४ 'नुदति' इति घ. पाठः।

किन्तु यथामूलमुपचीयते स्थौल्यमिति, वीप्साऽभावाद्वचनम्। **सम्भ्रमेणेति।** सम्भ्रम–आदरो, भयञ्च। **न्यायेति।** यावद्भिः शब्दैः सम्बोध्योऽर्थमवगच्छति, तावतां प्रयोक्तव्यत्वादिति भावः। एवं च 'उभाविमौ आढ्यौ, कतराकतराऽनयोराढ्यता', 'सर्वे इमे आढ्याः, कतमाकतमाऽनयोराढ्यते'ति सिद्धम्। प्रष्टा स्वचापल्यात् द्विः प्रयुङ्क्ते। आशुप्रतिपादनं हि चापलम्। स एव सम्भ्रमः। आदरजन्यो, भयजन्यो वेत्यन्यदित्याहुः।

**क्रियासमभिहारे चेति।** पौनःपुन्यं, भृशाऽर्थश्च सः। लोट्येवेदम्। अत एव 'क्रियासमभिहारे लोडि'ति सूत्रे भाष्ये 'क्रियासमभिहारे लोट्-मध्यमपुरुषैकवचनस्य द्वे भवत इति वक्तव्यमि'त्याद्यरं वचनं पठितम्। अस्य च क्रियासमभिहारे लोट्ज्ञापकत्वमुपन्यस्तम्। न चेदं वचनाऽन्तरमेवेति भ्रमितव्यम्। गौरवात्। अष्टमेऽस्य लोट्येवोदाहरणाच्च। तस्मादस्यैव व्यवस्थापकं तदिति युक्तम्। अत एव यङन्ते न द्वित्वम्। भृशाऽर्थे यङि, ततः पौनःपुन्यविवक्षायान्तु भवत्येव 'नित्यवीप्सयोरि'ति

१ 'वीप्साऽभावः' इति ख. ङ. पाठः।

२ 'उभाविमावाढ्यौ, कतराऽनयोराढ्यता' इति घ. पाठः।

३ 'सर्वे इमे आढ्याः, कतमाऽनयोराढ्यता' इति घ. पाठः।

४ इतोऽग्रे—'लोटः समुच्चयविध्यादिष्वपि विधानेन, केवलस्य क्रियासमभिहारद्योतने सामर्थ्याऽभावात्'[1] इति ख. घ. ङ. पाठः। क. कुण्डलितः।

५ 'लोटि उदाहरणाच्च' इति ग. पाठः।

६ 'न द्वित्वम्। यङः क्रियासमभिहाराऽतिरिक्ताऽर्थाऽभावात्, यङैव तद्द्योतनसम्भवाच्च' इति ख. घ. ङ. पाठः। क. कुण्डलितः।

७ 'एवञ्च केवलभृशार्थे, केवलपौनःपुन्ये वा यङन्तेऽस्याऽप्रवृत्त्या, पौनःपुन्ये यङि, ततो भृशार्थविवक्षायामपि नाऽस्य प्रवृत्तिः। भृशार्थे यङि, ततः पौनःपुन्यविवक्षायां तु' इति घ. ङ. पाठः।

1 इतोऽग्रे—'तत्र भृशार्थेऽपूर्वविध्यर्थम्। पौनःपुन्ये न्यायसिद्धाऽर्थकथनम्' इति घ. पाठः।

द्वित्वम्—'पापच्यते-पापच्यते' इति । 'भृशं क्रियां सम्पादयन् पुनःपुनः पचती'त्यर्थात् ।

नन्वस्य भृशाऽर्थे द्वित्वमात्रफलकत्वे 'भृशाऽर्थे' इत्येव सिद्धे, 'क्रियासमभिहार'पदवैयर्थ्यमाशङ्क्याऽऽह—पौनःपुन्येपीति । तथा चेदमेव ज्ञापकं-पौनःपुन्यस्य केनचिद्द्योतने सौत्रद्वित्वाऽप्रवृत्तेः। अतो यङन्ते न सौत्रं द्वित्वमिति बोध्यम् । अत एव भाष्ये 'आभीक्ष्ण्ये द्वे वाच्ये' इति वार्त्तिकाऽन्तरमपि पठ्यते । 'भुक्त्वाभुक्त्वा' 'भोजंभोजमि'त्युदाह्रियते च । अस्य लोडन्ते एव प्रवृत्तेः । न च क्त्वाणमुल्भ्यामेवाऽऽभीक्ष्ण्यस्य द्योतितत्वात् अप्राप्तद्वित्वविधानाऽर्थन्तत्। द्योतकसमुच्चयस्याऽपि दृष्टत्वात्।

यत्तु 'अर्थाऽन्तरेऽपि तयोर्विधानेन, केवलयोस्तद्द्योतने सामर्थ्याऽभावादि'ति । तन्न । अकजादेरनेकत्र द्योत्याऽर्थे विधानेऽपि, केवलस्यैव प्रकरणादिसहायेन तत्तदर्थद्योतकत्वसत्त्वात् ।

यत्तु[3] 'यां क्रियां कर्त्ता प्राधान्येनाऽनुपरमन् करोति तत् नित्यम् .

---

१ इतोऽग्रे—'न च पौनःपुन्ये यङि 'नित्यवीप्सयोरि'ति द्वित्वं यङन्ते दुर्वारम् । न च पौनःपुन्यस्य यङोक्तत्वान्न तत् । भृशार्थेऽपि यङो विधानेन, केवलेन पौनःपुन्यस्य बोधयितुमशक्यत्वादिति वाच्यम् । भृशाऽर्थे केवलयङोऽपि बोधकत्वस्य दृष्टत्वेन, तत्रोक्तन्यायाऽप्रवृत्तेरिति[1] बोध्यम्' इति ख. घ. ङ. पाठः । क. कुण्डलितः ।

२ 'अतोऽपि यङन्ते न द्वित्वमिति बोध्यम्' इति ख. घ. ङ. पाठः ।

३ अत्र 'नन्विदं वचनं लक्षणप्रतिपदोक्तपरिभाषया क्त्वाणमुलन्ते एव प्रवर्त्तते, एवं च नियमाऽर्थमिदम्—'आभीक्ष्ण्यविहितप्रत्ययान्तसमभिव्याहारे क्त्वाणमुलन्तस्यैव, नान्यस्ये'ति । तेन 'भुक्त्वा व्रजती'त्यादौ व्रजनस्यापि

---

1 'न्यायाऽप्रवृत्तेः । तदेतद्ध्वनयन्नाह—नित्यवीप्सयोरिति सिद्धे इति । तावन्मात्रफलकत्वे भृशार्थे इत्येव सिद्धे' इति घ. पाठः ।

पुनःपुनः क्रियाया विच्छेदेनोत्पत्तिः आभीक्ष्ण्यमिति, नित्याऽऽभीक्ष्ण्ययोर्भेदकथनं कैयटादिभिः कृतम्, तत्तु मानाऽभावात्, 'तद्य आभीक्ष्ण्ये वर्त्तते, तस्येदं ग्रहणमि'ति 'नित्यवीप्सयोरि'तिसूत्रस्थभाष्यविरोधात्, 'नित्यवीप्सयोरित्येव सिद्धमि'ति प्रकृतवार्त्तिकस्थवृत्तिविरोधाच्चोपेक्ष्यम् ।

अत्रेदं बोध्यम्[2]—'भुक्त्वा-भुक्त्वे'त्यादौ विच्छेदिका[3] क्रिया चोपात्ता व्रजनाऽऽदिरूपैव । अनुपस्थितकल्पने मानाऽभावात् । एवं च क्त्वाद्यन्तद्वित्वेनैव[4] व्रजनादिनिष्ठाऽऽभीक्ष्ण्यस्य द्योतितत्वान्न क्त्वाद्यन्तसमभिव्याहारे तिङन्तस्य द्वित्वम् ।

'जीवति-जीवती'त्यादौ 'कमलानि कमलानी'त्वदेकं 'जीवति'पदं दीर्घाऽविच्छिन्नजीवनलक्षकमिति, न तत्र शास्त्रीयं[5] द्वित्वमित्याहुः ।

---

पौनःपुन्यप्रतीतेस्तिङन्तस्य नेति चेन्न । उक्तरीत्या वचनस्य चारितार्थ्येन, नियमाऽर्थत्वे मानाऽभावात् । यत्तु 'यां क्रियां कर्त्ताऽनुपरमन् करोति' इति घ. पाठः ।

१ इतोऽग्रे—'यत्तु वृत्तावपि 'यां क्रियामि'त्यादि लक्षणमुक्तम् । तत्र 'प्राधान्येने'त्यस्य 'अनुपरमन्नि'त्यनेनाऽन्वयः । तेन 'प्रधानक्रियाकृतोपरमाऽभाव' इत्यर्थः । प्राधान्यं चोद्देश्यत्वरूपम् । अत एव दिनाऽन्तरीयपाकमादाय न 'पचति-पचती'ति प्रयोगः । एवं हि वदताऽनुद्देश्यक्रियाकृतविच्छेदस्य नित्येऽवश्यं सत्त्वम् । विच्छेदिका अप्रधानक्रिया च 'भुक्त्वाभुक्त्वे'त्यादावुपात्तव्रजनादिरूपैव । उपस्थितपरित्यागे मानाऽभावात् । एवञ्च क्त्वाद्यन्तद्वित्वेनैव' इति घ. पाठः ।

२ 'अत्रेदं बोध्यम्—'आभीक्ष्ण्ये उद्देश्यक्रियाकृतविच्छेदो न भासते । अत एव दिनाऽन्तरीयपाकमादाय न 'पचति-पचती'तिप्रयोगः । किन्त्वनुद्देश्यक्रियाकृतविच्छेदे एव' इति ख. ङ. पाठः । क. कुण्डलितः ।

३ 'तादृशी क्रिया' इति ख. ङ. पाठः ।

४ 'क्त्वाप्रत्यय-क्त्वाद्यन्तद्वित्वाभ्यामेव' इति ख. ङ. पाठः ।

५ 'शास्त्रीयं द्वित्वमिति ममाऽऽभाति । 'क्रियासमभिहारे' इत्यस्य तु क्त्वा-

कर्मव्यतिहारे इति। 'क्रियाविनिमये' इत्यर्थः। द्वे इति। नित्यमेवेदं द्वित्वम्। बाहुलकन्तु समासवद्भावस्यैव। तत्र लक्ष्यभेदेन क्वचित्प्रवृत्तिरेव, क्वचिदप्रवृत्तिरेव। अत एव भाष्ये अन्यशब्दस्य समासवद्भावरहितमेवोदाहरणम्, इतरशब्दस्य तत्सहितमेव तदुक्तम्।

अन्यपरयोरिति। यद्यप्यत्रत्यभाष्ये परशब्दोदाहरणं न दृश्यते, तथापि 'इतरेतराऽन्योन्ये'ति सूत्रे 'परस्पराच्चे'ति वार्त्तिकप्रयोगेन तस्य समासवद्भावाऽभावस्याऽऽवश्यकत्वात्। समासवद्भावकल्पकाऽभावाच्च नैकत्र भावाऽभावाविति भावः। अन्य-परे-तर-व्यतिरिक्तेषु तु नाऽस्य प्रवृत्तिः। मानाऽभावात्। बाहुलकाच्च।

अन्योन्यमिति। कर्मव्यतिहारोऽत्र स्फुट एव।

यत्तु 'द्वितीयादीनामेवेदं स्वादेशविधानम्। अत एव उत्तरदलेऽपि द्वितीयादय एव, न तु प्रथमा। तत्राऽप्येकवचनमेव, न तु वचनाऽन्तरमि'ति दुर्गादयः। तन्न। भाष्याऽनुक्तेः। तद्ध्वनयन्नुदाहरति—अन्योन्याविति। प्रथमाद्विवचनमेतत्। इति माघ इति च। अत एव 'क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैरि'ति भारविः। अत्र हि 'अदृष्टः परस्परो यैरि'ति विग्रहे प्रथमाऽन्तता स्पष्टैवेति दिक्।

---

णमुलन्तेऽप्रवृत्तिः। कोडन्ते एव तत्प्रवृत्तेः। इदमप्यत्रार्थे ज्ञापकं बोध्यम्। तेन यङन्ते 'क्रियासमभिहारे'इत्यस्याऽऽवृत्तिरिति बोध्यम्' इति ख. पाठः।

१ 'समासवद्भावस्य, न द्वित्वस्य' इति घ. पाठः।

२ 'क्वचिदप्रवृत्तिरेव तत्फलं बोध्यम्' इति ख. पाठः।

३ इतोऽग्रे—'कर्मव्यतीहारस्याऽन्यत्र नियमेन प्रतीत्यभावाच्च' इति ख. पाठः।

४ इतोऽग्रे—'अन्योन्यस्य भोजयन्ती'ति भाष्यप्रयोगे तु कर्मणः शेषत्वविवक्षायां षष्ठी। न त्वन्योन्यस्य पुत्रानित्यर्थः। कर्मव्यतीहारप्रतीत्यभावात्' इति क. कुण्डलितः पाठः।

अन्योन्यस्मादिति । 'अन्यस्मादि'त्यस्य द्वित्वे, पूर्वपदस्थसुपः सौ, रूपसिद्धिः । एवं च 'पदस्य पदद्वयाऽऽत्मकाऽऽदेशे, सर्वनामत्वं कथमि'त्यादिविचारः सर्वोऽपि निष्फल एव । 'इतरेतरेषामि'त्यादौ तु 'एकैकस्मै' इत्यत्र प्रागुपपादितरीत्यैव सर्वनामत्वं बोध्यम् ।

यत्तु 'कर्मधारयवद्भावेन सिद्धे, समासवद्भावो व्यर्थ' इति । तन्न । वार्त्तिकेषु कर्मधारयवत्पदाऽसम्बन्धस्य प्रागुक्तत्वात् । न चैवमपि सुप्लुग्विधानेनैव सिद्धौ, समासवद्भावो व्यर्थः । आम्रेडिताऽनुदात्तत्वबाधेनाऽन्तोदात्ताऽर्थं तस्याऽऽवश्यकत्वादित्याहुः ।

सिद्धान्तिमतमाह—अन्ये त्विति । दलद्वये इति । 'समासवद्भावाऽभावे, समासवद्भावे च । यद्यपि 'इतरेतरमि'त्यादौ समासवद्भावे; 'सर्वनाम्नो वृत्तिमात्रे' इत्यनेन पूर्वखण्डस्य पुंवत्त्वेनाऽपि सिद्धम्, तथाऽप्युत्तरखण्डे टाबभावाऽर्थं बाहुलकमेवाऽऽवश्यकम् ।

समासे सोरिति । 'कृतद्वित्वस्याऽन्येन समासे, पूर्वखण्डस्थस्ये'त्यर्थः । इदमुपलक्षणम्—'परस्परमि'ति पूर्वपदे नपुंसके सोरमभावस्य, 'परस्परस्मादि'त्यादौ व्यवस्थाऽभावेऽपि सर्वनामत्वस्य चे'त्याहुः ।

केचित्तु 'इतरेतरमि'त्यत्र डतरादिसूत्रे सर्वनामसंज्ञासूत्रस्थभाष्यरीत्या विहितविशेषणसत्त्वेनाऽदुड्वारयितुं शक्य' इत्याहुः । (अत्र सर्वत्र बाहुलकाऽऽश्रयणं विनाऽप्युपपत्तिर्भाष्यप्रदीपोद्योते दर्शिता ) ।

---

१ 'समासवद्भावो व्यर्थः । न च 'तृतीयासमासे' इत्यस्य प्रवृत्त्यर्थः । फलाऽभावात् । सामान्याऽतिदेशे विशेषाऽनतिदेशाच्च । 'लक्षणप्रतिपदोक्त'-परिभाषया तृतीयासमासविशेषे एव तस्य प्रवृत्तेश्चेति । तन्न । वार्त्तिकेषु' इति घ. पाठः ।

२ 'अन्योन्यमिति पूर्वपदे' इति ख. घ. ङ. पाठः ।

३ अयं ख. घ. ङ. पाठः । क. कुण्डलितः ।

यां यां प्रिय इति। अत एव 'कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेदि'ति 'अकथितं चे'तिसूत्रस्थभाष्यप्रयोगः सङ्गच्छते।

न च 'यां यां प्रियः प्रैक्षत कातराक्षीमि'ति श्लोके न द्वित्वम्, 'सा सा ह्रिया नम्रमुखी बभूवे'ति शेषवाक्ये द्विःप्रयोगात्। अन्यथा यत्पदीय-वीप्सयैवोपपत्तौ, तत्पदे तत्करणाऽयोगात्, पूर्वोक्तभाष्यप्रयोगवत्। किन्तु द्वावेव यत्तच्छब्दौ भिन्नभिन्नरूपेणैव बुद्धिस्थ-कान्तानां परामर्शकाविति, सर्वासां नम्रमुखीत्वप्रतीतिः। स्पष्टं चेदं काव्यप्रदीपादाविति, न तत्राऽतिप्रसङ्गः। एवं च 'व्यञ्जनान्यपि यस्य यस्याऽचः कार्यमुच्यते, तं तं भजन्ते' इति 'अजादेर्द्वितीयस्ये'ति सूत्रस्थभाष्यप्रयोगो व्याख्यात इति वाच्यम्। 'क्वचित्स्पष्टत्वाय तच्छब्देऽपि वीप्सायां न दोष' इत्याशयात्।

किञ्च प्रेक्षणविषय-यत्पदाऽर्थव्यापकत्वस्य नम्रमुखीत्वे प्रत्ययेन, शास्त्रप्रवृत्तेर्दुर्वारत्वाच्च, ईदृशे विषये द्विर्वचनस्यैव साधुतायाः शास्त्रसंमतत्वाच्चेति दिक्।

सोर्लुक् चेति। स्वादेशविधानन्तु 'अन्योन्यं पश्ये'त्यादावसमासे चरिताऽर्थमिति भावः।

प्रकृतवार्त्तिकेति। 'स्त्रीनपुंसकयोरि'ति वार्त्तिके। 'अन्योन्यमिमे ब्राह्मण्यौ' 'इतरेतरमिमे कुले' इत्यादि च तत्रोदाहृतम्।

स्त्रियामितीति। 'अन्योन्यसहाया' इति 'सर्वस्य द्वे' इति सूत्रस्थभाष्य-प्रयोगोऽपि बोध्यः। 'अपादाने पञ्चमी'ति सूत्रस्था'ऽन्यान्यप्रादुर्भावादि'ति प्रयोगे कर्मव्यतीहाराऽभावः स्पष्ट एव।

---

१ इतोऽग्रे—'एतेनैकशेषवत् द्विर्वचनस्याऽपि वृत्तित्वमि'त्यपास्तम्। तत्र 'द्वन्द्वे' इत्यनुवर्त्य, द्वन्द्वविषये तद्विधानेन, एकार्थीभावस्याऽऽवश्यकत्वेन, वृत्तित्वेऽपि, अत्र तत्वे मानाऽभावात्। एकार्थीभावयोग्यद्वितीयाऽभावाच्च' इति ख. घ. ङ. पाठः। क. कुण्डलित। २ 'नम्रमुखत्वप्रतीतिः' इत्यपि पाठः।

पुनरुक्तदेवेति । अनुवादकविभक्तेर्न्योय्यत्वादिति भावः । उदाहरणे प्रिय-सुखशब्दौ अकृच्छ्रलाक्षणिकौ ।

यस्य दाने क्लेशसम्भावना, तत्रैव तदभावप्रतिपादनं सफलमित्याशयेनाऽऽह—अत्यन्तप्रियमिति । यद्यच्चेति । स्वशब्दस्य उभयाऽर्थकत्वात् । ज्ञाति-धनवाची तु न गृह्यते । अनभिधानात् ।

द्वे इति । वीप्सायां 'यथा'शब्दस्य वृत्तेर्द्वित्वाऽप्राप्त्या, तदपि निपात्यते इति भावः । क्लीबत्वं चेति । तेन ह्रस्वसिद्धिः । 'यथायथमि'ति सूत्रोक्तेरेव कृतद्वित्वस्याऽव्ययत्वाऽभावः । यत्तु 'मान्तत्वं निपात्यते' इति । तन्न । सर्वत्र तस्यैव प्रयोगप्रसङ्गादित्याहुः ।

ज्ञातेति । तृन्नन्तमेतत् । अत एव 'न लोके'ति निषेधात्षष्ठी न । तृचि तु 'यथायथस्य ज्ञाते'त्येव । यथास्वभावमिति । 'यथास्वरूपमि'त्यर्थः । पूर्वपदस्याऽम्भाव इति । 'द्वौ द्वावि'ति द्वित्वे, कर्मधारयवद्भावात्सुपलुकि, पूर्वपदाऽवयवस्य इकारस्याऽमादेश इत्यर्थः ।

नपुंसकत्वं चेति । चेन कृतद्वित्वात् नियतद्विवचनोत्पत्त्यभावस्य संग्रहः । अन्तोदात्तत्वन्तु कर्मधारयवद्भावादेव सिद्धम् ।

रहस्यं (द्वन्द्वशब्द)वाच्यमिति । इदं वृत्तौ स्पष्टम् ।

परे तु अभिव्यक्तिरप्येवमित्याहुः । आचतुरमिति । 'आङ्मर्यादाऽभिविध्योरि'त्यव्ययीभावः । शरत्प्रभृतित्वाट्टच् । 'चतुरोऽभिव्याप्ये'त्यर्थः । 'आ चतुर्थादि'ति तु फलितोऽर्थः[1] । अयमाङ् अभिविधौ । 'मिथुनीयन्ती'त्यनेनाऽन्वयः । द्वन्द्वपदद्योत्या तु मर्यादा । सा चेत्थम्—'एतावदेव पशूनामायुरि'ति ।

मिथुनीयन्तीति । 'मिथुन'शब्देन तत्कर्म मैथुनम् । 'तदिच्छती'त्यर्थे क्यच् । 'मिथुनं गच्छती'ति तु फलिताऽर्थकथनम् । प्रायेण 'मिथुनायन्ते' इति क्यङन्तं पठ्यते । तत्रोपमाऽर्थो मृग्यः ।

---

१ 'चतुःशब्दश्च चतुर्णां पूरणे वर्त्तते । आ चतुर्थादित्यर्थः' इति घ. पाठः ।

'अभिव्यक्ति'शब्देनाऽत्यन्तसहचरितौ लोकविज्ञातावुच्येते। कर्मणि क्तिन्। तदाह—साहचर्येणेति। तेनेह न—'द्वौ युधिष्ठिराऽर्जुनौ, 'द्वौ देवदत्त-यज्ञदत्तावि'ति।

'द्वन्द्वं न्यङ्क्षी'त्यादौ वीप्सायां द्वित्वम्, अन्यत्र स्वार्थे द्वित्वमिति बोध्यम्। अन्यत्रापीति। 'द्वन्द्वं युद्धान्यवर्त्तन्ते'ति यथा। अत्र 'द्वयोर्द्वयोरि'-त्यर्थात्, वीप्सायां द्विर्वचनम्। यथा च 'शीतोष्णसुखदुःखक्षुत्तृष्णाद्वन्द्वानि सहते'। स्वार्थे द्वित्वम्। अत्र एकशेषवशाद्बहुवचनम्। अत एव 'चार्थे द्वन्द्व' इति सौत्रप्रयोगः सङ्गच्छते। अत्र स्वार्थे द्वित्वम्। पुंस्त्वं लोकात्।

( इति द्विरुक्तप्रक्रिया। )

शब्देन्दुशेखरे ग्रन्थे पूर्वमर्द्धमपूपुरम्।
प्रीयतां येन भगवान् शिवया सहितः शिवः ॥१॥
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः।
सतां हृत्कमलेष्वास्तां, यावत्फणिफणे धरा ॥२॥

इति श्रीकालोपनामक'शिवभट्ट'सुत-'सती'गर्भज-
'नागेशभट्ट'विरचिते 'सिद्धान्तकौमुदी'-
व्याख्याने[1]'शब्देन्दुशेखरा'ऽऽख्ये
पूर्वार्द्धं समाप्तम्।



---

१ अयमेव शब्देन्दुशेखरो'बृहच्छब्देन्दुशेखर' नाम्नाऽपि प्रसिद्धः। 'लघुशब्देन्दु-शेखर'नाम्ना ग्रन्थकृतैव ग्रन्थाऽन्तरस्य निर्मिततयाऽस्य बृहच्छब्देन्दुशेखर-त्वस्य स्वतः सिद्धत्वात्। लघुशब्देन्दुशेखराऽपेक्षयाऽस्य बृहत्त्वाच्चाऽन्वर्थ-मपि अस्य बृहच्छब्देन्दुशेखरनामधेयमिति शम्।